स्थितस्स्वसदने सुखं स रघुवंशमारभ्य सत्कवीट्कृतिचतुष्टयं प्रतिकृति द्विसर्गात्मना ।
पपाठ सविधे तत कुलगुरोस्तु रामार्यया प्रथा गतवत कलानिधिवरस्य सीतायुजा ॥१२॥
पठन् स्वसहपाठिभि प्रतिदिन स्वपश्यन्पुनर्गुरूक्तविषयाधिक समवबोधयस्तत्र तान् ।
प्रमोदयति निरयशो निजपुरोधसस्सन्निधौ पठत्युपनिषन्मुख निगममन्त्रजाल च स ॥१३॥
त्रिसन्ध्यमवधानतो निगममातर सम्भजन् पितामहमुखागत कुलधन स्वयं पूजयन् ।
हयाननमिह स्थित महितसाल्मद्रामग विशिष्टविधया भजन् स्वहृदये सदा चिन्तयन् ॥१४॥
सुचोलविभुना पुरा जनपदे निजे स्थापित मनोहरमहालये स्वनुभजन्रमावल्लभम् ।
विधाय तुलसीवनं स्वयमिहोर्ध्वपुण्ड्राङ्कितो जलेन परिवर्धयन्पठति देवभाषा मुदा ॥१५॥
कदापि हरिवासरादिषु हयाननं भक्तितो नयन् स्वतुलसीवने विमलपीठमध्यस्थितम् ।
विधाय तुलसीदलैर्बहुविधोपचारैरयं समार्चिचदल स्तुवन्नपि च संस्मरन् श्रद्धया ॥१६॥
तथा कतिपयेष्वहस्स्विह गतेषु चैव मुदा कदाचन हयाननो द्विजवपुर्निशि स्वमके ।
स्वमन्त्रमुपदिष्टवानथ जगाद दम्भालपाडुभिस्त्यजनधाम्नि सन्वसति रत्नमाचार्यक ॥१७॥
स ते दिशति गच्छ तं मम मनोरुपास्तौ क्रम तदङ्गकवचादिकं सकलमङ्ग वैखानस ।
इति प्रणिगदन् द्विजप्रवर एष चान्तर्दधे प्रबुद्ध इदमद्भुत स्वहृदये स चाचिन्तयत् ॥१८॥
जपन्नुपगतं मनु भवति सत्यमेतन्न वेत्यमी व्यवसितु ययौ जनपद परेद्युस्स तम् ।
सरत्नगुरुरादरादखिलमङ्गजाल ददाववाप्य तु यथा निधिं मुदितहृद्गृह चाययौ ॥१९॥
ततस्त्वनुदिन महामनुमिम पुरश्चर्यया जपन्विधिवदर्चयन्नपि च मूर्तिमत्यादरात् ।
उपास्त स हयानन हरिमशेषविद्याप्रद प्रसादमगमद्विभोरपठितं विदन्नात्मना ॥२०॥
अधीतकृतियुग्मको भगवतो महानुग्रहात् रसाढ्यकविताधुनीप्रवहणै रमावल्लभम् ।
स्तुवन् शतमितादिभिर्हृदयहारिपद्यैरसौ कथञ्चन कृतिद्वय गुरुमुख दथाधीतवान् ॥२१॥
ततस्स तु समापिपद्गुरुमुखादधीतिं बुध पितृव्यसन्निधे गुरोश्श्रमद एव पाठो मम ।
अशेषमपि काव्यग मम यथा वदन्वेति भो पितर्विमृश कुत्र वाप्यपठितेष्विति प्रोचवान् ॥२
अपृच्छदय कुत्रचित्त्वपठिते पुराण यथा स्येण स जगाद तं विषयमेष पृष्टाधिकम् ।
उदास्त स तु पाठने प्रमुदित पितृव्यो हृदि स्वय तु सुसमन्विते नहि गुरोरपेक्षा भवेत् ॥२३॥
तन्मसरससाहितीकृतिवरानशेषान् स्वयं समीक्ष्य कृतिसारवित्सपदि षोडशाब्दात्मक ।
व्यधद्य स रुक्मिणीपरिणयादिकाव्यन्नवं त्रिभागकमदृष्टदर्शकमवैच्च स ज्यौतिषम् ॥२४॥
स्वयंवृतवती ततो जगति कीर्तिकान्ता दता धरा तु वितता प्रसूनठर एन तं चाग्रहीत् ।
अशेषसुकलामयी विबुधभारती शैशवे वदुप्रियमशिश्रियज्झडिति यौवनश्रीरपि ॥२५॥
कलाषष्टिककुल्यया वदुकलामहाकल्यता विशालमुनेशना निखिमरार्यकीर्तीशताम् ।
विशिष्टगुणसम्पदं श्रुतपुर्वयस्सम्पदं समृद्धसकलार्थसम्पदमखण्डधीसम्पदम् ॥२६॥

समीक्ष्य वरसम्पदं प्रथितमिङ्गराड्वंशजस्स वेङ्कटपदादिमो रमणनामकश्श्रीविभुः ।
द्वितीयतनयां निजां श्रियमिवादिलक्ष्म्याह्वया प्रदातुमनयद्द्विजौ परिणयाय नेल्लूर्पुरात् ॥२७॥
विचिन्त्य कुलशीलसौभगमुखाढ्यकन्यागुणान् पितुस्स्वसमगौरवद्रविणवैदुषीसम्पदम् ।
प्रसूगतसुशीलताद्युचितगुण्यतां बन्धुताऽन्वमंस्त सदृशं समागममथोपयामे कृचे ॥२८॥
मुहूर्तमथ भद्रदं ग्रहबलेन निश्चित्य सद्बुधैर्निगदितं पुनस्स बुधयुग्मतः प्राहिणोत् ।
सबन्धुपरिवारसद्बुधशतैः पितृव्यो वरं कुमारमिव भूपतेरथ निनाय नेल्लूर्पुरीम् ॥२९॥
समङ्गलघटस्रगक्षतसुगन्धमुख्योल्लसत्सुभाजनकराङ्गनामणिगिरा सबन्धुव्रजैः ।
द्विजैरपि सतूर्यनिस्स्वनगणं समभ्येत्य तान् न्यवीविशदलंकृते शुभगृहेऽथ कन्यापिता ॥३०॥
तत परिणयोत्सवोऽजनि तयोर्महावैभवैः विदेहतनयारघुप्रवरयोरिवात्यद्भुतैः ।
ददौ स परितुष्टधीर्विधिविधारिवर्हं महत् समं स्वसुतया धनी विबुधवर्गमप्यार्चिचत् ॥३१॥
स पञ्चसु दिनेषु भूसुरमुखाननल्पैर्दिनैर्दुकूलसुरभण्डनैर्मधुरभक्ष्यरस्यौदनैः ।
धनीति निगदेत्तु कः कथमिहार्हयामास तद्वरात्सुधबन्धुसंततिमिति क्षमो वर्णयेत् ॥३२॥
तथैव वरपक्षजन्सदसि वस्त्रभूषादिभिर्बुधाः कनकमुद्रिकादिभिरशेषविद्याविदः ।
बुधाः कति समर्चिता विविधगाननृत्यादिसत्कलानिरु इहाद्य इति कथं नु वक्तुं क्षमाः ॥३३॥
समाप्य विधिमौपयामिकमशेषमत्युत्सवैस्सकेशवसुधीमणिस्सकलबन्धुमित्रादिभिः ।
स्नुषां स्वभवनं नवां विधिवदानिनायादरात् प्रवेशयितुमुत्सुकश्श्रियमिवादिलक्ष्मीं पराम् ॥३४॥
प्रवेश्य दिवसत्रये स्वकुलसम्प्रदायानुगो नतैस्स्वकुलदेवतार्चनमुखैस्समाराधयन् ।
सुराञ्जनपदस्थितानपि जनान् सुमृष्टाशनैर्यथार्हममरांशुकादिभिरपि स्वबन्धुव्रजम् ॥३५॥
स्मयं स विविधैर्महैरपि तथा निनीयोत्सुकश्चतुर्थदिवसे पुनर्नववधूं स्नुषां प्रैषयत् ।
पितुर्भवनमादराद्गमनभूषणैर्भूषयन् स्वबन्धुसहितां निजामपि च बन्धुतां प्राहिणोत् ॥३६॥
रामारायकविर्विधाय विधिवत्पाणिग्रहं वैभवैर्नार्थेऽस्नेहसि सम्प्रणुत्य स हरिं स्तुत्वा स्तवैर्निस्पृहः ।
ग्रन्थान्स्वविशोधनादिविधिना पश्चान्निजग्रामगो शेषान्वाचनतश्च वेदजननीमन्त्रं सहस्रं जपन् ॥३७॥
सूर्योदयस्थितिनं परं तटगतश्रीतिन्त्रिणीमूलगो जप्त्वा याति गृहं हयाननमनु साङ्गं स्मरन्नात्मनि ।
तत्रत्याय ने गृहे सुमहयन्दिव्योपचारैस्ततो भुङ्क्ते शिष्यगणं प्रपाठयति चाशयं तत्स्मात्स्वरन् ॥
रात्रौ ग्रन्थविशोधनं हृदि कलानत्वानुचिन्त्या ननु ग्रन्थाग्र रचनाऽऽशुचितिरिति ठरिपनिया प्रत्यहम् ।
सन्देहो न कलान्तरेषु सुकवेः सन्त्यप्यनेके सहस्रायप्रदिष्टधीः सुगुणः गुरोर्मन्वेषं हि तत् ॥३९॥
जिज्ञासाऽभवदात्मदेशिकगुणा ... रो रात्रि ... नो न कोऽपि च गुर्वन्योऽस्ति तज्ज्ञविन्
दिव्यात्मीयमहं परम् ... न्दां ... ... निज ... न ... गृहन्... दीक्षाविधे ॥४०॥
एवं चिन्तयतस्तु तस्य बुधाः ... ... गृहे ... ... ।
सद्गुणाकरदीक्षानिरत ... ... इति ... तपोनिधि ॥

प्राप्तो मे समयो निजार्थघटनोद्योगाय मद्वार्षिकस्वीकृत्यै बहवोऽभ्युपेयुरिह ते गेहं बुधास्तार्किकाः ।
ते वैयाकरणाश्च तन्त्रकुशला पृच्छामि तान्पाठने दैवानुग्रहतोऽत्र सिद्धलपितं के वा विदध्युर्बुधा ॥
इत्यालोचयितु कवेस्वगता द्विते त्रस्सु क्रमाद्विद्वासससदन कविस्स्वार्पितं तेभ्योऽथ सोऽनेदयत् ।
केचिद्धीरहृदोऽस्य पाठनविधौ नानाकलावेदिनोऽन्न्यादृक्मतिभासमञ्चितधियो नैवावकाशं ददु ॥४३॥
सोदर्यौ पुरिघन्नवंशवनधिप्रालेयभानू बुधौ सुब्रह्मण्य इति स्म राम इति च व्युत्पन्नमेधाविनौ ।
तर्के व्याकरणे च पारगजुषावाभाष्यमध्यापकौ तौ दृष्ट्वा विनयी न्यवेदयदयं कामं द्वयो पाठने ॥
तौ सन्तुष्टहृदौ भवादृशमहामेधाविनेऽध्यापनं शास्त्राधीतिफलं भवेद्धि विदुषामाचा तु कुर्वंस्तथा ।
गद्वालपुरागताविति समाकर्ण्य प्रबन्धार्गलिं बद्धा तेन विलक्षणप्रतिभयाऽनन्यादृशे कल्पने ॥४५॥
रामो भागवतोपनामहरिशास्त्र्याख्यातिविख्यातिगाधीतव्याकृतितन्त्रपारगतिमान् ज्येष्ठोऽनुजोऽयं मम ।
विद्वद्वौत्मगुम्मलूरुपपदश्रीसङ्गमेशाभिधाख्यानाधीतकणादतन्त्रकुशलः पाठयतोभयो ॥४६॥
इत्यामन्त्र्य वहृक्तवो तु बहुधा दातुं परीक्षामुभौ श्रीगद्वालमहापुरीपरिषदं यातौ परीक्षाविधौ ।
उत्तीर्णौ निजतन्त्रयोर्बुधनुतौ तौ भ्रातरावुत्तमश्रेण्या तत्र सुसत्कृतौ पुनरुपाय तौ कवेस्सन्निधिम् ॥४७॥
पश्चाद्रामबुधस्समारभत तं सिद्धान्तकौमुद्यभिख्यातं व्याकृतितन्त्रग प्रथमत पाठयं प्रबन्धं मुदा ।
तद्व्याख्याननिबन्धगाढविषयश्रेणीविशेषैस्सम पूर्वार्थं स समापिपत्प्रतिभया मासैस्त्रिभिस्त्वद्भुतम् ॥
सुब्रह्मण्यमनीष्यपीपठदिम प्रारभ्य तं संग्रहं तर्काणा विवृतिप्रबन्धगरिष्ठिशाशैस्सहोद्बोधयन् ।
व्याकृत्यर्थविचारगौरवकृताकालाधिकत्वात्त्रिभिर्मासैस्संग्रह एव पूर्तिमगमत्काणादतन्त्रे कवे ॥४९॥
पित्राज्ञामनुसृत्य रामविबुधस्स्वग्राममगोऽभूत्तदाऽहोरात्र स तु तर्कतन्त्रमपठत्तत्कोडचर्चान्वितम् ।
यावद्रामबुधागमं पुनरुपतस्थोत्तरार्थं पठन्कौमुद्या सविशेषचर्चमगमन्मासैस्त्रिभि पूर्णताम् ॥५०॥
आहूतौ जनकेन तौ जनपदं स्वं पण्डितौ भ्रातरौ व्याख्याग्रन्थततिं निधाय कविराडभ्यन्तिके जग्मतु ।
तान्ग्रन्थान्परिशील्य शेखरमुखान्व्याख्या शरद्राख्यभिख्याता शाब्दिककौमुदीसुविवृतिं चक्रे नवे कल्पने ॥
कालेऽस्मिन्श्वशुरो द्वितीयदुहिता मे पुष्पिणी ते स्नुषा सञ्जातेति विलिख्य विप्रमुखतो लेखा शुभा प्राहिणोत्
दृष्ट्वा तां स तु केशवो द्विजवरानभ्यर्च्य तौ मङ्गलद्रव्याण्याभजनैस्स्नुषार्थमुचितान्यानन्दत प्रैषिपत् ॥
गर्भाधानकृते मुहूर्तममलं निर्णाय्य मौहूर्तिकैराहूयार्यसुहृद्य स्वजननामादाय नेल्लूर्पुरीम् ।
गत्वा केशवराय आत्मसुतस्तस्मिन्मुहूर्ते शुभं तत्कार्यं प्रणिनाय वैभवयुत विद्वत्समर्चादिभि ॥५२॥
पश्चाद्बन्धुसुहृद्वृतो गुरुयुतस्तामादिलक्ष्मीं स्नुषामादायापि स केशवो निजगृह स्वभ्याययौ मोदत ।
रामारायबुधोऽथ रामविदुषे मादर्शयच्चा शरद्रात्रि दीक्षितकौमुदीविलसनाविष्कारिनामात्मना ॥५४॥
दृष्ट्वाऽयद्भुतकल्पनालिकलितं भावप्रदर्पोज्ज्वलं भाष्यार्थप्रमिता विचित्रविषयामर्शादिविद्योतिनीम् ।
आचार्योऽतिविसिष्मिये हृदि हयग्रीवोऽस्य वक्त्रादिमा लोकानुग्रहकाम्यया व्यदधत्व हृन्निधानामिति ॥५५॥
सुब्रह्मण्यमनीष्यपि स्फुटतरं श्रुत्वा तुतोषाधिकं तौ सान्दीपनिविनिमित्तगुरुनामासौ कवीशान ते ।
इत्यस्येत समस्ततन्त्रविदुष पुम्भूतभाषात्मन पुण्येनाध्ययनं कृतार्थमयि नौ जन्मापि चेत्यूचतु ॥५६॥

गन्तुं स्वीयगृहं कदाप्यथ कविं त्व पृच्छतां भ्रातरौ स प्रोचे गुरुदक्षिणामतिसृजाम्यादाय शक्त्या गुरू ।
धन्यं मां कुरुतं विनीनमिह मां यत्तत्त्रयुगमे युवा विज्ञं चाकुरुतां कृपामृतदृशा वीक्ष्यातुरं वेदने ॥५७॥
एवं सङ्गिरतेऽनुरत्प्रियतमच्छात्राय रामो गुरुर्नैषा मे प्रियदक्षिणा भवति भोर्वित्त रिमका किन्तु ते ।
ग्रन्थेषु प्रकटीकृतिर्गुरुतया सा मे प्रिया दक्षिणा स्याद्वित्तं न लषामि शाश्वतिकतां नाप्नोति सेत्यूचिवान्॥
सुब्रह्मण्यमनीष्यथ ब्रुवदलं वित्तेन मे किन्तु तचम्पूभागवत विवृण्वयि! भवेन्मेधश्रिया सत्कवे ।
गम्भीरं नवकालिदासरचितं ध्वन्यर्थपूर्णं त्वतिप्रौढं सा मम दक्षिणा प्रियतमेत्यूचे धनं मास्त्विति ॥५९॥
इत्युक्त्वा ययतुर्गुरू स्वसदनं वस्त्रादिभिस्सत्कृतौ व्याख्यातुं नवकालिदासरचित प्रारब्धवान् सत्कवि ।
सुब्रह्मण्यनिदेशन सुकल्पयत्नादौ स्वशब्दागमप्राप्ति रामगुरूत्तमादिति शरद्वन्द्यां च संवर्णयन् ॥६०॥
स्वग्रन्थेष्वखिलेषु तद्गुरुयुगं संवर्णयन्नादितस्स्वां भक्तिं प्रकटीचकार गुरुगां श्रीरामरायः कवि ।
तत्प्रौढं च मुरारिणा विरचितं व्याख्यातवान्नाटक ग्रन्थांश्चाप्यकरोत्समुद्रमथनश्रीकृष्णलीलादिकान्॥६१॥
श्रीरामानुजभाष्यमुख्यकविशिष्टाद्वैतगग्रन्थसङ्घात चात्मपितामहोपघटित सङ्कल्पसूर्योदयम् ।
दृष्ट्वावेत्य च कुल्यवृद्धजनताकामानुगोऽनोधयव्यक्तं तन्मततत्त्वबोधचतुरो रामानुजोक्तं वदन् ॥६२॥
शिष्य कश्चन राज्ञनण्डिनरसिंहाख्यो बुधस्त्वागतो धृत्वा पञ्चदशीं स माधवकृतां वेदान्तगां चिन्तयन् ।
श्रीमल्लादिकुलीनपण्डितवरश्रीरामकृष्णान्तिकेऽधीत्यान्तं गुरुरामरायकविना पृष्टोथ तस्मै ददौ ॥६३॥
तां सर्वां दिवसद्वये सुपरिशील्यान्तर्धरन्पण्डित पप्रच्छाथ नृसिंहशास्त्रिणमधीतैषा किलार्ये! त्वया ।
मत्यक्तत्त्वगते विकल्पविषये पद्ये विवृत्या बुध! ब्रूह्यर्थं त्विति सोऽब्रवीदवगतो नार्थो न वक्तुं क्षमः ॥६४॥
श्रित्वाऽथाऽब्रुवदत्र दोषनिवहं सर्वं च तस्मै कविर्व्यक्तं स्वां विवृतिं विलिख्य विपुला तस्मै ददौ तुष्टहृत् ।
स प्रारभ्य पुन. पपाठ सकला श्रीरामरायान्तिके गीताभाष्यमत पपाठ स परं श्रीरामकृष्णान्तिके॥६५॥
पश्चादागतवान् स्वभाष्यपठनं प्रोवाच शास्त्री पुनर्भाष्यग्रन्थमथाऽभ्युपेत्य दशभिश्चाहोभिरान्तं कविः ।
तद्भाष्यं परिशील्य शाङ्करमथोवाच प्रसन्नात्मवान्निस्सन्देहमिदं निरर्गलममूत्साधवन्वित पण्डित! ॥६६॥
श्रीरामानुजभाष्यमज्ञ! सकलं संवीक्षितं तत्र मे सन्देहा बहुला अधीतिविरहाज्जाता मया तर्किता. ।
दृष्ट्वा शाङ्करभाष्यमेतदधुना श्रुत्यन्तमार्गानुगं दोषत्वेन विनिश्चितास्तु विशयास्तद्भाष्यगा मे दृढाः ॥
इत्याभाष्य पुरस्सभाष्ययुगलं विन्यस्य सञ्चिन्तयन् तत्तच्छ्लोकगतार्थनिर्णयविधौ श्रुत्यर्थसंवादने ।
न्यत्यासं च निरूपयन्नकथयद्व्यक्तं नृसिंहाय तं श्रुत्यर्थप्रमितं तु शाङ्करमतं रामानुजीयादिति ॥६८॥
कालेऽस्मिन्प्रतिवादिभीतिकृदुपाभिख्यः कुलाचार्यको रङ्गाचार्य इति स्वशिष्यगणसन्दर्शाय सद्वैष्णव. ।
कुल्येभ्यस्स्वमतोपदेशविधिना चक्राङ्कनाष्टाक्षरीमन्त्रावाप्तय आजुहाव सुकविं कुल्यैस्सह प्रौढवाक् ॥६९॥
वेदैश्च स्मृतित· पुराणनिवहैस्तप्तमुद्राङ्कनं वेदाध्वानुगतद्विजातिविनते पापावहं कीर्तितम् ।
शूद्राणां ननु धर्म एष गदितो मा वा न मे रोचते ब्रूयस्तीह यदि श्रुतिस्मृतिरपि श्रीमन्निति प्रोचिवान् ॥
आचार्यस्स्वमतप्रबन्धवचनान्यूचेऽथ कान्यप्यथ श्रौतैस्स्मार्तवचश्चयैश्च बहुधा सोऽखण्डयत्सत्कविः ।
पश्चान्मौनमुपाश्रयत्स तु रुषा तद्दत्तभोज्यादिकं प्रत्याख्याय वितीर्णमस्य कुल्यैरादाय ग्रामागमत् ॥७१॥

भूयोऽद्वैतनिबन्धनैः पटुतरैरद्वैतसिद्ध्यादिभिस्साकं सम्परिशील्य शाङ्करमतं श्रुत्यर्थसंवादतः ।
गीताभाष्यरविप्रकाशकमहाव्याख्यां सुसङ्ख्यावतां चित्ताकर्षपटुं व्यधाच्छ्रुतिसुयुक्त्युद्भासितार्थाञ्चिताम् ॥
सेयं पण्डितमण्डलादरणसद्योग्या भवेद्वा न वेत्यंशं हृत्स्थमवैतुमत्र विदितं सत्तर्कवेदान्तयोः ।
श्रीमद्राजमहेन्द्रपत्तनगतख्यातादिभट्टान्वयोदीतेन्दुं किल राममूर्तिविबुधं व्याख्यायुतोऽगात्कविः ॥७३॥
नत्वाऽस्मै विनयेन देशिकवरायाश्रावय'न्नासतो भावो विद्यत' आदिघट्टविवृतिष्वत्यन्तमासक्तितः ।
द्वैताद्यन्यमतार्थखण्डनविधिष्वद्वैतसंस्थापने तुष्टोऽतीव नवोसि शङ्करगुरुर्यासोऽपि वेत्यूचिवान् ॥७४॥
व्याख्येयं श्रुतियुक्तिभिर्विलसिताद्वैताद्यसद्ध्वान्तविध्वंसिन्यन्यमतासदर्थतमसां श्रीष्मार्कभासासमा ।
क्वेदं धाम वयश्च बाल्यमहहाऽखण्डा च ते पाण्डिती शुश्रूषां च विना गुरोस्सुपटुना विद्यासु मुद्रापय॥७५॥
एवं तद्विबुधेन्द्रशंसनगिरश्श्रुत्वा परस्तात्कविस्तूर्णं स प्रथयाञ्चकार विमलां वेदान्तमुक्तावलीम् ।
अद्वैते प्रचुरां प्रबन्धविततिं श्रीशङ्कराशङ्करश्रीमद्भाष्यविमर्शमुख्यमहितामन्याः कृतीश्चाकरोत् ॥७६॥
वैशिष्ट्येन शताधिकास्तु सुकृतीस्सर्वेषु तन्त्रेष्वयं रामारायमहाकविर्व्यरचयद्विद्वन्मनोरञ्जनीः ।
प्रौढा तन्त्रसरस्वती सुमधुरा वाणी च काव्यावलौ रस्या यस्य महाकवेरसदृशी बाभात्यहो! विभ्रमै॥७७॥
पश्चाद्योगनिबन्धनानि विमृशन्पातञ्जलादीनि सत्पातूर्यन्वयजाक्कुभट्टविबुधाभ्यासे समभ्यस्तवान् ।
तत्तद्रेचकपूरकादिघटितैर्योगैर्धरोर्ध्वं वसन् चित्तं साधु निरुध्य चात्महृदये। दध्यौ हयास्यं विभुम् ॥७८॥
श्रीवेदाद्रिनृसिंहपुण्यधरणिं गत्वा सुसिद्धां कविर्दारैश्छालकरालखण्डिनरसिंहेनापि साकं बुधा ।
योगेनात्मनि संस्मरन् हयमुखं मन्त्रं जजापान्वहं दीक्षान्ते हवनादितः प्रमदयन् सिद्धोऽथ गेहं ययौ ॥
स्वस्थे तिष्ठति शिष्यपाठनपटुमन्यालिनिर्माणकैस्स्वीये वेश्मनि सत्कलौ नरसराट्पुर्या बधाने शनैः ।
श्रीमद्विपतिवेङ्कटेश्वरमहाकव्योर्विधेये बुधाः केचिन्प्राप्य कविं त्विमं समलपन्क्लिष्टां समस्यां मुहुः ॥
न क्लिष्टा त्ववधानकाल इह भो! दातुं समस्योचिता तौ विद्वत्कविकुञ्जराविति न तल्लेशप्रदौ गच्छत ।
एवं श्रीकविनोदिते पुनरिमे देया समस्या वराऽवश्यन्त्वित्यथ सत्कविं बलवदाकांक्षन्त यामस्तु न ॥
प्रत्याख्यानमनर्हमित्यथ स तामालोच्य रामो बुधः 'पश्यापश्ययुगं न पश्यति' समस्येयं प्रदेयेत्यदात् ।
नैतां साधुमवोचतुस्सदसि तौ विद्वत्कवी पश्यशब्दादेशो नहि केवलस्य तु दृशेरूचे सुधीर्वामन ॥८२॥
प्रत्यूचेऽथ स रामरायसुकविस्सूत्रेऽनुवृत्तिं पुनः कौमुद्यां ननु दीक्षितोऽनुमनुते तस्यानुवृत्तिं त्विह ।
श्रीहर्षादिधयाद्युदाहरणतो व्यक्तं तु वक्ति प्रमासिद्धं चेति ततो प्रमाऽभवदियं साध्वी समस्या बुधाः ॥
प्राचीनं मतमत्र साध्विति बुधाः केचिन्नवीनं मतं साध्वित्यन्यबुधा मतद्वयमिदा भिन्नं तु पक्षद्वयम् ।
साध्वेवेति विशो विवादपदगं साध्यं यथा पण्डितारश्रीहर्षादिकविप्रयोगविततिः पुष्णाति नव्यं मतम् ॥
पश्यापश्यसमस्यया तदुभयोर्वादोऽथ वृद्धो मिथो ग्रन्थैरन्यनिरुक्तखण्डनपरैस्स्वस्वामहादर्शकैः ।
गुञ्जागर्वविभञ्जनादिकृतिभिः प्रत्युक्तवान्दीक्षितोक्तार्थाध्वानुगतोऽत्र रामकविराट्प्राच्यं मतं खण्डयन् ॥
पश्चात्कश्चन कामराजतुलजः कोटीशशर्माऽऽगतो दैवाद्वैतमतप्रतिष्ठितिकृतावेशो नियोगिव्रजम् ।
द्रष्टुं स्वमतेन सन्ततसमुद्योगी चरन्वैदिकान्निन्दन्नासुरभावगांश्च कथयन्नभ्यन्तिकं सत्कवेः ॥८६॥

दैवाद्वैतमतं नियोगिजनतोद्धृत्यै समास्थाप्य यश्शास्त्रार्थान् सुविरच्य वैदिकबुधान्जित्वाऽऽन्ध्रदेशेऽखिले ।
पाण्डित्यप्रतिभाञ्चितस्स्वयशसा शिष्टः कवे नन्दिराड्वंशेन्दोरिह दीक्षितस्य विजयं काव्यं कुरु त्वं क्षमः ॥
एवं तस्य गिरो निशम्य कविराट्द्वैतभेदः कथं श्रुत्यन्तैर्न निरुच्यते बुध तदद्वैतं किलैकं त्वया ।
दैवं चासुरमुच्यते द्विविधमित्यत्र प्रमाणं वद त्वं चेच्छक्त इदं त्वनार्षमसदप्यस्थानवैराश्रयम् ॥८८॥
साध्वी ते सरणिर्न वैदिकगणद्वेषानुसन्धायिनी सर्वे ते च वयं च वैदिकमहामार्गानुगा वैदिकाः ।
प्राचीनास्तु नियोगिनो नृपपदेष्वास्थाय मन्त्र्यादयस्स्वीयं याजनमुख्यकर्म विजहुर्वृत्त्या तया तेऽलसाः ॥
भ्रातृणां तु मिथोऽनुषक्तसुहृदां वैरं यथोत्पादयेत्कश्चित्कश्मलहृत्त्वमर्थमनुसन्धायात्र कं चापि वा ।
वक्रं मार्गमुपाश्रयन्नुपनिषन्मार्गेऽमले त्वं पुनर्वैरोत्पादयसि वैदिकेषु सकलेष्वेतन्न मन्ये तु सत् ॥९०॥
श्रीमच्छङ्करदेशिकेन्द्रमुखवत्किं वापि नामानुपं कर्मादर्शयदत्र दीक्षितबुधो नैव श्रुतं क्वापि वा ।
तस्मादार्य न दीक्षितस्य विजयं ग्रथ्नामि काव्यात्मना किंतु त्वद्दलनस्तदष्टकमिह ग्रथ्नामि तत्स्वीकुरु ॥९१॥
नैतत्साधु नियोगिवैदिकविरोधोत्पादनं तत्कृते दैवाद्वैतमतप्रचारणमपि श्रौताध्वभिन्नं तव ।
इत्युक्त्वाष्टकमात्तमेव स दिशन्प्रास्थापयत्तं कविस्स्वग्रामाय कदापि तात्त्विकबुधा नासाधुमार्गानुगाः ॥
पश्चात् ज्ञातिकुटुम्बगाब्दिकविधेर्दत्तेन निर्वाहणे प्राप्ते धर्मविवाद एष सुकविः काशीबुधां निर्णयम् ।
सत्म्बीकारविधिप्रबन्धमुखतस्तं खण्डयन्धर्मविद् धर्मं शास्त्रगतं त्वतिष्ठिपदहो! सर्वत्र सत्पाण्डिती ॥९३॥
अद्वैतामृतदीपिकादिबहुलग्रन्थावलीनिर्मितौ कालं यापयतीह कश्चन बुधः प्रोवाच निर्मत्सरम् ।
नैते मुद्रणमन्तराऽत्र जगति प्राकाश्यमीयुः कवे तन्मुद्रापय वित्ततो निजनिबन्धानाचरार्थान्वितान् ॥९४॥
प्रत्यूचेऽथ कविर्न पूर्वकवयश्श्रीकालिदासादयो मुद्रायन्त्रमुपेत्य ते स्म विदधुर्ग्रन्थान्सुधाकर्षकान् ।
ग्रन्था जीवयुताः प्रकाशपदवीं गच्छेयुरार्यादृताः निर्जीवा यदि ते प्रकाशरहिता नश्येयुरेषा स्थितिः ॥
विक्रीयावनिमङ्क्ष मुद्रणदशामेषां न संसाधये यावज्जीवमिह प्रबन्धरचनां वेदान्तचिन्तावहाम् ।
नैवोत्सृज्य चरामि मुद्रणगतं धर्मं परेभ्यो दिशाम्यग्रे स्पर्धनिधानिकोत्तमबुधास्ते दीपयेयुस्त्विमान् ॥
इत्याभाष्य ततः कति स्ववसुना मुद्रापयामास चाद्वैतब्रह्मविचारतो गमयति स्मानेहसं संततम् ।
तद्देहं मधुमेहनामकरुजाऽजीर्णामयो नित्यशो बाधेते क्रमशश्च शुष्कतनुरासीच्च रामः कविः ॥९७॥
वैद्या मानसिकं विचारमनिशं सन्त्यज्य विश्रान्तिमान् वर्तेथा यदि रोगमौषधवरैर्विध्वंसयामो वयम् ।
नोचेत्त्वन्ननु नैव रोगशमने विद्मक्षिति प्रोचिरे नाहं ब्रह्मविचारवारणपटुः स्थूलं रुजा बाधनाम् ॥९८॥
पश्चात्पादतलेऽल्पकाल उदितो राजव्रणस्सत्कवेरानन्दाब्दगतोर्जशुक्लनवमीतिथ्यां गतो ब्रह्मताम् ।
अष्टत्रिंशमिताब्दके तु वयसि श्रीशङ्कराचार्यतत्पञ्चाभ्यधिके नवोऽयमगमद्ब्रह्मात्मतां शङ्करः ॥९९॥
रामारायनदाक्षविंशतिमुखनासासिरोचन्महानियमसार्धशतप्रबन्धरचनानिर्माताऽतिपूतक्रियः ।
अमुर्वेन्द्ववनिस्थिरं स्वकृतिसन्तानं व्यवस्थाप्य सत्यत्वं गतवानितोऽस्ति पुरुषः को नाम! धन्यास्तवान् ॥
दम्पतीकारहत्त्ये पतिमृतिसमये शासनं प्राप्य जाया अत्र ह ज्ञातिपुत्रं विधिवदथ सुतत्वेन नारायणाख्यम् ।
पत्युस्तस्योपनामप्रभृतिविधिगतं पालयन्त्यर्पमार्गं प्रमीमूस्य भर्तुः कृतिविततिमहासन्ततिं चान्वरन्ती ॥

पश्चात्कोटीशशर्मा स पुनरपययौ तत्कृतिव्रातरक्षादीक्षा मुद्रापणाद्यैर्यदपि च तु नटैस्तत्वमन्वधानशेषान् ।
वाग्भिस्साध्वीभिरार्द्रो सुकविवरवधूं तां समाधाय निन्ये स्वं धामासौ कृतीनां न किमपि विदधे रक्षणं सम्प्रदार्थी॥
विद्वान्नैवावत्स प्रथितसुकविताचक्रपाथोनिधीन्दुस्श्रीसुब्रह्मण्यशास्त्री निखिलबुधकलारक्षणात्तात्मदीक्षः ।
भैषज्यायै कदाचित्सुकविजनपदं प्राप्य पत्नीमपृच्छद्ग्रन्थमुद्रापणार्थे निजरतिमतुलां सा धु मुद्रापणेन ॥
भूरिद्रव्यव्ययार्ज्या भवति कृतिरियं श्रीमतां धार्मिकाणामौदार्येणेह साध्या धनयतनवतां स्याद्वशादम्बुधानाम् ।
निन्ये कोटीशशर्मा कृतिविततिमितो नाकरोत्किञ्चनापि प्राज्ञा यूयं यतध्वं मम सुकविपते कीर्तिमुद्द्योतयध्वम्॥
श्रुत्वा वचनानि तस्या अहमिह न धनी वाग्धनं मे वितीर्य श्रीमं सद्भात्रुवर्गे कुलसति सुयते जीवितं यावदास्ते ।
अद्याप्यान्ध्रदेशे धनतरमतयस्सन्त्युदारा धनढ्या धन्यो देशोपि नाय निबुधकृतिरतैस्साधयामीह कार्यम्॥
इत्युक्त्वा बद्धदीक्षः कृतिविततिसमुद्दीपने धाम गत्वा स्वं सुब्रह्मण्यशास्त्री पुरगतमददत्साधुनारायणार्थम् ।
दाता धर्मी धनाढ्यस्स विपुलधनतोऽचीचकासत्कृती द्वे एकां वैश्याज्जनेयप्रभृतिरसविदो भूरिवित्तेन कश्चित्॥
एवं तद्रामरायाभिधविबुधकविप्रष्ठसद्ग्रन्थजालं श्रीसुब्रह्मण्यशास्त्री प्रथयति विबुधानन्दधन्यधन्यजीवी ।
अथान्यश्चान्तरज्ञः कृतिविततिममर्त्यादिमुद्रापणाद्यै धन्या मुद्रापकास्ते स्वधनवितरणैस्सर्वसद्भोगभाजः ॥
बौद्धाद्यन्तकर्मञ्चनिभरतधरामण्डले केरले यः प्रादुर्भूतः पुरा दुर्मततिमिररविश्शङ्करस्वीयधाम्ना ।
सोऽयं म्येनाधुना तत्समधिककुमतच्छित्तये वैष्णवेनाप्याविर्भूतोऽतिधन्या वयमिह मनुमो रामरायार्ययेति॥
जीयाच्छ्रीरामरायो निजकृतिसुयशश्चन्द्रिकव्राजिताशो धन्यो यज्जन्मनान्ध्रस्तदुरुकृतिसमुद्दीपनेनापि भूयात्।
कीर्तिज्योत्स्ना तदीया महितकृतिसुमुद्रापणेनात्मवित्तत्यागैराकामयेयुस्सकलशुभफलाधायिभिस्ते च धन्याः ॥
धन्यास्मत्काव्यकन्या भवति सुमहिताखण्डपाण्डित्यशौण्डश्रीरामारायविद्वत्कविहयवदनोदन्तसद्वर्णनेन ।
धन्योऽन्वर्थोपनामा तदुरुकृतिसमुद्दीपनोपात्तदीक्षश्श्रीसुब्रह्मण्यशास्त्री सकलकृतिततिं भासयत्यान्ध्रदेशात् ॥
इति पुस्तककलस्युत्यो विद्वत्कविसार्वभौमपदभाग्य । अभिनवपण्डितराजो विद्यावाचस्पतिश्च विबुधकविरत्नम्॥
श विद्वत्कर्सयुदिनो धर्मोपन्यासकेसरीति बुधैः । कुलपतिधर्माध्यापककविरत्नमुखैः पदैश्च ससत्तु ॥२॥
स उमामहेश्वरसुधीश्श्रीरामारायविबुधकविराजः । अष्टोत्तरशतपद्यैर्वर्णयज्जीवितोदन्तम् ॥३॥

श्रीहयग्रीवार्पितोस्तु ।

---

इति श्रीमदान्ध्रधरणीमणिभूषणायमान श्रीकोनसीममण्डलमण्डनमुङ्गण्डमहाग्रहारवास्तव्य
अत्रिगोत्रपवित्र पुल्योपनामकोमामहेश्वरशास्त्रिकृतिषु वेल्लङ्कोण्ड रामराय
महाकविजीवितोदन्तवर्णकं खण्डकाव्यं सम्पूर्णम् ।
श्रीनन्दनवर्षाश्वयुज शुद्धदशमीभानुवासर ।
पुल्य उमामहेश्वरशास्त्री ।

---



श्रीहयग्रीवाय नमः ।

# श्रीभगवद्गीता ।

## भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेता ।

भाष्यार्कप्रकाशप्रारम्भः ।

श्लो ॥ श्रीमद्धयग्रीवपदारविन्दमारन्दसानन्दमनोमिलिन्दः ।
रामः कविर्व्याप्रियते यथार्थगीतार्थभाष्यार्थविमर्शनार्थे ॥

अस्ति खलु भुवि समस्तास्तिकजनैरपौरुषेयतया स्वतःप्रमाणतया चाभ्युपगतः परमेश्वराज्ञारूपः स्मृत्यादिमूलप्रमाणं वेद इति महच्छास्त्रम् । अनेन हि शास्यते- 'अहरहस्सन्ध्यामुपासीत, यावज्जीवमग्निहोत्रं जुहुयात्, न परदारान् गच्छेत्, न सुरां पिबे'दित्यादिविधिनिषेधसन्ततिः ।

अयं च पूर्वोत्तरभागद्वयात्मकः- तत्र कर्मकाण्डप्रतिपादकः पूर्वो भागः- यस्यैव मीमांसा जैमिनिना कृता 'अथातो धर्मजिज्ञासे'त्यादिना पूर्वमीमांसाशास्त्रमिति व्यवह्रियते । साध्यधर्मप्रतिपादकश्चायमभ्युदयहेतुश्चित्तशुद्धिजनकतया ज्ञानोत्पत्तिहेतुश्च । एतदुक्तकर्ममार्ग एव 'कर्मयोगेन योगिना'मिति गीताशास्त्रे कर्मयोग इति प्रतिपादितः ।

अथ ज्ञानकाण्डप्रतिपादक उत्तरो भागः- यस्यैव मीमांसा व्यासेन कृता 'अथातो ब्रह्मजिज्ञा'सेत्यादिना- उत्तरमीमांसाशास्त्रमिति व्यवह्रियते । सिद्धब्रह्मप्रतिपादकश्चायं मोक्षहेतुस्साक्षादिति । एतदुक्तज्ञानमार्ग एव 'ज्ञानयोगेन सङ्ख्याना'मिति गीताशास्त्रे ज्ञानयोग इति प्रतिपादितः । १।

अस्यैवोत्तरभागस्योपनिषद इति जन्मजरामरणादिदुःखनिशातनाद्ब्रह्मापकत्वाच्च व्यवहारः, तत्तद्वेदशाखान्तत्वाच्च वेदान्ता इति व्यवहारः ।

आसां चोपनिषदां प्रधानतात्पर्यं ब्रह्मात्मैक्यप्रतिपादन एवेति कृत्वा अद्वितीयं ब्रह्मैवासां विषयः । स च मुख्यत एवाभिहितः- 'एकमेवाद्वितीयं ब्रह्मे'ति । लक्षणया च प्रत्यगादि- 'तत्त्वमसि, अयमात्मा ब्रह्म, अहं ब्रह्मास्मि, प्रज्ञानं ब्रह्मे'ति । भागत्यागलक्षणया हि महावाक्यानामेतेषामखण्डं ब्रह्मैवार्थः ।

एतदुपनिषदर्थप्रतिपादनपरत्वादेव भगवद्गीतानामुपनिषत्त्वव्यवहारः- 'भगवद्गीतासूपनिष'त्स्विति ।

तत्र प्रथमषट्के 'न जायते म्रियते वे'त्यादिभिस्त्वंपदार्थजीवस्वरूपं शोधितम् । मध्यमषट्के 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथे'त्यादिभिस्तत्पदार्थेश्वरस्वरूपं शोधितम् । चरमषट्के तु 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भार'तेत्यादिभिरसिपदार्थो विवृतः ।

फलं च 'ब्रह्मविद्ब्रह्मैव भव'तीति ब्रह्मसायुज्यलक्षणं वेदान्तैर्मुखत एवाभिहितम् । गीताभिश्च— 'मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते । मामेवैष्यसी'त्यादिना ।

'शान्तो दान्त उपरतस्तितिक्षुस्समाहितश्श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये'दिति श्रुत्या शमादि-सम्पन्नोऽधिकारी दर्शितः । गीतास्वपि- 'तानि सर्वाणि संयम्य तांस्तितिक्षस्व भारते'त्यादिना । किंच— अत्राधिकारिणा इहामुत्रफलभोगविरागिणा भवितव्यमित्येतदुपोद्घातग्रन्थसन्दर्भेण दर्शितं 'न कांक्षे विजयं कृष्ण । नच राज्यं सुखानि चे'त्यादिना । एवमधिकारिणा 'तद्विज्ञानाय स गुरुमेवाभिगच्छेत्समित्पाणि-श्श्रोत्रियं ब्रह्मनिष्ठ'मिति श्रुत्या गुरूपसत्तिः कार्येति बोधितम् । अत्रापि उपोद्घातग्रन्थे 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्न'मिति ।

एवं शास्त्रस्य विषयप्रयोजनाधिकारिणो निरूपिताः । सम्बन्धस्तु विषयग्रन्थयोः प्रतिपाद्यप्रति-पादकभावरूपः । फलाधिकारिणोः प्राप्यप्राप्तृभावरूपः । फलग्रन्थयोः प्राप्यप्रापकभावरूपः- उपेयो-पायभावरूप इत्यर्थः । विषयाधिकारिणोर्ज्ञेयज्ञातृभावरूपः, ग्रन्थाधिकारिणोरध्येयाध्येतृभावरूपः, विषय-प्रयोजनयोर्जन्यजनकभावरूपः- इति ।

एवमुपनिषद्भिस्सह गीतानां समानविषयादिमत्त्वादुपनिषदां भाष्यं रचितवता श्रीशङ्करावतारेण श्रीशङ्कराचार्येण गीतानामपि भाष्यं विरचितम् । नच व्यर्थमिदमिति मन्तव्यं, उपनिषदां गम्भीरहृदय-त्वेन दुर्बोधत्वात्तदर्थं निश्चित्य संक्षिप्य भगवता बादरायणेन विष्ण्ववतारेण गीतानामुक्तत्वात्तथैव तद्भाष्यं रचनीयमेवेति । 'शिवस्य हृदयं विष्णुर्विष्णोश्च हृदयं शिवः' इति, 'शङ्करश्शङ्करस्साक्षाद्व्यासो नारायणो हरि'रिति च वचनाद्विष्ण्ववतारव्यासहृदयपरिज्ञानं शिवावतारशङ्करैकविषयमेवेति कृत्वा गीताभिप्राय-श्शाङ्करभाष्यादेव ज्ञेयः, नतु रामानुजभाष्यादिभिः- तेषां श्री शङ्करभाष्यनिन्दैकप्रधानोद्देशत्वात्—मूला-ननुगतार्थत्वाद्वेदान्तविरुद्धत्वेनाप्रमाणत्वाच्च तद्भाष्याणाम् ।

तत्र च शङ्करभाष्यप्रतिपक्षभूतभाष्यमध्ये रामानुजभाष्यमेव प्रधानमिति प्रधानमल्लनिबर्हणन्यायेन रामानुजभाष्ये वेदान्तदेशिककृततात्पर्यचन्द्रिकासहिते श्रुतियुक्त्यादिभिर्विमृष्टे सति शङ्करभाष्यं निरवद्य-ममतिमटं स्थितं स्यादित्येतदर्थमहमधुना मन्दमतिरपि श्रीहयग्रीवदेवकृपया श्रीशाङ्करभगवद्गीताभाष्य-व्याख्याने प्रवृत्तः । किंनाम दुष्करमचिन्त्यविचित्रशक्तेर्भगवतः कृपायाः- तृणमपि श्रीरामेण निहित-शक्तिकं ब्रह्मास्त्रमभवत्किल काकासुरे ।

'पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षण'मिति पञ्चलक्षणं व्याख्यानम् । इदं च मया मूलग्रन्थस्यापि श्रीशङ्कराचार्यैरकृतव्याख्यानस्य क्रियते । तैर्व्या-ख्यातश्लोकानां च पदान्वयः प्रदर्श्यते ।

अत्र च 'अशोच्या'नित्यारभ्य किञ्चिदूनसप्तदशाध्यायात्मकं 'सर्वधर्मा'नित्यन्तमेव गीताशास्त्रम् । तदेव व्याकृतमाचार्यैः । अवशिष्टं तूपोद्घातरूपकथामात्रं स्पष्टार्थं चेति न व्याकृतम् ।

ननु शङ्करमते ग्रन्थारम्भ एव नोपपद्यते- गुरुशिष्यादिद्वैताभावादित्याह वेदान्तदेशिकस्तत्र कोपपत्तिरिति, चेदुच्यते—परमार्थदशायां द्वैताभावेऽपि व्यवहारदशायां तत्सत्त्वान्न ग्रन्थारम्भानुपपत्तिरिति । अस्ति हि द्वैतिनामपि समाध्यादौ द्वैताभावः, अन्यत्र द्वैतसत्त्वम्। किं बहुना- सर्वेषामपि प्राणिनां सुषुप्तौ द्वैताभावस्स्वप्नजागरयोस्तु द्वैतसत्त्वं चेति सर्वजनविदितमेव- 'यत्र सर्वमात्मैवाभूत्तत्र केन किं पश्ये'दिति श्रुतेः । सुषुप्तिमुक्तिविषयत्वं 'स्वाप्ययसम्पत्त्यो'रिति सूत्रेण व्यासेनैव स्थापितम् । नच द्वैतसत्त्वे व्यवहारः, व्यवहारसत्त्वे द्वैतमित्यन्योऽन्याश्रय इति वाच्यं, अनादित्वादुभयोर्बीजांकुरवत् । नाप्यज्ञजनाश्रयो व्यवहार इति वाच्यं, लीलया जगज्जन्मादिषु व्यवहरत ईश्वरस्याप्यज्ञत्वापत्तेः । तस्माद्द्वैताश्रय एव व्यवहारः, व्यवहाराश्रयमेव द्वैतं- यथा शब्दाश्रयोऽर्थः अर्थाश्रयश्शब्दश्च । उभयमपीदमद्वैते ब्रह्मणि मायया कल्पितमिति न ब्रह्मणो द्वैतप्रसङ्गः ।

वस्तुतस्तु प्रतिपक्षशिरस्येवायं दोषो वज्रप्रहारः प्रपतति- तथाहि- ईश्वरः प्रलयदशायां सूक्ष्मचिदचिद्विशिष्टः, प्रपञ्चदशायां तु स्थूलचिदचिद्विशिष्ट इति विशिष्टाद्वैतिनो वदन्ति । ततश्च सर्वदापि चिदचिद्विशिष्ट एवेश्वर इति चिदचितोरीश्वरसायुज्यस्य नित्यसिद्धत्वान्निष्फलत्वेन तावदनारम्भणीयं विशिष्टाद्वैतमते वेदान्तशास्त्रम् । चितो जीवस्याचिद्विशिष्टेश्वरसायुज्यं चार्धांशेन स्थावरत्वं जनयतीति पुनरनर्थमदश्च । ईश्वरस्य चिदचितोरपृथक्सिद्धविशेषणत्वेन स्वापृथक्सिद्धान् स्वानन्यांश्चेतनानुद्दिश्येश्वरस्योपदेशोऽपि न घटत इति कृष्णस्यार्जुनं प्रत्युपदेशानुपपत्तिश्च । अर्जुनश्चित्- शास्त्रमचित्- विशिष्टस्त्वीश्वर इति स्थिते अर्जुनशास्त्रविशिष्ट ईश्वरोऽर्जुनायोपदिशति शास्त्रमिति प्राप्तमिदमपार्थं खलु वाक्यमर्जुनादिभिन्नस्यैव तदुपदेशक्रियान्वयौचित्यात् । नच लक्षणया विशेषणांशत्यागः, अपृथक्सिद्धयोर्विशेषणयोस्त्यागायोगात्- त्यागेसति विशेषणस्वरूपासिद्धेः । अर्जुनदेहरूपाचिद्विशिष्टस्य कृष्णदेहरूपाचिद्विशिष्टस्य चेश्वरस्यैकत्वेन गुरुशिष्यभेदायोगाच्च कृष्णदेह इवार्जुनदेहेऽपीश्वरसत्त्वानङ्गीकारे ईश्वरस्य सर्वव्याप्तिभङ्गप्रसङ्गात् । नचार्जुनदेहविशिष्टचिते कृष्णदेहविशिष्ट ईश्वर उपदिशतीति वाच्यं, अर्जुनदेह इव कृष्णदेहेऽपि चितस्सत्त्वादन्यथा तद्देहावच्छिन्नेश्वरस्य चिद्वैशिष्ट्याभावेन चिदचिद्विशिष्टेश्वरत्वाभावादर्जुनदेहतचिद्विशिष्टस्य कृष्णदेहतचिद्विशिष्टस्य चैकत्वात् । स्फुटीभविष्यत्ययमंश उत्तरत्रेतीहोपरम्यते ॥



सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ।
यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥



अग्रे कृत्वा कमपि चरणं जानुनैकेन तिष्ठन् पश्चार्धेन प्रणयरसजुषा चक्षुषाऽवेक्षमाणः ।
सव्ये तोत्रं करसरसिजे दक्षिणे ज्ञानमुद्रामाबिभ्राणो रथमधिवसन्पातु नः सूतवेषः ॥

कीलकसंवत्सर आश्वयुजशुद्ध-
पञ्चम्यामस्य प्रारम्भः ।

श्रीरामकवितागन्थमाला-
वेदान्तमञ्जरी २ कुसुमम् ।



श्रीहयग्रीवाय नमः ।

# श्रीभगवद्गीता ।

## प्रथमोऽध्यायः ।

धृतराष्ट्र उवाच— गी॥ धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ।
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥१॥

व्या॥ अन्धो धृतराष्ट्रः स्वस्य स्वभारतयुद्धवृत्तान्तकथनार्थं व्यासेन नियुक्तेन तद्दत्तशक्तिना च सञ्जयेनसाकं प्रश्नोत्तरिकया व्यवहृतवानिति कृत्वा आह भगवान्व्यासः- धृतराष्ट्र उवाचेति । धृतं राष्ट्रं जगद्रूपं येन स धृतराष्ट्र ईश्वर इति भगवत्स्मरणात्मकमङ्गलं व्यञ्जनावृत्त्या भगवता बादरायणेन ग्रन्थादौ ग्रथितम् । यद्वा भारतग्रन्थान्तर्गतत्वात्तदादौ यन्मङ्गलं कृतं तदेव गीताशास्त्रस्यापि निर्विघ्नपरिसमाप्तयेऽलमिति न पृथङ्मङ्गलं कृतम् । वस्तुतस्तु गीताशास्त्रस्याशोच्यानित्यादित्वात्तदादौ भगवानुवाचेति मङ्गलं ग्रथितमेवेति बोध्यम् । उवाचेति—पप्रच्छेत्यर्थः; सञ्जयमिति शेषः ।

तदेवाह— धर्मक्षेत्र इति । हेसञ्जय धर्मक्षेत्रे कुरुक्षेत्रे युयुत्सवस्समवेता मामकाः पाण्डवाश्चैव किमकुर्वतेत्यन्वयः । धर्मो यज्ञयुद्धादिश्श्रुत्यादिविहितस्स्वर्गादिहेतुस्तस्य क्षेत्रं विहितस्थलं धर्मक्षेत्रं, पुण्यभूमित्वात्तत्र कृतस्स्वल्पोऽपि धर्मो बहुफलदो भवतीति द्योतनार्थमिदं विशेषणम् । कुरुक्षेत्रे कुरुराजपाल्यभूमौ योद्धुमिच्छवो युयुत्सवः- युध्यतेस्सन्नन्तादुः- सन्त इति शेषः । समवेतास्सङ्गता ममेमे मामकाः, 'तवकममकावेकवचने' इति ममकादेशः । मत्पुत्राः दुर्योधनादयः पाण्डोरपत्यानि पाण्डवाः 'तस्यापत्य'मित्यण्- धर्मराजादयः चकारादन्ये सहाया राजानः- एवकाराच्चतुरङ्गसैन्यानि किमकुर्वत किमनुष्ठितवन्तः । किं युद्धं चक्रुः ? यद्वा सन्धिमिति प्रश्नार्थः । कर्मफलस्य विजयादिरूपस्यात्मगामित्वादात्मनेपदनिर्देशः ॥१॥

सञ्जय उवाच— दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ।
आचार्यमुपसङ्गम्य राजा वचनमब्रवीत् ॥२॥

सञ्जय उवाच- धृतराष्ट्रं प्रतीति शेषः । तदेवाह दृष्ट्वेत्यादिना— दृष्ट्वेति । राजा दुर्योधनस्तु तदा व्यूढं व्यूहाकारेण स्थितं पाण्डवानीकं पाण्डवसेनां दृष्ट्वा आचार्यं द्रोणमुपसङ्गम्य उपसृत्य

वचनं वक्ष्यमाणप्रकारं वाक्यं जात्येकवचनं वचनानीत्यर्थः । अब्रवीदुवाच । पाकं पचतीतिवन्निर्देशः सर्वकविसम्मतत्वान्न पुनरुक्तिदोषावहः ॥२॥

पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ।
व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥३॥

**पश्येति** । हे आचार्य ! धीमता बुद्धिशालिना तव शिष्येण द्रुपदपुत्रेण धृष्टद्युम्नेन सेनापतिना व्यूढां व्यूहाकारेण स्थापितां महतीमधिकां प्रबलां वा पाण्डुपुत्राणां सम्बन्धिनीमेतां पुरोवर्तिनीं चमूं सेनां पश्य ॥३॥

अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ।
युयुधानो विराटश्च द्रुपदश्च महारथः ॥४॥

**अत्रेति** । अत्र पाण्डवसेनायां युधि युद्धे विषये भीमार्जुनसमाः महेष्वासा महाशरासनाः शूरास्सन्तीति शेषः । तेषां नामान्याह—युयुधान इत्यादिना । युयुधानस्सात्यकिः महारथ इति 'आत्मानं सारथिं चाश्वान् रक्षन् युध्येत यो नर । ■ महारथसंज्ञस्स्या'दित्युक्तलक्षणः ॥४॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ।
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥५॥

**धृष्टकेतुरिति** । अत्र वीर्यवानिति नरपुङ्गव इति च विशेषणे, अवशिष्टानि विशेष्याणीति विवेकः ॥५॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ।
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥६॥

**युधामन्युरिति** । युधामन्युरुत्तमौजाश्चेति विशेष्ये । तद्विशेषणे विक्रान्तो वीर्यवानिति । सौभद्रोऽभिमन्युः तस्येदमित्यण्- द्रौपद्या अपत्यानि द्रौपदेया स्त्रीभ्यो ढगिति ढक्- एते सर्वे महारथा एव ॥

अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम !
नायका मम सैन्यस्य संज्ञार्थं तान् ब्रवीमि ते ॥७॥

**अस्माकमिति** । सेनायामिति शेषः । ये विशिष्टा उत्कृष्टा महारथत्वेन गणनीया इत्यर्थः । मम सैन्यस्य नायकाः तान् संज्ञार्थं ते तुभ्यं ब्रवीमि हेद्विजोत्तम तान् निबोध जानीहि ॥७॥

भवान् भीष्मश्च कर्णश्च कृपश्च समितिंजयः ।
अश्वत्थामा विकर्णश्च सौमदत्तिर्जयद्रथः ॥८॥

**भवानिति** । द्रोणाचार्य इत्यर्थ । समितिं संग्रामं जयतीति समितिञ्जय इति कृपविशेषणम् । सौमदत्तिर्भूरिश्रवाः ॥८॥

अन्ये च बहवश्शूरा मदर्थे त्यक्तजीविताः ।
नानाशस्त्रप्रहरणास्सर्वे युद्धविशारदाः ॥९॥

अन्य इति । मदर्थे मत्कृते त्यक्तजीविता विसृष्टप्राणाः प्राणानपि त्यक्तुं व्यवसितवन्तः प्राणैरप्यस्मदुपकारकरणे बद्धबुद्धय इत्यर्थः । नतु मरणकातरा इति भावः । अनेन च दैवादपजयो दुर्योधनस्य सूचितः । नतु तत्र दुर्योधनस्य तात्पर्यमस्तीति कल्पयितुं शक्यम् । अन्येऽपि शूरा बहवस्सन्ति सर्वेपि नानाशस्त्रप्रहरणा नानाविधशस्त्रादिसाधनवन्तः युद्धविशारदाश्च भवन्तीति शेषः ॥९॥

अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ।
पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥१०॥

अपर्याप्तमिति । तत्तस्मात्पूर्वोक्तविधत्वादित्यर्थः । भीष्माभिरक्षितमस्माकं बलमपर्याप्तमसमर्थं परबलविजयाक्षममित्यर्थः । भीष्मस्य वृद्धत्वादिति भावः । इदं च भीष्मसामर्थ्यापरिज्ञानमूलकं वाक्यम् । भीष्मस्य धर्मिष्ठत्वेन पाण्डवपक्षपातित्वादिति वा भावः । इदं दृश्यमानं भीमाभिरक्षितमेतेषां पाण्डवानां बलं तु पर्याप्तं भीमस्य तरुणत्वात्सर्वघातेराप्लूवधदीक्षितत्वादाबाल्यात्ससोदरस्य दुर्योधनस्य भीमेन बहुशो निर्जितत्वाच्च भयहेतुर्भीमो दुर्योधनस्येति भावः ॥१०॥

अयनेषु च सर्वेषु यथाभागमवस्थिताः ।
भीष्ममेवाभिरक्षन्तु भवन्तस्सर्व एव हि ॥११॥

अयनेष्विति । हि तस्मात्सर्व एव सर्वे च भवन्तः सर्वेषु अयनेषु स्थानेषु यथाभागमवस्थितास्सन्तः भीष्ममेवाभिरक्षन्तु भीष्मस्य सेनापतित्वात्तस्मिन् रक्षिते सर्वसेना रक्षिता स्यादिति भावः ॥११॥

तस्य संजनयन् हर्षं कुरुवृद्धः पितामहः ।
सिंहनादं विनद्योच्चैश्शङ्खं दध्मौ प्रतापवान् ॥१२॥

तस्येति । प्रतापवान् कुरुवृद्धः कुरुषु वृद्धः पितामहो भीष्मः तस्य दुर्योधनस्य हर्षं सञ्जनयन् सम्यगुत्पादयन् सन् उच्चैस्सिंहनादं विनद्य कृत्वेत्यर्थः । शङ्खं दध्मौ पूरयामास । सर्वोत्कृष्टतमस्वसामर्थ्यप्रदर्शनार्थमिति भावः ॥१२॥

ततश्शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ।
सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥१३॥

तत इति । शङ्खादयो वाद्यविशेषास्सहसैवाभ्यहन्यन्त वादिताः सेनाचारिपुरुषैरिति भावः । स शब्दः ध्वनिः तुमुलः संकुलः अभवत् ॥१३॥

ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ।
माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥

तत इति । श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ माधवः कृष्णः पाण्डवोऽर्जुनश्च दिव्यौ शङ्खौ प्रदध्मतुरेव ॥१४॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनंजयः ।
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥१५॥

पाञ्चजन्यमिति । हृषीकेशः कृष्णः पाञ्चजन्यं शङ्खं दध्मौ, धनञ्जयो देवदत्तं दध्मौ, भीमकर्मा-शत्रुभयङ्करव्यापारो वृकस्योदरमिवोदरं यस्य स वृकोदरो भीमः पौण्ड्रं तन्नामकं महाशङ्खं दध्मौ ॥१५॥

अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ।
नकुलस्सहदेवश्च सुघोषमणिपुष्पकौ ॥१६॥

अनन्तेति । राजा जनरञ्जकः कुन्तीपुत्रश्श्लाघ्यमातृवंशो युधिष्ठिरः अनन्तविजयं दध्मौ । नकुलस्सहदेवश्च द्वौ क्रमेण सुघोषं मणिपुष्पकं च दध्मतुः ॥१६॥

काश्यश्च परमेष्वासश्शिखण्डी च महारथः ।
धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥१७॥

काश्य इति । परमेष्वासः महाशरासनः ॥१७॥

द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ।
सौभद्रश्च महाबाहुश्शङ्खान् दध्मुः पृथक्पृथक् ॥१८॥

द्रुपद इति । हेपृथिवीपते काश्यादयः सर्वशः पृथक्पृथक् शङ्खान् दध्मुः ॥१८॥

स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ।
नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥१९॥

स इति । तुमुलस्स घोषो नभश्च पृथिवीं चानुनादयन् प्रतिध्वनयन् सन् धार्तराष्ट्राणां हृदयानि व्यदारयत् विभेदैव ॥१९॥

अथ व्यवस्थितान् दृष्ट्वा धार्तराष्ट्रान् कपिध्वजः ।
प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥२०॥

अथेति । अथ कपिध्वजः हनुमत्केतुः पाण्डवः अर्जुनः व्यवस्थितान् युद्धाय समवस्थितान् धार्तराष्ट्रान् दृष्ट्वा शस्त्रसम्पाते शस्त्रप्रयोगे प्रवृत्तेसति धनुर्गाण्डीवमुद्यम्य उद्धृत्य ॥२०॥

हृषीकेशं तदा वाक्यमिदमाह महीपते ।
अर्जुन उवाच— सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ! ॥२१॥

हृषीकेशमिति । हेमहीपते धृतराष्ट्र ! हृषीकेशम्प्रति तदा इदं वक्ष्यमाणं वाक्यं वचनमाह—हे अच्युत ! मे रथमुभयोस्सेनयोर्मध्ये स्थापय ॥२१॥

यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ।
कैर्मया सह योद्धव्यमस्मिन् रणसमुद्यमे ॥२२॥

यावदिति । यावदहं योद्धुकामान् योद्धु कामो येषा तान् 'तुं काममनसोरपी'ति मकार-लोप अवस्थितानेतान्निरीक्षे तावत् स्थापयेत्यर्थ । अस्मिन् रणसमुद्यमे युद्धव्यापारे कैस्सह मया योद्धव्यम् ॥२२॥

योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ।
धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥२३॥

योत्स्यमानानिति । युद्धे दुर्बुद्धे धार्तराष्ट्रस्य दुर्योधनस्य प्रियचिकीर्षव प्रियं कर्तुमिच्छन्तस्सन्त ये एते अत्र समागता योत्स्यमानान् युद्धं करिष्यतस्तानहमवेक्षे पश्यामि ॥२३॥

सञ्जय उवाच— एवमुक्तो हृषीकेशो गुडाकेशेन भारत ।
सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥२४॥
भीष्मद्रोणप्रमुखतस्सर्वेषां च महीक्षिताम् ।
उवाच पार्थ पश्यैतान् समवेतान् कुरूनिति ॥२५॥

एवमिति, भीष्मेति च । एवं गुडाकेशेनार्जुनेनोक्तो हृषीकेश हेभारत धृतराष्ट्र! उभयोस्सेनयोर्मध्ये भीष्मद्रोणप्रमुखत भीष्मद्रोणयोरग्रे- 'असर्वविभक्तिकस्तसि' सर्वेषा महीक्षिता राज्ञा च प्रमुखत रथोत्तम स्थापयित्वा हेपार्थ एतान् समवेतान् कुरून् कुरुवंशजान् दुर्योधनादीन् पश्येत्युवाच ॥२४-२५॥

तत्रापश्यत् स्थितान् पार्थः पितॄनथ पितामहान् ।
आचार्यान् मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखींस्तथा ॥२६॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ।

तत्रेति । अथ पार्थ तत्र युद्धभुवि उभयो सेनयोरपि स्थितान् पितॄन् पितामहानाचार्यान्मातुलान् भ्रातॄन् पुत्रान् पौत्रान् सखीन् तथा तद्वत् श्वशुरान् सुहृदश्चापि अपश्यत् ॥२६॥

तान् समीक्ष्य स कौन्तेयस्सर्वान् बन्धूनवस्थितान् ॥२७॥
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ।

तानिति । कौन्तेय कुन्तीपुत्र अवस्थितान् तान्सर्वान्बन्धून् समीक्ष्य दृष्ट्वा परया अधिकया कृपया आविष्ट विषीदन् विषादं गच्छन्निद वक्ष्यमाणं वचनमब्रवीत् ॥२७॥

अर्जुन उवाच— दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥२८॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ।
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥२९॥

दृष्ट्वेति, सीदन्तीति च । हेकृष्ण युयुत्सुं योद्धुमिच्छुं समुपस्थितं युयुत्सया समागतमित्यर्थ. । इमं स्वजनं दृष्ट्वा मम गात्राणि सीदन्ति अवसादं प्राप्नुवन्ति । मुखं च परिशुष्यति मे शरीरे वेपथु कम्प रोमहर्षो रोमाञ्चश्च जायते ॥२९॥

गाण्डीवं स्रंसते हस्तात् त्वक्चैव परिदह्यते ।
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥३०॥

**गाण्डीवमिति ।** मे हस्ताद्गाण्डीवं स्रंसते भ्रश्यति, मे त्वक्च परिदह्यत एव, अहमवस्थातुं न शक्नोमि, मे मनः भ्रमतीव ॥३०॥

निमित्तानि च पश्यामि विपरीतानि केशव ।
नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥३१॥

**निमित्तानीति ।** हेकेशव विपरीतानि निमित्तानि च पश्यामि । आहवे युद्धे स्वजनं हत्वा श्रेयो नैवानुपश्यामि ॥३१॥

न कांक्षे विजयं कृष्ण न च राज्यं सुखानि च ।
किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥३२॥

**नेति ।** हेकृष्ण विजयं न कांक्षे नेच्छामि, राज्यं च न कांक्षे, सुखानि च न कांक्षे, हेगोविन्द! नः राज्येन किं, भोगैः किं, जीवितेनापि किम् ॥३२॥

येषामर्थे कांक्षितं नो राज्यं भोगास्सुखानि च ।
त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥३३॥

**येषामिति ।** नः अस्माभिः येषामर्थे राज्यं कांक्षितं भोगाः कांक्षितास्सुखानि च कांक्षितानि ते इमे प्राणान् धनानि च त्यक्त्वा युद्धेऽवस्थिताः ॥३३॥

आचार्याः पितरः पुत्रास्तथैव च पितामहाः ।
मातुलाः श्वशुराः पुत्राश्श्यालास्सम्बन्धिनस्तथा ॥३४॥

**आचार्या इति ।** आचार्यादिशब्दानां ते इति पूर्वश्लोकस्थतच्छब्देनान्वयः ॥३४॥

एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन !
अपि त्रैलोक्यराज्यस्य हेतोः किंनु महीकृते ॥३५॥

**एतानिति ।** हेमधुसूदन घ्नतोऽपि मां मारयतोऽपि एतानाचार्यादीन् त्रैलोक्यराज्यस्य हेतोरपि हन्तुं नेच्छामि किं पुनर्महीकृते भूम्यर्थम् ॥३५॥

निहत्य धार्तराष्ट्रान्नः का प्रीतिस्स्याज्जनार्दन !
पापमेवाश्रयेदस्मान् हत्वैतानाततायिनः ॥३६॥

**निहत्येति ।** हेजनार्दन धार्तराष्ट्रान्निहत्य तद्धननादित्यर्थः । नः का प्रीतिस्स्यान्न कापीत्यर्थः । मधुसूदन जनार्दनेति सम्बुद्धिद्वयेन दुष्टराक्षसजनहननमेव तवापि सम्मतं नत्वाचार्यादिस्वजनहननमिति सूच्यते । एतानाततायिनः- 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरौ चैव षडेते आततायिनः' इत्युक्तलक्षणान् हत्वा एतद्धननादित्यर्थः । अस्मान् पापमेवाश्रयेत् भजेत् । यद्य'प्याततायिनमायान्तं हन्यादेवाविचारय'न्निति शास्त्रादाततायिहननं धर्मएव तथापि धर्मेऽप्यधर्मभ्रमादेवमुक्तमर्जुनेनेति बोध्यम् ॥३६॥

तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान् सबान्धवान् ।
स्वजनं हि कथं हत्वा सुखिनस्स्याम माधव ॥३७॥

तस्मादिति । तस्मात्सबान्धवान् धार्तराष्ट्रान् हन्तुं वयं नार्हाः हेमाधव स्वजनं हत्वा कथं वा सुखिनस्स्याम भवेम ॥३७॥

यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ।
कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥३८॥

यद्यपीति । यद्यपि विचार्यमाणे लोभोपहतचेतस एते कुलक्षयकृतं दोषं, मित्रद्रोहे पातकं च न पश्यन्ति ॥३८॥

कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्तितुम् ।
कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥३९॥

कथमिति । तथापीति शेषः । हेजनार्दन कुलक्षयकृतं दोषं प्रपश्यद्भिः अस्माभिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम् ॥३९॥

कुलक्षये प्रणश्यन्ति कुलधर्मास्सनातनाः ।
धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥४०॥

कुलक्षय इति । कुलक्षये सति सनातनाः कुलधर्माः प्रणश्यन्ति, धर्मे नष्टेसति कृत्स्नं कुलमधर्मोऽभिभवत्युत तिरस्करोत्येव ॥४०॥

अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ।
स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसङ्करः ॥४१॥

अधर्मेति । हेकृष्ण अधर्माभिभवाद्धेतोः कुलस्त्रियः प्रदुष्यन्ति प्रकर्षेण दुष्टा भवन्ति । हेवार्ष्णेय वृष्णिवंशप्रसूत स्त्रीषु दुष्टासु सतीषु वर्णसङ्करो जायते ॥४१॥

सङ्करो नरकायैव कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥४२॥

सङ्कर इति । सङ्करः कुलघ्नानां वंशनाशकानां कुलस्य च नरकायैव भवति । हि यतः एषां पितरः लुप्तपिण्डोदकक्रियास्सन्तः पतन्ति ॥४२॥

दोषैरेतैः कुलघ्नानां वर्णसङ्करकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥४३॥

दोषैरिति । *कुलघ्नानां वर्णसङ्करकारकैरेतैर्दोषैः शाश्वताः जातिधर्माः कुलधर्माश्च उत्साद्यन्ते* नाश्यन्ते ॥४३॥

उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन ।
नरके नियतं वासो भवतीत्यनुशुश्रुम ॥४४॥

उत्सन्नेति । हेजनार्दन उत्सन्नकुलधर्माणां मनुष्याणां नरके वासो नियतं निश्चयेन भवतीत्यनुशुश्रुम वृद्धेभ्यश्श्रुतवन्तः ॥४४॥

अहो बत! महत्पापं कर्तुं व्यवसिता वयम् ।
यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥४५॥

अहो इति । अहो बतेति खेदातिशये । वयं महत्पापं कर्तुं व्यवसिता निश्चितवन्त - यद्यस्माद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यता उद्युक्ता ॥४५॥

यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ।
धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥४६॥

यदीति । अशस्त्रमप्रतीकार प्रतिक्रियाशून्य मा शस्त्रपाणयो धार्तराष्ट्रा रणे हन्युर्यदि तद्धननं मे क्षेमतर भवेत् ॥४६॥

सञ्जय उवाच— एवमुक्त्वार्जुनस्सङ्ख्ये रथोपस्थ उपाविशत् ।
विसृज्य सशरं चापं शोकसंविग्नमानसः ॥४७॥

एवमिति । अर्जुनस्सङ्ख्ये युद्धे एवमुक्त्वा सशर चापं विसृज्य शोकसंविग्नमानसश्शोकव्याकुलचित्तस्सन् रथोपस्थे रथमध्ये उपाविशत् तस्थौ ॥४७॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
अर्जुनविषादयोगोनाम प्रथमोऽध्याय ।

इतिशब्दस्समाप्तौ । श्रीयुक्तो भगवान् श्रीभगवान् यद्यपि भगान्तःपातिनी श्रीस्तथापि तस्या पुनरुक्तिश्शिश्रय प्राधान्यद्योतनाय । श्रीभगवता गीता उक्ताश्श्रीभगवद्गीता - श्रीयुक्ता भगवद्गीता इति वा— तासूपनिषत्स्विति सिंहो माणवक इतिवद्गौणप्रयोग । ससारशिथिलीकरणादिगुणसादृश्याद्गीतानामुपनिषत्त्वमौपचारिकम् । यद्वा- उपनिषच्छब्दो ब्रह्मात्मैक्यविद्यापर । तद्योगाद्यथोपनिषदामुपनिषत्त्वव्यवहार एव गीतानामपीति । अत्र च पक्षे उपनिषच्छब्दो योगरूढ्या वेदान्तपर, योगेन तु गीतापर इति बोध्यम् । एतावता अत्रोपनिषत्स्वित्यस्य उपनिषद्विद्याप्रतिपादिकास्विति निष्कृष्टार्थस्सिद्ध । अथवा उपनिषत्स्वित्यस्य लक्षणया उपनिषत्पदपर्यायवेदान्तार्थप्रतिपादिकास्वित्यर्थो वाच्य । उपनिषत्त्वमेव स्फुटयितुमाह ब्रह्मविद्यायामिति ब्रह्मज्ञानप्रदास्वित्यर्थ । योगशास्त्र इति कर्मज्ञानयोगद्वय यस्मादिदं शास्ति तस्मादुच्यते योगशास्त्रमिति । श्रीकृष्णार्जुनयोस्संवाद उक्तिप्रत्युक्तिरूपो यस्मिन् तस्मिन् षष्ठीतत्पुरुषो वा । अर्जुनविषादयोग अर्जुनविषादसङ्गति 'योगस्सन्नहनोपायध्यानसङ्गतियुक्ति'ष्विति- कोशात् । अस्मिन्नध्यायेऽर्जुनविषादस्य सङ्गतत्वादस्येद नाम । यद्यप्यशोच्यानित्यारभ्यैव ग्रन्थस्य योगशास्त्रमिति व्यवहारस्तथापि योगशास्त्रोपोद्धातत्वादस्याध्यायस्य योगशास्त्रान्तःपातित्वमिति बोध्यम् । अनेन च विषादयोगाध्यायेन ससारे दृष्टदोषस्य जातविषादस्य योगशास्त्रे प्रवृत्तिस्स्यादिति विषयेषु दोषदृष्टिस्तावत्कार्या मुमुक्षुणेति गम्यते । अतएवास्याप्यध्यायस्य योगशास्त्रत्वम् ।

इति श्रीनेलेनेलोण्डोपनामकरामकविकृते श्रीभगवद्गीताभाष्यार्के
प्रकाशे प्रथमोऽध्याय ।

---

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु-

# श्रीभगवद्गीतासु

## द्वितीयाध्यायप्रारम्भः ।

सञ्जय उवाच— तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ।
विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥१॥

तमिति । तथा पूर्वोक्तरीत्या कृपया आविष्टं व्याप्तमश्रुपूर्णाकुलेक्षणमश्रुभिः पूर्णे आकुले च ईक्षणे यस्य तं विषीदन्तं विषादं प्राप्नुवन्तं तमर्जुनप्रति मधुसूदन इदं वक्ष्यमाणं वचनमुवाच ॥१॥

श्रीभगवानुवाच— कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ।
अनार्यजुष्टमस्वर्ग्यमकीर्तिकरमर्जुन ॥२॥

कुत इति । हेऽर्जुन विषमे अयोग्यसमये अनार्यजुष्टमार्यैरसेवितमस्वर्ग्यं स्वर्गप्राप्तिविरोधि अकीर्तिकरमिदं कश्मलं व्याकुलत्वं कुतः कस्माद्धेतोस्त्वा त्वां समुपस्थितं प्राप्तम् ॥२॥

क्लैब्यं मा स्म गमः पार्थ ! नैतत्त्वय्युपपद्यते ।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥३॥

क्लैब्यमिति । हेपार्थ तत्तादृग्वीरमातृत्वेन प्रसिद्धायाः पृथायाः पुत्र ! क्लैब्यं पौरुषराहित्यं मागमः स्म मागच्छ । माङ्योगाल्लुङि अडागमप्रतिषेधः । त्वयि खाण्डवदहनादिना प्रख्यातपौरुषे त्वयि एतत्क्लैब्यं नैवोपपद्यते न युक्त एव । हेपरन्तप शत्रुसन्तापक क्षुद्रं नीचं हृदयदौर्बल्यं त्यक्त्वा उत्तिष्ठ युद्धाय सन्नद्धो भवेत्यर्थः ॥३॥

अर्जुन उवाच— कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन !
इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥४॥

कथमिति । हेमधुसूदन मधुनामकराक्षसहन्त ! ननु देवदत्तपूज्याचार्यादिहन्ता त्वमपीति सूचयितुमिदं सम्बोधनम् । हे अरिसूदन शत्रुमारक! नतु स्वजनमारक इति भावः । अहं पूजार्हौ भीष्मं द्रोणं चेति द्वाविति शेषः । सङ्ख्ये युद्धे इषुभिर्बाणैः कथं प्रतियोत्स्यामि केन वा प्रकारेण प्रहरिष्यामि॥४॥

गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्षमपीह लोके ।
हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥५॥

गुरूनिति । महानुभावान् गुरूनहत्वा इह लोके भैक्षं भिक्षाणां समूहो भैक्षम्-- 'भिक्षादिभ्योऽण्'- इत्यण्- भिक्षान्नमपि भोक्तुं श्रेयः युक्तम् । हिः प्रश्नार्थेऽव्ययं अव्ययानामनेकार्थत्वात् । श्रेयः किमित्यर्थः । तु शब्दः पक्षान्तरद्योतनाय यद्वेत्यर्थः । अर्थकामान् धनाभिलाषिणः विषयाभिलाषिण इति वा । गुरून् हत्वा इह लोके रुधिरप्रदिग्धान् शोणितव्याप्तान्भोगान् भुञ्जीयानुभवेयं किमिति शेषः । मम गुर्वहननाद्भिक्षाटनं युक्तं वा गुरुहननात् रुधिरसम्पृक्तान्नं युक्तं वेत्यर्थः ॥५॥

नचैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ।
यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥६॥

**नचेति।** नः अस्माकं कतरदुक्तमतद्वये किं वा मतं गरीयः श्रेष्ठतरमेतद्वयं नैव विद्मः जानीमः। जयोऽप्यस्माकं न नियत इत्याह- **यद्वेति।** यद्वा पक्षे जयेम वयं शत्रूनिति शेषः। यदि वा यद्वा पक्षान्तरे नः अस्मान् शत्रवो जयेयुः। जयो भवतु वा मा वा युद्धमेव तावद्दुष्करमित्याह--**यानिति।** वयं यान्हत्वा न जिजीविषामः जीवितुं नेच्छामः त एव धार्तराष्ट्राः प्रमुखे अग्रे अवस्थिताः ॥६॥

कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः।
यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेहं शाधि मां त्वां प्रपन्नम् ॥७॥

**कार्पण्येति।** अहं कार्पण्यदोषोपहतस्वभावः कार्पण्यं कृपणत्वं दैन्यमिति यावत्- तदेव दोषः तेनोपहतः स्वभावः यस्य स तथोक्तः। अत एव धर्मसम्मूढचेताः धर्माधर्मनिर्णयासमर्थः सन् त्वां पृच्छामि। किं पृच्छसीत्यत आह—**यदिति।** मे यत् श्रेयस्स्याच्छ्रेयस्करं स्याद्युक्तं स्यादिति वा निश्चितं तन्मे ब्रूहि। गुरूनहत्वेतिश्लोकोक्तपक्षद्वये यः पक्षोऽस्माकं युक्तश्श्रेयस्करश्च तं निश्चित्य वदेत्यर्थः। नहि मम त्वत्तोऽन्यः कोऽपि धर्मनिर्णायकोस्तीति भावः। अहं ते शिष्यः, त्वां प्रपन्नं शरणं गतं मां शाधि शिक्षय, अनेन गुरूपसत्तिप्रकारश्शिक्षितः ॥७॥

नहि प्रपश्यामि ममापनुद्याच्छोकमुच्छोषणमिन्द्रियाणाम्।
अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥८॥

यदि तव युद्धकरणमेव श्रेय इति मतं, तर्हि शोकसंविग्नमानसस्य मम युद्धकरणं न सम्भवति तस्मात्तावत्त्वं मम शोकनाशोपायं ब्रूहीति प्रार्थयते—**नहीति।** ममेन्द्रियाणामुच्छोषणं शोकं यदपनुद्यात्तदेव प्रपश्यामि। ननु जये लब्धे सति राज्येन शोकं नश्येदित्यत आह--**भूमाविति।** भूमावसपत्नं निष्कण्टकमृद्धं समृद्धिमद्राज्यमवाप्य सुराणामाधिपत्यं देवेन्द्रपदमप्यवाप्य नाहमिमं शोकं तरेयमिति वाक्यशेषः। तस्माच्च राज्यप्राप्त्याशा मम शोकनाशकारिणी भवेदेवेति भावः ॥८॥

सञ्जय उवाच— एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तपः।
न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥९॥

**एवमिति।** परन्तपो गुडाकेशः एवं हृषीकेशं प्रत्युक्त्वा तत अहं न योत्स्ये युद्धं नैव करिष्ये इति च गोविन्दंप्रत्युक्त्वा तूष्णीं बभूव जोषमाप। हेति विस्मये। एतेन- 'अहिंसा परमो धर्म' इति शास्त्रादाचार्यादिद्विजोत्तममारणस्य ब्रह्महत्याहेतुत्वाच्च क्षणिकराज्यसुखापेक्षया युद्धकरणं मम सुतरामधर्म एवेति परिव्राजकब्राह्मणवद्भिक्षाटनमेव धर्म इति ■ पार्थस्याशयः स्फुटं गम्यते ॥९॥

तमुवाच हृषीकेशः प्रहसन्निव भारत!
सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥१०॥

**तमिति।** हेभारत! धृतराष्ट्र उभयोस्सेनयोर्मध्ये विषीदन्तं तमर्जुनंप्रति हृषीकेशः प्रहसन्निवार्जुनस्योन्मादप्रलापतुल्यवचनश्रवणात्कृष्णस्य हास इति भावः। इदं'मशोच्या'नित्यारभ्य 'माशुच' इत्यन्तं गीताशास्त्ररूपं वच उवाच ॥१०॥

इत्युपोद्घातः।

श्रीहयग्रीवाय नमः ।

# श्रीभगवद्गीता ।

## अथ श्रीशङ्करभगवत्पूज्यपादविरचितं भाष्यं आरभ्यते ।

### द्वितीयोऽध्यायः ।

भाष्यम् । श्लो॥ नारायणः परोऽव्यक्तादण्डमव्यक्तसम्भवम् ।
अण्डस्यान्तस्त्विमे लोकास्सप्तद्वीपा च मेदिनी ॥

---

भाष्यार्कप्रकाशाख्यव्याख्या ।

नत्वा लक्ष्मीहयग्रीवौ वासुदेवपृथासुतौ ।
व्यासार्यशङ्कराचार्यौ भाष्यार्थं विवृणोम्यहम् ॥

अशोच्यानिति प्रथमो गीताशास्त्रश्लोकः । श्रीशाङ्करभाष्यावतारिकाग्रन्थारम्भगतश्चायं मङ्गलश्लोकः—

अस्यायमर्थः- अस्मिन्वेदान्तशास्त्रे दृग्दृश्यमिति द्वावेव पदार्थौ- तौ चाचार्यैरेव प्रतिपादितौ— 'दृगत्र दृश्यं माये'ति दृग्दृश्यविवेके । इमौ च परस्परविलक्षणौ— लोकेऽपि घटतद्द्रष्टृशोर्भेददर्शनात् । इदमेवाऽऽह- **नारायणः परोऽव्यक्तादिति** । अव्याकृत- प्रकृति- शक्ति- मायादिनामकेश्वरोपाधिरव्यक्तपदार्थः । तस्मात्परो विलक्षणः नारायणः- न रीयते न क्षीयत इति नरः परमात्मा तस्येदं नारं जगत्तदेति जानातीति नारायणः दृग्रूपः प्रत्यगभिन्नः परमात्मा । प्रतीचस्साक्षित्वस्य द्वैतिभिरप्यभ्युपगतत्वा'न्नान्योऽतोऽस्ति द्रष्टे'ति द्रष्ट्रन्तरस्य श्रुत्यैव निषिद्धत्वाच्च न प्रत्यक्परयोर्भेदः ।

ननु यदि दृग्दृश्ये द्वावेव पदार्थौ दृश्यं चाव्यक्तं तर्हि व्यक्तस्यास्य जगतः कुत्रान्तर्भावोऽत आह—**अण्डमव्यक्तसम्भवमिति** । अव्यक्तात्सम्भवो यस्य तदव्यक्तसम्भवं ब्रह्माण्डस्याव्यक्तसम्भवत्वान्मृत्सम्भवस्य घटस्य मृदात्मत्वमिवाव्यक्तात्मत्वमेवेत्यव्यक्त एव ब्रह्माण्डस्यान्तर्भावः ।

नन्वेवं साङ्ख्यवत्त्वाप्यचेतनकारणवादः प्राप्त इति चेन्मैवम्—ईश्वरादृष्टादिसहकृताव्यक्तस्य अव्यक्तावच्छिन्नस्येश्वरस्य वा जगत्कारणत्ववादात् । अत्रेदं बोध्यम्—दृश्यमिदमव्यक्तं न दृग्वत्स्वतन्त्रं किंतु दृश्यध्यस्तमेव- अनध्यस्तत्वे तु दृश्यस्यास्य नित्यत्वप्रसङ्गात्- तस्मिंश्च दृश्ये दृशोऽप्यध्यासः कोऽप्यनिर्वचनीयः । एवं दृग्दृश्ययोरितरेतराध्यासवशाद्दृश्यस्य चेतनत्वं, दृशः प्रपञ्चकारणत्वं च भासते । यथा लोकेऽपि जीवदेहयोस्तादात्म्याध्यासाद्देहस्य चेतनत्वं जीवस्य मनुष्यत्वादिकं च भासं तद्वत् । अत एव- 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतिर्ब्रह्मणो जगद्धेतुत्वमवदत्- मायाऽवच्छिन्नस्य ब्रह्मणो जगद्धेतुत्वात् । एवमपि न ब्रह्मणो जगत्प्रकृतित्वं- तस्य निर्विशेषचिन्मात्रस्योपादानत्वाभावात्किन्तु तदुपाधेर्मायाया एव- मायामयत्वाज्जडस्य सात्मकस्य जगतः । अत एव केचिज्जगदाकारपरिणतमायाऽधिष्ठानत्वाद्ब्रह्म जगत्कारणमित्याहुः । तस्मादीश्वरकारणपक्षे ब्रह्मकारणपक्षे वा मायांशस्यैव जगत्प्रकृतित्वमिति युक्तमुक्तमण्डमव्यक्तसम्भवमिति । एतेनाऽव्यक्तशब्दस्येश्वराधिष्ठिता प्रकृतिरर्थ इति सिद्धमित्यनवद्यम् ।

भाष्यम् ॥ स च भगवान् वासुदेवस्सृष्ट्वेदं जगत्तस्य च स्थितिं चिकीर्षुः मरीच्यादीनग्रे सृष्ट्वा प्रजापतीन् प्रवृत्तिलक्षणं धर्मं ग्राहयामास वेदोक्तं, ततोऽन्यांश्च सनकसनन्दनादीनुत्पाद्य निवृत्तिलक्षणं धर्मं ज्ञानवैराग्यलक्षणं ग्राहयामास ।[१] स द्विविधो हि वेदोक्तो धर्मः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च । जगतः स्थितिकारणं प्राणिनामभ्युदयनिःश्रेयसहेतुर्यस्स धर्मो

---

नन्वस्तु ब्रह्माण्डस्याव्यक्तसम्भवादव्यक्तात्मत्वं कथं पुनर्लोकानामत आह—अण्डस्यान्तरिति । इमे लोकास्ससप्तद्वीपा मेदिनी चाण्डस्यान्तर्वसन्तीति शेषः । अण्डान्तःपातित्वाल्लोकानां पुरश्चाण्डात्मत्वमेवेति कृत्वा अप्येषामपि सिद्धमव्यक्तात्मत्वमिति भाव । एतेनाकाशादिकममूर्तं पृथिव्यादि मूर्तं तत्कारणमव्यक्तं चेति त्रिविधं दृश्यमिति सिद्धम् ।

अत्रेदं बोध्यम्—एक एव नारायणः परमात्मा सच्चिदानन्दरूपस्सर्वदृश्यविलक्षणश्शुद्धोऽद्वितीयश्च । स चाव्यक्तोपहित ईश्वर इत्युच्यते, 'ब्रह्माण्डोपाधिकस्तु हिरण्यगर्भ इति, लोकोपाधिकस्तु विराडिति । तत्र अव्यक्तस्यानादित्वादीश्वरस्य नास्त्यौपाधिकमपि जन्मेत्यज एवेश्वरः । इतरयोरुपाध्यधीनजन्मवत्त्वाज्जत्वं, नापीश्वरत्वं, किंतु जातौ जीवावेव तौ । तयोश्च हिरण्यगर्भः प्रथमजः विराट्पुरुषस्तु अनन्तरज इति विवेकः ।[१] अयमेव जीवेश्वरविभागश्श्रुत्याऽप्युक्तः 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः' इति । कार्यकारणभूतजीवेश्वरोपाधिद्वयविनिर्मुक्तं चिद्रूपं ब्रह्मेति श्लोकस्य परमार्थः ।[२] एतेन ब्रह्मातिरिक्तं सर्वमपि मायामयत्वान्मृषैव मायायास्सदसदनिर्वाच्यत्वेन प्रबोधबाध्यत्वेन च मृषात्वादेकमेवाद्वितीयं ब्रह्माऽमायामयत्वात्सत्यमित्यद्वैतं सिद्धम् । एतदेव हि गीताशास्त्रे प्रधानप्रतिपाद्यम् ।

एवं तत्त्वं प्रतिपाद्य प्रवृत्तं वक्तु तस्यैव मायावैभवमाह—स चेति भगवानिति । 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः ।[२] ज्ञानवैराग्ययोश्चैव षण्णां वर्गो भगो मतः' इति,[१] 'उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवा'निति चोक्तलक्षणः भगोऽस्यास्तीति भगवान् तदस्यास्तीति मतुप् वासुदेवः वसन्ति जगन्त्यस्मिन्निति, वसति जगतीति वा वासुः दीव्यति सृष्ट्यादिना क्रीडति स्वयम्भासत इति वा देवः वासुश्चासौ देवो वासुदेवः । नारायणस्यापि स्वोपाधिभूतमायया भगवत्त्वं वासुदेवत्वं चेति भावः ।[१] सृष्ट्वेति सङ्कल्पेनेति शेषः ।[२] अनेन प्रधानपरमाण्वादिजगत्कारणवादा निरस्ताः प्रधानादीनामचेतनत्वेन सङ्कल्पासम्भवात्- 'तदैक्षते'ति श्रुतौ सृष्टेः सङ्कल्पपूर्वकत्वश्रवणात्कुलालस्यापि सङ्कल्पपूर्वकं घटादिनिर्माणमिति दर्शनाच्च ।[१] स्थितिं रक्षां मरीच्यादीन् प्रजापतीनग्रे प्रथमं सृष्ट्वेति- हिरण्यगर्भद्वारेति भावः । वेदोक्तमिति धर्मविशेषणम् । ननु जगत्स्थितिचिकीर्षोरीश्वरस्य किमिति प्रवृत्तिनिवृत्तिधर्मग्राहणं मरीच्यादिभिस्सनकादिभिश्चेत्यत आह- स इति । हि यस्मात् प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च स द्विविधो वेदोक्तो धर्मः जगतः स्थितिकारणमित्यन्वयः । धर्मस्य लक्षणमाह प्राणिनामिति । अभ्युदयनिःश्रेयसहेतुः ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिश्चानुष्ठीयमानो यस्स धर्मः- आद्यशब्दात् क्षत्रियवैश्यशूद्रग्रहणं । वर्णा एषामस्तीति वर्णिनः- आश्रमा एषामस्तीत्याश्रमिणः ब्रह्मचारिगृहस्थवानप्रस्थसन्न्यासिनः । ब्राह्मणाद्यनुष्ठीयमानत्वे सति अभ्युदयनिश्श्रेयसान्यतर-

ब्राह्मणाद्यैर्वर्णिभिराश्रमिभिरनुष्ठीयमानः। दीर्घेण कालेनानुष्ठातॄणां कामोद्भवाद्धीयमानविज्ञानहेतुकेन अधर्मेण अभिभूयमाने धर्मे प्रवर्धमाने चाधर्मे जगतः स्थितिं परिपिपालयिषुः स आदिकर्ता नारायणाख्यो विष्णुर्भौमस्य ब्रह्मणो ब्राह्मणत्वस्य चाभिरक्षणार्थं देवक्यां वसुदेवादंशेन किल सम्बभूव। ब्राह्मणत्वस्य हि रक्षणे रक्षितस्स्याद्वैदिको धर्मः- तदधीनत्वाद्वर्णाश्रमधर्मभेदानाम्। सच भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिस्सदा सम्पन्नस्त्रिगुणात्मिकां

---

हेतुत्वं धर्मस्य लक्षणम्। एकस्य धर्मस्योभयहेतुत्वाभावादन्यतरेति। ईश्वरेऽतिव्याप्तिवारणाय सत्यन्तम्। अधर्मेऽतिव्याप्तिवारणाय विशेष्यदलम्। प्रवृत्तिलक्षणो धर्मः कर्मनिष्ठाशब्देन वक्ष्यमाणः अभ्युदयस्य स्वर्गादिरूपस्य चित्तशुद्धिरूपस्य वा हेतुः- निवृत्तिलक्षणो धर्मः ज्ञाननिष्ठाशब्देन वक्ष्यमाणः निःश्रेयसस्य मोक्षस्य हेतुरिति बोध्यम्। **हीयमानेति**। हीयमानं क्षीयमाणं विज्ञानमेव हेतुर्यस्य तेन हीयमानविज्ञानहेतुकेन- शेषाद्विभाषेति कः। अधर्मस्य विज्ञानक्षय एव हेतुरित्यर्थः। यद्वा हेतुरेव हेतुक इति स्वार्थे कः। हीयमानेन विज्ञानेन हेतुना विज्ञानक्षयाद्धेतोरित्यर्थः। परिपिपालयिषुः परिपालयितुमिच्छुः। **आदिकर्तेति**। जगत उपादानं निमित्तं चेत्यर्थः। यद्वा प्रधानकर्ता- हिरण्यगर्भस्याप्रधानकर्तुरन्यस्य सत्त्वादियुक्तिः- अनेन चाभिन्ननिमित्तोपादानकारणवादेन प्रधानकारणवादिनस्साङ्ख्याः, ईश्वरनिमित्तकारणवादिनस्तार्किकादयश्च पराकृताः। नच कथमेकस्यैव कारणवस्तुनः निमित्तत्वमुपादानत्वं चेत्युभयमिति वाच्यं, मायया तत्सम्भवात्- यतोवेति, तत्सृष्ट्वेति च श्रुतेः- श्रौतस्यार्थस्य प्रबलस्य दुर्बलयुक्त्यवष्टम्भेन प्रतारणायोगाच्च, ऊर्णनाभेस्तन्तुसन्ततिम्प्रत्यभिन्ननिमित्तोपादानत्वदर्शनाच्च। विष्णुर्व्यापकः परमात्मा सत्त्वगुणप्रधानमायावच्छिन्नचैतन्यलक्षणः। **भौमस्येति**। भूलोकस्थस्य ब्रह्मणो वेदस्य। **अंशेनेति**। माययेत्यर्थः- कथमन्यथा निरंशस्य परमात्मनस्स्यादंशः। किलेत्यलीके वार्तायां वा- उभयथाऽपि मृषैवायं कृष्णावतार इति फलितम्। अत्र 'यदा यदा हि धर्मस्य ग्लानिर्भवति भारत। अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यह'मिति गीतावचनमनुसन्धेयम्।

ननु नष्ट एव धर्मो रक्षणीयः- तथा च धर्मस्य रक्षणार्थमित्येव वक्तव्यं- किमिति ब्राह्मणत्वस्येत्युक्तमत आह— **ब्राह्मणत्वस्येति**। याजनाध्यापनादिरूपब्राह्मणधर्मस्य रक्षणं ब्राह्मणत्यागब्राह्मणेतरस्वीकारादिरूपविप्लवात्त्राणम्। तत्र हेतुमाह—**तदधीनत्वादिति**। ब्राह्मणाधीनत्वात्- येन येन वर्णिना येन येनाश्रमिणा यद्यत्कर्म यथा यथाऽनुष्ठेयं तेन तेन तत्तत्तथा तथा विद्वान् ब्राह्मणोऽनुष्ठापयतीत्यर्थः। नन्वजस्य नारायणस्य धर्मसंस्थापनरूपलोकानुग्रहार्थमपि कथं जन्मादिसम्भवोऽत आह— **स चेति**। भगवानित्यस्यार्थं स्वयमेवाऽऽह—**ज्ञानेति**। वसिष्ठादयो जीवाश्च केचिज्ज्ञानादिमन्तो दृश्यन्त इत्यत आह—**स चेति**। जीवानां ज्ञानादिकमीश्वरप्रसादादिलभ्यमीश्वरस्य तु स्वतस्सिद्धं- 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया' चेति श्रुतेरिति भावः। कुत ईश्वरस्य भगस्स्वाभाविकोऽत आह— **प्रकृतिं वशीकृत्येति**। जीवास्तु प्रकृतिपरतन्त्राः- अत एवेश्वरस्य मायित्वं ब्रूते श्रुतिः- 'मायिनं तु महेश्वर'मिति। कस्येयं प्रकृतिरत आह—**वैष्णवीं स्वामिति**। स्वस्य

वैष्णवीं स्वां मायां प्रकृतिं वशीकृत्य अजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन् लक्ष्यते-- स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया वैदिकं धर्मद्वयमर्जुनाय शोकमोहमहोदधौ निमग्नायोपदिदेश- गुणाधिकैर्गृहीतोऽनुष्ठीयमानश्च धर्मः प्रचयं गमिष्यतीति । तद्धर्मद्वयं भगवता यथोपदिष्टं भगवान् वेदव्यासस्सर्वज्ञो गीताख्यैः सप्तभिः श्लोकशतैरुपनिबबन्ध । तदिदं गीताशास्त्रं समस्तवेदार्थ-

---

विष्णोस्सम्बन्धिनीं; स्वोपाधिभूतामित्यर्थः । तस्यास्स्वरूपमाह---त्रिगुणेति । सत्त्वरजस्तमोगुणात्मिका-- सत्त्वादिगुणत्रयातिरिक्तप्रकृतिपदार्थाभावादिति भावः । एतेन सत्त्वरजस्तमोगुणोपहितानां विष्णुब्रह्मरुद्राणां भेदः परास्तः- मायोपाधिकत्वेन त्रयाणामेकत्वात् । एवं प्रकृतिवशत्वादेव- नेश्वरस्य कर्माधीनजन्मसद्भाव इत्याह---अज इति । जन्माभावादेव न लय इत्याह---अव्यय इति । 'जायते मरणायैव म्रियते जन्मने पुनरि'ति, 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य' चेति स्मरणाज्जन्ममरणयोस्सामानाधिकरण्यमिति भावः । ईश्वर ईशनशीलः । एवं मायिकं रूपमुक्त्वा तात्त्विकमाह---नित्येति । नित्यस्सत्य. नित्योऽनित्याना'मिति श्रुतेः, 'तत्सत्यं स आत्मे'ति श्रुतेश्च । कुतो नित्यत्वमत आह---शुद्ध इति । उपाधिसंसृष्टस्य मलिनस्य जीवस्य हि उपाधिवशाद्भवत्यनित्यत्वं । तस्य निष्कृष्टं स्वरूपमाह---बुद्ध इति । ज्ञानस्वरूप इत्यर्थः- 'सच्चिदानन्दं ब्रह्मे'ति श्रुतेः । ज्ञातुर्हि ज्ञानं स्वरूपं- ज्ञातृत्वं चास्य 'स सर्वज्ञस्सर्ववि'दिति श्रुतम् । सर्वज्ञत्वं सर्वावभासकत्वं, नेदं मायाधर्मः- मायाया जडत्वेनेश्वरभास्यत्वात् । अत एवायं मुक्तः, नतु जीववत्कदाऽपि बद्धः- अज्ञानानभिभूतत्वादिति भावः । इवेति । ननु वस्तुत इत्यर्थः । इवशब्दः कुर्वन्नित्यत्रापि सम्बध्यते । नहि वस्तुतः परमात्मन. लोकानुजिघृक्षाऽपि सम्भवति-- निष्कामत्वादीश्वरस्य । यद्वा- परमार्थतः । परमात्मन कामासम्भवेऽपि व्यवहारत ईश्वरस्य लोकानुग्रहस्सम्भवत्येव । जन्मदेहौ तु व्यवहारतोऽपि न सम्भवत इत्यभिप्रेत्य कुर्वन्निवेति नोक्तमाचार्यैः । व्यवहारदशायामपि कारणोपाधिरीश्वरः । लक्ष्यत इति । अज्ञैरिति शेषः । नहि प्राज्ञा ईश्वरं जातं पश्यन्ति । स्वप्रयोजनाभावेऽपि भूतानुजिघृक्षया भगवानर्जुनाय धर्मद्वयमुपदिदेशेति सम्बन्ध. । पूर्णकामस्य कुतश्शिष्योपदेशे प्रवृत्तिरत आह---भूतेति । भूताः प्राणिनः तेषामनुग्रहीतुमिच्छा भूतानुजिघृक्षा- तया-- शोकमोहावेव महोदधिश्शोकयुक्तो मोहश्शोकमोहस्स एव महोदधिरिति वा शोकमोहमहोदधिस्तस्मिन्निति । एतेनोपदेशस्य शोकमोहनिरासः फलमिति व्यज्यते । किमित्यर्जुनायोपदेशोऽत आह---गुणाधिकैरिति । गृहीतो ज्ञात.- प्रचयमभिवृद्धि- गुणाधिकत्वादर्जुनस्य- ययं मत्तस्सकाशाद्धर्मं गृहीत्वाऽनुतिष्ठेचर्हि 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन' इति न्यायादितरजनोऽप्यनुतिष्ठेत् च दृष्ट्वा तदितरजन इत्येवमभिवृद्धिमीयान्मदुक्तः पन्था धर्मस्येति मत्वा भगवानर्जुनाय धर्ममुपदिदेशेति भावः । अनेन च विद्वानाचार्यः सच्छिष्यायैव धर्मं बोधयेदिति सूच्यते । आचार्यस्य स्वयंकृतार्थत्वेन लोकानुग्रहप्रयोजनैरमुख्येसति सम्प्रदायोच्छेदप्रसङ्गात् । यथोपदिष्टमिति । उपदिष्टमुपदेशः- भविकः । तदनतिक्रम्य यथोपदिष्टम् । यद्वा- तथेति यथा भगवतोपदिष्टं तथेत्यन्वयः । उपनिबबन्ध ग्रथितवान् ।

सारसंग्रहभूतं दुर्विज्ञेयार्थं तदर्थाविष्करणायानेकैर्विवृतपदपदार्थवाक्यवाक्यार्थन्यायमप्यत्यन्त-विरुद्धानेकार्थत्वेन लौकिकैर्गृह्यमाणमुपलभ्याह विवेकतोऽर्थनिर्धारणार्थं संक्षेपतो विवरणं करिष्यामि ।

तस्यास्य शास्त्रस्य संक्षेपतः प्रयोजनं- परं निःश्रेयसं सहेतुकस्य संसारस्यात्यन्तोप-रमलक्षणम् । तच्च सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठारूपाद्धर्माद्भवति । तथेममेव गीतार्थं धर्ममुद्दिश्य भगवतैवोक्तम्—श्लो॥ 'स हि धर्मस्सुपर्याप्तो ब्रह्मणः पदवेदने' इत्यनुगीतासु । तत्रैव चोक्तम्—'नैव धर्मी न चाधर्मी नचैव हि शुभाशुभी । यस्स्यादेकासने लीनस्तूर्ष्णीं किंचिदचिन्तयन्', 'ज्ञान सन्न्यासलक्षण'मिति च । इहापि चान्ते उक्तमर्जुनाय—'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इति । अभ्युदयार्थोऽपि प्रवृत्तिलक्षणो धर्मो वर्णानाश्रमां-श्चोद्दिश्य विहितः स देवादिस्थानप्राप्तिहेतुरपि सन्नीश्वरार्पणबुद्ध्यानुष्ठीयमानस्सत्त्वशुद्धये भवति फलाभिसन्धिवर्जितः शुद्धसत्त्वस्य च ज्ञाननिष्ठायोग्यताप्राप्तिद्वारेण ज्ञानोत्पत्तिहेतुत्वेन च निःश्रेयसहेतुत्वमपि प्रतिपद्यते । तथा च वक्ष्यति—'ब्रह्मण्याधाय कर्माणि, योगिनः कर्म

---

अनेकैर्वृत्तिकारादिभिर्विवृद्धि । उपलभ्य दृष्ट्वा । संक्षेपत इति । ग्रन्थविस्तरभयादितिभाव । लोका-नुग्रहार्थमेवाऽऽचार्यस्य प्रवृत्तत्वात्तत्क्रियाफलस्य सुकृतादेरात्मगामित्वं माऽस्त्वित्यभिप्रेत्याह—करिष्या-मीति । यदि करिष्य इत्युच्येत तर्हि तज्जन्यसुकृतादिना बन्धस्स्यात्कवेरिति बोध्यम् ।

संक्षेपत इति । प्राधान्येनेत्यर्थ कर्मज्ञानादीनि त्ववान्तरफलानीति भाव । स हीति । स आत्मज्ञाननिष्ठारूपो निवृत्तिलक्षणो धर्मो ब्रह्मण परमात्मन पदवेदने स्वरूपसाक्षात्कारे सुपर्याप्तस्सुष्ठु समर्थ । हिशब्द सर्वशास्त्रविद्वत्प्रसिद्धिं द्योतयति । ननु 'चोदनालक्षणोऽर्थो धर्म' इति जैमिनि-सूत्रात्प्रवृत्तेरस्तु धर्मत्व कथ पुनर्निवृत्तेरिति शङ्कायामौपचारिकमेव निवृत्तेर्धर्मत्वमिति हृदि कृत्वा तत्र प्रमाणमाह- नैवेति । स किञ्चिदप्यचिन्तयन् तूष्णीमेकासने एकस्मिन्सर्वाधारे प्रत्यगभिन्ने ब्रह्मणि लीनस्स्यात् स . धर्मी नैव, अधर्मी च नैव, शुभी नैव, अशुभी नैव च- हि प्रसिद्धौ । ननु निवृत्ते-र्मोऽस्तु धर्मत्वं कथं पुनर्ज्ञानत्वमत आह— ज्ञानमिति । सन्न्यास सर्वकर्मसन्न्यास लक्षणं स्वरूपं यस्य तत्सन्न्यासलक्षणं- सर्वकर्मसन्न्यासरूपा निवृत्तिरेवात्मज्ञाननिष्ठा न त्वन्यदित्यर्थ । किं ग्रन्थान्तर-प्रमाणोदाहरणेनेत्याह—इहापीति, सर्वेति । प्रवृत्तिलक्षणसर्वधर्मान्विहायेत्यर्थ - निवृत्तिधर्मस्य त्यागा-योगात् । मामेकं प्रत्यगभिन्नं ब्रह्म शरणं व्रजेति निवृत्तिधर्मस्यैव कर्तव्यत्वेनोपदेशाच्च । आत्मज्ञान-निष्ठैव खलु निवृत्तिधर्म । एव निःश्रेयसार्थं निवृत्तिधर्ममुपवर्ण्य अथ प्रवृत्तिधर्ममाह—अभ्युदयार्थ इति । अभ्युदय अर्थ प्रयोजनं यस्य स प्रवृत्तिलक्षणश्चोदनालक्षण ज्योतिष्टोमादि - नित्यनैमित्तिककाम्य-प्रायश्चित्तभेदेन चतुर्विधोऽयं धर्म सत्त्वशुद्धिश्चित्तशुद्धि - फलाभिसन्धिर्धर्मफलेषु स्पृहा । शुद्धसत्त्व-स्येति । शुद्धचित्तस्य पुरुषस्य प्रतिपद्यते प्राप्नोति धर्म इत्येव कर्तृपदं- आत्मशुद्धये सत्त्वशुद्धये विषयसम्बन्धाधिकारिप्रयोजनाख्यमनुबन्धचतुष्टयं तावच्छास्त्रस्यावश्यक- तत्र अधिकारिणा मुमुक्षूणामत्र

कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये' इति । इह द्विप्रकारं धर्मं निःश्रेयसप्रयोजनं परमार्थतत्त्वं च वासुदेवाख्यं परब्रह्माभिधेयभूतं विशेषतोऽभिव्यंजयद्विशिष्टप्रयोजनसम्बन्धाभिधेयवद्गीताशास्त्रं यतस्तदर्थे विज्ञाते समस्तपुरुषार्थसिद्धिरित्यतस्तद्विवरणे यत्नः क्रियते मया। अत्र च- 'दृष्ट्वा तु पाण्डवानीक'मित्यारभ्य 'यावन्न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह'त्येतदन्तो प्राणिनां शोकमोहादिसंसारबीजदोषोद्भवकारणप्रदर्शनार्थत्वेन व्याख्येयो ग्रन्थः- तथाहि- अर्जुनेन राज्यगुरुपुत्रमित्रसुहृत्स्वजनसम्बन्धिबान्धवेषु अहमेतेषां ममैते इत्येवं प्रत्ययनिमित्त-स्नेहविच्छेदादिनिमित्तावात्मनश्शोकमोहौ दर्शितौ- 'कथं भीष्ममहं सङ्ख्ये' इत्यादिना। शोकमोहाभ्यां ह्यभिभूतविवेकज्ञानः स्वत एव क्षत्रधर्मे युद्धे प्रवृत्तोऽपि तस्माद्युद्धादुपरराम- परधर्मं च भिक्षाजीवनादिकं कर्तुं प्रववृते । तथा च सर्वप्राणिनां शोकमोहादिदोषाविष्टचेतसां स्वभावत एव स्वस्वधर्मपरित्यागः, प्रतिषिद्धसेवा च स्यात् । स्वधर्मे प्रवृत्तानामपि तेषां वाङ्मनःकायादीनां प्रवृत्तिः फलाभिसन्धिपूर्विकैव साहङ्कारा च भवति । तत्रैवं सति धर्माधर्मो-पचयादिष्टानिष्टजन्मसुखदुःखसम्प्राप्तिलक्षणस्संसारोऽनुपरतो भवतीत्यतस्संसारबीजभूतौ शोक-मोहौ तयोश्च सर्वकर्मसन्न्यासपूर्वकादात्मज्ञानान्नान्यतो निवृत्तिरिति तदुपदिदिक्षुस्सर्वलोकानु-ग्रहार्थमर्जुनं निमित्तीकृत्याह भगवान् वासुदेवः—अशोच्यानन्वशोचस्त्वमित्यादि ।

---

सुज्ञेयत्वादन्यत्त्रयमाह—इहेत्यादिना । अभिधेयभूतं विषयभूतं निश्श्रेयसप्रयोजनं साक्षात्क्रमेण च मोक्षफलकं द्विप्रकारं द्विविधं धर्मं निवृत्तिधर्मं प्रवृत्तिधर्मं च- परमार्थतत्त्वं परमार्थतत्स्वरूपं वासुदेवाख्यं परं ब्रह्म च विशेषतोऽभिव्यञ्जयत्प्रकटयत्सद्गीताशास्त्रं विशिष्टप्रयोजनसम्बन्धाभिधेयवत्- विशिष्टानि विलक्षणानि उत्कृष्टानि वा प्रयोजनसम्बन्धाभिधेयानि अस्य सन्तीति (अस्मिन्सन्तीति वा) तथोक्तं भवति । निश्श्रेयसं प्रयोजनं द्विविधो धर्मः वासुदेवश्चेत्येतत्त्रयमभिधेयम् । व्यङ्ग्यव्यञ्जकभावस्सम्बन्ध इति विवेकः । तदर्थे गीताशास्त्रार्थे धर्मद्वये वासुदेवे चेत्यर्थः । अतः तत इत्यर्थः ।

अत्र च गीतास्वित्यर्थः । एतदन्तो ग्रन्थो व्याख्येय इत्यन्वयः । शोकमोहादयो ये संसार-बीजभूता दोषा. तेषामुद्भवस्य यत्कारणं तस्य प्रदर्शनमेवार्थो यस्य तत्त्वेन- प्राणिनां संसारबीजभूत-शोकमोहादिदोषोऽद्भवं प्रतीदं कारणमिति दर्शयति- दृष्ट्वेत्यादिः, तूष्णीं बभूवेत्येतदन्तो ग्रन्थ इत्यर्थ. । तथाहीति । तत्प्रदर्शनप्रकारमेव दर्शयामीति प्रतिज्ञायामव्ययमिदम् । अर्जुनेनात्मनश्शोकमोहौ 'कथं भीष्ममहं सङ्ख्ये' इत्यादिना दर्शितावित्यन्वयः । अहमेतेषां ममैते इति- अहमेतदीयः एते मदीया इति प्रत्ययौ ज्ञाने निमित्ते हेतू यस्य तस्य स्नेहस्य विच्छेदः नाशः आदिर्येषां तानि स्नेहविच्छेदादीनि निमित्तानि ययोस्तौ तयोऽक्तौ- अनात्मीयेष्वात्मीयत्वभ्रमः, अनन्यदीये आत्मनि अन्यदीयत्वभ्रमश्च आत्मनः अनात्मीयेषु पुत्रादिषु स्नेहं जनयित्वा तद्विच्छेदादिना शोकमोहौ जनयतीति तावेव भ्रमौ शोकमोहयोः कारणभूतावित्यर्थः ।

अत्र केचिदाहुः—सर्वकर्मसन्न्यासपूर्वकादात्मज्ञाननिष्ठामात्रादेव केवलात् कैवल्यं न प्राप्यत एव- किं तर्ह्यग्निहोत्रादिश्रौतस्मार्तकर्मसहितात् ज्ञानात् कैवल्यप्राप्तिरिति सर्वासु गीतासु निश्चितोऽर्थ इति, ज्ञापकं चाहुरस्यार्थस्य—'अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि। ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ कर्मण्येवाधिकारस्ते, कुरु कर्मैव तस्मात्त्व'-मित्यादिहिंसादियुक्तत्वाद्वैदिकं कर्माऽधर्मायेतीयमाशङ्का न कार्या- कथं, क्षात्रं कर्म युद्धलक्षणं गुरुभ्रातृपुत्रादिहिंसादिलक्षणमत्यन्तक्रूरमपि स्वधर्म इति कृत्वा नाधर्माय । तदकरणे च—'ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्य'सीति ब्रुवता यावज्जीवादिश्रुतिचोदितानां पश्वादि-हिंसादिलक्षणानां च कर्मणां प्रागेव नाधर्मत्वमिति सुनिश्चितमुक्तं भवतीति ।

तदसत्—ज्ञानकर्मनिष्ठयोः विभागवचनात् बुद्धिद्वयाश्रययोरशोच्यानित्यादिना ग्रन्थेन भगवता यावत्स्वधर्ममपि चावेक्ष्येत्येतदन्तेन ग्रन्थेन यत्परमार्थाऽऽत्मतत्त्वनिरूपणं कृतं तत्साङ्ख्यं तद्विषया बुद्धिरात्मनो जन्मादिविक्रियाभावादकर्ताऽऽत्मेति प्रकरणार्थनिरूपणाद्या जायते सा साङ्ख्या बुद्धिस्सा येषां ज्ञानिनामुपचिता भवति ते साङ्ख्यास्स्युः । एतस्या बुद्धे-र्जन्मनः प्रागात्मनो देहादिव्यतिरिक्तस्य कर्तृत्वभोक्तृत्वापेक्षो धर्माधर्मविवेकपूर्वको मोक्षसाध-

---

अत्र केचिदिति । कर्मज्ञानसमुच्चयवादिन इत्यर्थः । 'यथान्नं मधुसंयुक्तं मधु चान्नेन संयुतम् । एवं तपश्च विद्या च संयुक्तं भेषजं मह'दिति हारीतस्मृत्याद्यनुसारिण इति भावः । कैवल्यं मोक्षः । कथमिति कुतो न कार्येति प्रश्नः । तत्रोत्तरमाह—क्षात्रमित्यादिना ब्रुवता श्रीकृष्णेनेति शेष. ।

समुच्चयवादं खण्डयति--तदसदित्यादिना । तत् कर्मसहिताद्ज्ञानान्मुक्तिरिति मतमसद्दुष्टम् । तत्र हेतुमाह—ज्ञानेति । बुद्धिद्वयाश्रययोर्ज्ञानकर्मनिष्ठयोर्विभागवचनादिति । तदेव विवृणोति—अशोच्यानित्यादिना । अशोच्यानिति श्लोक आदिर्यस्य तेन स्वधर्ममपि चावेक्ष्येति श्लोकोन्तो यस्य तेन । स्वधर्ममिति श्लोकस्य नात्रान्तर्भावः, किंतु देही नित्यमितिश्लोकस्यैव । स्वधर्ममिति श्लोकस्तु ग्रन्थस्यास्यावधिरिति बोध्यम् । अशोच्यानित्यादिना न त्वं शोचितुमर्हसीत्येतदन्तेन ग्रन्थेनेति परमार्थः । भगवता यत्परमार्थतत्त्वनिरूपणं कृतं तत्साङ्ख्यमित्यन्वयः । सम्यक् ख्यायते प्रकाश्यते तत्त्व-मनयेति सङ्ख्या वैदिकी सम्यग्बुद्धिः तया सङ्ख्यया प्रकाश्यमात्मतत्त्वं साङ्ख्यमिति व्युत्पत्तेरिति भावः । यावदिति साकल्येऽवधारणे वाऽव्ययं । प्रकरणार्थनिरूपणादात्मनो जन्मादिविक्रियाभावादात्मा अकर्तेति या तद्विषया साङ्ख्यविषया बुद्धिर्जायते सा बुद्धिस्साङ्ख्येत्युच्यते- उपचारादिति भावः । नच सङ्ख्याया एव बुद्धित्वात्कथं साङ्ख्याया अपि बुद्धित्वमिति वाच्यं,सङ्ख्या बुद्धिरन्तःकरणं, साङ्ख्या बुद्धिस्तु तद्वृत्ति-रिति भेदात् । नच कुत एतद्भेदावगम इति वाच्यं, या जायते इति भाष्यात् । बुद्धिवृत्तिर्हि प्रकर-णार्थनिरूपणाज्जायते बुद्धिस्तु पञ्चभूतसत्त्वांशसमष्ट्या प्रागेव जातेति नाधुना जायते इति । सा साङ्ख्या-बुद्धिर्येषामुपचिता प्रवृद्धा- दृढेति यावत् । भवति ते ज्ञानिनस्साङ्ख्यास्स्यु साङ्ख्या एषामस्तीति साङ्ख्या इत्यर्शआद्यजन्तोऽयं शब्द इति भावः । एतस्या इति साङ्ख्याया इत्यर्थः, देहादिव्यतिरिक्तस्येति ।

नानुष्ठानलक्षणो योगस्तद्विषया बुद्धिर्योगबुद्धिस्सा येषां कर्मिणामुपचिता भवति ते योगिनः। तथा च भगवता विभक्ते बुद्धी द्वे निर्दिष्टे 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगेत्विमां शृणि'ति। तयोश्च साङ्ख्यबुद्ध्याश्रयां ज्ञानयोगेन निष्ठां साङ्ख्यानां विभक्तां वक्ष्यति- 'पुरा वेदात्मना मया प्रोक्ते'ति। तथा च योगबुद्ध्याश्रयां कर्मयोगेन निष्ठां योगिनां विभक्तां वक्ष्यति— 'कर्मयोगेन योगिना'मिति। एवं साङ्ख्यबुद्धिं योगबुद्धिं चाश्रित्य द्वे निष्ठे विभक्ते भगवतोक्ते ज्ञानकर्मणोः कर्तृत्वाकर्तृत्वानेकत्वैकत्वबुद्ध्याश्रययोर्युगपदेकपुरुषाश्रयत्वासम्भवं पश्यता। यथै-तद्विभागवचनं तथैव दर्शितं ब्राह्मणे—'एतमेव लोकमिच्छन्तः प्रव्राजिनः प्रव्रजन्ती'ति। सर्वकर्मसन्न्यासं विधाय तच्छेषेण 'किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक' इति। तत्र च प्राग्दारपरिग्रहात्पुरुषस्य आत्मा प्राकृतो धर्मजिज्ञासोत्तरकालं लोकत्रयसाधनं पुत्रं मनुष्यलोकप्राप्तिसाधनं द्विप्रकारं च वित्तं मानुषं दैवं च कर्मानुरूपं पितृलोकप्राप्तिसाधनं विद्यां च दैवं वित्तं देवलोकप्राप्तिसाधनं- सोऽकामयतेत्यविद्याकामवत एव कर्माणि श्रौतानि

नास्तिकानां देहादिव्यतिरिक्तात्माभावेऽप्यास्तिकानां देहादिव्यतिरिक्तात्माऽस्त्येव- देहपातानन्तरं स्वर्गादि-फलसिद्ध्यर्थमास्तिकैर्यज्ञादिकर्मणां क्रियमाणत्वादिति भावः। **मोक्षसाधनानुष्ठानलक्षण** इति। मोक्षशब्दोऽत्र मोक्षहेतुज्ञानपरः उपचारात्। तत्साधनानि तु फलाभिसन्धिरहितानि कर्माणि तदनुष्ठान-मेव लक्षणं स्वरूपं यस्य स तथोक्तो योगः। मोक्षस्य परम्परया साधनानि मोक्षसाधनानि कर्माणीति वा। कर्तृत्वानेकत्वबुद्ध्याश्रयस्य कर्मणः एकत्वाकर्तृत्वबुद्ध्याश्रयस्य ज्ञानस्य च युगपदेकपुरुषाश्रयत्वासम्भवं पश्यता भगवता कृष्णेन एवं साङ्ख्यबुद्धिं योगबुद्धिं चाश्रित्य विभक्ते द्वे निष्ठे उक्ते इत्यन्वयः। तच्छेषेण यथैतद्विभागवचनं तथैव दर्शितं ब्राह्मणे इत्यन्वयः। एतमेव लोकमात्मलोकं प्रव्राजिनस्सन्न्यासिनः प्रव्रजन्ति सन्न्यसन्ति येषामस्माकमात्मैव लोकः नत्वात्मनोऽन्यः कश्चिल्लोकोऽस्ति ते वयं प्रजया सन्तानेन किं करिष्यामः? न किमपि। अतः प्रजार्थं गृहस्थाश्रमस्वीकारोऽस्माकमनुचित इति भावः। आत्मकामानां सन्न्यासः, प्रजाकामानां तु गृहस्थाश्रमस्वीकारद्वारा कर्माणि चेति सुविभक्तमिति तात्पर्यम्। श्रुत्यर्थमेव विवृणोति—*तत्र चेति*। श्रुतावित्यर्थः। *दारपरिग्रहात्प्राक्पुरुषस्य कार्यकरण-*सङ्घातलक्षणस्य आत्मा स्वरूपभूतः। आत्मनैव सङ्घातस्य कल्पितत्वात्कल्पितस्य चाधिष्ठानात्मकत्वादिति भावः। पुरुष आत्मेति पाठे पुरि शरीरे शेते इति पुरुषः शारीर आत्मा प्राकृतः अज्ञः। **धर्मजिज्ञासेति**। अधीत्य वेदवेदाङ्गानि 'अथातो धर्मजिज्ञासे'ति धर्मविचारं कृत्वेत्यर्थः। सोऽकामयत प्राकृत आत्मा तच्छब्दार्थः। किमकामयतेत्यत आह—**पुत्रं वित्तं चेति**। कीदृशं तदत आह—**लोकत्रयसाधन-मिति**। यद्वा किमर्थमत आह—**लोकत्रयसाधनमिति**। लोकत्रयसिद्ध्यर्थं लोकत्रयसाधनं पुत्रं वित्तं चाकामयतेत्यर्थः। तत्र किं लोकसाधनः पुत्रोऽत आह—**मनुष्येति**। वित्तं कतिविधमत आह—**द्विप्रकारमिति**। तावेव प्रकारौ दर्शयति—**मानुषं दैवं चेति**। किं तन्मानुषं वित्तमत आह—**कर्मेति**। किं तत्कर्मेत्यत आह—**अनुरूपमिति**। विहितमित्यर्थः। किं लोकसाधनमिदमत आह—**पितृ**

दर्शितानि तेभ्यो व्युत्थानमात्मानमेव लोकमिच्छतोऽकामस्याभिहितम् । तदेतद्विभागवचनमनुपपन्नं स्याद्यदि श्रौतकर्मज्ञानयोस्समुच्चयोऽभिप्रेतः ।

नचार्जुनस्य प्रश्न उपपन्नः ज्यायसीचेत्कर्मणस्त इत्यादिः- एकपुरुषानुष्ठेयत्वासम्भवं बुद्धिकर्मणोर्भगवता पूर्वमनुक्तं- कथमर्जुनेनाश्रितं बुद्धेश्च कर्मणो ज्यायस्त्व भगवत्यध्यारोपयेन्मृषैव ज्यायसीचेत्कर्मणस्ते मता बुद्धिरिति । किंच यदि बुद्धिकर्मणोः सर्वेषां समुच्चय उक्तस्स्यादर्जुनस्यापि स उक्त एवेति- 'यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चित'मिति कथमन्यतरविषय एव प्रश्नस्स्यात्- नहि पित्तप्रशमनार्थिनो वैद्येन मधुरं शीतं च भोक्तव्यमित्युपदिष्टे एतयोरन्यतरत्पित्तप्रशमनकारणं ब्रूहीति प्रश्नो भवति । अथाप्यर्जुनस्य भगवदुक्तार्थविवेकानवधारणनिमित्तः प्रश्नः कल्प्येत, तथाऽपि भगवता प्रश्नानुरूपं प्रतिवचनं देयं 'मया बुद्धिकर्मणोस्समुच्चय उक्तः किमर्थमित्थं त्वं भ्रान्तोऽसीति नतु पुनः प्रतिवचनमननुरूपं पृष्टादन्यदेव द्वे निष्ठे मया पुरा प्रोक्ते' इति वक्तु युक्तं- नापि स्मार्तेनैव कर्मणा बुद्धिसमुच्चयेऽभिप्रेते विभागवचनादिसर्वमुपपन्नं स्यात् । किंच क्षत्रियस्य युद्धं स्मार्तं स्वधर्म इति जानतः- 'तत्किं कर्मणि घोरे मां नियोजयसी'त्युपालम्भोऽनुपपन्नः । तस्माद्गीताशास्त्रे ईषण्मात्रेणापि श्रौतेन स्मार्तेन वा कर्मणा आत्मज्ञानस्य समुच्चयो न केनचिद्दर्शयितुं शक्यः ।

---

लोकेति । किं पुनर्दैवं वित्तमत आह—विद्यामिति । किं लोकसाधनमिदमत आह—देवलोकेति । अत्र 'सोऽकामयत, जाया मे स्यादित्यादि, अथ त्रयो वाव लोका मनुष्यलोकः पितृलोको देवलोक' इत्यादि च बृहदारण्यकमनुसन्धेयम् । व्युत्थानं व्युत्थिति , कर्मसन्न्यास इत्यर्थः । श्रौतकर्मणो ज्ञानस्य च समुच्चयोऽभिप्रेतस्स्याद्यदि तदेतद्विभागवचनमनुपपन्नं स्यादित्यन्वयः ।

नचेति । यदि कर्मज्ञानयोस्समुच्चयोऽभिप्रेतस्तर्हि कर्मापेक्षया ज्ञानस्य ज्यायस्त्ववचनमयुक्तं- समुच्चितयोरेव द्वयोर्मोक्षहेतुत्वात् । तेच समुच्चिते कर्मज्ञाने एकपुरुषेण युगपदनुष्ठेये च भवत एवेति कथं कृष्णोऽर्जुनं कर्मण्येव केवले चोदयामास निष्फले- नहि केवलाद्ज्ञानादिव केवलात्कर्मणोऽपि स्यान्मोक्षस्तव मते । अथ यदि कृष्णोर्जुनं समुच्चय एव प्रेरितवानित्युच्यते, तर्हि 'तत्किं कर्मणि घोरे मां नियोजयसि केशवे'त्यर्जुनोपालम्भ कथमुपपद्येत । भगवता पूर्वमनुक्तं बुद्धिकर्मणोरेकपुरुषानुष्ठेयत्वासम्भवं, बुद्धेः कर्मणो ज्यायस्त्वं च कथमर्जुनो भगवति मृषैवाध्यारोपयेदित्यन्वयः । ननु श्रौतेन कर्मणा ज्ञानस्य समुच्चयो माऽस्तुनाम स्मार्तेन तु स्यात् । 'तथा तपश्च विद्या च संयुक्तं मेयजे मह'दिति स्मृतेरत आह—नापीति । स्मार्तेन कर्मणाऽपि बुद्धिसमुच्चयो नाभिप्रेत , अभिप्रेतेऽपि तस्मिन् सर्वमपि विभागवचनाद्युपपन्नं नैव स्यात्- 'एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृ'ण्वित्यादिविभागवचनम् । आदिशब्दाद्बुद्धेर्ज्यायस्त्ववचनादिग्रहणम् ।

ननु यदि कर्मज्ञानयोरेकपुरुषानुष्ठेयत्वासम्भवात्समुच्चयो नास्ति, तर्हि आत्मा कर्ता भोक्ता चेति विपरीतज्ञानवत एव कर्मसु प्रवृत्तिस्स्यात् , आत्माऽकर्ताऽभोक्ता चेति सम्यग्ज्ञानवतस्तु न स्यात् , न

यस्य त्वज्ञानाद्रागादिदोषतो वा कर्मणि प्रवृत्तस्य यज्ञेन दानेन तपसा वापि शुद्धसत्त्वस्य ज्ञानमुत्पन्नं परमार्थतत्त्वविषयमेकमिदं सर्वं ब्रह्माऽकर्तृ चेति तस्य कर्मणि कर्मप्रयोजने च निवृत्तेऽपि लोकसंग्रहार्थं तत्र पूर्वं यथा प्रवृत्तः तथैव प्रवृत्तस्य यत्प्रवृत्तिरूपं दृश्यते न तत्कर्म येन बुद्धेस्समुच्चयस्स्यात्- यथा भगवतो वासुदेवस्य क्षत्रधर्मचेष्टितं न ज्ञानेन समुच्चीयते पुरुषार्थसिद्धये- तद्वत्फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वात् । तत्त्ववित् नाहं करोमीति मन्यते, नच फलमभिसन्धत्ते । यथा च स्वर्गादिकामार्थिनोऽग्निहोत्रादिकाम्यसाधनानुष्ठानायाहिताग्नेः काम्य एवाग्निहोत्रादौ प्रवृत्तस्य सामिकृते विनष्टेऽपि कामे तदेवाग्निहोत्राद्यनुतिष्ठतो न तत्काम्यमग्निहोत्रादि भवति, तथा दर्शयति च भगवान्—'कुर्वन्नपि न लिप्यते, कुर्वन्नपि न करोति न लिप्यत' इति तत्र तत्र । यच्च- 'पूर्वैः पूर्वतरं कृतम्', 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति । तत्र तत्र प्रविभज्य विज्ञेयं । तत्कथं- यदि तावत्पूर्वे जनकादयस्तत्त्वविदोऽपि प्रवृत्तकर्माणस्स्युः ते लोकसंग्रहार्थं गुणागुणेषु वर्तन्त इति, ज्ञानेन संसिद्धिमास्थिताः । कर्मसन्न्यासे प्राप्तेऽपि कर्मणा सहैव संसिद्धिमास्थिताः न कर्मसन्न्यासं

---

त्वयं नियमो दृश्यते श्रूयते वा- जनकादीनां ज्ञानिनामपि कर्मसु प्रवृत्तिदर्शनात् । तस्मादेकस्मिन्नेव पुरुषे जनकादौ कर्मज्ञानसमुच्चयदर्शनात्कर्मज्ञानयोरेकपुरुषानुष्ठेयत्वं सम्भवत्येवेति समुच्चयादेव मोक्ष इति शङ्कायामाह—यस्य त्विति । आदावज्ञत्वात्कामाद्यभिभूतत्वाच्च पुरुषः कर्मसु प्रवर्तते, ततः फलाभिसन्धिरहितयज्ञादिकर्मकरणद्वारा चित्तशुद्धिस्तस्य भवति, चित्ते शुद्धेसति ज्ञानमुत्पद्यते एकमिदं ब्रह्माकर्तृ चेति । सच ज्ञानोत्पत्त्यनन्तरमपि प्रारब्धवशाद्यथापूर्वं यज्ञादिषु प्रवर्तते यथा जनकादिः तस्य सा प्रवृत्तिर्न कर्मेत्यर्थः । तत्र दृष्टान्तमाह—यथा भगवत इति । भगवान् कृष्णः ज्ञानी भवन् केवलाद्ज्ञानात्पुरुषार्थसिद्ध्यभावं पश्यन् तत्सिद्धये न क्षत्रधर्मचेष्टितं करोति, किंतु लोकानुग्रहार्थमेव तद्वज्जनकादयोऽपीत्यर्थः । तत्र हेतुमाह—फलेति । फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वात् फलाभिसन्ध्यहङ्कारपूर्वकं कर्मैव कर्म न त्वन्यदित्यर्थः । ननु फलाभिसन्ध्यहङ्काराभावमात्रेण कर्मणः कर्मत्वं कथमपैतीत्यत्राह—यथा चेति । स्वर्गादिकामेन काम्याग्निहोत्राद्यनुष्ठायी पुरुषः मध्ये अकस्माद्ज्ञानकामेन स्वर्गादिकामं त्यक्त्वा तदेव कर्म समापयति- तत्र च यावत्पर्यन्तं स्वर्गादिकामः तावदेव तत्कर्मणः काम्यत्वं न तूर्ध्वमिति कृत्वा अनुष्ठीयमानस्यापि काम्यकर्मणः कामनाशाद्यथा काम्यत्वनाशः तथा ज्ञानिना क्रियमाणस्यापि कर्मणः फलाभिसन्ध्यहङ्काराभावात्कर्मत्वनाश इति भावः । कुर्वन्नपि न करोतीति कथं कुर्वतः पुरुषस्याकर्तृत्वं स्यात्- विरुद्धं हीदं द्वयमतः अहङ्कारपूर्वकत्वात्कर्तृत्वस्य तद्रहितः पुरुषः कुर्वन्नप्यकर्तैव । ते इति । ते जनकादयः लोकसंग्रहार्थं 'गुणागुणेषु वर्तन्त इति ज्ञानेन कर्मसु प्रवृत्ता इति शेषः । कर्मणैव हीति श्लोकगतस्य संसिद्धिमास्थिता इति वाक्यस्यार्थमाह—कर्मेति । अकर्त्रैमोक्त्रात्मज्ञानात्कर्मसन्न्यासे प्राप्तेऽपीत्यर्थः । अत्रेदं बोध्यम्—प्रवृत्तिमार्गे वर्तमाना अपि जनकादयः वेदान्तश्रवणादिना परमार्थात्मतत्त्वज्ञानं सम्पाद्य निवृत्तिमार्गभूतसन्न्यासाश्रमस्वीकारं विनैव निरहङ्कारं कर्म

कृतवन्त इत्यर्थः । अथ न ते तत्त्वविदः । ईश्वरे समर्पितेन कर्मणा साधनभूतेन संसिद्धिं सत्त्वशुद्धिं ज्ञानोत्पत्तिलक्षणां वा संसिद्धिमास्थिता जनकादय इति व्याख्येयम् । एतमेवार्थं वक्ष्यति भगवान्- सत्त्वशुद्धये कर्म कुर्वन्तीति- 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्युक्त्वा, सिद्धिं प्राप्तस्य पुनर्ज्ञाननिष्ठां वक्ष्यति- 'सिद्धिं प्राप्तो यथा ब्रह्म'त्यादिना । तस्माद्गीताशास्त्रे केवलादेव तत्त्वज्ञानात् मोक्षप्राप्तिर्न कर्मसमुच्चितादिति निश्चितोऽर्थः । यथा चायमर्थस्तथा प्रकरणशो विभज्य तत्र तत्र प्रदर्शयिष्यामः ।

तत्रैवं धर्मसम्मूढचेतसो महति शोकसागरे निमग्नस्यार्जुनस्यात्मज्ञानादन्यतोद्धरणमपश्यन् भगवान् वासुदेवस्ततोऽर्जुनमुद्धिधारयिषुरात्मज्ञानायावतारयन्नाह—अशोच्यानित्यादिना ॥

श्रीभगवान्— अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ।
गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥११॥

न शोच्या अशोच्याः भीष्मद्रोणादयः सद्वृत्तत्वात् परमार्थस्वरूपेण च नित्यत्वात्ता-

---

कुर्वन्त एव ज्ञानान्मुक्तिं भेजिरे । निवृत्तिमार्गे वर्तमानास्तु सनकादय. सन्न्यासाऽश्रमस्वीकाराद्वेदान्तश्रवणादिना आत्मतत्त्वज्ञानं सम्पाद्य कर्माण्यकुर्वन्त एव ज्ञानान्मुक्तिं भेजिरे इति ।

तत इति शोकसागरादित्यर्थः । अशोच्यनित्यादिनेति । अत्र रामानुजः- नत्वेवाहमित्यादिनेत्युक्त्वा अशोच्यानिति श्लोकं गीताशास्त्रात्पृथक्चकार, तन्मन्दम्— न ते भीष्मयश्शोच्याः- परमार्थस्वरूपेण तेषां नित्यत्वात् । नहि पण्डिता मृतान् जीवतश्च प्रति शोचन्ति- त्वं च पण्डितोऽसि- अतो माशुच इति हितशासनपरस्यास्य श्लोकस्य शास्त्रान्त.पातित्वौचित्यात् ।

यच्च वेदान्तदेशिकेनोक्तमशोच्यानिति श्लोकस्योपदेशार्थविधानापादनार्थपरिहासभावतया शास्त्रावतरणमात्रत्वेन साक्षाच्छास्त्रत्वाभाव इति, तत्तुच्छम्—महति शोकसागरे निमग्ने सचरणं शरणं प्रपन्ने पार्थे भगवतः कृष्णस्य परिहासभावोदयाऽसाङ्गत्यात् ।

यदप्युक्तमनेन—यद्वाऽत्राशोच्यानिति श्लोकः प्रहसन्निवेत्यस्य विषयः, नत्वेवाहमित्यादिकं तु इदंशब्दार्थ इति, तदपि तुच्छम्—इदंशब्दस्यात्रानुपदवक्ष्यमाणे शक्ततया तदनुपदोक्तस्याशोच्यानिति श्लोकस्येदंपदार्थत्वाभावकल्पनाया अप्रमाणत्वात्, अशोच्यानितिश्लोकस्य प्रहसन्नित्यनेनान्वयासम्भवात्, इतिशब्दमध्याहृत्य 'अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे' इति प्रहसन्निवेत्यन्वये समासपुनरादानदोषात्, इतिशब्दाध्याहारगौरवाच्च, गतासूनिति पदार्थस्य परिहासवाक्यत्वासम्भवेन शास्त्रप्रवेशासम्भवेन च व्यर्थत्वप्रसङ्गात्, परिहासवाक्यं वदन्निवेतीवशब्देन नतु वस्तुनः परिहासवाक्यं जगादेति सिद्धत्वेन अशोच्यानिति श्लोकस्य भगवदुक्तत्वासम्भवाच्च । तस्माद्गीताशास्त्रस्याशोच्यानिति श्लोक एवादिः ।

अशोच्यत्वे हेतुद्वयमाह—सद्वृत्तत्वात्परमार्थस्वरूपेण च नित्यत्वादिति । असच्चरितान्मृतादीनुद्दिश्य पित्रादयश्शोचन्ति भ्रष्टा एत इति, भीष्मद्रोणादयस्तु सद्वृत्तत्वान्न ते शोच्याः- अनि-

नशोच्यानन्वशोचः अनुशोचितवानसि- एते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेति । एवं प्रज्ञानादांश्च प्रज्ञावतां बुद्धिमतां वादांश्च वचनानि च भाषसे । तदेतन्मौढ्य पाण्डित्य च विरुद्धमात्मनि दर्शयस्युन्मत्त इवेत्यभिप्रायः । यस्माद्गतासून् गतप्राणान्मृतान् अगतासूनगतप्राणान् जीवतश्च नानुशोचन्ति पण्डिता आत्मज्ञाः- पण्डा आत्मबुद्धिर्येषां ते हि पण्डिताः 'पाण्डित्यं निर्विद्ये'ति श्रुतेः । परमार्थतस्तु तान्नित्यानशोच्या ननुशोचसतो मूढोऽसीत्येतत् ॥११॥

---

त्यास्तु गृहसम्पदादयश्शोच्या नतु नित्या आत्मानो भीष्मादय इत्यर्थ । शोकप्रकारमाह—**मन्निमित्तमित्यादिना** । मन्निमित्तं मदर्थं प्रज्ञावादानित्यत्र प्रज्ञाशब्दो लक्षणया प्रज्ञावन्त प्राज्ञानभिधत्त इत्याह—**प्रज्ञावतामिति** । श्रेयो भोक्तुं भैक्ष्यमपीह लोके इत्यादीनि वचनानीत्यर्थ । येषा देहतदिन्द्रियादिसङ्घाताभिमानिना देवदत्तादीना प्राणा देहादुत्क्रान्तास्ते गतासव इत्युच्यन्ते । फलितार्थमाह—**मृतानिति** । गतासवो न भवन्तीत्यगतासव -- नञ्तत्पुरुष । गतासुभिन्ना इत्यर्थ । तान्-फलितमाह—**जीवत इति** । न च मृताना शोच्यत्वमस्तु नाम कथं जीवतामिति वाच्य, जीवन्तोऽपि पुत्रादय. दुर्विचारसामर्थ्याश्च शोच्या एवेति ।

ननु पण्डिता अपि तार्किकादय शोचन्त्येव मृतं स्वजनं प्रतीत्यत आह—**पण्डा आत्मज्ञानमिति** । आत्मज्ञानिन एव पण्डिता न तु तार्किकादय इत्यर्थ । तत्र श्रुतिं प्रमाणयति- **'पाण्डित्यं निर्विद्येति'** । आत्मज्ञानं सम्पाद्येत्यर्थ । त्वन्त्वपण्डित एव शोकित्वादित्याह—**परमार्थतस्त्विति** । परमार्थत आत्मस्वरूपेणेत्यर्थ । **इत्येतदिति** । इतिः यावदित्यर्थ । इत्यभिप्राय इति पाठान्तरम् ।

अत्र गतासून् देहानगतासूनात्मनश्चेति रामानुज आह, **तत्तुच्छम्**—मृतदेहाना गतासुत्वेऽप्यमृतदेहानामगतासुत्वेन अगतासुशब्दाज्जीवद्देहार्थलाभात् । गतास्वगतासुशब्दयोर्लोके मृतजीवतोरेव शक्तिमहदर्शनात्- भो सखे! त्वद्ग्रामे अस्मत्सम्बन्धिनौ देवदत्तयज्ञदत्तौ किं सुखमासाते ? इति विष्णुमित्रेण पृष्ट कृष्णशर्मा! तम्प्रति! देवदत्तो गतासुर्यज्ञदत्तस्त्वगतासुरिति प्रत्युवाच- किं तत्र देवदत्तो देहो गतासु यज्ञदत्तो जीवस्त्वगतासुरिति! स श्रोता प्रत्येतिस्म- !अपितु! देवदत्तो जीवति यज्ञदत्तो मृत इति जानाति स्म- अपि च देहवदसवोऽपि कोशत्वेनात्मन उपाधिभूता एवेति कृत्वा परमार्थत आत्मानो निष्कोशत्वेन गतासव एवेति कथमात्मनामगतासुत्वम् ? किंच! सच्चिदानन्दरूपमप्यात्मानं ये अन्नमयकोशावच्छिन्नत्वेन मनुष्यं वृद्धं जीर्णं कृशं, प्राणमयकोशावच्छिन्नत्वेन क्षुधितं पिपासितं च मन्यते ते अज्ञा अतीव शोच्या एवेति कृत्वा कथमगतासूनामात्मनामशोच्यत्वम् ? अपिच पण्डिता गतासून् देहान्प्रति न शोचन्तीत्युक्ते अपण्डितानां तान्प्रति शोको भवतीति सिद्धं- नतु तद्दृश्यते । न ह्यपण्डिता अपि गतासुदेहान्प्रति शोचन्ति देहो दग्धो देहश्चभिर्भक्षित इति नहि कोऽपि शोचति । किन्तु देही पुत्रो मृत इत्येव शोचति सर्वोपि । तस्माद्दुष्टो रामानुजोक्तार्थ ॥११॥

न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामस्सर्वे वयमतः परम् ॥१२॥

कुतस्ते अशोच्याः यतस्ते नित्याः- कथं- नेति । नत्वेव जातु कदाचित् अहं नासं किं त्वासमेव- अतीतेषु देहोत्पत्तिविनाशेषु नित्य एवाहमासमित्यभिप्रायः । तथा न त्वं नासीः किं त्वासीरेव- तथा नेमे जनाधिपा नासन् किं त्वासन्नेव- तथा न न भविष्यामः, किंतु भविष्याम एव । एवं च सर्वे वयमतोऽस्माद्देहविनाशात्परं उत्तरकालेऽपि त्रिष्वपि कालेषु नित्या आत्मस्वरूपेणेत्यर्थः । देहभेदानुवृत्त्या बहुवचनं नात्मभेदाभिप्रायेण ॥१२॥

---

नत्वेवाहमिति श्लोकमवतारयति—कुत इति । कुतस्ते अशोच्या इति प्रश्नः । यतस्ते नित्यास्ततस्ते अशोच्या इत्युत्तरम् । कथं ते नित्या इति पुनः प्रश्नः- तत्रोत्तरमाह—नेतिश्लोकेन । यदि भीष्मादयः नित्यास्तर्हि अशोच्या एव नतु नित्याः म्रियमाणत्वात्ततश्चानित्यान् तान् प्रत्यहं शोचामीत्याशङ्कायामाह भगवान् नत्वेवाहमितिश्लोकमित्यवतारिकाया आशयः । अहं जातु तु कदाचिदपि नैव नासमित्यन्वयः । सम्भाव्यनिषेधनिवर्तनार्थौ द्वौ नञौ । अहमिदानीमेव वर्ते प्रागतु कदाचिदपि नासमिति सम्भाव्यस्य निषेधस्य हि निवृत्तिरत्र कृता नैव नासमिति । अस्यार्थमाह—किं त्वासमेवेति । देहानामुत्पत्तयो विनाशाश्च देहोत्पत्तिविनाशाः- तेषु अतीतकाले अनन्तेषु देहेषु जातेषु नष्टेषु च नाऽस्मा जातो नष्टः किंतु नित्य एवेत्यर्थः । नन्वात्मन एकत्वाद्वयमित्युक्तिर्न सङ्गच्छत इत्यत्राह—देहभेदेति । उपाधीनां देहानां बहुत्वाद्वयमिति बहुवचननिर्देशः- न त्वात्मबहुत्वादित्यर्थः ।

युक्तं चेदम्—वासुदेवत्वार्जुनत्वजनाधिपत्वानां देहधर्मत्वेनाधर्मत्वभावात् । अवच्छेदकानां घटमठकरकादीनां भेदेन घटाकाशो मठाकाशः करकाकाश इत्यादिभेदव्यवहारे सत्यपि यद्वदाकाशस्यैकत्वं तद्वदवच्छेदकानां देहाद्युपाधीनां भेदेन वासुदेवोऽर्जुनो नराधिपाश्चेति भेदव्यवहारे सत्यप्यात्मन एकत्वमेवेति भावः ।

अत्राह रामानुजः—अहं सर्वेश्वरस्तावन्नित्य इति सिद्धमिति, तत्तुच्छम्—न ह्यर्जुनः कृष्णं सर्वेश्वरं नित्यमात्मानं मन्यते । 'अपरं भवतो जन्म परं जन्म विवस्वतः । कथमेतद्विजानीयां त्वमादौ प्रोक्तवा'निति वक्ष्यति ह्यर्जुनः । किंच यथा कुन्त्या जाते आत्मन्यर्जुनस्यानित्यत्वबुद्धिस्तथा देवक्या जातेऽपि कृष्णे अनित्यत्वबुद्धिरेव भवति- स्वस्मिन्निव कृष्णेऽपि जन्मबाल्यकौमारादिधर्मदर्शनात् । नापि कृष्णस्यास्मिन् श्लोके आत्मानं सर्वेश्वरं प्रथयितुमस्ति तात्पर्यं- प्रकृतासाङ्गत्यात् । परं तु आत्मानं नित्यं प्रथयितुमेव- नित्यत्वप्रथनाय च नेश्वरत्वमावश्यकं- भवन्मते प्रकृतिपुरुषेश्वराणां त्रयाणां नित्यत्वेन नित्यत्वेश्वरत्वयोरसमनियतत्वात् । किंच अहंशब्दस्य वक्तरि केवले शक्तिर्न त्वीश्वरत्वादिविशेषणविशिष्टे इति सर्वेश्वरत्ववचनमत्रासङ्गतं कवितात्पर्याविषयं च । तथा- यथाहं सर्वेश्वरः परमात्मा नित्य इति नात्र संशयः तथा भवन्तः क्षेत्रज्ञा आत्मानोऽपि नित्या एवेति मन्तव्या इत्यप्युक्तं रामानुजेन, तदसत्—श्लोके- न त्वेवाहं जातु नासमित्ययमंशो दृष्टान्तः- अतिरिक्तस्तु दार्ष्टान्तिक इति

विभागकल्पनस्याप्रमाणत्वात्, दृष्टान्तवाचियथाशब्दाभावात्, अर्जुनस्य कृष्णे नित्यत्वनिश्चयाभावेन 'न त्वेवाहं जातु नास'मित्यस्य दृष्टान्तत्वासम्भवाच्च।

किं चाऽऽस्तिकोऽयमर्जुन ईश्वरः कश्चन नित्योऽस्तीति मन्यतानाम कृष्णं त्वीश्वरं नित्यं नैव मन्यते। अन्यथा सारथ्यादिषु कृष्णनियमनासम्भवात्।

अपिच यदि रामानुजोक्तार्थे कृष्णस्य तात्पर्यं स्यात्तर्हि- ईश्वरोऽहं यथा नित्यो जीवा यूयं तथैव हीत्येव ब्रूयात्। न तु नत्वेवाहमित्यादि। किंच ईश्वरः परमात्मा जीवास्त्वात्मान इत्यपि वक्तुं न शक्यते- 'य आत्माऽपहतपाप्मा सर्वव्यापी सर्वभूतान्तरात्मा, ऐतदात्म्यमिदं सर्वं, स आत्मा, तत्त्वमसि, अयमात्मा ब्रह्मे त्यादिषु श्रुतिषु आत्मशब्देनैवेश्वरग्रहणात्। जीवेश्वरयोरभेदोपदेशाच्च।

अथ यच्चात्र रामानुजेनोक्तम्—एवं भगवतस्सर्वेश्वरादात्मना च परस्परं भेदः पारमार्थिक इति भगवतैवोक्तमिति प्रतीयते- अज्ञानमोहितं प्रति तन्निवृत्तये पारमार्थिकनित्यत्वोपदेशसमये अहं त्वमिमे सर्वे वयमिति व्यपदेशात्। औपाधिकभेदवादे ह्यात्मभेदस्यातात्त्विकत्वेन तत्त्वोपदेशसमये भेदनिर्देशो न सङ्गच्छत इति, तच्चासत्—भीष्मादीननित्यत्वेन शोच्यान्मन्यमानायार्जुनाय तावन्न ते भीष्मादयश्शोच्या नित्यत्वादित्येतावदेव तावदुपदेष्टुमुचितं कृष्णस्य, न त्वात्मैकत्वम्। तद्धि कृष्णस्स्वयं पश्चादुपदेक्ष्यति 'अविनाशि तु तद्विद्धि येन सर्वमिदं तत'मित्यादिना। वक्ष्यति च तत्र रामानुजो गत्यभावाज्जात्यैकत्वमपि। यदि कृष्णस्यात्मभेद एव वास्तव इत्यभिप्रायस्तर्हि- 'अनाशिनस्तु तान्विद्धि यैस्सर्वमिदमावृत' मित्येवावक्ष्यत्।

किं चात्मनामनेकत्वे तत्तद्देहावच्छिन्नत्वेन सर्वव्यापकत्वमेव माभूत्, नहि चैत्रेणात्मना मैत्रदेहो व्याप्तो दृश्यते चैत्रात्मनो मैत्रदेहसुखदुःखाद्यनुभवाभावात्। तत्तद्देहाद्यनवच्छिन्नस्त्वात्मा सर्वव्यापक एक एव तद्भेदकाभावात्। यदि त्वविनाशीति श्लोकः परमात्मानं ब्रूत इत्युच्येत, तर्हि सर्वव्यापकपरमात्मैवाविनाशी न त्वात्मानः ते हि परिच्छिन्नत्वाद्घटादिवदनित्या एवेति महदिदमनिष्टमापतितम्। तस्मान्न त्वेवाहमितिश्लोके आत्मभेदं, अविनाशीतिश्लोके आत्माभेदं च प्रतिपादयतः कृष्णस्याशय आत्मन औपाधिक एव भेदः, नतु तात्त्विक इत्येवरूप एवेति सुखेन निश्चीयते विद्वद्भिः।

तत्त्वोपदेशसमयेऽप्यौपाधिकं भेदमनूद्यैव पारमार्थिकाऽभेदो बोधनीय इति नानुवादमात्रेण भेदस्य पारमार्थिकत्वम्। कृष्ण इत्यर्जुन इति नराधिपा इति च व्यवह्रियमाणाः सर्वे वयं अविनाशि तद्ब्रह्मैव- 'येन सर्वमिदं तत'मिति हि श्लोकद्वयस्यैकवाक्यार्थः। तस्मात्सर्वव्यापकस्य नित्यस्यात्मनो भेदकाभावान्नास्ति पारमार्थिकः आत्मभेदः- भेदकाभावः सर्वेषामप्यात्मनैव व्याप्तत्वात्। व्यवहारतस्तु कल्पितोऽप्यात्मभेदः आकाशभेदवदिति।

अथ यदप्युक्तं रामानुजेन—शङ्करमते प्रथारम्भ एव न सम्भवति- परमपुरुषस्य परमार्थदृष्टिनिर्दिष्टोऽकूटस्थनित्यचैतन्यात्मयाथात्म्यसाक्षात्कारनिवृत्ताज्ञानतत्कार्यतया अज्ञानकृतभेददर्शनं तन्मूलोपदेशादिव्यवहाराश्च न सङ्गच्छन्त इति, तदपि मन्दम्—तव मतेऽप्यवाप्तसमस्तकामस्य परिपूर्ण-

स्यात्मारामस्यानन्दमयस्य परमपुरुषस्य कथमर्जुनदुःखनिरीक्षणतदुपदेशादिव्यवहारास्सङ्गच्छेरन्? लीलयेति चेत्तर्हि माययेति विद्धि- यथा मायावशादजोऽव्ययो भूतानामीश्वरो भगवान्जात इव व्ययित इवोग्रसेनस्य पाल्य इव प्रतीयते, तथा पार्थाय किमप्युपदिशन्निव न प्रतीयतां किम्? परमार्थतस्तु न कृष्णो न पार्थः नाप्युपदेशः- एकमेवाद्वितीयं ब्रह्मास्ति, व्यवहारतस्तु सर्वमपि द्वैतमिति न काचिदस्माकं क्षतिः ।

अथ ब्रूहि त्वं परिपूर्णे निष्कामे हरौ कथं लीलोदय इत्यत्रोत्तरं- नच बालवदिति वाच्यं, बालस्याज्ञत्वात्सकामत्वाच्च दृष्टान्तत्वाभावात् । नच राज्ञः कन्दुकविहारवदिति वाच्यं, तस्य तत्र सुखकामप्रवृत्तिदर्शनात् । नच लोकानुग्रहार्थमिति वाच्यं, लोकानुग्रहरूपे प्रयोजने अवशिष्टे सति भगवतः पूर्णकामत्वव्याघातात् । तस्मात्तदापि मायैवात्र शरणम् । नच माययापि कथमसङ्गतार्थसिद्धिरिति वाच्यं, मायायां सर्वसम्भवादिति न्यायात् ।

**ननु** परमपुरुषस्यार्जुनं प्रत्युपदेशो मायया भवतु नाम- इदानीन्तनाचार्यपरम्परायाशिष्यपरम्परां प्रत्युपदेशः कथम्? द्वैतदर्शने विद्वत्ताऽभावाद्द्वैतादर्शने वाग्व्यवहाराभावाच्चेति चेत्, **मैवम्**—अपरोक्षीकृतात्मतत्त्वस्यापि गुरोर्यावद्देहपातं बाधिताध्यासानुवृत्त्या व्यवहारलोपाभावात् । देहातिरिक्तमात्मानं विदन्नपि त्वं यथा मनुष्योऽहं वैष्णवोऽहं रामानुजोऽहमिति ब्रवीषि तद्वदस्माकं किं न स्यात्? नच बाधितानुवृत्तस्य भेदज्ञानस्य उपदेशादिप्रवृत्तिहेतुत्वं नेति वाच्यं, आत्मज्ञानेन बाधितस्य अनुवर्तमानस्य देहात्मभ्रमस्य भोजनादिप्रवृत्तिहेतुत्वदर्शनात् । नहि देहातिरिक्तात्मज्ञानी त्वं निर्भोजनादिव्यापारो वर्तसे-- भोजनादिव्यपारो हि देहात्मभ्रममूलकः । नाहं देह इति मन्वानो नहि मुखेन भुंक्ते भोक्तुमिच्छति वा ।

**यदप्युक्तं रामानुजेन**—बिम्बभूत ईश्वरस्स्वप्रतिबिम्बभूतायार्जुनाय तत्त्वं कथमुपदिशेत्- नहि कोऽप्यनुन्मत्तः पुरुषः स्वदर्पणप्रतिबिम्बाय किमप्युपदिशेदिति, **तदपि तुच्छम्**—कोऽपि पुरुषः प्रतिबिम्बाय किमपि न वक्तीत्यत्र किं बिम्बप्रतिबिम्बयोरत्यन्ताभेदः कारणम्? किं वा प्रतिबिम्बमिथ्यात्वं? यद्वा प्रतिबिम्बचैतन्याभावः? नाद्यः- अत्यन्ताभेदे बिम्बप्रतिबिम्बव्यवहारस्यैव लोपप्रसङ्गात्- अयं बिम्बोयं प्रतिबिम्ब इति व्यवहारो हि बिम्बप्रतिबिम्बभेदमूलकः- अयं घटोऽयं पट इति व्यवहार इव घटपटभेदमूलकः । किंच दर्पणगतपरप्रतिबिम्बाय सुतरां भिन्नाय किमिति नोपदिशेत्पुरुषः । नापि द्वितीयः-- रज्जुसर्पस्य रज्जुज्ञानेनेव प्रतिबिम्बस्य केनापि ज्ञानेन बाधादर्शनात्- अबाधितस्य चामिथ्यात्वात्- न हि कोऽपि दर्पणगतं स्वप्रतिबिम्बं स्वयं मिथ्या मन्यते । अतः परिशिष्टस्तृतीयः- अविद्याचित्प्रतिबिम्बास्तु चैतन्यवन्त एवेति न दर्पणप्रतिबिम्बतुल्या इति सङ्गच्छत एव स्वप्रतिबिम्बानां स्वभिन्नत्वेन स्वस्योपदेशः कृष्णस्येति । **नचैवं** बिम्बप्रतिबिम्बयोर्जीवेश्वरयोर्भेदे कथमद्वैतसिद्धिरिति वाच्यं, यावदविद्यं बिम्बप्रतिबिम्बादिभेदसद्भावेऽपि परमार्थदशायामविद्याया एवाभावेन बिम्बप्रतिबिम्बभेदाभावान्नाद्वैतहानिरिति । **एतेन** 'नित्यो नित्यानां चेतनश्चेतनाना'मिति मन्त्राज्जीवेश्वरद्वैतसिद्धिरिति रामानुजवचनं **दत्तोत्तरम्**— 'एको बहूनां यो विदधाति कामा'निति तन्मन्त्रस्य व्यावहारिकजीवेश्वरभेदरक्ष्यरक्षकभावाद्यनुग्राहकत्वात् ।

**किंच** नात्र चिन्मात्रस्योपदेष्टृत्वादिकं- तस्य निर्धर्मकत्वात्- किं तर्हि कृष्णदेहेन्द्रियाद्याकारपरिणतमायावच्छिन्नचितेरेव- साहि अर्जुनदेहेन्द्रियाद्याकारपरिणताविद्यावच्छिन्नचितेर्भिन्नैव । अत एव खलु

तत्त्वमसीत्यत्र विशेषणांशं विहाय विशेष्यांशे लक्षणा स्वीकृता- तस्माद्विशिष्टयोः कृष्णार्जुनयोर्भेदादस्त्युपदेशोपपत्तिः- इति ।

**यच्च रामानुजेनोक्तम्**—गुरोरद्वितीयात्मविज्ञानादेव ब्रह्माज्ञानस्य सकार्यस्य नष्टत्वाच्छिष्यं प्रत्युपदेशो निष्प्रयोजन इति, तदपि तुच्छम्—यावद्देहपातमात्मज्ञस्यापि गुरोर्देहेन्द्रियादिप्रपञ्चप्रतीतिसद्भावः प्रागेव प्रत्यपादि- ऐन्द्रजालिकेन गगने गन्धर्वनगरं निर्मितं- नेदं गन्धर्वनगरं किंतु गगनमेवेति जानतामपि यावदिन्द्रजालं प्रतिभात्येव । अयं च प्रपञ्चः यस्याद्वितीयात्मज्ञानेन बाधितस्तस्यैव दग्धपटवद्बन्धकः न त्वन्यस्येति कृत्वा न गुरुज्ञानेन शिष्याज्ञाननिवृत्तिः- प्रतिपुरुषमविद्याभेदात्प्रपञ्चभेदाच्च । यथा नयनसन्निहितहस्ता बहवः पुरुषा एकमेव सूर्यं न पश्यन्ति- नयनासन्निहितहस्तस्तु विदग्धस्त पश्यति- नैतद्विदग्धकर्तृकाद्वितीयसूर्यावलोकनमविदग्धपुरुषाश्रयसूर्याज्ञाननिवर्तकं तद्वत्प्रकृतेपीति । विपरीतं चेदं यदेकस्य ज्ञानादन्यस्य भ्रमनिवृत्तिरिति- न हि एकस्य रज्जुयाथात्म्यज्ञानादन्यस्य रज्जुसर्पभ्रमो निवर्तमानो दृष्टः श्रुतो वा ।

वस्तुतस्तु रामानुजमत एव सुतरामुपदेशानुपपत्तिरुपदेशानर्थक्यं च- तथाहि- चिदचिच्छरीरकत्वेन चिदचिदन्तरस्थः परमात्मा कृष्णः चितोऽर्जुनस्य बहिराभिमुख्येन गुरुस्सन् कथं वर्तेत- न ह्यान्तरं वस्तु बहिस्स्यात् । यदि चिदचितोर्बहिरपि कृष्णस्यात्तर्हि कृष्ण एव चिदचितोश्शरीरं स्यात्, चिदचिद्व्याप्तश्च स्यात् । व्यापकेन शस्त्रादिना व्याप्यस्य देहस्येव चिदचिद्भ्यां कृष्णस्य नाशोऽपि स्यात् । चिदचितोरीश्वराप्तृथक्सिद्धविशेषणत्वेन स्वापृथक्सिद्धविशेषणाद्भिन्नत्वात्स्वयं पृथिव्या इव चिदचिद्भ्यां पृथगीश्वरस्यावस्थानमपि न सम्भवतीति कृत्वा पृथगवस्थितवस्तुद्वयधर्मस्य गुरुशिष्यभावस्योपपत्तिः कथं कृष्णार्जुनयोरपृथगवस्थितयोः चिदीश्वरयोः ? अपृथक्सिद्धविशेषणवाचिशब्दाना विशेष्यपर्यन्तत्वनियमात् अर्जुनपदार्थोऽपि चिदचिद्विशिष्ट ईश्वर एवेति कृत्वा कृष्णोऽर्जुनायोपदिदेशेत्येतद्वाक्यमपि न युज्यते । सर्वव्यापिनस्सर्वशरीरस्य सर्वान्तरस्येश्वरस्य कृष्णदेहेन्द्रियादिष्विवार्जुनदेहेन्द्रियादिष्वप्यहंममप्रहस्यैवौचित्येन कृष्णोऽहमर्जुनस्त्वं नराधिपा इमे इति त्वमिदंमहनिर्देशः कथमुपपद्यताम् ? कृष्णोऽहमर्जुनोऽहं नराधिपा अहमिति हि वक्तव्यम् । यद्वा कृष्णो मे अर्जुनो मे नराधिपा मे इति वक्तव्यम् ।

किंच चेतनाचेतनात्मकनिखिलजगत्परमकारणभूत ईश्वर कृष्णः स्वजातत्वेन स्वाभिन्नेष्वर्जुनादिषु कथं भेदबुद्धिमीयात्- नहि मृदो भिद्यते घट । कथं वा स्वाभिन्नायार्जुनाय स्वयमुपदिशेत्किमपि ! उपदेशो हि भेदमूलक । एवमर्वाचीनाचार्यपरम्परापि स्वमिवान्यानपि चेतनान्परमकारणेश्वराभिन्नान्विदुषीसती परमकारणेश्वराभिन्नस्वाभिन्नचेतनेभ्यश्शिष्येभ्यः कथमुपदिशेत्किमपि ?

ननु परमेश्वराज्जीवा जायन्त इत्यत्र जीवानामौपाधिकमेव जन्मास्माभिरिष्यते, नतु स्वरूपत - जीवानां ज्ञानैकाकारत्वेन नित्यत्वादिति चेत्तर्हि ज्ञानैकाकारे आत्मनि भेदकाभावात्सिद्धमद्वैतमिति स्वमतप्रच्युतिः, परमतप्रवेशश्चेत्यपि दोषद्वयं प्रसक्तं तव । नच स्वरूपतो भेदाभावेपि धर्मतोऽस्ति भे इति वाच्यं, तस्य धर्मस्याप्यौपाधिकत्वेन स्वरूपगतत्वाभावात् ।

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ।
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥१३॥

तत्र कथमिव नित्य आत्मेति- दृष्टान्तमाह—देहिन इति । देहिनो देहोऽस्यास्तीति देही तस्य देहिनो देहवत आत्मनः- अस्मिन् वर्तमाने देहे यथा येन प्रकारेण कौमारं कुमारभावो बाल्यावस्था, यौवनं यूनो भावो मध्यमावस्था, जरा वयोहानिर्जीर्णावस्था इत्येतास्तिस्रोऽवस्था अन्योन्यविलक्षणाः तासां च प्रथमावस्थानाशे आत्मनो न नाशः- द्वितीयावस्थोपजनने नोपजननमात्मनः- किं तर्ह्येकस्याविक्रियस्यैव द्वितीयतृतीयावस्थाप्राप्तिरात्मनो दृष्टा यथा तथा तद्वदेव देहादन्यो देहो देहान्तरं तस्य प्राप्तिर्देहान्तरप्राप्तिरविक्रियस्यैवात्मन इत्यर्थः । धीरो धीमान् तत्र एवं सति न मुह्यति न मोहमापद्यते ॥१३॥

---

एवं ज्ञानैकाकारे आत्मनि उपदेशसम्पाद्यगुणाभावादुपदेशनिवार्यदोषाभावाच्चोपदेशोऽप्यपार्थः । नच निकृष्टोपाधित्याग उत्कृष्टोपाधिस्वीकारश्च फलमुपदेशस्येति वाच्यं, मार्तिकघटोपाधिपरित्यागात्सौवर्णघटोपाधिस्वीकाराच्च गगनस्येवाविक्रियस्यात्मनोपि मनुष्योपाधित्यागादेवोपाधिस्वीकाराच्च न कोऽपि लाभः । सति हि देहात्मभ्रमे देवोऽहं यक्षोऽहमिति सन्तुष्येत्पुरुषः प्रकृते तूपदेशेन देहात्मभ्रमनाशाद्देहातिरिक्तात्मज्ञानस्य जातत्वाच्च किं देवदेहेन । नच देवदेहे आत्मीयत्वज्ञानात्सन्तुष्यति पुरुष इति वाच्यं, 'असङ्गो ह्ययं पुरुष' इति श्रुत्या आत्मानमसङ्गं विद्वान् पुरुषः कथं देवदेहमात्मीयं मनुयात् ?

ननु असङ्ग इति श्रुतिरर्थान्तरपरा- पुरुषस्तु सदापि सूक्ष्मदेहविशिष्टत्वात्ससङ्ग एव- ज्ञानैकाकारोऽपि पुरुषसूक्ष्मदेहोपाधिबहुत्वाद्बहुविध एव; असावुपाधिः प्रलये मुक्तौ च न नश्यति- अतो जीवाः परस्परं भिन्ना एव सर्वदा; उपदेशादीश्वरोपासनाच्चामीषामीश्वरवद्ज्ञानैश्वर्यादिसिद्धिरप्राकृतदिव्यमङ्गलविग्रहसिद्धिश्चेति चेत्, नैतदप्युपपद्यते—सदापि लिङ्गदेहविशिष्टस्य पुरुषस्य लिङ्गाकारवत्त्वेन ज्ञानैकाकारवत्त्वाभावात्, अपञ्चीकृतपञ्चभूतकार्यस्य लिङ्गस्य सदाप्यनादिपुरुषोपाधित्वासम्भवात्, प्रकृतिपुरुषेश्वराणां तव मते अनादित्वात्, लिङ्गस्य प्रकृतिकार्यत्वेन सादित्वात्, मुक्तौ मनस्सत्त्वे तदनुभूतसंसारस्मरणप्रसङ्गेन मनाग्दुःखसम्भवाल्लिङ्गभङ्गस्यैव मोक्षत्वाच्च, उपासनयैव सगुणमुक्तिक्षेत्रलाभे तत्त्वज्ञानोपदेशस्य वैयर्थ्याच्च । उपासनां विना तदुपदेशमात्रेण तन्मुक्त्यलाभाच्च व्यर्थस्तव मते तत्त्वोपदेशः ।

किंच सर्वेऽप्यास्तिका लौकिकास्तार्किकाश्च वेदानुमानादिना स्वभिन्नमीश्वरं प्रतिपद्यमानाः तस्माद्बिभ्यन्त्येव- 'भीषास्माद्वातः पवत' इति श्रुतेर्वायुसूर्यादयोपीश्वराद्बिभ्यन्त्येव । एवं स्थिते अभयार्थमात्मानं शरणं गताय शिष्याय यदि गुरुस्तमेव जीवेश्वरभेदं भयजनकमुपदिशेत्तर्हि तेन शिष्यः किं फलं माप्नुयात्, न किमपि, प्रत्युत भयाधिक्यमेव- 'य उदरमन्तरं कुरुते अथ तस्य भयं भव'तीति हि श्रूयते । तस्माद्व्यर्थमेव भेदवादिगुरूपसदनं शिष्यस्य ॥१२॥

देहिन इति । किं तर्हीति । एकस्याविक्रियस्यैवात्मनः द्वितीयतृतीयावस्थाप्राप्तिर्यथा दृष्टेत्यन्वयः । तत्र शब्दार्थमाह- एवंसतीति । एवं देहाद्देहान्तरप्राप्तौ सत्यामित्यर्थः । कौमाराद्यौवनावस्थाप्राप्तिरिवेत्येवंशब्दार्थः ॥१३॥

मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ।
आगमाऽपायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥१४॥

यद्यप्यात्मविनाशनिमित्तः मोहो न सम्भवति नित्य आत्मेति जानतस्तथापि शीतोष्णसुखदुःखप्राप्तिनिमित्तो मोहो लौकिको दृश्यते सुखवियोगनिमित्तो दुःखसंयोगनिमित्तश्च शोक इत्येतदर्जुनस्य वचनमाशङ्क्य भगवानाह—मात्रा इति । मात्रा आभिर्मीयन्ते शब्दादय इति श्रोत्रादीनीन्द्रियाणि मात्राः मात्राणां स्पर्शा मात्रास्पर्शाश्शब्दादिभिस्संयोगास्ते शीतोष्णसुखदुःखदाः शीतमुष्णं सुखं दुःखं च प्रयच्छन्तीति । अथवा स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयाः मात्राश्च स्पर्शाश्च मात्रास्पर्शाः- शीतोष्णसुखदुःखदाः शीतं च कदाचित्सुखदं भवति कदाचिद्दुःखदं च तथोष्णमप्यनियतरूपं सुखदुःखे पुनर्नियतरूपतां न व्यभिचरतः । अतस्ताभ्यां पृथक् शीतोष्णयोर्ग्रहणम् । येंते सुखदुःखदाः तर्हि एषामनपायादनुपरत एव संसारस्स्यादिति, चेन्नैवम्—यस्माच्च मात्रास्पर्शादयः आगमापायिन आगमापायशीलास्तस्मादनित्या अतस्तान् शीतोष्णादींस्तितिक्षस्व प्रसहस्व । तेषु हर्षं विषादं च माकार्षीरित्यर्थः ॥१४॥

---

मात्रेति । मीयन्त इति । गृह्यन्त इत्यर्थः । हुयामाश्रुभसेभ्यस्त्रन्निति माङस्त्रन् औणाधिक अदन्तात्स्त्रियां टाप् । मात्राः श्रोत्रत्वक्चक्षिरसनघ्राणाख्येन्द्रियपञ्चकविषयाश्शब्दस्पर्शरूपरसगन्धा इष्टानिष्टभेदेन द्विविधाः प्रत्येकं भवन्ति । तत्र आत्मनस्सुखदा इष्टा दुःखदास्त्वनिष्टाः । यथा- ग्रीष्मकाले शीतस्पर्श इष्टस्सुखदः- शिशिरकाले स एवानिष्टो दुःखदः- शिशिरकाले उष्णस्पर्श इष्टस्सुखदः- ग्रीष्मकाले स एवानिष्टो दुःखदः । एवं सुरभिगन्धस्संयोगकाले इष्टस्सुखदः--स एव विरहदशायामनिष्टो दुःखदः । मधुररसश्च ज्वरिण्यानिष्टो दुःखदः- स एव स्वस्थस्येष्टस्सुखदः । एवं श्राव्यशब्दादयोऽपीष्टास्सुखदा अनिष्टा दुःखदा इति विवेकः । एवंस्थिते मात्रास्पर्शास्सुखदुःखदा भवन्तीत्येतावानेवेह विवक्षितांशः । शीतोष्णग्रहणं तु दृष्टान्तार्थं- यथा शीतोष्णभेदभिन्नस्त्वक्स्पर्शस्सुखदुःखदो भवति तद्वदिति, अन्यथा तु शीतोष्णप्रदत्वं श्रोत्रशब्दादीनामपि सम्बद्ध्येत, तद्व्यनिष्टं- तेषां तथात्वाभावात् । शीतोष्णे इव सुखदुःखदास्शीतोष्णसुखदुःखदा इति समासः । यद्वा मात्रास्पर्शास्सुखदुःखदा भवन्ति । स्पर्शवद्द्रव्यसम्बद्धं त्वगिन्द्रियं तु शीतोष्णस्पर्शप्रदं च भवतीत्यर्थो बोध्यः । मात्रास्पर्शा इत्यस्य इन्द्रियसंयोग इति व्याख्याने शब्दादिभिरिति पदानयनक्लेश इत्यरुच्या पक्षान्तरमाह— अथ चेति ।

ननु शीतोष्णयोरेव सुखदुःखत्वात्पृथक् शीतोष्णग्रहणं व्यर्थमत आह—शीतं चेति । विषयेन्द्रियसंयोगजन्यं शीतोष्णरूपद्वन्द्वं सुखदुःखरूपद्वन्द्वं चावर्जनीयत्वादागमापायित्वादनित्यत्वाच्च सोढव्यमिति श्लोकस्य फलितार्थः । अनेन तितिक्षुत्वरूपाधिकारिधर्मश्शिक्षितः ।

अत्राह रामानुजः—शब्दस्पर्शादयस्साश्रयास्तन्मात्रा कार्यत्वान्मात्रा इत्युच्यन्त इति,तत्तुच्छम्- शब्दादीनामेव तन्मात्रात्वात् । नच सूक्ष्मभूतानि तन्मात्रा इति वाच्यं, तथापि साश्रयशब्दादीनामेव सूक्ष्मभूतानां तन्मात्रात्वात् । नच शब्दादयस्साश्रया नाम मृदङ्गकुसुमादय इति वाच्यं, तेषां महाभूत-

यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ।
समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥१५॥

शीतोष्णादीन् प्रसहतस्तव किं स्यादिति शृणु—यमिति । यं पुरुषं समदुःखसुखं समे दुःखसुखे यस्य तं समदुःखसुखं सुखदुःखप्राप्तौ हर्षविषादरहितं धीरं धीमन्तं न व्यथयन्ति न चालयन्ति नित्यात्मदर्शनादेते यथोक्ताश्शीतोष्णादयः स नित्यात्मस्वरूपदर्शननिष्ठो द्वन्द्वसहिष्णुरमृतत्वायामृतभावाय- मोक्षायेत्यर्थः । कल्पते समर्थो भवति ॥१५॥

नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः ।
उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥१६॥

इतश्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तं कर्तुं- यस्मात्—नेति । असतः

---

कार्यत्वेन तन्मात्राऽकार्यत्वात् । नच महाभूतान्येव शब्दादयस्ताश्रया इति वाच्यं, महाभूतानीत्येव वक्तव्यत्वेन शब्दादयस्ताश्रया इति वक्रोक्तेर्व्यर्थत्वाद्दुष्टत्वाच्च । इन्द्रियाणामपि तन्मात्राकार्यत्वेन भूतानामेव ग्रहणमित्यत्र नियामकाभावाच्च । अथ यदि शब्दादीनामाश्रयास्तद्ग्राहकाणीन्द्रियाणीति यद्युच्यते तर्हि मीयन्त इति मात्रा इत्येव वक्तव्यमभिधया नतु लक्षणया- लक्षणाश्रयणस्यागतिकस्थलविषयत्वादिति । तथा शीतोष्णसुखदुःखदा इत्यत्र शीतोष्णरूपसुखदुःखदा इत्याह- तच्चासत्—शीतोष्णकार्ययोस्सुखदुःखयोः कथं शीतोष्णरूपत्वम् । यथासङ्ख्यं शीतोष्णयोस्सुखदुःखहेतुत्वं च नैव सम्भवति- शीतस्यापि हेमन्तकाले दुःखहेतुत्वादुष्णस्यापि सुखहेतुत्वात् ॥१४॥

यमिति । न व्यथयन्तीति व्यथभयचलनयोरिति धातुः । चलनस्यापादानमाह—नित्यात्मदर्शनादिति । एतेन शीतोष्णादिद्वन्द्वसहनमात्रप्राप्यममृतत्वं, किंतु नित्यात्मदर्शनभ्रंशाभावादेव- अन्यथा शीतोष्णादिसहनशालिनो मूर्खाश्शूद्रादयोऽपि प्राप्नुयुरमृतत्वमिति सिद्धम् । स्थिरधीरेव नित्यात्मदर्शननिष्ठो भवति । द्वन्द्वासहनेन तु सुखदुःखाभ्यां बुद्धौ चरितायां सत्यामात्मदर्शननिष्ठा दुर्लभा पुरुषस्येति भवति । हेपुरुषर्षभेति सम्बोधनेन च पुरुषश्रेष्ठस्य तव पुरुषाधमस्येव नित्यात्मदर्शननिष्ठातो भ्रंशः, द्वन्द्वसहनाभावश्चानुचित इति द्योत्यते ।

अत्राह रामानुजः—धैर्ययुक्तमवर्जनीयदुःखं सुखवन्मन्यमानं स्ववर्णोचितं युद्धादिकर्माफलाभिसन्धि कुर्वाणं यं पुरुषं तदन्तर्गतशस्त्रपातादिस्पर्शाः परितापेन न चालयन्ति स एवामृतत्वं साधयति न त्वादृशो दुःखासहिष्णुरिति, तत्तुच्छम्—तादृशो हि पुरुषः युद्धे मृतश्चेद्वीरस्वर्गं साधयति, जयी चेत्परराज्यमथ वा चित्तशुद्धिमेव- न त्वमृतत्वं- मोक्षस्य ज्ञानैकसाध्यत्वात् । साङ्ख्यप्रकरणे चात्र कर्मकीर्तनमनुचितं- पुरुषर्षभशब्दे कातराश्रयणं चायुक्तं- भगवतः परमार्थोपदेष्टुरत्र कातुसम्बोधनप्रयोगानौचित्यात् , अर्जुनस्य परमार्थतः पुरुषाधमत्वे तं प्रति शास्त्रोपदेशस्यैवायुक्तत्वादिति ॥१५॥

नासत इति । असभुवि भूसत्तायामित्येकार्थकं धातुद्वयं- तत्र अस्तेश्शतरि सन्निति, भवतेर्घञि भाव इति च रूपद्वयम् । सन्न भवतीत्यसन्- क्लीबत्वे तु असत् । सतो भावस्सत्ता- न भावः अभावः-

अविद्यमानस्य शीतोष्णादेस्सकारणस्य न विद्यते नास्ति भावो भवनमस्तिता- नहि शीतोष्णादिसकारणं प्रमाणैर्निरूप्यमाणं वस्तु सम्भवति विकारो हि सः विकारश्च व्यभिचरति ।
यथा घटादिसंस्थानं चक्षुषा निरूप्यमाणं मृद्व्यतिरेकेणानुपलब्धेरसत्तथा सर्वो विकारः

तथा च भावस्सत्ता, अभावस्त्वसत्त्वेति विवेकः । एवंसति सति सत्ता वर्तते- तद्भावस्य तन्निष्ठत्वात्, सत्तावत एव सत्त्वाच्च । असति तु सत्ता न वर्तते, किंतु असत्त्वैव वर्तते सत्तारहितस्यैवासत्त्वात् इति सर्वस्यापि सुग्रहमेव । तनश्च- असतो नास्ति सत्तेति, सतो नास्त्यसत्त्वेति च व्यर्थोऽयं कृष्णस्योपदेशः । नहि कोऽपि सन् पदार्थस्यासत्ताशालित्वमसतस्सत्ताशालित्वं च मनुते- येनायमुपदेशस्सफलस्स्यात् । नहि कश्चिदप्यसन्तं शशशृङ्गं सन्तं मन्यते- सन्तं वा गोशृङ्गमसन्तमिति माते आह भगवान्भाष्यकार — असतः अविद्यमानस्य शीतोष्णादेरित्यादि । यस्य कालत्रयेप्यभावो नास्ति तदेव सत्- यस्य [illegible] प्रतीतिसमय एव भाव, नतु कालत्रये तदसत् सति वस्तुनि कदाचिदप्यसत्तायाः स्थित्यनौचित्यात् । अन्यथा प्रतीतिसमयवर्ती रज्जुसर्पोऽपि सन् स्यादेव । लोकस्तु नैवं जानाति, किंतु प्रतीतं वस्तु सत्त्वेन अप्रतीतं वस्त्वसत्त्वेन च जानाति- अतोऽयमुपदेश सफल एवेति भावः ।

भाष्यार्थं ब्रूमः—असतः अविद्यमानस्य शीतोष्णादेस्सकारणस्य भावो भवनमस्तिता न विद्यते नास्तीत्यन्वयः ।

ननु कारणस्य सत्त्वे कथं कार्यस्य शीतोष्णादेरसत्त्वमत आह—सकारणस्येति । सकारणस्य जलाग्न्यादिकारणसहितस्य सज्ञानस्येति वा- अज्ञानभवत्वाच्छीतोष्णादिसर्वप्रपञ्चस्य । आदिशब्दात्सुखदुःखादिग्रहणम् । ननु यदि शीतोष्णादिकमविद्यमानं स्यात्तर्हि तस्य भावो न स्यादेव- प्रत्युत शीतोष्णादिकं विद्यत एव- प्रतीयमानत्वात्- न ह्यविद्यमानं शशशृङ्गादिकं प्रतीयेत- अत आह—नहीति । सकारणं शीतोष्णादिःजगत् प्रमाणैर्निरूप्यमाणं वस्तु सत्यं न सम्भवति हीत्यन्वयः । श्रुतिभिस्तदनुगृहीततर्कैश्च विचार्यमाणेसति शीतोष्णादेर्वस्तुत्वं न सिध्यतीत्यर्थः ।

यद्वा प्रमाणैस्त्वगादीन्द्रियैर्निरूप्यमाणं गृह्यमाणं सकारणं शीतोष्णादि वस्तु न सम्भवति हीत्यन्वय. । तत्र हेतुमाह—विकारो हि स इति- सः शीतोष्णादिपदार्थः विक्रियत इति विकारः भवति- हिः प्रसिद्धौ । भवतु विकार किं तेनेत्यत आह—विकारश्चेति । विकारः कार्यं व्यभिचरति च- चर्योर्तं च.। व्यभिचारो नाम कार्यस्य कारणव्यतिरेकेणासत्त्वम् ।

तदेवोपपादयति—यथेत्यादिना । घटादिसंस्थानं घटाद्याकारसन्निवेशः। यद्वा व्यभिचारो नाम कार्यस्य कालत्रयेप्यसत्त्वम् । ननु कार्यस्य स्वोत्पत्तेः प्राक् स्वध्वंसात्पश्चाच्च भवत्यसत्त्वमिति कृत्वा कालद्वये कार्यमसद्भवतु नाम- वर्तमानकाले कार्यस्य सत्त्वात्कथं कालत्रयेऽपि कार्यस्यासत्त्वमत आह—यथेत्यादि । कारणव्यतिरेकेण कार्यस्यानुपलभ्यमानत्वाद्वर्तमानकालेऽपि न कार्यस्य सत्त्वमिति कृत्वा कालत्रयेऽपि कार्यमसदेवेति युक्तं विकारस्य व्यभिचारित्वमित्यर्थ. । जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं च कार्यस्यानुपलब्धेश्चासत्त्वमित्यन्वय. ।

कारणव्यतिरेकेणानुपलब्धेरसत्- जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः । कार्यस्य मृदादि कारणस्य च तत्कारणव्यतिरेकेणानुपलब्धेरसत्त्वम् ।

तदसत्त्वे सर्वाभावप्रसङ्ग इति, चेन्न—सर्वत्र बुद्धिद्वयोपलब्धेः सद्बुद्धिरसद्बुद्धिश्चेति। यद्विषया बुद्धिर्न व्यभिचरति तत्सत्, यद्विषया व्यभिचरति तदसदिति सदसद्विभागे बुद्धितन्त्रे स्थिते सर्वत्र द्वे बुद्धी सर्वैरुपलभ्येते- सामानाधिकरण्येन नीलोत्पलवत् सन् घटः सन् पटः सन् हस्तीत्येवं सर्वत्र- तयोर्बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति । तथाच दर्शितं नतु सद्बुद्धिस्तस्मात्

---

ननु घटादिकार्यस्यासत्त्वमस्तुनाम- नतु तत्कारणस्य मृदादेरिति शङ्कायामाह—मृदादीति । घटादिकारणं मृदादिकमपि स्वकारणभूतजलादिव्यतिरेकेण वर्तमानकाले नास्ति- जन्मन प्रागूर्ध्वंसा-दूर्ध्वाच सुतरां नास्तीत्यसदेव तत् इति ।

घटादिबुद्धिविषयोऽसत्- व्यभिचारात्, नतु सद्बुद्धिविषयः असत् अव्यभिचारात् ।

नतु घटे नष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति, चेन्न—पटादावपि सद्बुद्धिदर्शनात्- विशेषणविषयैव सा सद्बुद्धिः, सद्बुद्धिवत् घटबुद्धिरपि घटान्तरे दृश्यत

---

चूर्णबुद्धिविषयः,स्वकाले घटबुद्धिविषय.- अतः कालत्रयेऽप्यनियतरूपत्वेन अनियतबुद्धिविषयत्वाद्व्यभिचारित्वं घटस्य- तद्बुद्धेश्चानियतविषयत्वेनानियतरूपत्वाद्व्यभिचारित्वमिति । यत्सदाऽप्येकरूपं तदव्यभिचारि, यत्त्वनियतरूपं तद्व्यभिचारीति सिद्धान्तात् ।-नत्विति । सद्बुद्धिस्तु न व्यभिचरतीत्यर्थ. । फलितमाह—तस्मादिति । सद्बुद्धेरव्यभिचारित्वाद्घटादिबुद्धेश्च व्यभिचारित्वादित्यर्थः । घटादिबुद्धिविषय इति । घटादिवस्त्वित्यर्थ. । असत् भवतीति शेषः । हेतुमाह—व्यभिचारादिति । व्यभिचारश्च दर्शितः विकारश्च व्यभिचरतीत्यादिनेति बोद्धव्यम् । नत्विति । सद्बुद्धेर्विषयः गोचरः वस्तु तु नासत्-अव्यभिचारात्कालत्रयेप्येकरूपेण वर्तमानत्वादित्यर्थः । किंतु सदेवेत्यर्थ । एतेन- असद्बुद्धिविषयस्य घटादिकार्यजातस्य मृदादिकारणजातस्य चासत्त्वेपि सद्बुद्धिविषयस्य परमकारणस्य ब्रह्मणस्सत्त्वान्न शून्यवादप्रसङ्ग इति सिद्धम् । अत्रेदमवधेयम्— कारणधर्मः कार्येन्वेति- यथा मृद्धर्मः काठिन्यनैल्यादिर्क घटे- एवमात्मन आकाशस्सम्भूत इति सर्वजगत्कारणस्यात्मनस्सच्चिदानन्दरूपस्य धर्मास्सत्ताचैतन्यानन्दाः कार्ये जगत्यनुगताः । अत एव- घटोऽस्ति घटो भाति घट· प्रिय इत्यादिर्व्यवहार. । एतद्व्यवहारबलाद्घटादिकार्यजाते श्रूयमाणास्सत्ताभानानन्दाः सत्वात्मधर्मा कार्यत्वादात्माभिन्ने कार्यजाते वर्तमाना इव प्रतिभान्ति । नतु वस्तुतस्तत्र सन्ति- मृद्धर्माः काठिन्यादयोऽपि हि घटाकारपरिणतमृद्येव वर्तन्ते- नतु कम्बुग्रीवत्वाद्याकारे- तद्वद्घटादौ प्रतीयमानास्सत्ताचैतन्यानन्दा. घटाद्यवच्छिन्नचैतन्यात्मनिष्ठा एव । सन्श्च घटस्सन्निति घटे श्रूयमाणा सत्ता आत्मसत्तैव- नतु घटसत्ता । तस्याश्च सत्ताया घटस्य पृथक्करणे असत्त्वेन घटोऽवशिष्यते । एवं सर्वमपि जगत्कारणचैतन्यसत्तयैव सदित्युच्यते- अन्यथा तु जगदसदेवेति । किंच मृद्घट इतिवत्सन् घट इत्यपि प्रयोग कार्यकारणाभेदनिबन्धन एवेति कृत्वा तत्र सच्छब्दः घटभिन्नमात्मानमेव बोधयति- यथा मृद्घट इत्यत्र मृच्छब्दो घटभिन्नां मृदम् । अतत्त्वदर्शिनस्त्वत्र भ्रान्ता घटमेव सन्तं मन्यन्त इति ।

अथ असद्बुद्धेरिव सद्बुद्धेरपि व्यभिचारमाशङ्कते—नन्वित्यादिना । घटे विद्यमाने सन् घट इति बुद्धिद्वयमासीत्- घटे नष्टे तु घटबुद्धिरिव सद्बुद्धिरपि नष्टैव । नहि घटनाशानन्तरं सन्निति बुद्धिर्भवेदित्यर्थः । परिहरति—नेति । पटादावपि सद्बुद्धिदर्शनान्न सद्बुद्धिर्व्यभिचरतीत्यन्वयः । यदि घटनाशादेव घटबुद्धिनाशवत्तत्समानाधिकरणसद्बुद्धिनाशस्स्यात्तर्हि पटस्सन्निति पटबुद्धिसामानाधिकरण्येन सद्बुद्धिर्न स्यादिति भाव· । पटादावित्यस्य पटादिबुद्धिसामानाधिकरण्येनेत्यर्थो वाच्यः । यथाश्रुतार्थे तु सद्बुद्धिविषयत्वं पटादेरापतति- तच्चानिष्टम् । सद्बुद्धेर्घटनाशादनाशे हेत्वन्तरमाह—विशेषणविषयैव सा सद्बुद्धिरिति । विशेषणं विषयो यस्यास्सा विशेषणविषया सन् घट इत्यादौ हि सन्निति विशेषणं- घटादयस्तु विशेष्याणीति कृत्वा सद्बुद्धेर्विशेषणविषयत्वं- नीलोत्पलं नीलाम्बरं

इति, चेन्न,- पटादावदर्शनात् । ननु सद्बुद्धिरपि नष्टे घटे न दृश्यत इति, चेन्न विशेष्याभावे विशेषणानुपपत्तौ किं विषया स्यात्- ननु पुनस्सद्बुद्धेर्विषयाभावात्- एकाधिकरणत्वं घटादिविशेष्याभावे न युक्तमिति, चेन्न- इदमुदकमिति मरीच्यादौ अन्यतराभावेऽपि सामा-

नीलाग इत्यादौ विशेष्यभूतोत्पलादिबुद्धेर्व्यभिचारेऽपि यथा विशेषणभूतनीलबुद्धेरव्यभिचारस्तद्वदिति भावः । ननु सन् घट इति सद्बुद्धिर्घटनाशानन्तरं सन्पट इत्यत्र यथा दृश्यते, तथा घटबुद्धिरपि घटान्तरे दृश्यत इति कथं घटबुद्धेर्व्यभिचार- इति शङ्कते—सद्बुद्धिरपीति । परिहरति—नेति । पटादौ घटबुद्धेरदर्शनान्न घटबुद्धेरव्यभिचार इत्यर्थः । पटादिबुद्धिसामानाधिकरण्येन घटबुद्धिर्न दृश्यते सद्बुद्धिस्तु दृश्यत इति न सद्बुद्धिसाम्यं घटबुद्धेरिति भावः ।

ननु सन्नष्टघट इति सद्बुद्धिर्नष्टघटबुद्धिसामानाधिकरण्याभावान्नष्टघटादिसमानाधिकरणसद्बुद्ध्यभावेन सद्बुद्धेरपि व्यभिचार इति शङ्कते—नन्विति । परिहरति—नेति । हेतुमाह—विशेष्येति । विशेष्यस्याभावे विशेषणस्यानुपपत्तौ सत्यां सद्बुद्धिः किं विषया स्यात् विशेष्यस्य घटस्याभावात्-- नाशात्- विशेषणस्य सतः अनुपपत्तौ नष्टघटे सत्त्वस्यासम्भवादित्यर्थः । विशेषणविषयायास्सद्बुद्धेर्विशेषणानुपपत्तौ सत्यां निर्विषयत्वं जातमिति यावत् । सद्बुद्धेर्विशेषणमात्रविषयत्वाद्विशेषणानुपपत्त्या निर्विषयत्वमिति फलितार्थः । सतो नष्टघटविशेषणत्वानुपपत्त्यैव नष्टघटबुद्धिसमानाधिकरणसद्बुद्ध्यभाव इति निष्कर्षः । एवकारार्थमाह—नत्विति । सद्बुद्धेर्विषयस्तु सद्वस्तु ब्रह्मैव । कथं तस्याभावः शक्यते कल्पयितुं- न कथमपीत्यर्थः । नच सद्वस्तुनः स्वतन्त्रस्य कथं घटादिविशेषणत्वमिति वाच्यं, अज्ञानकृतालोकव्यवहारादेव, नतु वस्तुत इति ।

ननु नाऽसतो विद्यते भाव इत्यसतो घटादेर्भावाभावादसता घटादिना सतो ब्रह्मणस्सामानाधिकरण्यं नोपपद्यते- सन्घटस्सन् पट इत्यादीत्याक्षिपति—एकाधिकरणत्वमिति । घटादेर्विशेष्यस्याभावे विशेषणविशेष्ययोस्सद्घटयोरसामानाधिकरण्यं न युक्तमित्यर्थः । मरीच्यादावित्यादिपदाच्छुक्तिरज्ज्वादिग्रहणम् । अन्यतराभावेऽपीति । अन्यतरस्योदकरजतसर्पादेरभावेऽपीत्यर्थः । मरीच्यादावन्यतराभावेऽपीदमुदकमिति सामानाधिकरण्यदर्शनादित्यन्वयः । अयमाशयः—मरीचिकोदकं शुक्ती रजतं रज्जुस्सर्प इत्येवं प्रतीतिः क्वापि नास्ति- अधिष्ठानविशेषज्ञानेनारोप्यविशेषज्ञानस्य बाधात् । किंतु इदमुदकमिदं रजतमयं सर्प इति प्रतीतिरस्ति- अधिष्ठानसामान्यज्ञानस्यारोप्यविशेषज्ञानाबाधकत्वाभावात् । तत्र च यदधिष्ठानमिदमंशस्तदेवास्ति, यत्त्वारोप्यमुदकादि तन्नास्त्येव । सर्पादिप्रतीतेः प्राक् सर्पादिबाधानन्तरं च रज्ज्वादेरेव सत्त्वात्- सर्पादिप्रतीतिकालेपि वस्तुतो रज्ज्वादेरेव सत्त्वात्कालत्रयेऽपि सर्पादेरसत्त्वाद्व्यभिचारः- रज्ज्वादेः सत्त्वादव्यभिचारः एवं व्यभिचारिणापि सर्पादिना अव्यभिचारिण इदमंशस्याधिष्ठानसामान्यस्य सामानाधिकरण्यमस्त्येवायं सर्प इत्यादिप्रतीतेः । तद्वत् ब्रह्म घटः ब्रह्म पटः ब्रह्म इत्येवं क्वापि प्रतीतिर्नास्ति, किंतु सन् घटस्सन्पटस्सन्नित्येवमेव प्रतीतिस्सर्वत्र । तत्र यद्विशेषणं सदंशस्तदेवास्ति, यत्तु विशेष्यं घटादि तन्नास्त्येव । विशेषणभूते सत्यधिष्ठाने विशेष्यस्य घटादेः

नाधिकरण्यदर्शनात् । तस्माद्देहादेर्द्वन्द्वस्य च सकारणस्यासतो न विद्यते भाव इति ।

तथा सत आत्मनः अभावः अविद्यमानता न विद्यते सर्वत्राव्यभिचारादित्यवोचाम । एवमात्मानात्मनोस्सदसतोरुभयोरपि दृष्ट उपलब्धोऽन्तो निर्णयः- सत् सदेव, असदसदेवेति तु अनयोर्यथोक्तयोस्तत्त्वदर्शिभिः तदिति सर्वनाम सर्वं च ब्रह्म तस्य नाम तदिति तद्भाव स्तत्त्वं ब्रह्मणो याथात्म्यं द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैस्तत्त्वदर्शिभिः त्वमपि तत्त्वदर्शिनां

---

कल्पितत्वादय च सद्रूपो विशेषणांशो न घटादिविशेष्यांशबाधक इत्यस्त्युभयोस्सामानाधिकरण्यमिति । श्लोकस्य प्रथमपादार्थमुपसंहरति— तस्मादिति । शीतोष्णादेः सकारणस्य विकारस्य असद्बुद्धिविषयत्वेन व्यभिचारादित्यर्थः । असतस्सकारणस्य देहादेर्द्वन्द्वस्य च भावो न विद्यत इत्यन्वयः । देहादेरित्यत्रादिपदादिन्द्रियमन आदिग्रहणम् । द्वन्द्वस्य शीतोष्णसुखदुःखादिरूपस्येत्यर्थः । यथा घटादिरूपघेः प्राग्ध्वंसात्पश्चाच्चासन्, मध्येपि कारणभूतमृदादिव्यतिरेकेणासन्, तथा देहादिरपि जन्मनः प्राङ्मरणादूर्ध्वं चासन्- मध्येऽपि कारणभूतपृथिव्यादिभूतव्यतिरेकेणासन्निति देहादेर्व्यभिचारो बोध्यः ।

श्लोकस्य द्वितीयपादस्यार्थमाह—तथेत्यादिना । तथाशब्दः पूर्ववाक्यार्थसमाप्तिद्योतकः । यथा असतो भावो नास्ति तथेति दृष्टान्तार्थो वा । सत्पदार्थमाह—आत्मन इति । सच्चिदानन्दरूपत्वादात्मन इति भावः । सर्वत्राव्यभिचारादिति । सर्वेषु कालेषु सर्वेषु देशेषु सर्वेषु वस्तुषु च सत्त्वादित्यर्थः । अवोचामेति । पूर्वमेवोक्तमस्माभिरित्यर्थः । यद्विषया बुद्धिर्न व्यभिचरति तत्सदिति वाक्येनेति भावः ।

श्लोकस्य तृतीयचतुर्थपादयोरर्थमाह—एवमित्यादिना । एवमनयोरुभयोस्सदसतोरात्मानात्मनोरप्यन्तो निर्णयः तत्त्वदर्शिभिर्दृष्ट उपलब्धः ज्ञात इति यावत्- इत्यन्वयः । निर्णयस्याकारमाह— सत्सदेव असदसदेवेति—सदसतोस्सामानाधिकरण्यमज्ञानविलसितमिति भावः । अनयोश्शब्दार्थमाह—यथोक्तयोरिति । अभावराहित्येन भावराहित्येन च श्लोकद्वितीयप्रथमपादाभ्यां प्रतिपादितयोरित्यर्थः । तत्त्वदर्शिशब्दार्थमाह—तदित्यादिना । तच्छब्देन परामर्शयोग्यस्य प्रकृतस्य कस्यचित्प्रतिनियतस्य वस्तुनोऽभावात्तदिति सर्वनामेत्युक्तम् । सर्वनामशब्दार्थमाह—सर्वं चेत्यादिना । सर्वस्य नाम सर्वनामेति षष्ठीसमासः । 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः । सर्वस्य ब्रह्मकार्यत्वेन कारणभूतब्रह्माभिन्नत्वात्सर्वं ब्रह्मैव । यद्वा सर्वस्य ब्रह्मणि कल्पितत्वेन कल्पितस्याधिष्ठानानतिरिक्तत्वात्सर्वं ब्रह्मैव ।

ननु यदि तच्छब्दस्य सर्वनामत्वेन ब्रह्मनामत्वं स्यात्तर्हि उभ- उभय डतर- डतमादीनामपि सर्वनामत्वेन ब्रह्मनामत्वं स्यात्, न चेष्टापत्तिः- उभादीनां क्वापि ब्रह्मणि प्रयोगाभावात्- इति चेत्, उच्यते शृणु—सर्वादीनि सर्वनामानीति व्याकरणपरिभाषितसर्वनामत्वेन तच्छब्दस्य ब्रह्मवाचित्वमिह नोच्यते, किं त्वविशेषेण सर्ववस्त्वभिधायित्वप्रयुक्तसर्वनामत्वेनेति ।

ननु ब्रह्मणो निर्धर्मकत्वात्तद्वाचिनस्तच्छब्दात्कथं भावप्रत्ययोपपत्तिरत आह—याथात्म्यमिति । ब्रह्मणो याथात्म्यमिह भावार्थकत्वप्रत्ययेनाभिधीयते, न तु ब्रह्मातिरिक्तो धर्म इत्यर्थः । याथात्म्यं च याथार्थ्यं- तच्च ब्रह्मणस्सच्चिदानन्दरूपत्वम् । न च निर्धर्मके ब्रह्मणि सच्चिदानन्दरूपत्वरूपधर्मः कथं वर्त-

दृष्टिमाश्रित्य शोकं मोह च त्यक्त्वा शीतोष्णादींस्तितिक्षस्वेत्यभिप्रायः ॥१६॥

तेति वाच्यं, आनन्दो विषयानुभवो नित्यत्व चेति सन्ति तद्धर्मा - अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इतिवचनात्सत्ता चितिरानन्दश्चेति धर्मत्रय ब्रह्मणो पृथग्भूतमेव पृथगिवावभासते माययेति कृत्वा न दोष इति ।

ननु सच्चिदानन्दरूपं ब्रह्म- तत्र सत्ताचित्यानन्दा ब्रह्मणो पृथग्भूता भवन्तु नाम- सच्चिदानन्दरूपे सच्चिदानन्दरूपत्वस्य सत्त्वात्कथं निर्धर्मकत्वमिति मया पृच्छ्यत इतिचेत्, मैवम्— यथा सत्तादयोऽपृथग्भूतास्तथा सच्चिदानन्दरूपत्वमप्यपृथग्भूतमेव ब्रह्मण - सत्ताचित्त्यानन्देभ्यो न हि भिन्नं यत्किमपि सच्चिदानन्दरूपत्वं- इति । अस्मिंश्च श्लोके ब्रह्मणस्सद्रूपत्वमेव प्रपञ्चितं, नतु चिद्रूपत्वं, नाप्यानन्दरूपत्वं तद्द्वयमुत्तरत्र प्रपञ्चयिष्यत इति बोद्धव्यम् । दृष्टिमिति- मतमित्यर्थ । ज्ञानमिति यावत् । ब्रह्मातिरिक्तं सर्वं जगदसत्, प्रत्यगभिन्न ब्रह्मैकमेव सदित्येवं रूपा दृष्टिमिति भाव ।

अत्र श्रीशाङ्करभाष्ये सामानाधिकरण्येनेति स्थले समानाधिकरणे नेतिपाठमाश्रित्य- सन्घटस्सन्पटस्सन्हस्तीत्येवं सर्वत्र समानाधिकरणे द्वे बुद्धी सर्वैरुपलभ्येते न नीलोत्पलवदित्यन्वयं प्रकल्प्य पदयोस्सामानाधिकरण्यं बुद्ध्योरुपचर्यते सोऽयमिति सामानाधिकरण्यवत् । घटस्सन्नित्यादिसामानाधिकरण्यमेकवस्तुनिष्ठम् । वस्तुभेदे घटपटयोरिव तदयोगादित्यर्थ । नीलमुत्पलमितिवद्धर्मधर्मिभावस्य सुवचत्वान्न वस्त्वैक्यविषयत्वमिति चेन्नेत्याह—न नीलोत्पलवदिति । नहि सामान्यविशेषयोर्भेदेऽभेदे च तद्भावो भेदाभेदौ च विरुद्धावतो जातिव्यक्त्योस्सामानाधिकरण्यं नीलोत्पल इव न गौणं, किंतु- व्यावृत्तमनुवृत्ते कल्पितमित्येकनिष्ठमित्यर्थ· । सामान्यविशेषयोरुक्तन्यायं गुणगुण्यादावतिदिशति—एवमिति । इति व्याख्यातमानन्दगिरिणा । अत्र विचार्यते समानमधिकरणं ययोस्तयोर्भावस्सामानाधिकरण्यमिति वस्तुद्वयनिष्ठमेव सर्वत्रापि सामानाधिकरण्यम् । तद्धि पदद्वयस्य विशेषणविशेष्यभावेनाभेदान्वये प्रयोजकं - यथा- नीलमुत्पलमित्यत्र नीलाभिन्नमुत्पलमिति शाब्दबोधान्नीलत्वोत्पलत्वयोरेकाधिकरणवृत्तित्वेन तत्सामानाधिकरण्यस्य नीलोत्पलपदार्थद्वयनिष्ठत्वम् । पदयोस्सामानाधिकरण्य च पदार्थयोस्सामानाधिकरण्याधीनं, तच पदार्थयोस्सुतरा भेदे अभेदे वा न सम्भवति । अत एव घट पट इति घटो घट इति च प्रयोगाभाव । नचैवं गुणगुणिनोर्नीलोत्पलयोस्सुतरा भेदात्कथं नीलोत्पलप्रयोग इति वाच्यं, तत्र नीलपदस्य नीलगुणवद्द्रव्ये शक्तत्वात् । 'अथ त्रिषु द्रव्ये' इत्यमरशासनात्, लक्षणाया वा तद्बोधात् । ततश्च नीलगुणवद्द्रव्याभिन्नमुत्पलमिति शाब्दबोधसिद्धि । एवंसति पदार्थयोस्सामानाधिकरण्यं सर्वत्रापि सामान्यविशेष्यभावाधीनमेव । तथाहि- नीलमुत्पलमित्यत्र नीलपदं नीलगुणवद्द्रव्यसामान्यवाचि- उत्पलपदं तु द्रव्यविशेषवाचीत्युभयोस्सामानाधिकरण्यम् । गौर्मुण्ड इत्यत्र गोपदं गोत्वसामान्यव्यक्तिमात्रवाचिमुण्डपदं व्यक्तिविशेषवाचि- मृद्घट इत्यत्र मृत्पदं मृत्सामान्यवाचि- घटपदं कम्बुग्रीवाद्याकारवन्मृद्विशेषवाचि- अयं सर्प इत्यत्र इदंशब्द पुरस्थितवस्तुमात्रवाची- सर्पशब्दस्तद्विशेषवाची- सन्घट इत्यत्र सच्छब्दस्सत्तावद्वस्तुमात्रवाची- घटशब्दस्तद्विशेषवाची । यद्वा, मृद्घट इत्यादिषु कार्यकारणभावाधीनं

सामानाधिकरण्यमन्यत्र तु सामान्यविशेषभावाधीनमित्यस्तु- धर्मधर्मिभावगुणगुणिभावाद्यधीनं तु नास्ति सामानाधिकरण्यं- धर्मधर्मिणोर्गुणगुणिनोश्च सुतरां भेदात्। नचैवं कार्यकारणयोस्सामान्यविशेषयोर्वा सुतरां भेद एवेति वाच्य, मृदादेस्सकाशाद्घटादीनां सुतरां भेदादर्शनात्। नापि सुतरामभेदः- कार्यं कारणमित्यादिभेदव्यवहारलोपप्रसङ्गात्। तस्माद्भेदेनाभेदेन वा दुर्निरूपयोरेव पदार्थयोस्सामानाधिकरण्यम्। इदं च सन्घट इत्यत्रेव नीलमुत्पलमित्यत्रापि तुल्यमेवेति कथमुच्यते न नीलोत्पलवदिति। नच सोऽयमिति सामानाधिकरण्यवत्सन्घट इति सामानाधिकरण्यं सामान्यविशेषभावाद्यनाक्रान्तमेवेति वाच्यं, सोऽयमित्यत्र तदिदमर्थयोस्सामानाधिकरण्यासम्भवेनैव भागत्यागलक्षणास्वीकारात्। नहि सोऽयं देवदत्त इत्यत्र तदभिन्नोऽयं देवदत्त इति वाक्यार्थः, किंतु देवदत्त इत्येव। सन्घट इत्यत्र नैवं सन्मात्रमित्यर्थः, किंतु सदभिन्नो घट इत्येव- सत्त्वघटत्वयोस्तदिदमर्थयोरिवाविरोधात्। विरोधे सति हि लक्षणाश्रयणं- ब्रह्म घट इत्युक्तौ हि विरोधस्फूर्तिः। तस्मान्नीलमुत्पलमितिवत्सन्घट इत्यत्रापि सामानाधिकरण्यं, नतु सोऽयमितिवत्- सोऽयमित्यत्र सामानाधिकरण्यस्यैव बाधितत्वात्।

ननु सति अनुवृत्ते घटस्य व्यावृत्तस्य कल्पितत्वेन सन्घट इत्यत्र अनुवृत्तव्यावृत्तभावाश्रयं सामानाधिकरण्यं, नीलोत्पलमित्यत्र तु नैवमिति चेत्, मैवम्—नहि कोऽपि सति घटस्य कल्पितत्वमभिप्रेत्य सन्घट इति प्रयुंक्ते- तथात्वे चिद्घट इत्यपि प्रयुञ्जेत। तात्पर्याधीना हि शब्दप्रवृत्तिः। परं तु विद्यमानतया घटस्य घटस्सन्निति सर्वोऽपि प्रत्येति। तच्च विद्यमानत्वं पटादिष्वप्यस्तीत्यनुगतमेव। तथा नीलत्वमपि रत्नादिष्वस्तीत्यनुगतमेव। एवमनुवृत्तव्यावृत्तभावो नीलोत्पलस्थलेऽप्यस्त्येवेति कथमुच्यते न नीलोत्पलवदिति। नच गौर्मुण्डस्सन्घटो मृद्घट इत्यादिषु गोसन्मृदादिरूपमेकमेव वस्त्वस्तीति तत्र सामानाधिकरण्यमेकनिष्ठं- नैवं नीलोत्पलस्थले इति वाच्यं, नीलोत्पलस्थलेऽपि एकमेव नीलगुणवद्द्रव्यं वर्तत इति सिद्धान्तात्। नापि सन्घट इत्यत्र सत्यमिथ्यारूपवस्तुद्वयनिष्ठं सामानाधिकरण्यं नीलोत्पलमित्यत्र तु मिथ्याभूतवस्तुद्वयनिष्ठमेवेति वाच्यं, ब्रह्म घट इत्यत्र तथात्वेऽपि सन्घट इत्यत्रातथात्वात्। किंच यदि सन्घट इत्यत्र सच्छब्दस्सत्यं ब्रह्म वक्ति घटशब्दस्तु मिथ्याघटमिति वेत्ति पुरुषस्तर्हि सत्यमिथ्यावस्तुनोस्सामानाधिकरण्यायोगात्सन्घट इति नैव प्रयुङ्क्ते। नच नीलं नभ इतिवत्सन्घट इति प्रयोगोपपत्तिरिति वाच्यं, तस्य भ्रमत्वात्। सन्घट इत्यस्य यावद्व्यवहारं प्रमात्वाच्च। नहि सर्पे सर्पबुद्धि रज्जौ सर्पबुद्धिश्च तुल्येति वक्तुं शक्यते। तस्मात्सामानाधिकरण्येनेति पाठ एव समीचीनः अन्वयक्लेशरहितश्च।

अत्राह रामानुजः—असतो देहस्य सद्भावो न विद्यते सतश्चात्मनो नासद्भाव- उभयोर्देहात्मनोरसत्त्वसत्त्वयोर्यथोपलब्धि तत्त्वदर्शिभिरन्तो दृष्ट- निर्णयान्तत्वान्निरूपणस्य। निर्णय इहान्तशब्देनोच्यते। देहस्याचिद्वस्तुनोऽसत्त्वमेव स्वरूपमात्मनश्चेतनस्य सत्त्वमेव स्वरूपमिति निर्णयो दृष्ट इत्यर्थः। विनाशस्वभावो ह्यसत्त्वमविनाशस्वभावश्च सत्त्वमिति।

अत्र विचार्यते—सत ईश्वरादुत्पन्नमिदं कार्यं जगत्सदेवेति सत्कार्यवादिनस्स्वस्य असतो देहस्येत्यर्थवर्णनं स्ववचनव्याहतिरूपदोषावहं, परमतप्रवेशरूपदोषावहं च। असतो देहस्येति देहमात्रग्रहणं

अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ।
विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥१७॥

किं पुनस्तत्सत्- यत्सर्वदैव सदित्युच्यते—अविनाशीति । अविनाशि न विनष्टुं शीलमस्येति । तु शब्दो सतो विशेषणार्थः । तद्विद्धि विजानीहि । येन विष्ण्वाख्येन ब्रह्मणा सर्वमिदं जगत्ततं व्याप्तं साकाशं आकाशेनेव घटादयो विनाशमदर्शनमभावः- अव्ययस्यास्य नैतद् सदाख्य ब्रह्म स्वेन रूपेण व्येति निरवयवत्वाद्देहादिवत्, नाप्यात्मीयत्वेनात्मीयाभावा-

चायुक्तं शीतोष्णादेरपि तादृशस्य सत्त्वात् । मूले भाव इति श्रूयमाणस्य पदस्य सद्भाव इत्यर्थवर्णनं चायुक्तम् । तथा अभाव इत्यस्यासद्भाव इति च । योग्यत्वमयोग्यत्वमिति चार्थान्तरप्रतीते । सद्भावस्सत्ता- असद्भावोऽसत्तेत्यर्थग्रहणस्य क्लिष्टत्वात् । सत आत्मन इत्यप्ययुक्तं स्वमते प्रकृतिपुरुषेश्वराणां त्रयाणां सत्यत्वात् नित्यत्वाच्च । आत्मनां च बहुत्वादेकत्ववचनं चायुक्तम् । देहात्मनोरुपलभ्यमानत्वोक्तिश्चायुक्ता- देहस्योपलभ्यमानत्वेऽप्यात्मनः प्रमातुरुपलब्धृत्वेनोपलभ्यमानत्वाभावात्- अन्यथा उपलभ्यमानत्वे देहादिवदात्मनोऽपि जडत्वं स्यादेव । तत्त्वदर्शिभिरित्यस्य यथोपलब्धीति शेषपूरणं चायुक्तं- शेषपूरणं विनैवार्थलाभात् । शेषपूरणस्य मूलकारासम्मतत्वात् । देहस्याचिद्वस्तुनः असत्त्वमेव स्वरूपमित्यप्ययुक्तं- असत्त्वस्य गुणत्वेन स्वरूपत्वाभावात् । असत्त्वमेवेत्येवकारेण स्वरूपान्तरनिषेधश्च सम्भवति- तथानिष्टमचिद्वस्तूनामचित्स्वरूपत्वात् । तथा आत्मनस्सत्त्वमेव स्वरूपमित्यप्ययुक्तं ज्ञानैकाकारत्वादात्मनः । विनाशस्वभावो ह्यसत्त्वमित्यप्ययुक्तं- स्वमते सत्यत्वनित्यत्वयोर्भेदात्- जगदिदं सत्यमनित्यमिति स्वसिद्धान्तात् । अत एवाविनाशस्वभावश्च सत्त्वमित्यप्ययुक्तम् ॥१६॥

अविनाशीति श्लोकमवतारयति—किं पुनरिति । सर्वदैवेति । यद्विषया बुद्धिर्न व्यभिचरति तत्सदित्यनेनेति भाव । शीलमिति तच्छीलिको णिनिरिति भाव । विशेषणार्थ इति भेदार्थ इत्यर्थ । असतो घटादेर्भिन्न सल्वयं सत्पदार्थ - तत्तु अविनाशीति विद्धीत्यन्वय । असतो व्यावृत्तं तद्ब्रह्मत्वविनाशीत्यर्थ । विष्ण्वाख्येनेति । विश्वं वेवेष्टि व्याप्नोतीति विष्णुशब्दनिर्वचनादिति भाव । साकाशमिति जगतो विशेषणम् । ब्रह्मणो जगद्व्याप्तौ दृष्टान्तमाह—आकाशेनेव घटादय इति । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित' इति श्रुतेस्सर्वव्यापकं नारायणमात्मानं विष्णुं ब्रह्म अविनाशित्वात्सत्पदार्थं विद्धीति फलितार्थ । यद्वा अविनाशीति सत पर्याय । तथाच- सर्वव्यापकत्वाद्ब्रह्म अविनाशि सदिति विद्धीति । अथवा नात्र हेतुर्निर्दिष्ट, किंतु यत्सर्वव्यापकं तद्ब्रह्म त्वमविनाशीति विद्धि ।

कुतोऽस्याविनाशित्वमत आह—विनाशमिति । तदर्थमाह—अदर्शनमभावमिति । यावदिति शेष । विनाशशब्दस्य निश्चयार्थो भाव इत्यर्थ । अव्ययस्यास्येति शब्दद्वयार्थमाह—नैतदित्यादिना । न व्येतीत्यव्ययमित्यव्ययशब्दनिरुक्ति प्रसिद्धा- 'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु । वचनेषु च सर्वेषु यन्न व्येति तदव्ययमिति वचनात् । व्येति विकारं प्राप्नोतीत्यर्थ । एतमदर्शं सच्छब्दवाच्यं ब्रह्म स्वेन रूपेण न व्येति न विक्रियते कुत निरवयवत्वात् । व्यतिरेकदृष्टान्तमाह—देहादि-

यथा देवदत्तो धनहान्या न त्वेवं परब्रह्म व्येत्यतोऽव्ययस्यास्य ब्रह्मणो विनाशं न कश्चित्कर्तु-मर्हति न हि कश्चिदात्मानं विनाशयितुं शक्नोति। ईश्वरोपि- आत्मा हि ब्रह्म स्वात्मनि च क्रियाविरोधात्। यथा चक्षुर्गतरेखादींश्चक्षुर्न पश्यति ॥१७॥

वदिति। यथा देहादिः स्वावयवोपचयापचयाभ्यां स्वरूपविकारं भजते तथा ब्रह्म न भजते- निरव-यवत्वेन स्वरूपविकारापादकसामग्र्यभावात्। स्वरूपविकारोनाम रूपभेदः- यथा देहस्य स्थौल्यकार्श्यादिः नाप्यात्मीयत्वेन ब्रह्म व्येति कुतः- आत्मीयाभावात्। असङ्गस्यात्मनः कथमन्येन सम्बन्ध.? येनान्य-दात्मीयं स्यादात्मनः। व्यतिरेकदृष्टान्तमाह—यथा देवदत्तो धनहान्येति। देवदत्तस्य धने ममता-सत्त्वात्- तद्धनं देवदत्तस्यात्मीयं- एवमात्मीयस्य धनस्य दैवान्नाशे सति स धनस्वामी देवदत्तः दुःखरूपं विकारमापद्यत इत्यर्थः। दार्ष्टान्तिकं पुनरप्याह दार्ढ्याय—न त्वेवं ब्रह्म व्येतीति। ब्रह्मापेक्षया पृथ-ग्वस्तुन एवाभावात्, सत्यपि मायामये वस्तुनि निष्कामस्य ब्रह्मणस्तत्र ममताऽभावाच्च। न ब्रह्मण-स्त्वीयं वस्तु किञ्चिदस्ति- यन्नाशेन ब्रह्मणो विकारस्स्यात्। अतो निर्विकारं ब्रह्मेत्यर्थः। अव्यय-स्येति। निर्विकारस्येत्यर्थः, तदेवं ब्रह्मणः अविनाशित्वे निर्विकारत्वं हेतुरित्युक्तं भवति। हेत्वन्तर-माह—न कश्चिदिति। ब्रह्मणो विनाशकस्यान्यस्याभावाच्चाविनाशित्वं ब्रह्मण इत्यर्थः।

ननु ब्रह्मणोऽन्यदचेतनं ब्रह्म नाशयितुं नार्हतु नाम- चेतनस्त्वात्मा शक्नोत्येवेत्यत आह—नहीति। आत्मन एव ब्रह्मत्वात्कथं स्वनाशं स्वयं कर्तुं शक्नुयादात्मेत्यर्थः। ननु अग्निजलपतनादिना आत्मनाशोऽपि सुकर एवेति चेन्मैवं मंस्थाः- अग्निजलपतनादिना ह्यात्मा देहमेव नाशयति न स्वात्मान-मिति नास्ति नाश्यनाशकभावयोस्सामानाधिकरण्यमिति।

ननु आत्मा ब्रह्म नाशयितुं न शक्नुयान्नाम- ईश्वरः पुनश्शक्नुयात्तस्य सर्वेश्वरत्वादिति शङ्काया-माह—ईश्वरोपीति। तत्र हेतुमाह—आत्मेति। हि यस्माद्ब्रह्म ईश्वरस्येति शेषः। आत्मा भवति। यद्वा ईश्वरोप्यात्मैव। हि यस्मादीश्वरो ब्रह्म भवतीत्यन्वयः। तदेवमीश्वर आत्माऽभिन्नं ब्रह्मैव- आत्मा चेश्वराभिन्नं ब्रह्मैव- ब्रह्म चेश्वराभिन्न आत्मैवेति कृत्वा ईश्वरब्रह्मात्मनां त्रयाणां शब्दानामेव भेदः- अर्थस्तु चैतन्यमेकमेवेति नास्ति ब्रह्मनाशकं वस्त्वन्तरमिति भावः। यद्वा- असमर्थो ब्रह्म नाशयितुं न शक्नोतु नाम- समर्थस्तु शक्नुयादेवेत्यत्राह—नहीति। ईश्वरस्समर्थोपि कश्चिन्न शक्नोतीत्यन्वयः। तत्र हेतु माह—आत्माहीति। हि यस्मादात्मा स्वयमेव ब्रह्म भवतीति शेषः। स्वस्यैव ब्रह्मत्वादित्यर्थः।

ननु स्वं स्वयमेव हन्यात्को दोषस्तत्राह—स्वात्मनीति। स्वात्मनि स्वस्वरूपे क्रिया स्वव्यापारो नास्ति- कुतः- विरोधात्। यद्वा स्वात्मनि क्रियाया विरोधादसम्भवादित्यर्थः। तत्र दृष्टान्तमाह—यथेति। चक्षुष ईक्षणरूपक्रिया चक्षुर्भिन्ने घटादावेव ननु चक्षुषि- न हि स्वगतनीलारुणरक्तरेखादींश्चक्षु पश्यति। ननु स्वात्मनि क्रियाविरोधे- 'आत्मावारे द्रष्टव्य' इति श्रुत्या कथमात्मनि दर्शनं विधीयत इतिचेन्नैष दोषः- दर्शनस्य ज्ञानत्वेनाक्रियात्वात्- क्रियात्वेपि मानसिकक्रियात्वेन स्वात्मनिष्ठत्वाभावात् ननु मनः स्वगतान् कामादीन् विकारान्पश्यत्येवेतिचेत्, नैतत्—विज्ञानात्मन एव तद्द्रष्टृत्वात्

निर्विकारत्वान्नाशकान्तराभावाच्च सर्वव्यापकं ब्रह्म चैतन्यमेकमेवाविनाशि सत्पदवाच्यं वस्त्विति विद्धीति श्लोकस्य निष्कृष्टार्थः ।

अत्राह रामानुजः—तदात्मतत्त्वमविनाशीति विद्धि, येनात्मतत्त्वेन चेतनेन तद्व्यतिरिक्तमिदमचेतनतत्त्वं सर्वं ततं व्याप्तं- व्यापकत्वेन निरतिशयसूक्ष्मत्वादात्मनो विकारानर्हस्य तद्व्यतिरिक्तो न कश्चित्पदार्थो विनाशं कर्तुमर्हति । तद्व्याप्यतया तस्मात् स्थूलत्वादत आत्मतत्त्वमविनाशीति । आत्मनोऽपि सूक्ष्मतरस्य तन्नाशकस्यान्यस्यादर्शनादीश्वरस्यापि तन्नाशसङ्कल्पाभावादिति भाव इति वेदान्तदेशिकश्च । तदिह विचार्यते—तदिति मूले दृश्यमानस्य क्लीबस्य सद्ब्रह्मरूपेऽर्थे स्फुटमवगम्यमाने सति तं विहाय आत्मतत्त्वरूपार्थकल्पनस्याप्रमाणत्वात् , आत्मानमित्यनेनैवाभीष्टे सिद्धे तत्त्वपदवैयर्थ्याच्च । इदमचेतनतत्त्वं सर्वमित्यस्य- जीवेश्वरव्यतिरिक्तं सर्वमिति हि तवाभिमतोऽर्थः । कथं तद्व्यापकत्वं सूक्ष्मत्वेन परिच्छिन्नस्य ? जीवस्य । नहि क्वापि परिच्छिन्नस्य व्याप्तिर्दृष्टा- नहि परिच्छिन्नो घटो व्यापकस्सन् दृश्यते- सर्वव्याप्तिर्नाम सर्वत्र सत्त्वं खलु- कथं परिच्छिन्नो जीवस्सर्वत्र स्यात् । दृश्यते किं जीवो दारुपाषाणमृदादिष्वचेतनेषु ? यदि दृश्यते तर्हि दार्वादीन्यपि सचेतनान्येव स्युः, न त्वचेतनानि- बुद्धिपरिच्छिन्नस्य मनोमयकोशादान्तरस्य विज्ञानमयस्यात्मना जीवस्य सूक्ष्मतरस्य मनोमयकोशव्याप्तिरस्तु नाम कथंनाम स्वसर्वदेहव्याप्तिः । यस्स्वमेव देहं सर्वं व्याप्तुं नेष्टे कथमन्यदेहान्व्याप्नुयात् । सर्वदेहव्यापकत्वे चैकजीववादप्रसङ्गः । आत्मानेकत्वे तु आत्मनस्सर्वव्यापकत्वभङ्गप्रसङ्गः । अथ यद्येतद्दोषपरिहारायात्मनां जात्येकत्वमङ्गीकृत्य येनात्मसमुदायेन इदं सर्वमचेतनजातं ततमित्युच्यते, तर्हि सर्वपदविरोधः- नहि सर्वोऽप्ययमात्मसमुदायः पाषाणादिकमचेतनं व्याप्तुमीष्टे । यदि सर्वपदस्यापि मनुष्यादिदेहजाते संकोचस्तर्हि मूलकाराशयविरोधः स्फुट एव । जात्येकत्वादेकैक आत्मा एकैकं देहं व्याप्य वर्तत इति व्यापकत्वमात्मनो यद्युच्येत तर्हि तच्च न सम्भवति- एकैकदेहान्तर्वर्तिन आत्मनः पेटिकान्तरस्य वस्त्रस्येव व्यापकत्वायोगात् । यदन्तर्बहिर्वर्तते तद्धि व्यापकं- यथा आकाशः, धूमाभाववदयोगोलके वह्निरस्तीति हि वह्नेर्धूमव्यापकत्वमुक्तं- तथा देहाभाववति गगनादौ चेतनस्याभावात्कथं देहव्यापकत्वं चैतन्यस्य । प्रत्युत देह एव जीवव्यापकः-- जीवाभाववति शय्यादौ देहस्य सत्त्वात् । नच यदान्तरं तद्व्यापकमिति वक्तुं शक्यं- गृहान्तरस्य घटस्यापि व्यापकत्वप्रसङ्गात् । नचाणोरपि जीवस्य धर्मभूतज्ञानेन व्यापकत्वमिति वाच्यं, धर्मभूतज्ञानस्याप्यचेतने वृत्त्ययोगात् । सिद्धान्ते तु ज्ञानस्वरूपे जीवे धर्मभूतं ज्ञानं नास्त्येव- ज्ञाने ज्ञानायोगात् । धर्मभूतज्ञानवत्त्वेन जीवस्य ज्ञानित्वमेव स्यान्न तु ज्ञानस्वरूपत्वम् । न्यायमते जीवस्य द्रव्यत्वाद्द्रव्यस्य गुणवत्त्वाद्धर्मभूतज्ञानवत्त्वं जीवस्योपपद्यते- तव मते तु ज्ञानैकाकारस्य जीवस्य कथं धर्मभूतज्ञानवत्त्वम् ? न ह्येकमेव ज्ञानमेकस्मिन्नाश्रये स्वरूपभूतं धर्मभूतं च भवितुमर्हति । यदि तु धर्मभूतज्ञानं वृत्तिज्ञानमित्यभ्युपगम्येत तर्हि तद्वृत्तिज्ञानमन्तःकरणस्यैव धर्मभूतो नात्मन इति विद्धि । तस्मान्न व्यापकत्वं सूक्ष्मस्यात्मन इति कृत्वा आत्मतत्त्वेन सर्वमचेतनतत्त्वं ततमित्ययुक्तम् ।

किंच आत्मव्यतिरिक्तत्वमप्यचेतनस्य दुर्वचं- आत्मन आकाशस्सम्भूत इत्यात्मकार्यस्याचेतन-

स्यात्माऽव्यतिरिक्तत्वात् । आत्मनो निरतिशयसूक्ष्मत्वं चायुक्तं- निरतिशये सूक्ष्मत्वे व्यापकत्वायोगात् । शरीरान्तरपि सर्वव्याप्त्यभावे कृत्स्नदेहव्यापिशैत्यादिप्रयुक्तसुखाद्युपलब्ध्ययोगात् । त्वगादीन्द्रियैस्तदुपलब्धिरित्यपि न शङ्क्यम्—सूक्ष्मतमस्य तस्य त्वगादिसम्बन्धासम्भवात् । 'अणोरणीयान्महतो महीयानात्मा-गुहायां निहितोऽस्य जन्तो'रिति श्रुत्या आत्मनो महतो महीयस्त्वस्य प्रतिपादितत्वात् । अणोरणीयानित्यस्य तु सूक्ष्मात्सूक्ष्मतरो दुर्विज्ञेय इत्यर्थात् । तथा अतव्याप्यतया आत्मन. स्थूलाः पदार्था आत्मानं न नाशयन्तीत्यप्ययुक्त- अणोरात्मन व्यापकत्वे सिद्धे तद्व्याप्यत्वमचेतनस्य सिध्येत्- तदेव न सिद्धम् । तथाच दर्शितं प्राक् । तुष्यतु दुर्जन इति न्यायेन व्यापकत्वमान्तरत्वमित्यभ्युपगम्य आत्मनो व्यापकत्वे देहस्य व्याप्यत्वे चाभ्युपगतेपि स्थूलं व्याप्य वस्तु सूक्ष्मस्यान्तरस्य नाशं कर्तुं नेष्टे इतीष्टं नैव सिध्यति- स्थूलादजगरात्सूक्ष्मस्य छागस्य नाशदर्शनात् , स्थूलहठमुष्टेस्तदन्तर्गतसूक्ष्मकीटनाशदर्शनात्, स्थूलाद्दह्यमानाद्गृहाच्चदन्तर्गतजन्तुनाशदर्शनात् , तथा सूक्ष्मान्मत्कुणात्स्थूलस्य मनुष्यस्य नाशादर्शनात् , सूक्ष्माद्वडवात्स्थूलस्याग्नेर्नाशदर्शनाच्च ।

अथ ईश्वर आत्मनोऽपि सूक्ष्मतर इत्युक्तिरयुक्ता- आत्मनोऽपि सूक्ष्मतरत्वे एकस्मिन्नात्मनि स्थितस्येश्वरस्य नान्यस्मिन्नात्मनि स्थितिरसम्भवेत्- इष्यते तु त्वया ईश्वरस्य सर्वभूतान्तर्यामित्वं सर्वान्तर्यामित्वरूपं- यावन्तो देहास्तावन्त आत्मान इतिवद्यावन्त आत्मानस्तावन्त ईश्वरा इति वक्तुं न शक्यते- त्वयाऽपीश्वरैकत्वस्याभ्युपगतत्वात् । तस्माच्चेतनाचेतनसर्वजगदन्तर्बहिर्व्यापके ईश्वरे सूक्ष्मतमत्वं स्वप्नेऽपि सम्भावयितुं न शक्यं- 'महान्तं विभुमात्मानं मत्वा धीरो न शोच'तीत्यादिश्रुतिशतात् । दुर्विज्ञेयत्वलक्षणं सूक्ष्मतमत्वं तु तत्र तत्रोच्यत इति प्रागेवोक्तम् । यदीश्वराज्जीवो भिन्नस्स्यात् तर्हीश्वराज्जीवस्य सृष्टिस्थितिलयास्स्युरेव- 'यतो वा इमानि भूतानि जायन्त' इत्यादिश्रुते । अभिन्नत्वे तु कथं ? न कथमपि । एवमीश्वराभिन्नत्वादेव जीवस्य जन्मनाशाभाव - न त्वीश्वरस्य सङ्कल्पाभावात् । जीवस्येश्वरभिन्नत्वे तु 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयं ब्रह्मे'त्यद्वितीयं ब्रह्म प्रकम्य- 'तदैक्षत बहुस्यां प्रजायेये'ति तस्य बहुभवनसङ्कल्पमुक्त्वा 'तत्सृष्ट्वा तदेवानुप्राविश'दिति, 'तदनुप्रविश्य सच्च त्यच्चाभव'दिति जगत्सृष्टिं तदनुप्रवेशं च ब्रूते खलु श्रुति.- तत्र किमीश्वरसङ्कल्पाज्जीवो जातो नवा ? आद्ये- 'जातस्य हि ध्रुवो मृत्यु'रिति गीतावचनादेव तस्य नाशस्सिद्ध । द्वितीये- कथं जीवस्येश्वराद्भिन्नत्वस्य सिद्धिः ? नहि सृष्टेः प्राक् जीवोऽस्ति- 'एकमेवाद्वितीयं ब्रह्मे'ति श्रुते. । तस्मादीश्वरादभिन्न एव जीव इति कथं स्वनाशे ईश्वरस्य सङ्कल्पस्यात्र कथमपीति बोध्यम् । ननु सृष्टेः प्रागपि चिदचिद्विशिष्टं ब्रह्मैवास्ति, न तु शुद्धमितिचेत्तर्हि- ईश्वरवच्चिदपि सत एव नित्य इति कृत्वा किमितीश्वरसङ्कल्पाभावाज्जीवस्य नित्यत्वमित्युक्तं त्वया ।

वस्तुतस्तु ब्रह्मणश्चिदचिद्विशिष्टत्वे सति सविकारत्वमेव स्यात्- विशेषणभूतचिदचिद्गतस्थूलसूक्ष्म विकाराणां विशिष्टे समन्वयात् । अपृथक्सिद्धविशेषणे खलु ब्रह्मणश्चिदचितौ- एवं सविकारत्वे च ब्रह्मैवानित्यं स्यादिति मद्वदनिष्टम् ॥१७॥

**अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिणः ।**
**अनाशिनोऽप्रमेयस्य तस्माद्युध्यस्व भारत ॥१८॥**

**किं पुनस्तदसत् ? यत्स्वात्मसत्तां व्यभिचरतीत्युच्यते—अन्तवन्त इति । अन्तवन्तः अन्तो नाशो येषां तेऽन्तवन्तः- यथा मृगतृष्णिकादौ सद्बुद्धिरनुवृत्ता प्रमाणनिरूपणान्ते विच्छिद्यते स तस्यान्तः- तथेमे देहास्स्वप्ने मायादेहादिवच्चान्तवन्तः- नित्यस्य शरीरिणः शरीरवतोऽनाशिनोऽप्रमेयस्यात्मनः- अन्तवन्त इत्युक्ता विवेकिभिरित्यर्थः ।**

**नित्यस्यानाशिन इति न पौनरुक्त्यं- नित्यत्वस्य द्विविधत्वाल्लोके नाशस्य च । यथा**

---

अन्तवन्त इति श्लोकमवतारयति—**किं पुनरिति** । यत्स्वात्मसत्तां व्यभिचरति तदसद्वस्तु पुनःकिमिति शङ्का । उच्यत इति प्रतिज्ञा- स्वात्मसत्ताव्यभिचारः स्वसत्तानाश इत्यर्थः । यस्य सर्वदा नास्ति सत्ता किंतु प्रतीतिकाले एव तद्व्यसद्वस्तु । प्रतीतिकालेऽपि कारणव्यतिरेकेणासस्वात्सत्ता-व्यभिचारोऽस्त्येवेति प्रागेव प्रतिपादितम् । अनाशिनो नित्यस्याप्रमेयस्य शरीरिणस्सम्बन्धिन इमे देहा अन्तवन्त इति विवेकिभिरुक्ता इत्यन्वयः । असङ्गस्याप्यात्मनश्शरीरेणसह सम्बन्ध आधाराधेयभावादि-रूपः कल्पितोऽस्तीति शेषषष्ठ्युपपत्तिः । देहानां नाशो नाम तदनुवृत्तसद्बुद्धिविच्छेदः । सच प्रमाण-निरूपणाज्जायते इत्याह—**यथेति** । एतेन देहानां प्राणापायप्रयुक्तं नश्वरत्वं सर्वजनविदितमेवेति कृत्वा किमिति भगवता अन्तवन्त इमे देहा इत्युपदिष्टं व्यर्थत्वादिति प्रश्नो दत्तोत्तरः । नन्वीदृशो नाशः दृष्ट इत्यत्राह—**मृगतृष्णिकायामिति** । मृगतृष्णिका मरीच्युदकम् । इदमुदकमस्तीति मरीच्युदकसमानाधिकरणा या सद्बुद्धिर्मरीच्युदके अनुवर्तते साहि नेदमुदकं, किंतु मरीचिरेवेति प्रमाणनिरूपणान्ते व्यावर्तते । सः सद्बुद्धिविच्छेदः तस्य मृगतृष्णिकादेरन्त इत्यक्षरार्थः । तथा इमे दृश्यमाना देहा अन्तवन्तः—देहास्सन्तीति देहेष्वनुवर्तमानायास्सद्बुद्धेः । नेमे देहाः किंतु पृथि-व्यादिभूतान्येव- भूतव्यतिरिक्तांशस्यात्रानुपलम्भादिति (नेमे देहा किंतु ब्रह्मैवेति वा) प्रमाणनिरूपणान्ते विच्छेदात् । ननु जलपानाद्यर्थक्रियाशून्यस्य मरीचिकोदकस्य भवत्वसत्त्वं, कथं पुनर्देहानां गमना-द्यर्थक्रियाशालिनामसत्त्वमित्यत्राह—**स्वप्नमायादेहादिवचेति** । स्वप्ने यथा निद्राख्यमायया कल्पिता देहरथादयः पदार्था अर्थक्रियाशालिनोऽप्यसन्त इति सर्वैरभ्युपगम्यते तद्वदित्यर्थः । नच स्वप्नदेहा-दीनामर्थक्रियाकारित्वे विवदितव्यं- स्वप्नरथारोहणदेशान्तरगमनसम्भाषणाद्यर्थक्रियादर्शनात् । देहात्मनोः कस्सम्बन्ध इति शङ्कायां धार्यधारकभावरूप इति दर्शयितुमाह—**शरीरिण इति** । शरीरिणः शरीर-मस्यास्तीति शरीरी मत्वर्थे अत इनिठनावितीनिः । तस्य शरीरिणः । मतुप्प्रत्यये कृते शरीरवान् तस्य शरीरवतः । अन्तः प्रविश्य शरीरं धरत इत्यर्थः ।

**नित्यत्वस्येति** । लोके नित्यत्वस्य नाशस्य च द्विविधत्वादित्यन्वयः । नाशस्य द्विविधत्वा-त्तदभावरूपं नित्यत्वमपि द्विविधमित्यर्थः । नाशस्य द्वैविध्यमेव दर्शयति—**यथेत्यादिना** । भस्मीभूतः अदर्शनं गतो देहो नष्ट इत्युच्यते- णश अदर्शन इति धातुस्मरणात् । विद्यमानोऽपि वयसा परिणतः

देहो भस्मीभूतोऽदर्शनं गतो नष्ट इत्युच्यते- विद्यमानोऽपि वयसा परिणतो व्याध्यादियुक्तो जातो नष्ट इत्युच्यते- तत्रानाशिनो नित्यस्येति द्विविधेनापि विनाशेनासम्बन्धस्येत्यर्थः। अन्यथा पृथिव्यादिवदपि नित्यत्वं स्यादात्मनस्तन्माभूदिति नित्यस्यानाशिन इत्याह— न प्रमेयस्य अप्रमेयस्य- प्रत्यक्षादिप्रमाणैरपरिच्छेद्यस्येत्यर्थः। नन्वागमेनात्मा परिच्छिद्यते प्रत्यक्षादिना च- न, पूर्वं स्वतस्सिद्धत्वात्। सिद्धे ह्यात्मनि प्रमातरि प्रमित्सोः प्रमाणान्वेषणा भवति। नहि प्रमातुमिच्छन् पूर्वमित्थं नित्यः अविक्रियश्च आत्मा अहमित्यात्मानं प्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते- न ह्यात्मा नाम कस्यचिदप्रसिद्धो भवति। शास्त्रं

---

परिणामं गतः व्याध्यादियुक्तश्च देहः नष्टो जातः नष्ट आसीदित्युच्यते। रक्तक्षयादिकृतं कार्श्यमत्र नाशशब्दार्थ इति भावः। तत्रेति। एवंस्थिते इत्यर्थः। द्विविधेनापीति। अदर्शनरूपेण कार्श्यरूपेण चेत्यर्थः। अन्यथेति। अथ वेत्यर्थः। नित्यस्येत्युक्ते किं पृथिव्यादिवदात्मा यावत्प्रलयं नित्य इति शङ्का स्यात्तद्वारणायानाशिन इत्युक्तमित्यर्थः। घटादिवदनित्यत्ववारणायानाशिन इति चोक्तमिति यावत्। आहेति। भगवानिति शेषः।

अप्रमेयस्येति नञ्तत्पुरुषो नतु बहुव्रीहिरित्याह—न प्रमेयस्येति। प्रमातुं शक्यं योग्यं वा प्रमेयं तद्भिन्नोऽप्रमेयः तस्य अपरिच्छेद्यस्य परिच्छेत्तुमिदन्तेदृक्तेयत्तादिना परिमातुमशक्यस्येत्यर्थः। ननु 'शास्त्रयोनित्वा'दिति सूत्रेण, 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या 'वेदैश्च सर्वैरहमेव वेद्य' इति गीतया च शास्त्रवेद्यत्वमात्मन उच्यत इति कथमागमापरिच्छेद्यत्वम्? तथा सुखादिवदात्मा मनोवेद्य एव-'मनसैवानुद्रष्टव्य' इति श्रुतेर्मानसिकप्रत्यक्षविषयत्वमात्मनोऽस्तीति कथं प्रत्यक्षापरिच्छेद्यत्वम्? तथा जगज्जन्मादिलिङ्गकानुमानेन आत्मनस्सुग्रहत्वात्कथमनुमानापरिच्छेद्यत्वमित्याक्षिपति—नन्वित्यादिना। परिहरति—नेति। प्रत्यक्षागमादिप्रमाणव्यवहारात्पूर्वमेवात्मनः स्वतस्सिद्धत्वान्न प्रत्यक्षादिपरिच्छेद्यत्वमिति। घटादयो हि पदार्थाश्चक्षुरादिप्रमाणव्यापारानन्तरं सिध्यन्ति घटोऽस्ति पटोऽस्तीति। प्रमाता तु आगमादिप्रमाणव्यापारात्पूर्वमेव सिध्यति- प्रमात्रधीनत्वात्प्रमाणव्यापारस्य। कर्ता हि प्रमाता करणानि तु प्रमाणानि- यथा वास्यादिकरणव्यापारश्छेदनादिस्तक्षादिकर्त्रधीनः तद्वत्। आत्मा हि प्रमाता- अतो न प्रमातर्यात्मनि प्रमाणपरिच्छेद्यत्वमिति भावः। संग्रहवाक्यं विवृणोति—सिद्धेहीत्यादिना। प्रमातर्यात्मनि सिद्धे सत्येव प्रमित्सोः प्रमाणान्वेषणा भवतीत्यन्वयः। प्रमातुमिच्छुः प्रमित्सुः। तस्य प्रमातुरित्यर्थः। प्रमाता हि प्रमित्सति प्रमेयम्। प्रमाणानां चक्षुरादीनां करणानामन्वेषणा गवेषणा। रूपं
प्रमित्सुः प्रमाता चक्षुरन्विष्य[illegible] ... पेयत्वात्। शब्दं प्रमित्सुः श्रोत्रमन्विष्यतीत्येवम्।
[illegible] ... प्रमातीति कृत्वा सिध्यति प्रमातुरपि प्रमे-
ननु प्रमित्सुः पूर्वं प्रमातार[illegible] ... [illegible]: पूर्वमादौ नित्योऽविक्रिय आत्माऽह-
यत्वमित्यत आह—नहि[illegible] ... [illegible]। हिशब्दः सर्वानुभवप्रसिद्धि
मित्येवमात्मानं [illegible] ... सिद[illegible]? असिद्धार्थ-
द्योतयति। तत्र [illegible]

त्यन्तं प्रमाणमतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रमाणत्वमात्मनः प्रतिपद्यते, न त्वज्ञातार्थज्ञापकत्वेन । तथा च श्रुतिः- 'यत्साक्षादपरोक्षाद्ब्रह्म- य आत्मा सर्वान्तर' इति । यस्मादेवं नित्योऽविक्रियश्चात्मा तस्माद्युध्यस्व- युद्धादुपरमं माकार्षीरित्यर्थः । न ह्यत्र युद्धं कर्तव्यतया विधीयते- युद्धे प्रवृत्त एव ह्यसौ शोकमोहप्रतिबद्धस्तूष्णीमास्ते- तस्य प्रतिबन्धापनयनमात्रं भगवता क्रियते । तस्माद्युध्यस्वेत्यनुवादमात्रं न विधिः शोकमोहादिसंसारकारणनिवृत्त्यर्थं गीताशास्त्रं, न प्रवर्तकमित्यर्थः ॥१८॥

---

परिच्छेदाय हि प्रमात्रा प्रमाणव्यापार आकांक्षितः । चक्षुर्व्यापारात्प्रागेव यदि प्रमाता गृहे घटं जानीयात्तर्हि किमिति घटोऽत्रास्ति वा नवेति संशयीत ? किमिति तत्संशयापनोदार्थं चक्षुषा घटदर्शने व्याप्रियेत ? आत्मनि तु न कोऽप्यहमस्मि वा नवेति सन्देग्धि- येन तत्सन्देहापनोदनायात्मानं प्रमातुमिच्छेदिति भावः ।

नन्वेवं वेदान्तशास्त्रमप्रमाणमनर्थत्वात्- आत्मज्ञानं हि वेदान्तशास्त्रस्य फलं- तत्तु पूर्वमेव सिद्धमात्मनः स्वतस्सिद्धत्वादिति शङ्कायामाह-शास्त्रन्त्विति । शास्त्रमत्यन्तं प्रमाणमेव । तत्र हेतुमाह—अतदिति आत्मनि यदनात्मतद्धर्माध्यारोपणमविद्याकृतमस्ति मनुष्योऽहं स्थूलोऽहं काणोहमिति प्रतीत्याश्रयं तन्नाशस्य निवर्तकत्वेन हेतुना शास्त्रं प्रमाणत्वं प्रतिपद्यते । अविद्याकृतात्माश्रयानात्मधर्माध्यारोपणनिवर्तकत्वरूपफलस्य सत्त्वाच्छास्त्रं प्रमाणमेवेत्यर्थः । फलान्तरं निषेधति—नत्विति । अज्ञातार्थज्ञापकत्वरूपं फलं नास्ति शास्त्रस्यास्येत्यर्थः । आत्मनः स्वत्वेन ज्ञातार्थत्वादिति भावः । उक्तार्थे श्रुतिं प्रमाणयति—तथा च श्रुतिरिति । अपरोक्षादिति पञ्चमी प्रथमार्थे छान्दसी । अपरोक्षमित्यर्थः । यस्सर्वान्तर आत्मा यच्च साक्षादपरोक्षं तद्ब्रह्मेति श्रुत्यर्थः । आत्मा स्वयमेवापरोक्षं ब्रह्मेति यावत् । अनया श्रुत्या प्रत्यगभिन्नस्य ब्रह्मणः प्रमाणव्यापारं विनैव प्रत्यक्षत्वमुक्तं साक्षादित्युक्तत्वात् । ततश्च आत्मा ज्ञातार्थः स्वतस्सिद्ध एवेति भावः ।

मूलस्थयस्माच्छब्दार्थमाह—यस्मादिति । अनाशिनो नित्यस्येति शब्दद्वयार्थमाह—नित्य इति । अप्रमेयशब्दार्थमाह—अविक्रिय इति । प्रमेयस्य घटादेस्सविक्रियत्वादप्रमेय आत्मा अविक्रिय इत्यर्थः । युध्यस्वेति लोटा युद्धं कुर्विति विधिरभिधीयत इत्याशङ्क्याह—युद्धादुपरमं माकार्षीरित्यर्थ इति, अनुवादमात्रमिति । चिकीर्षितयुद्धानुवादमात्रमेवेत्यर्थः । भाष्यपदार्थमाह—न विधिरिति । तत्र हेतुमाह—शोकमोहादीति । शोकमोहादीनां संसारकारणानां निवृत्तिरेवार्थः फलं यस्य तत्तथोक्तम् । तन्निवृत्तये इदं निवृत्त्यर्थमिति वा समासः । उभयथाप्येक एवार्थः । ननु कस्मिंश्चित्कर्मणि प्रवर्तकमित्याह—न प्रवर्तकमिति । इति हेतोर्युध्यस्वेति न विधिरित्यन्वयः ।

अत्राह रामानुजः—दिह उपचय इत्युपचयरूपा इमे देहा अन्तवन्तः विनाशस्वभावाः उपचयात्मका हि घटादयोऽन्तवन्तो दृष्टाः । नित्यस्य शरीरिणः कर्मफलभोगार्थतया भूतसङ्घातरूपा देहाः पुण्य पुण्येनेत्यादिशास्त्रैरुक्ताः कर्मावसानविनाशिन इति, तत्तुच्छम्—दिह उपचय इत्युपचयरूपत्वं

य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ।
उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥१९॥

एतस्यार्थस्य साक्षिभूते ऋचावानिनाय भगवान् । यत्तु मन्यसे युद्धे भीष्मादयो मया हन्यन्ते, अहमेतेषां हन्तेत्येषा बुद्धिर्मृषैव ते । कथम्? य इति । एनं प्रकृत देहिनं वेत्ति विजानाति हन्तारं हननक्रियायाः कर्तारं, यश्चैनमन्यो मन्यते हतं हननक्रियायाः कर्मभूतं- तावुभावपि न विजानीतः- अविवेकेनात्मानं हन्ताऽहं हतोऽहमिति देहहनने आत्मानमहम्प्रत्ययविषयं यौ जानीतः तावात्मस्वरूपानभिज्ञावित्यर्थः । यस्मान्नायमात्मा हन्ति न हननक्रियायाः कर्ता, न च हन्यते । न च कर्म भवतीत्यर्थः- अविक्रियात्वात् ॥१९॥

---

देहाना वृद्धिहेतुरेव न क्षयहेतु - अपचयो हि वृद्धि । नच घटादीनामुपचयात्मकत्व दृश्यते कुलालेन यावत्परिणामो घट कृतस्तावत्परिमाणान्न हि घटोऽस्मद्गृहेषु वर्धते ।

नचैतद्दोषपरिहारायैव वेदान्तदेशिकेन उपचयरूपा इत्यस्य सावयवा इत्यर्थ वर्णित इति वाच्यं, देहशब्दात्तादृशार्थलाभात् । नच सावयवस्यैवोपचयो, नतु निरवयवस्येति सिद्धान्तात्तादृशार्थलाभ — निरवयवत्वे देहस्योपचयासम्भवादिति वाच्यं, सावयवस्यापि घटस्योपचयादर्शनेन सावयवत्वोपचयो रसमनियतत्वाभावाच्च तादृशार्थलाभ इति । किंच तव मते निरवयवस्यापि मठाकाशस्य मठवैपुल्येनोप चयदर्शनान्निरवयवस्य नोपचय इत्यपि न नियन्तुं शक्यते ।

अथ देहस्योपचयोऽपि दुर्निरूप - यावद्भिरवयवैर्देह आरब्धो घटवत्तावद्भ्योऽवयवेभ्योऽन्याव-यवाना कथं देहे लाभ , येनोपचयस्स्यात् । नच देहस्य बाल्यावस्थातस्तारुण्ये वृद्धिदर्शनात्तद्बलेनाव-यवान्तरसंक्रमणं कल्प्यत इति वाच्य, अप्रमाणत्वात्तत्कल्पनाया । अतो मायामय्येव सा वृद्धि । यथा घटादयो अन्तवन्तो दृष्टास्तथा देहा अप्यन्तवन्तो दृष्टा एवेति किमिति देहेषु सिद्धस्यान्तवत्त्वस्य सावयवत्वादिभिर्हेतुभिर्भगवता साधनं क्रियते सिद्धसाधनं ह्यपार्थत्वाद्दोष । शरीरिण कर्मफलभोगार्थ-तया देहाश्शास्त्रैरुक्ता इत्यर्थवर्णनमप्ययुक्तं - मूलाद्धि कल्पितत्वात्कर्मफलभोगार्थतयेति पदस्य । सर्व-प्रमाणेषु प्रत्यक्षस्य प्रत्यक्त्वाद्देहाना तद्गतविनाशस्वभावस्य च प्रत्यक्षसिद्धत्वेन शास्त्रैरुक्ता इत्यप्ययुक्तं— व्यर्थत्वात् ॥१८॥

य एनमितिश्लोकमवतारयति—एतस्येति । एतस्योक्तस्य नित्य आत्मा अविक्रिय इत्यस्यार्थस्य साक्षिभूते प्रमाणभूते 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतं न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चि'दिति ऋचौ मन्त्रौ भगवानानिनाय इहोपनिबबन्धेत्यर्थ । तत्र प्रथममन्त्रस्य सङ्गतिमाह— यत्त्विति । य एनं हन्तारं वेत्ति यश्चैनं हतं मन्यते तावुभौ न विजानीत - अयं न हन्ति न हन्यते इति श्लोकस्यान्वय । यौ देहहनने इदम्प्रत्ययविषयस्य देहस्य हननेसति अविवेकेन देहात्मनोरविवेकेन हेतुना अहम्प्रत्ययविषयमात्मानं हन्ताऽहमिति हतोऽहमिति जानीत तावुभौ न विजानीत इत्यस्यार्थमाह— आत्मस्वरूपानभिज्ञाविति । तत्र हेतुभूतं श्लोकस्य चरमपादं व्याचष्टे—यस्मादिति । कुत आत्मा

हननक्रियायाः कर्ता कर्म च न भवतीत्यत आह—अविक्रियत्वादिति । हन्तृत्वहतत्वादयो विकारा आत्मनि निर्विकारे कथं स्युरित्यर्थः । शास्त्रपाणिः प्रबलो देह एव दुर्बलमन्यं देहं हन्ति स दुर्बलदेह एव प्रबलेनान्येन देहेन हन्यत इति देहधर्मावेव हन्तृत्वहतत्वे । अविवेकिभिस्तु ते आत्मन्यारोप्येते- यथा देहधर्मः कार्श्यमात्मन्यारोप्यते व्याधिग्रस्तेन मूढेन पुंसा तद्वदिति भावः ।

अत्राह रामानुजः—एनमुक्तस्वभावमात्मानं प्रति हन्तारं हननहेतुं कमपि यो मन्यते- यश्चैनं केनापि हेतुना हतं मन्यत इति, तत्तुच्छम्—प्रति कमपीति पदत्रयाध्याहारदोषात्, स्वरसतः प्रतीयमानसामानाधिकरण्यभङ्गदोषाच्च, हन्तारमिति हन्तेः कर्तरि विहितेन तृप्रत्ययेन हेत्वर्थस्यानभिधीयमानत्वात्, हननहेतुमित्यस्य हननकर्तारमित्यर्थवर्णनस्य वक्रत्वात् । तथा- केनापि हेतुना हतमित्यप्यसङ्गतं—हतमिति कर्मणि क्तप्रत्ययेन तावत्कर्तुरेवाकांक्षाया उत्पद्यमानत्वात्तत्परिपूर्तये केनापि कर्त्रेत्येव वक्तव्यत्वात्, कारणफलरूपार्थद्वयवाचिनो हेतुशब्दस्य कर्त्रर्थाश्रयणस्याप्रमाणत्वाच्च ।

तथा अयमात्मा हननहेतुर्न भवतीत्यप्युक्तमनेन, तदप्यसत्—हन्तीति हननकर्तारमभिधत्ते तिबन्तो धातुः- नतु हननहेतुम् । हननकर्ता हि हननाश्रयः- आख्यातस्य चाश्रयत्वमर्थ इति सिद्धान्तः । रामो रावणं जघान बाणेन भार्यापहारित्वादिति वाक्ये हननं क्रिया, तत्र कर्ता रामः, करणं बाणः, हेतुस्तु भार्यापहरणं, कर्म रावण इति कर्तृहेत्वोर्भेदात् । ततश्च नायं हन्तीति वाक्येनात्मनो हननकर्तृत्वमेव निषिध्यते, नतु हननहेतुत्वं- कर्तरि तिब्विधानादिति कृत्वा कथं रामानुजेनाऽऽत्मनो हननहेतुत्वं निषिद्धं नायं हन्तीति वाक्येन ।

यदप्युक्तमत्र प्रत्ययस्य हेतुमात्रविवक्षेति वेदान्तदेशिकेन, तदप्ययुक्तम्—व्यासस्य तादृशविवक्षाऽस्तीति कल्पने प्रमाणाभावात्, प्रसिद्धकर्त्रर्थपरित्यागे कारणाभावाच्च । नहि यः कोऽपि मूढ आत्मानं हननहेतुं मन्यते । किंतु हननकर्तारमेव- रिपुं हतवानहमिति । तत्र हेतुं तु धनराज्यादिकमेव मन्यते । ततश्च नाम्ना हननहेतुरित्युपदेशोऽपि व्यर्थः । नचात्मार्थं रिपून् हन्तीति प्रयोगादात्मनोऽस्ति हेतुत्वमिति वाच्यं, तत्र आत्मार्थमित्यस्यात्मसुखादिलाभार्थमित्यर्थात् । अन्यथा हन्तीति हननक्रियाश्रये आत्मनि हननहेतुत्वस्यासम्भवात् । आत्मार्थे पृथिवीं त्यजेदित्यादौ यथा कथंचित्फलस्वरूपहेतुत्वमात्मनो भवतु नाम कारणस्वरूपहेतुत्वं तु क्वापि न सम्भवेत् । त्वया तु हननहेतुर्नेति हननकारणत्वमेव प्रतिषिध्यते । सचायुक्तः- निषेधस्य प्रसक्तिपूर्वकत्वादात्मनि च कर्तरि हेतुत्वाप्रसक्तेः । नचात्माना पुत्रमुत्पादयतीत्यस्ति हेतुत्वमात्मन इति वाच्यं, तत्रात्मशब्दस्य देहार्थकत्वात् । तृतीयायाश्च करणे विहितत्वात् ।

किंच 'हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हत'मिति कठवलीवाक्यमिहान्वितमिति त्वयाप्युक्तं- तत्र हन्ता चेदित्यस्य किं हननकर्ता चेदित्यर्थः ? उत हननहेतुश्चेदिति ? न द्वितीयः- हननहेतोर्हननाकर्तृत्वेन हननबुद्ध्युदयप्रसङ्गासम्भवात् । हन्तुं मन्यत इति हननबुद्धिरुच्यते हि- सा च हननबुद्धिर्हननकर्तुरेवोचिता हन्यामहमिममिति । अतः प्रथमः परिशिष्यते योऽर्थो मूलभूतश्रुतिगतहन्तृशब्दस्य

न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ।
अजो नित्यश्शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥२०॥

कथमिवाविक्रिय आत्मेति द्वितीयो मन्त्रः—नेति । न जायते नोत्पद्यते- जनिलक्षणा वस्तुविक्रिया नात्मनो विद्यत इत्यर्थः । तथा अयमात्मा न म्रियते वा- वाशब्दश्चार्थे । न म्रियते चेत्यन्त्यविनाशलक्षणा विक्रिया प्रतिषिध्यते । कदाचिच्छब्दस्सर्वविक्रियाप्रतिषेधैस्सम्बध्यते- न कदाचिज्जायते, न कदाचिन्म्रियते इत्येवम् । यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चादभविता अभावं गन्ता न भूयः पुनः तस्मान्न म्रियते- यो हि भूत्वा न भवति स म्रियत

---

स एव गीताश्लोकगतहन्तृशब्दस्यापि वक्तव्यः न त्वन्यः- तस्यैवेहोपनिबद्धत्वात् । तस्माद्धन्तेत्यस्य हननहेतुरित्यर्थः श्रुतिविरुद्धश्च ।

'लः कर्मणि च भावे चाकर्मकेभ्य' इति पाणिन्यनुशासनविरुद्धश्च- लादेशानां तिबादीनां कर्तरि कर्मणि भावे च शक्तिरिति तदर्थात् हेत्वर्थे तिबविधानात् कर्तरि तृन्तृचोर्विहितत्वेन हेतौ तदविधानाच्च । आख्यातस्याश्रयत्वमर्थ इति व्युत्पत्तिवादविरुद्धश्च । नहि हेतुत्वमाख्यातस्यार्थ इति तत्रोक्तम् । उपदेशवैयर्थ्यादिना दुष्टश्चेति तुच्छं रामानुजभाष्यं तदनुसारिवेदान्तदेशिकतात्पर्यचन्द्रिका च ॥१९॥

कथमिव कथं वा केन प्रकारेणेत्यर्थः । आत्मा अविक्रिय इति शङ्कायां न जायत इति द्वितीयमन्त्र उपन्यस्तो भगवना—अयमात्मा कदाचिदपि न जायते, कदाचिदपि न म्रियते, कदाचिदपि भूत्वा भूयो नाभविता, कदाचिदपि न भूत्वा भविता च न, शरीरे हन्यमानेऽपि कदाचिदपि न हन्यते । तस्मादयमजो नित्यश्शाश्वतः पुराणश्च भवतीत्यन्वयः । भूत्वा अभविता भूत्वा भवितेति च द्वेधा पदविभागः । जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीति च षड्भावविकारा - यथा देहो जायते, जन्मानन्तरं देहोऽस्तीति सत्तां प्रतिपद्यते, तत प्रवृद्धो भवति, ततो विपरिणामं वलिपलितत्वादिकं भजते, ततोऽपक्षीयते कार्श्यं प्रपद्यते, ततो नश्यत्यदर्शनं प्रपद्यते । इतीमे विकारा आत्मनि न सन्तीत्यविक्रिय आत्मेति फलितार्थः ।

तत्र न जायत इत्यनेन जन्मलक्षणः प्रथमो विकार आत्मनि निषिध्यत इत्याह—न जायत इति । न म्रियते न नश्यतीति हृदि कृत्वाह—अन्त्येति । विनाशोऽन्त्यष्षष्ठो विकारः । ननु कस्मादात्मा न म्रियते अत आह—यस्मादिति । यस्मादयमात्मा भूत्वा भवनक्रियामनुभूय पश्चाद्भूयः पुनः अभविता अभावं गन्ता न तस्मान्न म्रियत इत्यन्वयः । भवनक्रियामनुभूय जनिक्रियाश्रयत्वं प्रपद्येत्यर्थः । जातस्सन्निति यावत् । अभावं नाशं न गन्ता न प्राप्स्यति । उक्तमर्थं व्यतिरेकमुखेन द्रढयति- यो हि यो देहादिः पदार्थः भूत्वा न भवति नाशं प्रपद्यते स म्रियत इत्युच्यते लोके । जनैरिति शेषः । शशशृङ्गादिवारणार्थं भूत्वेति । शशशृङ्गगगनकुसुमादीन्यभूत्वैवादर्शनं प्रपद्यन्त इति न तेषां मृतत्वव्यवहार इति भावः ।

ननु न जायते म्रियते वा कदाचिदिति प्रथमपादे श्रूयमाणस्यैकस्यैव नञः जायते म्रियते इति

इत्युच्यते लोके । वाशब्दान्नशब्दाच्च अयमात्मा अभूत्वा भविता च न देहवत् भूयः पुनः तस्मान्न जायते यो ह्यभूत्वा भविता स जायत इत्युच्यते नैवमात्मा अतो न जायते- यस्मादेव तस्मादजः, यस्मान्न म्रियते तस्मान्नित्यश्च । यद्यप्याद्यन्तयोर्विक्रिययोः प्रतिषेधेन सर्वा विक्रियाः प्रतिषिद्धा भवन्ति- तथापि मध्यभाविनीनां विक्रियाणां शब्दैरेव प्रतिषेधो वक्तव्य इत्यनुक्तानामपि यौवनादिसमस्तविक्रियाणां प्रतिषेधो यथा स्यादित्याह—शाश्वत इति ।

शाश्वत इत्यपक्षयलक्षणा विक्रिया प्रतिषिध्यते शश्वद्भवश्शाश्वतः नापक्षीयते स्वरूपेण निरवयवत्वात् । निर्गुणत्वाच्च नापि गुणक्षयेण । अपक्षयविपरीता वृद्धिलक्षणा विक्रिया प्रतिषिध्यते—पुराण इति । यो ह्यवयवागमेनोपचीयते स वर्धते, अभिनव इति चोच्यते,

---

क्रियाद्वयेऽन्वयात् नायं भूत्वा भविता भूय इत्यनेन द्वितीयपादस्य विवक्षितार्थसिद्धेश्च द्वितीयपादगतौ व न भूय इत्यत्र वानशब्दौ व्यर्थाविति शङ्कायामाह—वा शब्दान्न शब्दाचेति । अयमात्मा अभूत्वा भूय पुनर्भविता च नेत्यन्वय । तत्र व्यतिरेकदृष्टान्तमाह—देहवदिति । यथा देह उत्पत्तेः प्रागभूत्वा अविद्यमानस्सन्नित्यर्थ । पश्चाद्भविता भाव सत्ता प्रपत्स्यते तद्वदित्यर्थ । फलितमाह—तस्मादिति । यस्मादभूत्वा न भविता तस्मादित्यर्थ । प्रागभावाभावादिति यावत् । उक्तमर्थं व्यतिरेकेण द्रढयति—यो हीति । यो घटादि पदार्थ अभूत्वा प्रागभाव प्रपद्य भविता उत्पत्स्यते स जायते इत्युच्यते । लोकैरिति शेष । प्रकृतमाह—नैवमिति । एवं घटादिवदात्मा प्रागभावं प्रपद्य न भविता अत आत्मा न जायते, तत किमत आह—यस्मादिति । यस्मादेवं न जायते तस्मादज आत्मा न जायत इत्यज इति व्युत्पत्तेरिति भाव । एव मूलस्थमजपद व्याख्याय नित्यपद व्याचष्टे—यस्मादिति । लोके मृतिशालिन एव वस्तुन अनित्यत्वव्यवहारादिति भाव ।

यद्यपीति। विचार्यमाणे सतीत्यर्थ । आद्यन्तयोरिति । जन्मनाशयोरित्यर्थ । सर्व इति । सर्वासामस्तित्वादिविक्रियाणा जनिपूर्वकत्वान्नाशफलकत्वाच्चेति भाव । शब्दैरेवेति नतु व्यङ्ग्यमर्यादयेत्येवकारार्थ । आर्थिकादपि निषेधान्निषेधसिद्धे शाब्दो निषेधो व्यर्थ इत्याशंक्यार्थांतरमाह—अनुक्तानामपीति ।

ननु मध्यभाविविक्रियामध्ये का विक्रिया शाश्वतपदेन प्रतिषिध्यत इत्यत्राह—अपक्षयलक्षणेति । कथमित्यतरत शब्द निर्वक्ति—शश्वद्भव इति । शश्वत्सर्वदैकरूपेण भवति विद्यत इति शाश्वत इति फलितार्थमाह—नापक्षीयत इति । लोके द्विविधोऽपक्षय स्वरूपकृतो गुणकृतश्च- यथा देहस्य वार्धक्ये स्वरूपकृत , यथा चित्रपटस्य नीलपीतादिगुणक्षयकृत । स द्विविधोऽप्यात्मनि नास्तीति सहेतुकमाह—स्वरूपेणेति । निरवयवत्वात्स्वरूपेण नापक्षीयते । निर्गुणत्वाच्च गुणक्षयेण नाप्यपक्षीयते । आत्मेति कर्तृदशेष , अयमिति वा- पुराणपदमवतारयति—अपक्षयेति । अपक्षयविपरीता वृद्धिलक्षणा विक्रिया पुराण इति पदेन प्रतिषिध्यत इत्यन्वय । कथ तत्राह—यो हीति । अवयवागमेन विद्यमानेभ्योऽवयवेभ्योऽन्येषामवयवाना मायिकानामागमेन हेतुना य उपचीयते स वर्धते- अभिनव इति चोच्यते लोकैरिति शेष । नच वर्धत इत्येवोच्यते न त्वभिनव इति वाच्यं, देवदत्त बाल्ये दृष्टं यज्ञदत्त

अय त्वात्मा निरवयवत्वात् पुरापि नव एवेति पुराणः न वर्धत इत्यर्थः ।

तथा न हन्यते न विपरिणम्यते हन्यमाने विपरिणम्यमाने शरीरे । हन्तिरत्र विपरिणामार्थे द्रष्टव्योऽपुनरुक्ततायै । न विपरिणमत इत्यर्थः । अस्मिन् मन्त्रे षड्भावविकारा वस्तुविक्रिया लौकिका आत्मनि प्रतिषिध्यन्ते- सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य सम्बन्धः ॥२०॥

वेदाऽविनाशिनं नित्यं य एनमजमव्ययम् ।
कथं स पुरुषः पार्थ ! कं घातयति हन्ति कम् ॥२१॥

य एनं वेत्ति हन्तारमित्यनेन मन्त्रेण हननक्रियायाः कर्ता कर्म च न भवतीति प्रतिज्ञाय, न जायत इत्यनेन अविक्रियत्वे हेतुमुक्त्वा, प्रतिज्ञातार्थमुपसहरति—वेदेति । वेद विजानाति अविनाशिनमन्त्यभावविकाररहित नित्यं विपरिणामरहितं यो वेदेति सम्बन्धः ।

---

तारुण्ये दृष्ट्वा कोऽयमभिनव इव भातीति प्रत्येतीति लोकप्रसिद्धे । पुराणपद व्याचष्टे—पुरापि नव एवेति । यथेदानीं तथा पूवमप्यभिनव एवात्मा ततश्च पूर्वापेक्षयेदानीं नवत्वाभावान्नास्य वृद्धिरिति भाव । तत्र हेतुमाह—निरवयवत्वादिति । निरवयवस्यात्मन अवयवान्तरागमनप्रयुक्तवृद्धिर्न कथमपि स्यादिति भाव ।

एवं श्लोकस्य पादत्रयं व्याख्याय तुरीय पादं व्याचष्टे—न हन्यत इति । हन्यत इत्यस्य म्रियत इत्यर्थवचनेन म्रियत इत्यनेन पुनरुक्तिस्स्यादिति तद्दोषवारणार्थमाह—न हन्यते न विपरिणम्यत इति । धातूनामनेकार्थत्वादिति भाव । हन्तिरिति इक् श्तिपौ धातुनिर्देशाविति कात्यायन स्मरणात् श्तिपा निर्देश । हन्तिरि ति हनधातुरित्यर्थ । अपुनरुक्ततायै पुनरुक्तिदोषाभावायेत्यर्थ । नात्र यक कर्मविवक्षा फलाभावात्प्रकृतासाङ्गत्याच्चेत्याह—विपरिणमत इत्यर्थ इति । कर्तैवात्र यगार्पत्वादिति भाव । सर्वं सङ्कल्य्याह—अस्मिन्मन्त्र इति । ननु न जायते न म्रियते शाश्वत पुराण न हन्यत इति जन्मनाशापक्षयवृद्धिविपरिणामा पञ्चैव विकारा प्रतिषिद्धा, न त्वस्तित्वमिति कथ षड्भावविकारप्रतिषेध इतिचेत्, मैवम्—अय भूत्वा नाभवितेत्यनेन तस्य प्रतिषिद्धत्वात् । भूत्वेत्यस्य भवनेनात्मनस्सत्ता सम्पाद्येत्यर्थात् । अथवा अभूत्वा न भवितेत्यनेन तत्प्रतिषेध - पूर्वमभूत्वा पश्चाद्भवनेनात्मनस्सत्ता न गन्तेत्यर्थात् । षड्भावविकारा वस्तुविक्रिया इत्यस्य षड्भावविकारा इति लोके प्रसिद्धा वस्तुविक्रिया इत्यर्थ । यस्मादेवमिति । यस्मादेवमविक्रिय आत्मेत्यर्थ ॥२०॥

य एनमित्यादिना वेदाविनाशिनमिति श्लोकमवतारयति न भवतीत्यस्य आत्मेति कर्तुश्शेष । य एनमजमव्ययमविनाशिन नित्य वेद हेपार्थ स पुरुष कथं कं घातयति, कं हन्तीत्यन्वय । अविनाशिनित्यशब्दयो पौनरुक्त्य वारयति—अन्त्यभावविकारेति । अन्त्यो यो भावविकार वस्तुविक्रिया नाश इत्यर्थ । तेन रहितं नाशविपरिणामरूपविकारद्वयवारणार्थं पदद्वयमित्यर्थ । उपजनो जन्म । अजाविनाशिनित्याव्ययशब्दैर्नाशविपरिणामजन्मापक्षयरूपाश्चत्वारो विकारा प्रतिषिद्धा । द्योतयन्ति

एनं पूर्वेण मन्त्रेणोक्तलक्षणमजमव्ययमुपजनापक्षयरहितं कथं केन प्रकारेण स विद्वान् पुरुषोऽधिकृतः- कं हन्ति हननक्रियां करोति- कं वा कथं घातयति हन्तारं प्रयोजयति न कश्चिद्धन्ति, न कश्चिद्धातयतीत्युभयत्राक्षेपार्थ एव किंशब्दः । प्रश्नासम्भवाद्धेत्वर्थस्य च तुल्यत्वाद्विदुषः सर्वकर्मप्रतिषेध एव प्रकरणार्थोऽभिप्रेतो भगवता हन्तेस्त्वाक्षेप उदाहरणार्थत्वेन कथितः । विदुषः सर्वकर्मासम्भवे- कं हेतुविशेषं पश्यन् कर्माण्याक्षिपति श्रीभगवान्-- कथं स पुरुष इति । ननूक्तमात्मनोऽविक्रियत्वं कर्मासम्भवकारणविशेषः सत्यमुक्तं- नतु सकारणविशेषोऽन्यत्वाद्विदुषोऽविक्रियादात्मन इति- न ह्यविक्रियं स्थाणुं विदितवतः कर्म न सम्भवतीतिचेन्न, विदुष आत्मत्वान्न देहादिसन्घातस्य विद्वत्ता, अतः पारिशेष्यादसंहत आत्मा विद्वानविक्रिय

---

श्चामी अस्तित्ववृद्धिविकारद्वयप्रतिषेधमपि जन्मपूर्वकत्वादस्तित्वस्य क्षयफलकत्वाद्वृद्धेर्वृद्धिं विना क्षयायोगात् । **अधिकृत इति** । ज्ञाने इति शेषः । हन्तीत्यत्र प्रकृतिप्रत्ययार्थावाह—**हननेति** । हनधातोर्हननक्रियार्थः । तदुत्तरवर्तितिप्प्रत्ययस्य कर्तृत्वमर्थः । कं हन्तीत्यस्य किं कर्मकहननक्रियाश्रय इत्यर्थ । घातयतीति हन्तेर्हेतुमति णिच् । घ्नन्तं प्रेरयति घातयति इदमेवाह—**हन्तारं प्रयोजयतीति** । कं घातयति हन्ति कमित्यस्य फलितार्थमाह—**न कश्चिदिति** । कथमेतदर्थलाभ इत्यत्राह—**उभयत्रापीति** । ननु किंशब्दस्य प्रश्नार्थत्वं हेत्वर्थत्वं वा अस्तु, किमित्याक्षेपार्थत्वमत आह—**प्रश्नेति** । आत्मविदः यत्किञ्चित्प्राणिकर्मकहननाश्रयत्वाभावात्प्रश्नासम्भव । हेत्वर्थस्य प्रश्नार्थेन तुल्यत्वादसम्भव । केन हेतुना हन्तीत्यस्य हेतुविषयकप्रश्नवाचित्वाद्वाक्यस्येति भावः । नन्वात्मविदो हननक्रियाश्रयत्वं मास्तुनाम, तदतिरिक्तस्तुतिनिन्दादिक्रियाश्रयत्वमस्ति किमित्यत आह—**विदुषस्सर्वकर्मप्रतिषेध इति** ।

विदुषस्सर्वकर्मासम्भवे को हेतुर्भगवताऽभिमेत इति पृच्छति—**विदुष इति** । पश्यन् जानन्नित्यर्थः । उत्तरयति—**ननूक्तमिति** । आत्मन. कर्मासम्भवकारणविशेष· अविक्रियत्वमुक्तम् । ननूक्तं खलु- [illegible] एनमिति श्लोकेनेति भावः । तत्र शङ्कते—**सत्यमित्यादिना** । सत्यमविक्रियत्वमुक्तं, [illegible] किंतु सः विधेयप्राधान्यात्पुंस्त्वम्- अविक्रियत्वरूपः कारणविशेष न विदुषो नास्ति । तत्र हेतुमाह—**अन्यत्वादिति** । अविक्रियादात्मन इति निर्धारणे पञ्चमी । विदुष. अन्यत्वाद्भिन्नत्वात् अविक्रियत्वमात्मन उक्तं नतु विदुषः- विद्वांस्तु भिन्न एवात्मन इति कृत्वा कथं विदुषस्सर्वकर्मासम्भवे आत्मगतमविक्रियत्वं हेतुस्स्यान्न कथमपीत्यर्थः । तदेव प्रपञ्चयति—**नहीति** । अविक्रियात्मतत्त्वविदः पुरुषस्य यदि कर्मासम्भवस्तर्हि अविक्रियस्थाणुविदोऽपि कर्मासम्भव एवेत्यर्थः । परिहरति—**नेति** । हेतुमाह—**विदुष आत्मत्वादिति** । य आत्मानं वेत्ति स विद्वानात्मैव य. स्थाणुं वेत्ति न स स्थाणु. अतो न दृष्टान्तदार्ष्टान्तिकयोस्साम्यमिति भाव. । ननु देहादिसङ्घातस्यास्तु विद्वत्तेत्यत आह—**नेति** । देहादिसमूहस्य जडत्वान्न विद्वत्तेति भाव. । फलितमाह—**अत इति** । देहादिसङ्घातस्य विद्वत्ताऽसम्भवादित्यर्थः । **पारिशेष्यादिति** । उक्तातिरिक्तश्शेष. । स एव परिशेष. तस्य भाव· पारिशेष्यं तस्मात् आत्मानात्मानौ द्वावेव लोके पदार्थौ । तत्रानात्मनोऽविद्वत्तायां सिद्धायामात्मैव परिशिष्ट इति पारिशेष्या-

इति। तस्य विदुषः कर्मासम्भवादाक्षेपो युक्तः- कथं स पुरुष इति। यथा बुद्ध्याद्याहृतस्य शब्दाद्यर्थस्य अविक्रिय एव सन्बुद्धिवृत्त्यविवेकविज्ञानेनाविद्ययोपलब्धाऽऽत्मा कल्प्यते- एवमेवात्मानात्मविवेकविज्ञानेन बुद्धिवृत्त्या विद्यया असत्यरूपयैव परमार्थतोऽविक्रिय एवात्मा विद्वानुच्यते। विदुषः कर्मासम्भववचनात् यानि कर्माणि शास्त्रेण विधीयन्ते- तान्यविदुषो विहितानीति भगवतो निश्चयोऽवगम्यते। ननु विद्याप्यविदुष एव विधीयते- विदितविद्यस्य पिष्टपेषणवत् विद्याविधानानर्थक्यात्तत्राविदुषः कर्माणि यानि शास्त्रेण विधीयन्ते

---

दात्मैव विद्वानित्यर्थः। असंहत इति एकत्वादसङ्गत्वाच्चान्यैरमिलित इत्यर्थः। तस्य विदुष इति आत्मनो विदुष इत्यर्थः। आक्षेपस्वरूपमाह—कथं स पुरुष इति। कथं स पुरुषः पार्थ कं घातयति हन्ति कमितीत्यर्थः।

ननु अविक्रिये आत्मनि विद्वत्तारूपस्य विकारस्य कथं सङ्गतिरत आह— यथेति। शब्दाद्यर्थस्य शब्दस्पर्शरूपरसगन्धात्मकविषयपञ्चकस्य तदाश्रयघटादिद्रव्यस्य च बुद्ध्याद्याहृतस्य इन्द्रियसहकृतान्तःकरणेन गृहीतस्य सतः चक्षुरादीन्द्रियद्वारा निर्गतान्तःकरणवृत्तौ घटादिविषयाकारेण परिणम्य घटोऽयमित्यादिविषयज्ञानं जनयन्त्या सत्यामित्यर्थः। अविक्रिय एव सन्नात्मा बुद्धिवृत्त्यविवेकविज्ञानेन बुद्धिवृत्तेरात्मनश्च तादात्म्याध्यासप्रयुक्तेन विवेकज्ञानाभावेन हेतुना अविद्यया उपलब्धा प्रमाता कल्प्यते, अविद्यया यद्बुद्धिवृत्त्यविवेकविज्ञानं तेनेति वाऽन्वयः। अस्मिन्मते कल्प्यत इत्यस्य लोकैरिति कर्तृलोपः। काकाक्षिन्यायेनाविद्यया कल्प्यत इत्येव वा। अविक्रियस्याप्यात्मन अविद्याकृताद्विषयाकारपरिणतबुद्धिवृत्तितादात्म्याध्यासाद्यथा प्रमातृत्वव्यवहारः कल्पित इति पर्यवसन्नार्थः। एवमेव असत्यरूपया अविद्यामयत्वादिति भावः। आत्मानात्मविवेकविज्ञानेन अहं ब्रह्मास्मीत्यादिरूपेणेत्यर्थः। बुद्धिवृत्त्या विद्यया तत्तादात्म्याध्यासादित्यर्थः। परमार्थतोऽविक्रिय एवात्मा विद्वानित्युच्यते। महावाक्यार्थजन्याहंब्रह्मास्मीत्याद्याकारकबुद्धिवृत्तितादात्म्याध्यासादविक्रियस्याप्यात्मनस्तथा विद्वत्त्वव्यवहारः कल्पित इति परमार्थः। अहं ब्रह्मेत्याद्याकारकबुद्धिवृत्तेर्विद्यारूपत्वात्तत्तादात्म्याध्यासेनात्मन भाति विद्वत्त्वं- यथा विषयग्राहिबुद्धिवृत्तितादात्म्याध्यासाद्विषयग्राहित्वलक्षणं प्रमातृत्वं तद्वत्। अनेन चाध्यासिकेन बुद्धिवृत्तिसम्बन्धेन न कोप्यात्मनोऽस्ति विकार इति भावः।

ननु विदुषस्सर्वकर्मासम्भवे ज्योतिष्टोमेन यजेतेत्यादिविधीनां का गतिरित्यत आह—विदुष इत्यादि। ननु कर्माण्येवाविदुषो विहितानीति कोऽयं नियमः- आत्माऽवारे द्रष्टव्य इत्यादिना विद्याप्यविदुष एव विधीयत इति पृच्छति कश्चित्—नन्वित्यादिना—तत्रेति। एवं सतीत्यर्थः। यानि कर्माणि शास्त्रेण विधीयन्ते तान्यविदुष एव, नतु विदुष इति विशेषो नियमो नोपपद्यते इत्यन्वयः। या तु विद्या शास्त्रेण विहिता सा विदुष एवेति नियमासिद्धेरिति भावः। यदि विद्या विदुष एव विहितेति नियमस्सिध्येत्तर्हि कर्माण्यविदुष एवेति नियमस्सिध्यतु, नतु तदस्तीति तत्त्वम्। नच विद्याकर्मद्वयमप्यविदुष एव विहितं नतु विदुषः कोपि विधिरिति वाच्यं, ज्ञानयोगेन साङ्ख्यानामिति विदुषो

न विदुष इति विशेषो नोपपद्यते- नानुष्ठेयस्य भावाभावविशेषोपपत्तेः ।

अग्निहोत्रादिविध्यर्थविज्ञानोत्तरकालमग्निहोत्रादिकर्मानेकसाधनोपसंहारपूर्वकमनुष्ठेयं-- कर्ताहं मम कर्तव्यमित्येवंप्रकारविज्ञानवतोऽविदुषो यथाऽनुष्ठेयं भवति नतु तथा न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किञ्चिदनुष्ठेयं भवति- नाहं कर्ता नाहं भोक्तेत्यादि-नात्मैकत्वाकर्तृत्वज्ञानान्नान्यदुत्पद्यत इत्येष विशेष उपपद्यते ।

यः पुनः कर्ताहमिति वेत्त्यात्मानं तस्य ममेदं कर्तव्यमित्यवश्यम्भाविन्यनुष्ठेयबुद्धि-

---

विद्याविधेर्वक्ष्यमाणत्वात् । परिहरति—नेति । अनुष्ठेयस्य भावाभावाभ्यामविदुषः कर्माणि नतु विदुष इति विशेषस्योपपत्तेरित्यर्थः ।

तदेव प्रपञ्चयति—अग्निहोत्रेति । अग्निहोत्रादिविधिवाक्यार्थज्ञानानन्तरमनेकसाधनोपसंहार-पूर्वकमग्निहोत्रादि कर्मानुष्ठेयं- साधनान्युपकरणानि । उपसंहारः सम्पादनम् । कस्यानुष्ठेयमत आह— कर्तेति । अहं कर्ता ममेदं कर्तव्यमित्येवंप्रकारकं विज्ञानं यस्यास्ति तस्याविदुषः- यथा अविदुषः कर्मानुष्ठेयं भवति तथा विदुष इति शेषः । न जायत इत्याद्यात्मस्वरूपविध्यर्थज्ञानोत्तरकालभावि किञ्चि-दनुष्ठेयं कर्म न भवतीत्यन्वयः । आत्मस्वरूपप्रतिपादकवाक्यार्थं इहात्मस्वरूपविध्यर्थ इत्युक्तः । नह्यात्म-स्वरूपे कश्चिद्विधिरस्ति । यद्वा आत्मा वाऽरे द्रष्टव्यश्श्रोतव्य इत्यादय आत्मस्वरूपविधयः । न जायत इत्यादिनोक्तं यदात्मस्वरूपं तस्य विधयः श्रोतव्य इत्यादयः । तदर्थज्ञानोत्तरकालभावीत्यर्थः । नाहं कर्ता नाहं भोक्तेत्यादिना शास्त्रेण आत्मैकत्वाकर्तृत्वज्ञानादन्यन्नोत्पद्यते । नाहं कर्ता नाहं भोक्तेत्यादिशास्त्र-मात्मन एकत्वमकर्तृत्वं न बोधयति- न त्वन्यदित्यर्थः । एष विशेष इति । कर्ताहं ममेदं कर्तव्यमिति विज्ञानवतो विदुषश्शास्त्रेण 'वसन्ते वसन्ते ज्योतिषा यजे'तेत्यादिना कर्माणि वहितानि, विदुषस्तु कामः कर्ता नाहं कर्तेत्यादिना शास्त्रेण आत्मैकत्वाकर्तृत्वज्ञानमात्रमुत्पन्नमित्ययं विशेष उपपद्यत इत्यर्थः । एतेन विदितविद्यस्य पिष्टपेषणवद्विद्याविधानानर्थक्यमिति प्रश्नो दत्तोत्तर.— विद्याविधानाभावात् । ननु विदुषः नाहं कर्तेत्यादिना आत्मैकत्वाकर्तृत्वज्ञानमात्रमुत्पन्नमितीदमयुक्तं- तद्ज्ञानोत्पत्तेः प्राक्तस्य विद्व-त्ताया एवाभावादिति चेत्सत्यम्—अत एवात्मा कर्तृत्वज्ञानान्नान्यदुत्पद्यत इत्युक्तं- तद्ज्ञानं तु प्रागेव सिद्धमिति । नच तर्हि विद्या व्यर्थेति वाच्यं, आत्मविदः कर्मसु नाधिकारः- किंतु स्वस्वरूपदर्शन एवे-त्येतदर्थं विद्याया आवश्यकत्वात् । वस्तुतस्तु विद्यानामात्मानात्मविवेकज्ञानं 'अहमात्मा देहादिरय-मनात्मा' इत्येवं प्रकारकं विवेकविज्ञानमेव विद्या- अस्यां हि कर्ताहमित्यविद्वान्नाधिक्रियते विरोधात् । किंतु- न जायत इत्याद्यात्मस्वरूपे विद्वानेवाधिक्रियते- आत्मानात्मस्वरूपज्ञानपूर्वकत्वादात्मानात्मविवेक-विज्ञानस्य । तस्मादात्मानात्मस्वरूपज्ञानिन एव विदुषः आत्मानात्मविवेकविज्ञानरूपविद्यायामधिकार इति न पिष्टपेषणात्मकदोष इति ।

अविदुष एव कर्मस्वधिकार इतीममर्थं प्रपञ्चयति—यः पुनरिति । यः पुनः यस्तु आत्मानं कर्ताहमिति वेत्ति जानाति अवश्यम्भवतीत्यवश्यम्भावि तस्मिन् यज्ञादिकर्मणीत्यर्थः । अनुष्ठेयमिति

स्यात् तदपेक्षया सोऽधिकृत इति त प्रति कर्माणि स चाविद्वान् उभौ तौ न विजानीत इति वचनात् विशेषितस्यच विदुषः कर्माक्षेपवचनाच्च कथ स पुरुष इति- तस्माद्विदुषो मुमुक्षोश्च सर्वकर्मसन्न्यास एवाधिकारः ।

अत एव भगवान्नारायणस्साङ्ख्यान् विदुषः अविदुषश्च कर्मिणः प्रविभज्य द्वे निष्ठे ग्राहयति—'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति । तथा च पुत्रायाह भगवान् व्यासः—'द्वाविमावथ पन्थाना'वित्यादि । तथाच क्रियापथश्चैव पुरस्तात् पश्चात्सन्न्यासश्चेति । एतमेव विभाग पुनःप्रदर्शयिष्यति भगवान् अतत्त्ववित् अहङ्कारविमूढात्मा कर्ताहमिति मन्यते, तत्त्ववित्तु नाह करोमीति । तथा च सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखमित्यादि । तत्र केचित् पण्डितम्मन्या वदन्ति—जन्मादिभावविकाररहितः अविक्रियोऽकर्ताकोहमात्मेति न कस्यचिद्विज्ञानमुत्पद्यते यस्मिन्सति सर्वकर्मसन्न्यास उपपद्यत इति ।

---

बुद्धिरनुष्ठेयबुद्धि तदपेक्षया तद्बुद्ध्यपेक्षया अधिकृत इति । कर्मस्विति शेष । कर्माणीति विहितानीति शेष । विशेषितस्येति । अविक्रियात्मज्ञानवत इत्यर्थ । वेदाविनाशिन नित्यमिति विविच्य दर्शितस्येति यावत् । कथ स पुरुष इति कर्माक्षेपवचनाचेत्यन्वय । उपसहरति तस्मादिति । अविक्रियात्मस्वरूप विदुषस्सर्वकर्मासम्भवादित्यर्थ । विदुषोपि प्रारब्धवशाल्लोकानुग्रहार्थं वा कर्मसु प्रवृत्तिम्याज्जनकवद्वासुदेववश्चेत्याशङ्क्याह—मुमुक्षोश्चेति । मुक्तत्वाज्जनकादीना न कुत्राप्यधिकार इति भाव । अथवा अविदुषोपि मुमुक्षोस्सन्न्यास एवाधिकार विद्वत्सन्न्यासो विविदिषासन्न्यासश्चेति सन्न्यासद्वयदर्शनात् । गृहस्थस्य कर्मसु प्रवृत्तस्य दारापत्यादिकुटुम्बपोषणालसस्य वेदान्तश्रवणमनना-द्यसम्भवात् त विना आत्मज्ञानालाभाच्चात्मान । जिज्ञासु पुरुष ससाराद्भीत तीव्रमुमुक्षु सद्य एव प्रव्रजेत् 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुते इतीममर्थं दर्शयितु मुमुक्षोश्चेत्युक्तम् । एतेनाविदुषो प्यमुमुक्षोरेव कर्मस्वधिकार इति सिद्धम् । स्वोक्तार्थे भगवन्त वासुदेवमेव प्रमाणयति—अत एव भगवानिति । अत एव विदुषा ज्ञाने अविदुषा कर्मणि चाधिकारसत्त्वादेवेत्यर्थ । विदुष कर्मण्यधिकाराभावादेवेति वा । प्रदर्शयिष्यतीति । तृतीयाध्याये 'प्रकृते क्रियमाणानि गुणै कर्माणि सर्वश । अहङ्कारविमूढात्मा कर्ताहमितिमन्यते ॥ तत्त्ववित्तु महाबाहो गुणकर्मविभागयो । गुणागुणेषु वर्तन्त इति मत्वा न सज्जते ॥' इति श्लोकद्वयेनेति भाव । तत्र हि तत्त्ववित्त्विति तुशब्दात्प्रकृतेरिति श्लोकोऽतत्त्वविद्विषय अहङ्कारविमूढात्मा कर्ताहमिति मन्यत इत्यनेन तत्त्वविन्नाहङ्करोमीति मन्यत इति सिद्धम् । तदेवाह—अतत्त्वविदित्यादिना । तथा पञ्चमाध्याये 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी । नवद्वारे पुरे देहे नैव कुर्वन्न कारय'न्निति वक्ष्यतीत्याह—तथाचेति ।

तत्रेति । विदुषो नास्ति कर्माधिकार इत्यत्रेत्यर्थ । पण्डितमात्मानं मन्यन्ते पण्डितम्मन्या लोका एतान् पण्डितान् मन्यन्ते किंतु स्वस्मैव स्वानित्यर्थ । अपण्डिता इति यावत् ।

तन्न, न जायत इत्यादिशास्त्रोपदेशानर्थक्यात् । यथा च शास्त्रोपदेशसामर्थ्याद्धर्माधर्मास्तित्वविज्ञानं कर्तुश्च देहान्तरसम्बन्धविज्ञानमुत्पद्यते- तथा शास्त्रात्तस्यैवात्मनः अविक्रियत्वाकर्तृत्वैकत्वादिविज्ञानं कस्मान्नोत्पद्यत इति प्रष्टव्यास्ते । करणागोचरत्वादिति चेत् न,

न जायत इति । यदि न जायत इत्यादिना शास्त्रेण अविक्रिय अस्यैक इति ज्ञानं श्रोतुर्नोत्पद्यते तर्हि किमर्थं तच्छास्त्रम् । ननु सन्न्यासात्माग्वेदान्तशास्त्रश्रवणे नास्त्यधिकारः- 'शान्तो दान्त उपरत' इति श्रुतिगतोपरतशब्दस्य सन्न्यासार्थवचनात् । गीताशास्त्रं च वेदान्तशास्त्रमेव- भगवद्गीतासूपनिषत्स्वित्युक्तत्वात्- न जायत इत्यादिना विदितात्मतत्त्वस्यैव सर्वकर्मसन्न्यासाधिकारं ब्रूते भगवान्- अतः परस्पराश्रयदोषः- सन्न्यासे सति न जायत इति शास्त्रोपदेशः- न जायत इति शास्त्रोपदेशेऽसति सन्न्यास इतिचेत्, मैवम्—गृहस्थानामपि- जनकादीनां वेदान्तश्रवणदर्शनात् । श्रुतिस्तु वेदान्तश्रवणे सन्न्यासिनां मुख्याधिकारं ब्रूते । तेनाश्रमान्तराणामस्ति गौणोऽधिकारः । यद्वा सन्न्यासिनां वेदान्तश्रवणादिष्वेवाधिकारो न त्वन्यत्रेति नियमार्थमुपरतपदम् । अथवा उपरतिर्न सन्न्यासः- किंतु चित्तविक्षेपाभावः सहि गृहस्थस्याप्युपपद्यते जनकवत् । वस्तुतस्तु अधीतसाङ्गस्वाध्यायस्य शमदमादिसंस्कृतस्य वेदान्तशास्त्रेऽधिकार इति, अथातो ब्रह्मजिज्ञासेति सूत्रेण प्रतिपादितम् । स्वाध्यायो वेदः- तस्मिन्नेव सन्त्युपनिषद इति कृत्वा ब्रह्मचर्याश्रमे एव वेदान्तश्रवणं सम्पद्यते द्विजस्य । व्याकरणादिना च वेदान्तानामर्थमापाततो जानाति । ततश्चाविक्रिय आत्मेति विज्ञानं तस्योपपद्यते- तदेवापातब्रह्मात्मज्ञानं द्रढयितुं यावद्ब्रह्मात्मसाक्षात्कारं वेदान्तश्रवणमननादिकस्य कर्तव्यत्वादाश्रमान्तरेषु कर्मबाहुल्येन तदसम्भवान्मुमुक्षुरयं विद्वान् सन्न्यस्य ब्रह्मनिष्ठगुरूपसत्तिं कृत्वा वेदान्तश्रवणमननादिकं करोतीत्येष घण्टापथः । अतो न सन्न्यासवेदान्तश्रवणयोरन्योन्याश्रयदोषः- आपाततो वेदान्तश्रवणानन्तरं प्राधान्येन वेदान्तश्रवणमित्युक्तत्वात् । अत एव वेदान्तश्रवणे गृहस्थानामप्यधिकार इति, सन्न्यासिनामेवाधिकार इति च पक्षद्वयं प्रवृत्तम् । वेदान्तश्रवणस्यापातत्वप्राधान्याभ्यां ये तु महानुभावाः प्रारब्धसुकृतातिशयवशात्सकृद्वेदान्तश्रवणादेव ब्रह्मात्मापरोक्ष्यं लभन्ते शुकजनकवामदेवादिवत् तेषां तु न काप्यधिकारः- आत्मन्यधिकारासम्भवादिति बोध्यम् ।

ननु शास्त्रादपि कथमप्रसिद्धार्थाभ्युपगमोऽस्त आह—यथाचेति । धर्माधर्मौ तत्प्रयुक्तदेवनारकशरीरविशेषपरिग्रहौ च प्रत्यक्षादिप्रमाणाविषयत्वेनाप्रसिद्धावपि यथा आगमप्रामाण्यादास्तिकैरभ्युपगम्येते तद्वदात्माविक्रियत्वादिकमपीत्यर्थः ।

ननु धर्माधर्मस्वर्गनरकादिनां प्रत्यक्षाविषयत्वेपि मनोवाग्विषयत्वमस्ति- मनसा इदमीदृशमिति सङ्कल्पयितुं वाचा वक्तुं च सुशकत्वात् । अतः तत्र शास्त्रं प्रमाणं भवतुनाम 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'ति श्रुत्या वाङ्मनसागोचरे ब्रह्मणि कथं शास्त्रस्य प्रामाण्यमिति पृच्छति—करणागोचरत्वादिति । करणानां विषयग्रहणसाधनानां मन आदीनामगोचरत्वाद्धेतोश्शास्त्रोपदेशादात्मा-

मनसैवानुद्रष्टव्यमिति श्रुतेः । शास्त्राचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करणम् तथा च- तदधिगमायानुमाने आगमे च सति ज्ञानं नोत्पद्यत इति साहसमेतत् । ज्ञानं चोत्पद्यमानं तद्विपरीतमज्ञानमवश्यं बाधत इत्यभ्युपगन्तव्यम् । तच्चाज्ञानं दर्शितं- हन्ता हतोस्मीत्युभौ तौ न विजानीत इति । अत्र चात्मनो हननक्रियायाः कर्तृत्वं चाज्ञानकृतं दर्शितं- तच्च सर्वक्रियास्वपि समानं कर्तृत्वादेरविद्याकृतत्वमविक्रियत्वादात्मनः । निक्रियावान् हि कर्ताऽऽत्मनः कर्मभूतमन्यं प्रयोजयति—कुर्विति । तदेतदविशेषेण विदुषस्सर्वक्रियासु कर्तृत्वं हेतुकर्तृत्वं च प्रतिषेधति भगवान् वासुदेवः- विदुषः कर्माधिकाराभावप्रदर्शनार्थं वेदाविनाशिनं- कथं स पुरुष इत्यादिना । क्व पुनर्विदुषोऽधिकार इति । एतदुक्तं पूर्वमेव ज्ञानयोगेन साङ्ख्यानामिति । तथा च सर्वकर्मसन्न्यासं वक्ष्यति- सर्वकर्माणि मनसेत्यादिना ।

ननु मनसेति वचनान्न वाचिकानां कायिकानां च सन्न्यास इति- न, सर्वकर्माणीति विशेषितत्वात्- मानसानामेव सर्वकर्मणां प्रतिषेध इतिचेन्न, मनोव्यापारपूर्वकत्वात् वाक्काय-

---

कर्तृत्वादिविज्ञानं नोत्पद्यत इति पूर्वपक्षार्थः । परिहरति सिद्धान्ती—नेति । हेतुमाह—मनसैवेति । अप्राप्य मनसा सहेति श्रुतिविरोधं परिहरति—शास्त्रेति । असंस्कृतेन मनसा सहेति तच्छ्रुत्यर्थान्न दोष इति भावः । नन्वात्मनः संस्कृतमनोवेद्यत्वाभ्युपगमे स्वतस्सिद्धत्वं नित्यापरोक्षत्वं च हीयेतेति चेत्, मैवम्—नित्यापरोक्षः स्वतस्सिद्धोप्यात्मा अविद्यया परोक्ष इव साध्य इव च प्रतिभाति- तदविद्यानिरसने तु संस्कृतं मनः करणं तादृश मनोवृत्त्या अहं ब्रह्मेत्याकारिकया विद्यया नष्टायामविद्यायामविक्रिय आत्मा स्वयं प्रभः स्वयं स्फुरतीति । ननु आत्मन अकर्तृत्वान्मनसः करणत्वेन कर्तृत्वाभावाच्च कथमत्र मनोव्यापारसिद्धिः ? कर्त्रधीनो हि करणव्यापार इति चेत्, उच्यते—अस्ति बुद्ध्यवच्छिन्नचैतन्यलक्षणः अविद्याकल्पितः प्रमाताऽत्र कर्ता- स चात्मानं मनसा वेत्ति- नाहमवच्छिन्नः किंतु परिपूर्णोऽविक्रिय आत्मैव- ज्ञानघनेऽसङ्गे मय्यात्मनि कालत्रयेप्यविद्यायास्तत्कार्यबुद्ध्यादीनां वा वृत्त्ययोगादिति । तदधिगमायेति । आत्मनोऽविक्रियत्वैकत्वादिज्ञानाय- अनुमाने- आत्मा अविक्रियः- निरवयवत्वाद्व्यतिरेकेण घटादिवदित्याद्यनुमाने सति- आगमे न जायत इत्यादिशास्त्रे च सति ज्ञानं नोत्पद्यते इत्येतत्साहसमेव । सति कारणे कुतः कार्यानुदय इति भावः ।

ज्ञानं चेति । अविक्रिय एकोऽकर्ताऽस्मीत्येवं रूपं- अज्ञानं कर्ताहं भिन्नोऽहं भोक्ताहमित्येवं रूपम् । सर्वक्रियासु- गमनादिसमस्तक्रियासु सर्वक्रियास्वपि आत्मन. कर्तृत्वादेरविद्याकृतत्वरूपं तत्पूर्वोक्तं समानमित्यन्वय । यद्वा तदात्मनः कर्तृत्वादेरविद्याकृतत्वं च सर्वक्रियास्वपि समानमित्यन्वयः । तत्र हेतुमाह—अविक्रियत्वादात्मन इति । अविक्रियत्वादात्मन सर्वक्रियानिरूपितकर्तृत्वादिविकारो नोपपद्यत इत्यर्थः । अविशेषेणेति । हननादिविशेषाभावेनेत्यर्थः ।

विशेषितत्वादिति । कर्मणां सर्वविशेषणस्य दत्तत्वादित्यर्थ. । मनसेति । मनोव्यापाराभावे सर्व-

व्यापाराणां- सर्वव्यापाराणां तत्पूर्वकत्वात् मनोव्यापाराभावे भावानुपपत्तेः । शास्त्रीयाणां वाक्कायकर्मणां कारणानि मानसानि कर्माणि वर्जयित्वाऽन्यानि सर्वकर्माणि मनसा सन्न्यस्यास्त इतिचेन्न, नैव कुर्वन्नकारयन्निति विशेषणात् । सर्वकर्मसन्न्यासोऽयं भगवतोक्तः मरिष्यतो न जीवत इतिचेन्न, नवद्वारे पुरे देह आस्त इति विशेषणानुपपत्तेः । नहि सर्वकर्मसन्न्यासेन मृतस्य देहे आसनं सम्भवति- अकुर्वतो कारयतश्च देहे सन्न्यस्येति सम्बन्धो न देह आस्त इतिचेन्न, सर्वत्रात्मनः अविक्रियत्वावधारणात्- आसनक्रियायाश्चाधिकरणापेक्षत्वात्तदनपेक्षत्वाच्च

व्यापाराणां भावानुपपत्तेरित्यन्वयः । तत्र हेतुमाह— तत्पूर्वकत्वादिति । मानसिककर्माणि नाम सङ्कल्परूपमनोव्यापारा एव- गच्छेयं वदेयं हन्यामित्येवमादौ मनसा सङ्कल्प्यैव सर्वोपि गमनभाषणहननादिक्रिया. वाचिकीः कायिकीश्च करोति, न त्वसङ्कल्प्येत्यर्थः । तदैक्षतेतीश्वरजगत्सृष्ट्यादिव्यापारस्यापि सङ्कल्पपूर्वकत्वश्रवणादिति भावः । पुनराशङ्कते पूर्ववादी— शास्त्रीयाणामिति । वेदपाठज्योतिष्टोमादीनामित्यर्थः । नैवेति । अशास्त्रीयाणि सर्वाणि कर्माणि मनसा सन्न्यस्येत्युक्तौ नैव कुर्वन्नित्यादि व्यर्थं-- मनसा सन्न्यस्येत्यनेनैव वाचा कायेन चाकरणस्य सिद्धत्वात् इत्यर्थः । सिद्धान्ते तु मनसा विवेकबुद्ध्या कर्मादावकर्मदर्शनेन सन्त्यज्येत्यर्थ इति । आत्मसमवायिकर्तृत्वकारयितृत्वयोर्वारणार्थं नैव कुर्वन्न कारयन्निति च वक्ष्यति- मरिष्यत इत्यासन्नमरणस्येत्यर्थः । गमनभोजनादिसर्वकर्मोपरमस्तस्यैव सङ्घटीतीति भावः । न जीवत इति । जीवतस्तु भोजनादिकर्माण्यवर्जनीयानीति भावः । आस्त इति । आस उपवेशन इति धातोर्वर्तमानेलड्विधानात् । जीवत एव सिद्धिरिति भावः ।

तदेव प्रपञ्चयति— नहीति । मृतः कथं सर्वाणि कर्माणि सन्न्यस्य देहे तिष्ठेदित्यर्थः । ननु सर्वकर्माणि मनासा नवद्वारपुरे देहे सन्न्यस्य निक्षिप्य नैव कुर्वन्न कारयन्वशी आस्ते इति श्लोकस्यान्वयमाशङ्कते— अकुर्वत इति । अकुर्वतोऽकारयतश्च आत्मनस्सर्वकर्माणि मनसा देहे सन्न्यस्य वशी सुखमास्त इति सम्बन्धः । ननु देह आस्त इतीत्यन्वयः । सन्न्यासक्रियाधिकरणत्वमेव देहस्य ननूपवेशक्रियाधिकरणत्वमिति परमार्थः । देहेन कर्माणि क्रियन्ते कार्यन्ते च, ननु मयेत्यनुसन्धानपूर्वकं सर्वकर्माणि कर्तव्यानि विदुषोपीति पूर्वपक्ष्याशयः । परिहरति— नेति । हेतुमाह— सर्वत्रेति । अविक्रिये आत्मनि देहाधिकरणककर्मसन्न्यासक्रियाकर्तृत्वमपि नोपपद्यत इत्यर्थः । नच सर्वकर्मत्यागकर्तृत्वमपि कथमिति वाच्यं, सर्वकर्मत्यागस्य निवृत्तिरूपस्याक्रियात्वात् । निक्षेपस्य च क्रियात्वादिति । किंच देहे आस्ते इति पदयोस्साकांक्षत्वमस्ति, ननु देहे सन्न्यस्येति पदयोरित्याह— आसनेति । आधेयनिष्ठा ह्यासनक्रिया स्वाधिकरणमाधारमाकांक्षते आस्ते इत्युक्तौ क्वास्ते इत्याकांक्षाया उत्थितत्वादित्यर्थः । नच घटं भुवि निक्षिप्येति निक्षेपक्रियाया अप्यधिकरणापेक्षत्वमस्तीति वाच्यं, सरूपस्य घटादेर्निक्षेपस्याधिकरणापेक्षत्वेपि नीरूपकर्मनिक्षेपो नाधिकरणापेक्षः- नहि गमनं निक्षिप्येत्युक्तौ कुत्र निक्षिप्येत्याकांक्षा जायते ।

सन्न्यासस्य । सम्पूर्वस्तु न्यासशब्दस्त्यागार्थो न निक्षेपार्थः । तस्माद्गीताशास्त्रे आत्मज्ञानवतः सन्न्यास एवाधिकारो न कर्मणीति तत्रतत्रोपरिष्टादात्मज्ञानप्रकरणे प्रदर्शयिष्यामः- प्रकृतं तु वक्ष्यामः ॥२१॥

दोषान्तरमाह—सम्पूर्व इति । न्यासशब्दस्य निक्षेपार्थकत्वेपि सन्न्यासशब्दो न निक्षेपार्थ- उपसर्गवशादर्थान्तरप्रतीते. । अतस्सन्न्यस्य सर्वाणि कर्माण्यात्मावबोधत इत्यादिप्रयोगादिति भाव । उपसंहरति—तस्मादिति । सर्वकर्माणि मनसेत्यादिना विदुषा सर्वकर्मसन्न्यास एवाधिकार इति भगवता वक्ष्यमाणत्वादित्यर्थ । न कर्मणीति । ननु विदुषो जीवतस्सर्वकर्मसन्न्यासो दुर्लभ - भोजनादिकर्मणामवर्जनीयत्वादिति, चेन्मैवम्—यानि शास्त्रेण विहितानि यानि च निषिद्धानि तेषु अविद्वानेवाधिकारी नतु विद्वानित्येतावत एवेह विवक्षितत्वात् । भोजनादीनि तु अविहितत्वादनिषिद्धत्वाच कर्माणीति । यद्यविद्वान् भोजनादावधिक्रियते शास्त्राचर्हि तत्र विदुषोऽधिकारो न भवेदेव । नतु तथास्ति तस्मान्न भोजनादे कर्मत्वं नापि तत्र प्रवर्तमानस्याधिकृतत्वमिति सङ्क्षेप ।

अत्राह रामानुजः—स पुरुषो देवमनुष्यतिर्यक्स्थावरवरशरीरेष्ववस्थितेष्वात्मसु कमप्यात्मानं कथं घातयति कं वा कथं हन्तीति, तदयुक्तम्—'अविनाशि तु तद्विद्धि येन सर्वमिदं ततम्, य एनं वेत्ति हन्तार, अजो नित्य शाश्वतोयं पुराण , वेदाविनाशिनं नित्यं य एनमजमव्ययम्, अन्तवन्त इमे देहा नित्यस्योक्ताश्शरीरिण , नवानि देही, नैनं छिन्दन्ति शस्त्राणि, अच्छेद्योयं, अव्यक्तोयं, आश्चर्यवत्पश्यति कश्चिदेन'मित्यादिषु सर्वत्राप्यात्मन एकत्वेनैव निर्देशात्- अनेकत्वे परिच्छिन्नत्वेनानित्यत्वप्रसङ्गात् । निरवयवत्वात्परमाणुपुञ्जवदात्मसमूहस्य नानित्यत्वमिति न वाच्यं, निरवयवपरमाणुपुञ्जस्यैवानभ्युपगमात्- नहि निरवयवाना परमाणूना पुञ्जत्वं स्यात्- सावयववस्तुसंयोगात्खलु पुञ्जलाभ - सावयवस्य वस्तुन उपचयो, नतु निरवयवस्येति त्वयाप्युक्तं प्राक् । नच पुञ्जो मास्तुनाम निरवयवा परमाणवस्सन्ति नित्या- यथा तथा आत्मान इति वाच्यं, निरवयवपरमाणूनामेवाप्रमाणत्वात्- मार्तिकाद्यणुपुञ्जस्यैव घटादिकार्योपादानत्वात्- परमाणुकारणवादस्य च शारीरकमीमासाया प्रत्याख्यातत्वात् । निरवयवपरमाणुतुल्यस्यात्मनस्सर्ववस्तुसंयोगाभावेन सर्वावभासकत्वासम्भवात् । 'तस्य भासा सर्वमिदं विभा'तीति श्रुत्या आत्मनस्सर्वावभासकत्वस्योक्तत्वात्- तत्रात्मानामेश्वर इत्यभ्युपगमेपीश्वरस्यापि जीवादपि सूक्ष्मत्वेन सुतरा सर्वावभासकत्वासम्भवाच्च ।

तथा देवमनुष्यतिर्यक्स्थावरशरीरावस्थितात्मस्विति मूलद्रोहि पदपरम्पराकल्पनमप्यप्रमाणं- य आत्मानं नित्यं वेद स कथमात्मानं हन्तीत्युक्तौ यस्त्वनित्यं वेद स हन्त्येवात्मानमित्यापतति, तथानिर्विदितस्याविदितस्य वा आत्मन नित्यत्वात्- नहि ज्ञानमात्रेणात्मनस्स्यान्नित्यत्वं ज्ञानात्पूर्वमविद्यमानम् । तस्माद्यो वेद स इत्यपार्थम् । यदि मूलकर्तुरियं विवक्षा स्यात्तर्हि क कथं नित्यमात्मानं हन्ति कं घातयत्यपीत्येव ब्रूयात् ।

किंच कमित्यपि व्यर्थमेव सर्वत्र ज्ञानैकाकारत्वादिभिरात्मन एकरूपत्वस्य त्वयापीष्यमाणत्वात् ।

वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ।
तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥२२॥

तत्रात्मनः- अनाशित्वं प्रतिज्ञातं- तत्किमिवेत्युच्यते—वासांसीति । वासांसि वस्त्राणि जीर्णानि दुर्बलतां गतानि यथा लोके विहाय परित्यज्य नव्यान्यभिनवानि गृह्णाति उपादत्ते- नरः पुरुषः- अपराण्यन्यानि- तथा तद्वदेव शरीराणि विहाय जीर्णान्यन्यानि संयाति सङ्गच्छति नवानि- देह्यात्मा पुरुषवदविक्रिय एवेत्यर्थः ॥२२॥

नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ।
नचैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥२३॥

कस्मादविक्रिय इत्यत आह—नेति । नैनं प्रकृतं देहिनं- छिन्दन्ति निरवयवत्वान्नावयवविभागं कुर्वन्ति- शस्त्राण्यस्यादीनि । तथा नैनं दहति पावकोऽग्निरपि न भस्मीकरोति । तथा नचैनं क्लेदयन्त्यापः- अपां हि सावयवस्य वस्तुन आर्द्रीभावकरणेनावयवविश्लेषापादने यत्सामर्थ्यं तन्निरवयव आत्मनि न सम्भवति- तथा स्नेहवद्द्रव्यं स्नेहशोषणेन शोषयति वायुरेनं त्वात्मानं न शोषयति मारुतोपि ॥२३॥

---

कः कथं नित्यमात्मानं हन्ति वा घातयत्यपीत्येव ब्रूयात । अपि च- नित्यात्मविदः नित्यात्महननाक्षेपेण अनित्यानात्महननं निराक्षेपं प्राप्तम् । नित्यात्मकर्मकहननेतरक्रियाश्रयत्वं च प्राप्तं, उभयमपीदमनिष्ट-- 'मा हिंस्यात्सर्वाभूतानी'ति विद्वदविद्वत्साधारण्येन निषिद्धाया हिंसाया आत्मज्ञे विदुषि प्रसक्तत्वात्-- पश्वादिप्राणिहिंसायामपि नात्मनो हिंसा किं त्वनात्मनो देहस्यैव हिंसेत्यनात्महननस्य विदुषो निराक्षेपत्वात् । तथा नित्यात्मानं विद्वान्न हन्ति न घातयति, किंतु स्तौति निन्दति तिरस्करोतीत्येवं विदुष आत्मदूषणादिकं हि नरकावहम् । तस्मादात्मविदस्सर्वकर्माधिकारासम्भव एवानेन श्लोकेनोच्यत इत्यनवद्यम् ॥२१॥

वासांसीति श्लोकमवतारयति—तत्रेत्यादिना—तत्र न जायत इति श्लोके इत्यर्थः । अविनाशि तु तद्विद्धीति श्लोके इति वा । तदविनाशित्वं किमिवेति शङ्कायामुच्यते—वासांसीति । यथा नरः जीर्णानि वासांसि विहाय अपराणि नवानि वासांसि गृह्णाति- तथा देही जीर्णानि शरीराणि विहाय अन्यानि नवानि शरीराणि संयातीत्यन्वयः । श्लोकस्थक्रमेण पदानामर्थमाह—वासांसि वस्त्राणीत्यादिना । पुरुषः मनुष्य इत्यर्थः । यथा जीर्णवस्त्रत्यागान्नूतनवस्त्रधारणाच्च देहस्य न कापि वृद्धिक्षयादिलक्षणा जन्मनाशलक्षणा च विक्रिया तद्वज्जीर्णदेहत्यागान्नूतनदेहस्वीकाराच्च न कापि विक्रिया देहिन इत्यर्थः ॥२२॥

नैनमिति । एनं शस्त्राणि न छिन्दन्ति- एनं पावको न दहति- एनमापो नच क्लेदयन्ति—एनं मारुतो न शोषयतीत्यन्वयः । विश्लेषो वियोगः ॥२३॥

अच्छेद्योयमदाह्योयमक्लेद्योऽशोष्य एव च ।
नित्यस्सर्वगतः स्थाणुरचलोयं सनातनः ॥२४॥

यत एव तस्मात्—अच्छेद्य इति । यस्मादन्योन्यनाशहेतुभूतान्यात्मान नाशयितु नोत्सहन्ते अस्रग्न्यादीनि तस्मान्नित्यः, नित्यत्वात्सर्वगतः, सर्वगतत्वात् स्थाणुः स्थाणुरिव स्थिर इत्येतत् । स्थिरत्वादचलोऽयमात्मा अतस्सनातनः चिरन्तनः- न कारणात् कुतश्चित् निष्पन्नोऽभिनव इत्यर्थः । नैतेषा श्लोकानां पौनरुक्त्यं चोदनीयं- यत एकेनैव श्लोकेनात्मनो नित्यत्वमविक्रियत्वं चोक्तं न जायते म्रियते वेत्यादिना- तत्र यदेवात्मविषयं किंचिदुच्यते तदेतस्माच्छ्लोकार्थान्नातिरिच्यते किञ्चिच्छब्दतः पुनरुक्तं किञ्चिदर्थत इति दुर्बोधत्वादात्म वस्तुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान् वासुदेवः- कथन्तु नाम संसारिणां बुद्धिगोचरतामापन्नंसत् संसारनिवृत्तये स्यादिति ॥२४॥

अव्यक्तोयमचिन्त्योयमविकार्योयमुच्यते ।
तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥२५॥

किंच—अव्यक्त इति । सर्वकरणाविषयत्वान्न व्यज्यत इत्यव्यक्तोयमात्मा अत एवा-

---

अच्छेद्य इति । अयमच्छेद्य - अयमदाह्य - अयमक्लेद्य - अयमशोष्य एव च । अयं नित्य सर्वगत स्थाणु अचल सनातनश्च भवतीति शेष । नित्यत्वादिति । अनित्यस्य घटादेस्सर्वगत त्वादर्शनादिति भाव । सर्वदेशसर्वकालसर्ववस्तुगतत्व हि सर्वगतत्वं, तत्कथं परिच्छिन्नस्यानित्यस्य स्यादिति बोध्यम् । इत्येतत् इतियावदित्यर्थ । अचलश्चलनरहित । परिपूर्ण इति यावत् । सनेति सदार्थेऽव्ययम् । चिरार्थे इति केचित् । सायञ्चिरमिति सूत्रेऽव्ययग्रहणात्सनाशब्दाद्भवार्थेट्युट्युलो रन्यतरप्रत्यय तुडागमश्च । निष्पन्नस्सिद्ध जात इति यावत् । अभिनव इति । सदापि नव इत्यर्थ । अनादिरिति यावत् । पौनरुक्त्यमेव प्रपञ्चयति—यत इत्यादिना । शब्दत इति । नित्यो नित्य इति । अर्थत इति । सनातन पुराण इति पौनरुक्त्यस्याचोदनीयत्वे हेतुमाह—दुर्बोधत्वादित्यादिना । बोद्धुमशक्यं दुर्बोधं आपन्नमित्यस्यात्मवस्त्वित्ति कर्तृ स्यादिति अभिप्रायेणेति शेष ॥२४॥

अव्यक्त इति । अव्यक्त अयमचिन्त्य अयमविकार्य इत्युच्यते । शास्त्रेणेति शेष । तस्मादेनमेवं विदित्वा त्वमनुशोचितुं नार्हसीत्यन्वय । न व्यज्यते न प्रतीयत इत्यव्यक्त । ननु सर्वकरणाविषयत्वमसिद्धम्—'मनसैवानुद्रष्टव्य'मिति श्रुते, शास्त्रोपदेशशमदमादिसंस्कृतं मन आत्मदर्शने करण मिति स्वेनैव पूर्वमुक्तत्वाचेति चेत्सत्यं, संस्कृतमनोव्यतिरिक्तसर्वकरणाविषयत्वस्येह विवक्षितत्वात् । नच सर्वपदसंकोच मन आदिसर्वकरणाविषयत्वस्य सत्त्वात् । यद्वा स्वयंप्रभत्वादयमात्मा न करणविषय -- 'यन्मनसा न मनुते येनाहुर्मनो मत'मिति श्रुत्या मनस एवात्मवेद्यत्ववचनात् । 'साक्षी चेता निर्गुण' इति श्रुत्या सर्वसाक्षित्वमात्मनश्चोक्त साक्षित्वं हि साक्षाद्द्रष्टृत्वं करणैरपेक्ष्येण स्वत एव सर्वद्रष्टृत्व-मित्यर्थ । अत एवापाणिपादो जवनो ग्रहीतेति श्रुतिस्सङ्गच्छते । इदमेव आत्मन स्वयंप्रभत्वं कम

चिन्त्योयं यद्धीन्द्रियगोचरं तच्चिन्ताविषयतामापद्यते, अयं त्वात्मा निरिन्द्रियगोचरत्वादचिन्त्यः- अत एव अविकार्योय यथा क्षीरं दध्यातमत्वेन विकार्यं भवति, न तथाऽयं निरवयवत्वाच्चाविक्रियः- नहि निरवयवं किञ्चिद्विक्रियात्मकं दृष्टमविक्रियत्वादविकार्योयमात्मेत्युच्यते । तस्मादेवं यथोक्तप्रकारेणैनमात्मानं विदित्वा त्वं नानुशोचितुमर्हसि- हन्ताहमेतेषां मयेमे हन्यन्त इति ॥२५॥

अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ।
तथापि त्वं महाबाहो नैव शोचितुमर्हसि ॥२६॥

आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते—अथेति । अथ चेत्यभ्युपगमार्थः । एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या क्रुद्धो जातः तृप्तो जातो हृष्टो जात इत्यन्तःकरणविक्रियाभेदमनुविक्रियत इति मन्यसे, तथा तत्प्रत्ययविनाशमनुविनश्यतीति लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति मन्यसे, तथा नित्यं वा मन्यसे मृतं मृतो मृत इति, तथापि तथा भावेपि- आत्मनि त्वं महाबाहो नैव शोचितुमर्हसि- यस्मात् जन्मवतो नाशश्च नाशवतो जन्मेत्यवश्यभाविनाविति ॥२६॥

---

यस्त्वयमेवात्मानं सर्वाश्चार्थं प्रभासयतीति । संस्कृतमनसः करणत्वं तु आत्मस्वरूपावरकाविद्यानिरसन एवेति बोध्यम् । नच कथं सूर्यं तम इवात्मानमविद्याऽऽवृणुयादिति वाच्यं, तेजस्तिमिरयोरिवात्माविद्ययोर्नास्ति बाध्यबाधकभाव । प्रत्युतात्मैवाविद्यां भासयति- अविद्या हि जडा न स्वतो भातुं क्षमते— अविद्याविरोधि तु अहंब्रह्मेत्याकारकं संस्कृतमनोवृत्तिरूपं ज्ञानमेवेति युक्तमात्मनः सर्वकरणाविषयत्वम् ।

चिन्ता । अदमीदृश इति विचार । अविकार्य इति । विकर्तुं योग्य विकार्य - विकारं प्राप्तुमर्ह इत्यर्थ । न विकार्य अविकार्य । विकारो नाम परिणाम । अविकारित्वे हेतुं वदन् शब्दस्य फलितार्थमाह- निरवयवत्वाच्चाविक्रिय इति । विक्रिया आत्मनि यस्य तद्विक्रियात्मकं विकारवदित्यर्थ । अथवा विक्रिया विकार कार्यमित्यर्थ । तदात्मकं तद्रूपमित्यर्थ । सावयवस्यैव कार्यत्वं कार्यस्यैव विकारवत्त्वं चेति भाव । शोकाकारं दर्शयति—हन्ताहमिति । आत्मनि हननक्रियाकर्तृत्वकर्मत्वादिविकारायोगादिति भाव ॥२५॥

अथ चेति । अथ च एनं नित्यजातं नित्यं मृतं वा मन्यसे हेमहाबाहो । तथापि त्वमेवं शोचितुं नार्हसीत्यन्वय । अव्ययानामनेकार्थत्वादाह—अथ चेत्यभ्युपगमार्थ इति । अथ च आत्मन अनित्यत्वेऽभ्युपगतेऽपीत्यर्थ । यथा लोकप्रसिद्ध्या आत्मानं क्रुद्धो जात तृप्तो जात, हृष्टो जात इत्यन्तःकरणविक्रियाभेदमनुविक्रियते आत्मेति मन्यसे इत्यन्वय । यद्वा क्रुद्धो जातस्तृप्तो जातो हृष्टो जात इति लोकप्रसिद्ध्या इत्यन्वय । अन्यत्तुल्यम् । यथा च तत्प्रत्ययविनाशमनुविनश्यत्यात्मेति लोकप्रसिद्ध्या मन्यसे, तथा प्रत्यनेकशरीरोत्पत्तिं जातो जात आत्मेति मन्यसे, तथा नित्यं वा सदापि प्रत्यनेकशरीरमृतिं मृतो मृत आत्मेति मन्यसे इत्यन्वय । नित्यमपि जायत इति नित्यजात, नित्यमपि

जातस्य हि ध्रुवो मृत्युः ध्रुवं जन्म मृतस्य च।
तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥२७॥

तथा च सति— जातस्येति । जातस्य हि लब्धजन्मनः ध्रुवः अव्यभिचारी मृत्युः मरणं- ध्रुवं जन्म मृतस्य च- अपरिहार्योऽयं जन्ममरणलक्षणोऽर्थः- यस्मात्तस्मादपरिहार्येऽर्थे न

---

म्रियत इति नित्यं वा मृत इति चार्थः । अयमाशयः—क्रोधतृप्तिहर्षा अन्त.करणधर्मत्वादन्त करणविक्रियाः । लोकस्तु आत्मान्त करणयोस्तादात्म्याध्यासेन अन्त.करणे क्रुद्धेसति आत्मा क्रुद्धो जात इति तस्मिन् तृप्ते आत्मा तृप्त आसीदिति, तस्मिन् हृष्टे आत्मा हृष्ट इति चात्मानमेव विक्रियमाणं मन्यते क्रोधादिप्रत्ययनाशे तु क्रुद्धात्मा नष्टो हृष्टात्मा नष्टस्तृप्त आत्मा नष्ट इत्यात्मानमेव नष्टं मन्यते । एते नान्त करणविकाराणां क्रोधतृप्तिहर्षाणामुदयनाशाभ्यामात्मन उदयनाशौ लौकिकैरभ्युपगम्येते इति सिद्धम् तद्वच्छरीरधर्मौ जन्मनाशौ लौकिकैरात्मन्यध्यस्तौ दृश्येते- शरीरेषु जातेष्वात्मा जात इति, तेषु मृतेष्वात्मा मृत इति च लोकप्रसिद्धेरिति ।

ननु अन्त.करणधर्मक्रोधाद्युदयनाशाभ्यामन्तःकरणस्यैव नास्त्युदयनाशव्यवहारः- न ह्यन्त करणे क्रुद्धेसति कोप्यन्त.करणं जातमिति तस्मिन् शान्तेसति अन्त.करणं नष्टमिति च प्रत्येति- किंपुनरात्मनस्तद्व्यवहारः । तस्मान्न दृष्टान्तोपपत्तिरिति चेत् , उच्यते—उपरतक्रोधो देवदत्त. सखे इत· प्राक् क्रुद्ध इदानीं क्वेति यज्ञदत्तेन पृष्टस्तत्प्रति वदति- क्रुद्धो नष्टश्शान्तो जात इति, तथा यतिश्च वदति गृही नष्टो यतिर्जात इति, ततश्च धर्मनाशोदयाभ्यां धर्मिनाशोदयोपचार इति ततो न लोकप्रसिद्ध्यनुपपत्तिः । वस्तुतस्तु भाष्यकारै प्रौढ्या प्रोक्तोऽयमर्थ.- न स्वत्राभिनिवेशस्तेषाम् । किं तर्हि अन्त.करणधर्माणां क्रोधादीनामिव देहधर्मयोर्जन्मनाशयोरात्मन्यध्यासाल्लोके आत्मा क्रुद्धो हृष्ट इत्यादिवदात्मा जातो मृत इति व्यवहार·, तद्वशाच्च अर्जुनस्यापि नित्यजातो नित्यमृत आत्मेति मतिरित्येतावत्येवार्थे भाष्यकाराणामभिनिवेश इति । आत्मनीति विषयसप्तमी । महाबाहो इति सम्बुद्धिर्धीरत्वद्योतनार्था । ततश्च नायं शोको धीरस्य तवोचित इति भाव· ।

अत्राह रामानुजः—अथ नित्यजातं नित्यमृतं देहमेवैनमात्मानं मनुषे इति, तदसत्—मूले देहपदाभावात्- आस्तिकस्यार्जुनस्य नास्तिकबौद्धादिवद्देहे आत्मबुद्ध्यभावात् । किंतु देहातिरिक्त आत्मा अस्त्येव- सतु न जन्मादिविकारहीनः देहोदयमनूत्पन्नत्वाद्देहनाशमनुविनष्टत्वादिरित्येवार्जुनस्य मतिः- पुत्रो जातः पुत्रो नष्ट इति लोकव्यवहारात् मृते पुत्रदेहे दृश्यमानेपि पुत्रो नष्ट इति शोचति हि पित्रादिलोकः । तस्मादर्जुनोपि न देहमात्मानं मन्यते, किंतु देहवदात्मानं जन्मनाशयुक्तं मन्यत इति रामानुजभाष्यमसत् ॥

जातस्येति, लब्धजन्मन इति । जनिक्रियाश्रयस्येत्यर्थः । जन्मना लब्धसत्ताकस्येति यावत् । अव्यभिचारीति । यो यो जातस्स स मृत इति व्याप्तेः क्वापि नास्ति व्यभिचार इत्यर्थः । नच विभीषणहनूमन्मार्कण्डेयादिषु व्यभिचार इति वाच्यं, प्रलये तेषामपि नाशश्रवणात् । स्वाभाविकः स्वभावसिद्धो धर्मः यथा अग्नेरौष्ण्यं जलस्य शैत्यं च तद्वदिति भावः ।

त्वं शोचितुमर्हसि- जन्मवतो नाशः, नाशवतो जन्मेति च स्वाभाविकश्चेदपरिहार्योऽर्थः। तस्मिन्नपरिहार्येऽर्थे न त्वं शोचितुमर्हसि। कार्यकरणसङ्घातात्मकान्यपि भूतान्युद्दिश्य शोको न युक्तः कर्तुं यतः ॥२७॥

ननु जन्मवतो नाशस्सर्वजनप्रत्यक्षः- जन्मवतां पितृपुत्रादीनां नाशदर्शनात्। नाशवतः पुनर्जन्म त्वप्रत्यक्षं- कथमभ्युपगन्तुं शक्यमितिचेत्, मैवम्—बीजस्य भुवि निक्षेपान्नष्टस्य अंकुरात्मना जन्मदर्शनात्- नहि बीजस्वरूपनाशं विनांकुरोदयः- शास्त्रप्रामाण्याच्च पुनर्जन्माभ्युपगमः।

अत्र कथमिदमुपपद्यते विनष्टस्योत्पत्तिरित्याक्षिप्य सत्कार्यवादमवतारयामास रामानुजः—तत्र विचार्यते—मृद्द्रव्यं सत् घटाद्यात्मना विक्रियत इति सतो मृद्द्रव्यस्यैवावस्थाविशेषा घटाद्युत्पत्तिविनाशादय इत्यमीषां प्रघोषः अविचारितरमणीयः। तथाहि—यद्विक्रियते तन्न सत्- यथा घटादयः। यदविक्रियं तत्सत्- व्यतिरेकेण घटादिवदिति कथं विक्रियमाणस्य मृद्द्रव्यस्य सत्त्वम्? 'नासतो विद्यते भावो नाभावो विद्यते सत' इति कालत्रयेप्यभाववत्त्वस्यासल्लक्षणत्वात्। मृद्द्रव्यस्य च भूतोत्पत्तेः प्राक् भूतप्रलयानन्तरं चाभाववत्त्वेनासत्त्वात्। मृत्तिकेत्येव सत्यमिति तु श्रुत्या यावत्प्रपञ्चं सत्यत्वस्य विवक्षितत्वात्। नचानित्यमपि मृद्द्रव्यं रज्जुसर्पादिवन्नासत्- किंतु सदेवेति वाच्यं, विनाशस्वभावो ह्यसत्त्वमविनाशस्वभावश्च सत्त्वमिति त्वयैव सत्त्वस्य नित्यत्वेनोपवर्णितत्वात्। नित्ये वस्तुन्यसत्त्वस्य, असति वस्तुनि नित्यत्वस्य च काप्यदर्शनात्। 'अविनाशि तु तद्विद्धी'ति तुशब्देनात्मान्यस्य सर्वस्यापि विनाशित्वप्रतिपादनात्, मृदादीनामप्यविनाशित्वे तद्वैलक्षण्यप्रतिपादकतुशब्दप्रयोगानुपपत्तेः, 'आत्मन आकाशस्सम्भूत' इति श्रुत्या आत्मनस्सकाशादाकाशादीनां जन्मश्रवणात्पृथिव्यप्सु प्रविलीयत इत्यादिना तेषां लयश्रवणाच्च कथं पृथिव्यादिभूतानां सद्द्रव्यत्वं? येन तद्विकाराणां घटादीनां सत्कार्यत्वं स्यात्। नच प्रकृतिस्सती पृथिव्यादयस्तु तद्विकारत्वात्सत्कार्याण्येव- पृथिव्यादिविकारत्वाच्च घटादीनां परम्परया सत्कार्यत्वमिति वाच्यं, प्रकृतेरीश्वरापृथगसिद्धत्वेन स्वतन्त्रसत्ताऽभावान्न सत्त्वं नाप्यसत्त्वमिति सिद्धान्तात्। प्रकृतिर्न साङ्ख्याभिमतं प्रधानं- तस्याशब्दत्वात्। किंतु मायैव- मायानामेश्वरशक्तिः- सा ह्यग्निशक्तिवदग्नेः पृथगीश्वरात्पृथगसिद्धा- इयं च कार्यगम्यैव- कार्यं चास्याः प्रपञ्चः- स च प्रलये नश्यतीति कथं महाभूतप्रलये प्रकृत्यास्सत्त्वमनुमेयं- लिङ्गाभावात्। 'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'ति मुक्तप्राप्ये ब्रह्मणि मायातत्कार्याभावश्रवणान्नास्ति मुक्तौ प्रकृतिः। तस्मान्न प्रकृतिरपि सद्द्रव्यम्। एतेन जीव ईश्वरस्यापृथक्सिद्धविशेषणमिति वादोपि प्रत्युक्तः- तथात्वे जीवस्यापीश्वरसत्ताधीनसत्ताकतया स्वतन्त्रसत्ताऽभावादसत्त्वमेव स्यात्- तच्चानिष्टं त्वयापि जीवसत्यत्वस्याभ्युपगतत्वात्। तस्मादात्मान्यस्यासत्त्वात्सत आत्मनश्चाविक्रियत्वान्न सत्कार्यवादसिद्धिः। किंच सतो द्रव्यस्यावस्थान्तरप्राप्तिरुत्पत्तिरित्यभ्युपगमेपि अवस्थान्तरस्य पूर्वमसत एवोत्पत्तिर्न तु सतः- सत उत्पत्त्ययोगादिति कृत्वा असत्कार्यवाद एव सिद्धस्तत्रापि- मृदि पूर्वमसत एव घटाद्याकारस्य कारकव्यापारेण जातत्वात्। अत एव कारकव्यापारनैरपेक्ष्यरूपदोषासम्भवश्च- कारकव्यापारात्प्राग्घटाद्याकाराभावात्।

अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत ।
अव्यक्तनिधनान्येव तत्र का परिवेदना ॥२८॥

अव्यक्तादीनि अव्यक्तमदर्शनं अनुपलब्धिरादिर्येषां पुत्रमित्रादिकार्यकरणसङ्घातात्मकानां तान्यव्यक्तादीनि भूतानि प्रागुत्पत्तेः- उत्पन्नानि च प्राङ्मरणाद्व्यक्तमध्यानि- अव्यक्तनिधनान्येव पुनरप्यव्यक्तमदर्शनं निधनं मरणं येषां तान्यव्यक्तनिधनानि मरणादूर्ध्वमव्यक्ततामेव प्रतिपद्यन्त इत्यर्थः। तथाचोक्तं- 'अदर्शनादापतिताः पुनश्चादर्शनं गताः' इति तत्र का परिवेदना को वा प्रलापः- अदृष्टदृष्टनष्टभ्रान्तिभूतेषु भूतेष्वित्यर्थः ॥२८॥

तस्मान्न सत्कार्यवादो नाप्यसत्कार्यवादः, किंतु मिथ्याकार्यवाद एवानवद्यः- सत उत्पत्त्यादिविकारायोगाद्, असतश्च शशशृङ्गवदुपलब्ध्ययोगात्। उपलभ्यमानं विक्रियमाणं चेदं कार्यमिथ्यैव- शुक्तिकायामुपलभ्यमानं नाशरूपं विकारं भजमानं च रजतमिवेति ॥२७॥

अव्यक्तादीनीति श्लोकमवतारयति—कार्यकरणेति। कार्यं देहः करणानि मन आदीन्द्रियाणि तेषां सङ्घातः कार्यकरणसङ्घातः स आत्मा स्वरूपं येषां तानि कार्यकरणसङ्घातात्मकानि आत्मातिरिक्तचतुर्विंशतितत्त्वात्मकानीत्यर्थः। भूतानि अव्यक्तादीनि व्यक्तमध्यानि अव्यक्तनिधनानि भवन्तीति शेषः। हेभारत तत्र का परिवेदना। अव्यक्तशब्दार्थमाह—अदर्शनमिति। अभाव इति यावत्। पुत्रमित्रादीनि भूतानि उत्पत्तेः प्रागनुपलभ्यमानत्वादव्यक्तादीनि। इदमेवाव्यक्तं नैयायिकाः प्रागभावं वदन्ति। व्यक्तमुपलब्धिर्मध्ये येषां तानि व्यक्तमध्यानि- जन्मनाशयोर्मध्ये प्रतीयमानानीत्यर्थः। अव्यक्तनिधनानीति। निधनमन्त इति यावत्। इदमेवाव्यक्तं नैयायिकाः प्रध्वंसाभावमाहुः। अव्यक्तमरणयोरेकार्थतामाशङ्क्याह—मरणादूर्ध्वमिति। प्राणत्यागादनन्तरमित्यर्थः।

ननु सर्वकरणागोचरत्वरूपाव्यक्तत्वस्य आत्मधर्मत्वादव्यक्तोऽयमचिन्त्योऽयमितीहाप्युक्तत्वात् यो यस्माज्जातस्स तस्यादिरिति सिद्धान्तात् 'यतो वा इमानि भूतानि जायन्ते' इति श्रुत्या ब्रह्मणस्सर्वभूतकारणत्वावगमाच्चाव्यक्त आत्मा आदिर्येषां तान्यव्यक्तादीनि। तथा कार्यस्य कारणे लयदर्शनात् यत्प्रयन्त्यभिसंविशन्तीति ब्रह्मणि भूतानां लयश्रवणाच्च अव्यक्तं ब्रह्मनिधनं येषां तान्यव्यक्तनिधनानीत्यर्थो वाच्यः। यद्वा मायाकार्यत्वात्प्रपञ्चस्य मायादीनि मायान्तानि चेत्यर्थो वाच्यः। तथैव व्याख्यातं च यादवप्रकाशादिभिरिति चेत्, सत्यम्— यद्यत्रादिशब्दस्य कारणमित्यर्थः निधनशब्दस्य च नाशावधिरिति तदा अव्यक्तशब्दस्य ब्रह्मैवार्थस्स्यात्, परं तु आदिशब्दस्य जन्मेत्यर्थः। निधनस्य च मरणमिति- नहि भूतानां ब्रह्म जन्म मरणं वा भवितुमर्हति माया च। नचादर्शनार्थेऽपि समानोऽयं दोषः— न ह्यदर्शनं जन्म भवतीति वाच्यं, जन्मनः प्राक् मरणादूर्ध्वं च भूतानामदृश्यमानत्वाददर्शनस्यादित्वमन्तत्वं चोक्तमिति।

नन्वेवं'मदर्शनादापतिताः पुनश्चादर्शनं गताः' इति श्लोकानुगुण्यादादिनिधनशब्दयोरत्र कारणनाशावधिरूपावर्थावेवापतितौ- जन्मनः प्राक् मरणात्पश्चाच्चादर्शनमस्तीत्यनेनापि तदेव सिद्धं- तन्नथा-

आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ।
आश्चर्यवच्चैनमन्यश्शृणोति श्रुत्वाप्येनं वेद न चैव कश्चित् ॥२९॥

दुर्विज्ञेयोऽयं पुरुषः प्रकृत आत्मा किं त्वामेवैकमुपालभे साधारणे भ्रान्तिनिमित्ते। कथं दुर्विज्ञेय आत्मेत्याह—आश्चर्यवदिति । आश्चर्यवत् आश्चर्यमदृष्टमद्भुतमकस्माद्दृश्य-

सत्कार्यवादप्रसङ्गः, प्रपञ्चनाशानन्तरं शून्यवादप्रसङ्गश्चेति चेत्, मैवम्—भूतानि स्वोत्पत्तेः प्राग्भूत-स्वरूपेण न दृश्यन्ते, स्वनाशात्पश्चाचेति कृत्वा भूतानामव्यक्तादित्वमव्यक्तनिधनत्वं चोक्तं लोकदृष्टि-मभिप्रेत्य । शास्त्रदृष्ट्या तु भूतानि स्वोत्पत्तेः प्राक्स्वकाले स्वनाशानन्तरं च ब्रह्मरूपेणैव दृश्यन्त इति ब्रह्मादित्वं ब्रह्मनिधनत्वं च युक्तं भूतानामिति ।

नन्वस्मिन् गीताशास्त्रे शास्त्रदृष्टेरेवाश्रयणीयत्वात् किं लोकदृष्ट्या अव्यक्तशब्दस्यादर्शनार्थ-वर्णनमिति चेत्, उच्यते—व्यक्तमध्यानीति लिङ्गात्- न शास्त्रदृष्टिरिह परिग्राह्येति- नहि शास्त्रदृष्ट्या भूतानां मध्यकालेपि अब्रह्मात्मकत्वमस्ति, येन व्यक्तमध्यत्वं स्यात्- अव्यक्तं हि ब्रह्म- व्यक्तं त्विन्द्रिय-विषयमन्यदेव- घटतत्त्ववेत्ता हि पुरुषः घटप्रतीतिकालेपि घटं मृद्रूपमेव जानाति । एतेन अव्यक्तादीनि व्यक्तमध्यानि अव्यक्तनिधनानीति पदानां भूतानि जन्मनः प्राक् नोपलभ्यन्ते, मध्ये उपलभ्यन्ते, मरणादनन्तरं च नोपलभ्यन्ते इत्यर्थसिद्धः । नैतावता असत्कार्यवादशून्यवादयोः प्रसङ्गः- भूतान्यभावा-दुत्पद्यन्ते अभावं प्रत्यस्तंयन्तीत्यनुक्तत्वात् ।

ननु 'अदर्शनादापतिताः पुनश्चादर्शनं गता' इति प्रमाणश्लोके तथैवोक्तमिति कथं तद्वादयो-रप्रसङ्ग इतिचेत्, उच्यते—भूतानामुत्पत्तेः प्रागदृश्यमानत्वाददर्शनादापतिता इत्युक्तं, न त्वदर्शन-प्रभूतत्वादिति । एवं मरणानन्तरमदृश्यमानत्वाददर्शनं गता इत्युक्तं, न त्वदर्शनं प्रत्यस्तङ्गतत्वादिति । अदर्शनादित्यवधित्वरूपापादाने पञ्चमी- ग्रामादायातीति वत्- नतु जनिरुक्तः प्रकृतित्वरूपापादाने पञ्च-मीति बोध्यम् । अदृष्टेति । अदृष्टानि दृष्टानि नष्टानि चेत्येवंरूपभ्रान्तिरूपेष्वित्यर्थः ।

अत्राह रामानुजः—मनुष्यादिभूतानि सन्त्येव द्रव्याण्यनुपलब्धपूर्वावस्थान्युपलब्धमनुष्यत्वादि-मध्यमावस्थान्यनुपलब्धोत्तरावस्थानीति, तत्तुच्छम्—जन्मनाशादिविक्रियावतां मनुष्यादिभूतानां सत्त्वा-सम्भवात् । अविक्रियं वस्तु हि सत्- तच्च ब्रह्मैवेति दर्शितमेवाविनाशीति श्लोकेन । अनुपलब्धपूर्वा-वस्थानीत्यप्ययुक्तं- वीर्यरक्तान्नादिपूर्वावस्थोपलम्भात् । अनुपलब्धोत्तरावस्थानीत्यप्ययुक्तं- भस्ममृत्तिका-द्युत्तरावस्थोपलम्भात् ॥२८॥

आश्चर्यवदिति श्लोकमवतारयति—दुर्विज्ञेय इति । साधारणे सर्वलोकसाधारणे भ्रान्ति-निमित्ते त्वामेकमेवोपालभे किम्? भूतेष्वदृष्टदृष्टनष्टभ्रान्तिम्प्रति यन्निमित्तमज्ञानं तत्सर्वसाधारणमेव तद्वैभवाद्यायं पुरुष आत्मा सर्वस्यापि दुर्विज्ञेय इत्यत न त्वमेक एवोपालभ्यः, किं तर्हि सर्वेपि जनाः । अहो! अमीषामात्मज्ञानं नासीदिति सर्वेपि शोच्या एवेत्यर्थः । आश्चर्येण तुल्यमाश्चर्यवदिति तेन तुल्यं क्रियाचेद्वतिरिति वतिः । कश्चिदनेकजन्मस्वनुष्ठितनिष्कामकर्मतपआदिना शुद्धचित्तः कोपि धन्यः

मानं तेन तुल्यमाश्चर्यवत् । आश्चर्यमिवैनमात्मानं पश्यति कश्चित्, आश्चर्यवदेव वदति तथैव चान्यः, आश्चर्यवच्चैनमन्यश्शृणोति, श्रुत्वाप्येनं वेद नचैव कश्चित् । अथवा य आत्मानं पश्यति स आश्चर्यतुल्यो यो वा वदति यश्च शृणोति स अनेकसहस्रेषु कश्चिदेव भवति- अतो दुर्बोध आत्मेत्यभिप्रायः ॥२९॥

देही नित्यमवध्योयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

अथेदानीं प्रकरणार्थ उपसंह्रियते—देहीति । सर्वस्य प्राणिजातस्य देहे वध्यमानेपि अयं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते ॥३१॥

इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न सम्भवतीत्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव—स्वधर्ममिति । स्वधर्ममपि स्वो धर्मः स्वधर्मः क्षत्रियस्य युद्धं तमप्यवेक्ष्य त्वं न विकम्पितुं न प्रचलितुं अर्हसि, स्वधर्मत्वादित्यभिप्रायः । तच्च युद्धं पृथिवीजयद्वारे

---

पुरुषः पश्यति जानाति साक्षात्कुरुत इति यावत् । आत्मनि चक्षुर्व्यापारासम्भवान्न निरीक्षणार्थस्येहोपयोग. दृशो नालोचन इति लिङ्गाच्च पश्यतेर्ज्ञानार्थकत्वम् । वदतीति । न जायत इत्याद्यात्मस्वरूपं वक्तीत्यर्थः । एनं श्रुत्वापि कश्चिच्च नैव वेदेत्यन्वयः ।

अथ वेति व्याख्यान्तरे- आश्चर्यतुल्यः कश्चिदेनं पश्यति, तथैवाश्चर्यतुल्य कश्चिदेनं वदति आश्चर्यतुल्योऽन्य. कश्चिदेनं शृणोतीत्यन्वय. । कश्चिच्छब्दार्थमाह—अनेकसहस्रेष्विति । 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत' इति स्मरणादिति भाव अत इति आत्मद्रष्टृवक्तृश्रोतॄणां दुर्लभत्वादित्यर्थ. । अत्र 'श्रवणायाः अपि बहुभिर्यो न लभ्यः शृण्वन्तो बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्ट' इति मन्त्रो अनुसन्धेयः ॥२९॥

देहीति । नित्यं ध्रुवं देहिन्यवध्यत्वं न व्यभिचरतीत्यर्थ. । यस्मात्कार्यकरणसङ्घातस्यानित्यत्वेपि तदन्तर्गत आत्मा नित्यस्तस्मात्त्वं सर्वाणि भूतान्युद्दिश्य न शोचितुमर्हसि । भीष्मादिसङ्घातगतानित्यत्वस्यावर्जनीयत्वाद्भीष्माद्यात्मगतनित्यत्वस्य शोकविरोधित्वाच्चेति भावः ॥३०॥

स्वधर्ममिति । हि क्षत्रियस्य धर्म्याद्युद्धादन्यच्छ्रेयो न विद्यते तस्मादिति शेषः । स्वधर्ममवेक्ष्यापि त्वमिति शेष. । विकम्पितु न चार्हसि धर्मपथ्यर्थन्यायादनपेत इति यत् धर्म्ये श्रेय इति श्रेयो हेतावौपचारिक· प्रयोग. श्रेयस्करमित्यर्थ. । स्वः स्वीयः क्षत्रियजातेर्विहित इत्यर्थ । इदमेवाह—क्षत्रियस्य युद्धमिति । युद्धदर्शनादपि तव कम्पो नोचित इति श्लोकपूर्वार्धस्यार्थः । तत्र हेतुमाह—स्वधर्मत्वादिति । क्षत्रियस्य तव युद्धस्य स्वधर्मत्वादित्यर्थ । क्षत्रियस्य विजितव्यमिति घात्वादिति भावः ।

धर्मार्थं प्रजासंरक्षणार्थं चेति परमं धर्म्यं धर्मादनपेतं धर्म्यं तस्माद्धर्म्याद्युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते- हि यस्मात् ॥३१॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥

कुतश्च तद्युद्धं कर्तव्यमिति, उच्यते—यदृच्छयेति । यदृच्छया चोपपन्नमप्रार्थितमागतं स्वर्गद्वारमपावृतं उद्घाटितकवाटयुद्धं एतदीदृशं ये लभन्ते क्षत्रियाः- हेपार्थ किन्न सुखिनस्ते ?

अथ चेत्त्वं धर्म्यमिमं संग्रामं न करिष्यसि ।
ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥

एवं कर्तव्यतया प्राप्तमपि—अथेति । अथ चेत्त्वमिमं धर्म्यं, धर्मादनपेतं संग्रामं युद्धं न करिष्यसि चेत्- ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा त्यक्त्वा केवलं पापमवाप्स्यसि ॥३३॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥

न केवलं स्वधर्मकीर्तिपरित्यागः—अकीर्तिमिति । अकीर्तिं चापि ते तत्र भूतानि अव्ययां दीर्घकालां कथयिष्यन्ति- धर्मात्मा शूर इत्येवमादिभिर्गुणैः सम्भावितस्य चाकीर्तेः मरणं वरमित्यर्थः ॥३४॥

भयाद्रणादुपरतं मन्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

किञ्च- भयादिति । भयात्कर्णादिभ्यः रणाद्युद्धादुपरतं निवृत्तं मन्यन्ते चिन्तयिष्यन्ति

---

अत्र रामानुजः—इदं युद्धमिति मूलाद्बहिः प्रकल्प्य इदं युद्धं स्वधर्ममवेक्ष्येति व्याचख्यौ-- तन्मन्दम्—मूलाद्बहिः कल्पनस्याप्रमाणत्वात् ॥३१॥

यदृच्छयेति । हेपार्थ सुखिनः क्षत्रियाः यदृच्छया चोपपन्नमपावृतं स्वर्गद्वारमीदृशं युद्धं लभन्ते इत्यन्वयः । ये लभन्ते ते सुखिनो न किमिति भाष्यं त्वर्थसिद्धार्थकथनम् ॥३२॥

अथेति । महादेवश्शिवः । आदिशब्देनेन्द्रादिग्रहणम् । तत्समागमजन्यामित्यर्थः । वन्यवराह-वधस्थण्डकदहनादिष्विति भावः ॥३३॥

अकीर्तिमिति । अकीर्तिमपकीर्तिमर्जुनो युद्धाद्भीत इत्याकारिकां भूतानि प्राणिनः जना इति यावत्- कथयन्तुनाम । किं तेन मे इत्यत आह— सम्भावितस्येति । धर्मात्मत्वशौर्यधैर्यादिगुणैरत्कृष्ट-स्येत्यर्थः ॥३४॥

ननु स्वजने स्नेहकारुण्यादिना युद्धान्निवृत्तस्य मम कथमपकीर्तिरत आह—भयादिति ।

मानं तेन तुल्यमाश्चर्यवत्। आश्चर्यमिवैनमात्मानं पश्यति कश्चित्, आश्चर्यवदेव वदति तथैव चान्यः, आश्चर्यवच्चैनमन्यश्शृणोति, श्रुत्वाप्येनं वेद नचैव कश्चित्। अथवा य आत्मानं पश्यति स आश्चर्यतुल्यो यो वा वदति यश्च शृणोति स अनेकसहस्रेषु कश्चिदेव भवति-- अतो दुर्बोध आत्मेत्यभिप्रायः ॥२९॥

देही नित्यमवध्योयं देहे सर्वस्य भारत ।
तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥३०॥

अथेदानीं प्रकरणार्थ उपसंह्रियते--देहीति। सर्वस्य प्राणिजातस्य देहे वध्यमानेपि अयं देही न वध्यो यस्मात्तस्माद्भीष्मादीनि सर्वाणि भूतान्युद्दिश्य न त्वं शोचितुमर्हसि ॥

स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ।
धर्म्याद्धि युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते ॥३१॥

इह परमार्थतत्त्वापेक्षायां शोको मोहो वा न सम्भवतीत्युक्तं, न केवलं परमार्थतत्त्वापेक्षायामेव--स्वधर्ममिति। स्वधर्ममपि स्वो धर्मः स्वधर्मः क्षत्रियस्य युद्धं तमप्यवेक्ष्य त्वं न विकम्पितुं न प्रचलितुं अर्हसि, स्वधर्मत्वादित्यभिप्रायः। तच्च युद्धं पृथिवीजयद्वारेण

---

पुरुषः पश्यति जानाति साक्षात्कुरुत इति यावत्। आत्मनि चक्षुर्व्यापारासम्भवान्न निरीक्षणार्थस्येहोपयोग. दृशो नालोचन इति लिङ्गाच्च पश्यतेर्ज्ञानार्थकत्वम्। वदतीति। न जायत इत्याद्यात्मस्वरूपं वक्तीत्यर्थः। पुनं श्रुत्वापि कश्चिच्च नैव वेदेत्यन्वयः।

अथ वेति व्याख्यान्तरे- आश्चर्यतुल्यः कश्चिदेनं पश्यति, तथैवाश्चर्यतुल्य कश्चिदेनं वदति, आश्चर्यतुल्योऽन्यः कश्चिदेनं शृणोतीत्यन्वय। कश्चिच्छब्दार्थमाह--अनेकसहस्रेष्विति। 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वत' इति स्मरणादिति भाव। अत इति आत्मद्रष्टृवक्तृश्रोतॄणां दुर्लभत्वादित्यर्थ.। अत्र 'श्रवणायापि बहुभिर्यो न लभ्य शृण्वन्तोपि बहवो यं न विद्युः। आश्चर्यो वक्ता कुशलोस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्ट' इति मन्त्रो अनुसन्धेयः ॥२९॥

देहीति। नित्यं ध्रुवं देहिन्यवध्यत्वं न व्यभिचरतीत्यर्थ.। यस्मात्कार्यकरणसङ्घातस्यानित्यत्वेपि तदन्तर्गत आत्मा नित्यस्तस्मात्त्वं सर्वाणि भूतान्युद्दिश्य न शोचितुमर्हसि। भीष्मादिसङ्घातगतानित्यत्वस्यावर्जनीयत्वाद्भीष्माद्यात्मगतनित्यत्वस्य शोकविरोधित्वाच्चेति भावः ॥३०॥

स्वधर्ममिति। हि क्षत्रियस्य धर्म्याद्युद्धादन्यच्छ्रेयो न विद्यते तस्मादिति शेषः। स्वधर्ममवेक्ष्यापि त्वमिति शेषः। विकम्पितु न चार्हसि धर्मपथ्यर्थन्यायादनपेत इति यत् धर्म्यं श्रेय इति श्रेयो हेतावौपचारिकः प्रयोग श्रेयस्करमित्यर्थ.। स्वः स्वीयः क्षत्रियजातेर्विहित इत्यर्थ.। इदमेवाह--क्षत्रियस्य युद्धमिति। युद्धदर्शनादपि तव कम्पो नोचित इति श्लोकपूर्वार्धस्यार्थ.। तत्र हेतुमाह--स्वधर्मत्वादिति। क्षत्रियस्य तव युद्धस्य स्वधर्मत्वादित्यर्थ.। क्षत्रियस्य विजितव्यमिति शास्त्रादिति भावः।

धर्मार्थं प्रजासंरक्षणार्थं चेति परमं धर्म्यं धर्मादनपेतं धर्म्यं तस्माद्धर्म्याद्युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते- हि यस्मात् ॥३१॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥३२॥

कुतश्च तद्युद्धं कर्तव्यमिति, उच्यते—यदृच्छयेति । यदृच्छया चोपपन्नमप्रार्थितमागतं स्वर्गद्वारमपावृतं उद्घाटितकवाटयुद्धं एतदीदृशं ये लभन्ते क्षत्रियाः हेपार्थ किन्न सुखिनस्ते ?

अथ चेत्त्वं धर्म्यमिमं संग्रामं न करिष्यसि ।
ततस्स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥३३॥

एवं कर्तव्यतया प्राप्तमपि—अथेति । अथ चेत्त्वमिमं धर्म्यं, धर्मादनपेतं संग्रामं युद्धं न करिष्यसि चेत्- ततस्तदकरणात्स्वधर्मं कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा त्यक्त्वा केवलं पापमवाप्स्यसि ॥३३॥

अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ।
सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥३४॥

न केवलं स्वधर्मकीर्तिपरित्यागः—अकीर्तिमिति । अकीर्तिं चापि ते तव भूतानि अव्ययां दीर्घकालां कथयिष्यन्ति- धर्मात्मा शूर इत्येवमादिभिर्गुणैः सम्भावितस्य चाकीर्तेः मरणं वरमित्यर्थः ॥३४॥

भयाद्रणादुपरतं मन्यन्ते त्वां महारथाः ।
येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥३५॥

किञ्च- भयादिति । भयात्कर्णादिभ्यः रणाद्युद्धादुपरतं निवृत्तं मन्यन्ते चिन्तयिष्यन्ति

---

अत्र रामानुजः—इदं युद्धमिति मूलाद्बहिः प्रकल्प्य इदं युद्धं स्वधर्ममवेक्ष्येति व्याचख्यौ-- तन्मन्दम्—मूलाद्बहिः कल्पनस्याप्रमाणत्वात् ॥३१॥

यदृच्छयेति । हेपार्थ सुखिनः क्षत्रियाः यदृच्छया चोपपन्नमपावृतं स्वर्गद्वारमीदृशं युद्धं लभन्ते इत्यन्वयः । ये लभन्ते ते सुखिनो न किमिति भाष्यं त्वर्थात्सिद्धार्थकथनम् ॥३२॥

अथेति । महादेवश्शिवः । आदिशब्देनेन्द्रादिग्रहणम् । तत्समागमजन्यामित्यर्थः । वन्यवराहवधखाण्डवदहनादिष्विति भावः ॥३३॥

अकीर्तिमिति । अकीर्तिमपकीर्तिमर्जुनो युद्धाद्भीत इत्याकारिकां भूतानि प्राणिनः जना इति यावत्- कथयन्तुनाम । किं तेन मे इत्यत आह—सम्भावितस्येति । धर्मात्मत्वशौर्यधैर्यादिगुणैरुत्कृष्टस्येत्यर्थः ॥३४॥

ननु स्वजने स्नेहकारुण्यादिना युद्धान्निवृत्तस्य मम कथमपकीर्तिरत आह—भयादिति ।

न कृपयेति त्वां महारथाः कर्णदुर्योधनप्रभृतयः- येषां च त्वं दुर्योधनादीनां बहुमतः बहुभिर्गुणैर्युक्त इत्येवं मतो बहुमतो भूत्वा पुनर्यास्यसि लाघवं लघुभावम् ॥३५॥

अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ।
निन्दन्तस्तव सामर्थ्यं ततो दुःखतरन्नु किम् ॥३६॥

किञ्च अवाच्येति । अवाच्यवादान् अवक्तव्यान् वादांश्च बहूननेकप्रकारान् वदिष्यन्ति तव अहिता शत्रवः- निन्दन्तः कुत्सयन्तः तव त्वदीयं सामर्थ्यं ततस्तस्मान्निन्दाप्राप्तिदुःखाद्दुःखतरं नु किम् ? ततो दुःखतरं कष्टतरं नास्तीत्यर्थः ॥३६॥

हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।
तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥३७॥

हत इति । युद्धे पुनः क्रियमाणे कर्णादिभिः हतो वा प्राप्स्यसे स्वर्गं जित्वा वा कर्णादीन् भोक्ष्यसे महीं उभयथापि ते लाभ एवेत्यभिप्रायः । यत एवं तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः- ज्येष्यामि शत्रून् मरिष्यामि वेति निश्चयं कृत्वेत्यर्थः ॥३७॥

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥३८॥

तत्र स्वधर्म इत्येवं युध्यमानस्य उपदेशमिमं शृणु—सुखदुःखे इति । सुखदुःखे समे तुल्ये कृत्वा रागद्वेषावकृत्वेत्यर्थः । तथा लाभालाभौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व घटस्व- नैवं युद्धं कुर्वन् पापमवाप्स्यसि ॥३८॥

एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ।
बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥३९॥

एष उपदेशः प्रासङ्गिकः । शोकमोहापनये लौकिको न्यायः स्वधर्ममपि चावेक्ष्ये-

---

भयहेतुत्वाकाङ्क्षा पूरयति—कर्णादिभ्य इति । काकोलूकयोरिव कर्णार्जुनयोर्निसर्गवैरित्वात्कर्णशब्दश्रवणेनार्जुनस्य कोपोद्दीपनं स्यादिति कर्णग्रहणम् । महारथास्ते कर्णादिभ्यो भयाद्धेतोस्त्वा रणादुपरतं मन्यन्ते इत्यन्वयः ॥३५॥

अवाच्येति । वक्तुमयोग्या अवाच्या ॥३६॥

हत इति । हत इति हन्ते कर्मणि क्त । कर्त्राकाङ्क्षा पूरयति—कर्णादिभिरिति । भोक्ष्यसे अनुभविष्यसि । उत्तिष्ठेति । उदोनूर्ध्वकर्मणीति तङ् । यस्माद्धतो वा स्वर्गं प्राप्स्यसे जित्वा वा भोक्ष्यसे तस्माद्धेकौन्तेय युद्धाय कृतनिश्चयस्सन्नुत्तिष्ठेत्यन्वय ॥३७॥

सुखेति । सुखदुःखसमीकरणफलितार्थमाह—रागद्वेषावकृत्वेति । सुखे रागमकृत्वा दुःखे द्वेषमकृत्वा चेत्यर्थ । एवं लाभजययोरलाभाजययोश्चोह्यम् । एवं युद्धं कुर्वन् त्वं पापं नावाप्स्यसीत्यन्वय ॥

एषेति । स्वधर्ममपि चावेक्ष्येत्येवमादिभि श्लोकैरुक्त शोकमोहापनये लौकिको न्याय एष

त्येवमादिभिः श्लोकैरुक्तः- नतु तात्पर्येण । परमार्थदर्शनं त्विह प्रकृतं- तच्चोक्तमुपसंहरति— 'एषा तेभिहिता साङ्ख्य' इति शास्त्रविषयविभागप्रदर्शनार्थम् । इह हि प्रदर्शिते पुनश्शास्त्रविषयविभागे उपरिष्टात्- 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति निष्ठाद्वयविषयं शास्त्रं सुखं प्रवर्तिष्यते- श्रोतारश्च विषयविषयिविभागेन सुखं ग्रहीष्यन्तीत्यत आह—एषेति। एषा ते तुभ्यमभिहिता उक्ता- साङ्ख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसंसारहेतुदोषनिवृत्तिकारणं, योगे तु तत्प्राप्त्युपाये निस्सङ्गतया द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च । इमामनन्तरमेवोच्यमानां बुद्धिं शृणु । तां बुद्धिं स्तौति प्ररोचनार्थम्—बुद्ध्या यया योगविषयया युक्तः । हेपार्थ ! कर्मबन्धं कर्मैव धर्माधर्माख्यं बन्धः तं प्रहास्यसि ईश्वरप्रसादादिनिमित्तज्ञानप्राप्त्यैवेत्यर्थः ॥३९॥

---

उपदेशः प्रासङ्गिकः प्रसङ्गादागत- प्रसङ्गादुक्त इति यावत् । नन्वस्मिन्नुपदेशे वक्तुस्तात्पर्यमस्तीत्याह—नतु तात्पर्येणेति । तत्र हेतुमाह—परमार्थेति । इह परमार्थदर्शनमेव प्रकृतं, नतु लौकिकदर्शनमिति तुशब्दार्थः । तच्चोक्तमिति । अशोच्यानित्यारभ्य न त्वं शोचितुमर्हसीत्येतदन्तेन ग्रन्थेनेति भावः ।

तेऽभिहिता एषा बुद्धिः साङ्ख्ये साङ्ख्यविषयेत्यर्थः । एषा साङ्ख्ये बुद्धिस्तेभिहितेति वाऽन्वयः । एतावता ग्रन्थसन्दर्भेण ते साङ्ख्यबुद्धिरुपदिष्टेति परमार्थः । साङ्ख्यशब्दार्थमाह—परमार्थवस्तुविवेक इति । सप्तम्यर्थमाह—विषय इति । बुद्धिं विशिनष्टि—साक्षादिति । शोकमोहादिरूपो यस्संसारहेतुभूतो दोषः तस्य साक्षान्निवृत्तिकारणमित्यर्थः । ज्ञानेनाज्ञाननाशे सति तत्कार्यशोकमोहादिनाश इति भावः । योगशब्दार्थमाह—तत्प्राप्तीत्यादिना । तस्य साङ्ख्यस्य प्राप्तावुपायस्साधनं तस्मिन् निस्सङ्गतया फलाभिसन्धिराहित्येन द्वन्द्वप्रहाणं शीतोष्णादिद्वन्द्वसहनं- ईश्वरस्याराधनमेवार्थो यस्मिन् तस्मिन्परमेश्वप्रीत्यर्थमिति सङ्कल्पपूर्वकमनुष्ठिते इत्यर्थः । कोसौ योगोऽत आह—कर्मयोग इति । तत्स्वरूपमाह—कर्मानुष्ठान इति । समाधिरपि कर्मयोग एवेत्याह—समाधियोग इति । यमनियमाद्यष्टाङ्गयोग इत्यर्थः । एतावता योगे इत्यस्य कर्मानुष्ठानयोगानुष्ठानात्मककर्मयोगविषयामित्यर्थस्सिद्धः । तत्प्राप्त्युपायेत्यनेन च साङ्ख्ययोगादुत्तमाधिकारिविषयात्कर्मयोगस्यापकर्षस्सूचितः- नहि संसारकारणाज्ञाननिवृत्तौ साक्षात्साधनेन साङ्ख्ययोगेन परम्परासाधनं कर्मयोगस्तुल्यस्स्यात् । नच वैयर्थ्यं शङ्क्यं, योगस्य साङ्ख्योपजीव्यत्वात् । प्ररोचनार्थं रुच्युत्पादनार्थं यवागूं पिब शिखा ते वर्धिष्यत इति वाक्यवदिति भावः । ज्ञानप्राप्त्यैवेति । नतु साक्षादित्येवकारार्थः । कर्मयोगादीश्वरप्रसादः आदिपदाच्चित्तशुद्धिः- तेन निमित्तेन ज्ञानप्राप्तिरिति परम्परया योगात्कर्मबन्धप्रहाणमिति भावः ।

अत्राह रामानुजः—सङ्ख्या बुद्धिः, बुद्ध्या निर्धारणीयमात्मतत्त्वं साङ्ख्यं- ज्ञातव्ये आत्मतत्त्वे तद्ज्ञानाय या बुद्धिरभिधेया 'नत्वेवाह'मित्यारभ्य 'तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसी'त्यन्तेन सैषा तेऽभिहिता- आत्मज्ञानपूर्वकमोक्षसाधनकर्मानुष्ठाने यो बुद्धियोगो वक्तव्यः स इह योगशब्देनोच्यते-

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ।
स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥४०॥

किञ्चान्यत्—नेति । नेह मोक्षमार्गे कर्मयोगे अभिक्रमनाशोऽस्ति अभिक्रमणमभिक्रमः प्रारम्भस्तस्य नाशो नास्ति- यथा कृष्यादेर्योगविषये प्रारम्भस्य नानैकान्तिकं फलमित्यर्थः । किञ्च- नापि चिकित्सावत् प्रत्यवायो विद्यते- किंतु, स्वल्पमप्यस्य धर्मस्य योगस्यानुष्ठितं त्रायते रक्षति महतो भयात्- संसारभयाज्जन्ममरणादिलक्षणात् ॥४०॥

---

इति, तदसत्—याऽभिधेया सेतिपदत्रयस्य मूलाद्बहिः प्रकल्पनस्याप्रमाणत्वात् । मूलकर्तुरेतद्विवक्षासत्त्वे सैषा ते भिहितेत्येव वक्तव्यत्वात् । तद्ज्ञानाय या बुद्धिरित्यसङ्गतार्थकं वाक्यं- ज्ञानस्यैव बुद्धित्वेन बुद्धेर्ज्ञानार्थकत्वस्यासम्भवात्- नहि स्वयमेव स्वार्थं भवति यत्किमपि ।

तथा कर्मणां मोक्षसाधनत्वं श्रुतिविरुद्धम्-- 'नास्त्यकृतः कृतेन नान्यः पन्था विद्यतेऽयनाय' इत्यादिश्रुतेः । आत्मज्ञानस्यैव मोक्षसाधनत्वं च श्रुतिसिद्धम्--'तरति शोकमात्मवित्, ब्रह्मविद्ब्रह्मैव भव'तीत्यादि श्रुतेः । आत्मज्ञस्य कर्मसु प्रवृत्तिरेव न सम्भवति - 'निष्कलं निष्क्रियं शान्तं, साक्षी चेता केवलो निर्गुण'श्चेत्यादिना अकर्त्रभोक्तविक्रियसाक्षिचैतन्यात्मकमात्मानं विदुषः कथं कर्मसु प्रवृत्तिः- कर्माणि हि कर्त्रादिकारकव्यापारसाध्यानि । तथा कर्मानुष्ठाने या बुद्धिर्वक्तव्या तामिमां शृण्वित्यनेनैव विवक्षितार्थसिद्धेः। कर्मानुष्ठाने. यो बुद्धियोगो वक्तव्यः तत्र या बुद्धिर्वक्तव्या तामिमां शृण्विति कोऽयं वक्रः पन्थाः- कर्मानुष्ठानविषयबुद्धेः कर्मानुष्ठानविषयबुद्धियोगविषयबुद्धेर्वैलक्षण्यस्य दुर्वचत्वात् ॥३९॥

नेहेति ।[१] इहाभिक्रमनाशो नास्ति,[२]प्रत्यवायो न विद्यते, अस्य धर्मस्य स्वल्पं लेशोऽपि महतो भयात्त्रायते,[३]अनुष्ठातारमिति शेषः । मोक्षमार्ग इति ।[४]परम्परया कर्मयोगस्यापि मोक्षहेतुत्वादिति भावः । कृष्यादेरिति[५] ।[६] कृष्यादेः प्रारम्भस्य यथा नाशोऽस्ति[७]तद्वदित्यर्थः । ननु प्रारम्भस्य कथं नाशः? प्रारब्धस्य तु भवेन्नाश इत्यत आह—नानैकान्तिकमिति ।[८]प्रारम्भस्य फलव्यभिचारित्वमेव नाश इत्यर्थः ।[९]कृष्यादिप्रारम्भस्य तु न नियतं फलं- वर्षाभावस्तदाविवर्षादिना निष्फलत्वसम्भवात् । योगविषयप्रारम्भस्य[१०]तु नियतं फलमित्यर्थः । ननु प्रारब्धे योगे अपरिसमाप्ते सति कथं योगप्रारम्भस्यानैकान्तिकं फलं नेत्यत आह—स्वल्पमपीति । योगस्यारम्भमात्रादपि संसारभयनिवृत्तिर्भवेत्किंपुनर्योगस्य परिसमाप्तेरिति द्योतयितुं स्वल्पमपीत्यपिपदम् । ननु रोगनिवृत्त्यर्थं क्रियमाणे चिकित्सात्मके योगे असमाप्तेसति प्रत्यवायोऽस्ति- पूर्वापेक्षया समधिकतरव्याधिविजृम्भदर्शनात् । तथा संसारनिवृत्त्यर्थं क्रियमाणे कर्मयोगे असमाप्तेसति संसारविजृम्भरूपप्रत्यवायस्स्यादित्यत आह—प्रत्यवायो न विद्यत इति । कर्मयोगस्यासमाप्तौ दोषो न विद्यते, परं तु संसारो यथापूर्वं वर्तते इत्यर्थः । यद्वा चिकित्साया अकरणे रोगस्य वृद्धिरूपः प्रत्यवायो विद्यते यथा तद्वत्कर्मयोगस्याकरणे दोषोऽस्ति किमित्यत आह—प्रत्यवाय इति । अकरणे दोषः प्रत्यवाय इति शास्त्रविसमयः- सन्ध्यावन्दनादिवत्कर्मयोगस्याकरणे

व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन !
बहुशाखाह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥४१॥

येयं साङ्ख्ये बुद्धिरुक्ता योगे च वक्ष्यमाणलक्षणा सा—व्यवसायात्मिकेति । व्यव-

---

नास्ति प्रत्यवाय इत्यर्थ । नच सन्ध्यावन्दनादिनित्यकर्मविधानमेव कर्मयोग इति कृत्वा कथमुच्यते सन्ध्यावन्दनादिवदिति वाच्यं, ईश्वराराधनबुद्ध्या कर्मानुष्ठानस्यैव कर्मयोगत्वात् नित्यकर्मविधानस्य फलाभिसन्धिपूर्वकत्वाच्च । नित्यकर्मानुष्ठानमेव फलाभिसन्ध्या विरहितं सत्कर्मयोग इत्युच्यत इति भाव । अथवा रोगनिवृत्त्यर्थं चिकित्साया क्रियमाणाया यथा रसौषध्यादिमारणरूपजीवहिंसावत्त्वेन नरकपात-लक्षण प्रत्यवायोस्ति कर्तुस्तथा कर्मयोगानुष्ठातुर्नास्ति प्रत्यवाय - कर्मयोगे हिंसाऽभावात् । नचात्रापि पशुहिंसादिरस्तीति वाच्य, 'अग्नीषोमीयं पशुमालभे'तेत्यादिशास्त्राद्विहितस्य पश्वालम्भनादेरहिंसा-त्वात् । नच माहिंस्यात्सर्वभूतानीति निषिद्धैव हिंसेति वाच्य, सामान्यविधित्वात्तस्य- विशेषविधिना हि सामान्यविधिर्बाध्यते । नच पश्वालम्भनस्य पशुदुःखहेतुत्वात्कुतो न हिंसात्वमिति वाच्यं, यज्ञादाव लम्भितस्य पशोस्स्वर्गलाभात् । यद्वा चिकित्साया क्रियमाणाया व्याधिनिवृत्तिरवश्यम्भवतीति वक्तुं न शक्यते- प्राणिकर्मविपाकस्य विचित्रत्वात् प्रत्युत व्याध्यतिशयो मरणं वा भविष्यतीत्यस्ति दोष-श्चिकित्साकरणे । एवं कर्मयोगस्य करणे नास्ति य कश्चिद्दोष नियतफलत्वात्कर्मयोगस्य । यद्यपि चिकित्साया अकरणेपि तदुभयं भविष्यति, तथापि तत्करणेपि तदुभयसत्त्वात्तत्करणस्य दुष्टत्वमिति बोध्यम्।

वस्तुतस्तु रोगिणश्चिकित्साकरणात्प्रत्यवायो भिषज एव- स्वकृतचिकित्सया यदि रोगिणो रोग-वृद्धिस्स्यात्, यदि वा मरणं स्यादुभयथापि भिषजो नरकपातलक्षण प्रत्यवाय एव । एवं प्रत्यवायित्वा-देव चिकित्सकानामपाङ्क्तेयत्व स्मर्यते । नच रोगनिवारणात्सुकृतमपि भवेद्भिषज इति वाच्यं, सुकृतप्राप्ते पाक्षिकत्वात् । किंच पाक्षिक्यपि सुकृतप्राप्तिर्नैव- धनाशया चिकित्साया कृतत्वाद्भिषजा, भेषजासिद्ध्यर्थं रसौषधीना भिषजा मारितत्वाच्च नरकपात । नचैवं भिषजामेवाभावे चिकित्साया अप्यभावात्कथं रोगिणा रोगनिवृत्तिरिति वाच्यं, प्रारब्धपापफलस्य व्याधे प्रारब्धावसानेऽवश्य नाशसम्भवात् ।

अपि च भेषजेन यदि व्याधिप्रतिबन्धस्स्यात्तर्हि जन्मान्तरे तद्व्याधिं पुनरनुभवेदेव- अनुभव विना कृतस्य क्षयाभावात् ।

एवं च चिकित्साया अन्वयव्यतिरेकाभ्यां रोगनिवृत्त्यहेतुत्वात्प्रत्युत प्रतिकूलचिकित्साया रोग-वृद्धिमरणहेतुत्वाद्रसौषधीमारणरूपहिंसागर्भत्वाच्च भिषज प्रत्यवायजनकत्वमिति सिद्धम्। नैवं चिकित्सा-कर्तुरिव कर्मयोगकर्तु कोपि प्रत्यवायो विद्यते- हिंसाद्यभावा कर्मयोगे इति भाव । चिकित्सावदिति तत्र तस्येवेति वति । चिकित्सायामिवेत्यर्थ । यथा चिकित्साया प्रत्यवायो विद्यते तथा कर्मयोगे प्रत्यवायो न विद्यत इति व्यतिरेकदृष्टान्त ॥४०॥

व्यवसायेति । हेकुरुनन्दन इह व्यवसायात्मिका एकैव बुद्धिरस्ति । अव्यवसायिना बुद्धय बहुशाखा अनन्ताश्च भवन्ति हि । का सा व्यवसायात्मिका बुद्धिरत आह—येयमिति । स ङ्ख्य

सायात्मिका निश्चयस्वभावैकैव बुद्धिः- इतरविपरीतबुद्धिशाखाभेदस्य बाधिकेयं- सम्यक्प्रमाण-जनितत्वादिह श्रेयोमार्गे- हेकुरुनन्दन- याः पुनरितराः विपरीतबुद्धयः यासां शाखाभेद-प्रचारवशादनन्तोऽपारः अनुपरतसंसारो नित्यं प्रततो भवति । प्रमाणजनितविवेकबुद्धिनिमि-त्तवशाच्चोपरतास्वनन्तभेदबुद्धिषु समारोप्युपरमते । ताः बुद्धयो बहुशाखाः बह्व्यश्शाखा यासां ता बहुशाखाः बहुभेदा इत्येतत् । प्रतिशाखाभेदेन ह्यनन्ताश्च बुद्धयः । तेषां अव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानामित्यर्थः । येषां व्यवसायात्मिका बुद्धिर्नास्ति ते ॥४१॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ।
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥४२॥
कामात्मानस्स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥४३॥

यामिति । यामिमां वक्ष्यमाणां पुष्पितां पुष्पितवृक्षवच्छोभनां श्रूयमाणरमणीयां

विषया योगविषया चेत्यर्थः । ननु साङ्ख्यबुद्धेर्योगबुद्धेश्च परस्परं भिन्नत्वात्कथमेकत्वमिति चेदुच्यते— नात्र बुद्धिद्वयस्यैकत्वमुक्तं, किंतु साङ्ख्ये न बह्व्यो बुद्धयस्सन्ति, तथा योगे च न बह्व्यो बुद्धयस्सन्ति - परं तु एकैव व्यवसायात्मिका बुद्धिस्साङ्ख्ये, तथा योगे च व्यवसायात्मिका बुद्धिरेकैवेति साङ्ख्ययोगयोः प्रत्येकमेकबुद्धिमत्त्वमुक्तमिति । तदेवाह—इतरेति । इतरा विपरीताश्च या बुद्धिशाखास्तासां भेदस्य । अनेकशाखाभिन्नेतरविपरीतबुद्धीनामित्यर्थः । कुतोस्या इतरबुद्धिभेदबाधकत्वमत आह—सम्यगिति । निर्दुष्टशास्त्रप्रमाणजनितत्वादित्यर्थः । इहेत्यस्य साङ्ख्ययोगकर्मयोगसाधारण्यायाह—श्रेयोमार्गे इति । अविक्रियः सर्वगतः नित्य एकः स्वयम्प्रभोऽप्रमेय आत्मेत्येवंरूपनिश्चयस्वभावा साङ्ख्यबुद्धिः- फलसङ्गं त्यक्त्वा ईश्वराराधनार्थतया सिद्ध्यसिद्ध्योस्समस्सन् शास्त्रविहितानि कर्माणि कुर्यादित्येवंनिश्चयस्वभावा योगबुद्धिः- विपरीतबुद्धयस्तु आत्मा कर्ता भोक्ता च धर्मादिपुरुषार्थास्तेन सम्पादितव्याः-- 'ज्योतिष्टोमेन स्वर्गकामो यजेत, पशुकामः कारीर्येष्ट्ये'त्येवमादयः इति विवेकः ।

अत्र यदाह रामानुजः—आत्मयाथात्म्यनिश्चयपूर्विका व्यवसायात्मिका बुद्धिरेकफलसाधन-विषयतयैका- एकस्मै मोक्षाख्यफलाय हि कर्माणि विधीयन्त इति, तत्तुच्छम्—नित्यत्वस्वयंप्रकाश-स्वानन्दत्वापहतपाप्मत्वादिरूपमात्मयाथात्म्यं पक्षद्वयसम्मतम् । यस्यास्त्येतन्निश्चयः तस्य कथं कर्मसु प्रवृत्तिस्स्यात्- न कथमपि- कर्मसम्पाद्योत्कर्षाभावात्, कर्मनिवार्यापकर्षाभावाच्च, अनेककारकोपसंहार-पूर्वककर्मानुष्ठानदुःखस्यानन्दे आत्मन्ययोगाच्च, मोक्षस्य कर्मसाध्यत्वे घटादिवदनित्यत्वाच्च, सकामानां स्वर्गाद्यर्थं निष्कामानां चित्तशुद्ध्यर्थं च कर्मणां विहितत्वेन मोक्षविहितत्वासम्भवाच्च । 'ज्योतिष्टोमेन स्वर्गकामो यजेत, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके'नेत्यादिश्रुतेः मोक्षकाम इदं कुर्यादिति श्रुत्यभावाच्च, नित्ये आत्मनि क्रियावत्त्वादिरूपविकारायोगाच्च । किंच व्यवसा-यात्मिकेतिपदान्निश्चयपूर्विकेत्यर्थोऽपि दुर्लभः- आत्मशब्दस्य पूर्वार्थाभावात् ॥४१॥

यामिति । कामात्मान इति च श्लोकद्वयस्यैकान्वयः । हेपार्थ वेदवादरताः अन्यन्नास्तीति

वाचं वाक्यलक्षणां प्रवदन्ति अविपश्चितः अमेधसः अविवेकिन इत्यर्थः। वेदवादरताः बह्वर्थवादफलसाधनप्रकाशकेषु वेदवाक्येषु रताः। हे पार्थ नान्यत्स्वर्गपशुपुत्रादिफलसाधनेभ्यः कर्मभ्यः अस्तीत्येवंवादिनः वदनशीलाः ॥४२॥

ते च के—कामात्मान इति। कामात्मानः कामस्वभावाः कामपरा इत्यर्थः। स्वर्गपराः स्वर्गः परः पुरुषार्थो येषां ते स्वर्गपराः- स्वर्गप्रधानाः जन्मकर्मफलप्रदां कर्मणः फलं जन्मैव कर्मफलं तत्प्रददातीति जन्मकर्मफलप्रदां तां वाचं प्रवदन्तीत्यनुषज्यते। क्रियाविशेषबहुलां क्रियाणां विशेषाः ते बहुलाः यस्यां तां- स्वर्गपशुपुत्राद्यर्थाः यया वाचा बाहुल्येन प्रकाश्यन्ते भोगैश्वर्यगतिं प्रति भोगश्च ऐश्वर्यं च भोगैश्वर्ये तयोः प्राप्तिः भोगैश्वर्यगतिः तां प्रति साधनभूतास्ते क्रियाविशेषास्तद्बहुलां वाचं प्रवदन्तो मूढाः संसारेषु परिवर्तन्त इत्यभिप्रायः ॥४३॥

भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ।
व्यवसायात्मिका बुद्धिस्समाधौ न विधीयते ॥४४॥

तेषां च भोगैश्वर्यप्रसक्तानां भोगः ऐश्वर्यं चेति भोगैश्वर्ये तयोरेव प्रणयवतां तदात्मभूतानां तया क्रियाविशेषबहुलया वाचा अपहृतचेतसां आच्छादितविवेकप्रज्ञानां- व्यवसा-

वादिन कामात्मान स्वर्गपरा अविपश्चित - भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुला जन्मकर्मफलप्रदा पुष्पिता यामिमा वाचं प्रवदन्तीति यच्छब्दस्य तु तयेति तृतीयश्लोकस्थतच्छब्देनान्वय ।

पुष्पाण्यस्यासञ्जातानि पुष्पिता- तदस्य सञ्जातमिति तारकादित्वादितच्। कथं वृक्षधर्मस्य पुष्पवत्त्वस्य वाचो लाभ इत्यत आह—पुष्पितवृक्षवदिति। औपचारिकप्रयोग इति भाव । फलितार्थमाह—श्रूयमाणेति। यथा पुष्पितवृक्षो दृश्यमानरमणीयस्तद्वदियं वाक् श्रूयमाणरमणीया श्रूयमाणं रमणीयं यस्यास्सा श्रूयमाणरमणीया- श्रवणमात्रमनोहरेत्यर्थ । ससाररूपदु खावसानत्वादिति भाव । वाक्यं लक्षणं यस्यास्सा वाक्यलक्षणा- वाक्यरूपेत्यर्थ । वाक्यमिति यावत्। आकाङ्क्षादिमत्पदकदम्बकं वाक्यमिति बोध्यम्। विशेषेण पश्यन्ति जानन्तीति विपश्चित - पृषोदरादित्वात्साधु । न विपश्चितोऽविपश्चित । जन्मनैव कर्मफलमिति। यज्ञादिविहितकर्मण फलं स्वर्गानुभव स च देवत्वेन जातेनानुभाव्य हिंसादिनिषिद्धकर्मण फल नरकं, तद्धि नारकत्वेन जातेनानुभाव्यं मिश्रकर्मण फल मनुष्यलोक स हि मनुष्यत्वेन जातेनानुभाव्य इत्येव कर्मफलानुभवस्य देवादिजन्मपरिग्रहपूर्वकत्वात्कर्मण फल जन्मैवेत्युक्तम्। परिवर्तन्ते भ्रमन्ति- जन्मनो मरणं मरणाज्जन्म चेत्यविच्छेदेन संसरन्तीत्यर्थ ॥४२,॥४३॥

भोगेति। तयाऽपहृतचेतसा भोगैश्वर्यप्रसक्ताना समाधौ व्यवसायात्मिका बुद्धिर्न विधीयते। तदात्मभूतानामिति। भोगैश्वर्याभिनिविष्टान्त करणतादात्म्याध्यासवता- बहिर्मुखानामित्यर्थ । समाधीयते निक्षिप्यते ईश्वरेणेति शेष । पुरुषस्य नास्ति स्वतो भोग अभोक्तृत्वात्किन्तु अन्त करणस्य विज्ञानबुद्ध्यपरपर्यायस्य भोक्तृतादात्म्याध्यासेनैव यथाह माघ -'समीक्ष्योक्ते बुद्धेर्भोग इवात्मनीति। साङ्ख्योक्ते

यात्मिक साङ्ख्ये योगे वा बुद्धिः समाधौ समाधीयतेऽस्मिन् पुरुषोपभोगाय सर्वमिति समाधि-रन्तःकरणं बुद्धिस्तस्मिन् समाधौ न विधीयते न भवतीत्यर्थः ॥४४॥

त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ।
निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥४५॥

य एवं विवेकबुद्धिरहितास्तेषां कामात्मनाम्—त्रैगुण्येति । त्रैगुण्यं संसारो विषयः प्रकाशयितव्यः येषां वेदानां ते वेदाः त्रैगुण्यविषयाः- त्वं तु निस्त्रैगुण्यो भवार्जुन- निष्कामो भवेत्यर्थः - निर्द्वन्द्वः सुखदुःखहेतुभूतौ सप्रतिपक्षौ पदार्थौ द्वन्द्वशब्दवाच्यौ- ततो निर्गतः निर्द्वन्द्वो भव । किंच नित्यसत्त्वस्थो भव, सदा सत्त्वगुणाश्रयो भव, तथा निर्योगक्षेमो भव। अनुपात्तस्योपादानं योगः, उपात्तस्य रक्षणं क्षेमः, योगक्षेमप्रधानस्य श्रेयसि प्रवृत्तिर्दुष्करे-त्यर्थः। अतो निर्योगक्षेमो भव, आत्मवान् अप्रमत्तश्च भवेति एष तवोपदेशः स्वधर्ममनुतिष्ठतः॥

यावानर्थ उदपाने सर्वतस्सम्प्लुतोदके ।
तावान् सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥४६॥

सर्वेषु वेदोक्तेषु कर्मसु यान्यनन्तानि फलानि तानि नापेक्ष्यन्तेचेत् किमर्थं तानीश्वराये !

---

आत्मनि बुद्धेर्योग इवेत्यर्थ । तस्मात्पुरुषोपभोगाय कामादिकं सर्वमन्त करणे सप्तमीश्वरेणेति कृत्वा समाधिरन्त करणं भवति । नच बुद्धेर्बुद्धौ कथं विधानमिति वाच्यं, ज्ञानस्यान्त करणे विधानमित्यदोषत्। न विधीयत इति कर्मकर्तरि लकार इत्याह—न भवतीति । न जायत इति यावत् । वस्तुतस्तु न विधीयते ईश्वरेणात्मनेति शेष । तस्यैव सर्वबुद्धिप्रेरकत्वात् मत्त स्मृतिर्ज्ञानमपोहन चेति वक्ष्यमाणत्वात् इति ॥४४॥

त्रैगुण्येति । त्रैगुण्यविषयास्संसारप्रकाशकाः सत्त्वादित्रिगुणजन्यत्वात्सुखदु खादिलक्षणसंसारस्य त्रैगुण्यव्यपदेश । केषामित्यत आह—कामात्मनामिति । निर्गतं त्रैगुण्यं यस्मात्स निस्त्रैगुण्य निस्संसार इत्यर्थ । कामस्यैव संसारहेतुत्वा फलितमाह—निष्काम इति । सप्रतिपक्षौ परस्परं प्रति-पक्षावित्यर्थ । पदार्थौ शीतोष्णादिरूपौ ततो निर्गत इति निरादय क्रान्ताद्यर्थे पञ्चम्येति समास । निर्द्वन्द्व इति द्वन्द्वसह इत्यर्थ । दुष्करेति । अनुपात्तस्य धनधान्यादेरुपादाने, उपात्तस्य च तस्य रक्षणे व्यग्रस्य संसारिणः कथं मोक्षमार्गे प्रवृत्तिर्न कथमपीत्यर्थः ।

आत्मवानित्यत्र आत्मशब्दस्य देहमनोबुद्धिपुरुषादिरूपस्य यस्य कस्याप्यर्थस्य बोधकत्वं न सम्भवति आत्मवानित्ये प्रसक्ते सति हि आत्मवत्त्वं विधेयम्- तदेव न सम्भवति देहादिरूपाणामात्मनां विधानात्प्रागेव सत्त्वादित्यभिप्रेत्य अप्रमत्त इत्युक्तम् । मनोवाचिनो बुद्धिवाचिनो वा आत्मशब्दस्य तद्धर्मे अवधाने लक्षणेति भाव.। एष इति । निस्त्रैगुण्य इत्यादिना प्रोक्त इत्यर्थ । स्वधर्ममनुतिष्ठन-स्तवेत्यन्वयः ॥४५॥

यावानिति श्लोकमवतारयति—सर्वेष्विति । फलाभावाद्योगमार्गो व्यर्थ इति प्रष्टुराशय. ।

स्यनुष्ठीयन्त इति उच्यते तच्छृणु—यावानिति । यथा लोके कूपतटाकादावनेकस्मिन्नुदपाने परिच्छिन्नोदके यावान्यावत्परिमाणः स्नानपानादिरर्थः फलं प्रयोजनं स सर्वोर्थः सर्वतस्सम्प्लुतोदके योर्थस्तावानेव सम्पद्यते तत्रान्तर्भवतीत्यर्थः । एवं तावान् तावत्परिमाण एव सम्पद्यते । सर्वेषु वेदेषु वेदोक्तेषु कर्मस्वर्थो यो यत्परिमाणं कर्मफलं सोऽर्थो ब्राह्मणस्य सन्न्यासिनः

---

आक्षेपसमाधानं प्रतिजानीते— उच्यते तदिति । तच्छब्दस्य योगानुष्ठानस्य फलमित्यर्थः । किमिधमिति फलस्यैवाक्षिप्तत्वादिति भावः । श्रोतुस्सावधानत्वापादनायाह—शृण्विति वाक्यार्थः कर्म । यावानिति । यावत्तावदर्थशब्दानामावृत्तिः । उदपाने यावानर्थः सर्वतस्सम्प्लुतोदके तावानर्थः सर्वेषु वेदेषु यावानर्थः विजानतो ब्राह्मणस्य तवानर्थ इत्यन्वयः ।

पूर्वार्थस्य दृष्टान्तत्वादाह—यथेति । दृष्टान्तार्थस्य लोकसिद्धत्वादाह—लोके इति । उदकं पीयतेस्मिन्निति उदकस्य पानं यस्मिंस्तदिति वा व्युत्पत्त्या उदकस्योदस्सञ्ज्ञायामित्युदादेशे सिध्यत्युदपानमिति रूपं, किं तदुदपानमत आह—कूपेति । आदिपदाद्वाप्यादिग्रहणम् । उदपानानां नानात्वादाह—अनेकस्मिन्निति । कस्मादनेकत्वमत आह—परिच्छिन्नेति । परिच्छिन्नत्वस्य नानात्वप्रयोजकत्वादिति भावः ।

यावानिति । यच्छब्दात्परिमाणे डवतुब्विहित इत्यभिप्रायादाह—यावत्परिमाण इति । अर्थविशेषं दर्शयति—स्नानेति । अर्थशब्दार्थमाह—फलमिति । फल्गुत्वेन लीयत इति फलम् । यावदर्थमाह—प्रयोजनमिति । स इति । एतदानुगुण्येन स्नानपानादिरर्थ इत्यत्र स्नानपानादिर्योर्थ इति यच्छब्दाध्याहारो बोध्यः । ननु य.कश्चनार्थ इत्याह—सर्व इति । सर्वतस्सम्प्लुतं व्याप्तमुदकं यस्य तस्मिन् सर्वतस्सम्प्लुतोदके अपरिच्छिन्नोदके समुद्रे इत्यर्थः । मूले क्रियापदाभावात्तदध्याहृत्याह—सम्पद्यत इति । जायत इत्यर्थः । ननु परीच्छिन्नोदके यावानर्थोऽपरिच्छिन्नोदकेपि तावानर्थ इति कथमुच्यतेऽत आह—तत्रान्तर्भवतीति । परिच्छिन्नोदकानां कूपादीनामपरिच्छिन्नोदकसमुद्रांशत्वाद्घटाकाशानां महाकाशांशत्ववदिति भावः । नच कथं कूपादीनां समुद्रांशत्वं समुद्रव्यवहितत्वादिति वाच्यं, समुद्रमध्ये भुव ईश्वरेण स्थापितत्वात्समुद्रजलस्यैव भूगतवापीकूपेष्वनुगतत्वान्नदीतटाकादिषु च मेघवृष्टिद्वारा तज्जलस्यैव वर्तमानत्वाच्च । तस्माल्लोके येऽस्माभिः कूपे तटाकादौ वा स्नातं जलं पीतमिति मन्यन्ते तैस्सर्वैस्समुद्र एव स्नातं समुद्रजलमेव पीतं भवति वस्तुत इति भावः ।

उत्तरार्थस्य दार्ष्टान्तिकत्वादाह—एवमिति । तावच्छब्दस्य पूर्वमनुक्तार्थत्वादाह—तावत्परिमाण इति । वेदेषु फलाभावादाह—वेदोक्तेषु कर्मस्विति । यज्ञादिष्वित्यर्थः । यावानित्यस्यात्राप्यन्वय इत्यभिप्रेत्याह—यत्परिमाणमिति । कर्मफलं स्वर्गादिकम् । योर्थ इति । यच्छब्दस्योक्तत्वादाह—सोर्थ इति । इदं च यत्तच्छब्दद्वयमन्वयसौष्ठवाय भाष्यकारैरध्याहृतम् ।

नायं जातिमात्रवाची ब्राह्मणशब्दोऽमुख्यः, किंतु मुख्य एवेत्याह—सन्न्यासिन इति । 'जन्मना जायते शूद्रः कर्मणा जायते द्विजः । वेदपाठेन विप्रस्स्याद्ब्रह्मज्ञानेन ब्राह्मणं' इति वच-

परमार्थतत्त्व विजानतः योऽर्थो विज्ञानफलं यत् सर्वतसम्प्लुतोदकस्थानीय तस्मिन् तावानेव

नात् ब्रह्मज्ञानस्य च वेदान्तश्रवणाद्यधीनत्वात्तत्र च शान्तो दान्त उपरत इति सन्यासिन एवाधिकारा द्ब्राह्मणो निर्वेदमायादिति ब्राह्मणजातीयस्यैव सन्न्यासेऽधिकाराच्च ब्रह्मज्ञानिब्राह्मणसन्न्यासिपरएव मुख्यो ब्राह्मणशब्द इति भाव । ब्रह्मणोय ब्राह्मण । वेद्यवेदितृभावरूपसम्बन्धे शेषे तस्येदमित्यण् । ब्रह्मवि दित्यर्थ । नच ब्राह्मो जातावितिं पाणिनिसूत्रादजातौ ब्राह्म इति स्यादिति वाच्य, तत्र ब्रह्मशब्दस्य पुलिङ्गस्य हिरण्यगर्भार्थकस्य ग्रहणात् । अत्र ब्रह्मशब्दस्य परब्रह्मवाचित्वाच्च । अतएवाजातौ किं ब्राह्मो नारद इति प्रत्युदाहृतम्—उत्सङ्गान्नारदो जज्ञे इति हिरण्यगर्भाङ्गभवत्वान्नारदस्य । किंच 'ब्राह्मणोस्य मुखमासी'दिति श्रुतिश्च ब्राह्मणादिजात्युत्पत्तिहेतुं साकारमेव पुरुष निर्दिशति न तु निराकार ब्रह्म-तस्य मुखाद्यवयवाभावात् । नच ब्राह्मणशब्दो ब्रह्मज्ञानिनमेव वक्ति नतु सन्न्यासिनमिति वाच्यं, असन्न्यासिनो ब्रह्मज्ञानित्वाभावात् । नच गृहस्थो जनकादिर्ब्रह्मज्ञान्येवेति वाच्य, जनकादेर्यदि ब्रह्म नित्वेन ब्राह्मणत्वं स्यात्तर्हि कर्मगतफलाभिसन्धिकर्तृत्वपरित्यागेन सन्न्यासित्वमपि स्यात् जनकादे कर्माकर्मैवेत्युक्तत्वात् । 'कर्मण्यभिप्रवृत्तोपि नैव किञ्चित्करोति स' इति मूल एव वक्ष्यमाणत्वाच्च । कर्मणामकर्तृत्व हि सन्न्यास तस्माद्ब्राह्मणस्सन्न्यास्येव ।

अस्तु वा सूत्रगतब्रह्मशब्दस्य परब्रह्मवाचित्व तथापि न काचिदत्रानुपपत्ति ब्राह्मणजातीयस्यैव सन्न्यास इत्युक्तत्वात् । नन्वेवं ब्राह्मणस्येत्यस्य ब्राह्मणजातीयो गृहस्थादिरप्यर्थस्स्यादिति वाच्य, वि ानत इति विशेषणात् विजानत्त्वं हि ब्रह्मवित्त्व तच्चास न्यासिनो न भवत्येवेति । एतेन ब्राह्मणस्य वैदिक स्येति रामानुजोक्तार्थ परास्तः—तस्य तत्त्वविज्ञानाभावेन विजानत इति विशेषणासाङ्गत्यप्रसङ्गात् । नच वेदविदो वैदिका एव ब्रह्मविद इति वाच्य, 'वेदवादरता पार्थ नान्यदस्तीति वादिन । त्रैगुण्य विषया वेदा' इति वेदविदामब्रह्मवित्त्वस्य वेदाना त्रैगुण्यपरत्वस्य च भगवतैवोक्तत्वात् ।

यत्तत्र वेदान्तदेशिकः—ब्रह्मानितीति निरुक्त्या ब्राह्मण शकन्ध्वादिषु पररूप वक्तव्यमिति पररूपे कृते प्रज्ञादित्वादण्प्रत्यये च ब्राह्मण इति रूप भवति ब्रह्म चात्र वेद इति, तत्तुच्छम्—प्रज्ञा दिषु ब्रह्मणशब्दाभावात् ब्रह्मण इति क्वापि प्रथमान्तपदप्रयोगाभावेन प्रज्ञादिषु शकन्ध्वादिषु वा आकृति गणत्वेन तद्ग्रहणायोगात्- प्रसिद्धपदप्रयोगनिर्वहणाय हि स्वीकृत आकृतिगण । किंच ब्रह्मानितीति व्युत्पत्तौ कर्मण्यण् स्यात् ततश्च वृद्धौ ब्रह्माण इत्येव स्यादिति । किं विजानतोऽत आह—**परमार्थ-सत्त्वमिति** । ब्रह्मेत्यर्थ । विजानदर्थस्य न ज्ञानफलत्वादाह—**विज्ञानफलमिति** । पूर्वोक्तदृष्टान्त-वाक्यस्थेन केन पदार्थेन सहास्य बिम्बप्रतिबिम्बभावोत आह—**यत्सर्वत इति** । सर्वतस्सम्प्लुतोदक-पल्स्थानीयमित्यर्थ । विज्ञानस्यैव सर्वतस्सम्प्लुतोदकस्थानीयत्वादिति भाव । स्थानीयं तुल्यमित्यर्थ । तस्मिन्निति विज्ञानफले अपरिच्छिन्ने ब्रह्मानन्दे इत्यर्थ । ब्रह्मानन्दलक्षणमोक्षस्यैव विज्ञानफलत्वादिति भाव । तावानेव सम्पद्यत इति तत्रैवान्तर्भवति 'एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीव'न्तीति श्रुते । अपरिच्छिन्नब्रह्मानन्दाशत्वात्परिच्छिन्नस्वर्गादिविषयानुभवजन्यानन्दानामिति भाव ।

}

सम्पद्यते । 'सर्वं तदभिसमेति यत्किञ्च प्रजास्साधु कुर्वन्ति यस्तद्वेद यत्सवेदे'ति श्रुतेः । सर्वं कर्माखिलमिति च वक्ष्यति- तस्मात् प्राक् ज्ञाननिष्ठाधिकारप्राप्तेः कर्मण्यधिकृतेन कूपतटाकाद्यर्थस्थानीयमपि कर्म कर्तव्यम् ॥४६॥

---

ननु कर्मफल ज्ञानफलेऽन्तर्भवतीत्यत्र किं प्रमाणमत आह--**सर्वमिति** । प्रजा यत्किञ्च साधु सत्कर्म कुर्वन्ति तत्सर्वं स इति शेष । अभिसमेति प्राप्नोति कस्स इत्यत आह—**यस्तद्वेदेति** । किं तदित्यत आह—**यत्सवेदेति** । स रैक्वो यद्वेद तद्ब्रह्म यो वेद स तत्त्ववित्प्रजाकर्तृकसर्वसाधुकर्मफल प्राप्नोति तत्त्वविद्प्राप्तब्रह्मानन्दांशत्वात्प्रजा साधुकर्मफलभूतानन्दस्येति भाव । स्मृतिमपि प्रमाणयति—**सर्वमिति** । 'सर्वं कर्माखिल पार्थ ज्ञाने परिसमाप्यत' इति गीताश्लोक । ज्ञानफले कर्मफलस्यान्तर्भावाद्ज्ञाने कर्मण परिसमाप्तिरित्यर्थ ।

अयमत्र भाष्यपदान्वय —यथा उदपाने यावान्योर्थ स सर्वोर्थ सर्वतस्सम्प्लुतोदके योर्थस्तावानेव सम्पद्यते- एव सर्वेषु वेदेषु यावान्योर्थ सोर्थ विजानतो ब्राह्मणस्य योर्थ तावानेव सम्पद्यते इति । श्लोकव्याख्यामुपसंहरन् फलितमाह—**तस्मादिति** । समुद्रफले कूपफलस्येव विज्ञानफले कर्मफलस्यान्तर्भावादित्यर्थ । अधिकृतेन कर्म कर्तव्यमित्यन्वय । काधिकृतेनेत्यत आह—**कर्मणीति** । कियत्पर्यन्तमत आह—**प्रागिति** । ज्ञाननिष्ठाया यावता कालेनास्याधिकारो भवति तावत्पर्यन्तमित्यर्थ । ज्ञाननिष्ठाधिकारप्राप्त्यनन्तरं तु कर्म नैव कर्तव्यमिति भाव । कीदृश कर्मेत्यत आह—**कूपेति** । अर्थशब्दोत्र वस्तुवाच्येव, नतु फलवाची । कूपतटाकादिस्थानीयमित्यर्थ । अपिशब्दाद्विज्ञानादल्पत्वेन कर्तुमयुक्तमपीति गम्यते । विज्ञानेऽधिकाराभावादिति भाव ।

ननु किमर्थं कर्मयोगानुष्ठानमिति यदादावाक्षिप्त तस्य किं समाधानमायातमिति चेदुच्यते—मोक्षप्रदाया ज्ञाननिष्ठायामनधिकाराभावात्तदधिकारसिद्ध्यर्थं कर्मयोगानुष्ठानमिति । नच नायं समाधानार्थो मूलादायातीति वाच्यं, अर्थादेतत्सिद्धे । तथाहि—विज्ञानमेव सर्वस्सम्पाद्यं समुद्रफले कूपफलस्येव विज्ञानफले ब्रह्मानन्दे एव सर्वकर्मफलविषयानन्दानामन्तर्भावात् । तच्च विज्ञानं कर्मयोगानुष्ठान विना दुस्सम्पादमिति कृत्वा मुमुक्षुणा विज्ञानसिद्ध्यर्थं कर्मयोगोऽनुष्ठेय इति । एवं ज्ञानप्राप्तिद्वारा अपरिच्छिन्नब्रह्मानन्दप्राप्तिहेतुत्वात्तत्क्षुद्रफलान्यनभिसन्धाय विहितानि कर्माण्यधिकृतेन कर्तव्यानीति परमार्थ ।

अत्र भाष्ये कर्मफलमित्यस्य अनभिसंहितकर्मफल चित्तशुद्धिरूपार्थ इत्यर्थ । कूपतटाकाद्यर्थस्थानीयमित्यस्य कूपतटाकादौ योऽर्थ स्नानपानादिक्रिया तत्तुल्यमित्यर्थ । ततश्च समुद्रे सिस्नासु पुरुष यथा समुद्रस्नानाधिकारसिद्ध्यर्थं समुद्रस्नानात्प्राक्कूपतटाकादौ स्नानाचमनादिक्रिया करोति तथा मुमुक्षु पुरुष मोक्षसाधनज्ञाननिष्ठाधिकारसिद्ध्यर्थं तत प्रागफलाभिसन्धि विहितं कर्म कुर्यात् । स यथा कूपादि स्नानानन्तरं समुद्रे स्नाति देहस्य शुद्धत्वात्- तथाऽयं कर्मयोगानुष्ठानानन्तरं ज्ञाननिष्ठा प्राप्नुयाच्चित्तस्य शुद्धत्वात् । यथा तस्य कूपादिस्नानस्य फलं समुद्रस्नानफले एवान्तर्भवति, समुद्रस्नानातिरिक्तकूपादिस्नानजन्यफलाभावात् तथाऽस्यापि कर्मफल विज्ञानफले एवान्तर्भवति । एव च कूपस्नानसमुद्रस्नानयोरेव

कर्मज्ञानयोगयोरस्त्युपजीव्योपजीवकभावः- कूपस्नानसाध्यत्वात्समुद्रस्नानस्य, कर्मयोगसाध्यत्वाच्च ज्ञानयोगस्य उभयोः फलविषये तु हस्तिमशकान्तरमस्त्येव- कूपस्नानस्य देहमलापाकरणमात्रफलकत्वात्समुद्रस्नानस्य च सर्वनदीस्नानजन्यमहाफलकत्वात् । तथा- कर्मयोगस्य चित्तशुद्धिमात्रफलकत्वाद्विज्ञानस्य च निरतिशयानन्दमोक्षरूपपरमपुरुषार्थफलकत्वादिति केचिद्वर्णयन्ति । अस्मिन्पक्षे- किमर्थं कर्मयोगानुष्ठानमित्याक्षेपस्य समुद्रस्नानाधिकारसिद्ध्यर्थं कूपादिस्नानमिव ज्ञाननिष्ठाधिकारसिद्ध्यर्थं कर्मयोगानुष्ठानमिति कण्ठोक्तमेवोत्तरं सिद्ध्यति ।

ननु 'कूपे पश्य पयोनिधावपि घटो गृह्णाति तुल्यं जल'मिति न्यायेन पिपासुरुदकपाने यावत्परिमाणं जलं पिबति सर्वतस्सम्प्लुतोदकेपि तावत्परिमाणमेव जलं पिबति । नच समुद्रजलमपेयमिति वाच्यं, वाप्यभूतस्य समुद्रजलस्य पेयत्वात् इत्यनेनोच्यत इतिचेत्, मैवम्—दार्ष्टान्तिकाननुरोधात्सकृनस्यार्थस्य । नच दार्ष्टान्तिकेपि सर्वेषु वेदोक्तेषु कर्मसु यावत्फलं लभते कर्मी तावदेव सन्यासी विज्ञाने फलं लभत इत्यर्थो वाच्य इति वाच्यं, कर्मफलेभ्यस्स्वर्गादिभ्योऽनित्येभ्यः विज्ञानफलस्य मोक्षस्य नित्यस्य परमोत्कृष्टत्वात् ।

अत एव हि 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुत्या कर्मफलेषु स्वर्गपशुपुत्रादिषु क्षयिष्णुत्व सातिशयत्वादिदोषदर्शनेन यस्य पुरुषस्य यस्मिन्नहनि विरागो जायते स तस्मिन्नेवाहनि सन्यासं स्वीकुर्यादित्युक्तम् । अन्यथा विज्ञानफलस्यापि कर्मफलतुल्यत्वे अथातो ब्रह्मजिज्ञासेत्यारब्धं वेदान्तशास्त्रं व्यर्थमेव स्यात्, अथातो धर्मजिज्ञासेति पूर्वमीमांसाशास्त्रेणैव स्वर्गादिलाभात् । नच व्यर्थं भवतु को दोष इति वाच्यं, 'तरति शोकमात्मवित्, ब्रह्मविद्ब्रह्मैव भवति, आत्मावाऽरे द्रष्टव्य' इत्यादिज्ञानतत्फलविधायकश्रुतिशतविरोधात्- तस्याप्यङ्गीकारेनुभवविरोधो बलवान् जागर्ति- कर्मिणां दुःखात्मकसंसारस्यानुपरमदर्शनात्, सन्यासिनां तदुपरमेण निरतिशयात्मानन्दानुभवदर्शनाच्च । तस्माद्विज्ञानफलकर्मफलयोर्हस्तिमशकयोरिव महदन्तरम् । नचानभिसंहितफलानां कर्मणां मोक्षः फलमिति वाच्यं, चित्तशुद्धेरेव फलत्वादिति । अत्र यथा गङ्गायमुनादितत्तन्नदीस्नानादिजन्यानि तानि तानि फलानि समुद्रस्नानादेकस्मादेव पुरुषस्य भवन्ति तथा तत्तत्कर्मजन्या हैरण्यगर्भाद्यानन्दा एकस्मादेव ब्रह्मज्ञानाद्विदुषो भवन्तीति कतिचिद्वर्णयन्ति ।

यत्त्वाह रामानुजः—नच वेदोदितं सर्वं सर्वस्योपादेयं- यथा सर्वार्थपरिकल्पिते सर्वतस्सम्प्लुतोदके उदपाने पिपासोर्यावानर्थः यावदेव प्रयोजनं पानीयं तावदेव तेनोपादीयते न सर्वमेवं सर्वेषु च वेदेषु ब्राह्मणस्य विजानतो वैदिकस्य मुमुक्षोर्यदेव मोक्षसाधनं तदेवोपादेयं नान्यदिति । तन्मन्दम्—सर्वतस्सम्प्लुतोदकशब्दात्सर्वार्थपरिकल्पितत्वरूपार्थालाभात्- कूपादेस्स्नानादियत्किञ्चिदर्थपरिकल्पितत्वेन सर्वार्थपरिकल्पितत्वाभावाच्च नहि क्षीरपक्वादिकमस्य कूपादिना यः कश्चिदर्थः । सर्वशब्दस्य संकोचश्च न न्याय्य. । तथा यावत्प्रयोजनं तावत्तेनोपादीयत इत्यप्ययुक्तम्—जन्यस्यैवोपादेयत्वेन प्रयोजनस्यानुपादेयत्वात् । प्रयोजनवाचिनोर्थशब्दस्य जलवाचित्वाभावात् । यावतार्थेन जलेन प्रयोजनं तावदेव जलं

कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ॥४७॥

तव च– कर्मणीति । कर्मण्येवाधिकारः न ज्ञाननिष्ठायां ते तव- तत्र च कर्म कुर्वतः मा फलेष्वधिकारोऽस्तु कर्मफलतृष्णा माभूत् । कदाचन कस्यांचिदप्यवस्थायामित्यर्थः । यदा कर्मफले तृष्णा ते स्यात् तदा कर्मफलप्राप्तेर्हेतुः स्याः, एवं मा कर्मफलहेतुर्भूः यदा हि कर्म-

तेनोपादीयत इति वक्तव्यत्वात् । नच तथैव वदामीति वाच्यं, यावानिति प्रथमान्तपदस्वरसात् । तेनेति उपादीयत इति च कर्मक्रिययोर्द्वयोर्मूलाद्बहिः कल्पितत्वात् । पिपासोरिति च नियन्तुमशक्यम्—सिष्णास्वादिसत्त्वात् । यदि पिपासोरित्युदाहरणार्थं तर्हि आरामसेचनेच्छोरपि ग्रहणं स्यात् । नचेष्टापत्तिः—तस्य सर्वेणापि कूपजलेन प्रयोजनसत्त्वात् । तावदेव तेनोपादीयते न सर्वमिति वक्तुमशक्यत्वात् ।

तथा ब्राह्मणशब्दाद्वैदिकार्थलाभः प्रागेव प्रत्युक्तः । विजानत इति शब्दाच्च न मुमुक्षुलाभः- वेदवादरतानां वैदिकानां बहूनां कामात्मनामेव दर्शनात्- वैदिकस्याथातोधर्मजिज्ञासेति कर्मस्वेव प्रवृत्तत्त्वेन मुमुक्षुत्वासम्भवात्- 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुने'ति भगवतैव वैदिकत्वस्य कामहेतुत्वेन दूषितत्वात्- निष्कामस्यैव मुमुक्षुत्वाच्च- निष्कामस्तु न वैदिक', किंतु वेदान्त्येवेति सिद्धान्तात् ।

यो विशेषेणात्मतत्त्वं विजानाति स हि विजानन्नित्युच्यते, सच मुक्त एवेति किमिति मुमुक्षुत्वं तस्य । त्वयापि नित्यमुक्तानामनन्तगरुडादीनामीश्वरस्य च विजानत्त्वमभ्युपगतम् । किं च मुमुक्षोरेव ज्ञानेऽधिकारः- मुमुक्षुर्हि वेदान्तश्रवणादिकं कृत्वा तमात्मानं विशेषेण जानातीति कथं विजानत्वस्यैव मुमुक्षुत्वं ? मुमुक्षुत्वानन्तरभाव्यत्वाद्विज्ञानस्य । यदेव मोक्षसाधनं तदेवोपादेयमिति सर्वमपि वाक्यं मूलाद्बहिः कल्पितत्वात्सुतरामप्रमाणम् ।

वेदान्तेष्वेव मोक्षसाधनज्ञानश्रवणाद्वेदेषु मोक्षसाधनमित्यप्ययुक्तम्—वेदेष्वेव मोक्षसाधनस्यापि धर्मादिसाधनयज्ञादेरिव श्रवणेसति वेदान्तश्रवणाद्यानर्थक्यात्- पूर्वोत्तरमीमांसाभेदेन शास्त्रभेदकल्पनस्याप्ययुक्तत्वापत्तेः । नच सर्वशब्दस्वारस्यादुपनिषदोपि वेदा एवेति वाच्यं, त्रैगुण्यविषया वेदा इति भगवतैवोक्तत्वादुपनिषदाच्च सत्त्वादिगुणातीतब्रह्मात्मतत्त्वप्रतिपादकत्वात् ॥४६॥

कर्मणीति । एवकारार्थमाह—न ज्ञाननिष्ठायामिति । ते तवेति क्षत्रियस्येत्यर्थः- ब्राह्मणस्यैव सन्न्यासाधिकारात् 'ब्राह्मणो निर्वेदमायाद्ब्राह्मणः प्रव्रजे'दित्यादिश्रुतिभ्यः । यद्वा विवेकवैराग्यादिरहितस्येत्यर्थः । विवेकादिशालिन एव सन्न्यासेऽधिकारात् । ज्ञाननिष्ठा हि सर्वकर्मसन्न्यासः तत्पूर्विका वा । तृष्णा स्पृहा कस्यां चिदपीति समाधयस्यामपीत्यर्थः ।

फलतृष्णाप्रयुक्तः कर्मणि प्रवर्तते तदा कर्मफलस्यैव जन्मनो हेतुर्भवेत्- यदि कर्मफलं नेष्यते किं कर्मणा दुःखरूपेणेति मा ते तव सङ्गोऽस्त्वकर्मणि अकरणे प्रीतिर्माभूत् ॥४७॥

योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनंजय !
सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग उच्यते ॥४८॥

यदि फलप्रयुक्तेन न कर्तव्यं कर्म कथं तर्हि कर्तव्यमित्युच्यते—योगस्थ इति। योगस्थस्सन् कुरु कर्माणि केवलमीश्वराराधनार्थम्। तत्रापीश्वरो मे तुष्यत्विति सङ्गं त्यक्त्वा धनंजय! फलतृष्णाशून्येन क्रियमाणे कर्मणि सत्त्वशुद्धिद्वारा ज्ञानप्राप्तिलक्षणासिद्धिस्तद्विपर्ययजा

---

तर्हि दुःखरूपेण कर्मणा किमिति शङ्कायामाह—मा ते सङ्गोऽस्त्वकर्मणीति। कर्मशब्दस्य क्रियायां यज्ञादिकर्मणि च प्रसिद्धत्वादाह—अकर्मणि अकरणे इति कर्मणामकरणे इत्यर्थः। फलमनभिसन्धाय त्वया कर्माण्येव कर्तव्यानि, नतु सन्न्यासस्तत्र तवानधिकारादिति श्लोकस्य फलितार्थः।

यत्तु रामानुजः—फलस्य च क्षुन्निवृत्त्यादेर्न त्वं हेतुरित्यनुसन्धेयमिति, तत्तुच्छम्—भोजनादिकर्मणामकर्मत्वात्, क्षुन्निवृत्त्यादेश्चाफलत्वात् न हि केनचिच्छास्त्रेण कश्चिद्भोजनादिकर्मण्यधिक्रियते येन भोजनादिकर्मण्येव तवाधिकार इत्युच्येत। नक्तभोजोपवासपारणादिकं तु नित्यनैमित्तिकादिकर्माङ्गमेवेति न तत्र पृथग्विधिः। किं च यदि क्षुन्निवृत्त्यादि फलं स्यात्कथं तत्सङ्गो भोक्तुर्न भवेत् यज्ञादिकर्मणस्स्वर्गादिफलं तु कालान्तरभावीति तत्सङ्गस्त्यक्तुं शक्यः पुंसा। अपि च फलमनभिसन्धाय यज्ञादीनि क्रियन्तां नाम, क्षुन्निवृत्तिमनभिसन्धाय कथं क्षुधितो भोजने प्रवर्तेत। अन्यथा अक्षुधितस्यापि भोजने प्रवृत्तिस्स्यात्। यत्तु क्षुत्पिपासादेः प्राणधर्मत्वानुसन्धानं भोजनादेश्च शरीरधर्मत्वानुसन्धानं सा ज्ञाननिष्ठैव अविक्रियात्मदर्शनहेतुत्वात्। तथा कर्मफलयोर्हेतुर्माभूरिति च रामानुजोक्तमसत् कर्मण्येवाधिकार इति कर्महेतुत्वस्योक्तत्वात्।

यच्चोक्तम्—वेदान्तदेशिकेन कर्तृत्वानभिसन्धानमेव कर्माहेतुत्वमिति, तच्चायुक्तम्—कर्तृत्वानभिसन्धानस्य फलाहेतुत्वात्- यः कर्ताहमिति मन्यते स एव हि फलमभिसन्धत्ते कर्माहेतुत्वे तु कर्मैव न स्यात्- यथा फलाहेतुत्वे फलस्य स्वरूपानिष्पत्तिः, तथा कर्माहेतुत्वे किमिति कर्मणः स्वरूपानिष्पत्तिर्न भवेत् ॥४७॥

योगस्थ इति। हे धनञ्जय सङ्गं त्यक्त्वा सिद्ध्यसिद्ध्योस्समो भूत्वा योगस्थस्सन् कर्माणि कुरु इत्यन्वयः। फलप्रयुक्तेनेति। फलाभिसन्धिमतेत्यर्थः। अथवा प्रयुक्तः प्रयोग इति भावे क्तः प्रसङ्ग इति यावत्। पुंसेति शेषः। फलप्रसङ्गेन कर्म न कर्तव्यं, फलमभिसन्धाय कर्म न कुर्याद्विवेकीत्यर्थः। इति शङ्कायामिति शेषः। उच्यते भगवतेति शेषः। कर्माणि कुर्वित्युक्ते किमर्थमित्याशङ्कां पूरयति—केवलमीश्वराराधनार्थमिति। तत्रापीश्वराराधनत्वेपीत्यर्थः। ईश्वरप्रीतावपि स्पृहा न कार्येत्यर्थः। ईश्वरप्रीत्याशाया अपि सिद्ध्यसिद्धिशङ्कादिना चित्तचाञ्चल्यहेतुत्वादिति भावः। तद्विपर्ययजेति। तच्छब्देन चित्तशुद्धिः परामृश्यते। चित्तशुद्धेर्विपर्ययश्च चित्ताशुद्धिः तस्माज्जायत इति तज्जाज्ञान

असिद्धिः तयोस्सिद्ध्यसिद्ध्योरपि समस्तुल्यो भूत्वा कुरु कर्माणि, कोऽसौ योगः-यत्र स्थित्वा कर्म कुर्वित्युक्तं इदमेव तत्सिद्ध्यसिद्ध्योस्समत्वं योग उच्यते ॥४८॥

दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय !
बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥४९॥

यत्पुनरसमत्वबुद्धियुक्तमीश्वराराधनार्थं कर्म एतस्मात्कर्मणः—दूरेणेति । दूरेणातिविप्रकर्षेण हि अवरं निकृष्टं कर्म फलार्थिना क्रियमाणं बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणः। जन्ममरणादिहेतुत्वादित्यर्थः । हेधनंजय ! यत एवमतो योगविषयायां बुद्धौ, तत्परिपाकजायां वा साङ्ख्ये बुद्धौ शरणमाश्रयमभयप्राप्तिकारणमन्विच्छ प्रार्थयस्व । परमार्थज्ञानशरणो भवेत्यर्थः । यतः अवरं कर्म कुर्वाणाः कृपणाः दीनाः- फलहेतवः फलतृष्णाप्रयुक्तास्सन्तः । 'यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात् प्रैति स कृपण' इति श्रुतेः ॥४९॥

---

प्राप्तौ राग तदप्राप्तौ द्वेषश्च न कर्तव्य इति भाव । योगस्थशब्दगतयोगशब्दार्थं भगवानेव तुरीयपादेन वक्तीत्याह—कोऽसौ योग इत्यादि । उच्यत इति शास्त्रैरिति शेष ।

यत्तु रामानुजः—राज्यबन्धुप्रभृतिषु सङ्गं त्यक्त्वा तदन्तर्भूतविजयादिसिद्ध्यसिद्ध्योस्समो भूत्वेति, तन्तुच्छम्—मा फलेषु कदाचनेत्यनेनैव राज्यादिफलसङ्गस्याकर्तव्यत्वस्योक्तत्वात् । बन्धुप्रभृतिषु सङ्गाकर्तव्यत्वस्य अशोच्यानित्यारभ्य न त्वं शोचितुमर्हसीत्येतदन्तेन ग्रन्थेन प्रतिपादितत्वात् । प्रधानफलसिद्ध्यसिद्ध्योस्समत्वमुपेक्ष्य तदन्तर्भूतविजयादिसिद्ध्यसिद्धिसमत्ववचनस्यायुक्तत्वात् । प्रधानफलसिद्ध्यसिद्धिसमत्वस्यैव प्रागनुक्तत्वाच्च । सुखदुःखे समे कृत्वेति श्लोके जयापजयसमत्वस्योक्तत्वाच्च ॥४८॥

दूरेणेति । हे धनञ्जय ! बुद्धियोगात्कर्म दूरेणावरं हि- बुद्धौ शरणमन्विच्छ । फलहेतव कृपणा भवन्तीति शेष । बुद्धिना व्यवसायात्मकबुद्धिना योगो यस्य तद्बुद्धियोगं तस्माद्बुद्धियोगात् । फलितमाह—समत्वबुद्धियुक्तात्कर्मण इति, जन्ममरणादिहेतुत्वादिति । फलार्थिना क्रियमाणस्य कर्मण इति भाव । स्वर्गादिफलानुभवार्थं जन्म, तत्सुकृतक्षयानन्तरं मरण चेति बोध्यम् । आदिशब्दात्सुखदुःखादिग्रहणम् । परिपाकजा परिणामजाता- फलभूतेति यावत् । साङ्ख्ये बुद्धौ- साङ्ख्यविषयायां बुद्धावित्यर्थ । परमार्थज्ञानमेव शरणमभयप्राप्तिकारणं यस्य स परमार्थज्ञानशरण । फलहेतवस्सन्त अवरं कर्म कुर्वाणाः कृपणा इत्यन्वय । फलहेतव इत्यनेनार्थसिद्धस्यैव वचनमवरं कर्म कुर्वाणा इति कर्मफलतृष्णाशालित्वरूपफलहेतुत्ववन्तो ह्यवरं कर्म कुर्वन्ति । कर्मण एवमस्यैवोत्कर्षापकर्षौ तत्कर्तृबुद्धिगतफलाभिसन्धसङ्गप्रयुक्तावेव न तु स्वाभाविकाविति बोध्यम् । एतेनाविवेकिजनसमाश्रयात्कर्मणामेवापकर्षो जात इति तन्निन्दा सूच्यते । फलहेतूनां कृपणत्वे श्रुतिं प्रमाणयति—यो वेति । हेगार्गि यो वा पुरुष एतदक्षरमविदित्वा- प्रैतीति यावत् । अविदित्वा अस्माल्लोकान्मनुष्यलोकादैतीति मनुष्यलोकं विहाय स्वर्गादिलोकं प्राप्नोति- स्वकृतपुण्यपूर्वककर्मफलानुभवार्थं भूरादिलोकान् प्राप्नोतीत्यर्थ ।

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥

समत्वबुद्धियुक्तस्सन् स्वधर्ममनुतिष्ठन् यत्फलं प्राप्नोति तच्छृणु—बुद्धियुक्तः कर्मणि समत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तः- जहाति परित्यजति- इहास्मिन् लोके- उभे सुकृतदुष्कृते पुण्यपापे- सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण- तस्मात्समत्वबुद्धियोगाय युज्यस्व घटस्व- योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योस्समत्वबुद्धिः- ईश्वरार्पितचेतस्तया तत्कौशलं कुशलभावः, तद्धि कौशलं यत् बन्धस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्त्यन्ते, तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥५०॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥

यस्मात्- कर्मजमिति । कर्मजं फलं त्यक्त्वेति व्यवहितेन सम्बन्धः । इष्टानिष्टदेहप्राप्तिः- कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ता हि यस्मात्- फलं त्यक्त्वा

---

सोऽपि विद्वान् पुरुष कृपणश्शोच्यः । अस्माल्लोकादिति ल्यब्लोपे पञ्चमी । यद्वा अस्माल्लोकाद्देहात्प्रेत्युत्क्रामति- म्रियत इति यावत् । तत्त्वविद उत्क्रान्त्यभावादिति भाव ।

यत्तु रामानुज —बुद्धियोगादित्यस्य बुद्धियोगयुक्तात्कर्मण इत्यर्थमाह- अत्रोपपत्तिमाह जहल्लक्षणयेति वेदान्तदेशिकश्च यत् , तदुभयं तुच्छम्—लक्षणाश्रयणस्य दुष्टत्वात्- बुद्धियुक्तादित्यनेनैवेष्टसिद्धौ बुद्धियोगयुक्तादित्यस्यानर्थक्याच्च ।

बुद्धीति । बुद्धियुक्तः पुरुष इह उभे सुकृतदुष्कृते जहातीत्यन्वय. । कर्मणि समत्वं नाम कर्मजन्यसिद्ध्यसिद्ध्योस्समत्वं- तस्यैव प्रकृतत्वात् । अथवा फलपरित्यागान्नित्येषु नैमित्तिकेषु काम्येषु च कर्मसु समत्वबुद्धि - सर्वेषामपि सत्त्वशुद्धिरूपैकफलकत्वेन समत्वात् ।

ननु 'तद्विद्वान् पुण्यपापे विधूय निरञ्जन परमं साम्यमुपै'तीति श्रुत्या आत्मविद एव पुण्यपापपरित्यागश्रवणात्कथं कर्मयोगिन पुण्यपापविधूननमत आह—सत्त्वशुद्धिज्ञानप्राप्तिद्वारेणेति । सत्त्वशुद्ध्या यज्ज्ञानं तत्प्राप्तिद्वारेण सत्त्वशुद्धिपूर्वकज्ञानप्राप्तिद्वारेणेत्यर्थ । कर्मयोगात्सत्त्वशुद्धिस्ततो ज्ञानप्राप्तिस्तया सुकृतदुष्कृतपरित्याग इति भाव । स्वभावादिति बन्धकस्वरूपात्स्वभावादित्यर्थः ।

यत्तु रामानुजः—बुद्धियोगयुक्त इति । योगो बुद्धियोग कौशलमतिसामर्थ्यमतिसामर्थ्यसाध्य इत्यर्थ इति, तत्तुच्छम्—बुद्धिशब्दाद्बुद्धियोगरूपार्थालाभात् प्रकृतयोगस्य कर्मयोगत्वेन बुद्धियोगशब्दवाच्यत्वाभावात्- बुद्धियोगो हि ज्ञानयोग बुद्धेर्ज्ञानपर्यायत्वात् । नच बुद्धियोगादिति पूर्वश्लोकादत्र बुद्धेर्बुद्धियोगार्थबोधकत्वमिति वाच्यं, तत्रापि बुद्धियुक्तादित्येवार्थस्य सिद्धान्तितत्वात् । योगः कौशलमिति पदद्वयस्य स्वारसिकं सामानाधिकरण्यं भञ्जयित्वा कौशलसाध्य इति लाक्षणिकार्थस्वीकारस्याप्रमाणत्वाच्च ॥५०॥

परित्यज्य मनीषिणः ज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धो जन्मबन्धः तेन विनिर्मुक्ताः जीवन्त एव जन्मबन्धविनिर्मुक्तास्सन्तः पदं परमं विष्णोर्मोक्षाख्यं गच्छन्ति । अनामयं सर्वोपद्रवरहितमित्यर्थः ।[१] अथवा बुद्धियोगाद्धनंजयेत्यारभ्य परमार्थदर्शनलक्षणैव सर्वतस्सम्प्लुतोदकस्थानीया कर्मयोगजसत्त्वशुद्धिजा बुद्धिः दर्शिता- साक्षात्सुकृतदुष्कृतप्रहाणादिहेतुत्वश्रवणात् ॥५१॥

यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ।
तदा गन्तासि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥५२॥

---

बुद्धियुक्ताः पुरुषाः कर्मजं फलं त्यक्त्वा मनीषिणस्सन्तः जन्मबन्धविनिर्मुक्ता अनामयं पदं गच्छन्तीत्यन्वयः । ज्ञानिनो भूत्वेति चित्तशुद्धिद्वारा आत्मज्ञाननिष्ठां प्रपद्येत्यर्थः । गच्छन्तीति वर्तमाननिर्देशादाह—**जीवन्त एवेति** । अन्यथा हि गमिष्यन्तीति वक्तव्यं स्यात् । 'तद्विष्णोः परमं पद'मिति श्रुतेराह—**विष्णोरिति** । किं तत्पदमत आह—**मोक्षाख्यमिति** । सच्चिदानन्दलक्षणं स्वरूपमित्यर्थः । आत्मन्यनात्माध्यासहेतोरविद्याया अहं ब्रह्मेति विद्यया तेजसा तिमिरस्येव नाशे सति सच्चिदानन्दब्रह्मात्मसाक्षात्कारो जायते स एव मोक्ष इत्युच्यते । सच जीवद्दशायामेव सुलभः- शमदमादिसंस्कृतमनस्साध्यत्वाद्विद्यायाः, ब्रह्मविद्ब्रह्मैव भवतीति विद्याया अव्यवहितफलत्वाच्च मोक्षस्य । नच विदेहकैवल्यस्य मोक्षस्य कथं जीवद्दशायां लाभ इति वाच्यं, आत्मनस्सर्वदापि विदेहत्वा'न्निष्कलं निष्क्रियं शान्तमशब्दमस्पर्शमरूपमव्यय'मित्यादिश्रुतेः सदेहत्वस्य चाविद्यासिद्धत्वात् । विद्यया आत्मनि सदेहत्वभ्रान्तिमात्रस्यैव निवर्त्यत्वात् । रज्जुसर्पभ्रान्तेराप्तोपदेशनिवर्त्यत्ववत् । तस्मादविक्रिये आत्मनि स्वयम्प्रभे कालत्रयेपि बन्धतद्धेतुसङ्गाभावात्सिद्धा जीवन्मुक्तिरात्मज्ञस्य ।

ननु सुकृतदुष्कृते जहाति- अनामयं पदं गच्छन्तीति साक्षाद्ज्ञानफलस्य सुकृतदुष्कृतप्रहाणस्य परमपदप्राप्तेश्च मोक्तत्वान्नात्र कर्मयोगप्रसञ्जनमतीवोचितमित्यत आह—**अथ वेति** । अयं च श्लोकानामर्थः । हे धनञ्जय बुद्धियोगाद्ज्ञानयोगात्साङ्ख्ययोगादित्यर्थः । कर्म कर्मयोगः दूरेणावरं हि । तस्माद्बुद्धौ साङ्ख्ये शरणमन्विच्छ- कर्मफलहेतवस्त्वतीव कृपणाः कर्मयोगनिष्ठास्तु नातीव कृपणाः- अफलहेतुत्वादित्यर्थः । बुद्धियुक्तः साङ्ख्यबुद्धियुक्त इह उभे सुकृतदुष्कृते जहाति- 'तद्विद्वान् पुण्यपापे विधूये'ति श्रुतेः । तस्मात्त्वं योगाय साङ्ख्यबुद्धिजनककर्मयोगाय तावद्युज्यस्व, योगः कर्मसु कौशलमित्यनतिरिक्तार्थम् । बुद्धियुक्तास्साङ्ख्यज्ञानयुक्ता मनीषिणो विद्वांसः कर्मजं फलं त्यक्त्वा- कर्मत्यागद्वारा तत्फलत्यागं कृत्वेत्यर्थः । जन्मबन्धविनिर्मुक्तास्सन्तः अनामयं पदं गच्छन्तीत्यनतिरिक्तार्थम् । परमार्थदर्शनं परतत्त्वज्ञानं लक्षणं स्वरूपं यस्यास्सा परमार्थदर्शनलक्षणा कर्मयोगजा सत्त्वशुद्धिः तज्जा कर्मयोगजसत्त्वशुद्धिजा बुद्धिः- साङ्ख्यबुद्धिरित्यर्थः । दर्शिता भगवतेति शेषः । तत्र हेतुमाह—**साक्षादिति** । कर्मयोगस्य परम्परया सुकृतदुष्कृतप्रहाणादिहेतुत्वमस्ति, नतु साक्षात् ज्ञानयोगस्य तु साक्षादस्तीति कृत्वा महत्स्वश्लोकेषु साक्षाद्धेतुत्वश्रवणात्साक्षाद्धेतुत्ववान् साङ्ख्ययोग एवेदाप्युक्त इति ज्ञेयमिति भाव ॥५१॥

बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ।
तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥५०॥

समत्वबुद्धियुक्तस्सन् स्वधर्ममनुतिष्ठन् यत्फलं प्राप्नोति तच्छृणु—बुद्धियुक्तः कर्मणि समत्वविषयया बुद्ध्या युक्तो बुद्धियुक्तः- जहाति परित्यजति- इहास्मिन् लोके- उभे सुकृतदुष्कृते पुण्यपापे- सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण- तस्मात्समत्वबुद्धियोगाय युज्यस्व घटस्व- योगो हि कर्मसु कौशलं स्वधर्माख्येषु कर्मसु वर्तमानस्य या सिद्ध्यसिद्ध्योस्समत्वबुद्धिः- ईश्वरार्पित चेतस्तया तत्कौशलं कुशलभावः, तद्धि कौशलं यत् बन्धस्वभावान्यपि कर्माणि समत्वबुद्ध्या स्वभावान्निवर्त्यन्ते, तस्मात्समत्वबुद्धियुक्तो भव त्वम् ॥५०॥

कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ।
जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥५१॥

यस्मात्- कर्मजमिति । कर्मजं फलं त्यक्त्वेति व्यवहितेन सम्बन्धः । इष्टानिष्टदेहप्राप्तिः- कर्मजं फलं कर्मभ्यो जातं बुद्धियुक्ताः समत्वबुद्धियुक्ताः हि यस्मात्- फलं त्यक्त्वा

---

सोऽपि विद्वान् पुरुषः कृपणश्शोच्यः । अस्माल्लोकादिति ल्यब्लोपे पञ्चमी । यद्वा अस्माल्लोकाद्देहात्प्रेत्युत्क्रामति- म्रियत इति यावत् । तत्त्वविद उत्क्रान्त्यभावादिति भावः ।

यत्तु रामानुजः—बुद्धियोगादित्यस्य बुद्धियोगयुक्तात्कर्मण इत्यर्थमाह- अत्रोपपत्तिमाह जहल्लक्षणयेति वेदान्तदेशिकश्च यत् , तदुभयं तुच्छम्—लक्षणाश्रयणस्य दुष्टत्वात्- बुद्धियुक्तादित्यनेनैवेष्टसिद्धौ बुद्धियोगयुक्तादित्यस्यानर्थक्याच्च ।

बुद्धीति । बुद्धियुक्तः पुरुष इह उभे सुकृतदुष्कृते जहातीत्यन्वयः । कर्मणि समत्वं नाम कर्मजन्यसिद्ध्यसिद्ध्योस्समत्वं- तस्यैव प्रकृतत्वात् । अथवा फलपरित्यागान्नित्येषु नैमित्तिकेषु काम्येषु च कर्मसु समत्वबुद्धिः- सर्वेषामपि सत्त्वशुद्धिरूपैकफलकत्वेन समत्वात् ।

ननु 'तद्विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'ति श्रुत्या आत्मविद एव पुण्यपापपरित्यागश्रवणात्कथं कर्मयोगिनः पुण्यपापविधूननमत आह—सत्त्वशुद्धिज्ञानप्राप्तिद्वारेणेति । सत्त्वशुद्ध्या यद्ज्ञानं तत्प्राप्तिद्वारेण- सत्त्वशुद्धिपूर्वकज्ञानप्राप्तिद्वारेणेत्यर्थः । कर्मयोगात्सत्त्वशुद्धिस्ततो ज्ञानप्राप्तिस्तया सुकृतदुष्कृतपरित्याग इति भावः । स्वभावादिति बन्धकत्वरूपात्स्वभावादित्यर्थः ।

यत्तु रामानुजः—बुद्धियोगयुक्त इति । योगो बुद्धियोगः कौशलमतिसामर्थ्यमतिसामर्थ्यसाध्य इत्यर्थ इति, तत्तुच्छम्—बुद्धिशब्दाद्बुद्धियोगरूपार्थालाभात् प्रकृतयोगस्य कर्मयोगत्वेन बुद्धियोगशब्दवाच्यत्वाभावात्- बुद्धियोगो हि ज्ञानयोगः बुद्धेर्ज्ञानपर्यायत्वात् । नच बुद्धियोगादिति पूर्वश्लोकादत्र बुद्धेर्बुद्धियोगार्थबोधकत्वमिति वाच्यं, तत्रापि बुद्धियुक्तादित्येवार्थस्य सिद्धान्तितत्वात् । योगः कौशलमिति पदद्वयस्य स्वारसिकं सामानाधिकरण्यं भञ्जयित्वा कौशलसाध्य इति लाक्षणिकार्थस्वीकारस्याप्रमाणत्वाच्च ॥५०॥

समाधौ समाधीयतेस्मिन्निति समाधिरात्मा तस्मिन्नात्मनीत्येतत् । साप्यचला तत्रापि विकल्पवर्जितेत्येतत् । बुद्धिरन्तःकरणं- तदा तस्मिन् काले योगमवाप्स्यसि विवेकप्रज्ञां समाधिं प्राप्स्यसि ॥५३॥

---

मनात्मेति विवेकरूपं ज्ञानम् । यावदर्थमाह—समाधिमिति । चित्तसमाधानमित्यर्थः । निर्विकल्पसमाधिमिति यावत् । सुषुप्ताविव लयरहितं जाग्रत्स्वप्नयोरिव विक्षेपरहितमहं ब्रह्मेत्याकारकवृत्तिशून्यं च सदन्तःकरणं यत्केवलमात्मस्वरूपानुसन्धानपरं वर्तते तदेव निर्विकल्पसमाधिरिति फलितार्थः । यदा स्वस्यान्तःकरणं निर्विकल्पं निर्विक्षेपं च सदात्मनि स्थिरं वर्तते तदा निर्विकल्पसमाधिशाल्यहमिति ज्ञातव्यं त्वयेति श्लोकनिष्कृष्टार्थः । निर्विकल्पसमाधावात्मस्वरूपसाक्षात्कारेसति अयमात्मा इदमनात्मेति विवेकप्मुखेन भवति पुंस इति भावः । एतेन ज्ञानयोगस्य समाधिरेव पराकाष्ठेति सूचितम् । नच यमनियमाद्यष्टाङ्गलक्षणयोगस्यैव समाधिः परा काष्ठेति वाच्यं, मनस्संयमसाध्यस्य समाधेः साङ्ख्ययोगयोरुभयोरपि परमावधित्वात् । मनस्संयमस्तु केषाञ्चित्प्राणायामादियोगसाध्यः, केषाञ्चिदात्मानात्मविवेचनरूपसाङ्ख्यसाध्य इति विवेकः । अत 'एवैकं साङ्ख्यं च योगं च यः पश्यति स पश्य'तीति वक्ष्यति भगवान् ।

ननु समाधावचला बुद्धिः स्थास्यतीत्यनेनैव निर्विकल्पसमाधिरुक्तः- पुनः समाधिं प्राप्स्यसीति वचनं त्वयुक्तं- समाधिमतस्समाधिप्राप्तिरिति पौनरुक्त्यादिदोषादिति चेदत एव श्लोकनिष्कृष्टार्थस्तथोक्तो मया । यद्वा- कर्मयोगजा सत्त्वशुद्धिः, सत्त्वशुद्धौ निर्विकल्पसमाधिलाभः, तत्रश्चात्मानात्मविवेकलक्षणज्ञानयोगात्मकसमाधिलाभ इति विवेकः । सत्त्वशुद्धिमति कर्मानुष्ठानवद्यमनियमादयोपि हेतव एवेति कृत्वा निर्विकल्पसमाधेर्योगपरमावधित्वञ्चोच्यत इति बोध्यम् । एतेन सर्वेपि योगा ज्ञानयोगसाधका एव, नतु तत्साध्यः कश्चन योगोस्तीति ज्ञानयोगस्य सर्वयोगाधिकत्वं सूचितम् ।

यद्यपि ज्ञानयोगस्य परा काष्ठा ब्रह्मात्मसाक्षात्कारः निर्विकल्पसमाधिश्च स एवेति नोभयोर्भेदः, तथापि निर्विकल्पसमाधावात्मानुभवं कुर्वन्तोपि योगिनः न तमात्मानं ब्रह्मेति विदुरिति हेतोर्निर्विकल्पसमाधेर्योगसाध्यात् ज्ञानयोगस्योत्कर्ष उक्तः । येन केनापि योगाद्युपायेन यदा तवान्तःकरणस्य निर्विकल्पसमाधिलाभः, तदैव तव अयमात्मा इदमनात्मेति विवेको जायते- निर्विकल्पसमाधावात्मस्वरूपसाक्षात्कारस्य जातत्वादिति श्लोकस्य तात्पर्यम् । नचैवं निर्विकल्पसमाधिनैवालं- तत एवात्मस्वरूपसाक्षात्कारलाभात्- सच समाधिः प्राणायामादिसाद्ध्य इति कोर्थो ज्ञानयोगेनेति वाच्यं, सच्चिदानन्दलक्षणस्सर्वान्तरस्स्वयम्प्रभ आत्मेति ज्ञाने सत्येव निर्विकल्पसमाध्यनुभूतवस्तुनि ब्रह्मात्मज्ञानं स्यात्पुंसः न त्वन्यथेति ज्ञानयोगस्यावश्यकत्वात् । नहि सौषुप्तिक आत्मानन्दानुभवो मोक्षाय भवति पुंसां- अयमात्मेति ज्ञानाभावस्य तुल्यत्वात् इति । अथवा विक्षेपो विपर्ययः विकल्पस्संशय इत्यर्थात्तत्र श्लोके पूर्ववाक्येन निर्विकल्पसमाधिरभिधीयत इति न कोपि दोष इति बोध्यम् । नायमात्मेति अयमात्मा, वा नवेति च विक्षेपविकल्परहिता सती यदा ते बुद्धिरात्मनि स्थिरा स्यात्त्वयमेवात्मेति तदा त्वं योगमवाप्स्यसीति

योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः कदा प्राप्यत इत्युच्यते—यदेति। यदा यस्मिन्काले ते तव मोहकलिलं मोहात्मकमविवेकरूप कालुष्यं- येनात्मानात्मविवेकबोधं कलुषीकृत्य विषयं प्रत्यन्तःकरणं प्रवर्त्यते तत्तव बुद्धिर्व्यतितरिष्यति व्यतिक्रमिष्यति- शुद्धभावमापत्स्यत इत्यर्थः। तदा तस्मिन्काले- गन्तासि प्राप्तासि निर्वेदं वैराग्यं श्रोतव्यस्य श्रुतस्य च- तदा श्रोतव्यं श्रुतं च निष्फलं प्रतिभातीत्यभिप्रायः ॥५२॥

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥५३॥

मोहकलिलात्ययद्वारेण लब्धात्मविवेकप्रज्ञः कदा कर्मयोगजं फलं परमार्थयोगं प्राप्स्यसीति तच्छृणु—श्रुतीति। श्रुतिविप्रतिपन्ना अनेकसाध्यसाधनसम्बन्धप्रकाशनश्रुतिभिः श्रवणैः प्रवृत्तिनिवृत्तिलक्षणैः विप्रतिपन्ना नानाप्रतिपन्ना- श्रुतिविप्रतिपन्नासती ते तव बुद्धिर्यदा यस्मिन् काले स्थास्यति स्थिरीभूता भविष्यति, निश्चला विक्षेपरूपचलनवर्जितासती

---

यदेति। यदा ते बुद्धिः मोहकलिलं व्यतितरिष्यति तदा श्रोतव्यस्य श्रुतस्य च निर्वेदं गन्तासि। कालुष्यमेव कार्यद्वारा दर्शयति—येनेति। आत्मानात्मविवेकरूपो बोधो ज्ञानं तं कलुषीकृत्य अपहृत्य विषय शब्दादिकंप्रति अन्तःकरणं येन प्रवर्त्यते तत्कालुष्यमित्यन्वयः। विवेकजलकलुषीकरणादविवेकस्य रजस इव कलिलशब्दव्यवहार इति भाव।

श्रुतेन किं श्रोतव्येन किमिति श्रुतश्रोतव्यविषयं निर्वेदं प्राप्स्यसीत्यर्थः। श्रुतं श्रोतव्यञ्चेत्यात्मनोन्यत्सर्वं धर्मशास्त्रादिकमित्यर्थ.। आत्मनस्तु यावत्साक्षात्कारं सर्वदापि श्रोतव्यत्वान्न तत्र निर्वेद उचित.- 'आत्मा वारे द्रष्टव्यः श्रोतव्य' इति श्रुतेः, 'आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तये'ति स्मृतेश्च ॥५२॥

श्रुतीति श्लोकमवतारयति—मोहेति। आत्मानात्मविवेकाच्छादकस्य मोहकलिलस्यात्यये-नाशेसति आत्मानात्मविवेकरूपा प्रज्ञा लभ्यते पुंसा। तादृशश्च पुरुष. कर्मयोगजं परमार्थयोगं साङ्ख्ययोगरूपं फलं कदा प्राप्स्यसीत्येतदहं वच्मि तत्त्वं शृणु- श्रुतिविप्रतिपन्ना ते बुद्धिः यदा निश्चलासती समाधावचलासती स्थास्यति तदा योगमवाप्स्यसीत्यन्वय.। अनेकेषां साध्यानां साधनानां सम्बन्धानां च प्रकाशने याभिस्ताभिः श्रुतिभि· प्रवृत्तिनिवृत्तिलक्षणैश्श्रवणैः प्रवृत्तिनिवृत्ती लक्षणं स्वरूपं येषान्तैस्तयोर्वैदैः हेतुभिः विप्रतिपन्ना विप्रतिपत्तिं प्राप्ता नानाप्रतिपन्ना बहुभेदं प्राप्तेत्यर्थ·। प्रवृत्तिनिवृत्तिधर्मप्रतिपादकवेदश्रवणात् किं कर्म कुर्याम्? किंवा प्रव्रजेयम्? किंवा वनं विशेयम्? कर्मस्वपि किं काम्यानि कुर्यामथवा नित्यानीत्येवं बहुविधविकल्पान् प्राप्तेति भावः।

निश्चलाचलपदयोः पौनरुक्त्यं वारयति—विक्षेपेति। विक्षेपो बुद्धेरात्मस्वरूपात्प्रच्युतिः-विषयचिन्तेति यावत्। तत्रापीत्यात्मन्यपीत्यर्थः। विकल्पो बुद्धिवृत्तिः विवेकप्रज्ञा अयमात्मा इद-

प्रजहातीत्यारभ्याऽऽध्यायपरिसमाप्तेः स्थितप्रज्ञस्य लक्षणं साधनं चोपदिश्यते, सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते- यत्नसाध्यत्वात् । यानि यत्नसाध्यानि साधनानि लक्षणानि च भवन्ति तानि ।

श्रीभगवानुवाच— प्रजहाति यदा कामान् सर्वान् पार्थ! मनोगतान् ।
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥५५॥

प्रजहातीति । प्रजहाति प्रकर्षेण जहाति परित्यजति यदा यस्मिन्काले- कामान् इच्छाविशेषान्- सर्वान् समस्तान्- हेपार्थ! मनोगतान् मनसि प्रविष्टान्- सर्वकामपरित्यागे तुष्टिकारणाभावात्- शरीरधारणनिमित्तविशेषे च सति उन्मत्तप्रमत्तस्येव प्रवृत्तिः प्राप्तेनेत्यत

---

प्रजहातीति श्लोकमवतारयति—प्रजहातीति । आ अध्यायपरिसमाप्तेरिति छेदः । समासे त्वाध्यायपरिसमाप्तीति स्यात्- यावदध्यायपरिसमाप्तीत्यर्थः । साधनं चेति । ननु लक्षणस्यैव पृष्टत्वा-त्किमिति साधनोपदेश इत्यत आह—सर्वत्रेति । अध्यात्मशास्त्रे वेदान्तशास्त्रे कृतार्थः स्थितप्रज्ञः--तस्यैव कृतकृत्यत्वात् । कृतकृत्यस्य यानि लक्षणानि तान्येव कृतकृत्यत्वस्य साधनानीत्युपदिश्यन्ते उच्यन्ते । तत्र हेतुमाह—यत्नसाध्यत्वादिति । कृतार्थे पुरुषे वर्तमानानि यानि कृतार्थत्वसूचकानि चिह्नानि कामपरित्यागात्मतुष्टिसुखलाभादीनि तान्येव कृतार्थत्वसाधकानि । मनस्संयमरूपयत्नसाध्यत्वा-देषामित्यर्थः ।

ननु साधनलक्षणयोरेकत्वमयुक्तम्—साधनसाध्यत्वाल्लक्षणानामिति चेत्सत्यमन्यत्र तथैव । इह तु साधनलक्षणयोरैक्यमेव- कामप्रहाणादिभिस्साधनैः कृतार्थत्वसिद्धेः, कृतार्थे पुंसि कामप्रहाणादीनां लक्ष-णत्वाच्च । लक्षयन्तीति लक्षणानि, साधयन्तीति साधनानीति निरुक्तेः यान्येव कृतार्थत्वं लक्षयन्ति तान्येव तत्साधयन्ति । कथमन्यथा कृतार्थत्वसाधकानां कृतार्थत्वलक्षकत्वं स्यात्, साधनेन हि साध्यं लक्ष्यते धूमेन वह्निवत्, साध्यं चात्र कृतार्थत्वं तल्लक्षकत्वं चास्ति तत्साधनस्य । तस्मात्साधनत्वलक्षकत्वयोरैक्या-त्साधनलक्षणयोरैक्यमिति भावः । यानि लक्षणानि तानि साधनानीत्येतदेव द्रढयितुमाह—यानि साधनानि तान्येव लक्षणानीति ॥

हेपार्थ यदा पुरुष इति शेषः । मनोगतान् सर्वान् कामान् प्रजहाति आत्मन्येवात्मना तुष्टश्च भवति, तदा स्थितप्रज्ञ इत्युच्यते । सर्वकामेति । सति पुत्रादिविषयकामे तत्सिद्ध्या पुंसस्तुष्टिस्स्या-त्पुनरां कामाभावेतु तुष्टिरेव न स्यात्- तुष्टिकारणस्य कामितार्थलाभरूपस्याभावादित्यर्थः । किंच सर्व-कामपरित्यागाद्भोजनकामस्यापि परित्यागः प्राप्तः, सति च तस्मिन् भोजनकामत्यागे भोजनाभावाद्विदुष आकस्मिकं बलात्कारमरणं स्याच्चायुक्तं- दोषावहत्वात् । अथैतद्भयाच्छरीरधारणनिमित्तभोजनादि-कामविशेषोऽस्त्वित्यत आह—शरीरेति । उन्मादं प्राप्त उन्मत्तः मदिरापानादिना मत्तः प्रमत्तः- उन्म-त्तवत्प्रमत्तवच्चेत्यर्थः । प्रवृत्तिरिति भोजनादिमात्रे इति भावः । यथा उन्मत्तः कमपि पुरुषार्थं न वाञ्छति न तस्मै यतते परन्तु- क्षुत्तृड्भ्यामर्दितस्तदपनोदाय यत्किमपि निन्दितमन्नं जलं च भुंक्ते तद्व-

अर्जुनः- स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ।
स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥५४॥

प्रश्नबीजं प्रतिलभ्यार्जुन उवाच लब्धसमाधिप्रज्ञस्य लक्षणबुभुत्सया—स्थितप्रज्ञस्येति । स्थिता प्रतिष्ठिता अहमस्मि परब्रह्मेति प्रज्ञा यस्य स स्थितप्रज्ञः- तस्य का भाषा किं भाषणं वचनं- कथमसौ परैर्भाष्यते- समाधिस्थस्य समाधौ स्थितस्य । हेकेशव स्थितधीः स्थितप्रज्ञः स्वयं वा किं प्रभाषेत- किमासीत- व्रजेत किम् ? आसनं व्रजनं वा तस्य कथमित्यर्थः । स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छ्यते- योह्यादित एव सन्न्यस्य कर्माणि ज्ञानयोगेन निष्ठायां प्रवृत्तः, यश्च कर्मयोगेन- तयोः ॥५४॥

---

भावः । योगमात्मसाक्षात्कारमिति मधुसूदनः । यत्तु समाधौ मनसि बुद्धिःस्थास्यतीति रामानुजः, तदसत्—मनोबुद्ध्योरुभयोरेकतत्त्वत्वेनाधाराधेयभावायोगात्- एकमेव ह्यन्तःकरणं सङ्कल्पविकल्परूपं मन इति निश्चयरूपं बुद्धिरिति चोच्यते । विप्रतिपन्नेत्यस्य विशेषतः प्रतिपन्नेत्यर्थोपि तदुक्तोऽयुक्तः—विप्रतिपत्तिशब्दस्य विरुद्धप्रतिपत्त्यर्थकत्वेन विप्रतिपन्नशब्दस्यापि तादृशार्थबोधस्यैवौचित्यात्, अप्रसिद्धार्थकल्पनस्यान्याय्यत्वात् ॥५३॥

स्थितप्रज्ञस्येति श्लोकमवतारयति—प्रश्नबीजमिति । समाधौ बुद्धिरचला स्थास्यति योगमवाप्स्यसीति वाक्यश्रवणात्प्रष्टुमवकाशो जात इत्यर्थः । तदेवाह—लब्धसमाधिप्रज्ञस्येति । लब्धे समाधिप्रज्ञे निर्विकल्पसमाधिविवेकौ येन तस्य बोद्धुं ज्ञातुमिच्छा बुभुत्सा- प्रतिष्ठितेति दृढेत्यर्थः । प्रज्ञाया आकारमाह— अहमिति । अहं परब्रह्मास्मीत्यन्वयः । प्रज्ञा बुद्धिवृत्तिरूपं ज्ञानम् । समाधौ आत्मनि निर्विकल्पसमाधाविति वा । किं प्रभाषेतेत्यनेन पौनरुक्त्यादाह—परैर्भाष्यत इति । स्थितप्रज्ञोयमित्यन्यैः कथमुच्यत इत्यर्थः । किं प्रभाषेतेत्यादौ किंशब्दानां कथमित्यर्थो ज्ञेयः- कथं प्रभाषेत, कथमासीत, कथं व्रजेतेति ।

ननु स्थितप्रज्ञस्य भाषणादिकमसम्भवि- ब्रह्मात्मनिष्ठत्वादिति किमर्जुनप्रश्नाशय इत्यत आह—स्थितप्रज्ञस्येति । भाषणादिकं किंरूपमिति तल्लक्षणं पृच्छ्यत इत्यर्थः । अर्जुनेनेति शेषः । कोसौ स्थितप्रज्ञोऽत आह—योहीति । हिः प्रसिद्धौ त्वर्थे वा । यः आदितो ब्रह्मचर्यादेव कर्माणि सन्न्यस्य निष्ठायामात्मदर्शननिष्ठायां यश्च कर्मयोगेन क्रमाद्ज्ञाननिष्ठायां प्रवृत्त इत्यन्वयः । तयोः स्थितप्रज्ञशब्दवाच्ययोर्द्वयोरपि लक्षणं पृच्छ्यत इत्यर्थः । स्थितप्रज्ञस्येत्येकवचननिर्देशेन ज्ञाननिष्ठामाप्त्यनन्तरमुभयोर्भेदाभावः सूचितः । सन्न्यासद्वारा कर्मयोगद्वारा वा निर्विकल्पकसमाधिं लब्ध्वा योहं ब्रह्मास्मीति दृढां प्रज्ञां प्राप स स्थितप्रज्ञ इति परमार्थः । कीदृशं पुरुषं लोकाः स्थितप्रज्ञं मन्यन्ते, कीदृशश्च स्वयं स्थितप्रज्ञमात्मानं मन्यते, स्थितप्रज्ञस्य मनोव्यापारः कीदृशः, कायव्यापारश्च कीदृशः, वाग्व्यापारश्च कीदृशः इति स्थितप्रज्ञलक्षणं पप्रच्छार्जुन इति पर्यवसन्नार्थः । अत्र स्थितप्रज्ञस्य को वाचकश्शब्द इति काऽर्थस्यार्थमाह- रामानुजः, तन्मन्दम्—स्थितप्रज्ञशब्दस्यैव तद्वाचकत्वेन वाचकान्तरप्रश्नानर्थक्यात् ॥

किंच-- दुःखेष्विति दुःखेष्वाध्यात्मिकादिषु अनुद्विग्नं न प्रक्षुभितं मनो यस्य स दुःखेष्वनुद्विग्नमनाः । तथा सुखेषु प्राप्तेषु विगता स्पृहा तृष्णा यस्य नाग्निरिवेन्धनाद्याधाने सुखान्यनुविवर्धन्ते स विगतस्पृहः । वीतरागभयक्रोधः रागश्च भयं च क्रोधश्च वीताः विगताः यस्मादेष वीतरागभयक्रोधः स्थितधीः स्थितप्रज्ञः मुनिस्सन्न्यासी तदोच्यते ॥५६॥

यस्सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ।
नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥५७॥

किंच-- य इति । यो मुनिः सर्वत्र देहजीवितादिष्वपि अनभिस्नेहः अभिस्नेहवर्जितः तत्तत्प्राप्य शुभाशुभं तत्तच्छुभमशुभं वा लब्ध्वा नाभिनन्दति न द्वेष्टि शुभं प्राप्य न तुष्यति न हृष्यति अशुभं च प्राप्य न द्वेष्टीत्यर्थः। तस्यैवं हर्षविषादवर्जितस्य विवेकजा प्रज्ञा प्रतिष्ठिता॥

---

दुःखेष्विति । एवंविधो मुनिस्स्थितधीरित्युच्यत इत्यन्वयः । आध्यात्मिकादिष्वित्यादिपदादाधिदैविकाधिभौतिकयोर्ग्रहणम् । तापानां दुःखहेतुत्वाद्दुःखेष्वित्यौपचारिकः प्रयोगः । तत्राध्यात्मिका ज्वरादिजन्याः, आधिभौतिका व्याघ्रसर्पादिजन्याः, आधिदैविकाश्शीतवातातपादिजन्यास्तापा इति विवेकः । दुःखप्राप्ताविति आध्यात्मिकादितापप्रयुक्तदुःखप्राप्तावित्यर्थः । नच दुःखेष्वित्यस्य तापार्थमुक्त्वा दुःखप्राप्ताविति पुनःपदान्तरकल्पना दुष्टेति वाच्यं, दुःखेष्विति बहुवचनान्न तस्य साक्षाद्दुःखार्थवचनं युक्तम् । अतो दुःखहेतुषु तापेष्वित्युक्तिर्युक्तेति ।

प्राप्तेष्विति । ननु प्राप्येषु सुखेषु भवतीच्छा पुंसः, नतु प्राप्तेषु इच्छायाः फलावसानत्वादित्यत आह--नाग्निरिवेति । इन्धनाद्याधाने काष्ठाज्यादिनिधाने यथाग्निर्वर्धते तथा सुखप्राप्तौ यस्य सुखानि नानुविवर्धन्ते स सुखेषु विगतस्पृहः । अयमाशयः--अन्नप्राप्तौ यथा अन्नेच्छा निवर्तते पुंसस्तथा धनप्राप्तौ धनेच्छा निवर्तमाना न दृष्टा, एवं सुखप्राप्तावपि सुखेच्छा न निवर्तते- पुनरपीतोधिकं मे सुखं स्यादिति सुखेच्छा वर्धत एव । यथा काष्ठाज्यादिप्राप्तावपि नाग्नेः काष्ठाद्याशा निवर्तते 'नाग्निस्तृप्यति काष्ठाना'मिति न्यायात्किन्तु सा वर्धतएव । यद्यग्नेः काष्ठादिभ्यस्तृप्तिस्तर्हि तत्र निक्षिप्तं काष्ठादिकं सोग्निः पुनर्न दहेदेव, नैवं लोके दृश्यते, परं त्वतीव प्रवृद्धजिह्वस्सन् काष्ठादिकं मार्गयत्येव । तस्मान्न सुखप्राप्त्या सुखेच्छाया निवृत्तिरिति युक्तमुक्तं सुखेषु प्राप्तेष्विति । तदेति पूर्वश्लोकाद्यदातदाशब्दयोरिहानुवृत्तिः । यदा मुनिरेवंविधो भवति तदा स्थितप्रज्ञ इत्युच्यत इत्यन्वयः । यद्वा पुरुष इति शेषः । यदा पुरुष एवंविधो मुनिर्भवति तदा स्थितप्रज्ञ इत्युच्यत इति । नचात्र मुनिशब्दस्य सन्न्यासस्यार्थबोधकत्वे विवक्षितत्वं- मुनिर्मननशीलः । सर्वकर्मसन्न्यासिनस्तु इतरव्यापाराभावादात्ममननशीलत्वोपपद्यते न गृहिण इति । नच कथमसन्न्यासिनां वसिष्ठादीनां मुनित्वमिति वाच्यं, गृहिणोपि ते त्यक्तसर्वकर्माणो वनमाश्रित्य निरन्तरमात्ममननं कुर्वन्त्येवेति मुनयस्ते सन्न्यासिन एवेति ॥५६॥

य इति । यः सर्वत्रानभिस्नेहस्सन् तत्तच्छुभाशुभं प्राप्य नाभिनन्दति, नद्वेष्टि, तस्य प्रज्ञाप्रतिष्ठितेत्यन्वयः । तस्य प्रज्ञा प्रतिष्ठितेत्यस्य स स्थितप्रज्ञ इत्यर्थः ॥५७॥

उच्यते - आत्मन्येव प्रत्यगात्मस्वरूप एव आत्मना स्वेनैव बाह्यलाभनिरपेक्षः तुष्टः परमार्थदर्शनामृतरसलाभेनान्यस्मादलं प्रत्ययवान् स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य सः स्थितप्रज्ञः विद्वांस्तदोच्यते। त्यक्तपुत्रवित्तलोकैषणस्सन्न्यासी आत्माराम आत्मरतिः स्थितप्रज्ञ इत्यर्थः ॥५५॥

दुःखेष्वनुद्विग्नमनास्सुखेषु विगतस्पृहः।
वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥५६॥

---

द्विद्वानपि प्रवर्तेतेति भावः। इति शङ्कायामाह—आत्मन्येवेति। स्वेनैवेत्यस्यार्थमाह—अन्यलाभनिरपेक्ष इति। आत्मन्येवात्मना तुष्ट इत्यस्य फलितार्थमाह—परमार्थेति। यथा लब्धामृतस्यान्नादावलंबुद्धि तद्वदात्मस्वरूपानन्दानुभवशालिनस्तदितरत्र सर्वत्राप्यलंबुद्धिरेवेत्यर्थः। एतेन नामुष्य विदुषश्शरीरधारणस्पृहा यदर्थमुन्मत्तवद्भोजनादिकर्मणि प्रवर्तेत। नापि क्षुत्तृड्बाधा- आत्मानन्दानुभवव्यग्रत्वात्, नापि शरीरपातः- यावत्प्रारब्धं तस्यापातात्- इति सिद्धम्। श्लोकस्य निष्कृष्टार्थमाह—त्यक्तेति। एषणा अभिलाषः- त्यक्ताः पुत्रे वित्ते लोकेषु स्वर्गादिषु च एषणा येन स. त्यक्तपुत्रवित्तलोकैषण.। पुत्रशब्दः दारपश्वाद्युपलक्षणः। सन्न्यासी कृतसर्वकर्मसन्न्यासः आत्माराम. आत्मैवारामो विहारस्थानं यस्य स.। आत्मन्येव रति. प्रीतिर्यस्य स आत्मरतिः। एवंविधः पुरुष. स्थितप्रज्ञ इत्युच्यते।

ननु प्रजहाति यदा कामानित्यादिना त्यक्तपुत्रवित्तलोकैषण इति, आत्मन्येवात्मना तुष्ट इत्यनेनात्माराम आत्मरतिरिति च सिध्यति- सन्न्यासीति तु न कुतोपीति कथं निर्मूलस्य तस्य वचनं भाष्ये इतिचेन्नैवम्—सर्वकर्मसन्न्यासपूर्वकत्वादात्मनिष्ठायाः। नहि कर्मसु व्यग्रस्यात्मरतिस्स्यात्। तस्मादर्थसिद्धार्थकथनं सन्न्यासिन इति न निर्मूलत्वं तस्य। नच वासुदेवजनकवसिष्ठादीनामसन्न्यासिनामेतावन्मात्रेणास्थितप्रज्ञत्वं चोदनीय- लोकातिगत्वात्चरितस्य- नहि वासुदेवादिभिरनुष्ठितानि कर्माणि कर्माणि, येन तत्सन्न्यासस्सन्न्यासस्स्यात्। उक्तं हीदं शङ्कराचार्यैरेव ग्रन्थारम्भे। यद्यधुनातना अपि वासुदेवादिदृष्टान्तेन सन्न्यासं न स्वीकुर्युः, तर्हि किमिति ते शङ्कराचार्यादिदृष्टान्तेन गृहस्थाश्रमं न परित्यजेयुः। नच कोऽयं तव सन्न्यासे पक्षपात इति वाच्यं, कोऽयं तव सन्न्यासे प्रद्वेषहेतु· गृहस्थाश्रमविषयकरागादृते। सति चास्मिन् रागे तव नात्मरतिस्स्यात्। अतस्तद्रागभ्रंशनाय सन्न्यासस्स्वीकार्यो गृहस्थाश्रमस्थैर्मुमुक्षुभिस्स्थितप्रज्ञत्वलाभार्थम्। नच सन्न्यासोपि भिक्षावन्दनादिरागपूर्वक एवेति वाच्यं, 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुत्यैव सन्न्यासस्य वैराग्यपूर्वकत्वस्योक्तत्वात्। यदि मोक्षकामस्सकामस्स्यात्तर्हि सन्न्यासरागी रागी स्यात्।

ननु जन्मान्तरानुष्ठितसन्न्यासादिसुकृतवशात्कः कश्चिद्ब्रह्मचर्यात्वाब्रह्मचर्ये वा गार्हस्थ्ये वा स्थितप्रज्ञो भवति जडभरतादिवत्तत्र सन्न्यासस्य व्यभिचार इति चेन्नैवम्, तस्य जनकादिवल्लोकातिगचरितेष्वेव गणनीयत्वात्। अथवा इह जन्मनि सन्न्यासवज्जन्मान्तरीयसन्न्यासस्यापि स्थितप्रज्ञत्वहेतुत्वाज्जनकभरतादीनां जन्मान्तरीयसन्न्यासित्वात् स्थितप्रज्ञत्वमिति बोध्यम् ॥५५॥

देहवतः रसवर्जं रसो रागः विषयेषु यस्तं वर्जयित्वा- रसशब्दः रागे प्रसिद्धः- स्वरसेन प्रवृत्तो रसिको रसज्ञ इत्यादिदर्शनात् । सोपि रसः रंजनारूपः सूक्ष्मः अस्य यतेः परं परमार्थतत्त्वं ब्रह्म दृष्ट्वोपलभ्याहमेव तदिति निवर्तते- निर्बीजं विषयविज्ञानं सम्पद्यत इत्यर्थः । नासति सम्यग्दर्शने रसस्योच्छेदः । तस्मात्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥

यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ।
इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥६०॥

सम्यग्दर्शनलक्षणप्रज्ञास्थैर्यं चिकीर्षताऽऽदाविन्द्रियाणि स्ववशे स्थापयितव्यानि यस्मात्तदनवस्थापने दोषमाह—यतत इति । यततः प्रयत्नं कुर्वतः हि यस्मात् हेकौन्तेय पुरुषस्य विपश्चितो मेधाविनो मनोपीति व्यवहितेन सम्बन्धः । इन्द्रियाणि प्रमाथीनि प्रमथनशीलानि विषयाभिमुखं हि पुरुषं विक्षोभयन्ति आकुलीकुर्वन्ति, आकुलीकृत्य च हरन्ति प्रसभं प्रसह्य प्रकाशमेव पश्यतो विवेकविज्ञानयुक्तं मनः ॥६०॥

---

दृष्ट्वा निवर्तते इति वाक्यं व्याख्यातुमारभते—सोपीति । रञ्जना रूपो रागात्मकः दृष्ट्वेत्यस्यार्थमाह—उपलभ्येति। ज्ञात्वेत्यर्थः। साक्षात्कृत्येति यावत्। ज्ञानस्याकारमाह—अहमेव तदिति। अहमेव ब्रह्मेत्यात्मानं साक्षात्कृत्वेत्येर्थः । फलितमाह—निर्बीजमिति। विषयविज्ञानस्य राग एव बीजं—नीरागस्य विषयप्रवृत्त्यदर्शनात् । रागस्यापि निवृत्तत्वाद्विषयज्ञानं निर्बीजं जायत इत्यर्थः । मूर्खस्य तु न रसनिवृत्तिरात्मदर्शनाभावादिति कृत्वा न तस्य विषयज्ञानबीजध्वंस इति तपोनिवृत्त्यनन्तरं पुनरपि विषयविज्ञानप्रसङ्गः । बीजसत्त्वादतो न काष्ठतपसा स्थितप्रज्ञत्वलाभ इति भावः । इदमेवाह—नेति । सम्यग्दर्शने परमार्थतत्त्वज्ञाने असति रसस्योच्छेदो नाशो नच भवति । तस्मात्तपसा रसोच्छेदाभावात्सम्यग्दर्शनमेवात्मा स्वरूपं यस्यास्तस्यास्सम्यग्दर्शनात्मिकायाः प्रज्ञायाः ज्ञानस्य स्थैर्यं प्रतिष्ठा कर्तव्यं यतिनेति शेषः ॥५९॥

यतत इति। हेकौन्तेय हि यततो विपश्चितः पुरुषस्य मनोपि प्रमाथीनीन्द्रियाणि प्रसभं हरन्ति प्रबलमिति प्रज्ञास्थैर्यलाभार्थमिति भावः । मेधाविनो बुद्धिमतः मनोपीति किं पुनर्मूर्खस्य मन इत्यपेर्थः । मनःपुरुषयोस्तादात्म्याध्यासादाह—विषयाभिमुखं पुरुषमिति । विषयाभिमुखमनस्कं पुरुषमित्यर्थः । विषयाभिमुखं पुरुषाध्यस्तमन इति वार्थः । विषयाभिमुखं पुरुषं हि यस्मादिन्द्रियाणि प्रमथ्नन्ति, तत इन्द्रियाणि प्रमाथीनीत्युच्यन्त इति भावः । प्रमथ्नन्तीत्यस्यार्थमाह—विक्षोभयन्तीति । तस्याप्यर्थमाह—आकुलीकुर्वन्तीति । एवं प्रमथनशीलत्वादिन्द्रियाणि तावदाकुलीकृत्य मनो हरन्तीत्याह—आकुलीकृत्येति । प्रसभमित्यस्य यावदर्थमाह—प्रकाशमेवेति, पश्यत इति । पुरुषस्येति शेषः । कीदृशं मनो हरन्तीत्यत आह—विवेकविज्ञानयुक्तं मन इति । विपश्चितो मन इत्यस्यार्थतस्सिद्धं विवेकविज्ञानयुक्तमिति आत्मैक एवानवद्यः, विषयास्तु दुष्टा एवेति जानतएव पुरुषस्य मनः-प्रकाशमेवेन्द्रियाणि विषयाभिमुखं कृत्वा व्याकुलीकृत्य निष्प्रज्ञं कुर्वन्तीत्यर्थः ॥६०॥

यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥५८॥

किंच—यदेति । यदा संहरते संयच्छति सम्यगुपसंहरते चायं ज्ञाननिष्ठायां प्रवृत्तो यतिः कूर्मोऽङ्गानीव- यथा कूर्मो भयात्स्वान्यङ्गानि उपसंहरते सर्वशः सर्वतः, एव ज्ञाननिष्ठ इन्द्रियाणीन्द्रियार्थेभ्यस्सर्वविषयेभ्यः उपसंहरते, तस्य प्रज्ञा प्रतिष्ठितेत्युक्तार्थं वाक्यम् ॥५८॥

विषया विनिवर्तन्ते निराहारस्य देहिनः ।
रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥५९॥

तत्र विषयाननाहरत: आतुरस्यापीन्द्रियाणि संह्रियन्ते, नतु तद्विषयो रागः- स कथं संह्रियत इत्युच्यते—विषया इति । यद्यपि विषया विषयोपलक्षितानि विषयशब्दवाच्यानीन्द्रियाणि निराहारस्यानाह्रियमाणविषयस्य काष्ठतपसि स्थितस्य मूर्खस्यापि विनिवर्तन्ते, देहिनो

यदेति । यदाऽयं कूर्मोऽङ्गानीव सर्वश इन्द्रियार्थेभ्य इन्द्रियाणि संहरते च, तदा तस्य प्रज्ञा प्रतिष्ठितेत्यन्वय । इन्द्रियार्थेभ्य इति पञ्चमी । उपसंहरते प्रतिनिवर्तयति- इन्द्रियाणां विषयप्रावीण्यं वारयतीत्यर्थ ॥५८॥

विषया इति । अनाहरत अगृह्णत इन्द्रियव्यापाराभावादिति भाव । आतुरस्तपसा पीडित — संह्रियन्ते उपसंहृतानि भवन्ति- निर्व्यापाराणि भवन्तीत्यर्थ । इत्युच्यते इति शङ्कायामुच्यत इत्यर्थ । निराहारस्य देहिनो विषया रसवर्जं विनिवर्तन्ते । विषयेभ्य इति शेष । ननु इन्द्रियाणां विषयेभ्यो विनिवृत्तिर्भवतुनाम, कथं पुनर्विषयाणामत आह—विषयोपलक्षितानीति । ग्राह्यग्राहकभावरूपसम्बन्धेन हेतुना विषयशब्दो लक्षणया विषयग्राहकानीन्द्रियाणि प्रतिपादयतीत्यर्थ । अर्थानुपपत्तेर्लक्षणाबीजस्य सत्त्वात् । निराहारस्येति । आहरणमाहार तच्चाहरणं प्रकरणाद्विषयाणामेव निर्गत आहारो विषयाहरणं यस्मात्स निराहार तस्य- शब्दस्पर्शादीन्विषया न गृह्णत इत्यर्थ । कथं तदग्रहणमत आह—काष्ठतपसि स्थितस्येति । यस्मिन् तपसि पुरुष काष्ठवद्वर्तते तत्तप काष्ठतप, तस्मिन् स्थितस्य नेत्रश्रोत्रादिनिमीलनविधानादिपूर्वकं काष्ठवन्निश्चलाङ्गस्य कथं विषयग्रहणसम्भव इति भाव । नचात्र निराहारस्य त्यक्तभोजनस्य कृतलङ्घनस्येति यावत्- इत्यर्थ इति शङ्क्य, आहाराभावेपि चक्षुस्त्वगादिभीरूपस्पर्शादिविषयग्रहणसम्भवात्- न सर्वेन्द्रियप्रतिनिवृत्तिरिति । मूर्खस्येति । ज्ञानहीनस्य देहिन इति देहादिसङ्घाते अहममिमानिन - न त्वात्मन तस्य सर्वज्ञस्य मूर्खत्वासम्भवात् । विषयेष्विति विषयसप्तमी । विषयाश्शब्दादय तेषु- तद्विषय इत्यर्थ ।

ननु रसशब्दस्य कट्वादिरसेषु शृङ्गारादिरसेषु वा प्रसिद्धप्रयोगस्य कथमत्र रागवाचित्वमत आह—स्वरसेनेत्यादि । स्वरसेनास्वेच्छया अनुभवरसिको विजानातीत्यादौ रसिकशब्दश्च रागवति प्रसिद्ध, रसशब्दश्च रक्ते प्रसिद्ध 'शृङ्गारमुख्यमधुरादिसुवर्णरेतोनिर्यासरागगरलद्रवपारदेषु । आस्वादनध्वनिसुधाम्बुरसत्वधातुष्विष्टो रसोऽथ घरणी रसना रसा स्या'दित्यभिधानं चास्ति । अस्य यते रसोपि परं

क्रोधाद्भवति सम्मोहस्सम्मोहात्स्मृतिविभ्रमः ।
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति ॥६३॥

क्रोधादिति । क्रोधाद्भवति सम्मोहः अविवेकः कार्याकार्यविषयः क्रुद्धो हि सम्मूढस्सन् गुरुमप्याक्रोशति, सम्मोहात् स्मृतिविभ्रमः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः स्मृतेः स्याद्विभ्रमः भ्रंशः स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः । ततः स्मृतिभ्रंशाद्बुद्धिनाशः बुद्धेर्नाशः कार्याकार्यविषयविवेकायोग्यतान्तःकरणस्य बुद्धेर्नाश इत्युच्यते । बुद्धिनाशात्प्रणश्यति तावदेव हि पुरुषः यावदन्तःकरणं कार्याकार्यविषयविवेकयोग्यं तदयोग्यत्वे नष्ट एव पुरुषो भवति । अतस्तस्यान्तःकरणस्य बुद्धेर्नाशात्प्रणश्यति । पुरुषार्थायोग्यो भवतीत्यर्थः ॥

रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ।
आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥६४॥

सर्वानर्थस्य मूलमुक्तं विषयाभिध्यानम् । अथेदानीं मोक्षकारणमिदमुच्यते—रागेति ।

---

र्थस्य मूलं कारणमिदं विषयध्यानरूपमुच्यते । सर्वानर्थमूलमितिपाठे पराभविष्यतः पराभवं गमिष्यतो विवेकविज्ञानहीनस्य पुरुषस्येत्यर्थः । कुतश्चिद्धेतोः कामे प्रतिहतेसति क्रोधो जायत इत्यर्थः । यथा स्त्रीकामस्य स्त्रियामपहृतायामपहर्तरि क्रोध.; विषयान् ध्यायन· पुंसस्तेषु सङ्ग उपजायते, सङ्गात्कामस्सञ्जायते, कामात्क्रोधोऽभिजायते, इत्यन्वयः ॥६२॥

क्रोधादिति, अविवेक इति । नायमात्मानात्मविषय इत्याह—कार्येति । इदं कर्म कार्यमिदं कर्माकार्यमिति विवेको न भवति क्रुद्धस्य पुंस इत्यर्थ. । तदेव निदर्शयति--क्रुद्धोहीति । हिः प्रसिद्धौ । क्रोशति उपालभते निन्दतीति यावत् । स्मृतीति । अनुभवजन्यस्संस्कार:, संस्कारजन्या तु स्मृति:, शास्त्रं श्रुतिस्मृत्यादिकमाचार्योपदेशः गुरूपदेशः ताभ्यामाहितस्संपादितो यः संस्कारः आत्मज्ञानवासना तस्माज्जनितायाः स्मृतेः सच्चिदानन्द आत्मेत्याकारकस्मरणस्य । भ्रंशशब्दार्थमाह--स्मृतीति । स्मृत्युत्पत्तौ यन्निमित्तं सदृशवस्तुदर्शनादिकं तस्य प्राप्तावपि स्मृतेरनुत्पत्तिर्भ्रंश इत्युच्यत इत्यर्थः ।

बुद्धिनाशः बुद्धेरन्त.करणस्य नाशः कार्याकार्यविषयविवेकाभावः बुद्धिनाशः न हि यावन्मुक्तिदशमन्त करणस्य स्वरूपनाशः अन्त.करणस्य कार्याकार्यविषयविवेकायोग्यता बुद्धेर्नाश इत्युच्यत इत्यन्वयः । प्रणश्यतीत्यस्यार्थमाह—तावदित्यादिना । यावदन्त करणं यस्य कार्याकार्यविषयविवेकयोग्यं तावदेव स पुरुष इत्युच्यते । तद्योग्यत्वे नष्टे स पुरुषो नैव भवति किन्तून्मत्तः स्थाणु· पशुर्वा भवति, अयमेव हि पुरुषस्य प्रणाशः यदन्त.करणस्य कार्याकार्यविषयविवेकाभावः । अतस्तादृशविवेकशून्यान्त करणः पुरुषः प्रणष्ट इव भवति- पुरुषात्तस्मात्पुरुषत्वस्यैवापगतत्वादिति कृत्वा प्रणश्यतीत्युक्तम् । पुरुषनिष्ठं पुरुषत्वं पौरुषं च पुरुषार्थयोग्यत्वमेवेत्यभिप्रेत्याह—पुरुषार्थायोग्य इति । न ह्यपुरुषाः पश्वादयः किमपि पुरुषार्थं साधयेयुरिति भावः ॥६३॥

रागेति । रागद्वेषवियुक्तैरिन्द्रियैर्विषयांश्चरन् विधेयात्मा तु प्रसादमधिगच्छति । तदुरस्सरेति

तानि सर्वाणि संयम्य युक्त आसीत मत्परः ।
वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

यतस्तस्मात्—तानीति । तानि सर्वाणि संयम्य संयमनं वशीकरणं कृत्वा युक्त आसीत युक्तस्समाहितस्सन्नासीत, मत्परः अहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य सः मत्परः नान्योहं तस्मादित्यासीतेत्यर्थः । एवमासीनस्य यतेस्सतो वशे हि यस्येन्द्रियाणि वर्तन्ते अभ्यासबलात् तस्य प्रज्ञा प्रतिष्ठिता ॥६१॥

ध्यायतो विषयान् पुंसः सङ्गस्तेषूपजायते ।
सङ्गात्संजायते कामः कामात् क्रोधोऽभिजायते ॥६२॥

अथेदानीं पराभविष्यतस्सर्वानर्थस्य मूलमिदमुच्यते—ध्यायत इति । ध्यायतः चिन्तयतः विषयान् शब्दादीन् विषयविशेषानालोचयतः पुंसः पुरुषस्य सङ्गः आसक्तिः प्रीतिः तेषु विषयेषूपजायते, सङ्गात्प्रीतेस्संजायते समुत्पद्यते कामः तृष्णा, कामात् कुतश्चित्प्रतिहतात् क्रोधोऽभिजायते ॥६२॥

---

तर्हि किं कर्तव्यमत आह—तानीति, यतस्तस्मादिति । यस्मादेवमिन्द्रियाणि विपश्चितोपि मनः प्रक्षोभ्य प्रसभं हरन्ति तस्मादित्यर्थः । सर्वाणीन्द्रियाणीति शेषः । समाहित इति । चित्तसमाधानशालीत्यर्थः । अहंशब्दार्थमाह—वासुदेव इति । किमयं वसुदेवपुत्रो नेत्याह—सर्वप्रत्यगात्मेति । सर्वेषां भूतानां हृदि प्रत्यग्रूपेण स्थित आत्मा वासुदेव इत्यर्थः । परः प्राप्य इत्यर्थः । प्रत्यगभिन्नब्रह्मात्मानुसन्धानपर इति यावत् । तदेवाह—नान्योहं तस्मादिति । अहं वासुदेवाद्भिन्नो न, किंतु वासुदेव एवाहमिति ज्ञानवानिति शेषः । आसीत वर्तेत- किञ्चिदप्यकुर्वन् तूष्णीं वर्तेतेत्यर्थः । एवमासीनस्य सतो यस्य यतेर्वशे इन्द्रियाणि वर्तन्ते तस्य प्रज्ञा प्रतिष्ठिता । कुतो वर्तन्ते वशे इन्द्रियाणीत्यत आह—अभ्यासबलादिति । इन्द्रियाणां विषयप्रावण्यं वारयित्वा मन आत्मनि समाधाय ब्रह्माहमस्मीति यो नित्यमनुसन्धत्ते तस्य क्रमेण भवतीन्द्रियजयस्तथासतीन्द्रियजये स स्थितप्रज्ञ इत्युच्यत इत्यर्थः । अत्राधिकारिविशेषणानि शमदमोपरतिसमाधानान्युक्तानीति बोध्यम् । यत्तु मत्परः चेतसश्शुभाश्रयभूते मयि मनोऽवस्थाप्येति रामानुजः, तन्मन्दम्—स्थितप्रज्ञस्य साङ्ख्यस्य योगिवद्ध्यानधारणासम्भवात्- नहि सच्चिदानन्दब्रह्मात्मतत्त्ववित्स्थितप्रज्ञः कञ्चिदाकारमात्मनि प्रकल्प्य ध्यायति- कल्पितस्य मिथ्यात्वात्, कल्पनस्य क्लेशावहत्वात्, चिरकालावस्थानाभावेन कल्पितस्य क्षणिकत्वाच्चतो दुःखहेतुत्वाच्च । नाप्यात्मनोन्यं परमात्मानं मनुते तन्मननस्य भयहेतुत्वात् । 'द्वितीयाद्वै भयं भव'तीति श्रुतेः, तत्त्वमस्यादिश्रुतिभिर्ब्रह्मात्मैक्यप्रतिपादनात् समाहिते मनसि सच्चिदानन्दलक्षणात्मस्वरूपाद्भिन्नस्य परमात्मस्वरूपस्य स्फुरणाभावाच्च, परमात्मनोपि सच्चिदानन्दरूपत्वेन आत्मस्वरूपात्पृथक्त्वायोगाच्च ॥६१॥

ध्यायत इति, पराभविष्यत इति । तिरस्करिष्यत इत्यर्थः । यतमानस्य विपश्चितः पराभवं जनयिष्यत इति यावत् । पुरेतिपाठस्तु सुगमः - तावदित्यर्थः । भविष्यत उत्पत्स्यमानस्य सर्वविघस्य

नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।
न चाभावयतश्शान्तिरशान्तस्य कुतस्सुखम् ॥६६॥

सेयं प्रसन्नता स्तूयते—नास्तीति। नास्ति न विद्यते न भवतीत्यर्थः। बुद्धिरात्मस्वरूपविषया अयुक्तस्यासमाहितस्य। न चायुक्तस्य भावना आत्मज्ञानाभिनिवेशः, तथा न चास्त्यभावयतः आत्मज्ञानाभिनिवेशमकुर्वतः। शान्तिरुपशमः, अशान्तस्य कुतस्सुखम्। इन्द्रियाणां हि विषयसेवातृष्णातः निवृत्तिस्सुखं, न विषयविषया तृष्णा सुखम्। दुःखमेव हि सा। न तृष्णायां सत्यां सुखस्य गन्धमात्रमप्युपपद्यत इत्यर्थः ॥६६॥

इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते।
तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥६७॥

असमाहितस्य कस्माद्बुद्धिर्नास्तीति, उच्यते—इन्द्रियाणामिति। इन्द्रियाणां हि यस्माच्चरतां स्वविषयेषु प्रवर्तमानानां यन्मनोऽनुविधीयते अनुप्रवर्तते तदिन्द्रियविषयकल्पनेन प्रवृत्तं मनः- अस्य यतेः हरति प्रज्ञां आत्मानात्मविवेकजां, वायुर्नावमिवाम्भसि। उदके जिगमिषतां सांयात्रिकाणां मार्गादुद्धृत्य उन्मार्गे नावं यथा वायुः प्रवर्तयति एवमात्मविषयां प्रज्ञां हृत्वा मनः विषयविषयां करोति ॥६७॥

तस्माद्यस्य महाबाहो! निगृहीतानि सर्वशः।
इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

यततोह्यपीत्युपन्यस्तस्यार्थस्यानेकदोषोपपत्तिमुक्त्वा तं चार्थमुपपाद्योपसंहरति—तस्मादिति। इन्द्रियाणां प्रवृत्तौ दोष उपपादितो यस्मात्, तस्माद्यस्य यतेः हेमहाबाहो निगृहीतानि सर्वशः इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥६८॥

---

नास्तीति। बुद्धिर्ज्ञानं। सुखस्य स्वरूपमाह—इन्द्रियाणामिति। इन्द्रियाणां विषयसेवायां या तृष्णा स्पृहा तस्या इति पञ्चम्यास्तसिः। विषयविषया शब्दादिविषया तृष्णा तु न सुखम्। सा विषयतृष्णा गन्धमात्रं लेशमात्रमपि नोपपद्यते न जायते। ननु विषयसिद्धौ विषयतृष्णातस्सुखमेवेति चेत्, मैवम्—यदि विषयसिद्धिमात्रेण विषयतृष्णा निवर्तेत तर्हि सुखमेव, नतु निवर्तते, प्रत्युत वर्धते। नहि लब्धधनस्य धनतृष्णा निवर्तमाना दृष्टा, श्रुता वा। नापि स्त्रियासह मिथुनीभूय वर्तमानस्य स्त्रीतृष्णा निवर्तमाना दृष्टा, श्रुता वा। तृष्णायां निवृत्तायामेव मनस्यन्तर्मुखेसति तत्रात्मसुखप्रतिबिम्ब-सुखलाभः, ततश्च सुखविरोधिनी तृष्णा दुःखहेतुत्वाद्दुःखमेवेति ॥६६॥

इन्द्रियाणामिति। इन्द्रियाणां स्वविषयेषु चरतां सतां, यद्वा चरतामिन्द्रियाणामिति कर्मणि षष्ठी। चरन्ति इन्द्रियाणीत्यर्थः। यदिति मनसो विशेषणम्। सांयात्रिकाः पोतवणिजः। विषयविषयां शब्दादिविषयां प्रज्ञाम् ॥६७॥

तस्मादिति। तस्मात् इन्द्रियाणां विषयेषु प्रवृत्तेर्दुर्दोषवत्त्वादित्यर्थः। हेमहाबाहो यस्य इन्द्रि-

रागद्वेषवियुक्तैः रागश्च द्वेषश्च रागद्वेषौ तत्पुरस्सराहीन्द्रियाणां प्रवृत्तिः स्वाभाविकी, तत्र यो मुमुक्षुर्भवति स ताभ्यां वियुक्तैः श्रोत्रादिभिरिन्द्रियैः विषयानवर्जनीयान् अशनपानादीन्-देहस्थितिहेतूनिति यावत् । चरन्नुपलभमानः आत्मवश्यैः आत्मनः वश्यानि वशीकृतानि इन्द्रियाणि तैरात्मवश्यैः विधेयात्मा इच्छातो विधेय आत्मा अन्तःकरणं यस्य सोऽयं प्रसाद-मधिगच्छति । प्रसादं प्रसन्नतां स्वास्थ्यं ॥६४॥

प्रसादे सर्वदुःखानां हानिरस्योपजायते ।
प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठति ॥६५॥

प्रसादे सति किं स्यादित्युच्यते—प्रसाद इति । प्रसादे सर्वदुःखानां आध्यात्मिकादीनां हानिः विनाशः अस्य यतेः उपजायते । किंच प्रसन्नचेतसः शुद्धान्तःकरणस्य हि यस्मा-दाशु शीघ्रं बुद्धिः पर्यवतिष्ठति आकाशमिव परिसमन्तादवतिष्ठति आत्मस्वरूपेणैव निश्चला भवतीत्यर्थः । येषु प्रसन्नचेतसः अवस्थितबुद्धेः कृतकृत्यता यतस्तस्मात् रागद्वेषवियुक्तै-रिन्द्रियैः शास्त्राविरुद्धेषु अवर्जनीयेषु युक्तः समाचरेदिति वाक्यार्थः ॥६५॥

तौ रागद्वेषौ पुरस्सरौ यस्यास्सा तत्पुरस्सरा रागद्वेषप्रयुक्तेत्यर्थः । प्रवृत्तिरिति विषयेष्विति शेषः । स्वाभाविकी स्वभावादागता- स्वभावसिद्धेति यावत् । चरन्निति चरगतिभक्षणयोरिति धातुः । तत्र ये गत्यर्थास्ते ज्ञानार्था इति न्यायाच्चरतेर्ज्ञानार्थत्वमित्यभिप्रेत्याह—उपलभमान इति । अनुभवन्नित्यर्थः । इच्छातो विधेय इति स्वेच्छाधीन इत्यर्थः । स्वाधीन इति यावत् । स्वास्थ्यमिति मनःक्षोभाभाव मित्यर्थः । अत्र चरन्नित्यस्य तिरस्कृत्य वर्तमान इति रामानुजेनोक्तं, तत्तुच्छम्—चरतेस्तादृशार्था लाभात् । चरतिरत्र आक्रमणरूपगतिपरः भक्षणार्थसंहारपरो वा, तेन तिरस्कारार्थलाभ इति वेदान्त-देशिकः, तत्तुच्छम्—गमनाक्रमणयोर्भेदात् प्राप्त्याक्रमणयोस्तु भवति कथञ्चिद्भेदः, तथापि नाक्रम-णात्तिरस्कारलाभः । तथा भक्षणसंहारयोरपि भेद एव- भक्षणस्याहिंसात्मकत्वात्संहारस्य च हिंसात्म-कत्वात् । व्याघ्रः पुरुषं भक्षयतीत्यादौ कथञ्चिद्भक्षणस्य हिंसात्मकत्वेऽपि न तिरस्काररूपत्वं भक्षणस्य, भक्षणं ह्यनुभवः - तिरस्कारस्तु तत्रानादरः स ह्यननुभवे पर्यवस्यति- अन्नं तिरस्कृत्य भक्ष्यान् भक्षयती-त्यादिप्रसिद्धेः । तस्माच्चरतेस्तिरस्कारार्थकत्वमप्रमाणम् ॥६४॥

प्रसाद इति । बुद्धिरन्तःकरणं निश्चयात्मकं, चेतस्तु संशयात्मकमिति विवेकः । समाचरेत् आसीन वर्तेतेति यावत् । ज्ञाननिष्ठामभ्यसेदिति वा । बुद्धिः पर्यवतिष्ठतीत्यत्र बुद्धिशब्दस्य ज्ञाना-र्थाश्रयणे तस्य प्रज्ञा प्रतिष्ठितेत्यनेनैकार्थ्यं प्रतिभाति ।

ननु आत्मस्वरूपेणैव निश्चला भवतीत्यस्य अर्थानुपपत्तिः - अन्तःकरणात्मिकाया बुद्धेः अहं ब्रह्मेति बुद्धिवृत्तेर्वा सच्चिदानन्दलक्षणात्मस्वरूपायोगादिति चेत्, उच्यते—सच्चिदानन्दलक्षणात्मनादात्म्यादन्तःकरणस्यात्मस्वरूपलाभ इति । यथा निरन्तरविष्णुमूर्तिध्यानवशान्मनसस्तद्रूपत्वलाभः, बुद्धिवृत्तेस्तु आत्मस्वरूपविषयत्वेन नैश्चल्यं विवक्षितमित्यदोषः ॥६५॥

दृबुद्धीनां तस्यां परमार्थतत्त्वलक्षणायां अज्ञाननिद्रायां प्रबुद्धः जागर्ति संयमी संयमवान् जितेन्द्रियो योगीत्यर्थः। यस्यां ग्राह्यग्राहकभेदलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रतीत्युच्यन्ते प्रसुप्ता इव स्वप्नदृशः सा निशा अविद्यारूपत्वात् परमार्थतत्त्वं पश्यतो मुने

---

दावयवस्यान्तर्भाव इत्याह—अज्ञाननिद्रायामिति। जाग्रत्स्वप्नयोरिव न ज्ञानानि सुषुप्ताविव न निद्रास्य तम.- न विद्येते ज्ञाननिद्रे यस्यां तस्यामिति बहुव्रीहिः। अज्ञानानिद्रायामितिपाठे बहुव्रीहि-द्वयस्य कर्मधारय·। सच्चिदानन्दरूपे आत्मनि अज्ञानाभावान्न निद्रा- बुद्ध्यभावान्न तद्वृत्तिविज्ञानानि सन्तीत्यर्थः। नचाज्ञानोपाधिके आत्मनि कथमज्ञानाभाव इति वाच्यं, निरुपाधिके आत्मनि अज्ञानो-पाधिकल्पनस्याताात्त्विकत्वात्, परमार्थदशायामात्मन्यविद्याऽभावाच्च- यावद्व्यवहारं हि व्यवहारान्यथानुप-पत्त्या आत्मन्यज्ञानं कल्पितम्। किंच नाहं घटं जानामीति यावद्घटाज्ञानानुभवस्तावद्घटाज्ञानमस्ति-- चक्षुर्वृत्त्या घटाज्ञाने नाशिते तु घटप्रत्यक्षं भवति- सति च घटप्रत्यक्षे कथं पुनर्घटाज्ञानसद्भाव.- एवं नाहं ब्रह्म जानामीति यावदात्माऽज्ञानानुभवः तावदात्माऽज्ञानमस्ति- अहंब्रह्मेति धीवृत्त्या आत्माऽज्ञाने नाशिते तु आत्मसाक्षात्कारो जायते। सति चात्मसाक्षात्कारे कथं पुनरात्माज्ञानानुभवः, यद्बलेनात्म-न्यज्ञानं कल्प्येत। नच कार्यलिङ्गकानुमानेन कल्प्यतामिति वाच्यं, परमार्थतः प्रपञ्चाभावात्। तस्मा-त्सिद्धं परमार्थतत्त्वे ज्ञानाज्ञानद्वन्द्वमित्यनवद्यम्। प्रबुद्धः विद्वान् स्थितप्रज्ञ इति यावत्। कोसौ प्रबुद्ध अत आह—संयमीति। संयम इन्द्रियजयः। एतेन सर्वभूतानामविषयमात्मतत्त्वं स्थितप्रज्ञ एक एव नित्यमनुसन्दधानो वर्तत इति सिद्धम्। इदमेव हि विदुष आत्मनि जागरणं नाम यदात्मस्वरूपानुभवः। इदमेव ह्यविदुषामात्मनि स्वापोनाम यदात्मस्वरूपाज्ञानम्।

अथ श्लोकस्योत्तरार्थं व्याचष्टे—यस्यामिति। ग्राह्याणि विषयाः, ग्राहकाणि समनस्कानीन्द्रि-याणि, तद्भेद एव लक्षणं स्वरूपं यस्यास्तस्यां निशायामविद्यानिद्रायामज्ञानात्मकनिद्रायां- निशाकार्ये निद्रायां निशात्वोपचार इति भावः। प्रसुप्तान्येवेति। अज्ञाननिद्राभिभूतत्वादिति भावः। उच्यन्त इति। अविवेकिभिरिति शेष.। तत्र दृष्टान्तमाह—प्रसुप्ता इव स्वप्नदृश इति। यथा निद्राया प्रसुप्ता-स्स्वप्नद्रष्टृत्वाज्जाग्रतीत्युच्यन्ते तद्वदिति। यद्वा व्यतिरेकदृष्टान्तोऽयं- यथा स्वप्नदृश. पुरुषाः निद्रायां-प्रबुद्धा अपि प्रसुप्ता इत्युच्यन्ते तद्वदिति। यत्रानिदुषा सर्वेषां भूतानां लौकिके च वैदिके च सर्वस्मि-न्नविद्याकार्ये व्यवहारे प्रवृत्तिर्न स स्थितप्रज्ञस्य विषयः- तस्यात्मानुभवपरत्वात्, तद्विषया अविद्या-स्सकार्यास्य नष्टत्वाच्चेत्यभिप्रायः।

अत्रायं निष्कर्षः—यो भूतानामविषयत्वान्निशारूप आत्मा स स्थितप्रज्ञस्य गोचरत्वाद्दिवा-रूप·। यस्तु भूतानां विषयत्वाद्दिवारूप आविद्यको व्यवहार·, स स्थितप्रज्ञस्याविषयत्वान्निशारूप इति। यथा नक्तञ्चराणां निशा अस्मदादीनामहः, अस्मदादीनां निशा नक्तञ्चराणामहः तद्वदिति। यद्वा यस्मिन् ब्रह्मणि भूतानि निर्लीयन्ते सुषुप्तौ निशायां लब्धभूतानां निरोधमुच्यते। तत्र च स्थितप्रज्ञो जागर्ति-ब्रह्मानुभवत्येवेत्यर्थः। यस्यामविद्यानिशायां भूतानि व्यवहरन्ति सा अविद्या निशा भूतान्यपश्यतो मुने-

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ।**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥६९॥**

**योयं लौकिको वैदिको व्यवहारस्स उत्पन्नविवेकज्ञानस्य स्थितप्रज्ञस्याविद्याकार्यत्वात् अविद्यानिवृत्त्या निवर्तते, अविद्यायाश्च विद्याविरोधात् निवृत्तिरित्येतदर्थं स्फुटीकुर्वन्नाह— येति। या निशा रात्रिः सर्वपदार्थानामविवेककरी तमस्स्वभावत्वात् सर्वभूतानां सर्वेषां भूतानां किंतत् परमार्थतत्त्वं स्थितप्रज्ञस्य विषयः। यथा नक्तञ्चराणां अहरेव सदन्येषां निशा भवति, तद्वन्नक्तञ्चरस्थानीयानामज्ञानिनां सर्वभूतानां निशेव निशा परमार्थतत्त्वं अगोचरत्वादत-**

---

याणि सर्वशस्सर्वेभ्य इन्द्रियार्थेभ्यो निगृहीतानि, तस्य प्रज्ञा प्रतिष्ठितेत्यन्वय । अगृहीतविषयेन्द्रियो जितेन्द्रिय स्थितप्रज्ञ इत्युच्यत इत्यर्थ. ॥६८॥

**येति ।** सर्वभूतानां या निशा तस्यां संयमी जागर्ति, यस्यां भूतानि जाग्रति पश्यतो मुनेस्सा निशा, लौकिक इति भोजनादि·, वैदिकः यज्ञादि·, व्यवहार कर्म मनोवाक्कायनिष्पाद्य , अविद्या अहमज्ञ इत्यनुभवसिद्धा अनादिभावत्वे सति ज्ञाननिवर्त्यत्वलक्षणलक्षिता अज्ञानशक्त्यादिपर्याया माया । विद्या अहंब्रह्मेति ज्ञानम् । स्थितप्रज्ञस्य ज्ञानेनाज्ञाननिवृत्तौ तत्कार्यव्यवहारनिवृत्तिरित्यर्थ· । सर्वपदार्थाना घटादीनामविवेककरी विवेकाभावकारिणी । नहि निशायां दीपादिज्योतिरभावे घटोऽयं पटोऽयमिति विवेकः कस्यापि सम्भवति । तत्र हेतुमाह—**तमस्स्वभावत्वादिति** । अन्धकारमयत्वादित्यर्थ· । अत्र निशावर्णनस्याप्रकृतत्वात्पृच्छति—**किं तदिति** । का सा निशेत्यर्थ. । निशापदाभिधेयं तद्वस्तु किमित्यक्षरार्थ· । उत्तरयति—**परमार्थतत्त्वमिति** । आत्मेति यावत् । तस्यैव परमार्थसत्यत्वात् । प्रपञ्चो हि व्यवहारसत्य । कस्तद्वेदेत्यत आह—**स्थितप्रज्ञस्य विषय इति**। गोचर इत्यर्थः । तद्बुद्धिविषय इति यावत् । ननु या सर्वभूतानामविवेककरी निशा सा स्थितप्रज्ञस्याविवेककरी निशैव भवितुमर्हतीति कथं तस्यास्स्थितप्रज्ञविषयत्वमत आह—**यथेत्यादि** । अन्येषामस्मदादीनामहरेव सन्नक्तञ्चराणां निशा भवति-अहनि नक्तञ्चराणामप्रवृत्तेश्चेति भाव । नक्तं निशायां चरन्तीति नक्तं चरा. भूतपिशाचोलूकादय । तद्वदज्ञानिनां सर्वभूतानां निशा सत्यपि स्थितप्रज्ञस्य विषयएव परमार्थतत्त्वमिति ।

ननु परमार्थतत्त्वस्य कथं निशात्वमत आह—**निशेव निशेति** । औपचारिकः प्रयोग इति भाव· । ननु गौणप्रयोगेपि साम्यं वक्तव्यमत आह—**अगोचरत्वादिति** । अतद्बुद्धय आत्मज्ञानशून्या तेषामगोचरत्वादविषयत्वात् । यथा निशा अस्मदादिचक्षुर्वृत्त्यविषयः, तथा आत्मतत्त्वमप्यविदुषां बुद्धिवृत्त्यविषय इत्यर्थः । नच निशायाः कथं चक्षुर्वृत्त्यविषयत्वं, तत्तमस· चक्षुषैव गृह्यमाणत्वादिति वाच्यं, चक्षुर्वृत्तिनिरोधकत्वस्यैव तमसो लक्षणत्वात्, नेत्रगोलकसम्बद्धे तमसि चक्षुर्वृत्त्यनपेक्षणात्, चक्षुर्वृत्तेर्बहिर्निर्गमनायोगाच्च, नेत्रे निमीलितेप्यान्तरतमोग्रहणसम्भवाच्च, तस्माच्चक्षुर्वृत्तिनिरोधकं तमो मनसैव वेद्यत इति बोध्यम् । परमार्थतत्त्वमेव लक्षणं यस्यास्तस्यां तस्यां निशायां- नास्या निशाया जाग्र-

**न ह्यात्मनः स्वात्मनि प्रवर्तकप्रमाणापेक्षा आत्मत्वादेव। तदन्तत्वाच्च सर्वप्रमाणानां प्रमाणत्वस्य-न ह्यात्मस्वरूपाधिगमे सति पुनः प्रमाणप्रमेयव्यवहारस्सम्भवति, प्रमातृत्व ह्यात्मनो निवर्त-यति अन्त्य प्रमाणं, निवर्तयदेव चाप्रमाणं भवति, स्वप्नकालप्रमाणमिव प्रबोधे। लोके च**

ज्ञाननिष्ठायामपीत्यर्थ । परिहरति—नेति । आत्मज्ञानस्य ज्ञाननिष्ठाया इत्यर्थ । विवृणोति—नहीति । आत्मनस्स्वस्य स्वात्मनि प्रवर्तकप्रमाणापेक्षा नहि । तत्र हेतुमाह—आत्मत्वादेवेति । यथा देहात्माभिमानिन पुरुषस्य स्वदेहदर्शने प्रवर्तकं किञ्चित्प्रमाणं नास्ति, तदभावेपि स तत्र प्रवर्तत एव तद्वदिति भाव । तदन्तत्वादिति । आत्मावसानत्वादित्यर्थ । तदन्तत्वमेव विवृणोति—नहीति । यावदात्मसाक्षात्कारं सर्वाणि शास्त्रादीनि प्रमाणानि भवन्ति, सति चात्मसाक्षात्कारे निष्प्रपञ्चे स्वयंप्रभे आत्मन्यविक्रियेऽद्वितीये सच्चिदानन्दे ब्रह्मणि परमार्थतत्त्वे द्वैतादर्शनात् आविद्यकं प्रतीतिमात्रसत्ताकमिदं द्वैत मिथ्यात्वादप्रमाणमेवेति विदुषो निश्चयो जायते । एवं निश्चयशालिनो विदुष कथ प्रमाणप्रमेयादिव्यवहारसम्भव, न कथमपीत्यर्थ ।

ननु प्रमातर्यात्मनि सति कथं प्रमाणाद्यसम्भवश्चेत आह—**प्रमातृत्वमपीति**। अन्त्य शास्त्ररूपं प्रमाणमात्मन प्रमातृत्वं निवर्तयति । हि- अहं ब्रह्मेत्याकारकवृत्तिजननद्वारेत्यर्थ । आत्मस्वरूप साक्षात्कारजननद्वारेति वा । प्रमातृत्वस्य प्रमेयाधीनत्वादप्रमेये आत्मनि प्रमेयस्य द्वैतस्यासम्भवाच्च नात्मन प्रमातृत्वं पारमार्थिकमिति भाव । एकमेवाद्वितीयं ब्रह्मेत्यादिशास्त्रं विद्वदनुभवश्चात्र प्रमाण मिति बोध्यम् ।

नन्वाविद्यकत्वेनाप्रमाणस्य शास्त्रस्य कथं प्रामाण्यमत्रेत्यत आह—**निवर्तयदेवेति**। यावदात्मन प्रमातृत्वं तावच्छास्त्रस्य प्रामाण्यं, यदा तु शास्त्रमात्मन प्रमातृत्व निवर्तयति तदैव शास्त्रमप्रमाणं भवति । यथा कतकरज अम्भसि क्षिप्तं सत्तद्गतमालिन्यं हरदेव स्वयमपि नश्यति तद्वदिति भाव । तस्मादात्मन प्रमातृत्वं निवर्तयत्सदेव शास्त्रमप्रमाणं भवतीत्यनवद्यम्। उक्तार्थे दृष्टान्तमाह—**स्वप्नेति**। यथा स्वप्नकालप्रमाणं स्वप्नदशायामनुभवसिद्धं चक्षुरादिप्रमाणं प्रबोधे जाग्रत्यप्रमाण भवति तद्वदिति । स्वप्ने काशीनगरं दृष्टवान्पुरुष तदा स्वस्य काशीनगरदर्शनकरण निद्रया कल्पितं मृषाभूतमेव चक्षु प्रमाणं मन्यते । प्रबोधे तु मृषैव मया स्वप्ने काशी दृष्टेति तादात्विकं चक्षुरप्रमाणमेव निश्चिनोति । एवमविद्यावस्थाया प्रमाणभूतं शास्त्रादिकं विद्यावस्थायामप्रमाणमेव भवति । एतावता तत्रापीति प्रश्नस्य किमुत्तरमायातमिति चेदिदमायातम्—यावदात्मसाक्षात्कारं शास्त्रस्य प्रमाणत्वात्पारोक्ष्येणात्मतत्त्वविदं विद्वांसं ज्ञाननिष्ठायां प्रवर्तयत्येव शास्त्रमिति प्रवर्तकाभावेपि स्वात्मनि स्वतएव प्रवृत्तिरिति तु प्रौढोक्ति-मुत्तरम् । इति । न केवलमात्मन्येव प्रवर्तकाभावेपि प्रवृत्त्युपपत्ति, किंतु लोकेपीत्याह—**लोके चेति**। घटादिवस्त्वनुभवे विषये पुरुषं न प्रवर्तयति चक्षुरादिप्रमाणं, किंतु तत्तद्वस्तुविषयेच्छैव । इच्छया घटाद्यधिगमे प्रवृत्तस्तु पुरुष तत्करणं चक्षुरादिप्रमाणमपेक्षते, तस्मात्प्रमाणं प्रमातु प्रमेयाधिगमे साधनमेव, न प्रवर्तकमित्यर्थ । एतेनात्मजिज्ञासु पुरुष तज्जिज्ञासया आत्मज्ञाने प्रमाणं वेदान्तशास्त्रमपेक्षते

रिति। अतः अविद्यावस्थायामेव कर्माणि चोद्यन्ते, न विद्यावस्थायाम्। विद्यायां हि सत्यामुदिते सवितरि शार्वरमिव तमः प्रणाशमुपगच्छत्यविद्या। प्राग्विद्योत्पत्तेरविद्या प्रमाणबुद्ध्या गृह्यमाणा क्रियाकारकफलभेदरूपा च सती कर्महेतुत्वं प्रतिपद्यते, नाप्रमाणबुद्ध्या गृह्यमाणायाः कर्महेतुत्वोपपत्तिः प्रमाणभूतेन वेदेन मम चोदितं कर्म कर्तव्यमिति हि कर्मणि कर्ता प्रवर्तते, नाविद्यामात्रमिदं सर्वं निशेवेति जानन्‌ यस्य पुनर्निशेवाविद्यामात्रमिदं सर्वं भेदजातमिति बुद्धिः, तस्यात्मज्ञस्य सर्वकर्मसन्न्यास एवाधिकारः न प्रवृत्तौ। तथा च दर्शयिष्यति—'तद्बुद्धयस्तदात्मान' इत्यादिना ज्ञाननिष्ठायामेवाधिकारम्।

तत्रापि प्रवर्तकप्रमाणाभावे प्रवृत्त्यनुपपत्तिरिति चेन्न, स्वात्मविषयत्वादात्मज्ञानस्य

---

च्यते। तत्र च न स्थितप्रज्ञो जागर्ति स्थितप्रज्ञाविषयत्वाद्व्यवहारस्य। यथा अस्मदहोरूपाया निशाया नक्तञ्चरा न जाग्रति, वयन्तु जागृम, अस्मन्निशारूपे अहनि तु नक्तञ्चरा जाग्रति, वयन्तु न जागृम तद्वदिति। भूतानां ब्रह्मैव निशा अविद्यैवाह, स्थितप्रज्ञस्य तु ब्रह्मैवाह, अविद्यैव निशेति संक्षिप्तोऽर्थः। निर्व्यवहार आत्मानुभवपरः स्थितप्रज्ञः, व्यवहारिण आत्मज्ञानहीनास्तु सर्वे प्राणिन इति भावार्थः। एवं श्लोकं व्याख्याय फलितमाह—अत इत्यादिना। अतः अविदुषां ब्रह्मज्ञानाभावाद्विदुषश्च व्यवहाराभावादित्यर्थः। चोद्यन्ते विधीयन्ते शास्त्रेणेति शेषः। शर्वर्या इदं शार्वरं तस्येदमित्यण्। सवितर्युदिते शार्वरं तम इव विद्यायां सत्यामविद्या प्रणाशमुपगच्छतीत्यन्वयः। विद्या- 'अहं ब्रह्मास्मि', 'तत्सत्यम्', 'स आत्मा', 'तत्त्वमसि', 'स भूमा', 'अतोऽन्यदार्त'मित्यादिज्ञानम्। अहमज्ञः, कर्ता, भोक्ता, ब्राह्मणो, यष्टव्यं मम, दातव्यमित्याद्यज्ञानमविद्या अविद्यापरिणामरूपत्वात्सर्वोऽपि प्रपञ्चोऽविद्येत्युच्यते। इयं ह्यविद्या दर्शितविद्योत्पत्तेः प्राक्प्रमाणमिव प्रतिभाति। सर्वे ह्यास्तिका अतत्त्वविदः पुरुषा वेदशास्त्रादीनि यज्ञयागादिक्रियाः तत्तदुपकरणानि स्वर्गादिफलानि [illegible] ब्राह्मणादिवर्णान्ब्रह्मचर्याद्याश्रमानिन्द्रादिदेवता- किं बहुना सर्वमपि जगत्सत्यमेव मन्यते, ब्रह्म सत्यं जगन्मिथ्येति विद्योत्पत्त्यनन्तरं तु सर्वमप्यसत्यत्वादप्रमाणमित्येव मन्यते इत्याह—प्राग्विद्येत्यादिना। विद्योत्पत्तेः प्राक् क्रियाकारकफलभेदरूपा अविद्या प्रमाणबुद्ध्या गृह्यमाणा सती कर्महेतुत्वं प्रतिपद्यते हि। अप्रमाणबुद्ध्या गृह्यमाणाया अविद्याया कर्महेतुत्वोपपत्तिर्न हि यतः कर्ता पुरुषः प्रमाणभूतेन वेदेन चोदितं कर्म मम कर्तव्यमिति मत्वा कर्मणि प्रवर्तते, इदं सर्वं निशेवाविद्यामात्रमिति जानंस्तु नैव प्रवर्तते इति भाष्यवाक्यान्वयः। विद्यादशायां तु वेदस्यैवाप्रमाणत्वात्कथं तच्चोदितकर्मणः प्रामाण्यमिति भावः। निशेवेत्यस्य निद्रेवेत्यर्थः। निद्राया अविद्यामात्रत्वात्। दर्शयिष्यतीति। भगवानिति शेषः। पञ्चमाध्याये इति भावः। 'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः। गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषा' इति ज्ञाननिष्ठायामेव विदुषोऽधिकारं दर्शयिष्यतीत्यन्वयः।

ननु विद्यादशायां वेदस्यैवाप्रमाणत्वेन तच्चोदितः प्रवृत्तिधर्म इव निवृत्तिधर्मोऽप्यप्रमाणमेवेति कथं विदुषो निवृत्तिधर्मे ज्ञाननिष्ठायां सन्न्यासेऽधिकार इति वक्तुं शक्यमिति शङ्कते—तत्रापीति।

अविकुर्वन्तः प्रविशन्ति- सर्वे आत्मन्येव प्रलीयन्त इत्यर्थः। न स्वात्मवशं कुर्वन्ति, स शान्ति मोक्षमाप्नोति । नेतरः कामकामी काम्यन्त इति कामाः विषयास्तान्कामयितुं शीलं यस्य स कामकामी स न प्राप्नोतीत्यर्थः ॥७०॥

विहाय कामान् यस्सर्वान् पुमांश्चरति निस्पृहः।
निर्ममो निरहङ्कारस्स शान्तिमधिगच्छति ॥७१॥

यस्मादेवं तस्मात्—विहायेति । विहाय परित्यज्य कामान् यस्सन्न्यासी पुमान् सर्वानशेषतः चरति- जीवनमात्रचेष्टाशेषः पर्यटतीत्यर्थः । निस्पृहः- शरीरजीवनमात्रेपि निर्गता स्पृहा यस्य स निस्पृहः, निर्ममः शरीरजीवनमात्राक्षिप्तपरिग्रहेपि ममेदमित्यभिनिवेश-वर्जित इत्येतत् । स एवम्भूतः स्थितप्रज्ञो ब्रह्मविच्छान्तिं सर्वसंसारदुःखोपरमलक्षणां निर्वाणाख्यां अधिगच्छति प्राप्नोति ब्रह्मभूतो भवतीत्यर्थः ॥७१॥

---

यतिं कामाः प्रविशन्तीत्यस्यार्थमाह—सर्वे इति । आत्मनि मनसि कूटस्थे वा। फलितमाह—नेति। कामा यतिं स्वात्मवशं कामपरतन्त्रं न कुर्वन्ति। शान्तिं मोक्षं ब्रह्मेति यावत् । सर्वप्रपञ्चोपशमसम्भवा-द्ब्रह्मणश्शान्तिपदाभिधेयत्वम् । यद्वा शान्तिं सकार्यस्याज्ञानस्य निवृत्तिमित्यर्थः। सर्वदु खनिवृत्तेर्मोक्षत्वा-दाह—मोक्षमिति ॥७०॥

विहायेति श्लोकमवतारयति—यस्मादेवं तस्मादिति । यस्मादेवं निष्काम एव शान्ति-माप्नोति, न कामकामी तस्मात्- कामकामिनो मोक्षाभावादित्यर्थः । यः पुमान् सर्वान् कामान्विहाय निस्पृहो निर्ममो निरहङ्कारश्च सन् चरति, स शान्तिमधिगच्छति । यस्सन्न्यासीति । तस्यैव प्रकृतत्वादिति भावः । जीवनमात्रचेष्टाशेषः जीवनमेव जीवनमात्रं तत्सम्बन्धिनी चेष्टा शरीरचेष्टा जीवन-मात्रचेष्टा सैव शेषो यस्य स तथोक्तः । प्राणधारणमात्रफलकभिक्षाटनव्यापारमात्रवानित्यर्थः । चरते-र्गत्यर्थत्वादाह—पर्यटतीति । परितस्सर्वेषु ग्रामादिषु अटति सञ्चरति- ग्रामैकरात्रवासित्वात्सन्न्यासिन इत्यर्थः ।

ननु सर्वान् कामान् परित्यजेत्यनेनैव निस्पृहत्वं सिद्धमिति निस्पृह इति पुनरुक्तमित्याह—शरीरेति । येन केनाप्युपायेन शरीरजीवनमवश्यं कर्तव्यमिति नास्ति यतेः कामः । तथासति कृष्यादिस्तेयादिप्रसङ्गात् । किंतु माधुकरान्नेन सरिदम्बुपानेन च क्षुत्तृडपनयनमात्रं कर्तव्यमित्येव यति-र्मन्येत । एतेन न यतेर्मरणभीतिःकार्येत्युपदिष्टम् । निर्ममः ममतारहितः । ननु सन्यस्तसर्वस्य क ममता स्वीयस्यैवाभावादत आह—शरीरेति । शरीरजीवनमात्रार्थमाक्षेपतः प्राप्ते भिक्षाकपालशाट्यादि-रूपेपि परिग्रहे परिगृह्यत इति परिग्रहः तस्मिन्नभिनिवेशोऽभिमानः, आत्मसम्भावना, स्वश्लाघा निर्वाणं मोक्ष, ब्रह्मभूतो भवति 'ब्रह्मविद्ब्रह्मैव भव'तीतिश्रुतेर्ब्रह्मभावं प्राप्नोति इति ।

ननु श्लो॥ 'स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ! स्थितधीः किं प्रभाषेत किमासीत व्रजेत कि'मित्यर्जुनप्रश्नस्यैतावता किमुत्तरमायातमितिचेत् , उच्यते—सर्वकामपरित्याग , आत्मरतिः,

वस्त्वधिगमे प्रवृत्तिहेतुत्वादर्शनात् प्रमाणस्य । तस्मान्नात्मविदः कर्मण्यधिकार इति सिद्धम् ॥

आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत् ।
तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी ॥७०॥

विदुषस्त्यक्तैषणस्य स्थितप्रज्ञस्य यतेरेव मोक्षप्राप्तिः, न त्वसंन्यासिनः कामकामिन इत्येतमर्थं दृष्टान्तेनोपपादयिष्यन्नाह—अपूर्यमाणमिति । आपूर्यमाणमद्भिः अचलप्रतिष्ठमचलतया प्रतिष्ठा यस्य त मचलप्रतिष्ठं समुद्रमापस्सर्वतो गताः प्रविशन्ति, स्वात्मस्थमविक्रियमेव सन्तं यद्वत्, तद्वत्कामा विषयसन्निधावपि सर्वे इच्छाविशेषाः यं यतिं समुद्रमिवापः

---

यावदात्मसाक्षात्कारं- यथा घटं दिदृक्षुः पुरुषः तद्दिदृक्षया घटदर्शने प्रमाणं चक्षुरपेक्षते यावद्घटसाक्षात्कारम् । साक्षात्कारानन्तरं तु किं तस्य प्रमाणेन न किञ्चिदपीत्यप्रमाणमेव प्रमाणं व्यर्थत्वादिति सिद्धम् । यथा कूपखानकः पुरुषस्तोयप्राप्त्यनन्तरं खनित्रादिकं खननसाधनं परित्यजति, तथा मुमुक्षुरात्मसाक्षात्कारानन्तरं वेदान्तशास्त्रं परित्यजेदेवेति नात्मस्वरूपाधिगमनानन्तरं प्रमाणव्यवहारः पण्डितस्य, नापि प्रामाण्यं शास्त्रस्य इति बोध्यम् । उपसंहरति—तस्मादिति । अविद्यावस्थायामेव कर्माणि चोद्यन्ते न विद्यावस्थायामिति हेतोरित्यर्थः । आत्मविदः कर्मण्यधिकारो न, किंतु ज्ञाननिष्ठायामेव । अयं च ज्ञाननिष्ठाधिकारोऽपि यावदात्मसाक्षात्कारमेव, पश्चात्तु अधिकार्यधिकारकयोरेवाभावादधिकारस्यैवाभावः- न ह्यात्मा केनचित्कुत्रचिदधिक्रियते- सर्वशेषित्वादात्मनोऽविक्रियत्वाच्च । अधिकारकं शास्त्रं तु अद्वितीये आत्मनि नास्त्येव । अतः कथमधिकारसिद्धिः । न कथमपीति बोध्यम् ॥६९॥

आपूर्यमाणमिति । यद्वत् आपः आपूर्यमाणमचलप्रतिष्ठं समुद्रं प्रविशन्ति, तद्वत् सर्वे कामा यं प्रविशन्ति सः शान्तिमाप्नोति, कामकामी शान्तिं नाप्नोति, आ समन्तात्पूर्यमाणमापूर्यमाणम् । कर्त्राकांक्षां शमयति—अद्भिरिति । यद्वा भगवतेति कर्तुश्शेषः, आपस्तु करणम् । अचलप्रतिष्ठं न चलतीत्यचलः पाराभावाच्चलनरहितः । प्रतिष्ठा शाश्वती स्थितिः अस्यास्तीति प्रतिष्ठः अर्शआद्यजन्तः प्रतिष्ठति प्रकर्षेण शाश्वतं तिष्ठतीति प्रतिष्ठ इति पचाद्यजन्तो वा । अचलश्चासौ प्रतिष्ठश्चाचलप्रतिष्ठः । अचल इति हेतुगर्भं विशेषणम्-- यस्मादचलस्तस्मात्प्रतिष्ठ इति । इदं सर्वमभिप्रेत्याह—अचलतया प्रतिष्ठा यस्य तमिति । अचला प्रतिष्ठा यस्य तमिति व्याख्याने तु मूलाद्बहिरेवापारत्वादिति हेतुः कल्पनीयः स्यात् । इदानीं तु अचलशब्दादर्थतस्सिद्धं तदपारत्वमिति बोध्यम् । सर्वतो गतास्सर्वतः प्राप्ताः आपः गङ्गादिनदीजलानि स्वात्मस्थं स्वरूपस्थं तदेव विवृणोति—अविक्रियमेव सन्तमिति । समुद्रमित्यस्य विशेषणमिदम् । नदीजलप्रवेशाप्रवेशाभ्यां समुद्रस्य वृद्धिह्रासरूपो न कोपि स्वरूपगतो विकार इत्यर्थः । विषयसन्निधावपीति । अपिना विषयाणामसन्निधौ सुतरामेवास्य नास्ति कोपि कामकृतो विकार इति सूच्यते । केचिद्धीराः स्त्र्याद्यसन्निधौ निष्कामविकारा वर्तन्ते । तत्सन्निधौ तु ामविकारं भजन्ते इति दर्शनादाह—विषयसन्निधावपीति । अविकुर्वन्तः कमपि विकारमजनयन्तः

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे साङ्ख्ययोगोनाम
द्वितीयोऽध्यायः ।
इति श्रीमत्परमहंसपरिव्राजकाचार्यगोविन्दभगवत्पूज्य-
पादशिष्य श्रीमच्छङ्करभगवत्पादकृतौ
श्रीभगवद्गीताभाष्ये द्वितीयोऽध्यायः ।

---

तोक्तं खल्विति वाच्यं, उक्तत्वेपि आपातत एव स्वस्य कर्माधिकारं जानाति, नतु सहेतुकं, निस्संशयं-कथमन्यथा ज्यायसीचेत्कर्मण इत्यनुपदमर्जुनः प्रष्टा इति ॥७२॥

साङ्ख्ययोगः साङ्ख्येन योगस्सम्बन्धो यस्य स साङ्ख्ययोगः साङ्ख्ययोगो ज्ञानयोगस्सोऽस्मिन्नस्तीत्यर्श आद्यजन्तो वा । प्रतिपाद्यप्रतिपादकयोरभेदसम्बन्धेन साङ्ख्ययोगप्रतिपादकस्याध्यायस्य साङ्ख्ययोगशब्दवाच्यत्वमुपचारादिति वा । यद्यप्यत्र कर्मयोगोपि क्वचित्प्रतिपादितस्तथापि प्रायशस्साङ्ख्यस्य प्रतिपादनात्तद्व्यपदेशः ।

परमहंसपरिव्राजकेति । कुटीचक, बहूदक, हंस, परमहंसात्मकाश्चत्वारो यतिनः । तत्र पूर्वपूर्वापेक्षया उत्तरोत्तर उत्कृष्टः ज्ञानवैराग्यादिगुणैः । परित्यज्य व्रजतीति परिव्राजकस्सन्न्यासी, परमहंसश्चासौ परिव्राजकश्च परमहंसपरिव्राजकः- आचारमाचारयतीत्याचार्यः शास्त्रोक्तं निवृत्तिधर्मं स्वयमाचरन्नन्येभ्यः पद्मपादादिभ्यश्शिष्येभ्य उपदिशतीत्याचार्यः- पूज्यौ पादौ यस्य स पूज्यपादो गुरुः भगवान् षड्गुणैश्वर्यसम्पन्नश्चासौ पूज्यपादश्च भगवत्पूज्यपादः- गोविन्द इति भगवत्पूज्यपादः गोविन्दभगवत्पूज्यपादः, तस्य शिष्यः- श्रीमान् ज्ञानवैराग्यादिसम्पच्छाली, भगवन्तौ पादौ यस्य स भगवत्पादः- आत्मगुणस्य भगस्य पादे आरोपः । पद्यते गम्यते सेव्यत इति पादः भगवतामपि पद्मपादादीनां पादः भगवत्पाद इति वा, भगवतश्शङ्करस्य पादोंशः भगवत्पाद इति वा, शिवावतारत्वादस्य भगवन्तं परमात्मानं पद्यते जानाति पादयति बोधयतीति वा भगवत्पादः, शङ्कर इति भगवत्पादश्शङ्करभगवत्पादः । विशेष्यमिदं, प्राचीनानि तु विशेषणानि प्रथमान्तानि अनेन साकं तेषामभेदेन सम्बन्धः विशेषणानामपि परस्परमभेदसम्बन्धात्समासः । विशेषणं विशेष्येणेतिसूत्रे बहुलग्रहणात्सिध्यति केषुचिद्विशेषणेषु विशेष्यत्वारोपादिति वा । क्रियत इति कृतिः- भगवत्पादस्य कृतिः भगवत्पादकृतिः- तस्यां तेन कृते इत्यर्थः । श्रीयुक्तो भगवान् श्रीभगवान् भगान्तःपातिन्या अपि श्रियः पृथग्ग्रहणं प्राशस्त्यार्थं, प्राधान्यार्थं वा, इन्दिरावानिति वा, तस्य गीताश्श्रीभगवद्गीताः कर्तरि- षष्ठीसमासः । तत्कर्तृकगीता इत्यर्थः । गीयन्त इति गीताः श्लोकाः- तासां भाष्ये ग्रन्थे द्वितीयोऽध्यायः इति समासः ।

इति वेङ्कोण्डोपनामकरामकविकृतौ
श्रीभगवद्गीताभाष्यार्कप्रकाशे
द्वितीयोऽध्यायः ।
कीलकसंवत्सर कार्तिकबहुलसप्तम्यामस्य समाप्तिः ।

एषा ब्राह्मी स्थितिः पार्थ ! नैनां प्राप्य विमुह्यति ।
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥७२॥

सैषा ज्ञाननिष्ठा स्तूयते—एषेति । एषा यथोक्ता ब्राह्मी ब्रह्मणि भवेयं स्थितिः सर्वं सन्न्यस्य ब्रह्मस्वरूपेणैवावस्थानमित्येतत् । नैनां स्थितिं प्राप्य लब्ध्वा विमुह्यति न मोहं प्राप्नोति, स्थित्वास्यां स्थितौ ब्राह्म्यां यथोक्तायां अन्तकालेऽपि अन्त्येऽपि वयसि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षं ऋच्छति गच्छति । किमु वक्तव्यं ब्रह्मचर्यादेव सन्न्यस्य यावज्जीवं यो ब्रह्मण्येवावतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति ॥७२॥

दुःखेष्वनुद्वेगः, सुखेषु स्पृहाभावः, रागभयक्रोधाभावः, सर्वत्र स्नेहाभावः, शुभप्राप्तावानन्दाभावः, अशुभप्राप्तौ द्वेषाभावः, इन्द्रियजयः, मत्स्वरूपपरता, समाहितचित्तत्वं, व्यवहारराहित्यं, निस्पृहत्वं, निर्ममत्वं, निरहङ्कारत्वमित्येते पञ्चदश स्थितप्रज्ञस्य लक्षणानि स्थितप्रज्ञत्वस्य साधनानि चेमानि यस्मिन्नेतानि दृश्यन्ते स स्थितप्रज्ञ इति परैरुच्यते । स्वयं चात्मानं स्थितप्रज्ञं मा विद्यात् । भिक्षा यात्रामृते नास्य कोपि वाग्व्यापारः । सति तु सौम्ये शिष्ये तस्मै तत्त्वमुपदिश्यादिति त्वत्रानुक्तमपि ग्राह्यमन्यतश्शास्त्रात् । अन्यथा सम्प्रदायविच्छेदप्रसङ्गात् । मानसिकव्यापारस्तु इन्द्रियाणां विषयेभ्यः प्रत्यावर्त्य स्ववशे स्थापनम् । आत्मस्वरूपानुसन्धानंच स्वस्वरूपेणावस्थानं, कायव्यापारस्तु भिक्षार्थं पर्यटनमेव । तच्च चरतीत्यनेन प्रतिपादितमिति । किंच प्रश्नश्लोके व्रजेत किमित्यस्य किं प्राप्नुयादित्यप्यर्थ आयाति, तस्य च समाधानमुक्तं स शान्तिमधिगच्छतीति । एतेन स्थितप्रज्ञस्य मोक्ष एव फलमिति सिद्धम् । युक्तञ्चेदं-- विषयैश्चाविद्याया नाशादाविद्यकसर्वसंसारोपरमात्मको मोक्षः स्थितप्रज्ञस्येति । ततश्च न कर्मिणां मोक्ष इति फलितम् । अत एव- 'नास्त्यकृतः कृते'नेतिश्रुतिरुपपद्यते । 'तमेवं विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाये'ति च । कामत्यागेन्द्रियजयनिर्व्यवहारत्वादीनां गृहस्थेऽसम्भवाच्चादृशसन्न्यास्येव स्थितप्रज्ञ इति संक्षेपः॥७१॥

एषेति, ब्राह्मीति । तत्र भव इति भवार्थेऽणित्याह—ब्रह्मणि भवेति । टिलोप आर्षः । नच ब्राह्म इति निपातनात्सिद्ध्यतीति वाच्यं, तत्र चतुर्मुखवाचिब्रह्मशब्दग्रहणात् । नच तत्त्वविद्योरुभयोर्ग्रहणमिति वाच्यं, अनेकार्थत्वस्यान्याय्यत्वात् । नच तत्त्वस्यैव ग्रहणमिति वाच्यं, ब्राह्मं हविरित्यसिद्धेः ब्रह्मदेवताकं हि ब्राह्ममित्युच्यते । ब्राह्मं हि हविस्स्वयम्भुवमुद्दिश्याग्नौ निक्षिप्यते । यद्वा चतुर्मुखवाच्येवात्रापि ब्रह्मशब्दः, लक्षणया तु शुद्धब्रह्माभिधीयत इति ब्राह्मइति निपातनाट्टिलोपः । ब्रह्मस्वरूपेणावस्थानंनाम ब्रह्माहमिति निश्चयेनावस्थानमित्यर्थः । ब्रह्मनिर्वृतिं ब्रह्मानन्दमित्यर्थः । अन्तकालेपीत्यपिशब्दसूचितमर्थमाह—किमुवक्तव्यमित्यादिना, ब्रह्मण्येवेति । ज्ञाननिष्ठायामित्यर्थः । ब्रह्मण्यवस्थानं ब्रह्मात्मस्वरूपानुसन्धानमिति वा । एतेन ब्रह्मचर्यादारभ्य देहपातादर्वाग्यदाकदा वा ब्राह्मणेन सन्न्यसितव्यं, सन्न्यस्य च सर्वकामप्रहाणादिपूर्वकं स्थितप्रज्ञा सम्पादनीयेति हितोपदेशस्सूचितः । नचानधिकारिणोऽर्जुनस्य कुतस्सन्न्यासोपदेश इति वाच्यं, तेन स्थितप्रज्ञलक्षणस्य पृष्टत्वात्, अर्जुनेन स्वस्य ज्ञाननिष्ठायामधिकाराभावस्याविदितत्वाच्च प्रश्नस्योपपत्तिः । नच 'कर्मण्येवाधिकारस्ते' इति भग-

समुच्चयो गीताशास्त्रे निश्चितोर्थ इत्युक्तः, पुनर्विशेषितश्च यावज्जीवश्रुतिचोदितानि कर्माणि परित्यज्य केवलादेव ज्ञानान्मोक्षः प्राप्यत इत्येतदेकान्तेनैव प्रतिपिद्धमिति, इहत्वाश्रमविकल्पं दर्शयता यावज्जीवश्रुतिचोदितानामेव कर्मणां परित्याग उक्तः, तत्कथमीदृशं विरुद्धमर्थमर्जुनाय ब्रूयाद्भगवान्? श्रोता वा विरुद्धमर्थं कथमवधारयेत्? तत्रैतत्स्यात्- गृहस्थानामेव श्रौतस्मार्तकर्मपरित्यागेन केवलादेव ज्ञानान्मोक्षः प्रतिपिध्यते, न त्वाश्रमान्तराणामिति। एतदपि पूर्वोत्तरविरुद्धमेव- कथं, सर्वाश्रमाणां ज्ञानकर्मणोस्समुच्चयो गीताशास्त्रे निश्चितोर्थ इति प्रतिज्ञाय इह कथं तद्विरुद्धं केवलादेव ज्ञानान्मोक्षं ब्रूयात् आश्रमान्तराणाम्।

अथ मतं श्रौतकर्मापेक्षया एतद्वचनं- केवलादेव ज्ञानाच्छ्रौतकर्मरहिताद् गृहस्थानां मोक्षः प्रतिपिध्यत इति, तत्र गृहस्थानां विद्यमानमपि स्मार्तं कर्माविद्यमानवदनपेक्ष्य ज्ञानादेव केवलादित्युच्यत इति, एतदपि विरुद्धं- कथं, गृहस्थस्यैव स्मार्तकर्मणा समुच्चिताद् ज्ञानान्मोक्षः प्रतिपिध्यते न त्वाश्रमान्तराणामिति कथं विवेकिभिश्शक्यमवधारयितुम्। किंच यदि मोक्षसाधनत्वेन स्मार्तानि कर्माण्यूर्ध्वरेतसां समुच्चीयन्ते, तथा गृहस्थस्यापीष्यतां स्मार्तैरेव

मिति। उत्तरयति—तत्रेति। विशेषितः विशेषेणोक्तः आश्रमविकल्पमिति गृहस्थसन्न्यासाश्रमद्वयविकल्पम्। 'यावज्जीवमग्निहोत्रं जुहुया'दिति श्रुतिर्यावज्जीवश्रुतिः। उक्त इति सन्न्यासे इति भावः। गीताशास्त्रे यावज्जीवश्रुतिचोदितकर्मरहिताद्ज्ञानान्नास्त्येव मोक्ष इति पूर्वं विशेषतः प्रतिपाद्य ज्ञानयोगेन साङ्ख्यानां श्रेयःप्राप्तिरिति सन्न्यासिनां कथं यावज्जीवश्रुतिचोदितकर्मरहिताद्ज्ञानान्मोक्ष इत्युच्येत ? न कथमपीत्यर्थः। शङ्कते—तत्रैतत्स्यादिति। तत्रैतदुत्तरं स्यादित्यर्थः। किं तदत आह—गृहस्थानामिति। आश्रमान्तराणां सन्न्यासादीनाम्।

ननु ज्ञानयोगेन साङ्ख्यानामिति सन्न्यासिनां केवलाद्ज्ञानान्मोक्षो, न त्वाश्रमान्तराणामित्यस्य सर्वाश्रमाणां ज्ञानकर्मसमुच्चय इति वचनव्याघातेन दुष्टत्वे तर्हि केवलादित्यस्य श्रौतकर्मरहितादित्यर्थो वाच्यः, तथाच- श्रौतकर्मरहिताद्ज्ञानात्सन्न्यासिनां मुक्तिः, गृहस्थाना तु नेति वाच्यं, अस्मिन्मते च सर्वाश्रमाणां ज्ञानकर्मसमुच्चयादेव मुक्तिरिति वचनस्य न व्याघातः। स्मार्तसमुच्चिताद्ज्ञानात्सन्न्यासिनां, श्रौतस्मार्तोभयकर्मसमुच्चिताद्गृहस्थानां च मुक्तिरिति सिद्धत्वादिति शङ्कते—अथ मतमित्यादिना। परिहरति—एतदपीति। गृहस्थानामेवं, सन्न्यासिनां तु नैवमिति विवेको दुर्लभ इत्यर्थः। दोषान्तरमाह—किंचेति। यदेव ज्ञानं स्मार्तकर्मसमुच्चितं सत्सन्न्यासिनां मुक्तिप्रदं तदेव तथाविधं गृहस्थानामपि मुक्तिप्रदं भवतु, किंपुनः श्रौतकर्मणामपि समुच्चयेनेत्यर्थः।

ननु सन्न्यासगृहस्थयोरयमेव भेदः- अग्निहोत्रादिश्रौतकर्मसन्न्यासस्यैव सन्न्यासलक्षणत्वात्। ततश्च सन्न्यासिनश्श्रौतकर्मसन्न्यासविधानात्स्मार्तकर्मसमुच्चिताद्ज्ञानादेव केवलान्मुक्तिः, गृहस्थस्य तूभयसमुच्चिताद्ज्ञानादिति शङ्कते—अथेति, आरोपितमिति। शास्त्रेण भगवतेति वा कर्तृदरोपः। इतः प्राक्स्मार्तकर्मसमुच्चितात्केवलाद्ज्ञानात्सन्न्यासिनां मोक्ष इत्यभ्युपेत्य पूर्वपक्षैर्व्यवहृतं, अथ ते तदप्यन-

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु-

# श्रीभगवद्गीतासु

## तृतीयाध्यायप्रारम्भः ।

शास्त्रस्य प्रवृत्तिनिवृत्तिविषयभूते द्वे बुद्धी भगवता निर्दिष्टे- साङ्ख्ये बुद्धिर्योगे बुद्धिरिति च । तत्र 'प्रजहाति यदा कामा'नित्यारभ्याऽऽध्यायपरिसमाप्तेस्साङ्ख्यबुद्ध्याश्रितानां सन्न्यासं कर्तव्यमुक्त्वा तन्निष्ठतयैव च कृतार्थतोक्ता- 'एषा ब्राह्मी स्थिति'रिति । अर्जुनाय च- 'कर्मण्येवाधिकारस्ते, मा ते सङ्गोऽस्त्वकर्मणी'ति कर्मैव कर्तव्यमुक्तवान् योगबुद्धिमाश्रित्य । न तत एव श्रेयःप्राप्तिमुक्तवान् । तदेतदालक्ष्य पर्याकुलीभूतबुद्धिरर्जुन उवाच-- कथं भक्ताय श्रेयोर्थिने साक्षाच्छ्रेयस्साधनं साङ्ख्यबुद्धिनिष्ठां श्रावयित्वा मां कर्मणि दृष्टादृष्टानेकानर्थयुक्ते पारम्पर्येणाप्यनैकान्तिकश्रेयःप्राप्तिफले नियुंज्यादिति । युक्तः पर्याकुलभूतोभावोऽर्जुनस्य, तदनुरूपश्च प्रश्नो ज्यायसीचेदित्यादिः । प्रश्नोपकरण च वाक्यं भागवतं युक्तं यथोक्तविषयविभागे शास्त्रे । केचित्त्वर्जुनस्य प्रश्नार्थमन्यथा कल्पयित्वा तत्प्रतिकूलं भगवतः प्रतिवचनं वर्णयन्ति, यथा चात्मना सम्बन्धग्रन्थे गीतार्थो निरूपितः तत्प्रतिकूलं चेह पुनः प्रश्नप्रतिवचनयोरर्थं निरूपयन्ति । कथं तत्र सम्बन्धग्रन्थे तावत् सर्वेषामाश्रमिणां ज्ञानकर्मणो-

---

ज्यायसी चेदिति श्लोकमवतारयति---शास्त्रस्येत्यादिना । शास्त्रस्येति प्रतिपाद्यप्रतिपादकभावरूपे सम्बन्धे शेषे षष्ठी । शास्त्रप्रतिपाद्यप्रवृत्तिनिवृत्तिविषयभूते इत्यर्थः । शास्त्रस्य प्रवृत्तौ निवृत्ताविति वाऽर्थः । प्रवृत्तिमार्गे शास्त्रापेक्षास्ति, न तु निवृत्तिमार्गे इति कृत्वा ज्ञानयोगे शास्त्रमेव निवर्तत इत्यर्थः । साङ्ख्ये योगे इति च विषयसप्तम्यौ । तन्निष्ठतया सन्न्यासनिष्ठतया ज्ञानयोगनिष्ठयेति वा । ततः कर्मयोगाच्छ्रेयःप्राप्तिं नैवोक्तवान् । भक्ताय श्रेयोर्थिन इति । श्रेयो मोक्षः तदर्थित्वं तत्कामित्वं तस्मिन् सत्य'प्यभक्ताय नोपदिशेद्गुह्य'मिति भक्तायेत्युक्तम् । भक्तत्वं पूज्येऽनुरागित्वम् । तस्मिन् सत्यपि कामकामाय नोपदिशेदित्येतदर्थं श्रेयोर्थिन इत्युक्तम् । अनैकान्तिकं व्यभिचारि श्रेयःप्राप्तिरूपं फलं यस्मिन् तस्मिन् तथोक्ते पर्याकुलभूतो व्याकुलः- भूतशब्दस्यात्र स्वरूपवाचित्वेनानतिरिक्तार्थत्वात् । भावोऽभिप्राय -- बुद्धिरिति यावत् । प्रश्नोपकरणं प्रश्नस्योत्तरं भागवतं कृष्णसम्बन्धि यथोक्तः विषयविभागो यस्मिन् तस्मिन् शास्त्रे- 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति ज्ञानिकर्मिणोः साङ्ख्ययोगात्मको विषयविभागः । केचित्तु वृत्तिकारा इत्यर्थः । अन्यथेति । यदि बुद्धिकर्मणोः समुच्चयान्मोक्ष इति तव मतं, तत्रापि कर्मापेक्षया बुद्धिरेव ज्यायसीति, तर्हि हे कृष्ण किमिति मां कर्मण्येव केवले नियोजयसीत्यर्जुनस्य प्रश्नार्थं कल्पयित्वा तत्प्रश्नप्रतिकूलं भागवतप्रतिवचनं वर्णयन्ति---ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनां च सिद्धिरिति । सम्बन्धग्रन्थोऽवतारिकाग्रन्थः- उपोद्घात इति यावत् । आत्मना स्वेन वृत्तिकारैरित्यर्थः । तदेव विवरीतुमाकांक्षामाह---कथ-

सत्यानृते त्यज । उभे सत्यानृते त्यक्त्वा येन त्यजसि तत्त्यज ॥ संसारमेवं निस्सारं दृष्ट्वा सारदिदृक्षया । प्रव्रजन्त्यकृतोद्वाहाः परं वैराग्यमाश्रिताः ॥' इति बृहस्पतिः । 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥' इति शुकानुशासनम् । इहापि च 'सर्वकर्माणि मनसा सन्न्यस्ये'त्यादि ।

मोक्षस्य च अकार्यत्वान्मुमुक्षोः कर्मानर्थक्यम् । नित्यानि प्रत्यवायपरिहारार्थानीति चेन्न, असन्न्यासविषयत्वात् प्रत्यवायप्राप्तेः- न ह्यग्निहोत्राद्यकरणात् सन्न्यासिनः प्रत्यवायः कल्पयितुं शक्यः- यथा ब्रह्मचारिणां असन्न्यासिनामपि । न तावन्नित्यानामकरणात् अभा-

एवेति सन्न्यसोऽनेन विहित इति भावः । संसारमिति । एवं संसारं निस्सारं दृष्ट्वा निश्चित्य अकृतोद्वाहाः अकृतदारपरिग्रहास्सन्तः परमुत्कृष्टं वैराग्यमाश्रिताः- विवेकिन इति शेषः । सारस्य आत्मनो दिदृक्षया प्रव्रजन्ति सन्न्यस्यन्ति । बृहस्पतिरिति- आहेति शेषः । शुकस्मृतिमाह—कर्मणेति । जन्तु कर्मणा पुण्यपापादिलक्षणेन बध्यते- देवमनुष्यतिर्यगादिजन्मप्राप्तिरूपं संसारं प्राप्नोतीत्यर्थः । विद्यया ज्ञानेन विमुच्यते मुक्तो भवति- यस्मादेवं तस्मात् पारदर्शिनः तत्त्वविदः यतयः कर्म न कुर्वन्ति । प्रकृत गीताशास्त्रं चोक्तार्थे प्रमाणयति—इहापि चेति । 'सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी । नवद्वारे पुरे देहे नैव कुर्वन्न कारय'न्निति । मुमुक्षो सर्वकर्मसन्न्यास एव विहित इत्यत्र हेत्वन्तरमाह—कर्मानर्थक्यमिति । ननु न कर्माण्यनर्थकानि, किंतु मोक्षार्थानीत्यत आह—मोक्षस्य चाकार्यत्वादिति । यत्कर्मजन्यं तत्कार्यं, यथा घटः । सहि दण्डचक्रभ्रमणादिजन्यः । एवं यज्ञादिकर्मजन्यत्वात्स्वर्गादिफलानि कार्याणीत्युच्यन्ते, मोक्षस्तु न कार्यमिति कथं कर्मजन्यत्वं तस्य । अकार्यत्वे च 'नास्त्यकृतः कृतेनेति' श्रुतिः प्रमाणम् । किंच यदि मोक्षः कार्यस्स्यात्तर्हि स्वर्गादिवद्घटादिवच्चानित्य एव स्यात् । नित्यो हि मोक्षस्सम्प्रतिपन्नः । तस्मात्कर्मफलेषु स्वर्गादिषु पापपरिहारादिषु वा मुमुक्षोः कामाभावान्मोक्षस्याकर्मजन्यत्वाच्च न मुमुक्षोः कर्मभिः कोऽप्यर्थ इति युक्तमेव मुमुक्षोस्सर्वकर्मसन्न्यासविधानम् ।

ननु मुमुक्षोरपि नित्यकर्माण्यावश्यकानि प्रत्यवायपरिहारार्थकत्वान्नित्यानां कर्मणामिदमेव हि तन्नित्यत्वं, यदकरणे प्रत्यवाय इत्याशङ्क्याह—नित्यानीति, असन्न्यासविषयत्वादिति । यैस्सर्वकर्मसन्न्यासो न कृतस्तान्प्रत्येव नित्यानामकरणे प्रत्यवायश्शास्त्रोक्तः । विहितस्याकरणं निषिद्धस्य करणं हि दोषहेतुः । कर्माणि तु विहितानि पुंसस्सन्न्यासात्प्राक्, पश्चात्तु सन्न्यासस्यैव विहितत्वात्कथं कर्मविधानम् । नह्येकस्मिन्पुरुषे एकदा सर्वकर्मसन्न्यासविधिं सर्वकर्मविधिं च ब्रूयाच्छास्त्रमीश्वरो वा । एवं सर्वकर्मसन्न्यासिनां नित्यकर्मकरणमेव दोषहेतुरविहितत्वादिति भावः । कुतो न शक्य इत्यत्र दृष्टान्तमाह—यथेति । अग्निहोत्रस्य दारपरिग्रहसमकालप्राप्तत्वान्नास्ति असन्न्यासिनामपि ब्रह्मचारिणामग्निहोत्रविधिः । विध्यभावादेवाग्निहोत्राकरणान्नास्ति तेषां प्रत्यवायः । तद्वद्विध्यभावस्य तुल्यत्वाच्च सन्न्यासिनां नित्याकरणात्प्रत्यवायः । यद्वा ब्रह्मचारिणामिति व्यतिरेकदृष्टान्तः- यथा सन्ध्यावन्दनादिनित्याकरणाद्ब्रह्मचारिणां प्रत्यवायस्तथेति । नित्यानामकरणात्प्रत्यवायमभ्युपेत्य तस्यासन्न्यास-

द्वारा मुक्ति प्राप्तुमर्हं द्विजदेहमासाद्य य पुमान् नित्यकर्माकरणेनात्मान नाशयति स आत्मघाती अन्धं तम प्रपद्यते 'अन्धं तम प्रपद्यन्ते ये केचात्महनो जना' इति श्रुते इत्यभिप्रायकृतम्। यद्वा यो नित्यकर्मभिर्दुरितक्षय न करोति, पुण्यं च न सम्पादयति, स पुमानितोपि हीनतरं श्वादिजन्म प्राप्नोति, पुण्यपापोभयलब्धं मनुष्यजन्म- नित्यकर्मानाचरणे तु पुण्याभावात्पापानिवृत्तेश्च पापफलाच्छ्वादिजन्मप्राप्तिरिति बोध्यम्। सर्वथापि नित्यकर्माकरणान्न प्रत्यवायोत्पत्ति, किंतु नित्यकर्माकरणे दुरितक्षयाद्यभाव पुण्याभावविशिष्टदुरितात्तु श्वादिजन्मरूपप्रत्यवायोत्पत्तिरिति सर्वमनवद्यम्। तथाचेति वाक्यमन्यथा व्याख्यातमानन्दगिरिणा। तथाहि—नन्वभावस्यापि भावोत्पादनसामर्थ्यं वेदस्सम्पादयिष्यति, तथाच विहिताकरणप्रत्यवायपरिहारो विहितकरणे फलिष्यतीति नेत्याह—तथाचेति। लोकप्रसिद्धपदार्थशक्त्याश्रयणेन शास्त्रप्रवृत्त्यङ्गीकारादपूर्वशक्त्याधानायोगाद्ज्ञापकमेव शास्त्रमित्यर्थ। कारकत्वे च तस्याप्रामाण्यमप्रत्यूहं स्यादित्याह—कारकमिति। भवतु शास्त्रस्याप्रामाण्यमित्याशङ्क्यापौरुषेयत्वेनाऽशेषदोषानास्कन्दितत्वान्मैवमित्याह—नचेति। अस्यायमर्थः—यद्यभावस्यापि भावोत्पादनसामर्थ्यं वेदस्सम्पादयिष्यतीत्युच्यते, तर्हि वेद कारक एव स्यान्न तु ज्ञापक- अपूर्वशक्त्याधायकत्वं कारकत्वं, लोकप्रसिद्धपदार्थशक्त्याश्रयणेन प्रवर्तकत्वं ज्ञापकत्वमिति विवेक। यस्य यस्याग्न्यादिपदार्थस्य लोके या या दाहकत्वादिशक्तिरस्ति तामनुसृत्यैव शास्त्रं होमादिविधिं विधत्ते, नतु पदार्थेष्वपूर्वां शक्तिं कल्पयितुमीष्टे प्रत्यक्षविरोधात्- मानान्तराबाधितार्थतात्पर्यविषयसंसर्गबोधकं हि वाक्यं प्रमाणम्। अतएव अग्निना सिञ्चेति वाक्यस्याप्रामाण्यं- प्रत्यक्षेण बाधितत्वादग्निकरणकसेचनस्य। तनश्च नित्याकरणात्प्रत्यवाय इति वाक्यस्य मानान्तरबाधितत्वादप्रामाण्यमेव। अभावाद्भावस्योत्पत्तिर्हि प्रत्यक्षादिप्रमाणविरुद्धा। नन्वेवं वाक्यतात्पर्यविषयसंसर्गस्य मानान्तरेणैव सिद्धत्वात्संसर्गबोधकं वाक्यं व्यर्थमिति वाच्यं, वृद्धप्रयुक्तस्य गामानयेतिवाक्यस्य बालस्य गवानयनकर्मणि प्रवृत्तिजनकत्वेनान्वर्थत्वात्। ज्योतिष्टोमेन यजेतेत्यादिवेदवाक्यानि तु पुनरा मानान्तरासिद्धसंसर्गबोधकान्येवेति न तेषु वैयर्थ्यशङ्काऽवकाश। तस्माद्वाक्यतात्पर्यविषयसंसर्ग मानान्तरसिद्धो भवतु वा, मावा, मानान्तराबाधितस्तु भवितव्योऽवश्यमिति कृत्वा शास्त्रं ज्ञापकमेव, नतु कारकं- पदार्थेषु विद्यमानां शक्तिमनुसृत्यैव अस्मिन्वह्नौ एतदिन्द्रमुद्दिश्य एतद्द्रव्यहविःप्रदानेन यजमानस्य स्वर्गो भविष्यतीत्यज्ञातार्थं ज्ञापयतीति ज्ञापकमेवमज्ञातार्थज्ञापकत्वादेव शास्त्रं प्रमाणं, यद्ययोग्यमर्थं विदध्यात्तर्हि कारकत्वाच्छास्त्रमप्रमाणमेव स्यादिति भाव। शास्त्रं कारकं भवतीति शेष। नतु ज्ञापकं भवति- इत्यनुपपन्नार्थमयुक्तार्थं वाक्यमिति शेष। कल्पितं स्यान्नित्याकरणात्प्रत्यवायवादिनेति शेष। अनुपपन्नो वाक्यार्थ कल्पितस्स्यादित्यर्थ। इति भाष्यान्वय। अन्यत्तुल्यम्। पूर्वव्याख्यानेपि इत्यनुपपन्नार्थं कल्पित स्यादित्यस्य समनन्तरोक्तार्थोप्युपपद्यते, परं तु कारकं शास्त्रं ज्ञापक न भवतीति पूर्वोक्तान्वय, शास्त्रं कारकं भवति, नतु ज्ञापकमिति समनन्तरोक्तान्वय इति विशेष। कारकज्ञापकपदार्थभेदस्तु दर्शित एवेति संक्षेप। तस्मादिति। नित्यकर्माकरणजन्यप्रत्यवायाभावादित्यर्थ। अत इति। मुमुक्षोस्सन्न्यासविधानादित्यर्थ। प्रश्नानुपपत्तिमेव

वादेव भावरूपस्य प्रत्यवायस्योत्पत्तिः कल्पयितुं शक्या, युक्ता च- 'कथमसतः सज्जाये'तेति असतस्सज्जन्मासम्भवश्रुतेः ।

यदि विहितकरणादसम्भाव्यमपि प्रत्यवायं ब्रूयाद्वेदः, तदानर्थकरो वेदोऽप्रमाणमित्युक्तं स्यात्, विहितस्य करणाकरणयोर्दुःखमात्रफलत्वात् । तथा च कारकं शास्त्रं न ज्ञापकमिति अनुपपन्नार्थं कल्पितं स्यात्, नचैतदिष्टम् । तस्मात्सन्न्यासिनां न कर्माणि । अतः ज्ञान-

---

विषयत्वमुक्तमितः प्राक्, इदानीं तु नित्यानामकरणात्प्रत्यवाय एव भवितुं नार्हतीत्याह—न तावदित्यादिना । अत्र हेतुमाह—अभावादेवेति । नित्यानामकरणं नाम नित्यकर्मकरणाभावः - नञोऽभावार्थकत्वात् । प्रत्यवायो दोषः - सहि भावरूपः । अभावाद्भावस्योत्पत्तिः कल्पयितुं न शक्या, नापि युक्ता । तत्र श्रुतिं प्रमाणयति—कथमिति । असतस्सकाशात्सत्कथं जायेत ? न कथमपीत्यर्थः । एतेन घटप्रागभावाद्घटोत्पत्तिं ब्रुवाणास्तार्किकाः प्रत्युक्ताः—अभावस्याभावत्वादेव भावंप्रति कारणत्वायोगात् - नह्यभावाच्छशशृङ्गादेः किञ्चिद्वस्तूत्पद्यमानं दृष्टं, श्रुतं वा ।

ननु 'असदेवेदमग्र आसीत्ततो वै सदजायते'ति श्रुतिसिद्धा भावस्याभावादुत्पत्तिरिति चेत्, मैवम्—'सदेवेदमग्र आसीत्, यतो वा इमानि भूतानि जायन्ते, तद्ब्रह्म, आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते, सन्मूलास्सोम्येमाः' इत्यादिश्रुतिशतसंवादादिहाप्यसच्छब्देन ब्रह्मण एव ग्राह्यत्वात् । जन्माधीनसत्ताभावस्तु ब्रह्मण्यसच्छब्दप्रवृत्तिनिमित्तम् । यद्वा प्रमाणप्रमेयाद्यभावादसत्कल्पत्वात्सदपि ब्रह्मासदित्युच्यते- 'मेनेऽसन्तमिवात्मानं सुप्तशक्तिरसुप्तदृ'गिति भागवतात् । किंच 'तदैक्षत बहु स्या'मिति सङ्कल्पश्रवणं च कथमुपपद्येताभावस्य जगत्कारणता श्रवणे । नह्यभावश्चेतनः - भावधर्मत्वाच्चैतन्यस्येति ।

ननु अभावाद्भावस्योत्पत्तिरशक्या अयुक्ता वा भवतु, तथापि अतीन्द्रियार्थे वेदस्यैव प्रमाणत्वान्नित्याकरणे प्रत्यवायस्य वेदोक्तत्वादभ्युपेय एव प्रत्यवाय इत्यत आह—यदीत्यादि, अप्रमाणमिति । असम्भाव्यार्थवर्णनादनर्थहेतुत्वाच्चेति भावः । अर्थवत्त्वस्यैव प्रमाणत्वात्मकत्वादिति गूढाशयः । तदेव विवृणोति—विहितस्येति । क्रियाकारकाद्यनेकोपकरणोपसंहारपूर्वकत्वाद्विहितकरणस्य श्रमहेतुत्वेन दुःखहेतुत्वं सर्वजनानुभवसिद्धम् । विहिताकरणस्य प्रत्यवायहेतुत्वेन दुःखहेतुत्वं तु शास्त्रसिद्धम् । अत उभयथापि दुःखमेव फलमित्यर्थः । तथा चेति । नित्यकर्मणां दुःखमात्रफलकत्वादित्यर्थः । कारकं तद्विधायकं प्रवर्तकमिति यावत् । शास्त्रं न ज्ञापकं न प्रमाणं इति अनुपपन्नार्थमयुक्तार्थमसम्भावितार्थं वा शास्त्रं कल्पितं भगवतेति शेषः स्यात् । भवतु किं तत्र आह—नचैतदिष्टमिति । शास्त्रस्य भगवदाज्ञारूपस्य प्रवृत्त्यात्मकस्य वेदस्य असम्भावितार्थत्वमयुक्तं दुःखार्थत्वमयुक्तं चाप्रामाण्यमित्येतदनिष्टमेव- स्वतःप्रमाणत्वाद्वेदस्य सर्वपुरुषार्थज्ञानस्य वेदाधीनत्वेन वेदस्याज्ञापकत्वासम्भवाच्च । अयमाशयः—नित्यकर्मणां न प्रत्यवायपरिहारार्थत्वं कल्पयितुं शक्यं- उपात्तदुरितक्षयप्राजापत्यलोकचित्तशुद्ध्यादिमहाफलत्वाद्येषाम् । 'सन्ध्या येन न विज्ञाता सन्ध्या येनानुपासिता । जीवमानो भवेच्छूद्रो मृतश्श्वाभिजायते' इत्यादिप्रत्यवायश्रवणं तु नित्यकर्माचरणेन दुरितक्षयं विधाय चित्तशुद्धिं सम्पाद्य ज्ञान-

सर्वोपनिपत्सु च। ज्ञानकर्मणोरेकं वद निश्चित्येति चैकविषयैव प्रार्थनानुपपन्ना- उभयोस्सम्भवे। कुरु कर्मैव तस्मात्त्वमिति च ज्ञाननिष्ठाऽसम्भवमर्जुनस्यावधारणेन दर्शयिष्यति।

अर्जुनः— ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन!
तत्किं कर्मणि घोरे मां नियोजयसि केशव! ॥१॥

ज्यायसीति। ज्यायसी श्रेयसीचेत् यदि कर्मणस्सकाशात्ते तव मता अभिप्रेता बुद्धिर्ज्ञानं हेजनार्दन! यदि बुद्धिकर्मणीसमुच्चिते इष्टे तदेकं श्रेयस्साधनमिति कर्मणो ज्यायसी बुद्धिरिति च कर्मणोतिरिक्तत्वकरणं बुद्धेरनुपपन्नमर्जुनेन कृतं स्यात्, नहि तदेव तस्मात्फलतोऽ-

---

इत्याह—ज्ञानकर्मणोरिति। भगवांश्च 'मया समुच्चय एवोक्तः, किमित्थं त्वं भ्रान्तोऽसि? न ह्यन्यतराच्छ्रेयः प्राप्तुं शक्यं, तस्मात्त्वमुभयं कुर्वि'त्येवात्र चतुर्थाध्याये ब्रूयात्, ननु कुरु कर्मैव तस्मात्त्वमिति ब्रूयादित्याह—उभयोरित्यादिना। ज्ञाननिष्ठाया असम्भवमिति समासः। अवधारणेनेति। कर्मैवेत्येवकारेणेत्यर्थः। एतेन आत्मयाथात्म्यदर्शनपूर्वकं कर्म कर्तव्यमिति रामानुजमतं च प्रत्युक्तम्—आत्मयाथात्म्यदर्शनस्य साङ्ख्यविषयत्वात्कर्मणश्च योगिविषयत्वादकर्त्रभोक्त्रात्मदर्शनस्य कर्तृत्वाद्यभिमानपूर्वककर्मविरोधित्वाच्चेति।

हेजनार्दन! यदि कर्मणो बुद्धिर्ज्यायसीति ते मता। तर्हि हेकेशव! मां घोरे कर्मणि किमिति नियोजयसीत्यन्वयः। श्रेयसी श्रेयस्करीत्यर्थः। हेजनार्दन! जनमर्दति गच्छतीति जनार्दनः सर्वान्तर इत्यर्थः। गत्यर्थानां ज्ञानार्थत्वात्सर्वज्ञ इति वा। जनैरर्द्यते याच्यते इति वा जनार्दनः तत्तत्पुरुषार्थसिद्धये जना एनं याचन्त इत्यर्थः। तत्सम्बुद्धिः। एतेन सर्वज्ञस्य सर्वान्तरस्य च तव यन्मतं तदेव सर्वसम्मतमिति सर्वपुरुषार्थप्रदेन त्वया यच्चोद्यते तत्करणमेव फलदमिति च सूच्यते। यदीति। यदि बुद्धिकर्मणी समुच्चिते इष्टे, तर्हि अर्जुनेन कृतं बुद्धेः कर्मणोऽतिरिक्तत्वं पृथक्त्वमधिकत्वं वाऽनुपपन्नं स्यात्, कुत्र कृतमर्जुनेनेत्यत आह—तदेकमिति। 'तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुया'मिति, ज्यायसीचेत्कर्मणस्ते मता बुद्धिर्जनार्दने'ति चात्रैवोक्तमित्यर्थः। ननु समुच्चयेपि कर्मातिरिक्ता बुद्धिस्स्यात्को दोषस्तत्राह—नहीति। तदेव तस्मात्फलतोऽतिरिक्तं नहि स्यादित्यन्वयः। समुच्चयस्य कर्मज्ञानोभयरूपत्वेन कर्म बुद्धिश्चेत्युभयमप्येकमेव। एकसमुच्चयात्मकत्वादिति कृत्वा कथमेकात्मकयोः कर्मबुद्ध्योः पृथक्त्वमुत्कर्षापकर्षौ वा स्याताम्? न कथमपीत्यर्थः।

ननु शिरःपाण्याद्यवयवसमूहात्मकेपि गात्रे यथा पादादिभ्यः शिरःप्रधानमित्युच्यते, तद्वत्कर्मबुद्ध्युभयात्मकेपि समुच्चये कर्मणो बुद्धिश्श्रेयस्करीत्युच्यत इति चेत्, मैवम्—दृष्टान्तदार्ष्टान्तिकयोरुभयोरपि अवयवातिरिक्तस्यावयविनोऽभावात्। नहि शिरःपाण्याद्यतिरिक्तं गात्रमिति कश्चिदवयव्यस्ति, येन तदवयवान्यतमयोश्शिरःपादयोरुत्कर्षापकर्षावुच्येयाताम्। तथा कर्मबुद्ध्यतिरिक्तस्समुच्चय इति कश्चिदवयवी नास्ति, येन समुदायावयवान्यतरयोः ज्ञानकर्मणोरुत्कर्षापकर्षावुच्येयाताम्। तस्माच्छिरआद्यवयवानामेव गात्रमिति कर्मबुद्ध्योरेव समुच्चय इति च संज्ञा। तथाच यथा शिरो गात्रं तथा

कर्मणोरसमुच्चयानुपपत्तिः- ज्यायसीचेदित्यर्जुनस्य प्रश्नानुपपत्तेश्च । यदि हि भगवता द्वितीयाध्याये ज्ञानं कर्म च त्वयैवानुष्ठेयमित्युक्तं स्यात्, ततोऽर्जुनस्य प्रश्नोऽनुपपन्नः- 'ज्यायसी चेत्कर्मणस्ते मता बुद्धि'रिति । अर्जुनायचेत् बुद्धिकर्मणी त्वया अनुष्ठेये इत्युक्ते या कर्मणो ज्यायसी बुद्धिस्साप्युक्तैवेति 'तत्किं कर्मणि घोरे मां नियोजयसी'ति प्रश्नो न कथ च नोपपद्यते । न चार्जुनस्यैव ज्यायसी बुद्धिर्नानुष्ठेयेति भगवतोक्त पूर्वमिति कल्पयितु युक्तं, येन ज्यायसीचेदिति प्रश्नः स्यात् ।

यदि पुनरेकस्य पुरुषस्य ज्ञानकर्मणोर्विरोधादनुष्ठानं न सम्भवतीति भिन्नपुरुषानुष्ठेयत्व भगवता पूर्वमुक्तं स्यात्, ततो प्रश्न उपपन्नः ज्यायसीचेदित्यादिः । अविवेकतः प्रश्न कल्पनायामपि भिन्नपुरुषानुष्ठेयत्वेन भगवतः प्रतिवचनं नोपपद्येत, न चाज्ञाननिमित्तं भगवतः प्रतिवचनं कल्प्य स्यात्, तस्माच्च भिन्नपुरुषानुष्ठेयत्वेन ज्ञानकर्मनिष्ठयोर्भगवतः प्रतिवचन दर्शनात् ज्ञानकर्मणोः समुच्चयानुपपत्तिः, केवलादेव ज्ञानान्मोक्ष इत्येषोर्थो निश्चितो गीतासु

विवृणोति—यदिहीत्यादिना । यदि ज्ञानकर्मणोस्समुच्चय एव श्रेय प्राप्तिहेतु, नत्वन्यतरत् तर्हि श्रेयस्कामायार्जुनाय भगवान् समुच्चयं कुर्वित्युपदिशेत्, नतु कर्मण्येवाधिकार इति । अर्जुनश्च यदि कर्मापेक्षया ज्ञानमेव ज्याय तर्हि किमिति कर्मणि मा नियोजयसीति नैव पृच्छेत्- समुच्चयस्यैवोप दिष्टत्वादित्यर्थ ।

ननु अन्येषा समुच्चय उपदिष्ट, अर्जुनस्य तु कर्मैवेति कृत्वा प्रश्न उपपद्यत इति शङ्कते—नचेति । नचैवं कल्पयितुं युक्तमर्जुनस्य भक्तत्वाच्छ्रेयोर्थित्वाच्च हिततमोपदेशार्हत्वात्कर्ममात्रोपदेशाद्नुष्ठानोपदेशस्य मोक्षहेतुत्वेनाहिततमत्वाच्चेति भाव । येनेति । अर्जुनस्य कर्ममात्रोपदेशेनेत्यर्थ । ज्ञानानुष्ठानानुपदेशेनेति वा, येन कल्पनेनेति वा । अस्मिन्पक्षे तथा कल्पयितुमिति तथाशब्दस्य शेष । प्रश्नस्यानुपपत्तिमुक्त्वा उपपत्तिं दर्शयति—यदि पुनरिति, विरोधादिति । कर्ताहं भोक्ताहमित्यहङ्कारपूर्वकत्वात्कर्मण नाहं कर्ता, नाहं भोक्तेति ज्ञानविरोध ।

ननु भगवता समुच्चय एव द्वितीयाध्याये प्रोक्त, अर्जुनस्तु तदर्थमज्ञात्वा ज्ञाने केषाञ्चिदधिकार कर्मणि तु स्वस्याधिकार प्रोक्तो भगवतेति मत्वा ज्यायसीचेदिति पप्रच्छेत्यत आह—अविवेकत इति, भिन्नपुरुषानुष्ठेयत्वेनेति । 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति साङ्ख्ययोगिरूपपुरुषद्वयानुष्ठेयत्वेनेत्यर्थ. । ननु भगवानप्यविवेकादेव तादृशमुत्तरमवोचदित्यत आह—नचेति । भगवति सर्वज्ञे भ्रमप्रमादादिदोषगन्धरहिते अज्ञानायोगादिति भाव । तस्माच्चेति । तस्माच्छब्दार्थं स्वयमेव विवृणोति—भिन्नपुरुषेति । एकपुरुषानुष्ठेयत्वेसति ज्ञानकर्मणोस्समुच्चयस्स्यादिति भाव । किंच यदि समुच्चय एव भगवदभिमत अर्जुनाय प्रोक्तश्च, तर्हि- 'तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुया'मिति कथमर्जुन ज्ञानकर्मणोरन्यतरदेव श्रेय प्रापकं पप्रच्छ

व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ।
तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥२॥

किंच व्यामिश्रेणेति । व्यामिश्रेणेव यद्यपि विविक्ताभिधायी भगवान् तथापि मम मन्दबुद्धेः व्यामिश्रमिव भगवद्वाक्यं प्रतिभाति, तेन मम बुद्धिं मोहयसीव मम बुद्धेः व्यामोहापनयाय हि प्रवृत्तस्त्वं तु कथं मोहयसि, अतो ब्रवीमि बुद्धिं मोहयसीव मे इति । तत्र भिन्नकर्तृकयोः ज्ञानकर्मणोरेकपुरुषानुष्ठानासम्भवं यदि मन्यसे तत्रैवं सति तत्तयोरेकं बुद्धिं कर्म वा इदमेवार्जुनस्य योग्यं स्वबुद्धिशक्त्यवस्थानरूपमिति निश्चित्य वद येन ज्ञानेन कर्मणा वान्यतरेण श्रेयोहमाप्नुयाम् । यदीह कर्मनिष्ठायां गुणभूतमपि ज्ञानं भगवतोक्तं स्यात्, कथं तयोरेकं वदेत्येकविषयैव अर्जुनस्य शुश्रूषा स्यात्? नहि भगवतोक्तं पूर्वं मन्यतरदेव ज्ञानकर्मणोर्वक्ष्यामि नैव द्वयमिति येनोभयप्राप्त्यसम्भवमात्मनो मन्वान एकमेव प्रार्थयेत् ॥२॥

---

व्यामिश्रेणेति । इवशब्दान्न वस्तुतो व्यामिश्रमिति प्रतीयत इत्यभिप्रेत्याह—यद्यपीत्यादि । विविक्तं विस्पष्टमभिधत्त इति विविक्ताभिधायी व्यामिश्रमविविक्त- सकीर्णमितियावत् । कर्मज्ञानविषयविवेकरहितमिति परमार्थ । मोहयसीवेत्यत्रापीवशब्दाद् न वस्तुतो मोहयसीति प्रतीतमित्याह—ममेत्यादिना, तत्रेति । व्यवहारभूमावित्यर्थ । तत्रैवसतीति भागवते मते एवंरीत्या निश्चिते सतीत्यर्थ । गुण अप्रधान 'गुणस्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तु'ष्विति कोश । गुणेन तुल्यं गुणभूत नित्यसमास । शुश्रूषा श्रोतुमिच्छा ।

पुनरपि समुच्चयवाद निराकरोति—यदीहेति । ज्ञानयुक्तं कर्म त्वयानुष्ठेयमिति भगवतोक्ते कथमर्जुनस्तयोरेकं मे ब्रूहीति प्रार्थयेत ? न कथमपीत्यर्थ । ननु समुच्चयएव भगवतो मत, किं तु समुच्चयस्सविवेकवत्पुरुषधौरेयविषय, तत्र नास्त्यर्जुनस्य प्रवेष्टुं शक्तिरित्यभिप्रेत्य भगवता अन्यतरदेव कर्तव्यत्वेनार्जुनायोपदिष्टमित्यत आह—नहीति । किंच ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनामिति निष्ठाद्वयमेवोवाच भगवान्न तु विवेकवत्पुरुषधौरेयानुष्ठेया समुच्चयात्मिकामन्यां निष्ठाम् । तस्मान्नास्ति समुच्चयोपपत्ति ।

ननु कर्मण्येवाधिकारस्ते इति भगवता अर्जुनाय कर्मैव श्रेयस्करत्वेन निश्चित्योक्तमेवेति पुन कथमर्जुनस्य प्रश्नावकाश इतिचेत्, सत्यम्—अतएव 'तत्किं कर्मणि घोरे मां नियोजयसी'त्युपालब्धवान् पार्थ । परं तु भगवता द्वितीयाऽध्याये सामान्येन कर्मयोग विस्तरतो ज्ञानयोगश्च प्रतिपादित । अर्जुनस्तु स्नेहकारुण्यादिभीतो युद्धकर्मणो निवृत्त ज्ञानयोगमवलम्ब्य भिक्षाटनमेव मे श्रेय इति कृतनिश्चय इति 'गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके' इति श्लोकेन सूच्यते । ततश्च सन्न्यासएव कृतप्रीते सन्न्यासएव साक्षान्निश्रेयससाधनमिति भगवदुक्त्या निश्चितवतश्चार्जुनस्य कर्मण्येवाधिकारस्ते इत्येतादृशोपदेशेन न कर्मणि प्रवर्तितुमिच्छा जाता, नापि सन्न्यासान्निवर्तितुमतएव पृच्छति— तदेकं निश्चित्य वदेति ।

तिरिक्तं स्यात्, तथा च कर्मणः श्रेयस्करी भगवतोक्ता बुद्धिः अश्रेयस्करं च कर्म कुर्विति मां प्रतिपादयसि तत्किन्नु कारणमिति भगवत उपालम्भमिव कुर्वन् तत्किं कस्मात् कर्मणि घोरे क्रूरे हिंसालक्षणे मां नियोजयसि केशवेति च यदाह, तच्च नोपपद्येत। अथ स्मार्तेनैव कर्मणा समुच्चयस्सर्वेषां भगवतोक्तः अर्जुनेन चावधारितश्चेत्, तत्किं कर्मणि घोरे मा नियोजयसीत्यादि कथं युक्तं स्याद्वचनम् ॥१॥

पादोऽपि गात्रमेव यथा कर्म समुच्चयस्तथा बुद्धिरपि समुच्चय एवेति सिद्धम्। ततश्च कर्मणो बुद्धिश्श्रेयसीत्युक्तौ समुच्चयात् समुच्चयश्श्रेयानित्यापतितम्। तच्चायुक्त- नहि तदेव तस्मात्फलतोऽतिरिक्त स्यादिति। ननु तथासति 'सर्वस्य गात्रस्य शिर प्रधान'मित्युक्ति कथमुपपद्येतेति चेदुच्यते—अविवेकादिति। न ह्यवयवातिरिक्तावयविकल्पने अविवेकं विना हेतुरस्ति। नच पदाच्छिर उत्कृष्टमित्यस्य कथमुपपत्तिरिति वाच्य, अवयव्यनभ्युपगमे सिद्धान्ते अवयवानामेकात्मकत्वाभावाच्छिर पादयो पृथगवयवयोरुत्कर्षापकर्षौ सुष्ठूपपद्येते। अत प्रकृते च समुच्चयानभ्युपगमे कर्मज्ञानयो पृथग्भूतयोरुत्कर्षापकर्षौ स्यातामेवेति। एतेन कर्मज्ञानसमुच्चय इति कथन पदार्थो दुर्निरूप इति व्यक्तम्। **तथाचेति**। कर्मणो बुद्धेरतिरिक्तीकरणेन कर्मज्ञानयोरसमुच्चयत्वासिद्धत्वादित्यर्थ। हेकृष्ण भगवता त्वयोक्ता बुद्धि कर्मण श्रेयस्करी मास्तु, अश्रेयस्कर कर्म कुर्विति प्रतिपादयसि- तत्र किन्नु किं वा कारणम्? इति भगवत उपालम्भं कुर्वन्निव, अर्जुनो यदाह तच्च नोपपद्यते इत्यन्वय। किमाहेति शङ्कायां श्लोकस्योत्तरार्थं व्याचष्टे—**तत्किमित्यादिना**। तर्हि हेकेशव 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे सम्भूतौ तस्मात्केशवनाम ते' इति स्मरणाद्ब्रह्मरुद्रकारणम्। एतेन सर्वजगत्कर्तुस्सर्वाधिपस्य तव मम कर्मसु प्रेरणं नोचितमिति प्रतीयते। अथवा ब्रह्मरुद्राधिपस्त्व येन केनापि हेतुना मा कर्मणि नियोजयसि, ननु वृथा नाप्यमर्षेण, किंतु स हेतु मम दुरधिगम, न केवलं मम, किंतु ब्रह्मरुद्रयोरपि। अत पृच्छामि कस्तत्र हेतुरिति। इदमेव सूचयितुं श्री भाष्यकारै प्रयुक्तमुपालम्भमिव कुर्वन्निति पदम्। न तु वस्तुत उपालम्भ करोतीत्यर्थ।

एतावता ग्रन्थसन्दर्भेण गृहस्थस्य श्रौतस्मार्तकर्मसमुच्चिताद् ज्ञानान्मुक्ति, ऊर्ध्वरेतसा तु स्मार्तकर्मसमुच्चिताद्ज्ञानान्मोक्ष इति च पूर्वपक्ष। तत्प्रसङ्गागतमन्यच्च खण्डितम्। पुन पूर्वपक्षयति स्मार्तकर्मसमुच्चितादेव सर्वाश्रमिणां मोक्षः, न केवलज्ञानादिति। अथेत्यादिना दूषयति—**तत्किमित्यादिना**। घोरे कर्मणीत्यनेन युद्धकर्म सिद्धम्। तद्धि स्मार्तं स्मार्तकर्मसमुच्चितं ज्ञानं त्वयानुष्ठेयमिति भगवता प्रोक्तेसति, कथमर्जुन'स्तत्किं कर्मणि घोरे मा नियोजयसि केश'वेति भगवन्तं पृच्छेत्? कथं वा 'ज्यायसीचेत्कर्मणस्ते मता बुद्धिर्जनार्द'नेति कर्मापेक्षया ज्ञानस्य श्रेयस्त्वं वदेत्? कथं वा 'तदेकं वद निश्चित्य येन श्रेयोहमाप्नुया'मिति पृच्छेत्?। अथ यदि भगवतोक्तोऽर्थोऽर्जुनेनानवधारित इत्युच्येत, तर्हि भगवानपि मया स्मार्तकर्मज्ञानसमुच्चय एवोक्त, त्वया तु नाधिगतमिति किमिति नावोचत्? 'लोकेऽस्मिन् द्विविधा निष्ठेति' कर्मज्ञानयोर्भिन्नपुरुषानुष्ठेयत्वं किमिति ब्रूयात्? तस्मात्केवलादेव ज्ञानान्मोक्ष इति गीतासूपनिषत्सु च निश्चितोऽर्थ इति पूर्वेण सम्बन्ध ॥१॥

धिकृतानां त्रैवर्णिकानां द्विविधा द्विप्रकारा निष्ठा स्थितिः अनुष्ठेयतात्पर्यं पुरा पूर्वं सर्गादौ प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयसप्राप्तिसाधनं वेदार्थसम्प्रदायं कुर्वता मया प्रोक्ता सर्वज्ञेनेश्वरेण । अनघ अपाप । का सा द्विविधा निष्ठेत्यत्राह—तत्र ज्ञानयोगेन ज्ञानमेव योगः तेन साङ्ख्यानां आत्मानात्मविषयविवेकज्ञानवतां ब्रह्मचर्याश्रमादेव कृतसन्न्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां परमहंसपरिव्राजकानां ब्रह्मण्येवास्थितानां निष्ठा प्रोक्ता, कर्मयोगेन कर्मैव योगः कर्मयोगः तेन योगिनां कर्मिणां निष्ठा प्रोक्तेत्यर्थः ।

यदि चैकेन पुरुषेणैकस्मै पुरुषार्थाय ज्ञानं कर्म च समुच्चित्य अनुष्ठेयं भगवतेष्टमुक्तं वक्ष्यमाणं वा गीतासु वेदेषु चोक्तं कथमिहार्जुनायोपपन्नाय प्रियाय विशिष्टभिन्नपुरुषकर्तृके एव ज्ञानकर्मनिष्ठे ब्रूयात्, यदिपुनरर्जुनः ज्ञानं कर्म च द्वयं श्रुत्वा स्वयमेवानुष्ठास्यति अन्येषां तु भिन्नपुरुषानुष्ठेयतां वक्ष्यामीति मतं भगवतः कल्प्येत, तदा रागद्वेषवानप्रमाणभूतो भगवान् कल्पितस्स्यात्तच्चायुक्तं- तस्मान्न समुच्चयो ज्ञानकर्मणोः। यदर्जुनेनोक्तं कर्मणो ज्यायस्त्वं बुद्धेः तच्च स्थितमनिराकरणात् । तस्याश्च सन्न्यासिनैवानुष्ठेयत्वं भिन्नपुरुषानुष्ठेयत्ववचनात् भगवत एवमेव अनुमतमिति गम्यते ॥३॥

---

प्रश्नानुरूपमेव प्रतिवचनमुवाचेत्यन्वयः । त्रैवर्णिकाः ब्रह्मक्षत्रियवैश्याः । शूद्राणां तु नास्त्यधिकार इति भावः । युज्यत इति योगः । यद्वा युज्यतेनेनेति योग उपायः- पुरुषार्थप्राप्तिसाधनत्वादिति भावः । आत्मानात्मविषयो विवेकः अयमात्मा इदमनात्मेति स एव ज्ञानं तद्येषामस्ति तेषां तथोक्तानाम् । साङ्ख्यं ज्ञानं तदेषामस्तीति साङ्ख्या इति व्युत्पादित्वादिति भावः । के ते साङ्ख्या अत आह—ब्रह्मचर्यादिति । 'वेदान्तविज्ञानसुनिश्चितार्थास्सन्न्यासयोगाद्यतयश्शुद्धसत्त्वा' इति श्रुतिमिहानुकामयति—वेदान्तेति । वेदान्तविज्ञानं वेदान्तशास्त्रश्रवणं तेन सुष्ठु निश्चितः अर्थः परमार्थतत्त्वमात्मा यैस्ते वेदान्तविज्ञानसुनिश्चितार्थाः, यद्वा वेदान्तैर्जातं यद्विशिष्टं ज्ञानं ब्रह्माहमस्मीत्याकारकं तेन सुनिश्चितोऽर्थः परमपुरुषार्थो मोक्षः येषां ते तथोक्ताः । ब्रह्मण्येवेत्येवकारात्त्वविद्याकृतकर्मव्यवहारे इत्यर्थः । हे अनघ अस्मिन् लोके पुरा मया साङ्ख्यानां ज्ञानयोगेन, योगिनां कर्मयोगेन च द्विविधा निष्ठा प्रोक्तेत्यन्वयः ।

पुनस्समुच्चयवादं निराकरोति—यदिचेत्यादिना । उपपन्नः प्रपन्नः । विशिष्टेति । साङ्ख्यत्वयोगित्वविशेषणविशिष्टेत्यर्थः । विशिष्टौ भिन्नौ पुरुषौ कर्तारौ ययोस्ते विशिष्टभिन्नपुरुषकर्तृके अनुष्ठास्यतीति द्वयमिति कर्म । रागद्वेषेति । यथा मत्प्रियशिष्योऽर्जुनः कर्मज्ञानसमुच्चयमनुष्ठाय मुच्येत, यथा चेतरे अन्यतरदनुष्ठाय न मुच्येरन्, तथा मया वक्तव्यमिति कपटबुद्ध्या यदि भगवान् प्रवर्तेत, तर्हि जीववत्सोपि रागद्वेषवत्त्वेनाग्राह्यवाक्य एव स्यात् । तच्चायुक्तमिति । अपहतपाप्मनि सर्वसमे सर्वसुहृदि भगवति रागद्वेषादिदोषासङ्गादिति भावः । स्थितमिति । सिद्धान्तितमित्यर्थः । तत्र हेतुमाह—अनिराकरणादिति । न कर्मणो बुद्धिर्ज्यायसीति भगवताऽनिराकृतत्वादर्जुनोक्तार्थस्येत्यर्थः । तस्याश्च बुद्धेरित्यर्थः । सन्न्यासिनैवेति । ज्ञानयोगेन साङ्ख्यानामित्युक्तत्वादिति भावः । सर्वकर्मसन्न्यासरूपज्ञाननिष्ठायाः कर्मिगृहस्थाविषयत्वादिति तत्त्वम् । अनुमतमङ्गीकृतं सम्मतमिति यावत् ॥३॥

मां च बन्धकारणे कर्मण्येव नियोजयसीति विषण्णमानसमर्जुनं कर्म नारभ इत्येवं मन्वानमालक्ष्याह भगवान्- न कर्मणामनारम्भादिति। अथवा ज्ञानकर्मनिष्ठयोः परस्परविरोधादेकेन पुरुषेण युगपदनुष्ठातुमशक्यत्वे सतीतरेतरानपेक्षयोरेव पुरुषार्थहेतुत्वे प्राप्ते कर्मनिष्ठायाः ज्ञाननिष्ठाप्राप्तिहेतुत्वेन पुरुषार्थहेतुत्वं, न स्वातन्त्र्येण। ज्ञाननिष्ठा तु कर्मनिष्ठोपायलब्धात्मिकासती स्वातन्त्र्येण पुरुषार्थहेतुरन्यानपेक्षयेत्येतमर्थं प्रदर्शयिष्यन्नाह श्रीभगवान्—

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च सन्न्यसनादेव सिद्धिं समधिगच्छति ॥४॥

नेति। न कर्मणां क्रियाणां यज्ञादीनामिह जन्मनि जन्मान्तरे वानुष्ठितानामुपात्तदुरितक्षयहेतुत्वेन सत्त्वशुद्धिकारणानां तत्कारणत्वेन च ज्ञानोत्पत्तिद्वारेण ज्ञाननिष्ठाहेतूनां— 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः। यथाऽऽदर्शतलप्रख्ये पश्यत्यात्मानमात्मनी'ति स्मरणात् अनारम्भादननुष्ठानात्, नैष्कर्म्यं निष्कर्मभावं कर्मशून्यतां ज्ञानयोगेन निष्ठां निष्क्रियात्मस्वरूपेणावस्थानमिति यावत्। पुरुषो नाश्नुते न प्राप्नोतीत्यर्थः। न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुत इति वचनात् तद्विपर्ययात्तेषामेवारम्भान्नैष्कर्म्यमश्नुत इति गम्यते।

कस्मात्पुनः कारणात् कर्मणामनारम्भान्नैष्कर्म्यं नाश्नुत इति, उच्यते—नैष्कर्म्योपायत्वात्कर्मारम्भस्य। न ह्युपायमन्तरेण उपेयप्राप्तिरस्ति- कर्मयोगोपायत्वस्य नैष्कर्म्यलक्षणस्य ज्ञानयोगस्य श्रुताविह च प्रतिपादनात्। श्रुतौ तावत्प्रकृतस्यात्मलोकस्य वेदस्य वेदनोपाय-

---

नेति श्लोकमवतारयति—मां चेति। चस्त्वर्थ। प्रियं भक्तमपि मामिति वा। नारभे नोरभे- न कुर्वे इति यावत्। मन्वानं मन्यमानं निश्चितवन्तमिति यावत्। कर्मनिष्ठोपायलब्धात्मिका कर्मनिष्ठा कर्मयोग. सैवोपाय. साधनं तेन लब्ध आत्मा स्वरूपं यस्यास्सा तथोक्ता। स्वातन्त्र्येणेति पदं स्वयमेव व्याकरोति—अन्यानपेक्षयेति। तत्कारणत्वेन सत्त्वशुद्धिकारणत्वेन।

ज्ञानमिति। पुंसां पापस्य कर्मण क्षयाद्ज्ञानमुत्पद्यते। कथमुत्पद्यते अत आह—यथेति। आदर्शतलप्रख्ये दर्पणवदतिस्वच्छे इत्यर्थ.। आत्मनि मनसि आत्मानं सच्चिदानन्दं ब्रह्म यथा पश्यति, तथा ज्ञानमुत्पद्यत इत्यर्थ.। यथा निर्मले आदर्शतले पुरुष स्वप्रतिबिम्बं पश्यति, तथा निष्पापे मनसि पुरुष आत्मानं पश्यतीति परमार्थ। इह जन्मनि जन्मान्तरेवानुष्ठितैर्निष्कामकर्मभिर्दुरितक्षय, दुरितक्षयात्सत्त्वशुद्धि', सत्त्वशुद्धेर्ज्ञानोत्पत्तिः, ज्ञानोत्पत्तेर्ज्ञाननिष्ठाप्राप्तिरिति क्रम.। अत्र केषाञ्चिच्छुकवामदेवादीनां विनैव कर्मयोगं ज्ञाननिष्ठादर्शनाज्जन्मान्तर इत्युक्तम्। यथा ऐहिकसम्पदा जन्मान्तरीयशिवपूजाऽनुमीयते, यथा वा क्षयरोगादिना ब्रह्महत्यादीनि जन्मान्तरीयपापानि अनुमीयन्ते तद्वदिति भावः। कारणं विना कार्यासिद्धेरिति। ज्ञानमात्मानात्मविवेक। ज्ञाननिष्ठा त्वात्मसाक्षात्कारः।

उपेयं साध्यम्। कर्मयोगोपायत्वस्य कर्मयोग उपायो यस्य तस्य भावस्तत्त्वं तस्य नैष्कर्म्यलक्षणं स्वरूपं यस्य तस्य नैष्कर्म्यलक्षणस्येति ज्ञानयोगविशेषणम्। वेदस्य ज्ञेयस्यात्मलोकस्य आत्मैव

त्वेन- 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेने'त्यादिना कर्मयोगस्य ज्ञानयोगोपायत्वं प्रतिपादितम् । इहापिच– 'सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ॥ यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ।' इत्यादीनि प्रतिपादयिष्यति ।

ननु च- 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरे'दित्यादौ कर्तव्यकर्मसन्न्यासादपि नैष्कर्म्यप्राप्तिं दर्शयति, लोके च कर्मणामनारम्भान्नैष्कर्म्यमिति प्रसिद्धतरम् । अतश्च नैष्कर्म्यार्थिनः किं कर्मारम्भेणेति प्राप्तमत आह—नच सन्न्यसनादेवेति । नापि सन्न्यसनादेव केवलात्कर्मपरित्यागमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां ज्ञानयोगेन निष्ठां समधिगच्छति न प्राप्नोति ॥४॥

न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥५॥

कस्मात्पुनः कारणात्कर्मसन्न्यासमात्रादेव ज्ञानरहितात्सिद्धिं नैष्कर्म्यलक्षणां पुरुषो नाधिगच्छतीति हेत्वाकांक्षायामाह—नेति । नहि यस्मात्क्षणमपि कालं जातु कदाचित्

---

लोक आत्मलोकस्तस्य वेदनं ज्ञानं तदुपायत्वेन विविदिषन्ति वेत्तुमिच्छन्ति । आदिपदात् दानेन तपसाऽनाशकेनेति संग्रहः । तमेतमिति । वेदः ज्ञानयोगमुपेयम्प्रति कर्मयोग उपाय इत्युवाच वेदवचनयज्ञदानतपोभिः कर्मभिर्विविदिषा जायत इत्युक्तत्वादिति भावः । सन्न्यासस्त्विति । हेमहाबाहो सन्न्यासस्तु अयोगतः कर्मयोगं विना आप्तुं दुःखमशक्य इत्यर्थः ।

अभयमिति । 'भूताभयप्रदानस्य कलां नार्हन्ति षोडशी'मिति शास्त्रात्सर्वभूतेभ्योऽभयं दद्यादित्युक्तम् । लोकेऽपेति । कर्मराहित्यस्य कर्मानाचरणप्रयुक्तत्वादिति भावः । अनश्चेति । कर्मराहित्यस्य कर्मसन्न्यासपूर्वकत्वादित्यर्थः । नैष्कर्म्यार्थिन इति । दारिद्र्यार्थिनः कृष्याद्यारम्भ इव नैष्कर्म्यार्थिनः कर्मारम्भो उपहास्यास्पद इति भावः । प्राप्तमिति । पूर्वपक्षः प्राप्त इत्यर्थः । अत आहेत्युत्तरपक्षमिति शेषः । एवकारार्थमाह—केवलाद्ज्ञानरहितादिति ।

अयं भावः—ज्ञानसहितात्कर्मसन्न्यासान्नैष्कर्म्यं प्राप्यते पुंसा, तत्तु ज्ञानं सत्त्वशुद्धिद्वारा कर्मयोगसाध्यम् । तस्मात्कर्मणामारम्भादेव सत्त्वशुद्धिद्वारा ज्ञानसहितं कर्मसन्न्यासं कृतवतो नैष्कर्म्यप्राप्तिरिति ।

यत्तु रामानुजः—अनारम्भादनुपक्रमात्, सन्न्यसनादारब्धस्य मध्ये त्यागादित्यमापत, तत्तुच्छम्—यदा हि कर्मणामनारम्भान्न सिद्धिरित्युक्तं तदैव प्रारब्धकर्मसन्न्यासान्न सिद्धिरिति सिद्धमेवेति पुनस्तत्कथनस्य व्यर्थत्वात् । न ह्यप्राप्तस्य कर्मणः फलहेतुत्वं कोपि शङ्कते- असनात्कृष्यादेः फलहेतुत्वादर्शनात् । किंच सन्न्यसनादेवेत्येवकारश्चास्मिन्मते व्यर्थः ॥४॥

नहीति । हि कश्चित् क्षणमपि जातु अकर्मकृत्सन् न तिष्ठतीत्यन्वयः । सर्व इत्यनेन ज्ञान-

कश्चित्तिष्ठति अकर्मकृत्सन्, कस्मात् कार्यते प्रवर्त्यते, हि यस्मात् अवश एव कर्म सर्वः प्राणी प्रकृतिजैः प्रकृतितो जातैः सत्त्वरजस्तमोभिर्गुणैः। अज्ञ इति वाक्यशेषः। यतो वक्ष्यति गुणैर्यो न विचाल्यत इति साङ्ख्यानां पृथक्करणात् अज्ञानमेव हि कर्मयोगः न ज्ञानिनां, ज्ञानिनां तु गुणैरचाल्यमानानां स्वतश्चलनाभावात् कर्मयोगो नोपपद्यते, तथाच व्याख्यातं 'वेदाविनाशिनं नित्य'मित्यत्र ॥५॥

---

ज्ञानिरूपसकलजनग्रहणशङ्कायामाह—अज्ञ इति। एवं सर्वशब्दसंकोचे हेतुमाह—यत इति। नन्वेतेन नच सन्न्यसनादेव सिद्धिं समधिगच्छतीत्यत्र को हेतुरिति प्रश्नस्य किमुत्तरमायात-मितिचेदुच्यते—अज्ञस्य कर्मसन्न्यास एवासिद्धः। यतस्सत्त्वादिगुणचोदितस्सर्वोऽप्यज्ञजनस्तद्गुणानुरूपं शुभमशुभं मिश्रं वा कर्म अवश एव करोति। क्षणकालमप्यकर्मकृन्न वर्तत इति।

नन्वेवं यदि अज्ञस्य सन्न्यास एव न सिद्ध्यति, तर्हि ज्ञानरहितात्सन्न्यासात्सिद्धिर्नास्तीति कथ-मुक्तं ज्ञानरहितसन्न्यासस्यास्तित्वम्? दृश्यन्ते च बहवस्सन्न्यासिनः परमज्ञा इदानीमपीति कथमज्ञस्य सन्न्यासाभावो वेतिचेत्, मैवम्—यतस्सशिखायज्ञोपवीतमग्निहोत्रादि कर्म त्यक्त्वा काषायाम्बरं धृत्वा अज्ञास्सन्न्यासिनो लोके चरन्तो दृश्यन्ते, तत एवोक्तम्—नच सन्न्यसनादेवेति। य एवमज्ञ आत्मानं सन्न्यासिनं मन्यते, नतु स वस्तुतस्सन्न्यासी, क्षणकालमपि तस्याकर्मकर्तृत्वेन स्थित्यभावात् अत उक्तमज्ञस्य नास्ति सन्न्यास इति।

शिखायज्ञोपवीतत्यागादिमात्रलक्षणात्सन्न्यासाल्लोकप्रसिद्धान्नास्ति सिद्धिः- यतस्तादृशसन्न्यासवा-न्पुरुषो न शास्त्रसिद्धसन्न्यासवान् ज्ञानपूर्वकसन्न्यासस्यैव शास्त्रसिद्धसन्न्यासत्वादिति पर्यवसन्नार्थः।

- ननु योऽज्ञस्सन्न्यासी सोपि नाग्निहोत्रादिकं कर्म करोति, यश्च ज्ञस्सन्न्यासी सोपि न तथा, यश्च ज्ञस्सन्न्यासी भिक्षाटनादिकं कर्म करोति तदेवाज्ञस्सन्न्यास्यपि करोति, एवंस्थिते अज्ञ एव क्षणम-प्यकर्मकृन्न वर्तत इति कुत उच्यते इतिचेत्।

सत्यम्--यदेव ज्योतिष्टोमादिकं कर्म सकामानां स्वर्गादिफलदं तदेव निष्कामानां स्वर्गादि-फलाप्रदं यथा, तथा यदेव भिक्षाटनादिकर्म अज्ञसन्न्यासिनां कर्मायते, तदेव विदुषां न कर्मायते- कर्तृ-त्वाभिमानाद्यभावात्। नहि विद्वानात्मानमविक्रियं सच्चिदानन्दं ब्रह्म- भिक्षाटकं शाटीधरं कपालिनं मुण्डिनं वा मन्यते। अतो नास्ति नित्याविक्रियात्मदर्शिनः कर्मकर्तृत्वम्। अविद्वांस्तु आत्मानं भिक्षा-टकं शाटीधरं कपालिनं मुण्डिनं मन्यते- तस्य देहात्मभ्रान्त्यनपगमात्। अतस्तस्यास्ति कर्मकर्तृत्वम्। तस्माद्युक्तमुक्तमज्ञ इति वाक्यशेष इति।

उत्तरार्धेऽन्वयो बहुधा सम्भवति- तथाहि- हि सर्वः अवशस्सन्नेव प्रकृतिजैर्गुणैः कर्म प्रति कार्यते प्रवर्त्यते- अवशः सर्व इति च। सर्वो गुणैः कर्म कार्यत इति द्विकर्मककर्मणि प्रयोग इति च, ण्यन्ता-त्करोतेः कर्मणि तङ्। गुणास्सर्वं कर्म कारयन्तीत्यर्थः। कुर्वाणं प्रेरयति कारयतीति हेतुमण्णिच्। सर्वोपि प्रकृतिजैर्गुणैः प्रेरितस्सर्वोऽप्यवश एव कर्म करोतीति फलितार्थः ॥५॥

कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान्विमूढात्मा मिथ्याचारस्स उच्यते ॥६॥

यस्त्वनात्मज्ञश्चोदितं कर्म नारभत इति तदसदित्याह—कर्मेन्द्रियाणीति । कर्मेन्द्रियाणि हस्तादीनि संयम्य संहृत्य य आस्ते तिष्ठति, मनसा स्मरन् इन्द्रियार्थान् विमूढात्मा विमूढान्तःकरणः मिथ्याचारः मृषाचारः हेयाचारस्स उच्यते ॥६॥

यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन !
कर्मेन्द्रियैः कर्मयोगमसक्तस्स विशिष्यते ॥७॥

य इति । यस्तु पुनः कर्मण्यधिकृतो ज्ञः बुद्धीन्द्रियाणि मनसा नियम्यारभतेऽर्जुन

---

कर्मेन्द्रियाणीति । यो विमूढात्मा कर्मेन्द्रियाणि संयम्य इन्द्रियार्थान् मनसा स्मरन्नास्ते, स मिथ्याचार इत्युच्यते । यस्त्विति तुशब्दादात्मज्ञस्य नास्ति कर्मचोदनेति वैलक्षण्यं द्योत्यते । कर्मेन्द्रियाणीति—भाषणग्रहणगमनविसर्जनमैथुनाख्यानि पञ्च कर्माणि, तत्साधनानीन्द्रियाणि वाक्पाणिपादपायूपस्थानि पञ्च कर्मेन्द्रियाणि । इन्द्रियार्थान् इन्द्रियविषयान् शब्दादीन् मनसा स्मरन्नित्यनेन चक्षुर्निमीलनं श्रोत्रपिधानं च कृतमिति व्यज्यते । अन्यथा चक्षुश्श्रोत्राभ्यां रूपशब्दविषयग्रहणेसति मनसा तत्स्मरणानुपपत्तेः । अनुभवजन्यसंस्कारजन्या हि स्मृतिः । क्वापि कापि विजने स्थित्वा देवालयादौ पत्तनस्थितनेदयारूपगानात्मकौ चक्षुश्श्रोत्रविषयौ विषयौ मनसा स्मरतीति न चक्षुश्श्रोत्रपिधानवसर ।

विमूढात्मेति । अज्ञ इत्यर्थः । ननु यथा प्राज्ञः कर्मेन्द्रियाणि संयम्य विषयानस्मरन् वर्तते, तथा विषयान् स्मरन्नज्ञः कर्मेन्द्रियाणि संयम्य वर्तत इति प्राज्ञाचारवदज्ञाचारोपि यावद्व्यवहार सत्य एवेति कथं मिथ्यात्वमज्ञव्यवहारस्येति शङ्कायामाह—हेयाचार इति । हेयस्त्याज्य आचारो यस्य स तथोक्तः । विदुषामाचारवन्नैषामविदुषामाचारो ग्राह्य इत्यर्थः ।

यत्तु रामानुजः—अन्यथा सङ्कल्प्यान्यथाऽऽचरतीति मिथ्याचार इति, तत्तुच्छम्—नाहं कर्म कुर्वे इति सङ्कल्प्य नैव कर्म कृतवानयमज्ञ इति कथमस्य तादृशमिथ्याचारत्वप्रसङ्गः । नहि मनसा विषयस्मरणं कर्म, येनास्य सङ्कल्पविपरीतस्यादाचार । नच ज्ञानयोगं कुर्वे इति सङ्कल्प्य मनसा विषयस्मरणादस्ति मिथ्याचारत्वमस्येति वाच्यं, अज्ञस्य ज्ञानयोगसङ्कल्पस्यैवासम्भवात् । ज्ञानपूर्वको हि ज्ञानयोगः । किंच नहि कश्चिदित्यारभ्य कर्मयोगस्यैव प्रकृतत्वेन ज्ञानयोगसङ्कल्पस्यात्रासङ्गतत्वात्, यस्त्विन्द्रियाणीति वक्ष्यमाणश्लोके कर्मयोगस्यैवेन्द्रियनियमनपूर्वकं प्रपञ्चितत्वात् ॥६॥

यस्त्विति । हेऽर्जुन यस्तु मनसा इन्द्रियाणि नियम्य असक्तस्सन् कर्मेन्द्रियैः कर्मयोगमारभते स विशिष्यते । तुशब्दार्थमाह—पुनरिति । यच्छब्दार्थमाह—कर्मण्यधिकृतो ज्ञ इति । प्राज्ञ य कर्माधिकाराभावादुक्तमज्ञ इति ।

शब्दस्पर्शादिविषयेभ्यस्सकाशान्निवर्तनीयानीन्द्रियाणि ज्ञानेन्द्रियाण्येवेत्यभिप्रेत्याह—बुद्धीन्द्रियाणीति । त्वक्चक्षुश्श्रोत्रजिह्वाघ्राणाख्यानि पञ्च कर्णपिधानादिना चक्षुरादिव्यापारनिरोध कर्तव्य

कर्मेन्द्रियैः वाक्पाण्यादिभिः । किमारभत इत्याह—कर्मयोगमसक्तस्सन् अफलाकांक्षस्सन् स विशिष्यते इतरस्मात् मिथ्याचारात् ॥७॥

नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ।
शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मणः ॥८॥

यत एवमतः—नियतमिति । नियतं नित्यं यो यस्मिन् कर्मण्यधिकृतः फलाय

---

इति शङ्कानिरासायाह—मनसा नियम्येति । मनसि निष्कामेसति ज्ञानेन्द्रियाणि स्वतएव विषयेभ्यो निवर्तन्त इति भावः । एतेनेन्द्रियजयस्य मनोजयपूर्वकत्ववचनेन मनोजयोऽवश्यं कर्तव्य इति सूचितम्- मनोजयरहितस्य तु मिथ्याचारत्वं पूर्वश्लोक एवोक्तम् । अयं तु आह्याचार इत्याह—स विशिष्यत इति । ज्ञानयोगिनोपि कर्मयोगी उत्कृष्ट इति शङ्कां वारयितुमाह—मिथ्याचारादिति । पूर्वश्लोकोक्तान्मिथ्याचारादयमुत्कृष्ट इत्यर्थः । एतेन ज्ञाननिष्ठाद्विशिष्यत इति रामानुजोक्तं प्रत्युक्तम्—कर्मयोगसाध्यज्ञाननिष्ठात्कर्मयोगनिष्ठस्याल्पत्वस्य सर्वविदितत्वात्- यज्ञसाध्यस्वर्गफलभोक्तु पुरुषात्कथं यज्ञकृद्विशिष्येत, कथं वा ज्ञानसाध्यमुक्तिशालिनः पुरुषाद्ज्ञाननिष्ठो विशिष्येत ।

यदप्यनेनोक्तमसम्भाव्यमानप्रमादत्वेनेति कारणं तदप्ययुक्तम्—यदि कर्मज्ञानयोगौ द्वावपि परस्परनैरपेक्ष्येण निश्श्रेयसकरौ तर्हि सम्भाव्यमानप्रमादाद्ज्ञानयोगादसम्भाव्यमानप्रमादः कर्मयोगो विशिष्येत, न त्वेतदस्ति ज्ञानयोगस्य स्वोत्पत्तिप्रति कर्मयोगसापेक्षत्वात्कर्मयोगस्य च ज्ञानयोगद्वारा निश्श्रेयसकरत्वाच्च । कर्मयोगनिष्पाद्यत्वं ज्ञानयोगस्य तवाप्यभिमतमात्मावलोकनसाधनत्वं च ।

नच कर्मयोगिनात्मावलोकनं चेत्सिसाधयिषितं तर्हि ज्ञानयोगे प्रवेष्टव्यं, मुक्तिश्चेत्सिसाधयिषिता तर्हि कर्मयोगएव यावज्जीवमवस्थातव्यं- ततएव मुक्तिलाभादिति वाच्यं, तथात्वे सप्रमादत्वदुष्कन्निरर्थकज्ञानयोगविधायकस्य शास्त्रस्य भगवतो वाऽप्रमाणत्वापत्तेः । आत्मावलोकनं हि तव मते न पुरुषार्थः- स्वतस्सिद्धत्वादात्मनः । आत्मभिन्नपरमात्मावलोकनात्तत्सारूप्यादिप्राप्तिर्हि तव मते मुक्तिः- तस्माद्व्यर्थमेव ज्ञानयोगविधानम् ।

ननु न व्यर्थमात्मावलोकनस्यपफलत्वादिति चेन्नैवम्—स्वगुचमर्दनतुल्यत्वात्स्वावलोकनस्य । ज्ञानयोगं विनापि कर्मयोगिनो मुक्तिदशायामात्मावलोकनसम्भवाच्च । नच मुक्तौ नास्त्यात्मावलोकनमिति वाच्यं, अपहतपाप्मत्वसर्वज्ञत्वादिगुणाविर्भावान्मुक्तौ जीवाना कथमनात्मज्ञत्वं- मुक्तोऽनात्मज्ञ इति हि विरुद्धम् ।

सिद्धान्ते आत्मावलोकनस्यैव मोक्षत्वान्मुमुक्षुणा कर्मयोगिना सम्पाद्य एवावश्यं ज्ञानयोगः— ज्ञानयोगनिष्पाद्यत्वादात्मावलोकनस्य । अतो न योगान्यतरस्य वैयर्थ्यं, नापि योगयोस्समप्राधान्यं, नापि ज्ञानयोगे प्रमादसम्भावना- कर्मयोगेनैव मन इन्द्रियजयलाभात् । तथाच मिथ्याचारादेव कर्मयोगी विशिष्यते, ज्ञाननिष्ठस्तु कर्मयोगिनो विशिष्यते- यथा पश्वादेर्मनुष्यो मनुष्यादेव । इति ॥७॥

नियतमिति । त्वं नियतं कर्म कुरु हि अकर्मणः कर्म ज्याय । अकर्मण ते शरीरयात्रापि

चाश्रुतं तन्नियतं कर्म, तत् कुरु त्वम् । यतः कर्म ज्यायः अधिकतरं- फलतो हि यस्मादकर्मणः अकरणात् अनारम्भात् । कथं, शरीरयात्रा शरीरस्थितिरपि च ते न प्रसिध्येत् प्रसिद्धिं न गच्छेत् अकर्मणः अकरणात् । अतो दृष्टः कर्माकर्मणोर्विशेषो लोके ॥८॥

---

न च प्रसिध्येत् । किं तन्नित्यमत आह—य इति । यो यस्मिन् कर्मण्यधिकृतस्तस्य तन्नित्यमित्यन्वयः । स्वर्गादिफले दर्शपूर्णमासादावधिकृतस्य तदपि नित्यं स्यादित्याशङ्क्य विशिनष्टि—फलायेति । फलायाश्रुतं फलार्थमश्रुतं- स्वर्गादिफलप्रदत्वेन यन्न श्रुतं तदित्यर्थः । काम्यकर्मभिन्नमिति यावत् । यदकरणे प्रत्यवायश्श्रूयते तत्कर्म नित्यमिति भावः । तत्कुरु त्वमिति । क्षत्रियस्त्वं तु युद्धे कर्मण्यधिकृतः--अतस्तव युद्धकर्म नियतं तदेव त्वं कुर्वित्यर्थः ।

ज्ञानादल्पमपि कर्म अकरणादधिकमेवेत्याह—कर्म ज्यायो ह्यकर्मण इति । हिः प्रसिद्धिमपि गमयति- लोकेखलु अकृतसन्ध्यात्कृतसन्ध्यः, अकृतवैश्वदेवात्कृतवैश्वदेवः, अकृतयज्ञात्कृतयज्ञश्चोत्कृष्ट इति प्रतीतिः । इदमेवाह—अतो दृष्टः कर्माकर्मणोर्विशेषो लोके इति । इदं चाज्ञविषयमेव- प्राज्ञस्य कर्मासम्भवात् । तथाच अकृतविहितकर्मणो जनादज्ञात्कृतविहितकर्मा भवत्यज्ञ उत्कृष्टः, ज्ञानी तु अज्ञात्कर्मिण उत्कृष्ट इति सिद्धम् । शरीरयात्रा शरीरस्थितिर्जीवनमित्यर्थः । प्राणधारणमिति यावत् । अन्नमूलत्वाच्छरीरस्थितेरन्नस्य च कर्ममूलत्वादिति भावः । वक्ष्यत्येतमर्थं'मन्नाद्भवन्ति भूता'नीति श्लोकेन ।

यद्वा यथा लोके क्षुद्राणां पुरुषाणां पश्वादीनां च शरीरस्थितिर्न प्रसिद्धा, तथा तवापीत्यर्थः । यज्ञादेर्युद्धादेर्वा विहितस्योत्कृष्टतमस्य कर्मणः करणाद्धि लोके पुरुषस्य बहुला प्रतिष्ठा । यस्तु शिश्नोदरपरायणः कर्म विहितं न कुरुते तस्य पश्वादिवन्न कापि प्रतिष्ठेति वृथैव तस्य जीवनमिति भावः । अर्जुन इति कश्चिदस्तीति लोके न कोपि प्रतीयादिति तत्त्वम् ।

यत्तु रामानुजः—अकर्मणो ज्ञानयोगात्कर्मैव ज्यायः- ज्ञाननिष्ठस्यापि कर्माकुर्वतो देहयात्रापि न सेत्स्यति- ज्ञाननिष्ठस्यापि यज्ञादिकर्म कर्तव्यं- कर्मयोगेप्यात्मयाथात्म्यानुसन्धानमन्तर्भूतमिति, तत्तुच्छम्—'स्थित्वास्यामन्तकालेपि ब्रह्मनिर्वाणमृच्छती'ति साक्षान्मोक्षहेतुत्वं ज्ञाननिष्ठाया इहैवोक्तम् । 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दती'ति वक्ष्यति चतुर्थाध्याये । किमयं व्याहतार्थाभिधायी भगवानप्रमाणभूतः, येन ज्ञानात्कर्मोत्कृष्टमिति, ज्ञानेन सदृशं किमपि नास्तीति च स्वत एवोक्तवान् ? अहो ! तव पाण्डित्यमहिमा, येन भगवन्तमेवाप्रमाणयसि तद्गीतानामपव्याख्यनकरणद्वारा ।

तथा 'निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषमिति, ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेर्जुनेति, सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसी'ति च भगवता वक्ष्यते चतुर्थाध्याये । ततः कथमयज्ञशिष्टाद्याशनाद्यतेः किल्बिषप्राप्तिः, येन ज्ञाननिष्ठस्य यज्ञादिकर्म कर्तव्यं स्यात् ? सति भिक्षाटने कर्मणि कथं वा तस्य देहयात्राया असिद्धिः ? निवृत्तिलक्षणज्ञानयोगनिष्ठस्य कथं यज्ञादिषु प्रवृत्तिः ? नहि प्रवृत्तिनिवृत्त्योरैक्यं केनापि सम्पादयितुं शक्यम् ।

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गस्समाचर ॥९॥

यच्च मन्यसे बन्धार्थत्वात् कर्म न कर्तव्यमिति तदप्यसत्—कथम्, यज्ञार्थादिति । 'यज्ञो वै विष्णु'रिति श्रुतेः यज्ञ ईश्वरः तदर्थं यत्क्रियते तद्यज्ञार्थं कर्म तस्मात्कर्मणोऽन्यत्र अन्येन कर्मणा लोकोयमधिकृतः कर्मकृत् कर्मबन्धनः कर्मैव बन्धनं यस्य सोऽयं कर्मबन्धनः लोकः, नतु यज्ञार्थात् । अतस्तदर्थं यज्ञार्थं कर्म कौन्तेय मुक्तसङ्गः कर्मफलसङ्गवर्जितस्सन् समाचर निर्वर्तय ॥९॥

सह यज्ञाः प्रजास्सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥१०॥

इतश्चाधिकृतेन कर्तव्यं कर्म —सहेति । सहयज्ञाः यज्ञसहिताः प्रजास्त्रयो वर्णाः ताः

---

फलाभिसन्धिपरित्यागपूर्वककर्माचरणात्मके कर्मयोगे कथमात्मयाथात्म्यानुसन्धानस्यान्तर्भावः ? आत्मयाथात्म्यं हि सच्चिदानन्दत्वाविक्रियत्वाकर्तृत्वाभोक्तृत्वादिरूपम् । सति तदनुसन्धाने कथं कर्मसु प्रवर्तेत पुरुषः ? कथं वा कर्तारमात्मानं मनुयात् ? अकर्त्रात्मज्ञानं हि कर्मभ्यः पुंसो निवर्तकम् । तस्मात्सूर्यस्य तमसीवात्मज्ञानस्य न कर्मण्यन्तर्भावः ।

किंच शास्त्राचार्योपदेशशमदमादिसंस्कृतान्तःकरणसाध्यस्यात्मयाथात्म्यानुसन्धानस्य कथं कर्मविक्षिप्तचित्तसाध्यत्वम् ? ज्ञाननिष्ठोपि निर्व्यवहारसमय एव ह्यात्मयाथात्म्यानुसन्धानं कर्तुं क्षमते । तस्मात्तुच्छं रामानुजभाष्यम् ॥८॥

यज्ञेति । अयं लोकः यज्ञार्थात्कर्मणोऽन्यत्राधिकृतः कर्मकृदिति शब्दद्वयशेषः । कर्मबन्धो भवतीति शेषः । हेकौन्तेय त्वं मुक्तसङ्गस्सन् तदर्थं कर्म समाचर । स्वस्ववर्णाश्रमविहितकर्मानुष्ठानेनेश्वराज्ञायाः परिपालनीयत्वादीश्वराज्ञापरिपालनार्थानि कर्माणि विहितानीश्वरार्थानीत्युच्यन्ते, नत्वेभ्य कर्मभ्य ईश्वरस्य कोप्यर्थः- तस्य परिपूर्णत्वेनावाप्तसमस्तकामत्वात् इत्यभिप्रेत्याह—तदर्थमिति, अन्यत्रेति । सकामे कर्मणीत्यर्थः । ईश्वरार्थे यज्ञादिकर्मणि क्रियमाणे स्वर्गादिफलाभावाद्देवादिजन्मरूपो बन्धो नास्ति पुरुषस्य अन्यत्र तु फलानुभवार्थं जन्म स्वीकर्तव्यमित्यस्ति बन्ध इति भावः । तदर्थमित्यत्र तच्छब्दः प्रकृतयज्ञपरामर्शीत्याह—यज्ञार्थमिति । तस्मा इदं तदर्थमिति नित्यसमासः ।

यत्तु रामानुजः—यज्ञार्थायज्ञादिशास्त्रीयकर्मशेषभूतद्रव्यार्जनादेः कर्मणोऽन्यत्रात्मीयप्रयोजनशेषभूते कर्मणि क्रियमाण इति, तत्तुच्छम्—यज्ञार्थादित्यादिशब्दाभावाद्यज्ञशब्दस्योपलक्षणत्वाभ्युपगमस्य चान्याय्यत्वात् । प्रधानकर्मणोऽबन्धकत्वेनैव तच्छेषकर्मणोऽबन्धकत्वस्य सिद्धौ तदर्थं पुनर्वचनस्यायुक्तत्वात्, यज्ञार्थात्कर्मणोन्यत्कर्म यज्ञोपि भवत्येवेति यज्ञस्यापि बन्धकत्वापत्तेः ।

युद्धाय सन्नद्धं तत्तो निश्चायार्जुनाय युद्धं कुर्विस्येवोपदेष्टुमुचितत्वेन युद्धार्थं द्रव्यार्जनं कर्म कुर्विस्युपदेशस्यानुचितत्वात्पिष्टपेषणं हि तत् । इत प्रागेवानेन युद्धसम्भारसम्पादनस्य कृतत्वात् ॥९॥

सहेति । पुरा प्रजापतिः सह यज्ञाः प्रजाः सृष्ट्वा अनेन प्रसविष्यध्वम् । एष वः इष्टकामधु-

सृष्ट्वा उत्पाद्य- पुरा सर्गादौ उवाच उक्तवान् प्रजापतिः- प्रजानां स्रष्टा । अनेन यज्ञेन प्रसविष्यध्वं प्रसवो वृद्धिरुत्पत्तिः तां कुरुध्वं- एष यज्ञः वः युष्माकं अस्तु भवतु इष्टकामधुक्—इष्टानभिप्रेतान् कामान् फलविशेषान् दोग्धीति इष्टकामधुक् ॥१०॥

देवान् भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥११॥

कथं, देवानिति । देवान् इन्द्रादीन् भावयत वर्धयतानेन यज्ञेन ते देवाः वर्धिताः भावयन्तु वृष्ट्यादिना आप्याययन्तु वः युष्मान् । एवं परस्परं भावयन्तः परं विज्ञानप्राप्तिक्रमेणावाप्स्यथ स्वर्गं वा परं श्रेयोवावाप्स्यथ ॥११॥

इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्ता न प्रदायैभ्यो यो भुंक्ते स्तेन एव सः ॥१२॥

किंच- इष्टानिति । इष्टान् अभिप्रेतान् भोगान् हि वो युष्मभ्यं देवाः दास्यन्ते वितरिष्यन्ति स्त्रीपशुपुत्रादीन् । यज्ञभाविताः यज्ञैर्विवर्धिताः तोषिता इत्यर्थः । तैर्देवैर्दत्तान् भोगान्

---

गस्तु इत्युवाच । इतश्चेति । यज्ञद्वारा देवमनुष्ययोरुपकार्योपकारकभावसत्त्वाददेवयजिनश्चोरत्वादयज्ञशिष्टान्नाशनस्य किल्बिषहेतुत्वाद्यज्ञशिष्टान्नाशनस्य किल्बिषमोचकत्वाच्चेत्यर्थः । प्रजापतिर्ब्रह्मा । अनेन प्रसविष्यध्वमिति । अनेनेति करणे हेतौ वा तृतीया । सुकृतमिति शेषः । प्रसवशब्दार्थमाह—वृद्धिरिति । अन्यार्थमाह—उत्पत्तिरिति । सुकृतं वर्धयध्वमुत्पादयध्वमिति वाऽर्थः ।

यत्तु रामानुजः—आत्मनो वृद्धिं कुरुध्वमिति, तदसत्—आत्मनः वृद्धिक्षयादिविक्रियारहितत्वात् ॥१०॥

देवानिति, कथमिति । यज्ञस्य कथमिष्टकामधुक्त्वमित्यत आहेत्यर्थः । ननु देवानां कथं यज्ञेन वृद्धिरिति वाच्यं, देवानाममृताशित्वादमृतं वै घृतमिति घृतस्यामृतत्वाद्यज्ञे च देवेभ्योऽग्नौ घृतस्य दीयमानत्वाच्चेति । वृष्ट्यादीत्यादिपदात्पशुपुत्रादिग्रहणम् । आप्याययन्तु वर्धयन्तु आनन्दयन्त्विति वा । परं श्रेयो मोक्षम् । ननु कथं कर्मणा मोक्षोऽत आह—विज्ञानप्राप्तिक्रमेणेति । चित्तशुद्धिद्वारेति भावः । यज्ञादिकर्मणां देवभावनमवान्तरफलं, प्रधानफलं तु चित्तशुद्धिज्ञानप्राप्तिद्वारा निःश्रेयसमिति तत्त्वम् । एवं निष्कामानां गतिं प्रदर्श्य सकामानां गतिं प्रदर्शयति—स्वर्गं वेति । परं श्रेय इत्यस्य स्वर्गमिति वाऽर्थ इत्यर्थः । अवाप्स्यथ प्राप्स्यथ ॥११॥

इष्टानिति । देवाः यज्ञभावितास्सन्तः वः इष्टान्भोगान् दास्यन्ति । यः तैर्दत्तान् भोगानेभ्यः अनर्पाय भुंक्ते सः स्तेनएव । ननु देवदत्तभोगान् स्त्रीपशुपुत्रादीन् कथं देवेभ्यो दातुं शक्यमत आह—आनृण्यमकृत्वेति । स्त्रीयासहाग्नौ घृताहुतिप्रक्षेपणेन स्वस्याशक्तौ पुत्रेण तत्प्रक्षेपणेन च स्त्रीपशुपुत्रभोगसमर्पणरूपमानृण्यं जायते पुंसः । पुरोडाशप्रदानेन च व्रीहिभोगसमर्पणरूपमित्येवं ज्ञेयम् ।

अस्त्रीकस्यापुत्रस्य च यज्ञेऽधिकाराभावादुक्तम्—स्त्रीपुत्रेति । क्षीराज्याभावे होमाद्यसम्भवादाह—पश्विति । पशुश्चात्र गौरेव न महिष्यादिः, अपवित्रत्वादिति बोध्यम् ।

अप्रदाय अदत्त्वा आनृण्यमकृत्वेवेत्यर्थः। एभ्यो देवेभ्यः यो भुंक्ते स्वदेहेन्द्रियाण्येव यस्तर्पयति स्तेन एव तस्कर एव सः देवादिस्वापहारी ॥१२॥

यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः ।
भुंजते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥१३॥

ये पुनः यज्ञशिष्टाशिन इति देवयज्ञादीनि निर्वर्त्य तच्छिष्टमशनममृताख्यमशितुं शीलं येषां ते यज्ञशिष्टाशिनस्सन्तो मुच्यन्ते सर्वकिल्बिषैः सर्वैः पापैः चुल्यादिपञ्चसूनाख्यैः प्रमादकृतहिंसादिजनितैश्च । तद्यथा- कुट्टनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्चसूना

---

इमां स्त्रियमिमं पुत्रमिमां गामिदं व्रीह्यादिकं च गृहीत्वा भोद्विजाः देवानस्मान्यज्ञादिभिर्भावयतेति देवा द्विजेभ्यः स्त्रीपशुपुत्रधान्यादिकान् भोगान्ददुः, यस्तु तथा देवांस्तैस्तर्पयति स यथोक्तकारी बुद्धिमानेव- यस्तु तान् स्वयं केवलं भुंक्ते स स्तेन एव । ननु कथं स्त्रीपश्वादीनां भोजनं घटेतेत्यत आह---स्वदेहेन्द्रियाण्येव तर्पयतीति । मैथुनक्षीराज्यपानादिभिरिति भावः । कथमस्य स्तेनत्वमत आह---देवादिस्वापहारीति । देवादिधनापहारित्वादुक्तस्य चोरत्वमित्यर्थः । देवैः स्त्र्यादीनां स्वयज्ञार्थे दत्तत्वेन द्विजसम्बन्धितया प्रतीयमानाः स्त्र्यादयो भोगाः देवसम्बन्धिन एवेति कृत्वा देवसम्बन्धिभोगानां स्वसम्बन्धीकरणाद्द्विजस्य चोरत्वम् । यथा देवदत्तसम्बन्धिवस्त्रस्य स्वसम्बन्धीकरणाद्यज्ञदत्तस्य चोरत्वं तद्वदिति भावः । ननु यदा देवैर्भोगा दत्तास्तदैव देवानां तेषु भोगेषु स्वामित्वं नष्टं, स्वत्वनिवृत्तिपूर्वकपरकीयत्वानुकूलव्यापारो हि दानम् । तस्मात्कथं स्त्र्यादीनां देवसम्बन्धित्वमितिचेत्, नैवम्---यथा अपुत्रः कन्यादानसमये अस्यां यो जायते पुत्रस्स मे पुत्रो भविष्यतीति सङ्कल्पपूर्वकं कन्यां कस्मैचिद्दत्वापि तत्पुत्रे स्वाम्यं प्रतिपद्यते तद्वद्देवा अपि यज्ञार्थे स्त्र्यादीन् तुभ्यं ददाम इति सङ्कल्पपूर्वकं द्विजाय स्त्र्यादीन्दत्तवन्तः कथन्तत्र स्वाम्यं न प्राप्नुयुः- अपितु प्राप्नुयुरेव, सङ्कल्पाधीनत्वाद्दानवैचित्र्यस्येति ॥१२॥

यज्ञेति । यज्ञशब्दोऽत्र ब्रह्मयज्ञदेवयज्ञपितृयज्ञमनुष्ययज्ञभूतयज्ञाख्यपञ्चयज्ञपरः । सर्वशब्दस्वारस्यादाह---प्रमादेति, कुट्टनीति । गृहस्थस्य कुट्टन्यादयः पञ्चसूनाः पञ्च हिंसास्सन्ति, ताभिर्हेतुभिः गृहस्थस्स्वर्गं न गच्छति । कुट्टनी- उलूखले धान्यं निक्षिप्य मुसलेनावहननसमये कीटादिनाशसम्भवाज्जन्या सूना कुट्टनीत्युच्यते, घरट्टोपलाभ्यां धान्यस्य पेषणसमये जाता सूना पेषणीत्युच्यते, चुल्ली- चुल्ल्यां काष्ठानि निक्षिप्य तत्राग्निं संयोज्य ओदनादिपचनसमये कीटादिनाशजन्या सूना चुल्ली, उदकुम्भी कुम्भेन जलाहरणसमये जाता सूना जले पादप्रवेशादिना कुम्भनिक्षेपेण च क्षुद्रजन्तुनाशसम्भवात्, मार्जनी--मार्जन्या गृहभूमेर्मार्जनसमये जाता कीटादिनाशसूना मार्जनीत्युच्यते ।

यद्यप्येतास्सूना न गृहस्थेन क्रियन्ते, किंतु तत्पत्न्यैव, तथापि पत्नीकृतपाकसंक्रान्तास्ताः तदन्नभोजनाद्गृहस्थेऽपि संक्रामन्ति । यद्वा भर्त्रा चोदितैव भार्या ताः करोतीति भर्तारं प्रेरकं संक्रामन्ति । अथवा भर्तृभार्ययोरेकात्मकत्वात् । वस्तुतस्तु भर्त्रर्थमेव भार्या पाकं करोतीति सूना भर्तुरेव । भार्यायास्तु

गृहस्थस्य ताभिस्स्वर्गं न गच्छति ॥' अन्येत्वात्मम्भरा ये भुञ्जते ते त्वघं पापं स्वयमपि पापा ये पचन्ति पाकं निर्वर्तयन्ति आत्मकारणात् आत्महेतोः ॥१३॥

अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः ।
यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥१४॥

इतश्चाधिकृतेन कर्म कर्तव्यं- जगच्चक्रप्रवृत्तिहेतुर्हि कर्म। कथमित्युच्यते--अन्नादिति। अन्नात् भुक्ताल्लोहितरेतःपरिणतात् प्रत्यक्षं भवन्ति जायन्ते भूतानि, पर्जन्यात् वृष्टेरन्नस्य

भर्तृभुक्तावशिष्टपाकाशनान्न दोष इति। एतास्तु पञ्चसूना वैश्वदेवाख्यान्नित्यकर्मणो निवर्तन्त इति धर्मशास्त्रम्। ननु कथं पञ्चसूनानिवर्त्यपकान्नस्य यज्ञशेषीकरणमात्रेण किल्बिषनाशकत्वमिति चेदुच्यते— प्रत्यहं देवार्थमेव पाकः कार्यः, न तु स्वार्थमिति विधौ स्थिते देवार्थं पाकाकरणस्य दुष्टत्वाद्धिंसाप्रायोऽपि पाको देवार्थं कर्तव्य एव, यथा हिंसात्मकोऽप्यग्निष्टोमः विहितत्वात्कर्तव्यः। स्वार्थं पाकस्तु स्वार्थं पशुविशसनवद्दुष्ट एव। पञ्चसूनानिवर्त्यमपि देवार्थं पक्वान्नं पुण्यमेव विहितत्वाद्धिंसानिर्वर्त्ययज्ञपशुमांसवदिति सिद्धम्। एवंसति देवयज्ञावशिष्टस्यान्नस्य शास्त्रादायातं पुण्यत्वं लोकतश्च देवार्थं कृतत्वात्पाकस्य तत्सम्बन्धिदोषाणां न यजमानगामित्वमिति सिद्धम्।

ये तु देवार्थं न पचन्ति, किंतु स्वार्थमेव ते पापिन एवेत्याह—अन्येत्विति। अन्ये तु अयज्ञशिष्टाशिनस्त्वित्यर्थः। अस्यैव फलितमाह—आत्मम्भरा इति। स्वकुक्षिम्भरा इत्यर्थः। स्वयमपीति स्वत एवेत्यर्थः। अन्नभोजनात्प्रागपीति यावत्- पापवशादेवैतेषां यज्ञाकरणे बुद्ध्युदयादिति भावः। आत्महेतोः स्वकुक्षिपूरणार्थमित्यर्थः।

कुक्षिपूरणं येन केनाप्यन्नेन जायत एव यज्ञशिष्टान्नेन तु पापनिवृत्तिः अयज्ञशिष्टेन स्वार्थं पक्वेनान्नेन तु पापसञ्चयनमित्येतावानेव भेदः, ततश्चैहिकं कुक्षिपूरणं आमुष्मिकं पुण्यं च यस्माद्भवति तदेव यज्ञशिष्टान्नं द्विजैः पापभीरुभिर्भोक्तव्यमित्यवश्यं कर्तव्यं यज्ञाख्यं कर्म ॥१३॥

अन्नादिति, इतश्चेति। जगच्चक्रप्रवृत्तिहेतुत्वात्कर्मण इत्यर्थः। अन्नाद्भूतानि जायन्त इति श्रुतेराह- भगवान्—अन्नाद्भवन्ति भूतानीति। ननु पात्रादिस्थादन्नाद्भूतान्युत्पद्यमानानि न दृश्यन्ते, नापि श्रूयन्त इति मूलकर्तुः प्रसक्तमाक्षेपं वारयति भाष्यकर्ता—भुक्तादिति। ननु भुक्तादप्यन्नात्पुरीषादिरूपान्न भूतोदय इति शङ्कायामाह—लोहितरेतःपरिणतादिति। स्त्रीभिर्भुक्तं सल्लोहितरूपेण पुम्भिर्भुक्तं सद्रेतोरूपेण च यत्परिणतमन्नं तस्मादन्नादित्यर्थः। प्रत्यक्षमिति। स्त्रीपुरुषसंयोगाज्जरायुजाण्डजात्मकभूतोत्पत्तेः प्रत्यक्षत्वादित्यर्थः। प्रत्यक्षं यथा तथेति क्रियाविशेषणम्। भवन्तीति प्रत्यक्षमिति वा अन्वयः। मनुष्येषु पश्वादिषु चेति भावः। भूतानि प्राणिनः न त्वात्मा तस्याजत्वात्- देहा इति यावत्।

पर्जन्यशब्दो मेघवाची तत्कार्यं वर्षं लक्षयति वृष्टेरन्नमिति स्मृत्यनुसारादित्याह—वृष्टेरिति। व्रीह्यादिमयस्यान्नस्य वृष्टिंविनाऽनुत्पत्तेरिति भावः। नच नदीजलादन्नसम्भव इति वाच्यं, तस्यापि वर्षा-

सम्भवः अन्नसम्भवः, यज्ञाद्भवति पर्जन्यः। 'अग्नौ प्रास्ताहुतिस्सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजा' इति स्मृतेः। यज्ञोऽपूर्वं स च यज्ञः कर्मसमुद्भवः ऋत्विग्यजमानयोश्च व्यापारः कर्म तस्मात्समुद्भवो यस्य यज्ञस्य अपूर्वस्य स यज्ञः कर्मसमुद्भवः ॥१४॥

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।
तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥१५॥

कर्मेति। कर्म ब्रह्मोद्भवं ब्रह्म वेदः स उद्भवः प्रकाशको यस्य तत्कर्म ब्रह्मोद्भवं विद्धि जानीहि। ब्रह्म पुनर्वेदाख्यं अक्षरसमुद्भवं अक्षरः परमात्मा समुद्भवो यस्य तदक्षरसमुद्भवं ब्रह्म वेद इत्यर्थः। यस्मात्साक्षात् परमात्माख्यादक्षरात् पुरुषात् श्वासवत् समुद्भूतं ब्रह्म तस्मात्सर्वार्थप्रकाशकत्वात् सर्वगतमपि सन्नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम् ॥

धीनत्वात्- नहि ग्रीष्मे नद्यां जलं विद्यते, विद्यमानमप्यल्पमेव हि। प्रास्तेति। निक्षिप्तेत्यर्थः। प्रपूर्वकादसुगतिक्षेपणयोरिति धातोः कर्मणि क्तः। प्रकर्षेणास्ता प्रास्ता। अपूर्वमिति। कर्तृनिष्ठो धर्मस्सुकृतपर्याय·, येनैव स्वर्गादिफलप्राप्तिर्यजमानस्य। कथमन्यथा इहैव समाप्तिसमकालदव नष्टस्य कर्मणो यज्ञस्य जन्मान्तरीयस्वर्गादिफलजनकत्वं स्यात्। व्यापार इति। होमादिरूपः लौकिकैः वैश्चिद्वैदिकैश्च यज्ञत्वेन व्यवह्रियमाण इति भावः ॥१४॥

कर्मेति। 'ब्रह्म वेदस्तपस्तत्त्व'मिति कोशादाह—ब्रह्म वेद इति। मृद्घटयोरिव ब्रह्मजगतोरिव वा वेदकर्मणोः कार्यकारणभावाभावादाह—प्रकाशक इति। प्रतिपादक इत्यर्थः। इदमित्थं कर्तव्यमिति बोधयतीत्यर्थः। समुद्भव इति सम्यगुद्भवत्यस्मादिति समुद्भव.। प्रकृतिरुपादानमिति यावत्। श्वासवदिति। 'तस्य महतो भूतस्य निश्वसितमेतदृग्वेद' इति श्रुतेः ब्रह्मणस्सकाशाद्वेदा अप्रयत्नेन जाता इत्यर्थः। श्वासवेदयोरप्रयत्नजन्यत्वरूपं साधर्म्यमस्तीति भाव। तस्माच्छब्दार्थमाह—सर्वार्थप्रकाशकत्वादिति। सर्वार्थप्रकाशकत्वं च वेदस्य सर्वावभासकचैतन्यजन्यत्वप्रयुक्तमिति बोध्यम्। यद्वा तस्मादित्यस्य परमात्मनस्समुद्भूतत्वादित्येवार्थः। कथं वेदस्य सर्वगतत्वमित्यत आह—सर्वार्थप्रकाशकत्वादिति। सर्वार्थप्रकाशकत्वरूपं सर्वगतत्वं वेदस्यास्तीत्यर्थ.। ननु ब्रह्मान्यस्य सर्वस्यानित्वात्कथं नित्यत्वं वेदस्येत्यत आह—नित्यं सदेति। यावद्व्यवहारमित्यर्थः। यज्ञे कथं वेदस्य प्रतिष्ठितत्वमत आह—यज्ञविधिप्रधानत्वादिति। यज्ञविधिरेव प्रधानं प्रतिपाद्यं यस्य स यज्ञविधिप्रधानः तत्त्वात् इति।

यत्तु रामानुजः—यज्ञः कर्मसमुद्भवः द्रव्यार्जनादिक्रियासाध्यः, कर्म ब्रह्मोद्भवं शरीरजातं, ब्रह्म अक्षरसमुद्भवं जीवजातमन्नपानादिना तृप्ताक्षराधिष्ठितं शरीरं कर्मणे प्रभवतीति- सर्वगतं सर्वाधिकारिगतं शरीरं ब्रह्म नित्यं यज्ञे प्रतिष्ठितं यज्ञमूलमित्यर्थः। इति, तन्मन्दम्—यज्ञस्यैव क्रियारूपत्वेन क्रियासाध्यत्वायोगात्। नहि क्रियया क्रिया साध्यते, किंतु फलादिकमेव। यद्यपूर्वात्मको यज्ञ इह विवक्षितः तर्हि स न द्रव्यार्जनादिक्रियासाध्यः, किंतु ऋत्विग्यजमानव्यापाररूपक्रियासाध्य एव। ब्रह्मशब्दस्य च

एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ।
अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥१६॥

एवमिति । एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं नानुवर्तयति इह लोके यः कर्मण्यधिकृतस्सन् अघायुः अघं पापं यस्यायुर्जीवनं सोऽघायुः पापजीवन इति यावत् । इन्द्रियारामः इन्द्रियैरारमण आक्रीडा विषयेषु यस्य स इन्द्रियारामः मोघं वृथा हेपार्थ ! स जीवति । तस्मात् अधिकृतेन अज्ञेन कर्तव्यमेव कर्मेति प्रकरणार्थः ।

---

शरीरे प्रयोगोऽप्रसिद्धः- मम योनिर्महद्ब्रह्मेति प्रकृतौ प्रयोगसत्त्वेपि न शरीरप्रयोगसिद्धिः । प्रकृतेर्ब्रह्मत्वात्त कार्यमपि ब्रह्मैवोपचारादिति वचनं तु लक्षणामूलत्वादुपेक्ष्यं-- प्रकृतेर्ब्रह्मशब्दवाच्यत्वमेव तावल्लक्षणया निर्वाह्यं, किं पुनर्वक्तव्यं शरीरस्य ब्रह्मशब्दवाच्यत्वम् । शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नर इति वक्ष्यमाणत्वात्कथं शरीरमात्रप्रभवत्वं कर्मणः । अन्नपानादिना तृप्तजीवेत्युक्तिरयुक्ता- जीवस्याभोक्तृत्वादिना तृप्त्ययोगात् । प्राणादीनामेव हि तृप्तिः । यदि जीवस्यान्नादिना तृप्तिस्तर्हि तदभावेन शोकादिरपि स्यात्, नचैतद्युक्तमविक्रिये सच्चिदानन्दमये जीवे ।

यद्ययं जीवः कर्ता भोक्ता विज्ञानात्मा नतु सच्चिदानन्दरूप इत्युच्येत, तर्हि नासावक्षरः, किंतु क्षरएव- कर्तृत्वादिविकारवत्तोऽनित्यत्वात् । नहि लोके विक्रियमाणं वस्तु नित्यं दृष्टम्-- घटादिरूपेण विक्रियमाणस्य मृदादिद्रव्यस्यापि प्रलये न.तद्दर्शनात् । सर्वगतमित्यस्य सर्वाधिकारिगतमित्यर्थोप्ययुक्तः- अधिकारिविषयसंकोचासहत्वात्सर्वशब्दस्य, अनधिकारिपश्वादिशूद्रादिशरीरस्यापि यज्ञमूलत्वेन तस्य तदसिद्धेश्च ।

यद्येतद्दोषपरिहाराय सर्वजीवगतमित्युच्येत, तदप्ययुक्तं- मत्स्यादिशरीराणामयज्ञमूलत्वात्- नहि समुद्रगतमत्स्यादयो वर्षफलितव्रीह्यादिना जीवन्ति इति ॥१५॥

एवमिति । इह एवमीश्वरेणेति शेषः । प्रवर्तितं चक्रं यः नानुवर्तयति हेपार्थ अघायुरिन्द्रियारामस्स मोघं जीवति । एवंशब्दार्थमाह—वेदयज्ञपूर्वकमिति । वेदयज्ञौ पूर्वौ यस्मिन् तद्वेदयज्ञपूर्वकं यथोक्तया वेदयज्ञाभ्यां सहेत्यर्थः । प्रवर्तितं सृष्टमिति यावत् । किं तच्चक्रमत आह—जगच्चक्रमिति । चक्रवद्भ्रमणशालित्वाज्जगतश्चक्रत्वव्यपदेशः । नानुवर्तयतीति जगच्चक्रस्यानुवर्तनंनाम वेदाध्ययनपूर्वकं तदर्थानुष्ठानद्वारा जगति यथा कर्मिणो वर्तन्ते तथा वर्तनमित्यर्थः । यच्छब्देन सन्यासिग्रहणं मामूदित्याह—कर्मण्यधिकृत इति ।

आयुरिति । शरीरे प्राणवायुसञ्चार आयुः यस्य शरीरे प्राणवायुसञ्चारः पापायैव भवति, स उच्यतेऽघायुरिति । तदेवाह—पापजीवन इति । पापसञ्चयनजीवित इत्यर्थः । आराम इति ! आङ्पूर्वकाद्रमतेर्भावे घञ् इत्यभिप्रेत्याह—आक्रीडेति । अरण्येनोद्यान इव इन्द्रियैर्विषयेषु यः क्रीडति स इन्द्रियाराम इत्यर्थः ।

प्रागात्मज्ञाननिष्ठायोग्यताप्राप्तेस्तादर्थ्येन कर्मयोगानुष्ठानमधिकृतेन अनात्मज्ञेन कर्तव्य मित्येतत्, 'न कर्मणामनारम्भा दि'त्येतदारभ्य 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण' इत्येतदन्तेन प्रतिपाद्य 'यज्ञार्थात्कर्मणोन्यत्रे'त्यादिना 'मोघ पार्थ स जीवती'त्येतदन्तेन ग्रन्थेन प्रासङ्गिकमधिकृतस्यानात्मविदः कर्मानुष्ठाने बहु कारणमुक्तं, तदकरणे च दोषसङ्कीर्तनं कृतम् ॥१६॥

यदि कर्म कर्तव्य तदज्ञेनेति किं विशेष्यते, ज्ञानिनापि कर्तव्यमेवेत्यत्रोक्तमनुवदति—प्रागिति, तादर्थ्येनेति। तदर्थमेव तादर्थ्यं तेन ज्ञाननिष्ठायोग्यताप्राप्त्यर्थमित्यर्थः। अनात्मज्ञेन कर्मयोगानुष्ठानं कर्तव्यमित्येतत्प्रतिपाद्येत्यन्वयः।

अत्राह रामानुजः—अन्नाद्भूतशब्दनिर्दिष्टानि सजीवानि शरीराणि, पर्जन्यादन्नं, यज्ञात्पर्जन्यः, यज्ञश्च कर्तृव्यापाररूपात्कर्मणः, कर्म च सजीवाच्छरीरात्सजीवं शरीरं पुनरन्नादित्यन्योन्यकार्यकारणभावेन चक्रवत्परिवर्तमानमिति। इन्द्रियारामः—इन्द्रियाण्येवारामोद्यानानि भवन्तीति ज्ञानयोगादौ यतमानोपि निष्फलप्रयत्नतया मोघं पार्थ स जीवतीति च। तदेतत्सर्वमविचारितरमणीयम्—तथाहि—कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवमित्यत्र शरीरात्कर्म शरीरं जीवाच्चोद्भूतमित्युक्तं प्रागनेनैव। इदानीं तु कर्म सजीवाच्छरीरात्सजीवं शरीरं पुनरन्नादित्युच्यते। कथमिदं न व्याहतम्? कथं वा त्वन्मतरीत्यापि मूलादिदमर्थलाभः।

अन्नाद्भवन्ति भूतानीत्यत्र यथा भूतशब्दस्सजीवशरीरवाची, तथा कर्म ब्रह्मोद्भवमित्यत्र किं ब्रह्मशब्दः सजीवशरीरवाची? उताजीवशरीरवाची? नाद्यः ब्रह्माक्षरसमुद्भवमित्यक्षरशब्दवाच्यसजीवशरीरात्सजीवशरीरस्योत्पत्तिरिति व्याघातात्। नह्येकमेव कार्यं कारणं च भवितुमर्हति। नचाक्षरशब्दः केवलजीववाचीति वाच्यं, केवलजीवात्सजीवशरीरसमुद्भव इत्यपि व्याघातात्। कारणजीवात्कार्यजीवस्य भेदाभावात्। न द्वितीयः अजीवशरीरात्कर्मोदयासम्भवात्। सजीवं हि शरीरं कर्मणि प्रभवत इति सम्प्रतिपन्नम्। किंच सजीवशरीरो जात इत्यनेन जीवस्यापि जन्म सिद्धम्। तच्चायुक्तं अजो नित्य इत्यादिविरोधात्।

अत एवेह न चक्रत्वमप्युपपद्यते अक्षरस्य जीवस्य देहकारणस्य कुतश्चिदुत्पत्त्यश्रवणादुत्पत्त्यसम्भवाच्च उत्पत्तौ सत्यां नाशसम्भवेनाक्षरत्वायोगाच्च अक्षरत्वं ह्यविनाशित्वं 'जातस्य हि ध्रुवो मृत्यु'रिति जातस्य मृत्युव्यभिचाराभावाच्च। ब्रह्माक्षरसमुद्भवमित्येतस्याभावे तु चक्रत्वमुपपद्येत, भूतब्रह्मशब्दयोरेकार्थवाचित्वादन्नाद्भूतानि भवन्ति तद्ब्रह्म पुनरन्नाद्भवतीति। नच तथैवास्त्विति वाच्यं, मूलच्छेदपाण्डित्यप्रकर्षापत्तेस्तव।

ननु भूतब्रह्माक्षरशब्दास्त्रयोपि सजीवशरीरवाचिन एव तत्र ब्रह्मवाच्यस्य सजीवशरीरस्य पुत्रस्य अक्षरशब्दवाच्यात्सजीवशरीरात्पितुस्समुद्भव इत्यदोष इतिचेत्, नैतदपि युक्तम्—यथा पितृदेहात्पुत्रदेहस्समुद्भवति तथा पितृदेहोपि पितामहदेहात्समुद्भवतीति कृत्वा अक्षरशब्दवाच्यस्य पितृदेहस्य पुन-

एवंस्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयम्? आहोस्वित्पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामात्मविदो ज्ञानयोगेनैव निष्ठामात्मविद्भिः साङ्ख्यैरनुष्ठेयां प्राप्तैरेवेत्येतमर्थमर्जुनस्य प्रश्नमाशङ्क्य स्वयमेव शास्त्रार्थस्य विवेकप्रतिपत्त्यर्थं एवं वैतमात्मानं विदित्वा निवृत्तमिथ्याज्ञानास्सन्तो ब्राह्मणा मिथ्याज्ञानवद्भिरवश्यकर्तव्येभ्यः पुत्रैषणादिभ्यो व्युत्थायाथ भिक्षाचर्यं शरीरस्थितिमात्रप्रयुक्तं चरन्ति न तेषामात्मज्ञाननिष्ठाव्यतिरेकेणान्यत्कार्यमस्तीत्येवं श्रुत्यर्थमिह गीताशास्त्रे प्रतिपिपादयिषितमाविष्कुर्वन्नाह-- भगवान् ।

यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ।
आत्मन्येव च सन्तुष्टस्तस्य कार्यं न विद्यते ॥१७॥

---

त्वात्समुद्भवाभावात् । नचान्नाद्भवन्ति भूतानीत्यत्रापि अन्नादन्नमयात्पितृदेहाद्भूतानि पुत्रदेहास्सम्भवन्तीत्यर्थ इति वाच्यं, ब्रह्माक्षरसमुद्भवमित्यनेन पौनरुक्त्यात् । नच ब्रह्माक्षरसमुद्भवमित्येतत्पुनरुक्तमपि चक्रत्वोपपादकमित्यदोष इति वाच्यं, चक्रत्वोपपादाय कर्म भूतोद्भवं विद्धि भूतमक्षसमुद्भवमिति स्वपदेनैव वक्तव्यत्वात्- स्वपदेन पर्यायपदेन वा वचनं विनापि अन्नाद्भूतानि भवन्ति, कर्म भूतोद्भवमित्येतावन्मात्रेणैव चक्रत्वस्य स्फुटं प्रतीयमानत्वाच, तस्माद्भूतब्रह्माक्षरशब्दानां नैकार्थत्वमुचितं- भिन्नार्थत्वे तु न त्वदभीष्टचक्रत्वसिद्धिः ।

तथा इन्द्रियाराम इत्यत्र इन्द्रियाणां करणानामारामस्वरूपणं च विरुद्धम्—विहारस्थानं ह्यारामः न तु विहारकरणं- प्रकृते विहारस्थानं विहारविषयाश्शब्दादय एव । तस्माच्छब्दादिष्वेवारामत्वरूपणमुचितम् । नच विषयभोगैकरतिर्भवतीति फलितार्थं उक्तोऽस्माभिरिति वाच्यं, ऋजुमार्गं विहाय वक्रपथाश्रयणस्यान्याय्यत्वात् ।

तथा ज्ञानयोगादौ यतमानोऽपि निष्फलप्रयत्नतया मोघं जीवतीत्यप्ययुक्तम्—ज्ञानयोगे यतमानस्य सन्न्यासिनः यज्ञानुष्ठानाधिकाराभावात् । यद्यस्य विहितं स हि तदननुष्ठानेन व्यर्थजीवनः ज्ञानयोगिनस्तु ज्ञानमेव विहितं न हि कर्मेति कथं तस्य कर्मानाचरणाद्व्यर्थजीवनत्वप्रसङ्गः । नचेन्द्रियारामत्वं सन्न्यासिनो व्यर्थजीवनत्वापादकमिति वाच्यं, असन्न्यासिविषयत्वादेतत्प्रकरणस्य, यस्त्वित्यादिश्लोकद्वयेन सन्न्यासिप्राज्ञस्य कर्माभावस्य वक्ष्यमाणत्वाच ॥१६॥

एवमिति । यद्यपि कर्मणि उद्दिश्यैवोक्त'मेवं प्रवर्तितं चक्र'मिति प्रकरणादिना सुज्ञेयं, तथापि मन्दमतीनां नायं विवेकस्सुलभ इत्यभिप्रेत्य भगवान् स्वयमेव तद्विभागं दर्शयतीत्याह—किमित्यादिना । एवमीश्वरेण प्रवर्तितं जगच्चक्रं किं सर्वेणानुवर्तनीयम्? यद्वा पूर्वोक्तकर्मयोगानुष्ठानोपायप्राप्यामात्मविद्भिस्साङ्ख्यैरनुष्ठेयां ज्ञानयोगेनात्मविदो निष्ठामप्राप्तैरनात्मविद्भिरेवानुवर्तनीयमिति विकल्पः । श्रुत्यर्थमिति । 'एवं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ती'ति श्रुतिः पुत्रैषणादिभ्यो व्युत्थायेति पुत्रैषणादिकं त्यक्त्वेत्यर्थः । प्रतिपिपादयिषितमिति श्रुत्यर्थविशेषणं, प्रतिपिपादयितुमिष्टं प्रतिपादयिषितम् ।

य इति । यस्तु साङ्ख्यः आत्मज्ञाननिष्ठः आत्मरतिः आत्मनि रतिर्न विषयेषु यस्य स आत्मरतिरेव स्यात् भवेत्, आत्मतृप्तश्च आत्मनैव तृप्तो नान्नरसादिना स मानवो मनुष्यः सन्न्यासी आत्मन्येव च सन्तुष्टः । सन्तोषो हि बाह्यार्थलाभे सर्वस्य भवति, तमनपेक्ष्यैव आत्मन्येव च सन्तुष्टः सर्वतो वीततृष्ण इत्येतत् । य ईदृश आत्मवित् तस्य कार्यं करणीयं न विद्यते नास्तीत्यर्थः ॥१७॥

यस्त्विति । यो मानवस्तु आत्मरतिरात्मतृप्त आत्मन्येव सन्तुष्टश्च स्यात्तस्य कार्यं नैव विद्यते । साङ्ख्य इति । तुशब्दस्य पूर्वोक्तवैलक्षण्यद्योतकत्वात्पूर्वं कर्मिण उक्तत्वादिह साङ्ख्यलाभ इति भावः । साङ्ख्यशब्दार्थमाह— आत्मज्ञाननिष्ठ इति । आत्मरतिरेवेत्येवकारादाह—विषयेष्विति । आत्मन्येवास्य रतिरित्यर्थः । आत्मतृप्तश्चेत्यत्र चकार एवार्थक इत्याह—आत्मनैव तृप्त इति । एवकारार्थमाह—नान्नरसादिनेति । मन प्राणादितादात्म्याध्यासाभावादिति भावः । मानव इति । मनुष्याणामेवात्राधिकारादिति भावः । यद्यपि- 'तदुपर्यपि बादरायणस्सम्भवा'दिति ज्ञानमार्गे देवानामप्यधिकारस्तथापि न सन्न्यासे इति बोध्यम् । सर्वत इति सर्वेषु विषयेष्वित्यर्थः । क एवंविधोऽत आह—आत्मविदिति । सच्चिदानन्दब्रह्मात्मज्ञानशून्यस्य कथमात्मरत्यादयः स्युरिति भावः ।

यत्तु मुक्तपरोऽयं श्लोको वक्ष्यमाणश्चेति रामानुजः, न सन्न्यासाश्रमिपरः तस्यापि स्वाश्रमधर्मनिवृत्त्यभावात् । वर्णाश्रमविशिष्टस्यैव हि वर्णाश्रमधर्मारम्भ - न पुनर्वर्णाश्रमाधीननामरूपविनिर्मुक्तस्येति मुक्तशब्दस्य भाव इति वेदान्तदेशिकश्च । तदुभयं मन्दम्—मुक्तस्येह प्रसक्त्यभावात् मुमुक्षु प्रत्येव गीताशास्त्रस्य प्रवृत्तत्वात्- वेदान्तशास्त्रे मुमुक्षोरेकाधिकारित्वात् 'आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यत' इत्यात्मतुष्टेः स्थितप्रज्ञलक्षणत्वात्, स्थितप्रज्ञो ज्ञानयोग्येव न मुक्त इति सम्प्रतिपन्नत्वात्- 'दुःखेष्वनुद्विग्नमनाः' इत्यादिश्लोकोक्तधर्माणां मुक्ते प्रसक्त्यभावात्- नहि मुक्तौ दुःखानि सन्ति, येन तत्रानुद्वेग उपदिश्येत मुक्तस्य । किंच मानव इति पदमपि अस्य श्लोकस्य साधकपरत्वे लिङ्गं- सिद्धस्य हि न मानवत्वादिकमस्ति- मानवत्वादेर्देहधर्मत्वान्मुक्तस्यात्मत्वाच्च न हि मुक्तेषु मानवासुरदैवतादिविभागोऽस्ति । अपिचात्मरतिरेवेत्येवकारोपि व्यर्थस्त्वन्मते नहि मुक्तौ विषयास्सन्ति, येन विषयरतिव्युदासाय प्रयुज्येतैवकारः । अथ यदि मुक्तिर्विष्णुपदं वैकुण्ठलोकस्तत्र अप्राकृता विषयास्सन्तीत्युच्येत, तर्हि मुक्तस्य विषयरतिरेव स्यान्नत्वात्मरति - अप्राकृतविषयैस्तैरिन्द्रियाणामाकृष्टत्वान्मुक्तस्य । अपि तु मुक्तानां विषयभोगे अभोग्यानामप्राकृतानां तद्विषयाणां सृष्टिः पारमेश्वरी व्यर्थैव स्यात् । एवं निरर्थविषयसृष्टा विष्णुरममाण एव स्यात् निरर्थप्रलापोन्मत्तवत् । अपि च नैवेति वक्ष्यमाणश्लोके-- इहेति पदमस्ति तद्धि परलोकवाची । कथं मुक्तस्येह लोकसम्बन्धित्वं, न कथमपि । तस्मादिमौ श्लोकौ मुक्तपरौ किंतु साङ्ख्यपरावेव ।

यदुक्तं सन्न्यासिनोप्यस्ति वर्णाश्रमधर्म इति, तदयुक्तम्—कुटीचकादीनां दण्डतर्पणादिधर्मसत्त्वेपि परमहंसस्य नास्ति य कोप्यल्पोपि धर्मः- 'ये ब्राह्मणा गामवधूतलिङ्गाश्चरन्ति तेभ्यदिशवमस्तु

नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ।
न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥१८॥

किंच- नेति । नैव तस्य एवमात्मरतेः कृतेन कर्मणा अर्थः प्रयोजनमस्ति, तर्हि तस्य अकृतेन प्रत्यवायाख्योऽनर्थः नाकृतेन इह लोके कश्चन कश्चिदपि प्रत्यवायप्राप्तिरूप आत्महानिलक्षणोवास्ति । न चास्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु भूतेषु कश्चिदर्थव्यपाश्रयः प्रयोजननिमित्तः क्रियासाध्यो व्यपाश्रयः व्यपाश्रयणं कश्चिद्भूतविशेषमाश्रित्य न साध्यः कश्चिदर्थोस्ति येन तदर्था क्रियाऽनुष्ठेया स्यात्, न त्वमेवं तस्मिन् सर्वतः सम्प्लुतोदकस्थानीये सम्यग्दर्शने वर्तसे ॥१८॥

तस्मादसक्तस्सततं कार्यं कर्म समाचर ।
असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः ॥१९॥

यत एवं, तस्मादिति । तस्मादसक्तः सङ्गवर्जितः सततं सर्वदा कार्यं कर्तव्यं नित्यं

---

राज्ञा'मिति भागवतात् । दिगम्बरा निर्दण्डकपालाः करतलभिक्षस्तरुतलवास इत्यादिवचनोक्तकरतलभिक्षादिशालिनो हि ते । उक्तं हि- 'निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेध' इति । नचास्ति तेषामपि निवृत्तिधर्म इति वाच्यं, आत्मरत्यादीनामेव निवृत्तिधर्मत्वात्त्वदुक्तरीत्या मुक्तेष्वपि तत्सम्भवाच्च ।१७॥

नैवेति । तस्य इह कृतेन कश्चनार्थो नैव, अकृतेन कश्चनार्थो नैव । अस्य सर्वभूतेषु अर्थव्यपाश्रयः कश्चिन्न च । ननु कर्मणा साङ्ख्यस्य मास्तु प्रयोजनं कर्माकरणेन तु प्रत्यवायरूपोऽनर्थस्स्यादित्यत आह—तर्हीति, अर्थव्यपाश्रय इति । अर्थाय व्यपाश्रयोऽर्थव्यपाश्रय इति चतुर्थीति योगविभागात्समासः । अर्थशब्दार्थमाह—प्रयोजनेति । चतुर्थ्यर्थमाह—निमित्त इति । व्यपाश्रयशब्दार्थमाह—व्यपाश्रयणमिति । स कीदृशोत आह—क्रियासाध्य इति । कीर्तनवन्दनादिक्रियानिर्वर्त्य इत्यर्थः । क्रियापूर्वक इति यावत् । सर्वभूतविषयकं प्रयोजननिमित्तं क्रियासाध्यमाश्रयणं किञ्चिदप्यस्य नास्तीत्यर्थः । इदमेव विशदयति— कश्चिदिति । कश्चिद्भूतविशेषं ब्रह्मरुद्रादिरूपं राजधनिकादिरूपं वा सागराश्वत्थादिरूपं वा आश्रित्य कीर्तनवन्दनादिना संश्रित्य साध्यः । तस्माल्लभ्यः कश्चिदर्थः सत्यलोककैलासादिरूपः भूमिधनादिरूपो वा पुण्यपुत्रादिरूपो वा अर्थः फलमिति यावत् । नास्यास्ति । येनेति । अर्थसत्त्वेनेत्यर्थः । तदर्थेति । ब्रह्मलोकादिफलार्थेत्यर्थः । क्रियेति । सगुणब्रह्मोपासनयज्ञानुष्ठानादिरूपेत्यर्थः ॥१८॥

यत एवं तस्मादिति । यस्मात्त्वमेवं सर्वतस्सम्प्लुतोदकस्थानीये सम्यग्दर्शने न वर्तसे, तस्मादित्यर्थः । ज्ञानयोगाधिकाराभावादिति यावत् । न हि त्वमात्मरतिरात्मतृप्त आत्मतुष्टश्च भवसि, येन तव कार्याभावस्स्यादिति भावः । कार्यशब्दस्वारस्यादाह—नित्यमिति । एतेन कर्मणापि काम्यादिकर्माणि त्याज्यानीति सूचितम् । नहि तानि कर्तुं योग्यानि बन्धकरत्वात् । नित्यानि तु चित्तशुद्धि-

कर्म समाचर । असक्तो हि यस्मात् समाचरन्नीश्वरार्थं कर्म कुर्वन् परमाप्नोति पूरुषः । परं मोक्षमाप्नोति पूरुषस्सत्त्वशुद्धिद्वारेणेत्यर्थः ॥१९॥

कर्मणैव हि संसिद्धिमास्थिता जनकादयः ।
लोकसंग्रहमेवापि सम्पश्यन् कर्तुमर्हसि ॥२०॥

यस्माच्च, कर्मणेति । कर्मणैव हि पूर्वे च क्षत्रियाः विद्वांसः संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ताः । के, जनकादयः जनकाश्वपतिप्रभृतयः । यदि ते प्राप्तसम्यग्दर्शनाः ततो

---

हेतुत्वात्कर्तुं योग्यानि । परं मोक्षमिति मोक्षस्यैव सर्वोत्कृष्टब्रह्मरूपत्वादिति भावः । ननु ज्ञानादेव मोक्षस्य सिद्धान्तितत्वेन कथं कर्मणा मोक्षप्राप्तिरत आह—सत्त्वशुद्धिद्वारेणेति ।

यत्तु रामानुजः—परं जीवमाप्नोतीति, तदसत्—तन्मते जीवस्याब्रह्मत्वाज्जीवस्य जीवप्राप्तिरफलत्वाच्च ॥१९॥

कर्मणेति । 'असक्तो ह्याचरन् कर्म परमाप्नोति पूरुष' इत्युक्तं तत्र किं प्रमाणमिति शङ्कायां जनकादयएवेह प्रमाणमित्याह भगवान्—कर्मणैवेति । जनकादय कर्मणैव संसिद्धिमास्थिता हि । कर्मणैव जनकादयो मोक्षं प्राप्ता इत्यर्थ । सत्त्वशुद्धिद्वारेणेति भाव । एवकारात्र स्वकरणेनेत्यर्थ । इत्येकोर्थ ।

जनकादय कर्मणा सहैव संसिद्धिं गन्तुमास्थिता हि- कर्मणा सहैवेत्यस्यार्थमाह—असन्यस्यैवेति । ननु कर्मयोगाद्ज्ञानयोगस्ततो मुक्तिरिति क्रमे सति कथं कर्मणासहैव जनकादीनां मुक्तिप्राप्तिप्रवृत्तिरित्यत आह— प्राप्तसम्यग्दर्शना इति । जन्मान्तरानुष्ठितज्ञानयोगमाहात्म्येनेति भाव ।

अत्रेदं तत्त्वम्—वेदान्तश्रवणादिना पारोक्ष्येण ब्रह्मात्मानं विदित्वा विद्वांसो ज्ञानयोगे प्रवर्तन्ते, सिद्धे तु तस्मिन्नपरोक्षीकृतब्रह्मात्मानो मुच्यन्ते, अकालमरणादिना ज्ञानासिद्धौ तु अपक्वज्ञानयोगास्ते न मुच्यन्ते, किंतु जन्मान्तरं प्रतिपद्यन्ते । तत्र तु विनैव ज्ञानयोगं केचिद्विनैव कर्मयोगं च वेदान्तश्रवणमात्रेणैव ब्रह्मात्मानं साक्षात्कुर्वन्ति । तस्मादेतेषां कर्मसन्न्यासं विनैव मुक्तिरिति ।

नन्वेवं ज्ञानिनां पुन कर्मणि प्रवृत्तिरत आह – लोकसंग्रहार्थमिति । लोकेन स्वाचारं संग्राहयितुमित्यर्थः । ननु तर्हि किमिति शुकादयो लोकसंग्रहार्थं कर्म नाकुर्वन्नत आह—प्रारब्धकर्मवशादिति । ज्ञानिभिरपि यावत्प्रारब्धावसानं तदनुवर्तनस्यावर्जनीयत्वादिति भाव । एतेन ज्ञानिषु केषांचित्कर्मयोगे केषांचित्तपोयोगे केषांचिद्ग्रन्थकरणे केषांचिद्व्यवहारे केषांचिद्वाणिज्यादौ च प्रारब्धवशात्प्रवृत्तेर्दर्शनेपि न कोपि बन्ध इति सूचितम् ।

कर्मणासहैव मुक्तिं गता इत्युक्तौ कर्मणोपि मुक्तिप्रवेशस्यात्यन्तानिष्टं, निष्क्रियब्रह्मरूपत्वान्मुक्तेरित्यभिप्रेत्याह—गन्तुं प्रवृत्ता इति । इति द्वितीयोर्थ ।

कर्मणा सहैवेत्यस्यासन्न्यस्यैवेत्यर्थात् जनकादयोऽसन्न्यस्यैव मुक्तिं गता सन्न्यासं विना कर्मयोगे स्थित्वैव ते जन्मान्तरप्रारब्धसुकृतवशादपरोक्षीकृतब्रह्मात्मानो मुक्तिं गता इति तृतीयोर्थः ।

संसिद्धिमास्थिताश्चित्तशुद्धिं प्राप्ता इति चतुर्थोर्थ । दर्शितश्चाय ग्रन्थारम्भे भाष्यकृद्भिरेव इति ।

लोकसंग्रहार्थं प्रारब्धकर्मबलात् कर्मणामहैवासन्यस्यैव तु संसिद्धिमास्थिता इत्यर्थः। अथ अप्राप्तसम्यग्दर्शना जनकादयः तदा कर्मणा सत्त्वशुद्धिसाधनभूतेन क्रमेण संसिद्धिं आस्थिता इति व्याख्येयः श्लोकः। अथ मन्यसे पूर्वैरप्यजानद्भिरेव कर्तव्यं कृतं नावश्यमन्येन कर्तव्यं सम्यग्दर्शनवता कृतार्थेनेति, तथापि प्रारब्धकर्मायत्तः त्वं लोकसंग्रहमेवापि लोकस्य उन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहः तमेवापि प्रयोजनं सम्पश्यन् कर्तुमर्हसि ॥२०॥

यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥२१॥

लोकसंग्रहः किमर्थं कर्तव्य इति, उच्यते—यद्यदिति। यद्यत्कर्माचरति करोति श्रेष्ठः प्रधानः तत्तदेव कर्माचरति इतरोऽन्यो जनः तदनुगतः। किंच स श्रेष्ठो यत्प्रमाणं लौकिकं वैदिकं वा कुरुते लोकस्तदनुवर्तते तदेव प्रमाणीकरोतीत्यर्थः ॥२१॥

न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥२२॥

यद्यप्यत्र लोकसंग्रहकर्तव्यतायां ते विप्रतिपत्तिः, मां किन्नपश्यसि—नेति। न मे

---

परहृदयस्याप्रत्यक्षत्वाज्जनकादयः प्राप्तसम्यग्दर्शना एवेति निश्चेतुमशक्यत्वात्पक्षान्तरमाह—अथेत्यादिना। जनकादयः कर्मणैव क्रमेण संसिद्धिमास्थिता इति श्लोको व्याख्येय इत्यन्वयः। अयमेवार्थ आदौ मया लिखितः।

ननु जनकादयः प्राप्तसम्यग्दर्शना इत्यत्र नास्ति बलवत्प्रमाणं जनकयाज्ञवल्क्ययोरुक्तिप्रत्युक्त्यादिकं तु परोक्षज्ञानसाधनतयोपक्षीणं- अप्राप्तसम्यग्ज्ञाना इत्यत्र तु बलवल्लिङ्गमस्ति कर्मानुष्ठानरूपमविद्वद्विषयत्वात्कर्मानुष्ठानस्य- अहं तु इतःप्रागप्राप्तज्ञानोपीदानीं त्वदुपदेशमाहात्म्यात्प्राप्तसम्यग्दर्शन एव भवामि- ततो नाहं युद्धाख्यमन्यद्वा कर्म कुर्यामिति मतमर्जुनस्याशङ्क्याऽऽह भगवान्— लोकसंग्रहमित्युत्तरार्थमित्याह भाष्यकारः—अथ मन्यस इति। पूर्वैरप्यजानद्भिरप्राप्तसम्यग्दर्शनैरेव जनकादिभिः कर्तव्यं कर्म कृतं सम्यग्दर्शनवता। अत एव कृतार्थेनान्येन मादृशेन तु तदवश्यं न कर्तव्यमित्यथ मन्यसे मन्यसेयदीत्यर्थः। पूर्वैरपीत्यपिशब्दस्तु पूर्वेषां ज्ञानादिसामर्थ्यातिशयं द्योतयति। कृतार्थपदं तु कृतकृत्यत्वबोधकम्। तच- अकृतकृत्यः कृत्यं करोतु नाम कृतकृत्यः कथं कृत्यं कुर्याचदानीमेव कृतभोजनो भोजनमिवेति सूचयति—प्रारब्धेति। प्रारब्धकर्मणोऽनतिक्रमणीयत्वादिति भावः। एतेन तवास्ति युद्धहेतुप्रारब्धकर्मेति भगवता सूचितमर्जुनाय सर्वज्ञेन उन्मार्गः अधर्ममार्गः सम्पश्यन्सम्यग्जानन्।

यद्यदिति। श्रेष्ठो यद्यदाचरति इतरो जनस्तत्तदेवाचरति, प्रधान इति विद्यादिभिरुत्कृष्टः। यत्प्रमाणमिति व्यस्ते पदे यत् शास्त्रादिकं स श्रेष्ठः प्रमाणं कुरुते प्रमाणत्वेन स्वीकरोति, इतरो लोकः तदेव शास्त्रादिकं प्रमाणमनुवर्तते अनुसृत्य प्रवर्तते। फलितार्थमाह—तदेव प्रमाणीकरोतीति ॥२१॥

नेति। हेपार्थ मे त्रिषु लोकेषु किञ्चन कर्तव्यं नास्ति- अनवाप्तमवाप्तव्यं च किञ्चन मे

मम पार्थास्ति न विद्यते कर्तव्यं त्रिष्वपि लोकेषु किञ्चन किञ्चिदपि। कस्मात्, नानवाप्तं अप्राप्तं अवाप्तव्यं प्रापणीयं तथापि वर्त एव च कर्मणि अहम् ॥२२॥

यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ! सर्वशः ॥२३॥

यदीति। यदि हि पुनरहं न वर्तेयं जातु कदाचित् कर्मण्यतन्द्रितः अनलसस्सन् मम श्रेष्ठस्य सतः वर्त्म मार्गं अनुवर्तन्ते मनुष्याः हेपार्थ! सर्वशः सर्वप्रकारैः ॥२३॥

उत्सीदेयुरिमे लोका न कुर्यां कर्मचेदहम्।
सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥२४॥

तथा को दोष इत्यताह—उत्सीदेयुरिति। उत्सीदेयुर्विनश्येयुः, इमे सर्वे लोकाः लोकस्थितिनिमित्तस्य कर्मणोऽभावात् न कुर्यां कर्म चेदहम्। किंच सङ्करस्य च कर्ता स्याम्। तेन कारणेनोपहन्यामिमाः प्रजाः प्रजानामनुग्रहाय प्रवृत्तोऽमुपहतिं कुर्यामिति महेश्वरस्याननुरूपमापद्येत ॥२४॥

सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत!
कुर्याद्विद्वांस्तथाऽऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥२५॥

---

नास्ति, कर्मण्येव वर्ते च। मां किमिति। मद्दृष्टान्तेन लोकसंग्रहकर्तव्यतायां विषये तव वर्तमाना विप्रतिपत्तिः स्वयमेव निराकरणीयेत्यर्थः। अप्राप्तस्य प्राप्त्यर्थं लोका कर्म कुर्वन्तीति प्रसिद्धम्-स्वर्गाद्यर्थं ज्योतिष्टोमादौ लोकानां प्रवृत्तिदर्शनात्। अवाप्तसमस्तकाम परिपूर्णो भगवान्वासुदेवस्तु कमर्थमुद्दिश्य कर्मणि प्रवर्तेत- न कमपि, तथापि कर्मणि वर्तत एव वासुदेवो लोकसंग्रहार्थमित्यर्थः ॥२२॥

यदीति। ननु त्वं किं लोकसंग्रहेण फलमतो मानुरुध्व त्वमपि कर्मेत्यत आह- भगवान्— यदीति। यदि ह्यहमतन्द्रितस्सन् जातु कर्मणि न वर्तेय इत्यन्वयः। अतन्द्रित इत्यनेन कर्मत्यागे हेतुरलसत्वं सूचितम्। यद्यप्यात्मनिष्ठ पुरुष आत्मानन्दानुभवपारवश्यादेव कर्म जहाति, न त्वालस्यात्तथापि आलस्यप्रयुक्तः कर्मत्यागोऽनुचित इति बोधनायातन्द्रित इत्युक्तम्। ममेति। ज्ञानबलादिभिरुत्कृष्टस्येत्यर्थः ॥२३॥

उत्सीदेयुरिति। अहं कर्म न कुर्यांचेदिमे लोका उत्सीदेयुः विनश्येयुरिति नरकप्राप्त्यादिलक्षणं नाशं प्राप्नुयुरित्यर्थः। सङ्करस्येति। याजनयुद्धगोरक्षणसेवादिर्वर्णधर्माः, गुरुकुलवासवैधदेववनवासभिक्षाटनाद्याश्रमधर्माश्च पृथगसंकीर्णाः वर्णाश्रमविभागबोधकाः यदि लुप्येरन्, तर्हि वर्णाश्रमसङ्करस्यादित्यर्थः। तेनेति। साङ्कर्यकरणेनेत्यर्थः। उपहन्यां नाशयेयं- नरकदुःखप्राप्त्यादिनाशं जनयेयमित्यर्थः। सङ्करो नरकायैवेत्यर्जुनेनैवोक्तत्वादिति भावः। तस्माद्यथाहं परमात्मा सर्वज्ञ आत्मविदपि क्षत्रियजातिगृहस्थाश्रमोचितानि कर्माणि लोकसंग्रहार्थं करोमि तद्वत्त्वमपि कुर्वित्यर्थः ॥२४॥

यदि पुनरहमिव त्वमपि कृतार्थबुद्धिः आत्मविदन्यो वा तस्याप्यात्मनः कर्तव्याभावेपि इतरानुग्रह एव कर्तव्य इत्याह—सक्ता इति । सक्ताः कर्मणि अस्य कर्मणः फलं मम भविष्यतीति, के अविद्वांसः यथा कुर्वन्ति भारत कुर्याद्विद्वानात्मवित्तथा असक्तस्सन् । तत्किमर्थं करोतीति तच्छृणु चिकीर्षुः कर्तुमिच्छुः लोकसंग्रहम् ॥२५॥

न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान् युक्तस्समाचरन् ॥२६॥

एवं लोकसंग्रहचिकीर्षोर्न ममात्मविदः कर्तव्यमस्ति अन्यस्य वा लोकसंग्रहं मुक्त्वा । तस्मात्त इदमुपदिश्यते—नेति । बुद्धेर्भेदो बुद्धिभेदः कर्तव्यं मया कर्म भोक्तव्यं चास्य कर्मणः फलमिति निश्चितरूपाया बुद्धेर्भेदनं चालनं बुद्धिभेदः तं न जनयेत् नोत्पादयेत् । अज्ञानामविवेकिनां कर्मसङ्गिनां कर्मण्यासङ्गवतां किंच कुर्यात् जोषयेत् कारयेत् सर्वकर्माणि विद्वान् स्वयं तदेवाविदुषां कर्मयुक्तोऽभियुक्तस्समाचरन् ॥२६॥

प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।
अहङ्कारविमूढात्मा कर्ताहमिति मन्यते ॥२७॥

---

सक्ता इति । कृतार्थबुद्धिः कृतार्थोहमिति बुद्धिशाली कृतस्साक्षात्कृतोर्थः परमार्थ आत्मा यया सा कृतार्था बुद्धिर्यस्य स कृतार्थबुद्धिरिति वा । कृतार्था कृतकृत्या बुद्धिर्यस्येति वा । आत्मनि कृतकृत्यत्वाकृतकृत्यत्वादिविशेषासम्भवाद्बुद्धिरेव सच्चिदानन्दात्मतादात्म्यमापद्य कृतकृत्यतामात्मनि सम्भावयतीत्यर्थः । अन्योवेति । त्वत्त इतरो वा अहमिव कृतार्थबुद्धिरात्मविदित्यर्थः । तस्यान्यस्य आत्मनस्तवापि कर्तव्याभावेपीतरानुग्रहः कर्तव्य एव । यथा मया इतरानुग्रहः क्रियते तथा मादृशेन त्वयाऽन्येन वाऽऽत्मविदा कर्तव्य एवेतरानुग्रहः । कर्मकरणद्वारेत्यर्थः । तस्यापि तादृशस्यापि आत्मनस्तवस्य कर्तव्याभावेपीत्यन्वयः । तस्यापीत्यत्र प्राकर्हीति पूरणीयम् ।

हेभारत अविद्वांसः कर्मणि सक्तास्सन्तः यथा कर्म कुर्वन्ति तथा विद्वानसक्तस्सन् लोकसंग्रहं चिकीर्षुः कर्म कुर्यात् । कथं कर्मणि सङ्गोऽत्र आह—अस्येति । फलद्वारा कर्मसङ्ग इत्यर्थः ॥२५॥

नेति । विद्वान् कर्मसङ्गिनामज्ञानां बुद्धिभेदं न जनयेत्, विद्वान् युक्तस्समाचरन् सन् सर्वकर्माणि जोषयेत् । एवमिति । एवं लोकसंग्रहचिकीर्षोर्मम आत्मविदोऽन्यस्य वा लोकसंग्रहं मुक्त्वा कर्तव्यं नास्ति । तस्माल्लोकसंग्रहेतरप्रयोजनाभावात् ते तुभ्यमिदमुपदिश्यते- मयेति शेषः । अज्ञस्य बुद्धिं दर्शयति—कर्तव्यमित्यादिना, जोषयेदिति । जुषीप्रीतिसेवनयोरिति धातोः सेवनार्थकाज्जुषतेः हेतुमति णिच् । युक्तः चित्तसमाधानरूपयोगशाली । आदावेव पुंसां ज्ञानयोगेऽधिकाराभावात्कर्मसु प्रवृत्तिरुपपद्यते- विदुषा कर्मसु निन्दितेषु तु अज्ञाः कर्मभ्यो निवर्तन्ते स्वयम् । न तु ज्ञानयोगे प्रवर्तितुं क्षमन्ते । अत उभयभ्रष्टा भवन्ति । तस्मात्कर्मनिन्दादिना नाज्ञानां बुद्धिं भ्रंशयेद्विद्वानित्यर्थः ॥२६॥

अविद्वान्कथं कर्मसु सज्जत इत्याह—प्रकृतेरिति। प्रकृतेः प्रकृतिः प्रधानं सत्त्वरजस्तमसां गुणानां साम्यावस्था तस्याः प्रकृतेः- प्रकृतितो जाताः सत्त्वरजस्तमांसि कार्यकरणाकारपरिणतास्तैर्गुणैर्विकारैः कार्यकरणरूपैः क्रियमाणानि कर्माणि लौकिकानि शास्त्रीयाणि च सर्वशः सर्वप्रकारैः अहङ्कारविमूढात्मा कार्यकरणसङ्घाते आत्मप्रत्ययोऽहङ्कारस्तेन विविधं नानाविधं मूढः आत्मा अन्तःकरणं यस्य सोयं कार्यकरणधर्मा कार्यकरणाभिमानी अविद्यया कर्माण्यात्मनि मन्यमानः तत्कर्मणामहं कर्तेति मन्यते ॥२७॥

तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ।
गुणागुणेषु वर्तन्त इति मत्वा न सज्जते ॥२८॥

यः पुनर्विद्वान्—तत्त्वविदिति । तत्त्ववित्तु महाबाहो कस्य तत्त्ववित् गुणकर्मविभागयोः- गुणविभागस्य कर्मविभागस्य तत्त्वविदित्यर्थः। गुणाः करणात्मकाः गुणेषु

---

प्रकृतेरिति । सर्वश प्रकृतेर्गुणै क्रियमाणानि कर्माणि अहङ्कारविमूढात्मा अहं कर्तेति मन्यते । साक्षात्सत्त्वादिगुणानां कर्तृत्वाभावादाह—कार्यकरणाकारपरिणता इति । कार्यं देहः करणानि समनस्कानीन्द्रियाणि । विकारैरिति । कार्यैरित्यर्थ । गुणसाम्यावस्थारूपप्रकृतिजन्यत्वात्प्रकृतिविकारत्वं गुणानामित्यर्थः ।

ननु ईक्षतेर्नाशब्दमिति प्रधानाख्यस्य साङ्ख्यपरिकल्पितस्य तत्त्वस्याशब्दत्वं व्यासेनैव सिद्धान्तितमिति कथमिह तद्ग्रहणमिति चेदुच्यते— नेयं प्रकृतिस्तत्त्वान्तरं, किंतु मायैव- इयं हि सत्त्वादिगुणत्रयवती- प्रलये गुणास्ते त्रयोऽस्यां निलीय साम्येन वर्तन्ते इति तदाऽस्याः प्रकृतिरिति नाम—सृष्ट्युपक्रमे त्वस्याः गुणाः क्षुभ्यन्ते स एव गुणक्षोभस्सत्त्वादिगुणोत्पत्तिरित्युच्यते- इति । अहङ्कारेति । कार्यकरणसङ्घाते अनात्मनि अहमिति यः प्रत्ययस्सोहङ्कार इत्युच्यते । एतेन ब्रह्मण्यात्मबुद्धिर्नाहङ्कार इति सूचितं- तस्यात्मत्वात् । नानाविधमिति । स्थूलोहं काणोहं रुग्णोहं खिन्नोहमित्यादिबहुप्रकारं मूढः मोहं प्राप्तः कोऽयमत आह—कार्यकरणधर्मेति । कार्यकरणगतधर्मानात्मन्यध्यस्तवानित्यर्थः । अतएव कार्यकरणाभिमानी कार्यकरणेषु ममेति अहमिति चाभिमानवान् अतएव अविद्यया भ्रान्त्या आत्मनि स्वस्मिन् कर्माणि सन्तीति मन्यमानः- कार्यकरणगतकर्माण्यात्मगतानि मन्वान इत्यर्थ. । तत्कर्मणां कार्यकरणकर्मणां कर्ता अहमिति मन्यते । कार्यकरणाकारपरिणतसत्त्वादिप्रकृतिगुणत्रयक्रियमाणकर्माणि मूढोहमेव करोमीति मन्यत इति समुदायार्थः ।

देहे गच्छत्यहं गच्छामीति, चक्षुषि पश्यत्यहं पश्यामीति, मनसि शोचत्यहं शोचामीति च देहादितादात्म्याध्यासाद्भ्रान्त्या पुरुषो मन्यत इति यावत् ॥२७॥

तत्त्वविदिति । तुशब्दस्य पूर्वोक्तवैलक्षण्यद्योतकत्वादाह—यः पुनर्विद्वानिति । हेमहाबाहो गुणकर्मविभागयोस्तत्त्ववित्तु गुणागुणेषु वर्तन्त इति मत्वा न सज्जते- तत्त्वं याथार्थ्यं वेत्ति जानातीति तत्त्ववित् । द्वन्द्वान्ते श्रूयमाणं प्रत्येकं सम्बध्यत इति न्यायादाह—गुणविभागस्य कर्मविभागस्य

विषयात्मकेषु वर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं न करोति ॥२८॥

प्रकृतेर्गुणसम्मूढास्सज्जन्ते गुणकर्मसु ।
तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत् ॥२९॥

ये पुनः— प्रकृतेरिति । प्रकृतेर्गुणैस्सम्मूढास्सम्यङ्मूढास्सन्तस्सज्जन्ते गुणानां कर्मसु गुणकर्मसु- वयं कुर्मः फलायेति तान्कर्मसङ्गिनः अकृत्स्नविदः कर्मफलमात्रदर्शिनः मन्दान्मन्दप्रज्ञान् कृत्स्नवित् आत्मवित् स्वयं न विचालयेत्- बुद्धिभेदकरणमेव चालनं तन्न कुर्यादित्यर्थः ॥२९॥

मयि सर्वाणि कर्माणि सन्न्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥३०॥

कथं पुनः कर्मण्यधिकृतेनाज्ञेन मुमुक्षुणा कर्म कर्तव्यमिति, उच्यते—मयीति । मयि

---

पेति । गुणकर्मणोर्विभागौ गुणकर्मविभागौ तयोरिति समासः । वक्ष्यति भगवांश्चतुर्दशाध्याये स्वयमेव गुणकर्मविभागद्वयम्—'सत्त्वात्सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव'चेत्यादि । सति तु गुणकर्मविभागज्ञाने- 'नान्यं गुणेभ्यः कर्तारं यदा द्रष्टानुपश्यति । गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छती'ति तत्रैव वक्ष्यमाणरीत्या गुणा एव कर्मकर्तारो नाहमिति मन्यते, ततश्च मुक्तो भवति इदमेवात्राप्युच्यते- 'गुणा गुणेषु वर्तन्त इति मत्वा न सज्जत' इति । करणात्मका इति । इन्द्रियरूपेण परिणतास्सत्त्वादिगुणा इत्यर्थः । विषयात्मकेषु शब्दादिविषयरूपेण परिणतेषु सत्त्वादिगुणेष्वित्यर्थः । सर्वस्यापि जगतस्सत्त्वादिगुणकार्यत्वादिति भावः । गुणानां गुणेषु वृत्त्युक्त्या फलितमाह—नात्मेति । आत्मा न गुणेषु वर्तत इत्यर्थः । न सज्जत इति । गुणकर्मस्विति भावः । यद्वा 'गुणास्त्वावृत्तिशब्दादिज्येन्द्रियामुख्यतन्तु'ष्विति कोशाद्गुणा इन्द्रियाणि, कर्माणि तद्व्यापाराः तद्विभागवित् अस्येन्द्रियस्येदं कर्मेति वेत्तेत्यर्थः । अन्यत्तुल्यम् । गुणेभ्यस्सकाशादात्मनो विभागो गुणकर्मविभागाविति श्रीधरः ॥२८॥

प्रकृतेरिति । गुणैस्सत्त्वादिभिः- 'तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् । सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् । प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारते'ति वक्ष्यमाणदिशया गुणानां मोहकत्वं बोध्यम् ।

गुणानां सत्त्वादीनां कर्मसु यज्ञादिषु सज्जन्ते । तत्प्रकारं दर्शयति—वयमिति । फलार्थं वयं कर्माणि कुर्मः इति सज्जन्त इत्यर्थः । फलाभिसन्धिपूर्वककर्तृत्वाभिमान एव सङ्ग इति भावः ।

कृत्स्नं सर्वं ब्रह्मेति यावत्- 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः । यद्वा कृत्स्नदोषं ब्रह्मेति यावत् - 'निर्दोषो ह्यन्यदोष' इति भगवद्वचनात् । तद्भिन्नत्वादात्मन आह—आत्मविदिति ॥२९॥

मयीति । अध्यात्मचेतसा मयि सर्वाणि कर्माणि सन्न्यस्य, निराशीर्निर्ममश्च भूत्वा, विगत-

देवे परमेश्वरे सर्वज्ञे सर्वात्मनि वासुदेवे सर्वाणि कर्माणि सन्न्यस्य निक्षिप्य अध्यात्मचेतसा विवेकबुद्ध्या अहं सर्वेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या । किंच निराशीः त्यक्ताशीः निर्ममः ममभावश्च निर्गतो यस्य तव सः त्वं निर्ममो भूत्वा युध्यस्व विगतज्वरः वीतसन्तापः विगतशोकस्सन्नित्यर्थः ॥३०॥

ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ।
श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेपि कर्मभिः ॥३१॥

यदेव मम मतं कर्तव्यमिति सप्रमाणमुक्तं तत्तथा । य इति । येमे मदीयमिदं मतं नित्यमनुतिष्ठन्ति अनुवर्तन्ते मानवाः मनुष्याः श्रद्धावन्तः श्रद्दधानाः अनसूयन्तः असूयां च मयि परमगुरौ अकुर्वन्तः मुच्यन्ते तेपि एवंभूताः कर्मभिः धर्माधर्माख्यैः ॥३१॥

---

ज्वरस्सन् युध्यस्व । मयीति । कस्त्वमत आह—देवे इति । दीव्यति भूतपालनादिना क्रीडतीति स्वयम्प्रकाशत इति वा देवः तस्मिन्- नन्वीदृश ईश्वर एवेत्यत आह—परमेश्वर इति । अहमेवेश्वरो न मत्तोऽन्योस्तीत्यर्थः । ननु स सर्वज्ञस्सर्वविदितीश्वरस्सर्वज्ञो न त्वमत आह—सर्वज्ञ इति । ननु प्रत्यक्षे कर्मसन्न्यासः कर्तुं शक्यः ईश्वरस्तु परोक्षः कथं तस्मिन् स कर्तव्य इत्यत आह—सर्वात्मनीति । सर्वेषामात्मनि प्रत्यग्रूपे न हि स्वात्मा स्वस्य परोक्ष इति भावः । अत एव मम वासुदेवाभिधा, न तु वसुदेवपुत्रत्वप्रयुक्तेत्याह—वासुदेवे इति । वसन्ति जगन्त्यस्मिन्निति, वसति जगत्स्वयमिति वा वासुः दीव्यतीति देवः - वासुश्चासौ देवो वासुदेव इति निरुक्तेरिति भावः । ईश्वरे कर्मनिक्षेपोनाम ईश्वरार्थं कर्मकरणमेवेत्याह—अहं सर्वेश्वरायेति । भृत्यवदिति दृष्टान्तः । यथा भृत्यो राजार्थं युद्धादिकर्म करोति तद्वदिति ।

नन्वीश्वरार्थं कर्म करोमीति बुद्धिः कथं विवेकबुद्धिर्भवितुमर्हति, न कथमपि, किं त्वविवेकबुद्धिरेव निष्कलनिष्क्रियशान्तपरिपूर्णानन्दरूपत्वादीश्वरस्य इति चेत्, मैवम्—अज्ञपरो ह्ययं श्लोकः - कर्मप्रतिपादकत्वादज्ञस्य च सच्चिदानन्दरूपः ईश्वर इति न ज्ञानमस्ति, किं तु परोक्षस्सर्वजगन्नियामकः प्रभुतुल्य ईश्वरः कश्चिदस्त्यस्तीति । वेदरूपया तदाज्ञया मयावश्यं कर्म कर्तव्यं नतु फलमभिसन्धेयमन्यथा मां पातयेदीश्वर इति ज्ञानमस्ति । यः पुनः स्वर्गाद्यर्थं कर्म करोमीति मन्यते तदपेक्षया विवेकयेवायमज्ञोपीति कृत्वा एतदज्ञबुद्धेर्विवेकबुद्धित्वमुक्तमिति ।

ननु अध्यात्मचेतसेत्यस्य विवेकबुद्ध्येत्यर्थलाभः कथमिति चेदुच्यते—आत्मा परमात्मा तस्मिन्नध्यात्ममात्मविषयमित्यर्थः । चेतो ज्ञानमध्यात्मचेतः - परमात्मविषयबुद्धिः परमात्मार्थमिदं कर्म करोमीत्याकारिका बुद्धिरित्यर्थः । अस्या बुद्धेः विवेकबुद्धित्वं सिद्धमेव 'यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धन' इतीश्वरार्थकर्मणोऽनन्धकत्ववचनात् ॥३०॥

य इति । ये मानवाः श्रद्धावन्तोऽनसूयन्तश्च सन्तः मे इदं मतं नित्यमनुतिष्ठन्ति तेपि कर्मभिर्मुच्यन्ते । परमगुराविति । सर्वकारणत्वाद्गुरूणामपि गुरावित्यर्थः । तेपीत्यपिना ज्ञानयोगिनां मुक्तिरविवादेति सूच्यते ॥३१॥

ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ।
सर्वज्ञानविमूढांस्तान् विद्धि नष्टानचेतसः ॥३२॥

येत्विति । येतु तद्विपरीताः एतन्मे मम मतं अभ्यसूयन्तः नानुतिष्ठन्ति नानुवर्तन्ते सर्वेषु ज्ञानेषु विविधं मूढाः ते सर्वज्ञानविमूढाः तान् विद्धि विजानीहि नष्टान् नाश गतान् अचेतसः अविवेकिनः ॥३२॥

सदृश चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ।
प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥३३॥

कस्मात् पुनः कारणात् त्वदीय मतं नानुतिष्ठन्तः परमतमनुतिष्ठन्ति, स्वधर्म च नानुवर्तन्ते त्वत्प्रतिकूलाः कथं न बिभ्यति त्वच्छासनातिक्रमदोषात् ? सदृशमिति । सदृशमनुरूपं चेष्टते कस्याः स्वस्याः स्वकीयायाः प्रकृतेः प्रकृतिर्नाम पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तः सा प्रकृतिः तस्यास्सदृशमेव सर्वो जन्तुः ज्ञानवानपि- किमुत मूर्खः । तस्मात्प्रकृतिं यान्ति भूतानि । निग्रहः किं करिष्यति- मम वान्यस्य वा दुर्निग्रहा प्रकृतिरिति वाक्यशेषः ॥३३॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ।
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥३४॥

यदि सर्वे आत्मनः प्रकृतेस्सदृशमेव चेष्टन्ते, नच प्रकृतिशून्यः कश्चिदस्ति ततः पुरुषकारस्य विषयानुपपत्तेः शास्त्रानर्थक्यप्राप्तौ इदमुच्यते—इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्य

---

येत्विति । तद्विपरीता पूर्वोक्तकर्मयोगिविपरीता नतु ज्ञानयोगिन इति भ्रमितव्य- व्याघातात् । किंतु ज्ञानयोगिभ्य कर्मयोगिभ्योपि भिन्ना इति बोध्यम् । सर्वज्ञानविमूढान् तानचेतसो नष्टान्विद्धीत्यन्वय । सर्वज्ञानेषु विमूढा सर्वज्ञानविषयकमोहाक्रान्ता सर्वविधज्ञानशून्या इत्यर्थ । नाश नरकमाप्तिस्थावरादिजन्मप्राप्तिरूपमिति भाव ॥३२॥

सदृशमिति, परमतमिति । नास्तिकादिमत शैवादिमतं वेत्यर्थ । ज्ञानवानपि स्वस्या प्रकृतेस्सदृशं चेष्टते- सदृशमनुरूपं कर्म चेष्टते करोति- सदृशं यथातथा चेष्टते व्याप्रियते इति वा । भूतानि प्रकृतिं यान्ति प्रकृतिपरतन्त्राणीत्यर्थ । ननु धीरो निगृह्णीयात्प्रकृतिमत आह—निग्रहः किं करिष्यतीति । प्रकृतिविषयो निग्रहो व्यर्थ इत्यर्थ । मम वेतीश्वरस्यापीत्यर्थ ।

अयमाशयः—प्राग्जन्मनि येन पुरुषेण यो धर्मोऽधर्मो वा सम्पादित, स हि संस्काररूपेण सदात्मनि वर्तते जन्मान्तरपरिग्रहे तु स उद्बुद्धस्सन् तं पुरुषं स्वानुगुण सत्कर्मणि दुष्कर्मणि वा प्रवर्तयति- नतु तन्निरोधे सामर्थ्यमस्तीश्वरस्य जीवस्य वा ईश्वरेणैव तस्य तादृशसामर्थ्यस्य दत्तत्वात् , जीवस्य च स्वतएवाशक्तत्वादिति ॥३३॥

इन्द्रियस्येति, प्रकृतिशून्य इति । मुक्तावेव धर्माधर्मसंस्कारस्य समूलोच्छेदो नतु व्यवहारे

वीप्सायां द्विरुक्तिः। सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे रागः अनिष्टे, द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषाववश्यं भाविनौ। तत्रायं पुरुषकारस्य शास्त्रार्थस्य विषय उच्यते- शास्त्रार्थे प्रवृत्तः पूर्वमेव रागद्वेषयोर्वशं नागच्छेत्, या हि पुरुषस्य प्रकृतिस्सा रागद्वेषपुरस्सरैव स्वकार्ये प्रवर्तयति यदा तदा स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति, यदा पुनः रागद्वेषौ तत्प्रतिपक्षेण नियमयति तदा शास्त्रदृष्टिरेव पुरुषो भवति न प्रकृतिवशः। तस्मात्तयो रागद्वेषयोर्वशं नागच्छेत्। यतस्तौ ह्यस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकर्तारौ तस्कराविव पथः॥

इति भाव। पुरुषकारस्य पुरुषप्रयत्नस्य प्रकृतेर्दुर्निग्रहत्वात्पुरुषस्य तत्परतन्त्रत्वात्स्वप्रकृत्यनुसारेण स्वयं पुरुषश्चेष्टते, नतु शास्त्रमधीत्य तत्प्रतिपादितविषया चेष्टितुं शक्नोतीति कृत्वा शास्त्रं व्यर्थमित्यर्थ। पुरुषकारस्य विषयं प्रतिपादयति—इन्द्रियस्येति।

अयमर्थः—पुरुष स्वधर्माधर्मसंस्कारानुगुणं सत्कर्मणि दुष्कर्मणि वा प्रवर्तते सा च प्रवृत्ति विषयगतरागद्वेषपूर्विकैव तस्य नहि रागंविना कश्चिदधर्मसंस्कारमात्रेण परस्त्रीगमने प्रवर्तते, नापि द्वेषविना स्वस्त्रीगमनं जहाति, तथा न रागविना कश्चिद्धर्मसंस्कारमात्रेण स्वस्त्रीगमने प्रवर्तते, नापि द्वेषविना परस्त्रीगमनं जहाति तयोश्च रागद्वेषयोर्वशीकरणं पुरुषकारस्य विषयोऽस्तीति न शास्त्रवैयर्थ्यम्।

ननु प्रकृतिपरतन्त्रस्य रागद्वेषनियमनं नोपपद्यते पुरुषस्य हि धर्माधर्मसंस्कारवशादेव सद्विषये राग, असद्विषये द्वेषश्च भवति- रागद्वेषभावानन्तरमेव स तत्रतत्र प्रवर्तते, सति च रागद्वेषोत्पत्तिकारणे धर्माधर्मसंस्कारे रागद्वेषयोरनुत्पत्ति पुरुषकारमात्रेणेति साहसमेतत् इतिचेत्, मैवम्—न वयं रागद्वेषयोरुत्पत्तिं निवारयाम, किंतु उत्पन्नयोरेव रागद्वेषयो पुरुषकारेण प्रतिबन्धं ब्रूम यथा काष्ठादुत्पन्नस्यैवाग्नेर्मणिमन्त्रादिना दाहकत्वप्रतिबन्ध तद्वदुत्पन्नयोरेव रागद्वेषयो कार्यप्रवर्तकत्वप्रतिबन्ध इति।

ननु य एव संस्कारो रागद्वेषौ जनयति स एव तत्तत्कार्यमपि जनयति उक्तं हि त्वयैव रागद्वेषपुरस्सरैव प्रकृति पुरुष कार्ये प्रवर्तयतीति। साहि प्रकृतिर्दुर्निग्रहा। ततो नास्ति पुरुषकारस्य विषय इति चेत्, मैनमपि—धर्माधर्मसंस्काररूपप्रकृते विषयेषु रागद्वेषजननमात्रएव सामर्थ्यं, कार्ये प्रवर्तकत्वं तु रागद्वेषयोरेव। एतदभिप्रायेणैव रागद्वेषपुरस्सरैवेत्युक्तं भाष्यकारै। यदि तु प्रकृतेरेव रागद्वेषजनकत्वं कार्यप्रवर्तकत्वं च तर्हि क्षुद्रस्यापि राजकन्याया रागसत्त्वेन तत्कार्ये प्रवृत्तिस्स्यात्, न त्वेतदस्ति क्षुद्रो हि राजकन्या दृष्ट्वा एषा मम स्यादिति तत्र राग प्रपद्यापि क राजकन्या क चाहं क्षुद्र इति विमृश्य तद्रागमेव जहाति- न तु तत्प्राप्त्यर्थं यतते। ततश्च प्रकृतिसम्भवस्यापि रागस्य पुरुषकारेण विमर्शरूपेण निवृत्तिर्दृश्यते, विमर्शहीनस्तु तत्र यतते ताड्यते च भटै। रागस्योत्पत्तिम्प्रति तु न पुरुषकारस्य प्रतिबन्ध स्वाभाविकत्वाचस्य। तस्माद्धर्माधर्मसंस्कारवशात्पुरुषस्येन्द्रियार्थेषु रागद्वेषोदय, अप्रतिबन्धाभ्यां रागद्वेषाभ्यां तु कार्याकार्यप्रवृत्तिरिति कृत्वा पुरुषकारस्यास्ति विषयो रागद्वेषवशीकरण—पुरुषकारस्यैव तत्प्रतिबन्धकत्वात् इति। तदा स्वधर्मेति। अधर्मसंस्कारवशात्पुरुषस्य परधर्मे राग, स्वधर्मे द्वेषश्च यदा जायते तदा स्वधर्मत्याग परधर्मानुष्ठानं च भवति, यदा तु धर्मसंस्कारवशात्स्वधर्मे राग परधर्मे द्वेषश्च जायते तदा स्वधर्मानुष्ठानं परधर्मानुष्ठानं च भवतीति बोध्यम्।

श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥३५॥

तत्र रागद्वेषप्रयुक्तः मन्यते शास्त्रार्थमप्यन्यथा- परधर्मोपि धर्मत्वादनुष्ठेय एवेति तदसत्, श्रेयानिति । श्रेयान् प्रशस्यतरः स्वो धर्मः स्वधर्मः- विगुणोपि विगतगुणोपि अनुष्ठीयमानः परधर्मात्स्वनुष्ठितात् साद्गुण्येन सम्पादितादपि स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः परधर्मे स्थितस्य जीवितात् । कस्मात्, परधर्मो भयावहः- नरकादिलक्षणं भयमावहतीति ॥३५॥

अथ केन प्रयुक्तोयं पापं चरति पूरुषः ।
अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ॥३६॥

---

नन्वेवं धर्मसंस्कारजन्यरागद्वेषयोरपि नियमने स्वधर्मप्रवृत्तिः परधर्मनिवृत्तिश्च न स्यादिति चेत्, मैवम्—धर्मसंस्कारवशात्स्वधर्मे रागे परधर्मे द्वेषे च जाते सति विद्वान्पुरुषः पुरुषकारेण रागद्वेषौ नियम्यैव तत्र प्रवर्तेत, रागद्वेषपुरस्सरं प्रवृत्तेन तु पुंसा तत्कर्मफलमवश्यं भोक्तव्यं स्यात्- तत्रापि तस्य रागसत्त्वादिति ।

यद्वा इष्टविषयरागेणानिष्टविषयद्वेषेण च धर्माधर्मसंस्कारजन्येन पुरुषस्य स्वधर्मपरित्यागः परधर्मानुष्ठानं च भवति- तद्यथा ब्राह्मणस्य यजनयाजनादिः स्वधर्मः राज्यं त्विष्टो विषयः तद्रागेण च स परस्य क्षत्रियस्य धर्मे युद्धे प्रवर्तते, उपवासादयस्त्वनिष्टा विषयास्तद्द्वेषेण स्वधर्मं जहाति, क्षत्रियस्य युद्धं स्वधर्म , भिक्षान्नभोजनादिकमिष्टो विषयः प्राचीनाधर्मसंस्कारबलात्- तद्रागेण च स परस्य ब्राह्मणस्य धर्मे भिक्षाटने प्रवर्तते- राज्यभोगस्त्वनिष्टो विषय. तद्द्वेषेण स्वधर्मं जहाति इत्येवमूह्यमिति । तत्प्रतिपक्षेणेति । रागद्वेषयो. प्रतिपक्षेणेत्यर्थः । वैराग्येण शान्त्येति च भावः ॥३४॥

श्रेयानिति । प्रशस्यस्य श्रइति श्रादेश ईयसुनिप्रत्यये इत्यभिप्रायादाह—प्रशस्यतर इति । स्वः स्वीय· स्ववर्णाश्रमविहित इत्यर्थः । न साक्षात्स्वधर्मस्य परधर्माच्छ्रेयस्त्वं वक्तुं शक्यं- ब्राह्मणधर्मस्य सन्न्यासस्य शूद्रधर्मात्सेवादिरूपाच्छ्रेयस्करत्वसिद्धेः । किं त्वनुष्ठानद्वारैवेत्यभिप्रायादाह—अनुष्ठीयमान इति । अनुष्ठीयमानः स्वधर्मः स्वनुष्ठितात्परधर्माच्छ्रेयानित्यर्थः । सद्गुणस्यापि परधर्मस्यानुष्ठानाद्विगुणस्यापि स्वधर्मस्यानुष्ठानं श्रेय इति परमार्थः । सुष्टु अनुष्ठितः स्वनुष्ठितः सुशब्दार्थमेवाह—साद्गुण्येनेति । सद्गुणत्वात्परधर्मस्सुष्टु स्वेन सम्पादित इत्यर्थः । स्वधर्मस्य निधनाधिकरणत्वाभावादाह—स्थितस्येति । किमपेक्षयास्य श्रेयस्त्वमत आह—परधर्मे स्थितस्य जीवितादिति । यः परधर्ममवलम्ब्य जीवति तस्मात्स्वधर्माचरणेन मृत एव गरीयानित्यर्थः । तत्र हेतुं स्वयमेवाक्षिपति—कस्मादिति । एतेन क्षत्रियस्य तव सगुणस्यापि परधर्मस्य भिक्षान्नभोजनस्य स्वीकारेण जीवनादपि स्वधर्मे युद्धे प्रवृत्त्या पाक्षिकं मरणमपि श्रेयएव । किं पुनर्विजय इत्यर्जुनं प्रति कृष्णोपदेशः सूचितः ॥

यद्यप्यनर्थमूलं ध्यायतो विषयान् रागद्वेषौ ह्यस्य परिपन्थिनाविति चोक्तं विक्षिप्त मनवधारितं च यदुक्तं तत्संक्षिप्तं निश्चितं चेदमेवेति ज्ञातुमिच्छन् अर्जुन उवाच--ज्ञाते हि तस्मिन् तदुच्छेदाय यत्नं कुर्यामिति—अथेति। अथ केन हेतुभूतेन प्रयुक्तस्सन् राज्ञेव भृत्यः अयं पापं कर्म चरति आचरति पूरुषः पुरुषः स्वयमनिच्छन्नपि हेवार्ष्णेय बलादिव नियोजितः राज्ञेवेत्युक्तो दृष्टान्तः ॥३६॥

श्रीभगवानुवाच — काम एष क्रोध एष रजोगुणसमुद्भवः।
महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥३७॥

शृणु त वैरिणं सर्वानर्थकरं यं त्वं पृच्छसीति—श्रीभगवानुवाच। 'ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसश्श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा ॥' इति ऐश्वर्यादिषट्कं यस्मिन्वासुदेवे नित्यमप्रतिबन्धेन सामस्त्येन च वर्तते। 'उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्। वेत्ति विद्यामविद्यां च स वाच्यो भगवा'निति। उत्पत्त्यादिविषयविज्ञानं च यस्य स वासुदेवो वाच्यो भगवानिति। काम इति। काम एष एव सर्वलोकशत्रुः यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनां स एष कामः प्रतिहतः केनचित् क्रोधत्वेनैव परिणमते। अतः क्रोधोऽप्येष एव रजोगुणसमुद्भवः रजश्च तद्गुणश्च रजोगुणः स समुद्भवो यस्य स कामो रजोगुणसमुद्भवः रजोगुणस्य वा समुद्भवो रजोगुणसमुद्भवः कामो ह्युद्भूतो रजः प्रतिपुरुषं

---

अथेति। ननु अर्जुन· अथ केन प्रयुक्त इत्यनर्थस्य मूलं पृच्छति। नेदं प्रष्टुमुचितं प्रागेव 'ध्यायतो विषयान्पुंसस्सङ्गस्तेषूपजायत' इति विषयध्यानं सर्वानर्थमूलमित्युक्तत्वात्। इहापि तौ ह्यस्य परिपन्थिनाविति विषयध्यानकृतसङ्गजन्यकामक्रोधयोरनर्थमूलत्वमभिहितमित्याक्षिपति—यद्यपीत्यादिना उक्तमित्यन्तेन। तथापीति शेष। विक्षिप्तं विस्तृतमनवधारितमनिश्चितं च यदुक्तं कृष्णेनानर्थमूलं तदिदमेव संक्षिप्तं निश्चितं चेति ज्ञातुमिच्छन्नर्जुन उवाच। किं तज्जिज्ञासया फलमत आह—ज्ञाते हीति। तस्मिन् सर्वानर्थमूले वस्तुनि ज्ञातेसति। अथेति प्रश्नार्थे। हेवार्ष्णेय अनिच्छन्नप्ययं पूरुष· केन प्रयुक्तस्सन् राज्ञा बलान्नियोजितो भृत्यइव पापं चरति पूरुष इति। पूश्शरीरं पुरि शेत इति पुरिशय, सएव पुरुष पूरुषश्च पृषोदरादित्वादित्यभिप्रेत्याह—पुरुष इति ॥३६॥

'भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायिने। संसर्गेऽस्ति विवक्षायां भवन्ति मतुबादय' इति वचनादाह—नित्यमिति, काम इति। रजोगुणसमुद्भव एष काम एष क्रोधश्च महाशनो महापाप्मा भवति। एनमिह वैरिणं विद्धि। ननु कामक्रोधयोर्द्वयोर्भिन्नत्वात्कथं काम एष क्रोध एष इत्यभेदनिर्देशोऽत्र आह—कामः प्रतिहत इति। येनचिद्धेतुना कामपरिणामत्वात्क्रोधस्य कामत्वेन व्यपदेश इति भावः। क्रोधात्मना स्वस्वरूपेण च कामएव सर्वलोकशत्रुस्सर्वानर्थकरत्वादित्यर्थः। रज इति गुणो रजोगुणः चूतवृक्षवत्समासः। व्याकरणशास्त्रे अवधारणपूर्वपदकर्मधारयसमास इति कश्चन नास्ति, किंतु विशेषणसमास एवेत्यभिप्रेत्याह— रजश्च तद्गुणश्चेति। समुद्भवत्यस्मादिति समुद्भव उपादानं रजोगुणजन्योऽयं काम इत्यर्थः। कामादेव रजोगुणो जात इति पक्षान्तरमाह—रजोगुणस्य चेति। तत्र हेतुमाह—

प्रवर्तयति तृष्णया ह्यहङ्कारित इति दुःखिनां रजःकार्ये सेवादौ प्रवृत्तानां प्रलापः श्रूयते, महाशनः महदशनं यस्येति महाशनः- अत एव महापाप्मा- कामेन हि प्रेरितः पापं करोति अतो विद्ध्येनं कामं इह संसारे वैरिणम् ॥३७॥

धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ।
यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥३८॥

कथं, वैरीति दृष्टान्तैः प्रत्याययति—धूमेनेति । धूमेन सहजेनाव्रियते वह्निः प्रकाशात्मकः अप्रकाशात्मकेन यथा चादर्शो मलेन यथोल्बेन च जरायुणा गर्भवेष्टनेन आवृतः आच्छादितो गर्भस्तथा तेनेदमावृतम् ॥३८॥

आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ।
कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥३९॥

किंपुनस्तदिदंशब्दवाच्यं यत्कामेनावृतमिति, उच्यते—आवृतमिति । आवृतं ज्ञान-

---

कामो हीति । उद्भूतः कामो रजः प्रतिपुरुषं प्रवर्तयति हि । कामादेव पुरुषो रज.कार्ये प्रवर्तत इति हेतोः कामस्य रजोगुणम्प्रति हेतुत्वमिति भावः ।

हिशब्दो लोकप्रसिद्धिं द्योतयति, तामेव दर्शयति—तृष्णयेति । रजःकार्ये राजसेवादौ प्रवृत्तानां दुःखिनां सम्बन्धी तृष्णयाह्यहमेवंकारितेति इत्याकारकः प्रलपः श्रूयतेऽस्माभिरिति शेषः । तृष्णा आशा काम इत्यनर्थान्तरम् । महाशन इति कामस्याशनमाहारो विषयभोगः- अनन्तान्विषयान्भुञ्जानोपि कामः न विषयभोगेऽलम्बुद्धिं भजते, किंतु भूयोपि बहून्विषयान्भोक्तुमेव यतते, यत एवं ततोऽयं महाशन इत्युच्यते । 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति स्मरणात्- 'निस्स्वोह्येकशतं शती दशशतं लक्षं सहस्राधिपो लक्षेशः क्षितिपालतां क्षितिपतिश्चक्रेशवरसम्पदम् । चक्रेशः पुनरिन्द्रतां सुरपतिर्ब्रह्मास्पदं वाञ्छति ब्रह्मा विष्णुपदं हरिर्हरपदं तृष्णावधिं को गत' इति च वचनात् ।

केचित्तु नायं कामविकारः, किं तु लोभविकारएव- 'कामस्यान्तं तु क्षुत्तृड्भ्यां क्रोधस्यैतत् फलोदयात् । नरो याति न लोभस्य जित्वा भुक्त्वा दिशो भुव' इति भागवतादित्याहुः । तन्मते तु कामस्य क्रोधवल्लोभोपि विकार एवेति कृत्वा लोभद्वारा महाशनः काम इति बोध्यम् ।

वस्तुतस्तु लोभोनाम प्राप्तस्यापरित्यागः- अदातरि लुब्धशब्दप्रयोगदर्शनात् । तृष्णा तु काम एवेति महाशनत्वं कामस्य स्वाभाविकमेवेति ज्ञेयम् । महापाप्महेतुत्वात्कामस्य महापाप्मेति व्यपदेश इत्याह—कामेनेति । महापाप्मेति बहुव्रीहिः । महान् पाप्मा पापं यस्मात्स इति ॥३७॥

धूमेनेति । प्रत्याययति प्रत्ययं विश्वासं जनयति निश्चाययतीत्यर्थः । अप्रकाशात्मकेन सहजेन धूमेन यथा प्रकाशात्मको वह्निराव्रियते इत्यन्वयः ॥३८॥

आवृतमिति । हेकौन्तेय ज्ञानिनो नित्यवैरिणा दुष्पूरेणानलेन कामरूपेणैतेन ज्ञानमावृतम् ।

मेतेन आवृतमेतेन ज्ञानं ज्ञानिनो नित्यवैरिणा ज्ञानी हि पूर्वमेव जानाति अनेनाहमनर्थे प्रयुक्त इति । अतो दुःखी च भवति नित्यमेव तेनासौ ज्ञानिनो नित्यवैरी नतु मूर्खस्य । सहि कामं तृष्णाकाले मित्रमिव पश्यन् तत्कार्ये दुःखे प्राप्ते जानाति तृष्णया ह्यहं दुःखित्व मापादित इति । न पूर्वमेव अतो ज्ञानिन एव नित्यवैरी । किंरूपेण कामरूपेण काम इच्छैव रूपमस्येति कामरूपः, तेन दुष्पूरेण दुःखेन पूरणमस्येति दुष्पूरः तेनानलेन नास्यालम्पर्याप्ति र्विद्यत इत्यनलः तेन च ॥३९॥

इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ।
एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥४०॥

किमधिष्ठाय च पुनः कामो ज्ञानस्यावरणत्वेन वैरी सर्वस्य लोकस्येत्यपेक्षायामाह ज्ञाते हि शत्रोरधिष्ठाने सुखेन शत्रुनिवर्हणं कर्तुं शक्यत इति—इन्द्रियाणीति । इन्द्रियाणि मनो बुद्धिश्च अस्य कामस्याधिष्ठानं आश्रय उच्यते । एतैरिन्द्रियादिभिराश्रयैर्विमोहयति विविधं मोहयति एष कामः ज्ञानमावृत्य आच्छाद्य देहिनं शरीरिणम् ॥४०॥

तस्मात्त्वमिन्द्रियाण्यादौ नियम्य भरतर्षभ ।
पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥४१॥

यत एवं तस्मादिति । तस्मात्त्वमिन्द्रियाण्यादौ पूर्वमेव नियम्य भरतर्षभ पाप्मानं कामं प्रजहिहि परित्यज । एनं प्रकृतं वैरिणं ज्ञानविज्ञाननाशनं ज्ञानं शास्त्रतः आचार्यतश्च आत्मादीनामवबोधः विज्ञानं विशेषतस्तदर्थानुभवः तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनः नाशकरस्तं नाशनं आत्मनः परित्यजेत्यर्थः ॥४१॥

---

नित्यं सदापि वैरी नित्यवैरी पूर्वमेवेति दुःखात्पूर्वमेवेत्यर्थः । तृष्णाकाल एवेति यावत् । यथा अजीर्णरोगी कदलीफलं भोक्तुकामः कामकालेपि भवेदनेन ममानर्थ इति जानाति तद्वदिति भावः । न च जानतः कुतस्तत्र प्रवृत्तिरिति वाच्यं, कामस्याऽस्वत्वात् ॥३९॥

इन्द्रियाणीति । एष एतैर्ज्ञानमावृत्य देहिनं विमोहयति । इन्द्रियमनोबुद्धीराश्रित्य वर्तमानः कामः पुरुषस्यात्मानात्मद्रष्ट्याहत्यादिज्ञानमाच्छाद्य तं पुरुषं शब्दादिषु सुखादिषु च प्रवर्त्य तेषु बहुलं मोहं जनयति तस्येत्यर्थः ॥४०॥

तस्मादिति, यत एवमिति । यस्मादेवमिन्द्रियादीनधिष्ठाय कामः पुरुषस्य ज्ञानमाच्छादयति तस्मादिति तस्माच्छब्दार्थः । हेभरतर्षभ त्वमादौ इन्द्रियाणि नियम्य ज्ञानविज्ञाननाशनं पाप्मानं मेनं प्रजहिहि । इन्द्रियाणीति । समनस्कानीत्यर्थः । अन्यथा मनसोऽनिग्रहे मिथ्याचारप्राप्तिस्स्यादिति भावः । आत्मनस्स्वस्य ज्ञानविज्ञानयोर्नाशनमित्यन्वयः ॥४१॥

इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः ।
मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः ॥४२॥

इन्द्रियाण्यादौ नियम्य कामं शत्रुं जहिहीत्युक्तम् । तत्र किमाश्रयः कामं जह्यादिति, उच्यते—इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि पञ्च देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तस्थत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टान्याहुः पण्डिताः । तथेन्द्रियेभ्यः परं मनः सङ्कल्पात्मकं, तथा मनसस्तु परा बुद्धिर्निश्चयात्मिका, तथा यस्सर्वदृश्येभ्यो बुद्ध्यन्तेभ्योऽभ्यन्तरोऽयं देहिनं इन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारेण मोहयतीत्युक्तम् । स बुद्धिद्रष्टा परः आत्मा ॥४२॥

---

इन्द्रियाणीति । साश्रयश्शत्रुः साश्रयेणैव जिगीषुणा जय्य इत्यभिप्रायादाह—किमाश्रय इति । कः आश्रयो यस्य स किमाश्रयः- इन्द्रियाणि पराण्याहुः, किमपेक्षया के आहुरित्याकांक्षां पूरयन्नाह—देहमिति, पण्डिता इति च । पण्डिताः स्थूलदेहादिन्द्रियाणि पराण्याहुः । कोऽसौ स्थूलदेहोऽत्र आह—बाह्यमिति । बहिर्भवं बाह्यं करचरणादिमत्त्वेन बहिरुपलभ्यमानमित्यर्थः । घटादिवदेकदेशस्थत्वादाह—परिच्छिन्नमिति । कथमिन्द्रियाणां परत्वं देहादस्मादत आह—सौक्ष्म्येत्यादि । सौक्ष्म्यमन्तस्स्थत्वं व्यापित्वं चेति हेतुत्रयं क्रमेण स्थूलबाह्यपरिच्छिन्नत्वप्रातिभट्यायोपात्तं स्थूलाद्बाह्यात्परिच्छिन्नाच्च देहात्सूक्ष्माणि अन्तर्भवानि व्यापकानि चेन्द्रियाणि पराणीत्यर्थः। इन्द्रियाणां देहापेक्षया व्यापकत्वं चानेकशरीरावस्थितत्वरूपं अनेककालावस्थितत्वरूपं वा । चक्षुश्श्रोत्रयोस्तु गत्वा ग्राहकत्वेन सूर्यमण्डलभेरीदेशादिगमनोपयोगित्वरूपं च व्यापकत्वं बोध्यम् । आदिपदात् ज्ञानविषयदेहाद्ज्ञानकरणानीन्द्रियाणि पराणीत्याद्यूह्यम् । तथा पण्डिता मन इन्द्रियेभ्यः परमाहुः, इन्द्रियाणां मनोवश्यत्वाज्ज्ञानात्मकत्वात्कालत्रयव्यापृतत्वात्क्षणादेव देशान्तरलोकान्तरगमनशक्तत्वान्मनोऽपेक्षयाऽपकृष्टत्वमिति बोध्यम् । मनसस्तु बुद्धिः परा मनसस्सङ्कल्पविकल्पात्मकत्वाद्बुद्धेर्निश्चयात्मकत्वाच्च मनसो बुद्धिवश्यत्वाच्च मनो-

एवं बुद्धेः परं बुध्वा संस्तभ्यात्मानमात्मनि ।
जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥४३॥
इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादे कर्मयोगोनाम तृतीयोऽध्यायः ।

एवमिति । एवं बुद्धेः परं आत्मानं बुध्वा ज्ञात्वा संस्तभ्य सम्यक् स्तम्भनं कृत्वा

---

ग्राह्येभ्योऽर्थेभ्यो ग्राहकाणीन्द्रियाण्येव पराणि- महत्तत्त्वं तु सूत्रभाष्ये प्रत्याख्यातम् । बुद्धेरेव महत्तत्त्ववाच्यत्वं चोक्तम् । अव्यक्तमज्ञानं माया तद्बुद्धिरेव सर्वबुद्धिसमष्टेरेव मायात्वादित्यभिप्रेत्य नेहार्थादिग्रहणं कृतम् । किंच कामसङ्कल्पादीना मनोधर्मत्वं कामस्सङ्कल्पो विचिकित्सेत्यादिश्रुतिसिद्धं सम्प्रतिपन्नं च कथं तस्य मनोधर्मस्य कामस्य मनःपरबुद्धिपरत्वम् ? धर्मिणोह्यत्र पूर्वपूर्वापेक्षया उत्तरोत्तरस्योत्कर्षोऽभिहितः । इत्युत्कर्षो धर्मपूर्वकः- सूक्ष्मत्वव्यापित्वादिधर्मैर्हि देहादिन्द्रियाणामुत्कर्ष उक्तः- एवं यदि कामस्सर्वोत्कृष्टस्तर्हि बुद्धेरपि मन एवोत्कृष्टं सकामत्वादित्युच्येत, तथा नैवोक्तम् । किंच धर्म्यधीनस्य कामरूपस्य धर्मस्य स्वतन्त्रपदार्थत्वाभावात्कथमस्मिन्धर्मिपदार्थतारतम्यविवेचनप्रकरणे तस्योपन्यासो युज्येत ।

यच्चानेनोक्तम्—कामस्य बुद्धिपरत्वे कारणं- सर्वेषु बुद्धिपर्यन्तेषूपरतेष्वपीच्छापर्यायकामो वर्तते चेत्स एवैतानीन्द्रियादीन्यपि स्वविषये वर्तयित्वा आत्मज्ञानं निरुणद्धीति, तदतीव हासास्पदम्—बुद्धेरप्युपरमे क्व कामस्याविर्भावः ? यदि तदानीमपि कामसत्त्वं तर्हि निर्विकल्पसमाधिर्भज्येत 'यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतसम्प्रमोषात् । य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिषद्मने नमः' इति भागवते मन उपरमे हंसस्फूर्तिर्दर्शिता व्यासेन । तच्च नोपपद्येत कामस्यैवाविर्भावात् । किंच धर्मिणो मनस एवोपरमे कथं धर्मस्य स्थितिः, किमग्नौ शान्ते दाहस्तिष्ठेत्, किं वा तव मनोबुद्ध्युपरमावस्थारूपायां सुषुप्तौ कामोऽस्ति, येनैवं ब्रूषे ?

यच्च वेदान्तदेशिकः—इन्द्रियाणीति श्लोके आत्मनश्चतुर्भिर्मोहनीयत्वस्योक्तत्वादिहापि तेषां चतुर्णामेव ग्रहणमुचितमिति, तदप्यसत्—तत्र कामेनैकेनैव देहिनो मोहस्य प्रतिपादितत्वात् इन्द्रियादीनि तु कामस्याधिष्ठानानीति हि तत्रोक्तं, कथं वा कामस्येन्द्रियाद्यनाश्रयेण स्वयमेव देहिनो मोहकत्वं, कथं वा इन्द्रियादीना कामानाश्रितानां देहिमोहकत्वं, येन चत्वारोऽपीन्द्रियमनोबुद्धिकामा देहिनां मोहका इत्युच्येत । तस्मादिन्द्रियाद्याश्रय काम एव देहिमोहकः, तथैव मूले दर्शनात् । एतैर्विमोहयत्येष इति इन्द्रियादीनि । तत्र करणानीति विवेकः । नच कथं मनोधर्मस्य कामस्य मनःकरणकत्वमिति वाच्यं, धर्मेऽपि कामे कर्तृत्वस्यारोपादिति । वस्तुतस्तु इन्द्रियादीनि कामस्य न करणानि, किं त्वाश्रया एव तथैव भाषितत्वादाचार्यैः इन्द्रियादिभिराश्रयैरिति । धर्मस्य हि धर्मी भवत्याश्रयः । नच मनोधर्मस्य कामस्य कथमिन्द्रियाश्रयत्वमिति वाच्यं, मनसीन्द्रियप्रवणेसति तद्द्वारा कामस्यापीन्द्रियाश्रयत्वलाभात् । मनोबुद्ध्योरेकान्तःकरणात्मकत्वात्कामस्य बुद्ध्याश्रयत्वमुचितमेव ॥४२॥

एवमिति । एवं पूर्वोक्तविधया बुद्धेः परमात्मानं बुध्वा- अनेन किमाश्रय इति प्रश्नस्योत्तर-

आत्मानं स्वेनैवात्मना सम्यक् समाधायेत्यर्थः। जहेनं शत्रुं हे महाबाहो कामरूपं दुरासदं दुःखेनासदः आसदनं प्राप्तिर्यस्य तं दुरासदं दुर्विज्ञेयानेकविशेषमिति ॥४३॥

इति श्रीपरमहंसपरिव्राजकाचार्यवर्य गोविन्दभगवत्पादपूज्यशिष्य
श्रीमच्छङ्करभगवत्पादकृतौ श्रीभगवद्गीताभाष्ये
तृतीयोऽध्यायः।

---

मायातमात्मज्ञानाश्रय इति। आत्माश्रय इति वा। आत्मानं मनः नतु सच्चिदानन्दं तस्याचलत्वेन स्तम्भनानवकाशात्सतिहि चलत्वे स्तम्भनमवकाशं लभते। मनस्तु चञ्चलत्वादपेक्षते स्तम्भनम्। आत्मनेत्यस्यार्थमाह—स्वेनैवेति। स्वयमेवेति यावत्। स्वबुद्ध्यैवेति फलितार्थः। समाधायेति। समाहितं कृत्वा निश्चलमनास्सन्नित्यर्थः। दुरासदमिति। सीदतेर्विशरणगत्यवसादनार्थकत्वाद्गत्यर्थानां ज्ञानार्थत्वाद्दुरासदं दुष्प्रापं दुर्ज्ञेयमिति यावत्।

दुःखेनासत्तुं शक्यो दुरासद इति समासः। दुखेनासदो यस्येति तु फलितार्थकथनम्। ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खलिति खल्। नच दुष्प्रजा इत्यादिवद्बहुव्रीहिरेवेति वाच्यं, प्रादिभ्यो धातुजस्य वाच्यो वाचोत्तरपदलोप इति वार्तिकादत्र धातुजाभावात्। दुष्प्रजा इत्यत्र तु दुष्टा प्रजा यस्येति धातुजस्याशब्दोस्ति प्रागतिनिवृत्ताविति धातुजातो हि स शब्दः। अत्र तु दुःखेनेत्युक्तत्वाद्दुरित्युपसर्गोत्परस्य सशब्दस्य धातुजत्वाभावात्। यदि तु बहुव्रीहिसमास एव वक्तव्य इत्याग्रहः, तर्हि दुस्थः दुष्कर इति वा आसदो यस्य तमिति विग्रहो वाच्यः।

कथं कामस्य दुर्ज्ञेयत्वमत आह—दुर्विज्ञेयानेकविशेषमिति। दुर्विज्ञेया अनेके विशेषाः प्रकारा भेदा इति यावत्। यस्य तं कामो हि बहुविधः विषयाणामानन्त्यात्। नच प्राप्तिरिति भाष्यपदस्य लाभ इत्यर्थ इति भ्रमितव्यं, कामस्य सर्वसुलभस्य दुर्लभत्वायोगात्। किंतु ज्ञानमित्येवार्थः। सीदतेरवसादनार्थत्वाद्दुरासदं नाशयितुमशक्यमित्यप्यर्थस्सूच्यते। कामो हि दुर्जयः।

अत्र बुद्धेः परं काममिति रामानुजव्याख्या तु पूर्वश्लोक एव निराकृता। नहि कामजयं प्रति कामस्य बुद्धेः परत्वज्ञानमावश्यकमतस्तदुपदेशोऽपि व्यर्थ एवेत्यापत्तिः भगवत्यप्रमाणार्थोपदेष्टृत्वमस्य मते।

इति श्रीशाङ्करभगवद्गीताभाष्यतृतीयाध्यायव्याख्यामृते भाष्यार्कप्रकाशे
बेलेकोण्डोपनामकरामकविकृते तृतीयोऽध्यायः।
श्रीहयग्रीवार्पणमस्तु।
प्लवङ्गसंवत्सरकार्तिकबहुलचतुर्दश्यामस्य समाप्तिः।

---

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु-

# श्रीभगवद्गीतासु

## चतुर्थाध्यायप्रारम्भः ।

योऽयं योगोऽध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षणस्सन्न्यासः कर्मयोगोपायो यस्मिन् वेदार्थः परिसमाप्तः प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च गीतासु च सर्वासु अयमेव योगो विवक्षितो भगवता । अतः परिसमाप्तं वेदार्थं मन्वानः तं वंशकथनेन स्तौति—

श्रीभगवानुवाच— इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।
विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥१॥

इममिति । इममध्यायद्वयेनोक्तं योगं विवस्वते आदित्याय सर्गादौ प्रोक्तवानहमव्ययं जगत्परिपालयितॄणां क्षत्रियाणां बलाधानाय । तेन हि योगबलेन युक्तास्समर्था भवन्ति ब्रह्मक्षत्रे परिरक्षितुं, ब्रह्मक्षत्रे परिपालिते जगत्परिपालयितुं अलम् । अव्ययं अव्ययफलत्वात् न ह्यस्य योगस्य सम्यग्दर्शननिष्ठालक्षणस्य मोक्षाख्यं फलं व्येति सच विवस्वान् मनवे प्राह, मनुरिक्ष्वाकवे स्वपुत्राय आदिराजायाब्रवीत् ॥१॥

---

योऽयमिति । अध्यायद्वयेनोक्तो ज्ञाननिष्ठालक्षण· सन्न्यासः कर्मयोगरूपश्चोपाय इति योऽयं योगः कर्मयोगरूपो ज्ञानयोगरूपश्चाध्यायद्वयोक्तो यो योग इत्यर्थ. । यस्मिन्नुभयात्मके योगे प्रवृत्तिलक्षणो निवृत्तिलक्षणश्च वेदार्थ· परिसमाप्त· सर्वास्वपि गीतासु भगवता विवक्षितः सोऽयमेव योग. । अतः योगस्योक्तत्वादित्यर्थः । वेदार्थं परिसमाप्तं मन्वानः तं वंशकथनेन सम्प्रदायकथनद्वारा स्तौति श्रीभगवान्—

इममिति, योगमिति । कर्मज्ञानोभयात्मकं श्रेयःप्राप्त्युपायभूतं योगमित्यर्थः । अव्ययं न विद्यते व्ययः क्षयः फलस्य यस्मात्सोऽव्यय. तमित्यभिप्रेत्याह— बलाधानायेति । मनोवाक्कायानां बलं धर्षयितुमित्यर्थः । ब्रह्मक्षत्रे ब्राह्मणक्षत्रियजाती तयोरेव याजनादिना दण्डनादिना च धर्मप्रतिष्ठापकत्वादिति भाव· । अव्ययस्यार्थान्तरमाह—अव्ययफलत्वादिति । अव्ययमस्यास्तीत्यव्यय· । तमित्यर्शआद्यजन्त इति भाव· । अव्ययफलत्वपदघटिताव्ययशब्दार्थमाह—नहीति । न व्येति न विपर्ययं प्राप्नोतीत्यव्ययं मोक्षाख्यं फलम् । मोक्षस्य अविक्रियब्रह्मरूपत्वादिति भावः । यद्वा अव्ययशब्दस्यायमेक एवार्थः । किमर्थं त्वं प्रोक्तवान्विवस्वते योगमित्याकांक्षापूरणाय बलाधानायेत्युक्तमिति व्याख्येयं भाष्यम् ॥

एवं परम्पराप्राप्तमिमं राजर्षयो विदुः ।
सकालेनेह महता योगो नष्टः परन्तप ॥२॥

एवमिति । एवं क्षत्रियपरम्पराप्राप्तमिमं राजर्षयः राजानश्च ते ऋषयश्चेति ते राजर्षयो विदुः । इमं योगं स योगः इह लोके कालेन महता दीर्घेण नष्टः विच्छिन्नसम्प्रदायसंवृत्तः, हेपरन्तप ! आत्मनो विपक्षभूताः परा इत्युच्यन्ते तान् शौर्यतेजोभिः गभस्तिभिः भानुरिव तापयतीति परन्तपः शत्रुतापन इत्यर्थः ॥२॥

स एवायं मया तेद्य योगः प्रोक्तः पुरातनः ।
भक्तोसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥३॥

दुर्बलानजितेन्द्रियान्प्राप्य नष्टं योगमुपलभ्य लोकं चापुरुषार्थसम्बन्धिनम् । स इति । स एवायं मया ते तुभ्यं अद्य योगः प्रोक्तः पुरातनः सनातनः भक्तोसि मे सखा चासीति । रहस्यं हि यस्मात् एतदुत्तमं योगो ज्ञानमित्यर्थः ॥३॥

अर्जुनः— अपरं भवतो जन्म परं जन्म विवस्वतः ।
कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥४॥

भगवता विप्रतिपिद्धमिदमुक्तमिति माभूत्कस्यचिद्बुद्धिरिति तत्परिहारार्थं चोद्यमिव कुर्वन्नर्जुन उवाच—अपरमिति । अपरं अर्वाक् वसुदेवस्य गृहे भवतो जन्म, परं पूर्वं सर्गादौ जन्म उत्पत्तिः विवस्वतः आदित्यस्य तत्कथमेतद्विजानीयां अविरुद्धार्थतया यस्त्वमादौ प्रोक्तवानिमं योगं स एवेदानीं मह्यं प्रोक्तवानसीति ॥४॥

---

एवतिमि । परम्परा गुरुशिष्यसम्प्रदायः । नष्ट इति सम्प्रदायविच्छेदाददर्शनं गत इत्यर्थः । तेजोभिः प्रतापैः ॥२॥

स इति । दुर्बलानजितेन्द्रियान्प्राप्य नष्टं योगमुपलभ्य ज्ञात्वा अपुरुषार्थसम्बन्धिनं पुरुषार्थविधुरं लोकं च उपलभ्य सएवायं पुरातनो योगोद्य मया ते प्रोक्तः । ननु किमिति मह्यमेवोक्तवानसीत्यत आह—भक्तोसि म इति । ननु भक्ता अपि बहवस्सन्त्येवेत्यत आह—सखा चेति । ननु कुतो भक्ताय सख्य एवैतदुक्तन्यमत आह—रहस्यमिति । एतदिति क्लीबत्वादाह—योगो ज्ञानमिति । अतीव रहस्यत्वादमुं योगं नाभक्ताय ब्रूयान्नाप्यसखायेत्यर्थः ॥३॥

अपरमिति, चोद्यमिवेति । इवशब्दादर्जुनः कृष्णं परमेश्वरं ।वेदैवेति सूच्यते । अथवा 'अजो नित्यश्शाश्वतोऽयं पुराण' इति भगवदुपदेशादनादिमात्मानं वेदैवार्जुन इति सूच्यते । अर्वागिति । नूतनमित्यर्थः । जन्मनोऽधिकरणाकांक्षां पूरयति— वसुदेवस्य गृहे इति । अथवा अर्वाक्शब्दार्थमाह—वसुदेवस्य गृहे इति, विजानीयामिति । ननु मयोक्तं त्वया श्रुतमेवेत्यत आह—अविरुद्धार्थतयेति । अविरुद्धार्थे त्वदुक्तमिति कथं मत्ययं भजेयमित्यर्थः । अर्वाक्तनस्य तव सर्गादावभावादिति भावः ॥४॥

श्रीभगवान् — बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ।
तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तप ॥५॥

या वासुदेवे अनीश्वरासर्वज्ञाशङ्का मूर्खाणां तां परिहरन् भगवानुवाच—यदर्थो ह्यर्जुनस्य प्रश्नः । बहूनीति । बहूनि मे व्यतीतानि अतिक्रान्तानि जन्मानि तव च । हेअर्जुन! तान्यहं वेद जानामि सर्वाणि, न त्वं वेत्थ त्वं न जानीषे धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वात्। अहं पुनर्नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिरिति वेदाहं हेपरन्तप ॥५॥

अजोपि सन्नव्ययात्मा भूतानामीश्वरोपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ॥६॥

कथं तर्हि तव नित्येश्वरस्य धर्माधर्माभावे जन्मेति, उच्यते—अज इति । अजोपि जन्मरहितोपि सन्, तथा अव्ययात्मा अक्षीणज्ञानशक्तिस्वभावोपि सन्, तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानां ईश्वरोपि ईशनशीलोपिसन् प्रकृतिं मम वैष्णवीं मयां त्रिगुणात्मिकां यस्या वशे सर्वमिदं जगद्वर्तते, यया मोहितं जगत्सत् स्वमात्मानं वासुदेवं न जानाति तां प्रकृतिं स्वामधिष्ठाय वशीकृत्य सम्भवामि देहवानिव जात इव आत्ममायया आत्मनो मायया न परमार्थतो लोकवत् ॥६॥

---

बहूनीति, यदर्थ इति । मूर्खप्रत्यायनार्थं इत्यर्थः । श्रीकृष्णं भगवन्तं सर्वे मूर्खा अपि जानीयुरिति बुद्ध्या अर्जुनेन पृष्टत्वादस्यार्थस्येति भावः । ननु त्वमिवाहमपि जन्ममरणादिमानेव तत्कुतस्त्वं वेत्थ, नाहं वेद्मीत्यत आह—धर्माधर्मेति । जीवाः प्रकृतिपरतन्त्रत्वात्प्रतिबद्धबुद्धय किञ्चिद्ज्ञा , ईश्वरस्तु प्रकृत्यवश्यत्वादप्रतिबद्धबुद्धिः सर्वज्ञ इति नित्यश्शाश्वतश्शुद्धो निर्मलः बुद्धः प्राज्ञः मुक्तश्च स्वभावो यस्य ॥ न विद्यते आवरणं यस्यास्सा अनावरणा ज्ञानशक्तिर्यस्य सः एकस्याप्यात्मनः प्रकृतिकृतोऽस्ति जीवेश्वरभेदो मठाद्युपाधिकृत इवाकाशभेदः । अजस्याप्यात्मनश्शरीरसम्बन्धकृतानि सन्ति जन्मानि चेति न काचिदिहानुपपत्तिः ॥५॥

अजोपीति । ननु अजस्यापि जीवस्य धर्माधर्मसंस्कारवशाज्जन्मनाशौ भवतां नाम धर्माधर्मकृतत्वाच्छरीरसंयोगवियोगयोः । ईश्वरस्य तु नित्यमुक्तस्य कथं धर्माधर्मसद्भावो येन जन्मादिकं स्यादिति शङ्कायामयं श्लोक. प्रवृत्त इत्याह—कथमिति, अजोपीति । पुण्यापुण्यकर्माधीनशरीरसंयोगरहितोपीत्यर्थः । 'आत्मा यत्ने धृतौ बुद्धौ स्वभावे परमात्मनी'ति कोशादाह—स्वभाव इति । भूतानामीशनं च भीषाऽस्माद्वातः पवत इत्यादिश्रुतिसिद्धम् । ईशनं नियमनं विष्णोः परमात्मन इमां वैष्णवीं त्रयो गुणास्सत्त्वादय आत्मा स्वरूपं यस्यास्तां त्रिगुणात्मिकां स्वमात्मानं मत्स्वरूपम् । ननु प्रकृतिमधिष्ठायापि कथमजस्य जन्मेत्यत आह—आत्ममाययेति । आत्मनो मम मायया इन्द्रजालतुल्यया विचित्रशक्त्येत्यर्थः । व्यतिरेकमाह—न परमार्थतो लोकवदिति । यथा लोकः परमार्थतः सम्भवति न तथेत्यर्थः । ननु प्रकृतिमाययोरेकार्थत्वात्प्रकृतिमधिष्ठाय मायया सम्भवामीत्ययुक्तमुक्तं मूलकर्त्रा- न परमार्थतो लोकव-

दिति भाष्यकर्त्राप्युक्तमुक्तं- परमार्थतो लोकस्यैवाभावादिति चेत्, मैवम्—अविद्यामात्रं प्रकृतिः, दोषसहकृता विद्या तु माया, अविद्योपादानकं कार्यं व्यावहारिकत्वात्परमार्थतो जातमित्युक्तं- मायोपादानकं तु प्रातिभासिकत्वान्न परमार्थत इति । यथा अविद्याजन्यस्सर्पस्सत्यसर्पो मायामयस्तु रज्जुसर्पो मिथ्यासर्पः, यथा वा जाग्रत्प्रपञ्चोऽविद्याजन्यस्सत्यप्रपञ्चः- स्वाप्नप्रपञ्चो मायामयो मिथ्याप्रपञ्चः तद्वज्जीवानां शरीरसंयोगोऽविद्याजन्यः- ईश्वरस्य तु मायामय इत्यदोषात् । प्रकृतिमधिष्ठायेति वचनं तु जीवानामिव नास्याविद्यामयश्शरीरसंयोगः अविद्याया एतत्परतन्त्रत्वादेतस्य शरीरसंयोगं कर्तुं न क्षमत इति बोधनार्थम् । अविद्या हि जीवान् स्ववशीकृत्य तेषां स्वजन्यशरीरसंयोगं विधत्ते । नात्र कूटस्थ आत्मा जीवशब्देन विवक्षितः, किंतु साभासबुद्धिरेव विज्ञानात्मा जीव इति । कूटस्थ आत्मा हीश्वराद्भिन्नः तत्त्वमस्यादिश्रुतेः । जीवस्य वास्तवं रूपं कूटस्थ आत्मैव, व्यावहारिकं तु साभासबुद्धिरिति विवेकः ।

यद्वा त्रिगुणात्मिका माया प्रकृतिः, इन्द्रजालशक्तितुल्या तु मायेति विवेकः । तथाच प्रकृतिकार्यं जीवानां देहेन्द्रियादिकं व्यावहारिकं, मायाकार्यमीश्वरस्य देहेन्द्रियादिकं तु ऐन्द्रजालिकगन्धर्वनगरवत्प्रातिभासिकम् । अतएव न परमार्थतो लोकवदिति भाषितमाचार्यैः । अत्र परमार्थत इत्यस्य व्यवहारत इत्यर्थः । नतु वस्तुत इति- वस्तुतो लोकस्यैवाभावात् ।

अत्रेदं बोध्यम्—व्यावहारिकसत्, पारमार्थिकसत्, प्रातिभासिकसत्, अत्यन्तासच्चेति चतुर्विधं पदार्थजातम् । तत्र व्यावहारिकसत् जाग्रद्दशायामदुष्टप्रमाणैरनुभूयमानं जगन्मनुष्यपशुपक्ष्यादिकं भूम्यादिभूतात्मकं च, पारमार्थिकसत् एकमेवाद्वितीयं ब्रह्म, प्रातिभासिकसत् स्वप्नेन्द्रजालरज्जुसर्पादिकं यद्दुष्टप्रमाणैर्गृह्यते प्रतिभानसमयमात्रवर्ति, अत्यन्तासत्तु वन्ध्यापुत्रशशशृङ्गादिकं प्रतीतितोपि तस्याभावात् । तदुक्तं 'वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायत' इति ।

एवं स्थिते ईश्वरावतारा रामकृष्णादयः नात्यन्तासन्तः- प्रतीतितस्सत्त्वात्, न पारमार्थिकसन्तः- परमार्थदशायामभावात्, नापि व्यावहारिकसन्तः- अतर्कितजन्मादीनां तेषां व्यावहारिकत्वासम्भवात् । अतः प्रातिभासिकसत्त्वमवशिष्टं तेषां युक्तं च तदविचारितरमणीयत्वाद्गन्धर्वनगरादिवत् । नहि चतुर्भुजश्शङ्खचक्रादिमान्किरीटादिभूषितस्सर्वज्ञश्शिशुः कस्याश्चिदासीदिति केनचिदुक्ते कोपि सम्प्रतीयात्स्ययं वृत्तान्त इति । तथा स्तम्भान्नरसिंहो भयाकृतिः पुरुष आविरासीदित्युक्तेपि यदि विचाराक्षमं तत्खल्विन्द्रजालवन्मिथ्या ।

यद्यपि सिद्धान्ते व्यावहारिकं जगदपि विचाराक्षममेव- 'पुनस्तात्किमिवेन्द्रजालमपरं यद्गर्भवासस्थितं रेतश्चेतति हस्तमस्तकपदप्रोद्भूतनानांकुर'मिति, तथापि रेतोबीजमृदादेस्सकाशाद्देहवृक्षघटादिजन्मनस्सर्वानुभवसिद्धत्वान्न तत्र कस्यचिदप्याश्चर्यलेशः, अप्रमाणबुद्धिर्वा । तत्तद्विचाराक्षमित्युच्यते यत्किञ्चनाश्चर्यविषयभूतम् । यत्तु तदाश्चर्यविषयभूतं तद्विचाराक्षमं मिथ्येत्युच्यते- यथा गन्धर्वनगरादिकमिति । तस्मादिन्द्रजालवद्विचित्रहेतुरीश्वरशक्तिर्माया, सर्वसाधारणा तु प्रकृतिरिति ।

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत !**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥७॥**

**तच्च जन्म कदा किमर्थं चेति, उच्यते—यदेति । यदा यदा हि धर्मस्य ग्लानिर्हानिः वर्णाश्रमादिलक्षणस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य भवति, भारत ! अभ्युत्थानमुद्भवः अधर्मस्य तदा तदा आत्मानं सृजाम्यहं मायया ॥७॥**

---

अथवा प्रकृतिर्माया चेत्येकमेव वस्तु- वशीकृतप्रकृतिरहं प्रकृत्यैव सम्भवामि, न तु धर्माधर्मादिनेत्येतदर्थमात्ममाययेत्युक्तं- यो हि धर्माधर्मादिसंस्कारसचिवप्रकृतिजन्यो मनुष्यादिस्स परमार्थतो जात इत्युच्यते । यस्तु केवलमायाजन्यो रामकृष्णादिस्स परमार्थतो न जात इति जात इवेत्युच्यते- यथा अज्ञस्य सकामं कर्म वस्तुत. कर्मैव । प्राज्ञस्य तु निष्कामं तत्कर्म न वस्तुतः कर्म, किंतु कर्मेवाभाति- अबन्धकत्वात् । तथा प्राज्ञस्येश्वरस्याबन्धकत्वाद्रामकृष्णादिदेहधारणलक्षणं जन्म न वस्तुतो जन्म, किंतु जन्मेव प्रतिभाति- अबन्धकत्वादज्ञस्य जीवस्य तु मनुष्यादिदेहधारणलक्षण जन्म वस्तुतो जन्मैव- बन्धकत्वादित्यभिप्राय । द्वैतिनश्च ईश्वरस्य न कर्माधीनं जन्म, किं तु लीलयैवेत्याहुः- सा च लीला मायातोऽनतिरिक्तैव मायामयत्वाल्लीलाया । नहि वस्तुतो निर्विशेषे ईश्वरे लीला सम्भवेदित्यलम् ।

एतेन जीवपदवाच्यायाः प्रकृतिपरतन्त्रायास्साभासबुद्धेर्यथा प्रकृतिजन्यशरीरसंयोगात्मकं जन्मास्ति, तथा ईश्वरपदवाच्यस्य प्रकृत्यपरतन्त्रस्य कूटस्थस्यात्मनो नास्ति प्रकृतिजन्यशरीरसंयोगात्मकं जन्म, किंतु मायामयमेव तदिति पर्यवसन्नश्श्लोकार्थ. ।

ननु ईश्वरशरीरस्य प्रातिभासिकत्वेन मायामयत्वं, जीवशरीराणां व्यावहारिकत्वेन प्रकृतिमयत्वमिति विवेको दुष्कर·- यावद्व्यवहारमर्जुनशरीरवत्कृष्णशरीरस्यापि वर्तमानत्वादिति चेत् , मैवम्—कृष्णशरीरस्यानेकविधत्वेन दृश्यमानत्वात्कदाचिददृश्यमानत्वाच्च मायामयत्वं- यथा रज्जुसर्पस्य कदाचिद्दण्डादिरूपेण दृश्यमानत्वात्कदाचिददर्शनाच्च मायामयत्वं -तद्वत् । तस्मादर्जुनादिवन्नास्ति परमार्थतो जन्म कृष्णस्येति कृष्णस्य नित्याजेश्वरत्वं युक्तम् ।

परन्तु रामानुजः—नेदं कृष्णस्य जन्म इन्द्रजालादिवन्मिथ्या, किंतु सत्यमेव- प्रकृतिं स्वभावमधिष्ठायाजहदेव आत्ममायया सङ्कल्पज्ञानेन सम्भवामि ईश्वरस्य स्वस्वरूपं च 'आदित्यवर्णं हिरण्मयं सर्वे निमेषा जज्ञिरे विद्युतः पुरुषा'दित्यादिश्रुतिसिद्धमिति, तत्तुच्छम्—'सच्चिदानन्दं ब्रह्म, निष्कलं निष्क्रियं शान्तमशब्दमस्पर्शमरूपमव्यय'मित्यादिश्रुत्या ईश्वरस्य नीरूपत्वस्वभावसिद्धेः हिरण्यवर्णत्वादिरूपस्य उपासनार्थं कल्पितत्वेन इन्द्रजालवन्मायामयत्वसिद्धेश्च, ईश्वरस्य सविग्रहत्वे सर्वान्तरत्वसाक्षित्वाद्यसिद्धेश्च, दृश्यत्वेन घटादिवदनित्यत्वप्रसङ्गाच्च, सङ्कल्पेनाप्यजस्य जन्मायोगाच्च, असङ्गपुरुषस्येश्वरस्य वस्तुतश्शरीरसङ्गयोगाच्च मिथ्यैवायं कृष्णावतार. ॥६॥

यदा यदेति । हेभारत यदा यदा धर्मस्य ग्लानिर्भवति, अधर्मस्याभ्युत्थानं भवति तदा तदा आत्मानं सृजामि । आत्मानं मां सृजाम्याविर्भावयामि । कथमात्मनोऽजस्य जन्मेत्यत आह—माययेति ॥७॥

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगेयुगे ॥८॥

किमर्थम्--परित्राणायेति । परित्राणाय परिरक्षणाय साधूनां सन्मार्गस्थानां विनाशाय च दुष्कृतां पापकारिणाम् । किंच धर्मसंस्थापनार्थाय धर्मस्य सम्यक् स्थापनं धर्मसंस्थानं तदर्थं सम्भवामि युगेयुगे प्रतियुगम् ॥८॥

जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ।
त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥९॥

तत् जन्मेति । जन्म मायारूपं कर्म च साधूनां परित्राणादि मे मम दिव्यं अप्राकृतमैश्वरम् । एवं यथोक्तं यो वेत्ति तत्त्वतः तत्त्वेन यथावत् त्यक्त्वा देहमिमं पुनर्जन्म पुनरुत्पत्तिं नैति न प्राप्नोति, मामेति प्राप्नोति स मुच्यते अर्जुन ! ॥९॥

---

परित्राणायेति । साधूनां परित्राणाय, दुष्कृतां विनाशाय, धर्मसंस्थापनार्थाय च युगेयुगे अहं सम्भवामि साधूनां सन्मार्गस्थानां देवर्ष्यादीनाम् ।

यत्तु रामानुजः—विष्णुविग्रहासहाना वैष्णवाग्रेसराणामिति, तदतीव तुच्छम्—किं ज्ञानिनो वैष्णवाग्रेसरा ? उताज्ञानिन ? आद्ये 'वासुदेवः सर्वमिति, स महात्मा सुदुर्लभ' इत्युक्तरीत्या सर्वं ब्रह्मेति, सर्वगत्वादनन्तस्य 'स एवाहमवस्थित , मत्तः सर्वमहं सर्वं मयि सर्वं सनातन' इति महोक्तरीत्या ब्रह्माहमस्मीति च येषां ज्ञानमस्ति त एवाद्वैतिनो वैष्णवाग्रेसरा । तेषां कथं विष्णुविरहप्रसङ्ग । विष्णोरेव स्वात्मत्वात्सदापि विष्ण्वभिन्नात्मानन्दानुभवस्यप्रत्वाच्च । न द्वितीय - विष्णुमजानतां वैष्णवत्वासम्भवात् ये विष्णु जानन्तस्तत्र भक्तिं तन्वन्ति ते हि वैष्णवा - 'विष्ण्वर्पिताखिलाचारः स हि वैष्णव उच्यते' इति शास्त्रात् । नच 'न चलति निजवर्णधर्मतो य स्थिरमतिरस्तमवेहि विष्णुभक्त'मिति वचनात्स्ववर्णाश्रमधर्मस्थो वैष्णव इति वाच्यं, तस्य योगित्वाद्योगिन एव वैष्णवत्वे ज्ञानिनोऽवैष्णवत्वापत्ते । 'प्रियोहि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति वक्ष्यमाणगीताविरोधाच्च । नहि विष्णुप्रियो ज्ञानी वैष्णवो न भवतीति वक्तुं शक्यम् । भवतु वा योगिनोपि ज्ञानशून्यस्य वैष्णवत्वं, कथं पुनस्तस्य भगवद्विरहासहत्वम् ? भगवत्स्वरूपस्वभावादिज्ञानस्यैवाभावात् । नच तप्तशङ्खचक्रचिह्नधारिण ऊर्ध्वपुंड्रधरा अर्चापूजका द्विजा वैष्णवा इति वाच्य, तापादीनां वेदविरुद्धाचारत्वेन एवंविधदुराचारवतां दुष्कृतां विनाशायैव भगवदवताराविर्भावाच्च । नामी वैष्णवा । तापादीनां द्विजेतराविषयत्वं तु मार्कण्डेयधर्मदर्पणाख्ये ग्रन्थे विस्तरतो द्रष्टव्यम् । तस्मात्साधुपदर्दर्शनमात्रेण नेह वैष्णवजनाडम्बरं प्रसञ्जुमर्हति ॥८॥

जन्मेति । एवं य मे जन्म दिव्यं कर्म च तत्त्वतो वेत्ति हेऽर्जुन ! स देहं त्यक्त्वा पुनर्जन्म नैति मामेति । मायारूपं मिथ्याभूतमित्यर्थं । ईश्वरस्येदं ऐश्वरम् । पुनर्जन्म नैति, मामेतीत्यस्य फलितमाह—स मुच्यत इति । अजो नित्यशुद्धो बुद्धो मुक्त आत्मा ततो न जायते, किंतु माययैव, तस्य चेष्टितं च न प्राकृतं, किं त्वप्राकृतं लोकातीतमेवेति यो वेद स मुच्यत इत्यर्थं ।

वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ।
बहवो ज्ञानतपसा पूता मद्भावमागताः ॥१०॥

नैष मोक्षमार्गः इदानीं प्रवृत्तः किं तर्हि पूर्वमपि, वीतेति । वीतरागभयक्रोधाः रागश्च भयं च क्रोधश्च वीताः येभ्यस्ते मन्मयाः ब्रह्मविदः ईश्वराभेददर्शिनः मामेव च परमेश्वरमुपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः । बहवः अनेके ज्ञानतपसा ज्ञानमेव परमात्मविषयं तपः तेन ज्ञानतपसा पूताः परां शुद्धिं गतास्सन्तः मद्भावमीश्वरभावं मोक्षमागतास्समनुप्राप्ताः, इतरतपोनिरपेक्षाः । ज्ञाननिष्ठा इत्यस्य लिङ्गं ज्ञानतपसेति विशेषणम् ॥१०॥

ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ।
मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥११॥

तव तर्हि रागद्वेषौ स्तः, यतः केभ्यश्चिदेव आत्मभावं प्रयच्छसि न सर्वेभ्य इति, उच्यते—य इति । ये यथा येन प्रकारेण येन प्रयोजनेन यत्फलार्थितया मां प्रपद्यन्ते तांस्तथैव तत्फलदानेन भजामि अनुगृह्णामीत्येतत् । अहं तेषां मोक्षं प्रत्यनर्थित्वात् । न ह्येकस्य मुमुक्षुत्वं फलार्थित्वं च युगपत्सम्भवति । अतो ये यत्फलार्थिनः तान् तत्फलदानेन ये यथोक्तकारिणस्त्वफलार्थिनो मुमुक्षवश्च तान् ज्ञानप्रदानेन, ये ज्ञानिनः सन्न्यासिनो मुमुक्षवश्च तान्मोक्षप्रदानेन, तथा आर्तानामार्तिहरणेन इत्येवं यथा प्रपद्यन्ते ये तांस्तथैव भजामीत्यर्थः । 'तं यथा यथोपासते तत्तमेव फलं लभते' इति श्रुतेः । न पुनः रागद्वेषनिमित्तं मोहनिमित्तं वा कञ्चिद्भजामि सर्वदापि सर्वावस्थस्य ममेश्वरस्य वर्त्म

ननु ईश्वरजन्मकर्मज्ञानात्कथं जीवस्य मुक्तिरिति, चेदुच्यते—ईश्वरो हि जीवस्य सत्स्वरूपम् । तस्मादीश्वरतत्त्वज्ञाने सति जीवतत्त्वं ज्ञातमेवेति भवति मुक्तिरिति ।

यत्तु रामानुजः—मज्जन्मकर्मणी ज्ञात्वा निष्पापो भूत्वा मामाश्रित्य मदेकप्रियो मच्चित्तो मामेव प्राप्नोतीत्याह, तदप्रमाणम्—मूलाद्बहिर्बहूनां पदार्थानां कल्पितत्वान्मदाश्रयणादीनाम् ॥९॥

वीतेति । वीतरागभयक्रोधा मामुपाश्रिता ज्ञानतपसा पूता बहवो मन्मया मद्भावमागता—रागभयादित्यागपूर्वकं केवलज्ञानयोगमाश्रित्य तत एव परिशुद्धा अनेके ब्रह्मविदो मोक्षं प्राप्ता इत्यर्थः । केवलज्ञाननिष्ठा इति । इतरतपोनैरपेक्ष्येण ज्ञानयोगनिष्ठा इत्यर्थः । ननु किमत्र ज्ञापकमत आह—लिङ्गमिति । ज्ञानतपसा पूता इति विशेषणमेव लिङ्गं ज्ञापकम् । ज्ञानमेव तपो ज्ञानतप इति हि समासः । तत्रैवकारेण तपोन्तरव्यवच्छेद इति भावः । यद्वा ज्ञाने तपस्त्वारोपणाच्चपोन्तरव्यवच्छेदः । सति ह्वितरतपसि किमिति ज्ञाने तपस्त्वारोपणपूर्वकं कृत्रिमतपसो ज्ञानस्योपादानम् । नहि ज्ञानं वस्तुतस्तप इति ॥१०॥

य इति । तमितिश्रुतेरयमर्थः—तमीश्वरं यथा यथा येन येन प्रकारेण यं यमर्थमभिसन्धायेति यावत् । उपासते पुरुषाः तं तमेव फलमर्थं लभते प्राप्नुवन्तीति वचनव्यत्ययश्छान्दसः । सर्वावस्थस्येति ।

मार्गमनुवर्तन्ते मनुष्याः यत्फलार्थितया यस्मिन् कर्मणि अधिकृताः ये प्रवर्तन्ते ते मनुष्याः उच्यन्ते पार्थ सर्वशः सर्वप्रकारैः ॥११॥

काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ।
क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥१२॥

यदि तवेश्वरस्य रागद्वेषाभावात् सर्वप्राणिष्वनुजिघृक्षायां तुल्यायां सर्वफलप्रदानसमर्थे च त्वयिसति- 'वासुदेवस्सर्व'मिति वास्तवज्ञानेनैव मुमुक्षवस्सन्तः कस्मात्त्वामेव सर्वे न प्रपद्यन्त इति, शृणु- तत्र कारणम्—काङ्क्षन्त इति । काङ्क्षन्तः प्रार्थयन्तः कर्मणां सिद्धिं फलनिष्पत्तिं यजन्ते इह अस्मिल्लोके देवताः इन्द्राग्न्याद्याः। 'अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योहमस्मीति न स वेद यथा पशुरेवँ स देवाना'मिति श्रुतेः तेषां भिन्नदेवतायाजिनां फलकांक्षिणां क्षिप्रं शीघ्रं हि यस्मात् मानुषे लोके मनुष्यलोके हि शास्त्राधिकारात् क्षिप्रं मानुषे लोक इति विशेषणात् । अन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान्—मानुषे लोके वर्णाश्रमादिकर्माधिकार इति विशेषः । तेषां वर्णाश्रमाद्यधिकारिणां कर्मिणां फलसिद्धिः क्षिप्रं भवति कर्मजा कर्मणो जाता ॥१२॥

---

सर्वप्रकारमवस्थितस्येत्यर्थः । ब्रह्मादिस्थावरान्तरूपेण सच्चिदानन्दरूपेण च स्थितस्येति यावत् । मायया वस्तुतश्चेति भावः । मम वर्त्मानुवर्तन्ते मदुक्तमार्गानुष्ठानद्वारा मामेव भजन्ते इत्यर्थः ।

यत्तु रामानुजः—मम वर्त्म मत्स्वभावमनुवर्तन्ते अनुभूयानुवर्तन्त इति, तत्तुच्छम्—वर्त्मनः स्वभावार्थाभावात् । अनुभूयेतिपदाभावाच्च । मनुष्याणां सर्वप्रकारैर्भगवत्स्वभावानुभवस्य दुष्करत्वाच्च ॥

काङ्क्षन्त इति । अथेति श्रुतेरयमर्थः—यः अन्यामिन्द्रादिदेवतां असावन्यः अहमन्योस्मीत्युपास्ते कर्मफलदाता इन्द्रः तद्भोक्तात्वहमिति भेदबुद्ध्योपास्ते इत्यर्थः । सः न वेद- अज्ञ इत्यर्थः । तत्र दृष्टान्तमाह—यथा पशुरिति । यथा पशुर्मनुष्याणां भोग्य एवं स कर्मी देवानां भोग्य इति देवपशुरेवेत्यर्थः । भिन्नदेवतेति । वासुदेवस्य सर्वात्मत्वात्स्वात्माभिन्नदेवतात्वं नत्विन्द्रादीनां- तेषामसर्वात्मत्वात् । दर्शितं चैतद्भागवते व्यासेनैव- 'एवं गजेन्द्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिङ्गभिदाभिमानाः । नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासी'दिति । तथा च इन्द्रादयः भिन्नदेवताः वासुदेव एक एवाभिन्नदेवतेति बोध्यम् ।

वस्तुतस्तु वासुदेवो नाम न कश्चित्कार्यकरणसङ्घातविशेषे अहमित्यभिमानवान् पुरुषः इन्द्रादिवत्, किंतु नित्यशुद्धबुद्ध आत्मैवेति कथमात्मनो भिन्नदेवतात्वमिति ज्ञेयम् । हिशब्दः प्रसिद्धिद्योतकः । तामेव प्रसिद्धिमाह—शास्त्राधिकारादिति । मानुषे लोके भूलोके, तत्रापि मनुष्याणां, तेष्वपि त्रैवर्णिकानामेव शास्त्राधिकारः । शास्त्रस्य च फलवत्त्वाच्छास्त्राधिकारिणामेव फलसिद्धिरिति भावः । ननु मानुषे लोके कर्मजा सिद्धिः क्षिप्रं भवतीति कोर्थः क्षिप्रपदनिर्देशेनेत्यत आह—अन्येष्वपीति । अन्येषु लोकेषु कर्मजा सिद्धिश्चिराय भवतीत्यर्थः ।

चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ।
तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥१३॥

मानुष एव लोके वर्णाश्रमादिकर्माधिकारो नान्येषु लोकेष्विति नियमः, किं निमित्त इति । अथवा- वर्णाश्रमादिप्रविभागोपेता मनुष्याः मम वर्त्मानुवर्तन्ते सर्वश इत्युक्त, कस्मात्पुनः कारणात् नियमेन तवैव वर्त्मानुवर्तन्ते नान्यस्येति ? उच्यते—चातुर्वर्ण्यमिति । चत्वार एव वर्णाश्चातुर्वर्ण्यं मया ईश्वरेण सृष्टमुत्पादितं गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च गुणास्सत्त्वरजस्तमांसि तत्र सात्त्विकस्य सत्त्वप्रधानस्य ब्राह्मणस्य शमो दमस्तप इत्यादीनि कर्माणि, सत्त्वोपसर्जनस्य रजःप्रधानस्य क्षत्रियस्य शौर्यतेजः प्रभृतीनि कर्माणि, तम उपसर्जनस्य रजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि, रजउपसर्जनस्य तमःप्रधानस्य शूद्रस्य शुश्रूषैकमेव कर्मेति, एव गुणकर्मविभागशश्चातुर्वर्ण्यं मया सृष्टमित्यर्थः । तच्चेदं चातुर्वर्ण्यं नान्येषु लोकेषु । अतो मानुषे लोके इति विशेषणम् । हन्त ! तर्हि चातुर्वर्ण्यस्य सर्गादेः कर्मणः कर्तृत्वात् तत्फलेन युज्यसे अतो न त्वं नित्यमुक्तो नित्येश्वर इति, उच्यते—यद्यपि मायासंव्यवहारेण तस्य कर्मणः कर्तारमपि सन्तं मां परमार्थतो विद्ध्यकर्तारम् ।

---

ननु अन्येषु लोकेषु कर्माधिकारस्यैवाभावात्कथं कर्मसिद्धिरितिचेदुच्यते—इहानुष्ठितानामेव विविधाना कर्मणा फलान्यपि विविधानि पुत्रपशुस्वर्गादिरूपाणि भवन्ति, तत्र पशुपुत्रादिरूपा ऐहिककर्मसिद्धि क्षिप्रं भवति, स्वर्गादिरूपा आमुष्मिककर्मसिद्धिस्तु चिराय भवतीति कर्माधिकाराभावेपि स्वर्गलोकादिषु कर्मसिद्ध्यस्सन्त्यचेति । कर्मसिद्धय कर्मफलानि ॥१२॥

चातुर्वर्ण्यमिति । मया चातुर्वर्ण्यं गुणकर्मविभागश सृष्टम् । तस्य कर्तारमपि मामकर्तारमव्ययं विद्धि । चतुर्वर्णशब्दात्स्वार्थे ष्यञ् । चातुर्वर्ण्ये सत्त्वमुपसर्जनमप्रधानं यस्य स सत्त्वोपसर्जन तस्य शुश्रूषा त्रैवर्णिकसेवा । यतस्सर्वज्ञोह गुणकर्मविभागपूर्वकं चातुर्वर्ण्यं सृष्टवांस्ततो मनुष्या ममैव वर्त्मानुवर्तन्ते स्वस्वविहितवर्णाश्रमधर्मानुष्ठानद्वारा तद्विधायकं मामेव सेवन्त इत्यर्थ । मनुष्यलोके चातुर्वर्ण्यस्य गुणकर्मविभागवतस्सत्त्वादिहैव कर्माधिकार । अन्येषु लोकेषु तु चातुर्वर्ण्याभावान्न कर्माधिकार इत्यन्योर्थ - द्वेधा अवतारिकाया कृतत्वाद्भाष्यकारैरस्य श्लोकस्य । सर्गादेरित्यादिपदात्स्थितिलययोर्ग्रहणम् । कर्मण क्रियाया ■ यत्कर्मकर्ता स तत्फलेन युक्तो भवति- यथा कृषीवलस्सस्येनेति व्याप्तिसत्त्वाच्चातुर्वर्ण्यसृष्ट्यादिकर्मकर्ता त्वमपि तत्फलेन युज्यस एव, भवतु को दोषस्तत्राह—न त्वं नित्यमुक्त इति । कर्मफलबद्धस्य कथं मुक्तत्वमिति भाव । नन्वीश्वरस्य मम किं मुक्त्येत्यत आह—नित्येश्वर इति । बद्धस्यानीश्वरत्वं लोकन्यायेनापि सिद्धमिति भाव । अस्मिन्प्रश्ने प्रतिजानाति—उच्यत इति । निमुच्यते तदाह— यद्यपीत्यादिना । संव्यवहार एकीकृत्य व्यवहार तादात्म्याध्यास इति यावत् । माययैव सृष्ट्यादीनि कर्माणि क्रियन्ते, नत्वीश्वरेण तस्याक्रियत्वात् । मायातादात्म्याध्यासात्तु कर्तृत्वमारोप्यतेऽशरीरेश्वरे इति भाव । इदमेवोक्तं विश्वामित्रेणाध्यात्मरामायणे—'रामो न

अतएव चाव्ययं असंसारिणं च मां विद्धि ॥१३॥

न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ।
इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥१४॥

येषां तु कर्मणां कर्तारं मां मन्यसे परमार्थतः तेषामकर्त्तैवाहम् । यतः, नेति । न मां तानि कर्माणि लिम्पन्ति- देहाद्यारम्भकत्वेन अहङ्काराभावात् । न चैतेषां कर्मणां फले मे मम स्पृहा तृष्णा । येषां तु संसारिणां अहं कर्तेत्यभिमानः,- कर्मसु स्पृहा च तत्फलेषु तान् कर्माणि लिम्पन्तीति च युक्तं- तदभावच्च मां तानि कर्माणि लिम्पन्तीत्येवं योन्योऽपि मामात्मत्वेनाभिजानाति, नाहं कर्ता, न मे कर्मफले स्पृहेति । स कर्मभिर्न बध्यते- तस्यापि न देहाद्यारम्भकाणि कर्माणि भवन्तीत्यर्थः ॥१४॥

एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।
कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥१५॥

एवमिति । नाहं कर्ता, न मे कर्मफले स्पृहेति । एवं ज्ञात्वा कृतं कर्म पूर्वैरप्यतिक्रान्तैः मुमुक्षुभिः । कुरु कर्मैव तस्मात्त्वं न तूष्णीमासनं नापि सन्न्यासः कर्तव्यः । तस्मात्त्वं

---

गच्छति न तिष्ठति नानुशोचत्याकांक्षते त्यजति नो न करोति किञ्चित् । आनन्दमूर्तिरचलः परिणामहीनो मायागुणाननुगतो हि तथा विभाति ॥' इति । कथं कर्तुरकर्तृत्वमत आह—परमार्थत इति । वस्तुतोऽकर्ताप्यहं मायया कर्तेव प्रतीय इत्यर्थः । अत एवेति । वस्तुतोऽकर्तृत्वादेवेत्यर्थः । यस्संसरति स व्येतीत्युच्यते- संसारस्यैव विकारत्वादित्यभिप्रायादाह—अव्ययमसंसारिणमिति । निर्विकारमित्यर्थः ॥१३॥

नेति । लिम्पन्ति बध्नन्तीत्यर्थः । केन प्रकारेणेत्यत आह—देहाद्यारम्भकत्वेनेति । आदिपदादिन्द्रियादिग्रहणं, विषयादिग्रहणं वा । न कर्मभिर्मम जन्मवृद्ध्यादिरूपसंसारात्मको लेपोऽस्तीत्यर्थः । तत्र हेतुमाह—अहङ्काराभावादिति । कर्ताहमिति विपरीतज्ञानाभावादित्यर्थः । ननु भगवतः कृष्णस्य नास्ति कर्मलेप, नास्ति कर्मफलस्पृहेति ज्ञानमात्रात्कथमन्येषामस्मदादीनां मुक्तिरत आह—मामात्मत्वेनेति । यः कर्मलेपरहितः कर्मफलतृष्णारहितश्चेश्वरः [illegible] एवाहं, अहमेव स ईश्वर इति मदभिन्नमात्मानमात्माभिन्नं च मां यो वेत्ति- एवमीश्वरात्मदर्शिनः कीदृशी बुद्धिर्भवतीत्यत आह—नाहं कर्ता न मे कर्मफले स्पृहेति । ममैवेश्वरत्वादीश्वरस्यैवात्मत्वाच्च नाहं कर्ता न मे कर्मफले स्पृहेति यो जानातीत्यर्थः । सः पुरुषः कर्मभिर्न बध्यते । तस्यापि कर्माणि नित्यानि नैमित्तिकानि काम्यानि निषिद्धानि वा तदाचरितकर्माणि देहाद्यारम्भकाणि न भवन्ति । फलाभिसन्ध्यहङ्काराभावस्य तुल्यत्वादिति भावः । एतेन फलाभिसन्ध्यहङ्कारयोस्सत्त्वे एव कर्मणां बन्धकत्वं, नतु तदभावे इति सिद्धान्तितम् ॥१४॥

एवमिति । एवंशब्दार्थमाह—नाहं कर्ता न मे कर्मफले स्पृहेतीति । पूर्वैरित्यस्यार्थमाह—अतिक्रान्तैरिति । प्राचीनैरतीतैरित्यर्थः । कर्मैवेत्येवकारस्यावर्त्यार्थमाह—न तूष्णीमासनं

पूर्वैरप्यनुष्ठितत्वात्। यद्यज्ञः आत्मशुद्ध्यर्थं तत्त्वविच्चेल्लोकसंग्रहार्थं पूर्वैर्जनकादिभिः पूर्वतरं कृतं नाधुना कृतं निर्वर्तितम् ॥१५॥

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः।
तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१६॥

नन्वत्र कर्मचेत्कर्तव्यं तद्वचनादेव करोम्यहं, किं विशेषितेन पूर्वैः पूर्वतरं कृतमिति, उच्यते—यस्मान्महद्वैषम्यं कर्मणि, कथम्? किमिति। किं कर्म किं वा अकर्मेति कवयो मेधाविनोऽपि अत्रास्मिन् कर्माकर्मविषये मोहिताः मोहं गताः। तत् अतस्ते अहं कर्माकर्म च प्रवक्ष्यामि। यत् ज्ञात्वा कर्मादि मोक्ष्यसे अशुभात्संसारात् ॥१६॥

कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः।
अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥१७॥

न चैतत्त्वया मन्तव्यं- कर्मनाम देहादिचेष्टा लोकप्रसिद्धम्। अकर्म च तदक्रिया तूष्णीमासनम्। किं तत्र बोद्धव्यमिति, कस्मात्, उच्यते—कर्मण इति। कर्मणः शास्त्रविहितस्य हि यस्माद्धयस्ति बोद्धव्यं बोद्धव्यं चास्त्येव विकर्मणः प्रतिषिद्धस्य। तथा अकर्मणश्च तूर्ष्णीभावस्य बोद्धव्यमस्ति ते। त्रिष्वपि अस्तीत्यध्याहारः कर्तव्यः। यस्माद्गहना विषमा दुर्विज्ञेया। कर्मण इत्युपलक्षणार्थं कर्मादीनां कर्माकर्मविकर्मणां गतिर्याथात्म्यं तत्त्वमित्यर्थः ॥१७॥

---

नापि सन्न्यास इति ।।तूष्णीमासनं तूष्णीं स्थिति अकरणमिति यावत्। सन्न्यास आश्रमविशेष। तस्माच्छब्दार्थमाह—पूर्वैरप्यनुष्ठितत्वादिति। के ते पूर्वे अत आह—जनकादिभिरिति। पूर्वतरं पूर्वमेवेत्यर्थ। तरप्प्रत्ययार्थमाह—नाधुनाकृतमिति। कृतशब्दार्थमाह—निर्वर्तितमिति। पूर्वैरपि मुमुक्षुभिरेवं ज्ञात्वा कर्म कृतं, तस्मात्पूर्वै पूर्वतरं कृत कर्मैव त्व कुरु इत्यन्वय। किमर्थं कर्म कर्तव्यमत आह—यद्यज्ञस्तर्ह्यात्मशुद्ध्यर्थं चित्तशुद्धये कर्म कुरु, यदि तत्त्ववित्तर्हि लोकसंग्रहार्थं कर्म कुर्विति ॥१५॥

किमिति, तद्वचनादेवेति। ईश्वरस्य तवादेशेनेत्यर्थ। नहि पूर्वाचार ईश्वरादेशादधिक इति भाव। पूर्वै पूर्वतरं कृतमिति विशेषितेन विशेषणेन कर्मण इति भाव। किं कर्मण पूर्वै पूर्वतरं कृतमिति विशेषणेन- न किमपि फलमित्यर्थ। यस्मात्कर्मणि महद्वैषम्यमस्ति तस्मात्पूर्वैः पूर्वतरं कृतमिति विशेषितं कर्म। कथं वैषम्यमित्यत्र श्लोकोऽयं प्रवृत्त इत्याह— कथं किमिति। यदेव पूर्वैः पूर्वतरं कृतं तत्कर्मेति मेधाविनोऽपि जानीयु, नतु स्वबुद्ध्या। इदं कर्मेदमकर्मेति ज्ञातुं क्षमन्त इत्यर्थ। सर्वज्ञोऽहं तु तत्पूर्वै पूर्वतरं कृतं कर्माकर्म च तुभ्यं वक्ष्यामि, तद्ज्ञानफलमाह—यदिति ॥१६॥

कर्मण इति। किं तत्र बोद्धव्यमित्येतत्त्वया न मन्तव्यमित्यन्वय। कस्मान्न मन्तव्यमित्यत उच्यते—कर्मण इति श्लोकः। कर्मण कर्मसम्बन्धि बोद्धव्यं ज्ञातव्यं तत्त्वमस्ति। एवमुत्तरत्रापि।

कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः।
स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥१८॥

किंपुनस्तत्त्वं कर्मादेः यद्बोद्धव्यं वक्ष्यामीति प्रतिज्ञातं तदुच्यते—कर्मणीति।

नैतावता त्वया कर्मणोऽकर्मणो विकर्मणो वा तत्त्वं ज्ञातं, किंतु ज्ञातव्यमवशिष्टमेवेत्यर्थः। अत्र कर्म मोक्षसाधनभूतं, विकर्म विविधं नित्यनैमित्तिककाम्यादिरूपं कर्म, अकर्म ज्ञानमिति रामानुजभाष्यं तुच्छम्—नित्यादिविविधकर्मणामेव फलाभिसन्धिरहितानां परम्परया मोक्षसाधनकर्मत्वात्कर्मविकर्मणो-र्भेदस्य दुर्वचत्वात्। नञः स्वप्रतियोग्यभावबोधनस्वाभाव्यादहननादाविवात्रापि कर्माभावरूपार्थ एव भवितुमर्हति- नञो विरोधाद्यर्थास्तु लाक्षणिका एव- नहि मुख्यार्थसम्भवे लाक्षणिकार्थस्वीकारो न्याय्यः। किं च कर्मविरोधित्वाद्ज्ञानमकर्मेति वक्तुमपि तवाशक्यं, तव मते ज्ञानकर्मणोर्विरोधाभावात्। ज्ञान-पूर्वकं कर्मानुष्ठेयमिति त्वयाऽसकृदुक्तत्वात्। नापि नञोऽत्र सादृश्यमर्थः कर्मज्ञानयोस्सादृश्याभावात्। नच तदन्यत्वमत्रार्थः- कर्मणोऽन्यस्य द्रव्यादेस्सत्त्वेन ज्ञानस्यैवाश्रयणे मानाभावात्। नापि तदल्पत्व-मर्थः- कर्मणः उत्कृष्टत्वाद्ज्ञानस्य। नापि प्रकरणाद्ज्ञानलाभः- कर्म प्रकरणत्वादस्य- 'कांक्षन्तः कर्मणां सिद्धि'मित्यादिना हि कर्म प्रकृतमिति ॥१७॥

**कर्मणीति**। यः कर्मण्यकर्म पश्येत्, यः अकर्मणि च कर्म पश्येत्, मनुष्येषु स बुद्धिमान् युक्तः कृत्स्नकर्मकृच्च भवतीत्यन्वयः।

अत्र तावदिदं वेद्यम्—सप्तम्यधिकरणे चेति सूत्रेणाधिकरणे सप्तमी विहिता। आधारोऽधि-करणमिति सूत्रेणाधारस्याधिकरणसंज्ञा विहिता। स चाधारस्त्रिविधः- औपश्लेषिको वैषयिकोऽभिव्यापक-श्चेति। क्रमेण कट्यामास्ते, मोक्षे इच्छाऽस्ति, सर्वस्मिन्नात्माऽस्तीत्युदाहरणानि। एवं स्थिते कर्मण्यकर्म-णीति कर्माकर्मणोर्विहितायास्सप्तमीविभक्तेर्वैषयिक आधारोऽर्थ इति केचित्। अभिव्यापकाधारोऽर्थ इत्यन्ये। तत्राद्यपक्षे श्लोकस्यायमर्थः—यः कर्मणि क्रियत इति कर्म देहादिचेष्टा तस्मिन्विषये अकर्म कर्माभावमात्मानमिति यावत्- पश्येज्जानीयात्, अकर्मणि देहादिव्यापारोपरमे कर्माभावे कर्म च यः पश्येत्, मनुष्येषु मध्ये स मनुष्यः बुद्धिमान् युक्तः। कृत्स्नकर्मकृत्कृतकृत्य इत्यर्थः। भवतीति।

अयं भावः—लोक आत्मानं कर्मत्वेन देहादिव्यापारोपरममकर्मत्वेन च गृह्णाति भ्रान्त्या- यथा मन्दान्धकारगतं गुणं सर्पत्वेन सर्पं च गुणत्वेन गृह्णाति तिमिराद्युपहतदृष्टिः पुरुषः तद्वत्। एवं स्थिते य आत्मानमात्मत्वेन देहादिव्यापारोपरमं कर्मत्वेन च गृह्णाति स बुद्धिमत्त्वादिगुणशाली। यथा गुणं गुणत्वेन सर्पं सर्पत्वेन च जानन्पुरुषो बुद्धिमां स्तद्वत्। नच कर्माभावस्य कथमात्मत्वमिति वाच्यं, कल्पिताभावस्याधिष्ठानात्मकत्वात्कर्मण आत्मनि कल्पितत्वेन कर्माभाव आत्मैवेति। यथा गुणकल्पित-सर्पाभावो गुणएव तद्वदिति तस्मादज्ञजनाभिमतं कर्माकर्मेति अकर्म कर्मेति च विद्वान् जानीयात् इति।

अस्मिन्नेव पक्षेऽर्थान्तरमवगम्यते- तथाहि—कर्मणि कर्माश्रयत्वात्कर्तृत्वेनाज्ञजनाभिमते जीवे विषये अकर्म न विद्यन्ते कर्माणि क्रिया यस्मिंस्तदकर्म निष्क्रियं ब्रह्म यः पश्येत्- यमज्ञजनः कर्तारं

कर्मणि क्रियत इति कर्म व्यापारमात्र तस्मिन् कर्मणि अकर्म कर्माभावं य· पश्येत्, अकर्मणि

ससारिण जीव मन्यते, तमात्मानमकर्त्रससारि ब्रह्म य पश्यतीत्यर्थ । अयमात्मा ब्रह्मेति श्रुतेरिति भाव । तथा अकर्मणि ब्रह्मणि विषये च कर्म य जीव पश्येत्, अन्यत्वेन परोक्षत्वेनेश्वरत्वेन चाज्ञजनाभिमत ब्रह्म स्वत्वेन प्रत्यक्षत्वेन प्रत्यक्त्वेन चात्मान य पश्यतीत्यर्थ । तत्त्वमसीति श्रुतेरिति भाव । एव जीवब्रह्मणोर्ब्रह्मजीवयो चात्यन्ताभेददर्शी बुद्धिमत्त्वादिगुणशालीति ।

कर्माश्रयत्वानाश्रयत्वाभ्या, तत्प्रयुक्तसुखदु खभोगलक्षणससारवत्त्वतदभावाभ्या च यो व्यावहारिकोऽस्ति जीवेश्वरभेद न स पारमार्थिक परमार्थत कर्मतत्फलयोरभावात् 'एकमेवाद्वितीय ब्रह्मे'ति श्रुते । व्यवहारतोपि कर्मतत्फले जीवस्यौपाधिकत्वेनोपाधिगते एव, नतु स्वरूपगते- चिदेकरसत्वाज्जीवस्येति निष्क्रियमविक्रिय च ब्रह्मैव जीव इति भाव । नच कर्माकर्मादितत्त्वकथनप्रकरणे जीवब्रह्मैक्यकथनमसङ्गतमिति वाच्य, कर्ममात्रमनात्मगतमेव, न त्वात्मगत आत्मनो निष्क्रियब्रह्मरूपत्वादिति वचनस्य प्रकृतसङ्गतत्वात् । अर्थानुपपत्तेर्लक्षणाबीजस्य सत्त्वादत्र कर्मशब्देन तदाश्रयो जीवो लक्ष्यत इति न लक्षणाश्रयणस्य दुष्टत्वमिति मन्तव्यम् ।

तृतीयोऽप्यर्थोऽत्रावगम्यते तथाहि- कर्मणि कर्माश्रये देहादिसङ्घाते विषये अकर्म ब्रह्म य पश्येत्, सङ्घातस्य ब्रह्मणि कल्पितत्वेन सङ्घात ब्रह्माभिन्न य पश्यतीत्यर्थ । कल्पितस्याधिष्ठानानतिरेकादिति भाव । अतएव 'सर्वं खल्विद ब्रह्मे'ति श्रूयते । तथा अकर्मणि उपरतव्यापारे च सङ्घाते विषये कर्म तूष्णीमासनरूपकर्माश्रय य पश्येत्, उपरतव्यापारमपि सङ्घात तूष्णीमासनरूपकर्माश्रयं य पश्यतीत्यर्थ । सङ्घातस्य निष्क्रियत्वायोगादिति भाव । स बुद्धिमत्त्वादिगुणशालीति ।

द्वितीयपक्षे तु श्लोकस्यायमर्थ —य कर्मणि कर्माश्रये कर्तरि अकर्म कर्मराहित्य पश्येत्, अकर्मणि कर्माभावे देहादिचेष्टोपरमे कर्म कर्मत्व च पश्येत् स बुद्धिमत्त्वादिगुणशालीति । अय भाव—आत्मनि कर्म समवेततया वर्तत इति लोक आत्मान कर्माश्रयत्वेन कर्तारं मन्यते, तस्मिश्च कर्तृत्वेनाभिमते आत्मनि प्राज्ञ पुन कर्मराहित्य पश्येत्, निष्कल निष्क्रिय शान्तमिति श्रुतेरविक्रियत्वादियुक्तिभ्यश्चाकर्तारमेवात्मान मन्यते विद्वान् कर्म च देहादिसङ्घातगतमेव मन्यते न त्वात्मगतम् । तथा- व्यापारवद्व्यापारोपरमोपि कर्मैवेति कृत्वा मूढैरकर्तृत्वेनाभिमत व्यापारोपरमं कर्मत्वेनैव प्रतिपद्यते प्राज्ञ इति । ननैव कर्तर्यकर्म य पश्येदित्येव किमिति नोक्तवान् व्यास इति वाच्य, यत्र लोका कर्म पश्यन्ति, तत्र बुद्धिमानकर्म पश्येदिति बोधयितु कर्मणीत्युक्तत्वात् । कर्तृशब्दात्कर्माश्रयत्वप्रतीतिश्चादिति मवेदिति भाव । इति । यथा मनश्चित्तया निवृत्तिरपि कर्मैव उभयमपीदमनात्मदेहादिसङ्घातगतमेवाविपक्ष चात्मन्यध्यस्तमिति तत्पुनरात्मैव कल्पितस्याधिष्ठानात्मत्वादिति कृत्वा निष्क्रियोऽविक्रियश्चात्मेति पक्षद्वयसगृहीतार्थ ।

अथ भाष्य व्याख्यायते—विहितप्रतिषिद्धतदुभयभिन्नसर्वकर्मसग्रहार्थमाह—व्यापारमात्रमिति । नञोऽभावार्थकत्वादाह—कर्माभाव इति । कर्माभावे कर्म य पश्येदित्यन्वय । ननु

च कर्माभावे कर्तृतंत्रत्वात् प्रवृत्तिनिवृत्त्योः वस्त्वप्राप्यैव हि सर्वक्रियाकारकादिव्यवहारोऽविद्याभूमावेव कर्म यः पश्येत् पश्यति, स बुद्धिमान् मनुष्येषु, स युक्तो योगी च कृत्स्नकर्मकृत् समस्तकर्मकृच्च स इति स्तूयते कर्माकर्मणोरितरेतरदर्शी ।

ननु किमिदं विरुद्धमुच्यते-- 'कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः' इति- नहि अकर्म कर्म स्यात्, कर्म वा तथा अकर्म- तत्र कथं विरुद्धं पश्येद्द्रष्टा । न, अकर्मैव परमार्थतः सत्कर्मवदवभासते मूढदृष्टेर्लोकस्य, तथा कर्मैव अकर्मवत् । तत्र यथाभूतदर्शनार्थमाह भगवान्- कर्मण्यकर्म यः पश्येदित्यादि । अतो न विरुद्धं बुद्धिमत्त्वाद्युपपत्तेश्च बोद्धव्यमिति

---

कर्माभावे कथं कर्मदर्शनमत आह—कर्त्रिति । प्रवृत्तिनिवृत्त्योः कर्तृतन्त्रत्वात् यत्कर्तृतन्त्रं तत्कर्मेति व्याप्त्या प्रवृत्तिवन्निवृत्तिरपि कर्मैवेति कृत्वा निवृत्तिरूपे कर्माभावेपि कर्मदर्शनं युक्तमिति भावः । ननु प्रवृत्तेः कारकाधीनत्वादस्तु कर्मत्वं, वस्त्वधीनाया निवृत्तेः कथं पुनः कर्मत्वमत आह—वस्त्विति । हि यस्मात् वस्तु परमार्थतत्त्वमप्राप्यैव अविद्याभूमावेव सर्वः क्रियाकारकादिव्यवहार अस्तीति शेष । हिः प्रसिद्धाविति वा । सर्वोपि क्रियाकारकफलव्यवहारोऽविद्यादशायामेव प्रवृत्त इति कृत्वा प्रवृत्तिवन्निवृत्तिरपि वस्तुसंस्पर्शशून्यत्वेन वस्त्वनधीनत्वाद्युक्तं प्रवृत्तिलक्षणायां देहादिचेष्टायामिव निवृत्तिलक्षणे तदुपरमेपि कर्मत्वंदर्शनं बुद्धिशालिन इति भावः । परमार्थतत्त्वं ब्रह्मैकमेव वस्तु, तच्चाद्वयमसङ्गं चेति न तदधीनत्वं निवृत्तेः । नच देहादिरपि वस्त्वेवेति वाच्यं, 'ततसत्यमतोन्यदार्त'मिति श्रुत्या ब्रह्मण एकस्यैव सत्यत्वेन वस्तुत्वात्- वस्तु हि सत्यमसत्यत्वादवस्तुन इति तत्त्वम् । कृत्स्नकर्मकृदिति — आत्मज्ञस्य कृतकृत्यत्वेन कर्तव्याभावादिति भावः । इतरेतरदर्शीति । इतरस्मिन्नितरत् पश्यतीति तथोक्तः । कर्मण्यकर्मदर्शी अकर्मणि कर्मदर्शी चेत्यर्थः ।

अत्राक्षिपति—नन्वित्यादिना । विरुद्धाभिधानमेवाभिनीय दर्शयति—कर्मणीत्यादिना । विरोधमेव दर्शयति—नहीत्यादिना । अत्रापरोप्यस्ति विरोध.- य कर्म कर्म जानाति अकर्म चाकर्म स न बुद्धिमान्, किंतु यः कर्माकर्म जानाति, अकर्म च कर्म जानाति, सएव बुद्धिमानिति । नहि विरुद्धद्रष्टा क्वापि बुद्धिमान् भवेत्, बुद्धिमान् वा विरुद्धं पश्येत् ।

आक्षेपं परिहरति—नेत्यादिना । परमार्थतोऽकर्मैव सन्मूढदृष्टेर्लोकस्य कर्मवदवभासते, तथा परमार्थतः कर्मैव मूढदृष्टेर्लोकस्याकर्मवदवभासते- तत्र विपर्यये यथाभूतदर्शनार्थं सत्यज्ञानाय भगवान् कर्मण्यकर्म यः पश्येदित्याद्याहेत्यन्वय. । अतो हेतोः कर्मण्यकर्मदर्शनमकर्मणि च कर्मदर्शनं न विरुद्धमित्याह—अत इति ।

ननु भगवता यथाभूतदर्शनार्थमिदमुक्तमिति कथमवगम्यते, तत्राह—बुद्धिमत्त्वादीति । बुद्धिमत्त्वाद्युपपत्तेश्च यथाभूतं च बोद्धव्यमित्युच्यते । भगवतेति शेष । द्वितीयश्च एवार्थकः- यो हि यथाभूतं पश्यति स एव बुद्धिमान्युक्तश्च भवति- यथा यथाभूतरज्जुद्रष्टा प्रकृते च कर्माकर्मणोरितरेतरदर्शी बुद्धिमत्त्वादिगुणवत्त्वेनोक्त इति कर्माकर्मणोरितरेतरदर्शनमिदं यथाभूतदर्शनमेव । अन्यथा हि कर्माक-

**च यथा भूतदर्शनमुच्यते। नच विपरीतज्ञानादशुभान्मोक्षणं स्यात्, यद्ज्ञात्वा मोक्ष्यसेऽशुभादितिचोक्तम्। तस्मात्कर्माकर्मणी विपर्ययेण गृहीते प्राणिभिः तद्विपर्ययग्रहणनिवृत्त्यर्थं भगवतो वचनं कर्मण्यकर्म यः पश्येदित्यादि। न चात्र कर्माधिकरणं अकर्मास्ति- कुण्डे बदराणीव। नाप्यकर्माधिकरणं कर्म अभावत्वादकर्मणः। अतो विपरीतगृहीते एव कर्माकर्मणी लौकिकैर्यथा मृगतृष्णिकायामुदकं, शुक्तिकायां रजतम्।**

मेतरेतरदर्शिनोऽस्योक्तं बुद्धिमत्त्वादिकमनुपपन्नं स्यादित्यभिप्रायः। फलवत्त्वादपीदं यथाभूतदर्शनमेवेत्यवगम्यत इत्याह—नचेति। विपरीतज्ञानाद्धेतो पुरुषस्याशुभान्मोक्षणं नैव स्यात्, इह च यद्ज्ञात्वा मोक्ष्यसेऽशुभादित्युक्तम्। तस्मात्कर्माकर्मणोरेतरेतरदर्शनस्याशुभमोक्षहेतुत्वात्तद्दर्शिनश्च बुद्धिमत्त्वाद्युपपत्तेरित्यर्थः।

ननु कर्माकर्मणी विपर्ययेण गृहीते प्राणिभिरित्युक्तमयुक्तं यतस्ते देहेन्द्रियादिचेष्टारूपं कर्म कर्मेति तदभावमकर्मेति च अविपर्ययेणैव गृहीतवन्त इत्यत आह—नचेति। अत्र लोके बदरीफलानां कुण्डमिव घट इव कर्मणामधिकरणमकर्म नास्ति, तथा अकर्माधिकरणं कर्मापि नास्ति। तत्र हेतुमाह—अभावत्वादिति। अकर्मणः कर्माभावस्याभावरूपत्वेनासत्त्वात्कथं तस्य कर्माधिकरणत्वम्? कथं वा कर्मणस्तदधिकरणत्वम्? अतो हेतो लौकिकैर्विपरीतगृहीते एव कर्माकर्मणी इति। तत्र दृष्टान्तमाह—यथा मृगतृष्णिकायामुदकमिति। नैको दृष्टान्तोऽर्थसिद्धयेऽलमिति मन्वानं मत्याह दृष्टान्तान्तरं—शुक्तिकायां रजतमिति। ननु बुद्धिमानेव निवृत्तिलक्षणे कर्माभावे कर्म पश्यति- प्रवृत्तिलक्षणे च कर्मणि कर्माभावं पश्यतीति कर्माकर्मविपर्ययदर्शी, न तु लौकिका इति चेन्नैवम्— प्रवृत्तिलक्षणं निवृत्तिलक्षणं चेत्युभयात्मकं कर्म लौकिकैरात्मनि मृगतृष्णिकायामुदकमिवाध्यस्तम्। ततश्चात्माकर्तेति आत्मा तूष्णीमास्त इति च प्रत्येति लोकः- तदेवमकर्मण्यात्मनि कर्मप्रत्यय एको विपर्ययः, तूष्णीमासनरूपे कर्मण्यकर्मप्रत्ययोऽन्य इति। ननु अभावत्वादकर्मणो नास्ति कर्माधिकरणत्वं कर्माधिकरणत्वं चेति यदुक्तं भाष्यकारैस्तदसत्— आत्मत्वेनाकर्मणः भावरूपत्वादिति चेत्सत्यम्—कर्माभावो यथात्मत्वेन मतो लौकिकैस्तर्हि भावरूप एव स्यान्न तु तथा मत इति। ननु लौकिकैर्भावरूपे देहे अथवा भावरूपे आत्मनि कर्म तदभावश्च गृह्यते, ननु कर्माभावे कर्मेति कथं विपर्ययदर्शित्वं तेषामिति चेत्, उच्यते—यत्र कर्माभावस्तत्रैव कर्म गृहीतवन्त इति कृत्वा कर्माभावे कर्म गृहीतवन्त इत्युक्तमिति। अथवा ननु लौकिका अकर्मणि कर्म कर्मण्यकर्म च विपर्ययेण पश्यन्तीत्युक्तं, तदसत्—अकर्मणि कर्मणः कर्मण्यकर्मणश्च सत्त्वादित्यत आह—नचेति। बदराणामधिकरणं कुण्डमिव कर्मणोऽधिकरणमकर्म नैवास्ति- कर्म चाकर्मणोऽधिकरणं न भवत्येव। कुतः अकर्मणोऽभावत्वादिति। नन्वकर्मणोऽभावत्वे सुतरां कथं लौकिकानामपि तद्ग्रहणमत आह—मृगतृष्णिकायामिति। मृगतृष्णिकायामुदकं शुक्तिकायां रजतं चात्यन्तासदपि यथा भ्रान्तैर्गृह्यते तद्वदिति। न चाकर्मण्यकर्म कर्मणि कर्म च पश्यति बुद्धिमानित्यत्रापि तुल्यस्स दोषः- अकर्मणोऽभावत्वात्कथमभावेऽभावदर्शनमिति,

**ननु कर्म कर्मैव सर्वेषां न कश्चिद्व्यभिचरति, तत्र नौस्थस्य नावि गच्छन्त्या तटस्थेष्वगतिषु नगेषु प्रतिकूलगतिदर्शनाद्दूरेषु चक्षुषा सन्निकृष्टेषु गच्छत्सु चैत्रमैत्रादिजनसङ्घेषु गत्यभावदर्शनात् । एवमिहाप्यकर्मणि कर्मदर्शनं कर्मणि च अकर्मविपरीतदर्शनं येन तन्निराकरणार्थमुच्यते कर्मण्यकर्म यः पश्येदित्यादि ।**

---

चेन्नैवम्—बुद्धिमदभिमतस्याकर्मण आत्मत्वेनाभावत्वाभावात् । नचात्मन्यात्मानं पश्यन्तीति कथमेकस्यैवात्मन आधाराधेयभाव इति वाच्यं, विषयसप्तमीत्वादात्मविषये आत्मानं पश्यन्तीत्यर्थादात्मानमात्मानं पश्यतीति फलितार्थाच्च । ननु त्वयाऽऽदौ सप्तम्यन्तरमाश्रित्याधाराधेयभाव एवोक्त इति चेत्सत्यम्—आत्मनि यदसत्त्वं कर्मणा तदेव कर्माभावोऽस्तीत्यनेन विवक्षितत्वादिति । नच भाष्यविरोधस्तवेति वाच्यं, तात्पर्यैक्यात् । किंच अनुपलब्धिप्रामाण्यादभाव इति कश्चित्पदार्थोऽस्तीति कतिचिद्द्वैतिन, अभावस्य सत्तायोगान्नास्तीति परे- तत्र प्रथमपक्षाश्रयणे भूतले घटाभाववदात्मनि कर्माभावोऽस्त्येवेति नाधाराधेयभावानुपपत्तिरात्माकर्मणो । द्वितीयपक्षे तु तदनुपपत्तिरस्त्येव । भाष्यकारास्तु द्वितीयपक्षमेवावलम्ब्य विषयसप्तमीं स्वीचक्रुरिति दिक् ।

**अयमत्र निष्कर्षः**—यद्वस्तुतो कर्म तल्लौकिकै कर्मेति गृहीत- तत्र च कर्मणि विषये पुनर्बुद्धिमतो कर्मज्ञानमस्ति यद्वस्तुत कर्म तल्लौकिकैरकर्मेति गृहीत, तत्र चाकर्मणि विषये पुनर्बुद्धिमतोऽस्ति कर्मज्ञानमिति । तथा च वस्तुतो कर्मण्यकर्मज्ञान बुद्धिमत प्रमा, वस्तुत कर्मणि कर्मज्ञान च तस्मिंस्तद्बुद्धे प्रमात्वात् । एव वस्तुतो कर्मणि लौकिकाना कर्मज्ञानं भ्रम, वस्तुत कर्मण्यकर्मज्ञानं च-अतस्मिंस्तद्बुद्धेर्भ्रमत्वात् । वस्तुतोऽकर्म आत्मा वस्तुत कर्म तु देहादिचेष्टा तदुपरमश्चेति ।

तत्र शङ्कते—नन्विति । सर्वेषामपि कर्म कर्मैव अकर्माकर्मैव कर्माकर्म वा कश्चिदपि न व्यभिचरति- यथा घटस्सर्वान्प्रति घट एव अघटश्च सर्वान्प्रत्यघट एव तद्वदिति भाव । परिहरति—तत्रेति । नगेषु वृक्षेषु न गच्छन्तीति नगा वृक्षा हि तटस्था वस्तुत स्थावरा तटस्थान्प्रति च स्थावरा एव नौस्थाना तु जङ्गमा इव प्रतिभान्ति- नौस्था हि पुरुषा नावि गच्छन्त्या तटस्थान्वृक्षान्गच्छत इव पश्यन्ति । इदं लौकिकानामकर्मणि कर्मदर्शनस्य निदर्शनम् ।

अथ कर्मण्यकर्मदर्शनस्याह—दूरेष्विति । दूरेषु अत एव असन्निकृष्टेषु विशेषतस्सन्निकर्षरहितेषु सामान्यतोपि सन्निकर्षाभावे दर्शनानुपपत्तेरिति भाव । यद्वा सन्निकृष्टेषु अपरोक्षेष्वित्यर्थ । दूरस्थत्वेन प्राप्ता परोक्षत्वशङ्का वारयितुं सन्निकृष्टेष्वित्युक्तमिति भाव । गच्छत्सु गतिमत्सु चैत्रमैत्रादिजनसङ्घेषु चक्षुषा गत्यभावदर्शनात् । दूरस्था हि जनसङ्घा गच्छन्तोपि वस्तुत अगच्छन्त इव भान्तीति भाव । इदं कर्मण्यकर्मदर्शनस्य निदर्शनम् । दृष्टान्तमुक्त्वा दार्ष्टान्तिकमाह—एवमिति । यथा गतिक्रियारहितत्वेनाकर्मणि वृक्षे नौस्थाना कर्मदर्शनं, यथा वा गतिक्रियासहितत्वेन कर्माश्रये दूरस्थजनसङ्घे पुरुषस्याकर्मदर्शन तद्वदित्येवकारार्थ । लौकिकानामिति शेष । अकर्मणि कर्मरहिते आत्मनि कर्मदर्शनं कर्मणि देहादिव्यापारोपरमरूपे अकर्मदर्शनं कर्माभावदर्शनं चेति विपरीतदर्शनमस्तीति । [illegible] येनेति । येन विपरीतदर्शनवत्त्वेन लौकिकाना तन्निरा-

तदेतदुक्तप्रतिवचनमप्यसकृत् अत्यन्तविपरीतदर्शनभाविततया मोमुह्यमानो लोकः श्रुतमप्यसकृत्तत्त्वं विस्मृत्य विस्मृत्य मिथ्याप्रसङ्गमवतार्यावतार्य चोदयतीति पुनरुत्तरमाह भगवान्—दुर्विज्ञेयत्वं चालक्ष्य वस्तुनः अव्यक्तोऽयमचिन्त्योऽयं, न जायते म्रियते इत्यादिना। आत्मनि कर्माभावः श्रुतिस्मृतिन्यायप्रसिद्ध उक्तः वक्ष्यमाणश्च । तस्मिन्नात्मनि कर्माभावे अकर्मणि कर्मविपरीतदर्शनमत्यन्तरूढं यतः किं कर्म किमकर्मेत्यत्र कवयोऽपि मोहिताः देहाद्याश्रयं कर्म आत्मन्यध्यारोप्य अहं कर्ता ममैतत्कर्म मयास्य फलं भोक्तव्यमिति च तथाऽहं तूष्णीम्भवामि येनाहं निरायासः अकर्मा सुखी स्यामिति कार्यकरणाश्रयं व्यापारोपरमं तत्कृतं च सुखित्वमात्मन्यध्यारोप्य न करोमि किंचित्तूष्णीं सुखमासमित्यभिमन्यते लोकः। तत्रेदं लोकस्य विपरीतदर्शनापनयनायाह भगवान्—कर्मण्यकर्म यः पश्येदित्यादि ।

करणार्थं विपरीतदर्शननिराकरणाय 'कर्मण्यकर्म यः पश्ये'दित्याद्युच्यते भगवता- आदिपदादकर्मणि च कर्म य इत्यादिग्रहणम् ।[१]प्रवृत्तिनिवृत्त्योरभावेन निष्क्रियत्वादविक्रिय आत्मेति विवक्षया भगवतैव श्लोक उक्त इति भावः ।

नन्विदमविक्रियत्वमात्मनः पूर्वमेवोक्तमिति पुनरुक्तमिदानीमत आह —तदेतदिति । अव्यक्तोऽयमचिन्त्योऽयं, न जायते म्रियते' इत्यादिना असकृदुक्तप्रतिवचनमपि दत्तोत्तरमपि तदेतत्कथमविक्रिय आत्मेति चोद्यं लोकश्चोदयतीति हेतोर्भगवान् पुनरुत्तरमाहेत्यन्वयः । असकृच्चोदयतीति वा किं कृत्वा चोदयति तत्राह—मिथ्याप्रसङ्गमवतार्यावतार्येति । वीप्साया द्विर्भावः । तत्र हेतुमाह—असकृच्छ्रुतमप्यात्मतत्त्वं विस्मृत्य विस्मृत्येति । तत्त्वविस्मरणे हेतुमाह—विशेषणविधया मोमुह्यमान इति । अतिशयेन मोहं प्राप्नुवन्नित्यर्थः । मोहाधिक्यप्राप्तौ हेतुमाह—अत्यन्तविपरीतदर्शनभाविततयेति । अत्यन्तमिथ्याज्ञानसंस्कारवत्त्वेनेत्यर्थः । भगवतः पुनर्वचने हेत्वन्तरमाह—दुर्विज्ञेयत्वं चेति । वस्तुनः आत्मतत्त्वस्य दुर्विज्ञेयत्वमालक्ष्य चेत्यन्वयः ।

उक्तमनुवदन्नुपसंहरति'—आत्मनीति । आत्मनि श्रुतिस्मृतिन्यायप्रसिद्धः कर्माभाव उक्तः—अव्यक्तोऽयमित्यादिनेति भावः । वक्ष्यमाणश्च वक्ष्यते चेत्यर्थः । सर्वकर्माणि मनसा सन्न्यस्येत्यादिनेति भावः । श्रुतयः 'न जायते म्रियते वा विपश्चित्, अविनाशी वाऽरेऽयमात्मे'त्येवमादयः । स्मृतयः—'रामो न गच्छति न तिष्ठति नानुशोच'तीत्याद्याः । आत्मा अकर्ता- असङ्गत्वाद्विभुत्वाच्चाकाशवदित्यादिन्यायाः इति विवेकः । अकर्मणीत्यस्य प्रतिपदं कर्माभाव इति निष्क्रिये इत्यर्थः । यद्वा कल्पितसर्पाभावस्य शुक्तिरूपत्वेन कल्पितकर्माभाव आत्मरूप एवेति बोध्यम् । कर्मविपरीतदर्शनमिति । कर्म च तद्विपरीतं च कर्मविपरीतं विपरीतं कर्मेत्यर्थः । यद्वा विपरीतमिति भावे क्तः कर्मविपर्यय इत्यर्थः । तस्य दर्शनं ज्ञानमत्यन्तरूढं लौकिकानामिति शेषः । कवयोऽपीति । अपिना किं पुनरविद्वांसो लौकिका इति गम्यते । तदेव विपरीतदर्शनमभिनीय दर्शयति—देहेति । ननु लोको देहाश्रयं गमनादिकर्मात्मन्यारोप्य गन्ताहमिति मन्यत इति यत्तद्वस्तु भ्रमः देहादिव्यापारोपरमे अकर्माहमिति यन्मन्यते कथं तस्य भ्रमत्वमकर्मत्वाद्वस्तुत आत्मन इत्यत आह—तथाऽहमिति । कार्य

अत्र च कर्म कर्मैव सत्कार्यकरणाश्रयं कर्मरहिते आत्मनि अविक्रिये सर्वैरध्यस्त यतः पण्डितोप्यहकरोमीति मन्यते तत आत्मसमवेततया सर्वलोकप्रसिद्धे कर्मणि नदीकूलस्थेष्विव वृक्षेषु गतिप्रातिलोम्येन अकर्म कर्माभावं यथाभूतगत्यभावमिव वृक्षेषु यः पश्येत्, अकर्मणि च कार्यकरणव्यापारोपरमे कर्मवदात्मन्यध्यारोपिते तूष्णीमकर्मा सुखमासे इत्यहङ्काराभिसन्धिहेतुत्वात्तस्मिन्नकर्मणि च कर्म यः पश्येत् यः एवं कर्माकर्मविभागज्ञः स बुद्धिमान् पण्डितः मनुष्येषु । स युक्तो योगी कृत्स्नकर्मकृच्च । स अशुभान्मोक्षितः कृतकृत्यो भवतीत्यर्थः । अयं श्लोकः अन्यथा व्याख्यातः कैश्चित्—कथं, नित्यानां किल कर्मणामीश्वरार्थत्वेनानुष्ठीयमानानां फलाभावादकर्माणि तान्युच्यन्ते गौण्या वृत्त्या । तेषां चाकरणं अकर्म ।

करणाश्रयव्यापारोपरमस्य वस्तुत आत्मन्यसम्भवात्कथं तत्प्रयुक्तमकर्मत्वं स्यादात्मन ? अतो लौकिकाभिमतमकर्मण्यात्मन्यकर्मज्ञानमपि भ्रम एवेति । तत्रेति व्यवहारभूमावित्यर्थ ।

अथ श्लोकं व्याख्याति—अत्र चेति । अत्र व्यवहारभूमौ कार्यकरणाश्रयं कर्म कर्मैव सत् स्वेनैव रूपेणावस्थितं सदित्यर्थ । कर्मरहिते अविक्रिये आत्मनि सर्वैरध्यस्तमित्यन्वय । उक्तार्थे लोकव्यवहारं प्रमाणयति—यत इति । पण्डितस्तार्किकादि । अपिशब्दात्किमुत पामर इति गम्यते। तत इति आत्मनि सर्वलोकस्य कर्तृत्वाभिमानसत्त्वादित्यर्थ । आत्मसमवेततयेति । आत्मनि समवायेन वर्तमानतयेत्यर्थ । ननु कथं कार्यकरणव्यापारोपरमे पण्डितस्य कर्मबुद्धि स्यादत आह—अहङ्काराभिसन्धिहेतुत्वादिति । यथा अहं कर्म करोमि फलायेति कर्मण्यहङ्काराभिसन्धी स्त, तथा अहं तूष्णीमासे सुखायेति[1] कर्माभावेप्यहङ्काराभिसन्धी स्त इति कर्माभावोपि कर्मैव । यद्यदहङ्काराभिसन्धिहेतुकं तत्तत्कर्मेति सिद्धान्तादिति भाव ।

यत्र व्यापारोऽस्ति तत्रैव तदुपरमोपि-'यथा वृक्षे चलनं चलनाभावश्च । तथा चात्मनि व्यापाराभावाद्व्यापाराभावोपि नास्त्येव प्रसक्तिपूर्वकत्वान्निषेधस्य ।[2] व्यापारतदभावावुभावपि देहाद्याश्रयावेव नात्माश्रयौ । किंच यत्र व्यापारोपरमोऽस्ति स उपरतव्यापार इत्युच्यते यथा तिष्ठन्पुरुष गमनोपरमादुपरतगमन, यथावाऽभाषमाण पुरुष भाषणोपरमादुपरतभाषणो मौनीति । एवमुपरतक्रियो कर्मात्मेति वक्तु न शक्यते- उपरमास्यागात्मनि क्रियाप्रसक्ते - न ह्यक्रिये आत्मनि कालत्रयेपि क्रिया सम्भावयितुं शक्या । एतदभिप्रायेणैवात्मनि कर्माभाव श्रुत्यादिभिरुक्त । एतेन प्रसक्तिपूर्वकत्वान्निषेधस्य कथमात्मनि कर्मनिषेध इति चोद्य परिहृतम्—भ्रान्तिप्रसक्तकर्मनिषेधपरत्वात्तद्वचनस्येति ।

य एवमिति । कालत्रयेपि आत्मनि कर्माभावादात्मैवाकर्म । अज्ञस्त्वात्मनि कर्म मन्यते देहाद्याश्रयं- देहादिव्यापारोपरमरूपं कर्म च कर्माभावं मन्यते देहाद्याश्रयं तच्चात्मनि मन्यते- इमे चाज्ञजनाभिमते कर्माकर्मणी द्वे अप्यात्मनि न स्त कालत्रयेपि । अत एवात्माऽकर्म इति य कर्माकर्मविभागौ जानातीति । 'यज्ज्ञात्वा मोक्ष्यसेऽशुभादित्युक्तत्वादाह—अशुभान्मोक्षितः कृतकृत्यो भवतीति । य आत्मानमेवाकर्म जानाति देहादिव्यापार तदुपरमं च कर्म जानाति तस्य देहादि-

तच्च प्रत्यवायफलत्वात् कर्मोच्यते गौण्यैव वृत्त्या। तत्र नित्ये कर्मणि अकर्म यः पश्येत्फलाभावात् यथा धेनुरपि गौरगौरित्युच्यते, क्षीराख्यं फलं न प्रयच्छतीति तद्वत्, तथा नित्याकरणे त्वकर्मणि कर्म यः पश्येत् नरकादिप्रत्यवायफलं प्रयच्छतीति। नैतद्युक्तं- व्याख्यानमेवंज्ञानादशुभान्मोक्षानुपपत्तेः- 'यद्ज्ञात्वा मोक्ष्यसेऽशुभा'दिति भगवतोक्तं वचनं बाध्येत। कथं, नित्यानामनुष्ठानादशुभात्स्यान्नाम मोक्षणं, नतु तेषां फलाभावज्ञानात्- नहि नित्यानां फलाभावज्ञानमशुभमुक्तिफलत्वेन चोदितं नित्यकर्मज्ञानं वा नच भगवतैवेहोक्तम्। एतेन कर्मणि अकर्मदर्शनं प्रत्युक्तम्।

---

व्यापाररूपस्य तूष्णीमासनरूपस्य वा कर्तव्यस्याभावात्कृतकृत्यत्वमिति भाव। एतेन- यस्तूष्णीमास्ते, यो वा व्याप्रियते नासावात्मा, किंतु देहादिसङ्घात एव। ततश्च व्यापारात्मिके जाग्रत्स्वप्नावस्थे निर्व्यापारात्मिका निद्रावस्था चेत्यवस्थात्रयमात्मनो नास्त्येवेत्यवस्थात्रयसाक्षित्वरूपं तुरीयत्वं कूटस्थत्वं चात्मनस्सिद्धम्- य एवमात्मतत्त्ववित्पुमान् सहि मुक्त एव- 'तरति शोकमात्मवित्, ब्रह्मविद्ब्रह्मैव भव'तीत्यादिश्रुतिभ्यः। अत एवाशुभान्मोक्षित इत्युक्तमिति। गौण्या लक्षणयेत्यर्थ। यथा कर्माभावस्य फलाभावस्तथा नित्यकर्मणोपि फलाभाव इति सादृश्यमत्र निमित्तमिति बोध्यम्। अकर्मकर्मणोन्तु यथा निषिद्धकर्मण पापफलवत्त्वं तथा नित्यकर्माकरणस्यापीति। यद्वा यथा विहितस्य कर्मणः पुण्यं फलं तथा नित्याकरणस्य पापं फलमिति। अथ वा यथा कर्मण फलवत्त्वं तथाऽकरणस्यापीति सादृश्यं बोध्यम्।

अयमर्थः- नित्यकर्म कर्मेति तदकरणमकर्मेति मूढा जानन्ति, न त्वेतद्युक्तं- यत्फलवत्तदेव कर्म फलाभावात्तु न नित्यकर्म कर्म- प्रत्यवायरूपफलवत्त्वात्तु न नित्याकरणमकर्म, किंतु नित्यकर्म अकर्म नित्यकर्माकरणं तु कर्म इति योऽभिजानाति स बुद्धिमानिति।

एवं परमतमुपपाद्य दूषयति—नैतद्व्याख्यानं युक्तमिति, एवंज्ञानादिति। नित्यकर्मणां फलाभावज्ञानात्तदकरणात्प्रत्यवायोऽस्तीति ज्ञानाच्चेत्यर्थः। नित्यानामिति। अयं भाव.- 'यद्ज्ञात्वा मोक्ष्यसेऽशुभा'दिति भगवता ज्ञानमात्रादेव मुक्तिरभिहिता, नतु यद्ज्ञात्वा नित्यकर्म कृत्वा मोक्ष्यस इत्युक्तम्। नित्यकर्म तु कृतं सदेव पापनिवृत्तिलक्षणाशुभमोक्षहेतुर्भवति, नतु ज्ञानमात्रम्। तथासति नित्यकर्माकरणे प्रत्यवायानुपपत्तेः। वेदाध्ययनमात्रेण नित्यकर्माणि ज्ञातान्येवेति यज्ञयागाद्यनुष्ठानापत्तेश्च। अतो नित्यकर्मणामनुष्ठानमेवाशुभान्मोचकं पुंसां, नतु तद्ज्ञानमात्रम्। यथा काम्यकर्मज्ञानं न स्वर्गादिफलदं, यथा वा कृष्यादिकर्मज्ञानं न सस्यादिफलदं तद्वदिति। नित्यानां फलाभावज्ञानं नित्यकर्मज्ञानं वा अशुभमुक्तिफलत्वेन न चोदितं वेदेनेति शेषः। यथा- 'तरति शोकमात्मवि'दित्यात्मज्ञानं शोकतारकत्वेन चोदितं तद्वदिति भाव। ननु वेदेन चोदितं मास्तुनाम- भगवतैवोक्तं गीतास्वित्यत्र आह- नचेति। भगवता चेह गीतासु नैवोक्तम्। एतेनेति। नित्यकर्मणां फलाभावज्ञानस्याशुभमोचकत्वाभाववचनेनेत्यर्थः। कर्मण्यकर्म यः पश्येदित्यस्य परोक्त व्याख्यानं निराकृतमित्यर्थः। एतेनाकर्मणि

न ह्यकर्मणि कर्मेति दर्शनं कर्तव्यतयेह चोद्यते—नित्यस्य तु कर्तव्यतामात्रम्। नच अकरणान्नित्यस्य प्रत्यवायो भवतीति विज्ञानात् किञ्चित्तत्फलं स्यात्, नापि नित्याकरणं ज्ञेयत्वेन चोदितं, नापि कर्माकर्मेति मिथ्यादर्शनादशुभान्मोक्षणं बुद्धिमत्त्वं युक्तता कृत्स्नकर्मकृत्त्वरूपं च फलमुपपद्यते, स्तुतिर्वा। मिथ्याज्ञानमेव हि साक्षादशुभस्वरूपं कुतोन्यस्मादशुभान्मोक्षण- नहि तमस्तमसो निवर्तकं भवति।

ननु कर्मणि यदकर्मदर्शनं, अकर्मणि वा कर्मदर्शनं न तन्मिथ्याज्ञानं, किं तर्हि गौणं फलाभावभाननिमित्तं न- कर्माकर्मविज्ञानादपि गौणात्फलस्याश्रवणात्। नापि श्रुतहान्यश्रुतकल्प-

---

कर्मदर्शन प्रत्युक्तमिति पाठान्तरे एतेनाशुभमोक्षणासम्भवप्रदर्शनेन कर्मण्यकर्मदर्शननिराकरणोक्तन्यायेनेत्यर्थः।

अथाकर्मणि च कर्म य इत्यस्य परोक्तमर्थं दूषयति—नहीत्यादिना। नित्याकरणं कर्मेति पश्येदिति नेह चोद्यते भगवता, किंपुनश्चोद्यते तदाह—नित्यस्येति। नित्यं कर्म कर्तव्यमित्येव चोद्यते- कुरु कर्मैवेत्यादिनेति भाव। ननु नित्याकरणं कर्मेति माचोदितं नाम, नित्याकरणात्प्रत्यवाय इति यो जानाति स बुद्धिमानितीहोच्यत इत्यत्राह—नचेति। ननु नित्याकरणात्प्रत्यवाय इति यो वेत्ति स नित्यं कर्म कुरुते, ततश्चाशुभान्मुच्यत इत्यस्ति नित्याकरणात्प्रत्यवायज्ञानात्फलमशुभमुक्तिरूपमिति चेन्नैवम्—तद्ध्यशुभमुक्तिरूपं फलं नित्यकर्माचरणजन्यमेव- नतु प्रत्यवायज्ञानजन्यमन्यथा नित्याकरणात्प्रत्यवाय इति ज्ञानमात्राद्विनैव कर्माचरणमशुभमुक्तिप्रसङ्गात्। नच प्रत्यवायज्ञानस्य नित्यकर्मप्रवर्तकत्वरूपं फलमस्तीति वाच्यं, अशुभमोक्षणफलस्यैव भगवता प्रतिज्ञातत्वात्। प्रत्यवायं जानद्भिरपि बहुभिः प्रारब्धवशान्नित्यकर्मणामनाचरितत्वान्मूढैरपि क्रियमाणत्वाच्च।

ननु नित्याकरणं ज्ञेयमेव निषिद्धकर्मवत्परिहारायेति कृत्वा नित्याकरणमिह ज्ञेयत्वेन चोद्यत इत्यत आह—नापीति। नित्यान्येव ज्ञेयत्वेन चोदितान्यनुष्ठानाय नतु नित्याकरणं क्वापि चोद्यते—नित्यचोदनादेव नित्याकरणनिषेधोऽर्थात्सिध्यतीति न पुनर्नित्याकरणचोदनावकाश.। ननु तत्त्वज्ञानादिव कर्माकर्मज्ञानान्मुक्तिस्स्यादत आह—नापीति। तत्त्वज्ञानादेव मुक्तिर्न तु मिथ्याज्ञानादिति सर्वसम्मतं- रज्जुयाथात्म्यरूपतत्त्वज्ञानाद्धि कृत्रिमसर्पजन्यभयकम्पादिनिवृत्तिः। कर्माकर्मेति ज्ञानं तु मिथ्याज्ञानमेव कर्मण्यकर्मेति ज्ञानस्य, अकर्मणि कर्मेति ज्ञानस्य वा अतस्मिंस्तद्बुद्धित्वेन मिथ्याज्ञानत्वात्। मिथ्याज्ञानादशुभमोक्षणादिकं तु विप्रतिषिद्धं- रज्जुसर्पज्ञानाद्भयकम्पाद्यशुभस्यैव प्राप्तेः। ततश्च मिथ्याज्ञानादशुभमेव स्यान्न तु तन्मोक्ष। नाप्येवं मिथ्याज्ञानी बुद्धिमान्युक्तः कृत्स्नकर्मकृच्च भवेत्। स्तुतिर्वेति। नोपपद्यत इत्यन्वय.। ननु मिथ्याज्ञानादप्यशुभमोक्षः किं न स्यादत आह—मिथ्याज्ञानमेवेति। अशुभस्य मिथ्याज्ञानस्य कथमशुभनिवर्तकत्वं, न कथमपीत्यर्थ.। तत्र दृष्टान्तमाह—नहीति।

अथ कर्माकर्मणोरितरेतरज्ञानस्य मिथ्यात्वमसहमानश्शङ्कते- पूर्ववादी—नन्विति। गौणत्वे हेतुमाह—फलाभावमात्रनिमित्तमिति। कर्मण्यकर्मज्ञानं फलाभावनिमित्तमकर्मणि कर्मज्ञानं तु

नया कश्चिद्विशेष उपलभ्यते- स्वशब्देनापि शक्यं वक्तु, नित्यानां कर्मणां फलं नास्ति अकरणाच्च तेषां नरकपातः स्यादिति तत्र व्याजेन परव्यामोहरूपेण कर्मण्यकर्म यः पश्येदित्यादिना। किं तत्रैवं व्याचक्षाणेन भगवतो वाक्यं लोकव्यामोहार्थमिति व्यक्तं कल्पितं स्यात्, नचैतच्छद्मरूपेण वाक्येन रक्षणीयं वस्तु। नापि शब्दान्तरेण- पुनःपुनरुच्यमान सुबोधं स्यादित्येवं वक्तुं युक्तं- कर्मण्येवाधिकारस्ते इत्यत्र स स्फुटतर उक्तोऽर्थः। न पुनर्वक्तव्यो भवति। सर्वत्र च प्रशस्तं बोद्धव्यं च कर्तव्यमेव। नच निष्प्रयोजनं बोद्धव्यमित्युच्यते। नच मिथ्याज्ञान बोद्धव्यमिति तत्प्रत्युपस्थापितं वा वस्त्वाभासम्। नापि नित्यानामकरणादभावात्प्रत्यवायभावो पत्तिर्नासतो विद्यते भाव इति वचनात्। कथमसतस्सज्जायेतेति च असतस्सज्जन्मप्रतिषेधादसतः सदुत्पत्तिं ब्रुवता असदेव सद्भवेत्, सच्चासद्भवेदित्युक्त स्यात्।

फलभावनिमित्तमिति विवेक। यथा सिंहो माणवक इति ज्ञानं गौणं क्रौर्यशौर्यादिनिमित्तं तद्वदिति भावः। गौणत्वमभ्युपेत्यैव परिहरति—नेति। मिथ्याज्ञानवद्गौणज्ञानेऽप्यशुभमोक्षणरूपफलाभावस्तुल्य एवेत्यर्थः। दोषान्तरमाह—नापीति। यथाश्रुतार्थं विहायाश्रुतार्थकल्पनमन्याय्यं निष्फलं चेति भाव। स्वशब्देनेति। वाचकशब्देनेत्यर्थ। नतु लाक्षणिकेनेति भाव। स्वशब्देन वादप्रकारमेव दर्शयति—नित्यानामित्यादिना। न नित्यकर्मणोऽर्थोऽस्ति प्रत्यवायोऽविधानत इति श्लोकस्य सुकरत्वादिति भावः।

नतु परकान्तासु रतोद्यतं धूर्तं तत्कालागतपतिसकाशाद्रक्षयितुं यथा दूती वक्ति 'वृषाऽपेहि परक्षेत्रा'दिति गूढं वाक्यं तद्वदयं भगवान्गूढमाह- कर्मण्यकर्म यः पश्येदितीत्यत आह—नचेति। भगवान्हि गुह्य वस्तु शिष्यायार्जुनाय प्रकटयितुमेव प्रवृत्तः, नतु गोप्यं कञ्चिदर्थं गोपयितुम्। तस्मादिह नास्ति भगवतो गोप्यार्थ, यद्गोपनाय च्छद्म वाक्यं प्रयुञ्जीत।

ननु यथा आत्मतत्त्वं दुर्बोधत्वात्पुन. पुनश्शब्दान्तरेणोक्तं अव्यक्तोऽयमचिन्त्योयमित्यादिना। तद्वदिदमपीत्यत आह—नापीति। नहि नित्यकर्मादेः फलाभावादिज्ञानं दुर्बोधं, येन सुबोधाय पुनःपुनरुच्येतेत्यर्थ। कथमेष सुबोधोऽत आह- कर्मण्येवेति। किं च निष्फलमिदं नित्यकर्म नैव बोद्धव्यमित्याह— सर्वत्रेति। यत्सफलं तदेव बोद्धव्यं, कर्तव्यं चेति सर्वत्रापि प्रशस्तम्। निष्प्रयोजनं [illegible] नित्यकर्म नैव बोद्धव्यम्। नापि कर्तव्यमिति कृत्वा कथं तद्बोद्धव्यमित्युच्यते। ननु न वयं नित्यकर्म बोद्धव्यमिति ब्रूम, किंतु नित्यकर्माकर्मेति बोद्धव्यमिति ब्रूम इत्यत आह—नचेति। कर्मण्यकर्मज्ञानं हि मिथ्याज्ञानं रज्जुसर्पज्ञानवदिति कथं तस्य बोद्धव्यत्वम्? ननु मिथ्याज्ञानस्याबोद्धव्यत्वेपि तद्विषयस्य वस्तुनो बोद्धव्यत्वमस्तीत्यत आह—तदिति। मिथ्याज्ञानविषयो हि मिथ्यावस्त्वेवेति कथं तस्य वस्त्वाभासस्य बोद्धव्यत्वम्। लोकेपि सत्यमेव वस्तु हि बोद्धव्यम्। एतावता ग्रन्थसन्दर्भेण नित्याकरणात्प्रत्यवायसत्त्वमभ्युपेत्य अकर्मणि च कर्म य इत्यस्य परोक्तार्थं प्रत्याख्यात।

अथ नित्याकरणात्प्रत्यवायमेव प्रत्याख्याति—नापीत्यादिना। ननु असतस्सदुत्पद्यत इति

तच्चायुक्तं सर्वप्रमाणविरोधात् । नच निष्फलं विदध्यात् कर्म शास्त्र- दुःखरूपत्वात् । दुःखस्य च बुद्धिपूर्वकतया कार्यत्वानुपपत्तेस्त-करणे च नरकपाताभ्युपगमात् । अनर्थायैवोभयथापि करणे चाकरणेऽपि च शास्त्र निष्फल कल्पितं स्यात् । स्वाभ्युपगमविरोधश्च- नित्य निष्फलं कर्मेत्यभ्युपगम्य मोक्षफलायेति ब्रुवतः । तस्माद्यथा श्रुत एवार्थः कर्मण्यकर्म यः पश्येदि त्यादेः । तथा च व्याख्यातोऽस्माभिः श्लोकः ॥१८॥

भवता असदेव सद्भवेदित्युक्तं, भवतु न कारणस्य कार्यात्मना परिणामात् । कथंपुन सच्चासद्भवेदित्युक्त भवेदितिचेत, उच्यते—कार्यस्य कारणात्मकत्वं दृष्टम् । घटस्य मृदात्मकत्वदर्शनात् । तथाच कार्यस्य सन कारणभूतासदात्मकत्वं स्यादेवेति सच्चासद्भवेदित्युक्तं भवेदेव । भवतु को दोषस्तत्राह—तच्चायुक्तमिति । तत्र हेतुमाह—सर्वेति । प्रत्यक्षादिसर्वप्रमाणविरोधात्- न ह्यसतश्शशशृङ्गादेस्सत्त्वं प्रत्यक्षादिप्रमाणानि सहेरन्निति भाव ।

ननु नित्यानामकरणे प्रत्यवायोऽस्तु वा मावा- करणे तु नास्ति फलमत आह—नचेति । शास्त्रं निष्फलं कर्म न विदध्यात् । लोकानुग्रहाय प्रवृत्तत्वादिति भाव । कुतो न विदध्यादत आह—दुःखरूपत्वादिति । निष्फलस्य कर्मणो दु खरूपत्वादित्यर्थ । ननु दु खमपि कर्म कार्यमेव विहितत्वादत आह—दुःखस्येति । कोऽपि दु खकरं कर्म बुद्धिपूर्वकतया न करोति- परस्त्रीसङ्गादिकमपि तात्कालिकसुखकरत्वादेव बुद्धिपूर्वकतया करोति लोक । तस्मान्नित्ये कर्मण्यपि दु खरूपे न पुंसां बुद्धिपूर्वकतया प्रवृत्तिरस्ति । नच ततो निवर्ततामिति वाच्यं, तदकरणे प्रत्यवायश्रवणात् । अतो नित्यकर्मणा करणे वा अकरणे वा न कोपि बुद्धिपूर्वकं प्रवर्तेत, किंतु शास्त्रबलादेव । तच्च शास्त्र भगवता लोकस्यानर्थायैव कल्पितं नित्यकर्मणा करणस्य दु खत्वादकरणस्य च दु खत्वादित्यर्थं लोकानर्थकरं निष्फलं शास्त्रं तु कथं वा प्रमाणं स्यान्न कथमपि । अहो तव पाण्डित्यम् ! येन वेदमूल गीताशास्त्रं व्याख्यातु प्रवृत्तस्सन् समूलं गीताशास्त्रमेवाप्रमाणं कृतवानिति । दोषान्तरमप्याह—स्वाभ्युपगमविरोधश्चेति । नित्यकर्मणो निष्फलत्वं मोक्षफलत्वं चेत्युभयमव्याहतं कथमित्यर्थ । 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इत्यादौ नित्यकर्मणो मोक्ष इति तैर्व्याख्यातत्वात् । कर्मसमुच्चिता द्ज्ञानान्मोक्ष इति ग्रन्थारम्भे चोक्तत्वादिति भाव ।

उपसंहरति—तस्मादिति । परोक्तार्थस्याप्रमाणत्वादयुक्तत्वाच्चेत्यर्थ । यथाश्रुत इति । यस्माच्छब्दाद्योऽर्थ व्याकरणादिना शब्दशक्त्या सिध्यति तदविरुद्ध इत्यर्थ । कथं स यथाश्रुतार्थोऽत आह—तथाच व्याख्यात इति । एतेन परोक्तार्थस्य अयथाश्रुतार्थत्वं सिद्धम् । तच्च दर्शितं प्रागेव । गौणवृत्त्याश्रयणं ह्ययथाश्रुतार्थत्वे तस्य लिङ्गं योऽर्थोऽभिदाशक्त्याऽऽयाति स यथाश्रुत । अभिधेय इति यावत् । यस्तु लक्षणादिना स त्वयथाश्रुत इति विवेक । यस्य शब्दस्य यथा योऽर्थ श्रुत प्रसिद्ध तस्य स यथाश्रुतार्थ इति निष्कर्ष । कर्मशब्दस्य विहितप्रतिषिद्धोभयवाचित्वादत्र कर्मणस्तत्त्वकथनेन निष्कर्मणोपि तत्त्वमुक्तमिति वेद्यम् ।

यत्तु रामानुजः—क्रियमाणमेव कर्मात्मयाथात्म्यानुसन्धानेन ज्ञानाकारं यः पश्येत्तच्च ज्ञानं कर्मण्यन्तर्गततया कर्माकारं यः पश्येत्स बुद्धिमत्त्वादिगुणयुक्त इति, तत्तुच्छम्—कर्मज्ञानयोः परस्परं भिन्नयोरितरत्रेतराकारस्य दुर्दर्शत्वात्तादृशयेतरत्रेतराकारज्ञानस्य मिथ्याज्ञानत्वाच्च। नचात्मयाथात्म्यानुसन्धानेन कर्मणो ज्ञानाकारताज्ञानस्य च कर्माकारतोपपद्यत इति वाच्यं, आत्मयाथात्म्यानुसन्धानेन वा अन्येन वा न ह्यन्यस्यान्याकारता कथमप्युपपद्यते, भ्रान्तिं विना आत्मतत्त्वानुसन्धानेनाक्रियत्वमात्मनोऽस्तुनाम- कथं पुनर्देहाश्रयस्य कर्मणः ज्ञानाकारता? कथं वा अयं घट इत्यादिज्ञानस्य मानसस्य कर्माकारता? किं वा ज्ञानशक्तिक्रियाशक्त्योर्बुद्धिप्राणनिष्ठयोः तदाश्रययोर्बुद्धिप्राणयोर्वाऽभेदो वक्तुं शक्यः केनचिद्विदुषाऽध्यासं विना? नच फलाद्यनभिसन्धानात्कर्मणो भवति। ज्ञानाकारतेति वाच्यं, फलाभिसन्ध्यादौ सति बन्धकत्वं कर्मणस्तदभावेत्वबन्धकत्वमित्येव सिद्धान्तात्। नच बन्धकत्वाभावनिमित्तं कर्मणो ज्ञानाकारज्ञानं गौणमेव न मिथ्येति वाच्यं, अनेन गौणज्ञानेनापि भगवत्प्रतिज्ञाताशुभमोक्षणरूपफलाभावात्। नहि फलाभिसन्ध्यादिरहितं कर्माबन्धकत्वाद्ज्ञानतुल्यमिति ज्ञानमात्रेण पुमानशुभान्मुच्येत- किंतु तादृशकर्मानुष्ठानादेव।

अथ कर्मण्यन्तर्गततया ज्ञानस्य कर्माकारतेत्येतदतीव परिहासास्पदं विदुषां, कथं किं देहाद्यन्तर्गतस्यात्मनो भवति देहाद्याकारता। यत्तु कर्मान्तर्गते ज्ञाने कर्माकारज्ञानं तद्धि मिथ्याज्ञानं- देहाद्यन्तर्गते आत्मनि देहाद्याकारज्ञानवत्। नापि कर्मणि ज्ञानस्यान्तर्गतिरस्ति कुण्डे बदराणामिव—ज्ञानस्य मनोनिष्ठत्वात्कर्मणो देहाश्रयत्वाच्च। नापि ज्ञानयुक्तं कर्म कर्तव्यमिति वाच्यं, कर्मज्ञानयोर्योगस्यैवाभावात्- न ह्ययं घट इति ज्ञानं गमनादिक्रियया युज्येत। नच कर्मज्ञाने युगपदेवानुष्ठेये इति वाच्यं, दुष्करत्वात्।

ननु स्थितिगत्योरिव ज्ञानकर्मणोर्विरोधाभावात्कथं युगपदनुष्ठानासम्भव इति चेन्नैवम्—अहं कर्तेति ज्ञानस्य कर्मणश्च विरोधाभावेपि अहमक्रिय इति ज्ञानस्य कर्मणश्चास्ति विरोध इति य आत्मानमकर्तारं मन्यते स कथं पुनरात्मानं कर्तारं विधायेन तस्य कर्मानुष्ठानं स्यात्। एतेन ज्ञानिना कर्मानुष्ठेयमित्येतदपि मत्युक्तं, आत्मविदः कृतकृत्यत्ववचनेन कर्तव्याभावसिद्धेः। नच परोक्षज्ञानकर्मणोरविरोध इति वाच्यं, आत्मनो नित्यापरोक्षत्वेन तद्विषयज्ञानस्य परोक्षत्वस्यैवासम्भवात्। यत्तु न ममात्मसाक्षात्कार इति मन्यते स ह्यनात्मविदेव- अनात्मविदस्तु कर्माण्यस्माभिरप्यभ्युपेतानि अयं ह्यनात्मविदात्मानमकर्तारं न निश्चयेन प्रत्येति किंतु संशयेनैव आत्मसाक्षात्कारं विना तन्निश्चयानुदयात्। नचापातज्ञानविशिष्टं कर्म कर्तव्यमिति वाच्यं, त्वया आत्मयाथात्म्यानुसन्धानपूर्वकं कर्म कर्तव्यमित्यभ्युपगतत्वादात्मयाथात्म्यानुसन्धानस्य चापरोक्षज्ञानत्वात्। किं च एकाग्रचित्तसाध्यस्यात्मतत्त्वानुसन्धानस्य कथं कर्मकरणव्यग्रचित्तसाध्यत्वं येनात्मतत्त्वानुसन्धानपूर्वकं कर्म कर्तव्यं स्यात्। नहि मनस्यात्मनिष्ठेसति देहेन्द्रियाणि कर्मसु व्याप्रियेरन्। अन्यथा समाधौ वर्तमानस्यापि पुरुषस्य कर्मकरणप्रसङ्गः मनोव्यापारपूर्वको हि देहेन्द्रियव्यापारः मनस्यन्याक्रान्तेसति चक्षुरादीनां घटादिदर्शनाभावस्सर्व-

यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः ।
ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥१९॥

तदेतत्कर्मादावकर्मादिदर्शनं स्तूयते—यस्येति । यस्य यथोक्तदर्शिनस्सर्वे यावन्तः समारम्भाः सर्वाणि कर्माणि समारभ्यन्त इति समारम्भाः । कामसङ्कल्पवर्जिताः- कामैः तत्कारणैस्सङ्कल्पैश्च वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयन्ते । प्रवृत्तेन चेल्लोकसङ्ग्रहार्थं, निवृत्तेन चेज्जीवनमात्रार्थं तं ज्ञानाग्निदग्धकर्माणं कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निः तेन ज्ञानाग्निना दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तमाहुः परमार्थतः पण्डितं बुधाः ब्रह्मविदः ॥

विदितः । तस्माद्युगपदेकस्यैव मनसः आत्मयाथात्म्यानुसन्धानं देहादिसंयोगपूर्वककर्मकरणं चानुपपन्नमेव । देहेन्द्रियादिव्यापारात्मकस्य कर्मणः सच्चिदानन्द आत्माहमित्याकारकज्ञानस्य च न परस्पराकारत्वं स्वप्नेपि सम्भावयितुं शक्यं- तस्मादवद्यं रामानुजभाष्यम् ॥१८॥

यस्येति । कामाः स्वर्गादितृष्णाः सङ्कल्पाः मम स्वर्गो भूयादित्यादयः सङ्कल्पप्रभवत्वात्कामस्योक्तं—तत्कारणैरिति । मम स्वर्गो भूयादित्यादौ सङ्कल्प्य पश्चात्स्वर्गे सकामस्सञ्जन इति सङ्कल्पप्रभवत्वं कामस्य बोध्यम् । मुधैव व्यर्थमेव, ननु कुतो मुधानुष्ठानं कर्मणामत आह—प्रवृत्तेनेति । गृहस्थेनेति यावत् । निवृत्तेनेति । सन्न्यासिनेति यावत् । प्रवृत्तिमार्गस्थो विद्वान् लोकसंग्रहार्थं निवृत्तिमार्गस्थस्तु जीवनार्थं व्यर्थमेव कर्माणि करोतीत्यर्थः । नच कथं निवृत्तस्य सर्वकर्मानुष्ठानमिति वाच्यं, यानि भिक्षाटनादीनि निवृत्तेनानुष्ठीयन्ते तान्येव सर्वकर्माणीति विवक्षितत्वात् । प्रवृत्तस्तु यज्ञादिनित्यनैमित्तिकसर्वकर्माणि करोत्येवेति बोध्यम् । आदिपदादकर्मणि कर्मदर्शनसंग्रहः । देहाद्याश्रयं कर्म आत्मा स्वकर्मैवेत्याकारकं ज्ञानमित्यर्थः । दग्धानीति नाशितानीत्यर्थः । एतेन कर्मणां तूलत्वरूपणं व्यज्यते—कर्माणीति । सञ्चितानीति भावः- प्रारब्धकर्मणो भोगैकावसानत्वात् ।

ननु भगवता अशुभान्मोक्ष्यस इत्येवोक्तं कथमत्र शुभाशुभानीतिचेन्नैष दोषः । तत्राशुभपदेन संसारस्य विवक्षितत्वादत्राशुभपदेन पापस्य शुभपदेन पुण्यस्य च विवक्षितत्वाच्छुभाशुभयोर्द्वयोरपि बन्धकत्वेन संसारत्वादिति । अत एव हि 'तद्विद्वान् पुण्यपापे विधूय'ेति श्रूयते । परमार्थत इति । व्यवहारत पाण्डित्यं तर्कादिशास्त्राध्येतृष्वप्यस्ति । वस्तुतस्तु न ते पण्डिता अनात्मज्ञत्वादिति भावः । बुधा इति । ननु तर्कादिशास्त्रज्ञास्तर्कादिशास्त्रज्ञं पण्डितं ब्रुवन्तीत्यत आह—ब्रह्मविद इति ।

यत्तु रामानुजः—कर्मणो ज्ञानाकारता कथमुपपद्यत इति शङ्कासमाधानपरोयं श्लोक इति, तस्य प्रकृत्या तद्गुणैश्चात्मानमेकीकृत्य व्यवहार इति, तत्तुच्छम्—अनेन श्लोकेन कर्मणो ज्ञानाकारत्वस्याप्रतिपादितत्वात् । कामसङ्कल्पाभाववर्णनमात्रेण कर्मणो ज्ञानाकाराभावः ज्ञानाग्निदग्धकर्माणमिति ज्ञानकर्मणोर्विरोधस्यैव प्रतिपादितत्वात् । कर्मणः सदाहङ्कारज्ञानाकारस्य स्वप्नेपि सम्पादयितुमशक्यत्वात् तूलस्याग्न्याकारत्वम् । कर्म दग्धं सद्ज्ञानाकारं भवतीत इत्यप्युक्तं वाक्यं यद्यपि मानमेव

यस्तु कर्मादावकर्मादिदर्शी सः अकर्मादिदर्शनादेव निष्कर्मा सन्न्यासी जीवनमात्रचेष्टः कर्मणि न प्रवर्तते । यद्यपि प्राग्विवेकतः प्रवृत्तः, यस्तु-प्रारब्धकर्मा सन्नुत्तरकालं उत्पन्नात्म-सम्यग्दर्शनस्स्यात् स कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म परित्यजत्येव, स कुतश्चि-न्निमित्तात् कर्मपरित्यागासम्भवे सति कर्मणि तत्फले च सङ्गरहिततया स्वप्रयोजनाभावा-ल्लोकसंग्रहार्थं पूर्ववत्कर्मण्यभिप्रवृत्तोपि नैव किञ्चित्करोति । ज्ञानाग्निदग्धकर्मत्वात्तदीयं कर्माकर्मैव सम्पद्यत इत्येतमर्थं दर्शयिष्यन्नाह—

ज्ञानाकारं प्राप्तुं न क्षमते कथं पुनस्तत्त्वं सम्प्राप्नुयात् । किंच नष्टं कर्मनाम कर्माभाव एव नतु कर्म कर्माभावस्य ज्ञानाकारत्वमस्तु नाम न तावता कर्मणः तत्सिद्धिः ।

ननु नास्माभिः क्रियमाणमेव कर्म ज्ञानाग्निना दग्धम् इत्युक्तम् । किंतु प्राचीनं पुण्यापुण्यलक्षण-मेवेति चेत्तर्हि कथं क्रियमाणस्य कर्मणो ज्ञानाकारतोक्ता श्लोकेनानेन । ननु यः कामसङ्कल्पवर्जितः सर्वसमारम्भः स ज्ञानाग्निदग्धकर्मेति वचनात् कर्मणो ज्ञानाकारसिद्धिः कामसङ्कल्पवर्जितसर्वसमा-रम्भत्वस्यैव ज्ञानत्वादिति चेत्, मैवम्—कामसङ्कल्पवर्जितसर्वसमारम्भत्वं हि ज्ञानस्य लिङ्गं, नतु ज्ञानम्— आत्मयाथात्म्यानुसन्धानस्यैवेह ज्ञानत्वेन तवापि सम्मतत्वात् । कर्मान्तर्गतात्मयाथा-त्म्यानुसन्धानेन ज्ञानेनेति त्वयाप्युक्तत्वात् । तस्माच्च आत्मयाथात्म्यं वेद स कामसङ्कल्परहि-तानि कर्माणि करोति, यस्तु न वेद स कामसङ्कल्पसहितानि करोति । एवं कर्मकरणादपि ज्ञानिनो बन्धमाशङ्क्याह भगवान्—ज्ञानाग्निदग्धकर्माणमिति । आत्मज्ञानिनं कर्माणि न लिम्पन्ति कर्मगत-लेपनसामर्थ्यस्य ज्ञानेन नाशितत्वात् । कर्मणां लेपनसामर्थ्यं हि कामसङ्कल्पप्रयुक्तं । यस्तु विद्वान् काम-सङ्कल्पावेव विससर्ज कथं तं कर्माणि लिम्पेयुः ? न कथमपि । ततश्च येषां कर्मणां ज्ञानवशान्निर्लेपकत्वं जातं तेषां कथं ज्ञानाकारत्वं स्यात् । नहि स्वगुणाधायकं वस्तु स्वमेव भवति । अथ सङ्करशङ्करस्य ॥१९॥
दर्शितोर्थस्तु अभिधानादिविरुद्ध इति सर्वविदितम् ।

त्यक्त्वेति श्लोकमवतारयति—यस्त्विति । यः कर्मारम्भात्प्रागेवात्मानात्मविवेकवान् सन्न्यासे प्रवृत्तः स आत्मवित्सन्न्यासी न पुनः कर्मणि प्रवर्तते निवृत्तिमार्गस्थत्वात्सन्न्यासस्य । अथ यस्तु यज्ञादि-कर्म प्रारभ्य, तस्मिन् कर्मण्यसमाप्ते एव प्रारम्भोत्तरकालमात्मज्ञानी भवेत्स पुमान् प्रारब्धमपि तत्कर्म ससाधनं परित्यज्य सन्न्यासी भवेदेव । न पुनः कर्मणि प्रवर्तते । अतो नेमौ द्वावुद्दिश्य त्यक्त्वेति श्लोकः प्रवृत्तः- कर्मण्यभिप्रवृत्तोपीति कर्मण्यभिप्रवृत्तमुद्दिश्य श्लोकस्योक्तत्वात् । किंतु यः कर्मप्रारम्भानन्तर-मुत्पन्नात्मज्ञानोपि कुतश्चित्प्रतिबन्धान्निमित्तात्कर्म परित्यक्तुं न क्षमते तमसन्न्यासिनमात्मविदमारब्ध-कर्माणमुद्दिश्य श्लोकोऽयं प्रवृत्तः । अयं हि प्रारब्धे कर्मणि तत्फले च स्वप्रयोजनाभावान्निस्सङ्गोपि लोक-संग्रहार्थं ज्ञानात्प्रागिव कर्मणि प्रवर्तते, ज्ञानात्पश्चादपि एवं कर्मणि प्रवृत्तमात्मविदं तदारब्धं कर्म नैव लिम्पति, पुनः ज्ञानाग्निना कर्मगतबन्धकत्वांशस्य दग्धत्वात् । एवमबन्धकमेतदीयं कर्म अकर्मैव कर्माभाव एव सम्पद्यते जायत इति ॥

त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।
कर्मण्यभिप्रवृत्तोपि नैव किञ्चित्करोति सः ॥२०॥

त्यक्त्वेति । त्यक्त्वा कर्मस्वभिमानं फलासङ्गं च यथोक्तेन नित्यतृप्तो निराकांक्षो विषयेष्वित्यर्थः । निराश्रयः आश्रयरहितः आश्रयो नाम यदाश्रित्य पुरुषार्थं सिषाधयिषति, दृष्टादृष्टेष्टफलसाधनाश्रयरहित इत्यर्थः । तेनैवम्भूतेन प्रयोजनाभावात् समाधनं कर्म त्यक्तव्यमेवेति प्राप्ते, ततो निर्गमनासम्भवात् लोकसंग्रहचिकीर्षया शिष्टविगर्हणपरिजिहीर्षया वा पूर्ववत् कर्मण्यभिप्रवृत्तोपि निष्क्रियात्मदर्शनसम्पन्नत्वात् नैव किञ्चित्करोति सः ॥२०॥

कर्मफलासङ्गं त्यक्त्वा नित्यतृप्तः निराश्रयश्च सन् सः कर्मण्यभिप्रवृत्तोपि किञ्चिन्नैव करोति अभिमानमहमस्य कर्ता ममेदं कर्मेति चेत्येवंरूपं यथोक्तेन कर्मण्यकर्म य इति श्लोकोक्तेन निष्क्रियात्मस्वरूपदर्शनेनेत्यर्थः । विषयस्पृहाभावादेव तृप्तिरित्याह—निराकांक्ष इति, आश्रय इति । आश्रीयते पुरुषार्थायेत्याश्रयः यज्ञादिः । यदिति । तदिति स इति वा शेषः । दृष्टानीष्टफलानि पशुपुत्रान्नादीनि अदृष्टानीष्टफलानि स्वर्गादीनि तेषां यत्साधनं कर्मादि तदेवाश्रयः तेन रहितः तथोक्तः साधनाश्रयरहित इति वा अनाश्रितफलसाधन इत्यर्थः । निर्व्यापार इति यावत् । ततः कर्मणस्सकाशात् निर्गमनं बहिर्गमनं सन्न्यास इति यावत् तदसम्भवात्पुत्रादिप्रतिबन्धादिति भावः । हेत्वन्तरमाह—लोकेति । अन्यं हेतुमाह—विगर्हणेति । विगर्हणं निन्दा 'अनारम्भो मनुष्याणां प्रथमं बुद्धिलक्षणम् । आरब्धस्य समाप्तिस्तु द्वितीयं बुद्धिलक्षण'मिति स्थितेऽभिगमं विद्वांसं यज्ञादिकर्म प्रारभ्याऽसमाप्यैव सन्न्यस्तवानित्येवंरूपा लौकिकाज्ञजनकृतेति भावः । परिहर्तुमिच्छा परिजिहीर्षा यद्यप्यात्मविदः स्तुतिनिन्दे समे एव आत्मन उभयदूरत्वात्तथापि देववत्पूज्यत्वमेव विद्वद्भिस्सम्पाद्यं, नतु विड्वराहादिसाम्यमित्यभिप्रेत्येदमुक्तम् ।

ननु कर्मणि प्रवृत्तोपि न करोतीत्युक्तिर्व्याहतेत्यत आह—निष्क्रियेति । देहाद्याश्रयमेवेदं कर्म न त्वात्माश्रयमिति यः प्रत्येति स आत्मविदात्मानमकर्तारमेव मन्यत इति कृत्वा न करोतीत्युक्तमिति भावः । देहादिसङ्घाते अनात्मनि कर्मणि प्रवृत्तेपि निष्क्रिय आत्माऽप्रवृत्त एवेति न किञ्चिदपि व्याहतिरिति तत्त्वम् । तस्मादात्मविदा कृतं कर्म अकर्मैव सम्पद्यत इति । अत्र नैव किञ्चित्करोति कर्मापदेशेन ज्ञानाभ्यासमेव करोतीति रामानुजः, विपरीतविषयसञ्चरणेन ज्ञानाभ्यासविरोधिनामिन्द्रियाणामनुकूलविषयसञ्चरणमात्रं हि कर्मयोग इति भाव इति वेदान्तदेशिकाश्च हृदुः, तत्तुच्छम्—सत्यां रामानुजोक्तार्थविवक्षायां व्यासेन ज्ञानमेव करोति स इत्येवोच्येत श्लोकः इन्द्रियव्यापारोपरमस्य ज्ञानाभ्यासस्य इन्द्रियाणां विपरीतविषयसञ्चरणमिवानुकूलविषयसञ्चरणमपि विरोध्येव इन्द्रियाणां विषयप्रावण्यमात्रस्यैव इन्द्रियव्यापारोपरमप्रतिबन्धकत्वात् । अन्तर्मुखत्वनस्साध्यो हि ज्ञानाभ्यास बहिर्मुखत्वनोत्साह्यस्तु अनुकूलाः प्रतिकूलाश्च सर्वे विषयाः । अत कथमनुकूलविषयाणां ज्ञानाभ्यासविरोधित्वम् । तस्माद्यो निस्सङ्गः कर्म करोति स कर्मयोगमेव करोति । न तु ज्ञानयोगं कर्मयोगमाध्ये ज्ञानयोगे कर्मयोगाधिकाराभावात् । ॥२०॥

यः पुनः पूर्वोक्तविपरीतः प्रागेव कर्मारम्भात्- ब्रह्मणि सर्वान्तरे प्रत्यगात्मनि निष्क्रिये संजातात्मदर्शनस्स दृष्टादृष्टेष्टविषयविवर्जिततया दृष्टादृष्टार्थे कर्मणि प्रयोजनमपश्यन् ससाधनं कर्म सन्न्यस्य शरीरयात्रामात्रचेष्टो यतिर्ज्ञाननिष्ठो मुच्यत इत्येतमर्थं दर्शयितुमाह—

निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ।
शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥२१॥

निराशीरिति । निराशीः निर्गता आशिषो यस्मात् स निराशीः यतचित्तात्मा चित्तमन्तःकरणं आत्मा बाह्यकार्यकरणसङ्घातः तावुभावपि यतौ संयतौ येन स यतचित्तात्मा त्यक्तसर्वपरिग्रहः त्यक्तः सर्वपरिग्रहो येन स त्यक्तसर्वपरिग्रहः, शारीरं शरीरस्थितिमात्रप्रयोजनं केवलं तत्राप्यभिमानवर्जितं कर्म कुर्वन्नाप्नोति, न प्राप्नोति । किल्बिषं पापं अनिष्टरूपं धर्मं च मुमुक्षोरनिष्टरूपत्वात् धर्मोपि किल्बिषमेव । तस्मात्ताभ्यां मुक्तो भवति संसारमुक्तो भवतीत्यर्थः ।

शारीरं केवलं कर्मेत्यत्र किं शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतं ? आहोस्वित् शरीरमात्रप्रयोजनं शारीरं कर्मेति ? किञ्चातः यदि शरीरनिर्वर्त्यं शारीरं कर्म, यदि वा शरीरस्थितिमात्रप्रयोजनं शारीरं कर्मेति, उच्यते— यदा शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतं स्यात्, तदा

---

निराशीरितिश्लोकमवतारयति—य इति । प्रागेव कर्मारम्भादिति गृहस्थाश्रम एव यज्ञादिकर्मणा प्रारम्भाद्गृहस्थाश्रमस्वीकारात्प्रागेवेत्यर्थः । ब्रह्मचर्यादेवेति यावत् ब्रह्मचर्यादेव प्रव्रजेदिति श्रुतेरिति भावः । यद्वा ब्रह्मचर्याश्रमस्वीकारात्प्रागेवेत्यर्थः । तत्रैव वेदाध्ययनादिकर्मप्रारम्भादिति भावः । ब्रह्मणि सञ्जातमात्मेति दर्शनं बुद्धिर्यस्य स अहं ब्रह्मास्मीतिज्ञानवानित्यर्थः । शुकसनकवामदेवादिवदिति भावः ।

आशिषः कामाः, बाह्यः कार्यं देहः, बाह्यानि करणानीन्द्रियाणि, बाह्यघटादिविषयग्रहणसाधनत्वाद्बाह्यकरणत्वमिन्द्रियाणाम्, अन्तस्सुखादिविषयग्रहणसाधनत्वादन्तःकरणत्वं मनस इति विवेकः । संयतौ नियमितौ । परिग्रहः गृहादिः परिगृह्यत इति परिग्रहः । शरीरस्येदं शारीरं । फलितमाह शरीरेति । शरीररक्षणमात्रफलकं भिक्षाटनादिरूपमिति भावः । धर्मं पुण्यं । ननु पुण्यस्य कथं किल्बिषत्वमत आह—मुमुक्षोरनिष्टरूपत्वादिति । यदनिष्टं तत्किल्बिषमिति सिद्धान्तात्पुण्यमपि मुमुक्षोरनिष्टमेवेति किल्बिषमेव । मुमुक्षुर्नाम बन्धान्मोक्तुमिच्छुर्हि, बन्धश्च जन्मादिसंसाररूपः पुण्यात्पुण्यजन्म देवादिरूपं भवेदेवेति पुण्यस्य बन्धकत्वादनिष्टत्वमेवेति भावः ।

शारीरमित्यस्य शरीरस्थितिमात्रप्रयोजनमित्यर्थो भाष्यकारैर्वर्णितः । तत्र यदि यः कोपि शारीरमित्यस्य शरीरनिर्वर्त्यं कर्मेत्यर्थः । किं न स्यादिति पृच्छेत्तं प्रति किमुत्तरमिति शङ्कायां शरीरनिर्वर्त्यमित्यर्थस्यायुक्तत्वं प्रतिपादयितुं भूमिकामारचयति—शारीरं केवलं कर्मेत्यत्रेति । पक्षद्वयेपि किं दूषणमिति पृच्छति पूर्वपक्षी—किञ्चात इति । प्रतिजानाति सिद्धान्ती—उच्यत इति ।

दृष्टादृष्टप्रयोजनं कर्म प्रतिषिद्धमपि शरीरेण कुर्वन्नाप्नोति किल्बिषमिति ब्रुवतो विरुद्धाभिधानं प्रसज्येत । शास्त्रीयं च कर्म दृष्टादृष्टप्रयोजनं शरीरेण कुर्वन्नाप्नोति किल्बिषमित्यपि ब्रुवतोऽप्राप्तप्रतिषेधप्रसङ्गः ।

शारीरं कर्म कुर्वन्निति विशेषणात्, केवलशब्दप्रयोगाच्च वाङ्मनसनिर्वर्त्यं कर्म विधिप्रतिषेधविषयं धर्माधर्मशब्दवाच्यं कुर्वन्नाप्नोति किल्बिषमित्युक्तं स्यात्तत्रापि वाङ्मनसाभ्यां विहितानुष्ठानपक्षे किल्बिषप्राप्तिवचनं विरुद्धमापद्येत, प्रतिषिद्धसेवापक्षेपि भूतार्थानुवादमात्रमनर्थकं स्यात् ।

---

प्रथमपक्षे दोषमाह— यदेत्यादिना । यज्ञयागादिविहितकर्मवत्परदारागमनादिनिषिद्धकर्माण्यपि शरीरेणैव निर्वर्त्यन्त इति कृत्वा निषिद्धानामपि शारीरत्वं दुर्वारं, तच्च शारीरं कर्म कुर्वन्नित्यस्य विहितं प्रतिषिद्धं वा कर्म शरीरेण कुर्वन्नित्यर्थसिद्धः, शरीरनिर्वर्त्यं कर्म कुर्वन्नित्यस्य शरीरेण कर्म कुर्वन्नित्येव सिद्धत्वात् ।

तत्र च प्रथमे विकल्पे किं शरीरनिर्वर्त्यं निषिद्धं कर्म कुर्वन् किल्बिषं नाप्नोतीत्यभिमेतम् ? यद्वा शरीरनिर्वर्त्यं विहितं कर्म कुर्वन् किल्बिषं नाप्नोतीति विकल्प्य ? प्रथमपक्षे दोषमाह—प्रतिषिद्धमिति । प्रतिषिद्धकर्मणां न किल्बिषप्राप्तिरित्येतद्वचनं व्याहतं- न परदारान् गच्छेदित्यादिनिषेधशास्त्रानर्थक्यप्रसङ्गात् ।

द्वितीयपक्षे दोषमाह—शास्त्रीयमिति । निषेधस्य प्रसक्तिपूर्वकत्वात् यदि शास्त्रविहितकर्मानुष्ठानात्किल्बिषस्य प्रसक्तिः तदा तन्निषेधार्थं किल्बिषं न प्राप्नोतीति वक्तुं युक्तं, न त्वेवमस्ति-- नहि विहितानुष्ठानात्किल्बिषं प्रसज्यते, अन्यथा विधिशास्त्रवैयर्थ्यप्रसङ्गात् । तस्मादप्राप्तस्य किल्बिषस्य प्रतिषेधप्रसङ्गोऽपि दुष्ट इत्यर्थः ।

किंच कर्म कुर्वन्नित्यनुक्त्वा शारीरं कर्मेत्युक्तम्-- अनेन च शारीरत्वविशेषणेन वाचिकस्य मानसिकस्य च कर्मणो व्यवच्छेदकरिष्यति । नच शारीरमुपलक्षणं वाचिकमानसिकयोरिति वाच्यमित्याह—केवलशब्दप्रयोगादिति । शारीरं केवलं कर्म कुर्वन्नित्यनेन शरीरमात्रनिर्वर्त्यमेव कर्म कुर्वन्नित्यर्थस्य जातत्वात्केवलपदेन वाचिकमानसिककर्मणोर्निवृत्तिरिति भावः । ननु भवतु को दोषस्तत्राह—वागिति । शरीरमात्रनिर्वर्त्यकर्मकरणात्किल्बिषं नेति वचनेन वाचा मनसा च निर्वर्त्यस्य कर्मणः करणात्किल्बिषं प्राप्यत एवेति सिद्धमित्यर्थः । कुर्वन्नाप्नोतीत्यस्य कुर्वन् आप्नोतीति छेदः । ङमो ह्रस्वादिति ङमुडागमः । मूले तु कुर्वन् न आप्नोतीति छेद इति विवेकः ।

ननु वाचिकमानसिककर्मकरणात्किल्बिषप्राप्तिरभिप्रेतैवेत्यत आह—तत्रापीति । किं वाचिकस्य मानसिकस्य वा विहितस्य कर्मणः करणे किल्बिषावाप्तिः ? यद्वा निषिद्धस्य ? इति विकल्प्य आद्यं दूषयति—विहितेति । द्वितीयं दूषयति—प्रतिषिद्धेति । प्रतिषिद्धाचरणेन किल्बिषप्राप्तेरसिद्धत्वात्पुनरिह वचनमनर्थकमित्यर्थः । भूतार्थः सिद्धार्थः- अनुसृत्य वादो वचनमनुवादः । सिद्धस्य पुन कथनमित्यर्थः ।

यदा तु शरीरस्थितिमात्रप्रयोजनं शारीरं कर्माभिप्रेतं भवेत्तदा दृष्टादृष्टप्रयोजनं कर्म विधिप्रतिषेधगम्यं शरीरवाङ्मनसनिर्वर्त्यमन्यदकुर्वंस्तैरेव शरीरादिभिः शरीरस्थितिमात्रप्रयोजनं केवलशब्दप्रयोगादहं करोमीत्यभिमानवर्जितः शरीरादिचेष्टामात्रं लोकदृष्ट्या कुर्वन्नाप्नोति किल्बिषमिति ।

एवम्भूतस्य पापशब्दवाच्यकिल्बिषप्राप्त्यसम्भवात् किल्बिषं संसारं न प्राप्नोति, ज्ञानाग्निदग्धसर्वकर्मत्वात् अप्रतिबन्धेन मुच्यत एवेति पूर्वोक्तसम्यग्दर्शनफलानुवाद एवैषः । एवं शारीरं केवलं कर्मेत्यस्यार्थस्य परिग्रहे निरवद्यं भवति ॥२१॥

त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेश्शरीरस्थितिहेतोः परिग्रहस्याभावात् याचनादिना शरीरस्थितिकर्तव्यतायां प्राप्तायां—'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इत्यादिना वचनेनानुज्ञातं यतेश्शरीरस्थितिहेतोरन्नादेः प्राप्तिद्वारमाविष्कुर्वन्नाह—

---

एवं शरीरनिर्वर्त्यं शारीरं कर्माभिप्रेतं चेति प्रथमपक्षं दूषयित्वा द्वितीयं पक्षं सिद्धान्तयति—यदा त्विति । दृष्टान्यदृष्टानि च प्रयोजनानि यस्य तद्दृष्टादृष्टप्रयोजनं- निषिद्धाचरणस्य दृष्टं प्रयोजनं रोगराजशिक्षादिः, अदृष्टं तु नरकम् । विहिताचरणस्य तु दृष्टं प्रयोजनं पशुपुत्रान्नादिः, अदृष्टं तु स्वर्गादिरिति विवेकः । विधिप्रतिषेधाभ्यां विधिनिषेधशास्त्राभ्यां गम्यम् । अन्यत् शरीरस्थितिमात्रप्रयोजनात्कर्मणोऽन्यदित्यर्थः । कर्म यज्ञादि परदारगमनादि चाकुर्वन् । शरीरादिभिरित्यादिपदाद्वाङ्मनसयोर्ग्रहणम् । लोकदृष्ट्येति । एतदपि कर्म विवेकदृष्ट्या स्वयं न करोति स्वस्याविक्रियात्मत्वात्किन्तु लोकदृष्ट्या कुर्वन्निव प्रतिभातीत्यर्थः । लोको हि देहादौ यतेर्भिक्षाटनादिकं कर्म कुर्वति सति यतिः कर्म करोतीति मन्यते, विद्वांस्तु अविक्रिय आत्मा कर्म कथं कुर्यात्किन्तु देहादिसङ्घात एवेति जानातीति भावः ।

ननु शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्म कुर्वन् किल्बिषं नाप्नोतीत्येतदपि वचनमयुक्तमेव—एवंविधकर्मकरणात्किल्बिषप्राप्त्यसम्भवात्, अप्राप्तस्य च किल्बिषस्य निषेधायोगादित्यत आह—संसारमिति । एवंविधकर्मकरणादप्यस्य संसारस्य प्राप्तिरस्तीति मन्यमानमज्ञजनम्प्रति वदति भगवान्—संसारं न प्राप्नोतीति । अतः भ्रान्त्या प्राप्तस्य संसारस्य निषेधो युज्यत एवेति भावः । कुतोऽस्य संसाराभावोऽत आह—ज्ञानाग्नीति, अप्रतिबन्धेनेति । अस्य मुक्तौ न कोपि कर्मादिप्रतिबन्धोऽस्तीत्यर्थः । पूर्वोक्तस्य कर्मण्यकर्मेतिश्लोकोक्तस्य सम्यग्दर्शनस्य आत्मज्ञानस्य यत्फलमशुभान्मोक्षणं तस्यैवानुवादोयं, न त्वपूर्ववचनमित्येवकारार्थः । निगमयति—एवमिति । एवं मदुक्तरीत्या शारीरं केवलं कर्मेत्यस्य शरीरस्थितिमात्रप्रयोजनमभिमानवर्जितं कर्मेत्यर्थस्य परिग्रहे निरवद्यं दोषाभावो भवति । एतेनान्यार्थस्य परिग्रहस्सावद्य इति सिद्धम् ।

यत्तु रामानुजः—शारीरं केवलं कर्म कुर्वन् ज्ञाननिष्ठान्यवधानरहितं कर्मयोगमनुतिष्ठन् किल्बिषं संसारं नाप्नोतीति, तत्तुच्छम्—[illegible]कर्मानुष्ठानेन [illegible], [illegible] ॥२१॥

यदृच्छालाभसन्तुष्टो द्वन्द्वातीतो विमत्सरः ।
समस्सिद्धावसिद्धौ च कृत्वापि न निबध्यते ॥२२॥

यदृच्छेति । यदृच्छालाभसन्तुष्टः अप्रार्थितोपनतो लाभो यदृच्छालाभः तेन सन्तुष्टः संजातालम्प्रत्ययः द्वन्द्वातीतः द्वन्द्वैश्शीतोष्णादिभिरभिहन्यमानोऽप्यविषण्णचित्तः द्वन्द्वातीत उच्यते । विमत्सरः विगतमत्सरः निर्वैरबुद्धिः समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च य एवंभूतो यतिरन्नादेः शरीरस्थितिहेतोर्लाभालाभयोस्समः, हर्षविषादवर्जितः, कर्मादावकर्मादिदर्शी, यथाभूतात्मदर्शननिष्ठस्सन्, शरीरस्थितिमात्रप्रयोजने भिक्षाटनादौ कर्मणि शरीरादिनिर्वर्त्ये नैव किञ्चित्करोम्यहं गुणागुणेषु वर्तन्त इत्येवं सदा परिसञ्चक्षाण आत्मनः कर्तृत्वाभाव पश्यन् नैव किञ्चिद्भिक्षाटनादिकं कर्म करोति, लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरेव आरोपितकर्तृत्वात् भिक्षाटनादौ कर्मणि कर्ता भवति । स्वानुभवेन तु शास्त्रप्रमाणजनितेनाकर्तैव । स एवं पराध्यारोपितकर्तृत्वं शरीरस्थितिमात्रप्रयोजन भिक्षाटनादिकं कर्म कृत्वापि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निना दग्धत्वादित्युक्तानुवाद एवैषः ॥२२॥

त्यक्त्वा कर्मफलासङ्गमित्यनेन श्लोकेन यः प्रारब्धकर्मास्सन् यदा निष्क्रियब्रह्मात्मदर्शनसम्पन्नस्स्यात्, तदा तस्यात्मनः कर्तृकर्मप्रयोजनाभावदर्शिनः कर्मपरित्यागे प्राप्ते कुतश्चिन्निमित्तात्तदसम्भवे सति पूर्ववत् तस्मिन्कर्मणि अभिप्रवृत्तोऽपि नैव किञ्चित्करोति स इति कर्माभावः प्रदर्शितः, यस्यैवं कर्माभावो दर्शितस्तस्यैव—

गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ।
यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥२३॥

गतसङ्गस्येति । गतसङ्गस्य सर्वतो निवृत्तसङ्गस्य यतेर्मुक्तस्य निवृत्तधर्माधर्मादि·

यदृच्छेति श्लोकमवतारयति—त्यक्तेति । अयाचितमिति भिक्षाटनार्थमुद्योगात्प्राक्काले केनापि योग्येन निवेदितं भैक्षमित्यर्थः । असङ्क्लृप्तमिति । अनिर्णीतं अभिशस्तं पतितं च वर्जयित्वा सङ्कल्पमन्तरेण पञ्चभ्यस्सप्तभ्यो वा गृहेभ्यस्समानीतं भैक्षमित्यर्थः । यदृच्छयोपपन्नमिति सिद्धमन्नं भक्तजनैस्स्वयमुपनीतमित्यर्थः ।

लभ्यत इति लाभः, लब्ध इत्यर्थः । यदृच्छया लाभो यदृच्छालाभ अप्रार्थनया प्राप्त इत्यर्थः । तेन अन्नादिना । हर्षेति । शरीरे आत्माभिमानाभावाच्छरीरधारकान्नादिलाभेन नास्य हर्षः, तदलाभेन न विषाद इत्यर्थः । परिसञ्चक्षाण परिपश्यन् सहेतुकस्य साज्ञानस्येत्यर्थः । सवासनस्येति वा ॥२२॥

गतेति । एवं श्लोकद्वयेन निवृत्तिमार्गरतस्य सन्न्यासिन स्थितिं प्रदर्श्याथ पुन प्रवृत्तिमार्गस्यात्मविदः स्थितिं वक्ष्यतीत्याह—त्यक्त्वा कर्मेत्यादिनावतारिकाग्रन्थेन—

यतेरिति । यतते मोक्षाय प्रयत्नं करोतीति यतिः तस्य सन्न्यासिनस्येत्यर्थः । ननु सन्न्यासिन

बन्धनस्य ज्ञानावस्थितचेतसः ज्ञान एवावस्थितं चेतो यस्य सोऽयं ज्ञानावस्थितचेताः तस्य, यज्ञाय यज्ञनिर्वृत्त्यर्थमाचरतो निर्वर्तयतः कर्म समग्रं सहाग्रेण फलेन वर्तत इति समग्रं कर्म तत्समग्रं प्रविलीयते विनश्यतीत्यर्थः ॥२३॥

ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥२४॥

कस्मात्पुनःकारणात् क्रियमाणं कर्म स्वकार्यारम्भमकुर्वत्समग्रं प्रविलीयत इति, उच्यते- यतः—ब्रह्मार्पणमिति । ब्रह्मार्पणं येन करणेन ब्रह्मविद्धविरग्नावर्पयति तद्ब्रह्मैवेति पश्यति, तस्यात्मव्यतिरेकेणाभावं पश्यति, यथा शुक्तिकायां रजताभावं पश्यति तथोच्यते ब्रह्मै-

इति । ज्ञान एवात्मदर्शने एव यज्ञनिर्वृत्त्यर्थमिति प्रारब्धयज्ञसमाप्त्यर्थमाचरतः क्रियमाणस्य यज्ञ निर्वर्तयत इत्यर्थः । नच यज्ञायेश्वरप्रीत्यर्थमिति वाच्यं, आत्मविदोस्य ईश्वरप्रीत्यर्थकसङ्कल्पासम्भवात्-- अयं ह्यात्मानमेवेश्वरं जानाति- ततश्चात्मप्रीत्यर्थमेवेत्युक्तं स्यात्तच्चानिष्टं--स्वप्रीतिरूपेपि फले सङ्कल्प- कर्तृत्वस्वात् । नच यज्ञनिर्वृत्तिरप्यस्य व्यर्थैवेति वाच्यं, लोकसंग्रहार्थत्वात् । समग्रमित्यत्र समित्सुप- सर्गस्य सहेत्यर्थः । अग्रेण फलेन सम् सह वर्तत इति समग्रम् । आत्मविदनुष्ठितं कर्म फलेनसह विनश्यतीत्यर्थः । आत्मविदा कृतो यज्ञः स्वर्गादिफलं न जनयतीति यावत् । फलाभिसन्ध्यहङ्कारा- धभावादिति भावः ॥२३॥

ब्रह्मार्पणमितीति । अर्पणं ब्रह्म हविर्ब्रह्म ब्रह्माग्नौ ब्रह्मणा हुतं ब्रह्म ब्रह्मकर्मसमाधिना तेन गन्तव्यं ब्रह्मैव इत्यन्वय. । अर्पणं ब्रह्म, हविर्ब्रह्म, अग्निर्ब्रह्म, कर्ता ब्रह्म, हुतं ब्रह्म, फलं ब्रह्म, ब्रह्म- कर्मसमाधेरेवं भातीत्यर्थ. । अर्प्यतेऽनेनेत्यर्पणं स्रुगादि अग्नौ हविःप्रक्षेपणसाधनम् । हविराज्यम् । कर्ता यजमानः, अध्वर्युरिति वा । हुतमग्नौ हवि प्रक्षेपणक्रियाफलं स्वर्गादि इति ।

ननु अर्पणादीनां ज्ञेयानां कथं साक्षिब्रह्मरूपत्वमत आह—तस्येति । कारणव्यतिरेकेण कार्याभावस्य लोकसिद्धत्वात्- मृद्व्यतिरेकेण घटाभावदर्शनात्- 'आत्मन आकाशस्सम्भूतः, यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्या आत्मनो जगत्कारणत्वावधारणादर्पणादीनां च जगदन्त.पातित्वात्कारण- भूतात्मव्यतिरेकेण नास्त्यर्पणादिरूप. कश्चित्पदार्थ इति भावः ।

तत्र दृष्टान्तमाह—शुक्तिकायामिति । शुक्तिकायां रजतमिवात्मनि जगत्कल्पितमिति सिद्धान्तः । तथा च शुक्तिकाव्यतिरेकेण यथा रजतं नास्ति, तथा आत्मव्यतिरेकेणार्पणं नास्तीति । ननु चक्षुषा गृह्यमाणस्यार्पणस्य कथमभावो वक्तुं शक्यत इत्यत आह—शुक्तिकायामिति । शुक्ति- कायां रजताभावं यथा शुक्तितत्त्ववित्पश्यति तद्वदात्मतत्त्वविदात्मनि अर्पणाभावं पश्यतीति ।

ननु आन्तरे आत्मनि अर्पणाभावोऽस्तु नाम, बहिः कथमर्पणाभाव इति चेन्नैवम्— आत्मनोन्तर्बहिश्च व्याप्य स्थितत्वात्- 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति हि श्रूयते । तस्माच्छुक्तिकायां रजतमिव ब्रह्मणि जगदज्ञः पश्यति, प्राज्ञस्तु शुक्तिकायां रजताभावमिव ब्रह्मणि

र्पणमिति, यथा यद्रजतं तच्छुक्तिकैवेति । ब्रह्मार्पणमित्यसमस्ते पदे । यदर्पणबुद्ध्या गृह्यते लोके, तदस्य ब्रह्मविदो ब्रह्मैवेत्यर्थः । ब्रह्म हविः, तथा यद्धविर्बुद्ध्या गृह्यमाणं तद्ब्रह्मैवास्य । तथा ब्रह्माग्नाविति समस्तं पदम् । अग्निरपि ब्रह्मैव यत्र हूयते ब्रह्मणा कर्त्रा ब्रह्मैव कर्तेत्यर्थः । यत्तेन हुतं हवनक्रिया तद्ब्रह्मैव । यत्तेन गन्तव्यं फलं तदपि ब्रह्मैव । ब्रह्मकर्मसमाधिना ब्रह्मैव कर्म ब्रह्मकर्म ब्रह्मकर्मणि समाधिर्यस्य सः ब्रह्मकर्मसमाधिस्तेन ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यम् ।

एवं लोकसंग्रहचिकीर्षुणापि क्रियमाणं कर्म परमार्थतोऽकर्म ब्रह्मबुद्ध्युपमृदितत्वा-

---

जगद्भावं पश्यतीति । यथा चक्षुर्दोषादिवशाच्छुक्तिकैव रजताकारेण प्रतिभाति, तद्वदविद्यावशादात्मैवार्पणादिजगदाकारेण प्रतिभात्यविदुषां, विदुषां तु शुक्तिश्शुक्तिरिव ब्रह्म ब्रह्मैव प्रतिभातीति ।

नन्वेवं ब्रह्म ब्रह्मैव, न त्वर्पणमिति वक्तव्ये कथमुक्तमर्पणं ब्रह्मैवेति ? अत आह—यथा यद्रजतमिति । यद्रजतं तच्छुक्तिकैवेति यथोच्यते तथा यदर्पणं तद्ब्रह्मैवेत्युच्यत इत्यन्वयः । कार्यस्य कारणाभिन्नत्वादिति भावः । यद्भ्रान्त्या रजताकारेण प्रतीतं तन्न रजतं, किंतु वस्तुतश्शुक्तिकेवेति यथा रजतभ्रमापगमानन्तरं पुरुषः प्रत्येति, तथा यद्भ्रान्त्या अर्पणरूपेण प्रतीतं तन्नार्पणं, किंतु वस्तुतो ब्रह्मैवेति अर्पणभ्रमापगमानन्तरं विद्वान् प्रत्येति- अविद्वांसस्तु शुक्तिकायामुद्भूतं रजतं रजतमिवात्मन्युद्भूतमर्पणमर्पणमेव पश्यन्तीति ।

अनेन च शुक्तिरजतदृष्टान्तेन सच्चिदानन्दाद्ब्रह्मणः कथमनृतजडदुःखार्पणाद्याविर्भाव इति शङ्का प्रत्युक्ता- विवर्तवादाश्रयणात् । नहि मृदो घटात्मनेव ब्रह्मणो जगदात्मना परिणामं वयं ब्रूमः, किंतु शुक्तिकाया रजतात्मनेव ब्रह्मणो जगदात्मना विवर्तं ब्रूमः- उपादानसमसत्ताककार्यापत्तिः परिणामः, तद्विषमसत्ताककार्यापत्तिर्विवर्त इति विवेकः । स्वस्वरूपापरित्यागपूर्वकासत्यरूपान्तरावभासो विवर्त इति वा । तस्माद्रजतस्य शुक्त्यात्मत्वमिवार्पणस्य ब्रह्मात्मकत्वं युक्तम् । एवं हविरादिष्वपि बोध्यम् ।

ब्रह्मार्पणं यथातथेति क्रियाविशेषणत्वभ्रमव्युदासायाह—ब्रह्मार्पणमित्यसमस्ते पदे इति । अविदुषो लोकस्य यस्मिन् स्रुगादिद्रव्ये अर्पणबुद्धिः विदुषस्तस्मिन्ब्रह्मबुद्धिरित्यर्थः । 'सर्वं खल्विदं ब्रह्मे'ति श्रुतेः, 'वासुदेवस्सर्व'मिति स्मृतेश्चेति भावः । ब्रह्मैव कर्मेत्यवधारणात्तस्य विदुषः ब्रह्मातिरिक्तं कर्मास्तीति गम्यते । समाधिश्चित्तसमाधानम् । ब्रह्मैव गन्तव्यमिति न तु स्वर्गादितुच्छफलमित्येवकारार्थः ।

ननु स्वर्गादिफलं ब्रह्मैवेत्युक्तमिदानीं ब्रह्मैव फलं गन्तव्यमित्युच्यते, कथमविरोध इति चेदुच्यते—यदविद्वद्भिः कर्मिभिर्यज्ञाद्यनुष्ठानात्प्राप्यते फलं स्वर्गादि तद्विद्वान् ब्रह्मेत्येव पश्यति, य एवमर्पणादिकं ब्रह्मेति पश्यति स तु ब्रह्मैव प्राप्नोतीति ।

कथं कर्मणः परमार्थतोऽकर्मत्वमत आह—ब्रह्मबुद्धीति । यद्धवनादिरूपं कर्म तद्ब्रह्मैवेति या विदुषः कर्मणि ब्रह्मबुद्धिः तथा कर्मण उपमृदितत्वाद्बाधितत्वात् । ब्रह्मज्ञानेन कर्मज्ञानस्य नाशितत्वाद्ब्रह्मणि मायया प्रतीतं कर्म वस्तुतोऽकर्म । ब्रह्मैवेत्यर्थः ।

निवृत्तकर्मणोऽपि सर्वकर्मसन्न्यासिनस्सम्यग्दर्शनस्तुत्यर्थं यज्ञत्वसम्पादनं ज्ञानस्य सुतरामुपपद्यते। यदर्पणादि अधियज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैव परमार्थदर्शिन इति । अन्यथा सर्वस्य ब्रह्मत्वे सति अर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्। तस्माद्ब्रह्मैवेदं सर्वमिति जानतः कर्माभावः कारकबुद्ध्यभावश्च ।

नहि कारकबुद्धिरहितं यज्ञाख्यं कर्म दृष्टं सर्वमेवाग्निहोत्रादिकं कर्मशब्दसमर्पित देवताविशेषसम्प्रदानादिकारकबुद्धिमत्कर्त्रभिमानफलाभिसन्धिमच्च दृष्टं नोपमृदितक्रियाकारक फलभेदबुद्धिकर्तृत्वाभिमानफलाभिसन्धिरहितं वा । इदं तु ब्रह्मबुद्ध्युपमृदितार्पणादिकारक क्रियाफलभेदबुद्धिकर्म अतोऽकर्मैव । तथाच दर्शितम् - 'कर्मण्यकर्म यः पश्येत्, कर्मण्यभि प्रवृत्तोपि नैव किञ्चित्करोति सः, गुणागुणेषु वर्तन्ते, नैव किञ्चित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिभिः । तथाच दर्शयंस्तत्रतत्र क्रियाकारकफलभेदबुद्ध्युपमर्दनं करोति ।

---

ननु ब्रह्मैव कर्मेति ब्रह्मणि यज्ञत्वारोपो व्यर्थ अत आह- निवृत्तेत्यादि । नात्र साक्षाद्ब्रह्मण्येव कर्मत्वारोप असम्भवात्, किंतु ब्रह्मज्ञाने । तत्र च कर्मत्वारोपो युज्यते कर्मवद्ब्रह्मज्ञानस्याप्यभ्यसनीयत्वेन कर्तव्यत्वात् । अयं च ब्रह्मज्ञाने कर्मत्वारोप ब्रह्मज्ञानस्तुत्यर्थ इति ।

तदेव दर्शयति—यदिति । यज्ञे अधियज्ञे अव्ययीभाव । सप्तम्या बहुलमभाव इति बहुल ग्रहणादधियज्ञमित्यभावो नासीत् । आत्मनि अध्यात्मम् । अस्य परमार्थदर्शिन इत्यन्वय । यथा यज्ञे प्रसिद्धानि प्रायणीयोदयनीयादीनि यज्ञवराहे दंष्ट्रादिरूपत्वेन कल्पितानि तद्वद्यज्ञे प्रसिद्धान्यर्पणादीनि आत्मनि ब्रह्मत्वेन कल्पितानीत्यर्थ ।

अध्यात्मं ब्रह्मैवार्पणादीत्येतदर्थं ब्रह्मार्पणमिति श्लोक प्रवृत्त इत्येतस्यानभ्युपगमे दोषमाह— अन्यथेति । फलितमाह—तस्मादिति । अर्पणादेर्ब्रह्मत्वादित्यर्थ । ब्रह्मैवेदं सर्वमिति यो जानाति तस्य कर्माभाव, अर्पणादिषु कारकबुद्ध्यभावश्च सर्वत्र ब्रह्मबुद्धिसत्त्वादिति भाव ।

शब्देति । शब्द इन्द्राय स्वाहेत्यादि, तेन समर्पित प्रतिपादित देवताविशेष इन्द्रादि, स एव सम्प्रदानं सम्प्रदीयते अस्मा इति सम्प्रदान, कर्मणा यमभिप्रैति स सम्प्रदानमिति पाणिनिना सूत्रितम् । हवि कर्मणा इन्द्रस्याभिप्रेतत्वादिन्द्रस्सम्प्रदानमत एव सम्प्रदाने चतुर्थीति इन्द्रायेति चतुर्थी सम्प्रदानमादिर्येषान्तानि सम्प्रदानादीनि कारकाणि । कर्म, करण, कर्ता, सम्प्रदानं, अपादान, अधिकरणञ्चेत्येतानि द्वितीयातृतीयाचतुर्थीपञ्चमीसप्तमीविभक्त्यर्था । तेषां बुद्धयो यस्मिन् तत्तथोक्तम् । कर्मणो विशेषणमिदम् । उपमृदितक्रियाकारकफलभेदबुद्धीति कर्मविशेषणम् । उपमृदिता बाधिता क्रियेति कारकमिति फलमिति च भेदबुद्धयो यस्मिन् तत् । न दृष्टमित्यन्वय ।

इदं ब्रह्मार्पणमितिश्लोकोक्तं कर्म तु ब्रह्मबुद्ध्या उपमृदिता अर्पणादिक्रियाकारकफलभेदबुद्धयो यस्मिन् तत्तथोक्तम् । अत क्रियाकारकफलभेदबुद्ध्यभावादित्यर्थ । अकर्मैव कर्माभाव एव ब्रह्मैवेति यावत् । कथं कर्मणोऽकर्मत्वमित्यत प्रमाणान्याह—कर्मण्यकर्मेत्यादीनि ।

दृष्टा च काम्याग्निहोत्रादौ कामोपमर्देन काम्याग्निहोत्रादिहानिः । तथा मतिपूर्वकामतिपूर्वकादीनां कर्मणां कार्यविशेषस्यारम्भकत्वं दृष्टम् । तथेहापि ब्रह्मबुद्ध्युपमृदितार्पणादिकारकक्रियाफलभेदबुद्धेर्बाह्यचेष्टामात्रेण कर्मापि विदुषोऽकर्म सम्पद्यते । अत उक्तं-- समग्रं प्रविलीयत इति ।

अत्र केचिदाहुः—यद्ब्रह्म तदर्पणादि, ब्रह्मैव किल अर्पणादिना पञ्चविधेन कारकात्मनावस्थितं सत् तदेव कर्म करोति तत्र नार्पणादिबुद्धिर्निवर्त्यते, किंत्वर्पणादिषु ब्रह्मबुद्धिराधीयते, यथा प्रतिमादौ विष्ण्वादिबुद्धिर्यथा वा नामादौ ब्रह्मबुद्धिरेवमिति ।

---

ननु क्रियाकारकफलभेदबुद्ध्युपमर्दनमात्रेण कथं कर्मणोऽकर्मत्वमित्यतो दृष्टान्तमाह—दृष्टेति । यथा काम्यस्याग्निहोत्रादिकर्मणः कामोपमर्दनेनाकाम्यत्वं तद्वदित्यर्थः । दृष्टान्तान्तरमाह—तथेति । मतिपूर्वकाणि कर्माणि यत्कार्यमारभन्ते ततो भिन्नं कार्यमेवामतिपूर्वकाणि कर्माण्यारभन्ते- यथा बुद्धिपूर्वं कृता प्राणिहिंसा रौरवादिनरकरूपकार्यमारभते, तथा प्रमादात्कृता नैवारभेत, किंतु स्वल्पमेव रोगादिकं तद्वदिति भावः । दार्ष्टान्तिकमाह—तथेहापीति, बुद्धेरिति । बुद्धित्वादित्यर्थः । हेतुरयं कर्मणोऽकर्मत्वसम्पत्तौ । अत इति । ब्रह्मबुद्ध्या कर्मणोऽकर्मत्वसम्पत्तेरित्यर्थः । विद्वद्भिराचरितस्य भिक्षाटनादेर्बाह्यचेष्टामात्ररूपस्य कर्मणः यज्ञादिकर्मणो वा ब्रह्मबुद्ध्या क्रियाकारकादिभेदबुद्ध्युपमर्दनेनाकर्मत्वान्नास्ति कार्यारम्भकत्वमिति भावः ।

अथ पूर्वपक्षयति—केचिदिति । यदर्पणं तद्ब्रह्मेति नार्थः, किं तु यद्ब्रह्म तदर्पणम् । एवं यद्ब्रह्म तद्धविः, यद्ब्रह्म तदग्निः, यद्ब्रह्म तत्कर्ता, यद्ब्रह्म तद्धुतं, यद्ब्रह्म तत्फलमित्यर्थः । कोऽत्र विशेषोऽत आह—ब्रह्मैवेति, पञ्चविधेनेति । अर्पणं करणकारकं, हविः कर्मकारकं, अग्निरधिकरणकारकं, यजमानः कर्तृकारकं, उद्देश्यदेवता सम्प्रदानकारकमिति पञ्चविधत्वम् । अपादानकारकस्य नात्रोपयोग इति पञ्चविधेनेत्युक्तम् । कारकात्मनावस्थितं कारकरूपेण परिणतं सदित्यर्थः ।

नन्वद्वैतिनापीदमेवोक्तमत आह—तत्रेति । तत्र एवंसतीत्यर्थः । अर्पणादिबुद्धिर्न निवर्त्यते अर्पणादिष्विति भावः । आधीयत इति । 'अन्नं ब्रह्मेत्युपासीत, मनो ब्रह्मेत्युपासी'तेत्यादौ यथा अन्नादिषु ब्रह्मबुद्धिरुपासनार्थमाहिता तद्वदिति भावः । एतेन अद्वैतिमते अर्पणादिषु अर्पणादिबुद्ध्युपमर्दनमस्ति, अत्र तु नेति विशेषस्सिद्धः ।

ननु प्रतिमादिषु प्रतिमादिबुद्धौ सत्यां कथं विष्ण्वादिबुद्धिर्भवेदिति चेदुच्यते—नेयं विष्ण्वादिबुद्धिस्तात्त्विकी, किन्तु कल्पितैव- ततश्च तात्त्विक्याः प्रतिमादिबुद्ध्याः कल्पिताया विष्ण्वादिबुद्ध्याश्च भवितुमर्हत्येकत्र समावेशः- विभिन्नविषयत्वेन बुद्धिद्वयस्य विरोधाभावात् । यदि बुद्धिद्वयमपि तत्त्वविषयं मिथ्याविषयं वा स्यात्तर्हि भवत्येव विरोधः ।

ननु प्रतिमादिविषयकविष्ण्वादिबुद्धेः कल्पितत्वमस्तुनाम, अर्पणादिविषयकब्रह्मबुद्धेः कल्पितत्वं नास्ति- ब्रह्मजन्यत्वेनार्पणादीनां ब्रह्ममयत्वात्तेषु ब्रह्मबुद्धेरकल्पितत्वात् । प्रतिमादयस्तु न विष्ण्वादि-

सत्यमेवमपि स्याद्यदि ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यादत्र तु सम्यग्दर्शनं ज्ञानयज्ञशब्दितमनेकान् यज्ञशब्दितान् क्रियाविशेषान् उपन्यस्य, 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञ' इति ज्ञानं स्तौति । अत्र च समर्थमिदं वचनं ब्रह्मार्पणमित्यादिज्ञानस्य यज्ञत्वसम्पादने । ये त्वर्पणादिषु प्रतिमायां विष्ण्वादिदृष्टिवद्ब्रह्मदृष्टिः क्षिप्यते नामादिष्विव चेति ब्रुवते न तेषां ब्रह्मविद्योक्तेह विवक्षिता स्यात्, अर्पणादिविषयत्वात् ज्ञानस्य । न च दृष्टिसम्पादनज्ञानेन

देवतामयाः तदजन्यत्वात्- नहि मृज्जन्ये घटे मृद्बुद्धेः कल्पितत्वमिति चेत्तर्हि मृज्जन्ये घटे मृद्बुद्धिघटबुद्धिद्वयस्य निर्विरोधेन दर्शनाद्ब्रह्मजन्येऽर्पणादिष्वपि ब्रह्मबुद्धर्यर्पणादिबुद्धिद्वयमस्तु । नन्वेवमर्पणादिषु बुद्धिद्वयसामानाधिकरण्याभ्युपगमे कथं ब्रह्मविदोपि अर्पणादिषु अर्पणादिबुद्ध्युपमर्दनमिति चेन्मैवम्—ब्रह्मविद्धि ब्रह्मव्यतिरेकेणार्पणाद्यभावं पश्यति, यथा घटतत्त्ववित् मृद्व्यतिरेकेण घटाभावम् । अतो न ब्रह्मविद्दृष्ट्या अर्पणादिषु बुद्धिद्वयसामानाधिकरण्यं, किं त्वपामरज्ञानिदृष्ट्यैवेति ।

अयं भावः—य आत्मसाक्षात्कारवान् तस्य सर्वमिदं ब्रह्मैव भाति । यस्त्वल्पज्ञः परोक्षेण ब्रह्मवित् तस्य हि सर्वं ब्रह्मैव न भाति, किंतु सर्वस्मिन् तेन ब्रह्मदृष्टिराधेया प्रतिमादौ विष्ण्वादिबुद्धिवत् । तस्मादर्पणादेर्वस्तुतो ब्रह्मत्वेपि अल्पज्ञेन तत्राहितेयं ब्रह्मबुद्धिः कल्पितैव- आहितत्वात् । आहितत्वमारोपितत्वम् । आरोपितस्य कल्पितत्वं सर्वसम्मतम् । इति ।

पूर्वपक्षमङ्गीकरोति —सत्यमिति । किमिदं ज्ञानयज्ञस्तुत्यर्थं प्रकरणं ? यद्वा अर्पणादिकारकविशिष्टयज्ञस्तुत्यर्थम् ? द्वितीये- त्वदुक्तं सत्यमेव भवेत्, नतु द्वितीयस्येह सङ्गतिः- 'कर्मण्यकर्म यः पश्ये'दित्यादिना सम्यग्दर्शनरूपज्ञानस्यैव स्तूयमानत्वात् । आद्ये तु न त्वदुक्तार्थस्सङ्गच्छते- प्रकरणविरोधादित्याह—यदीदं ज्ञानयज्ञस्तुत्यर्थं प्रकरणं न स्यात्तर्हि एवं त्वदुक्तरीत्यापि स्यात् । इदं तु ज्ञानयज्ञस्तुत्यर्थं प्रकरणमित्याह—अत्र त्विति । अत्र तु प्रकरणे सम्यग्दर्शनं सम्यग्दृश्यते आत्मादिपदार्थो येन तत्सम्यग्दर्शनमिति ज्ञानमित्यस्य विशेषणं । स्तौति भगवानिति शेषः । स्तुतिप्रकारं दर्शयति—श्रेयानिति । ननु कथं ज्ञानस्य यज्ञत्वेन स्तुतिसम्भवोऽत आह—अत्र चेति । ब्रह्मार्पणमिति श्लोकोक्तस्य ज्ञानस्य यज्ञत्वसम्पादने 'ज्ञानयज्ञः परन्तपे'ति वचनं समर्थम् । ज्ञानयज्ञ इति भगवद्वचनाद्ज्ञानस्य यज्ञत्वसम्पत्तिरित्यर्थः । यद्वा इदं ब्रह्मार्पणमित्यादिवचनं ज्ञानस्य यज्ञत्वसम्पादने समर्थमित्यन्वयः । ननु भवत्विदं ज्ञानयज्ञस्तुत्यर्थं प्रकरणं, किं तत इत्यत आह—येत्विति । तेषां मत इति शेषः । उक्ता पूर्वोक्ता ब्रह्मविद्या सम्यग्दर्शनं नेह विवक्षिता स्यात्, यथोक्तेन वाक्येन विवक्षिता न स्यात्, तत्र हेतुमाह—अर्पणादीति । अर्पणादिषु ब्रह्मदृष्टिः कर्तव्येति अर्पणादिविषयं ज्ञानमेवेह विवक्षितं भवेत्र तु ब्रह्मज्ञानमित्यर्थः । ननु भवत्विदमर्पणादिविषयं ज्ञानं, तथापि अर्पणादिषु ब्रह्मदृष्ट्याधानेन स्यादेव मोक्षः, प्रतिमादिषु विष्ण्वाद्याधानवदित्यत आह—नचेति । अतस्मिंस्तद्बुद्धेर्मिथ्याज्ञानत्वादर्पणादिषु ब्रह्मबुद्ध्या, प्रतिमादिषु विष्ण्वादिबुद्ध्या वा, न भवेन्मोक्ष इत्यर्थः ।

मोक्षफलं प्राप्यते, ब्रह्मैव तेन गन्तव्यमिति चोच्यते, विरुद्धं च सम्यग्दर्शनमन्तरेण मोक्षफलं प्राप्यत इति।

प्रकृतविरोधश्च—सम्यग्दर्शनं च प्रकृतं- कर्मण्यकर्म यः पश्येदित्यत्र अन्ते च सम्यग्दर्शनस्यैव उपसंहारा'च्छ्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञः'- 'ज्ञानं लब्ध्वा परां शान्ति'मित्यादिना सम्यग्दर्शनस्तुतिमेव कुर्वन्नुपक्षीणोऽध्यायः। तत्र अकस्मादर्पणादौ ब्रह्मदृष्टिरत्र प्रकरणे प्रतिमायामिव विष्णुदृष्टिरुच्यत इत्यनुपपन्नम्। तस्माद्यथाव्याख्यातार्थ एवायं श्लोकः॥२४॥

---

मोक्षाभावे इष्टापत्तिं वारयति—ब्रह्मैवेति। ननु भगवद्वचनादस्मादेव मिथ्याज्ञानाद्गौणज्ञानाद्वा दर्शिताद्भवेदेव मोक्ष इत्यत आह—विरुद्धं चेति। तमेवं विदित्वाऽतिमृत्युमेतीत्यादिशास्त्रविरोधादिति भावः।

प्रकरणविरोधोपीत्याह—प्रकृतेति। सम्यग्दर्शनप्रकरणत्वादस्याध्यायस्येत्यर्थः। कथमिदं ज्ञायते, अत आह—कर्मणीति। 'कर्मण्यकर्म यः' इति सम्यग्दर्शनं प्रक्रम्य 'ज्ञानं लब्ध्वा परां शान्ति'-मित्युपसंहरति। मध्ये च ज्ञानमेव स्तूयते। अत उपक्रमाद्यैकरूप्यादिलिङ्गात्सम्यग्दर्शनप्रकरणमिदमिति ज्ञायते। उपक्षीण उपसंहृतस्समाप्तो भवतीत्यर्थः। तत्र एवंसति अकस्माद्धेतुं विना अत्र प्रकरणे ज्ञानयज्ञप्रकरणे 'प्रतिमायां विष्णुदृष्टिरिव अर्पणादिषु ब्रह्मदृष्टिरुच्यत' इति परव्याख्यानमनुपपन्नम्।

उपसंहरति—तस्मादिति। परोक्तार्थस्यानुपपन्नत्वादित्यर्थः। यथाव्याख्यातार्थः— यथेत्यनुरूपार्थेऽव्ययं- व्याख्यातोऽर्थो यस्य स व्याख्यातार्थः- अनुरूपं श्लोकस्यार्थो मया व्याख्यात इत्यर्थः। व्याख्यानमनतिक्रम्य यथाव्याख्यातमर्थो यस्य स यथाव्याख्यातार्थ इति वा।

यत्तु रामानुजः—ब्रह्मार्पणं ब्रह्म अर्पणं स्रुगादि यस्य तत् ब्रह्म, ब्रह्ममूर्तं हविः ब्रह्माग्नौ येन ब्रह्मणा कर्त्रा हुतं निक्षिप्तं सर्वं कर्म ब्रह्मात्मकतया ब्रह्ममयमिति यस्समाधत्ते स ब्रह्मकर्मसमाधिः तेन ब्रह्मैव गन्तव्यं, ब्रह्मात्मकतया ब्रह्मभूतमात्मस्वरूपं गन्तव्यं, मुमुक्षुणा क्रियमाणं कर्म परब्रह्मात्मकमेवेत्यनुसन्धानयुक्ततया ज्ञानाकारं साक्षादात्मावलोकनसाधनं, न ज्ञाननिष्ठाव्यवधानेनेत्यर्थं इति, यच्च वेदान्तदेशिकः—कर्मयोगसाक्षात्कार्यमात्मस्वरूपमत्र लुप्तविसर्गादिवद्ब्रह्मशब्देनोच्यत इत्याह-ब्रह्मात्मकतयेति, तत्सर्वं तुच्छात्तुच्छतरम्—तथाहि, यस्सर्वं कर्म ब्रह्ममयं जानाति स आत्मानं साक्षात्कुरुत इति वचनमयुक्तम्- आत्मसाक्षात्कारस्य सर्वकर्मविषयकब्रह्मज्ञानस्य च कार्यकारणभावाभावात्, सर्वं कर्म ब्रह्मात्मकमिति ज्ञानादस्तुनाम कथञ्चिद्ब्रह्मसाक्षात्कारः, न पुनरात्मसाक्षात्कारो भवितुमर्हति- ब्रह्मभिन्नत्वादात्मनस्त्वत्मते। किं च इन्द्रियव्यापारोपरमरूपज्ञाननिष्ठां विना कथमन्तस्स्थितात्मवस्तुसाक्षात्कारः? आत्मन आन्तरस्य साक्षात्कारे मनएव हि करणं, तस्यान्तर्मुखत्वं हि ज्ञाननिष्ठा, न कर्मी स बहिर्मुखमनाएव कारकादीनां बहिस्स्थत्वात्त्वात्मा बाह्य- येन कर्मण्यमनसा बहिर्मुखेनात्मसाक्षात्कारो भवेत्। नच कर्म ब्रह्मेतिज्ञानमात्मसाक्षात्कारहेतुरेवेति वाच्यं, घटो ब्रह्मेतिज्ञानादप्यात्मसाक्षात्कारापत्तेः। नचेष्टापत्तिः- तथानुभवाभावात्।

दैवमेवापरे यज्ञं योगिनः पर्युपासते ।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥२५॥

तत्राधुना सम्यग्दर्शनस्य यज्ञत्वं सम्पाद्य तत्स्तुत्यर्थं अन्येऽपि यज्ञा उपक्षिप्यन्ते- दैवमेवापर इत्यादिना—दैवमेवेति । दैवमेव देवा इज्यन्ते येन यज्ञेनासौ दैवो यज्ञः, तमेव अपरे यज्ञं योगिनः कर्मिणः पर्युपासते कुर्वन्तीत्यर्थः ।

ब्रह्माग्नौ 'सत्यं ज्ञानमनन्तं ब्रह्म, विज्ञानमानन्दं ब्रह्म, यत्साक्षादपरोक्षाद्ब्रह्म, य आत्मा सर्वान्तरः' इत्यादिवचनोक्तमशनायापिपासादिसर्वसंसारधर्मवर्जितं, नेतिनेतीति निरस्ताशेषविशेषं, ब्रह्म ब्रह्मशब्देनोच्यते । ब्रह्म च तदग्निश्च स होमाधिकरणत्वविवक्षया

अपि च सर्वस्यापि ब्रह्मकार्यत्वेन ब्रह्मभूतत्वादर्पणादिकं ब्रह्मभूतमेवेति कृत्वा अर्पणादीनां ब्रह्मभूतत्वविशेषणमप्यनर्थकम् । न ह्यविद्वानपि अब्रह्मभूतमर्पणादिकं सम्पादयितुं शक्नोति, येना ब्रह्मभावब्रह्मार्पणमब्रह्महविर्होतु शक्येतेति तद्वारणाय ब्रह्मार्पणमित्याद्युच्येत ।

अथ यदुक्तं हविरादिवद्ब्रह्मात्मकत्वमात्मन इति वेदान्तदेशिकेन, तद्धि वेदान्तदेशिकपदं विरुद्धलक्षणयाऽस्मिन् प्रवृत्तमिति स्पष्टं बोधयति । तथाहि- आत्मनो हविरग्न्यादिवद्ब्रह्मात्मकत्वं किं ब्रह्मकार्यत्वादुत ब्रह्मज्ञेयत्वात् ? नाद्य 'अजो नित्यश्शाश्वतः' इत्यादिविरोधात् । प्रकृतिपुरुषकालादीनां त्वन्मतेऽप्यनादित्वात् , नित्यत्वाच्च । न द्वितीयं ब्रह्मण इवात्मनोऽपि द्रष्टृत्वेन ब्रह्मज्ञेयत्वाभावात्- अन्यथा जडत्वापत्तेः, चेतनश्चेतनानामितिश्रुतौ जीवाश्चेतना इति त्वयाप्यभ्युपेतत्वात् ।

यद्यात्मनो ब्रह्मज्ञेयत्वाद्ब्रह्मात्मकत्वं स्यात्तर्हि ब्रह्मणोऽप्यात्मज्ञेयत्वादात्मात्मकत्वं स्यात्- दृश्यते त्वग्र्यया बुद्धयेत्यादिश्रुत्या प्रतिपाद्यते हि ब्रह्मणोऽप्यात्मज्ञेयत्वम् । नचेदं ज्ञेयत्वं ब्रह्मणस्सत्यमिति वाच्यं, तथासति जडत्वपरिच्छिन्नत्वानित्यत्वादिप्राप्ते , 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुतिविरोधाच्च, 'साक्षी चेता' इत्यादिश्रुतिविरोधाच्च । अतः कल्पितमेव । एवमात्मन्यपि ब्रह्मण एवात्मत्वात् । तस्मादात्मनि ब्रह्मात्मकत्वं ब्रह्माभिन्नत्वमेव नान्यत् ॥२४॥

दैवमिति । देवानामयं दैवं तस्येदमित्यण् । देवयजनसाधनं इत्यर्थः । यज्ञोऽपूर्वं तत्साधकं कर्म वा यज्ञस्योपासनासम्भवादुपासनमिह करणमेवेत्याह—कुर्वन्तीति । कर्मयज्ञोऽयं सर्वत्र प्रसिद्ध एवेति भावः ।

साक्षादपरोक्षादिति श्रुतावपरोक्षादिति पञ्चमी प्रथमार्थे छान्दसी- अपरोक्षमित्यर्थः । साक्षात्करणव्यापारं विनैवेत्यर्थः । आत्मत्वादिति भावः । सर्वान्तरः सर्वेषामन्नमयाद्यानन्दमयान्तानां पञ्चानां कोशानामान्तरः अन्तः स्थितः जगदन्तस्स्थितः इति वा । अशनाया क्षुत् । आदिपदात्सुखदुःखादिग्रहणम् । नेतिनेतीतिश्रुत्या निरस्ता अशेषा विशेषा भेदा यस्मिन् तत् अस्थूलमनण्वह्रस्वमित्येवं स्थूलत्वाणुत्वह्रस्वत्वादयस्सर्वे विशेषा आत्मनि निराकृता इत्यर्थः । ब्रह्मणि अग्नित्वारोपणं किं विवक्षयेत्यत आह—होमाधिकरणविवक्षयेति । हविरादिहोमस्य अग्नेरधिकरणत्वा

ब्रह्माग्निस्तस्मिन् ब्रह्माग्नौ अपरे अन्ये ब्रह्मविदो यज्ञं यज्ञशब्दवाच्य आत्मा- आत्मनामसु यज्ञशब्दस्य पाठात्तमात्मानं यज्ञं परमार्थतः परमेव ब्रह्म सन्तं बुद्ध्याद्युपाधिसंयुक्तमध्यस्त-सर्वोपाधिधर्मकमाहुतिरूपं यज्ञेनैवात्मनैवोक्तलक्षणेनोपजुह्वति प्रक्षिपन्ति- सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मस्वरूपेणैव यद्दर्शनं स तस्मिन् होमस्तं कुर्वन्ति। ब्रह्मात्मैकत्वदर्शननिष्ठास्सन्न्यासिन इत्यर्थः। सोयं सम्यग्दर्शनलक्षणो यज्ञो दैवयज्ञादिषु यज्ञेषूपक्षिप्यते- ब्रह्मार्पणमित्यादिना, प्रस्तुतः 'श्रेयान् द्रव्यमयाद्यज्ञात् ज्ञानयज्ञ' इत्यादिना स्तुत्यर्थम् ॥२५॥

श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन्विषयानन्ये इन्द्रियाग्निषु जुह्वति ॥२६॥

श्रोत्रादीनीति। श्रोत्रादीनीन्द्रियाणि अन्ये योगिनः संयमाग्निषु प्रतीन्द्रियं संयमो भिद्यत इति बहुवचनम्- संयमा एवाग्नयः तेषु जुह्वति। इन्द्रियसंयममेव कुर्वन्तीत्यर्थः।

---

दिति भावः। अत एवाग्नावित्यधिकरणे सप्तमी। कोसावात्मेत्यत आह—परमार्थत इत्यादि। यथा परमार्थतो महाकाश एव घटाद्युपाधिवशाद्घटाकाशादिभेदेन व्यवह्रियते, तथा परमार्थतो ब्रह्मैव बुद्ध्याद्युपाधिवशादात्मेति व्यवह्रियते, अस्मिंश्च बुद्ध्याद्यवच्छिन्ने आत्मनि बुद्ध्याद्युपाधिधर्मा अज्ञानेनाध्यस्ताः। अत एवाहं सुखी दुःखी काणो बधिरः स्थूलः कृश इत्यादिव्यवहारः। बुद्ध्यादीत्यादिपदान्मन.प्राणेन्द्रियदेहग्रहणम्।

नचासङ्गोह्ययं पुरुष इति श्रुत्युक्तस्यासङ्गस्यात्मनः कथं बुद्ध्याद्युपाधिसम्बन्ध इति वाच्यं, मायया सर्वसम्भवात्, उक्तं हि व्यासेन भागवते- 'सेयं भगवतो माया यन्नयेन विरुद्ध्यत' इति। यद्विचारेण विरुध्यते सैव मायेत्यर्थः। अविचारितरमणीयत्वान्मायाकार्यस्य नास्ति विचारक्षमत्वमिति भावः। वस्तुतो नास्त्युपाधिसङ्ग आत्मन॰, किंतु मायया शुक्तिकारजतादिवत्प्रतीयत इति तत्त्वम्।

आहुतिर्हविः। उक्तलक्षणेनेति। बुद्ध्याद्युपाधिसंयुक्तत्वादिलक्षणशालिनेत्यर्थः। नन्वात्मन एव ब्रह्मत्वात्कथं स्वस्मिन् स्वस्य प्रक्षेप॰, आधाराधेयभावस्य द्विनिष्ठत्वादत आह—सोपाधिकस्येति। सोपाधिके आत्मनि या निरुपाधिकब्रह्मबुद्धिः सैवात्मनो ब्रह्मणि॰ प्रक्षेप इत्यर्थः। फलितमाह—ब्रह्मात्मेति। अहं ब्रह्मास्मीति ज्ञाननिष्ठेत्यर्थः। केऽमी अत आह—सन्न्यासिन इति। पूर्वार्धेन कर्मिणामुक्तत्वादिति भावः। ननु ब्रह्मार्पणमिति श्लोकोक्तस्य ज्ञानयज्ञस्य कस्मात्पुनरिह वचनमत आह—सोयमिति। ब्रह्मार्पणमितिश्लोकेन सम्यग्दर्शनं प्रस्तुतमिदानीं तु तस्य यज्ञत्वं स्फुटमुक्तमिति न पौनरुक्त्यमिति भावः। किमर्थोऽयं ज्ञानयज्ञ इहोपक्षिप्तोऽत आह—श्रेयानित्यादिना स्तुत्यर्थमिति।

यत्तु रामानुजः—दैवं देवार्चनरूपं यज्ञमिति, यज्ञं हविः यज्ञेन स्रुगादिनेति च व्याचख्यौ, तत्तुच्छम्—अप्रसिद्धार्थकस्पनस्यान्याय्यत्वात्, ब्रह्माग्नावित्यग्नेर्ब्रह्मविशेषणस्य व्यर्थत्वाच्च ॥२५॥

श्रोत्रादीनीति। संयमो नियमनम्। ननु संयमस्यैकत्वात्कुतस्संयमाग्निष्विति बहुत्वमत आह—प्रतीन्द्रियमिति। चक्षुस्संयमो श्रवणसंयमो रसनसंयम इत्येवमिन्द्रियभेदात्संयमभेद इति।

शब्दादीन् विषयानन्ये इन्द्रियाग्निषु इन्द्रियाण्येव अग्नयः तेष्विन्द्रियाग्निषु जुह्वति। श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्ते ॥२६॥

सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥२७॥

किंच सर्वाणीति। सर्वाणीन्द्रियकर्माणि इन्द्रियाणां कर्माणि इन्द्रियकर्माणि- तथा प्राणकर्माणि च प्राणो वायुराध्यात्मिकः तत्कर्माण्याकुञ्चनप्रसारणादीनि तानि च अपरे आत्मसंयमयोगाग्नौ आत्मनि संयम आत्मसंयमस्स एव योगोऽग्निश्च तस्मिन्नात्मसंयमयोगाग्नौ- जुह्वति प्रक्षिपन्ति। ज्ञानदीपिते स्नेहेनेव प्रदीपे विवेकविज्ञानेनोज्ज्वलभावमापादिते जुह्वति प्रविलापयन्तीत्यर्थः ॥२७॥

द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथा परे।
स्वाध्यायज्ञानयज्ञाश्च यतयस्संशितव्रताः ॥२८

किंच, द्रव्ययज्ञा इति। द्रव्ययज्ञाः- तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या कुर्वन्ति ये ते द्रव्ययज्ञाः, तपोयज्ञाः- ये तपस्विनः ते तपोयज्ञाः, योगयज्ञाः- प्राणायामप्रत्याहारादिलक्षणो योगो यज्ञो येषां ते योगयज्ञाः, तथा परे स्वाध्याययज्ञाश्च- स्वाध्यायो यथाविधि

---

भावः। शब्दादीनिति। ननु इन्द्रियसंयमरूपयज्ञेनैव शब्दादिविषयग्रहणरूपो यज्ञोऽप्युक्त एवेत्यत आह—श्रोत्रादिभिरिति। विरुद्धाविरुद्धसाधारण्येन सर्वविषयाग्रहणं पूर्वस्मिन्यज्ञे, इह तु विरुद्धविषयाग्रहणमेवेति भेद इत्यर्थः ॥२६॥

सर्वाणीति। अपरे सर्वाणि इन्द्रियकर्माणि प्राणकर्माणि च ज्ञानदीपिते आत्मसंयमयोगाग्नौ जुह्वति। इन्द्रियाणां कर्माणि व्यापाराः शब्दस्पर्शादिग्रहणानि, गमनभाषणादीनि च आत्मन्यध्यात्मं तत्र भव आध्यात्मिकः- आत्मनि संयमो नियमनं मनस इति भावः। आत्मसंयमः, स एव योग आत्मसंयमयोगः स एवाग्निरात्मसंयमयोगाग्निः तस्मिन् औपनिषदाभिमतनिर्बीजसमाधावित्यर्थः। वक्ष्यत्यमुं षष्ठाध्याये। ज्ञानेन विवेकविज्ञानेन दीपिते उज्ज्वलभावमापादिते इत्यन्वयः। तत्र दृष्टान्तमाह—स्नेहेनेव प्रदीपे इति। यथा प्रदीपस्तैलेन दीपितो भवति तद्वदित्यर्थः। जुह्वतीति हवि प्रक्षेपवाचिनो धातोरिह कथं प्रयोगोपपत्तिरत आह—प्रविलापयन्तीति। लीनानि कुर्वन्तीत्यर्थः। अग्नौ हविषः प्रक्षेपणंनाम हविर्विलापनमेव हीति भावः ॥२७॥

द्रव्येति। द्रव्यं यज्ञो येषां ते द्रव्ययज्ञाः- साक्षाद्द्रव्यस्य यज्ञत्वरूपक्रियात्वाभावादाह—द्रव्यविनियोगमिति। अतीर्थे द्रव्यविनियोगस्य व्यर्थत्वेन यज्ञतुल्यत्वाभावादाह—तीर्थेष्विति। गङ्गादिपुण्यक्षेत्रेष्वित्यर्थः। पात्रेष्विति वा। तपः कृच्छ्रचान्द्रायणादिलक्षणं यज्ञो येषां ते तपोयज्ञाः। योगयज्ञा इति। योगः पातञ्जलाभिमत ईश्वरप्रणिधानात्मकः। आत्मदर्शनयज्ञत्वादित्यर्थमाह—

ऋगाद्यभ्यासो यज्ञो येषां ते स्वाध्याययज्ञाः, ज्ञानयज्ञाः- ज्ञानं शास्त्रार्थपरिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाश्च । यतयो यतनशीलाः । संशितव्रताः सम्यक् शितानि तनूकृतानि तीक्ष्णीकृतानि व्रतानि येषां ते संशितव्रताः ॥२८॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ।
प्राणापानगती रुध्वा प्राणायामपरायणाः ॥२९॥

किंच, अपान इति । अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणं प्राणवृत्तिं पूरकाख्यं--प्राणायामं कुर्वन्तीत्यर्थः । प्राणे अपानं- तथा अपरे जुह्वति रेचकाख्यं प्राणायामं कुर्वन्तीत्येतत् । प्राणापानगती रुध्वा मुखनासिकाभ्यां वायोर्निर्गमनं प्राणस्य गतिः तद्विपर्ययेणाधोगमनं अपानस्य गतिः ते प्राणापानगती रुध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः ॥२९॥

अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति ।
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥३०॥

किंच, अपर इति । अपरे नियताहाराः नियतः परिमितः आहारो येषां ते नियताहारास्सन्तः, प्राणान् वायुभेदान् प्राणेष्वेव जुह्वति । यस्य यस्य वायोर्जयः क्रियते इतरान् वायुभेदान् तस्मिन् तस्मिन् जुह्वति, ते तत्र तत्र प्रविष्टा इव भवन्ति । सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः यज्ञैर्यथोक्तैः क्षपितः नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः ॥३०॥

---

शास्त्रार्थपरिज्ञानमिति । शास्त्रं वेदवेदाङ्गादिरूपम् । संशितव्रता अपरे यतय- द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्स्वाध्यायज्ञानयज्ञाश्च भवन्तीत्यन्वयः ।

नात्र द्रव्ययज्ञादीनामेकस्मिन् पुरुषे समुच्चयः, किंतु केचिद्द्रव्ययज्ञाः, केचित्तपोयज्ञाः, केचिद्योगयज्ञाः, केचित्स्वाध्याययज्ञाः, केचिद्ज्ञानयज्ञाश्च भवन्तीति अपरे इति पदस्य आवृत्त्या लभ्यतेऽयमर्थः ॥२८॥

अपान इति । केचिदपाने प्राणं जुह्वति, तथा अपरे प्राणे अपानं जुह्वति । अन्ये इति शेषः । प्राणापानगती रुध्वा प्राणायामपरायणा भवन्ति । नचास्य श्लोकस्य योगयज्ञेन गतार्थता शङ्क्या- प्राणायामप्रत्याहाराद्यष्टाङ्गयुक्तो योगस्तत्रोक्तः । अत्र तु पूरकस्य रेचकस्य कुम्भकस्य च प्रत्येकं यज्ञत्वमिति भेदात् ॥२९॥

अपरे इति । कथं प्राणानां प्राणेष्वेव होम इत्यत आह—यस्य यस्येति । पञ्चानां वायूनां मध्ये यो यो वायुर्जितः स्वाधीनो भवति, तस्मिंस्तस्मिन्नितरेषां वायूनां प्रवेशनमेव होम इत्युच्यत इत्यर्थः । एते दैवमेवेत्यारभ्योक्ता इत्यर्थः ॥३०॥

यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ।
नायं लोकोऽस्त्ययज्ञस्य कुतोन्यः कुरु सत्तम ॥३१॥

एवं यथोक्तान् यज्ञान् निर्वर्त्य, यज्ञेति । यज्ञशिष्टामृतभुजो यज्ञाना शिष्टं यज्ञशिष्टं यज्ञशिष्टं च तदमृतं च यज्ञशिष्टामृतं तत् भुंजत इति यज्ञशिष्टामृतभुजः- यथोक्तान् यज्ञान् कृत्वा तच्छिष्टेन कालेन यथाविधिचोदितं अन्नममृताख्यं भुंजते ये ते यज्ञशिष्टामृतभुजः यान्ति गच्छन्ति, ब्रह्म सनातनं चिरन्तनं मुमुक्षवश्चेत् कालव्यतिक्रमापेक्षयेति सामर्थ्याद्गम्यते । नायं लोकस्सर्वप्राणिसाधारणोप्यस्ति- यथोक्तानां यज्ञानां एकोपि यज्ञो यस्य नास्ति स अयज्ञः तस्यायज्ञस्य कुतोन्यो विशिष्टसाधनसाध्यः । हेकुरुसत्तम ॥३१॥

एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ।
कर्मजान्विद्धि तान् सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥३२॥

एवमिति । एवं यथोक्ताः बहुविधाः बहुप्रकाराः यज्ञाः विततः विस्तीर्णाः ब्रह्मणः वेदस्य मुखे द्वारे । वेदद्वारेणावगम्यमाना ब्रह्मणो मुखे वितता उच्यन्ते, तद्यथा 'वाचि हि प्राणं जुहुम' इत्यादयः । कर्मजान् कायिकवाचिकमानसकर्मोद्भवान् विद्धि- तान् सर्वान् अनात्मजान्- निर्व्यापारो ह्यात्मा, अत एवं ज्ञात्वा विमोक्ष्यसेऽशुभात् न मद्व्यापारा एते निर्व्यापारो ह्यहमुदासीन इत्येव ज्ञात्वा अस्मात्सम्यग्दर्शनात् विमोक्ष्यसेऽशुभात्संसारबन्धनादित्यर्थः ॥३२॥

---

यज्ञेति । ननु दैवयज्ञस्यान्नमयत्वादाज्यमयत्वान्मांसमयत्वाद्वा तत्र हुतावशिष्टममृतशब्दवाच्यमन्नाज्यमांसान्यतमं लभ्यते भोक्तुं तत्कर्तुः; कथं पुनर्योगयज्ञादिषु भोक्तव्यलाभ इत्यत आह— तच्छिष्टेन कालेनेति । यज्ञशिष्टममृतं भुञ्जत इत्येकोर्थः । यज्ञशिष्टकालेन अमृतं भुञ्जत इत्यन्योर्थः । अतो नानुपपत्तिरित्यर्थः । यथोक्तयज्ञकारिणामपि सकामत्वे न ब्रह्मप्राप्तिरित्याह—मुमुक्षवश्चेदिति । ननु किं सहसा यान्ति, उत चिरकालेनेत्यत आह—कालेति । ज्ञानयज्ञनिष्ठानामचिरेणैव ब्रह्मप्राप्तिरन्येषां तु चित्तशुद्धिज्ञानप्राप्तिद्वारा चिरकालादेवेति भावः ।

ननु कथमिदं ज्ञायतेऽत आह—सामर्थ्यादिति । 'ब्रह्मविद्ब्रह्मैव भवति, तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशके'नेति च श्रुतिसामर्थ्यादित्यर्थ । यद्वा 'तेऽर्चिषमभिसम्भवन्ती'त्यादिगतिश्रुतिसामर्थ्यादित्यर्थः । अयं लोको मनुष्यलोको मनुष्यलोकाभावोनाम मनुष्यलोकभोग्यपशुकलत्रान्नाद्यभाव.- अन्य. स्वर्गादि- विशिष्टसाधनानि तत्तन्नियतयज्ञादिसाधनानि- कुरुश्रेष्ठस्यार्जुनस्य दर्शितयज्ञसम्पादनं सुलभमेवेति सूचयितुमाह—कुरुसत्तमेति ॥३१॥

एवमिति । वेदे यथोक्ता इमे यज्ञा इत्यत आह—वाचि हि प्राणं जुहुम इत्यादय इति । आदिशब्देन 'प्राणे वा वाचं यो देव प्रभवः स एवाप्यय' इति वाक्यस्य ग्रहणम् । ननु वेदोक्तानां यज्ञानां कर्मजत्वज्ञानात्कथं मोक्ष आत्मन इत्यत आह—अनात्मजानित्यादि । सर्वेषां यज्ञानां

श्रेयान् द्रव्यमयाद्यज्ञाद्ज्ञानयज्ञः परन्तप ।
सर्वं कर्माखिलं पार्थ ! ज्ञाने परिसमाप्यते ॥३३॥

ब्रह्मार्पणमित्यादिश्लोकेन सम्यग्दर्शनस्य यज्ञत्वं सम्पादितं, यज्ञाश्चानेके उपदिष्टाः- तैस्सिद्धपुरुषार्थप्रयोजनैः ज्ञानं स्तूयते, कथम् ? श्रेयानिति । श्रेयान् द्रव्यमयात् द्रव्यसाधनसाध्यात् यज्ञात् ज्ञानयज्ञः परन्तप । द्रव्यमयो हि यज्ञः फलस्यारम्भकः, ज्ञानयज्ञो न फलस्यारम्भकः । अतः श्रेयान् प्रशस्यतरः । कथं ? यतस्सर्वं कर्म समस्तमखिलं पार्थ ज्ञाने परिसमाप्यते- मोक्षसाधने अन्तर्भवतीत्यर्थः । यथा- 'कृताय विजितायाधरेऽयास्संयन्त्येव-

---

वाङ्मनःकायसाध्यानामनात्मजत्वे ज्ञातेसति निर्व्यापारात्मतत्त्वाज्ञानं जायते, तस्माच्च तत्त्वज्ञानान्मुच्यत इति विमोक्ष्यस इत्युक्ते कस्मादित्याकांक्षा जाता, तत्पूरणायाह—अशुभादिति ॥३२॥

श्रेयानिति । सिद्धा लोकतस्सिद्धाः पुरुषार्था धर्मार्थकामाः प्रयोजनानि येषां तैः, यद्वा सिद्धा लोकशास्त्राभ्यां सिद्धाः पुरुषार्थाश्चत्वारः प्रयोजनानि येषां तैः, अथवा सिद्धः नतु साध्यः पुरुषार्थो मोक्ष प्रयोजनं येषां तैः । परम्परयेति भाव इति । यद्वा सिद्धं पुरुषार्थभूतं पुरुषापेक्षितलक्षणं प्रयोजनं येषां तैस्तथोक्तैरिति । यज्ञास्साध्यपुरुषार्थप्रयोजनाः, अथवा परम्परया सिद्धपुरुषार्थप्रयोजनाः । ज्ञानं तु साक्षात्सिद्धपुरुषार्थप्रयोजनं तस्माद्ज्ञानस्य स्तुतिरुच्यत इति भावः । यज्ञैर्ज्ञानस्य स्तुतिर्नाम अस्मदपेक्षया ज्ञानमुत्कृष्टमिति यज्ञाः प्रतिपादयन्तीत्यर्थः । यज्ञविदो ज्ञानं सर्वयज्ञोत्कृष्टमिति वदन्तीति यावत् । अचेतनानां यज्ञानां स्तावकत्वासम्भवात् ।

द्रव्यमयादित्यत्र द्रव्यशब्दो यज्ञसाधनहविरादिद्रव्यपर इत्याह—द्रव्यसाधनसाध्यादिति । द्रव्यात्मकसाधनसाध्यादित्यर्थः । कर्मयज्ञादिति यावत् । अनेन च प्राणायामादिसाधनसाध्यास्सर्वेऽपि यज्ञास्संगृहीताः । वाचिकमानसिककायिकान्यतमकर्ममयत्वात्तेषां- तत्र दैवयज्ञद्रव्ययज्ञतपोयज्ञाः कायिककर्मयज्ञाः, स्वाध्याययज्ञो वाचिककर्मयज्ञः, आत्मसंयमयोगशास्त्रार्थज्ञानयज्ञा मानसिककर्मयज्ञाः, प्राणायामादयोऽपि कायिककर्मयज्ञा एवेति विवेकः ।

एभ्यस्सर्वेभ्योऽपि यज्ञेभ्यो ज्ञानयज्ञ उत्कृष्टः । यदि त्वेकवचननिर्देशबलाद्द्रव्ययज्ञादित्यस्य दैवयज्ञादित्यर्थ उच्येत, तर्हि दैवयज्ञादेव ज्ञानयज्ञ उत्कृष्टो, नतु तपोयज्ञादिभ्य इत्यापतेत्तचानिष्टं— ज्ञानस्य सर्वोत्कृष्टत्वात् ।

कुतः पुनरस्योत्कर्ष इत्यत आह—द्रव्यमयो हीति । फलस्य स्वर्गादिरूपस्य । नच ज्ञानमपि मोक्षफलारम्भकमिति वाच्यं, मोक्षस्य नित्यसिद्धत्वेनानारभ्यमाणत्वात्, ब्रह्मस्वरूपत्वेन नित्यासत्वाच्च । तत्र फलत्वं तु कल्पितमेव । नच ज्ञानस्य वैयर्थ्यं- अविद्याकृतो यो मया मोक्षो नावाप्त इत्याकारको भ्रमः तन्निवृत्त्यर्थं ज्ञानस्यावश्यकत्वात् । सर्वस्य कर्मणो ज्ञाने परिसमाप्तिर्नाम मोक्षसाधनज्ञाने कर्मान्तर्भाव इत्याह—अन्तर्भवतीत्यर्थ इति ।

ज्ञाने कथं कर्मणोऽन्तर्भाव इत्यत श्रुतिं प्रमाणयति—यथेति । कृतायविजिताय अधरे अया-

मेनं सर्वं तदभिसमेति यत्किञ्च प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेदे'तिश्रुतेः ॥३३॥

तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥३४॥

तदेतद्विशिष्टं ज्ञानं तर्हि केन प्राप्यत इति, उच्यते—तदिति । तद्विद्धि विजानीहि,

---

इति छेदः । अयो द्यूतम् । कृतसञ्ज्ञोऽयः कृताय स विजितो येन तस्मै कृतायविजिताय आहिताग्न्यादित्वात्परनिपातः । विजितकृतायायेत्यर्थः । अधरे अपकृष्टा अयाः त्र्यङ्कादयः संयन्ति उपनयन्ति तेन जिता भवन्तीत्यर्थः । कृतत्रेताद्वापरकलिसञ्ज्ञकानि चत्वारि द्यूतानि- तत्र कृतं चतुरङ्कं त्रेता त्र्यङ्का द्वापरो द्व्यङ्कः कलिरेकाङ्कः कृतादियुगेषु धर्मवृषभस्य चतुष्पादत्वाद्यभिधानादियं कल्पना । तत्र चतुरङ्के कृताख्ये द्यूते त्र्यङ्कादित्रेतादिद्यूतानामन्तर्भावः । चतुर्षु त्र्यादिसत्त्वादिति । यथैवं तथा यत्किञ्च यत्किञ्चित्साम साधु कर्म प्रजाः कुर्वन्ति तत्सर्वमेनमभिसमेति प्राप्नोति अनेन जितं भवतीत्यर्थः । क एष इत्यत आह—यस्तद्वेदेति । यः तद्वेद्यं वेद तमेनमभिसमेतीत्यर्थः । किं तदत आह—यत्सवेदेति । यत्स रैक्वो वेद तद्वेद्यं ब्रह्मेत्यर्थः । यथा कृतजयादितरद्यूतजय एव ज्ञानलाभात्सर्वधर्मसिद्धिः । कृते त्रेतादीनामिव ज्ञाने कर्मणामन्तर्भावादिति श्रुत्यर्थः ।

ननु चतुर्षु त्र्यादीनां सत्त्वादन्तर्भाव उचितः, कथं पुनर्ज्ञाने कर्मणां सत्त्वं येन तत्र तेषामन्तर्भाव उच्येतेति चेदुच्यते—सर्वेषां कर्मणामात्मनि कल्पितत्वादात्मनि ज्ञाते सति सर्वाणि कर्माणि कृतप्रायाण्येवेत्यभिप्रायाद्ज्ञाने कर्मणामन्तर्भाव उक्तः ।

यद्वा एकस्यैवात्मनस्सर्वबुद्धिवृत्तिसाक्षित्वात् विज्ञानात्मबुद्धिशब्दवाच्यजीवसमूहकृतानि सर्वाणि कर्माणि आत्मसाक्षिकाण्येवेति कृत्वा आत्मज्ञानेन सर्वकर्माणि ज्ञातान्येवेत्यभिप्रायात् ।

अथ वा एकस्यैव ममात्मनः सन्निधानाद्बुद्ध्यन्तःकायाः कर्म कुर्वन्तीति यो जानाति स हि सर्वेषां कर्मणामात्माधीनत्वं पश्यतीत्यभिप्रायात् इति ।

एतावता आत्मज्ञानमेव दुर्लभं, कर्माणि तु सुलभान्येव- आत्मज्ञाने लब्धे तु सर्वाणि कर्माणि फलैस्सह लब्धान्येव- आत्मनोऽवाप्तसमस्तकामत्वादिति आत्मज्ञानस्य प्राशस्त्यं सिद्धम् । मूले सर्वमखिलमिति पदद्वयस्य पौनरुक्त्यं न शङ्क्यम् - प्रधानावान्तरसर्वभेदसंग्रहार्थं पदद्वयप्रयोगात् ।

अत्र रामानुजः—उभयाकारे कर्मणि कर्मांशाद्ज्ञानांशश्श्रेयानिति व्याचख्यौ, तदयुक्तम्—कर्मण उभयाकारत्वस्यैवासिद्धेः । कर्म सर्वथा कर्माकारमेव, ज्ञानं ज्ञानाकारमेव । नहि कर्मज्ञानयोरितरेतराकारत्वं सम्पादयितुं शक्यते, किंच ज्ञानकर्मोभयाकारयुक्तस्य कथं कर्मत्वमपि उभयत्वमेव स्यात् ॥३३॥

तदिति । विशिष्टमिति सर्वकर्मपरिसमाप्तिस्थानत्वादिविशेषणयुक्तमित्यर्थः । प्रशस्ततममिति वा । केनेति । केनोपायेनेत्यर्थः । प्रणिपातेन परिप्रश्नेन सेवया च आवर्जिता इति शेषः । तत्त्वदर्शिनो ज्ञानिनः ते ज्ञानमुपदेक्ष्यन्तीति । तद्विद्धि तदित्यस्य ज्ञानप्राप्त्युपायमित्यर्थः । येन विधिना

येन विधिना प्राप्यत इति। आचार्यानभिगम्य प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातः दीर्घनमस्कारः तेन 'कथं बन्धः, कथं मोक्षः, काऽविद्या, का विद्ये'ति परिप्रश्नेन सेवया गुरुशुश्रूषया इत्येवमादिना प्रश्रयेणावर्जिता आचार्या उपदेक्ष्यन्ति कथयिष्यन्ति ते ज्ञानं यथोक्तविशेषणम्। ज्ञानिनो ज्ञानवन्तोऽपि केचिद्यथावत्तत्त्वदर्शिनः तत्त्वदर्शनशीला अपरे न भवन्त्यतो विशिनष्टि—तत्त्वदर्शिन इति। ये सम्यग्दर्शिनः तैरुपदिष्टं ज्ञानं कार्यक्षमं भवति नेतरदिति भगवतो मतम् ॥२४॥

---

प्राप्यते तद्विद्धीति भाष्यात्। तद्ज्ञानं प्रणिपातादिना विद्धीत्यन्वयस्त्वयुक्त- प्रणिपातादीनां ज्ञानकरणत्वाभावात्- न हि प्रणिपातादिना ज्ञानं वेद्यते, किंतु मनसा। नापि प्रणिपातादिना ज्ञानं प्रतिपाद्यते, किंतु शास्त्रेण। तस्माद्भाष्यानुजोक्तान्वयो दुष्टः। यद्यपि विद्धीत्यस्य लभस्वेत्यर्थाश्रयणेऽयमप्यन्वयस्साधुस्तथाऽपि वैचेलॉभार्थकथनमयुक्तमिति वेद्यम्।

तदिति क्लीबत्वं तु ज्ञानप्राप्तिसाधनपरतयेति बोध्यम्। येन विधिना ज्ञानं प्राप्यते तत् तं विधिमित्यर्थः। वदतो मत्त इति शेषः। विद्धि। तमेव विधिं दर्शयति—प्रणिपातेनेत्याद्यवशिष्टश्लोकभागेन—इति वाऽन्वयः।

अथवा यदित्युत्तरश्लोकस्थयच्छब्दस्वारस्यात् तदिति पदमत्रत्यज्ञानविशेषणम्। प्रणिपातेन परिप्रश्नेन सेवया चावर्जितास्तत्त्वदर्शिनो ज्ञानिनस्ते तद्ज्ञानमुपदेक्ष्यन्तीति विद्धि। अनयाऽपि योजनया ज्ञानप्राप्त्युपाय एवानेन श्लोकेनोक्त इति न भाष्यविरोध। ते तुभ्यमित्यर्थः।

ननु भगवताऽर्जुनायोपदिष्टमेव ज्ञानमिति न ज्ञानप्राप्त्युपायजिज्ञासाऽर्जुनस्य स्यादितिचेन्मा भवत्वर्जुनस्य ज्ञानप्राप्त्याकांक्षा- प्राप्तज्ञानत्वात्। तथाऽपि लोकानुग्रहाय ज्ञानप्राप्त्युपायं जिज्ञासुमर्जुनमालक्ष्य भगवतोक्तमिदमिति। यद्वा, त्वयोक्तमिदं ज्ञानं यदि मया केनापि हेतुना विस्मृतं भविष्यति, तदा कः पुनर्मम ज्ञानप्राप्त्युपाय इतीममर्जुनस्य प्रश्नमुत्प्रेक्ष्याह भगवान्—तद्विद्धीति।

ननु योऽर्थः स्वेनाज्ञातः तमर्थं जिज्ञासुः पुरुषः तद्ज्ञमन्यं प्रार्थयेतैवेति लोकतस्सिद्धत्वाद्व्यर्थमिदं वचनमत आह—ये इति, नेतरदिति। इतरदतत्त्वविदुपदिष्टं गुरूपदेशं विना स्वेन शास्त्रविचाराद्ज्ञातं वा कार्यक्षमं न भवतीत्यर्थः। कार्यं चात्र अविद्यानिवृत्तिः- तस्या एव मोक्षत्वात्, मोक्षस्य तत्पूर्वकत्वादिति वा। नच कार्यं मोक्ष इति वाच्यं, मोक्षस्य सिद्धत्वेन साध्यत्वलक्षणकार्यत्वाभावात्।

कथं तत्त्वदर्शिनो निष्कामा उपदेक्ष्यन्तीत्यत आह भगवान्—प्रणिपातेनेत्यादि। आवर्जिताः स्वाधीनीकृताः- यथा भगवान् प्रणिपातादिलक्षणया भक्त्या भक्तपरवशो भवति तद्वद्विद्वांसोऽपीति भावः। अनेन च न धनादयस्तत्त्वविदावर्जने हेतव, किंतु प्रणिपातादय एवेति। गुरोश्च न नैष्ठुर्येण भवितव्यं, किंतु शिष्यवत्सलतयैवेति सूचितम्। ततश्च तत्त्वविदोऽपि शिष्यानुग्रहार्थं शास्त्रपाठभाष्यरचनादिव्यवहारो न दोषाय, किंतु गुणायैवेति सिद्धम्। अन्यथा शास्त्रार्थसम्प्रदायस्यैव विच्छेद-

**यद्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव !**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥३५॥**

तथाच सतीदमपि समर्थं वचनम् । यदिति । यद्ज्ञात्वा यद्ज्ञानं तैरुपदिष्टमधिगम्य पुनर्भूयः मोहमेवं यथेदानीं मोहं गतोऽसि पुनरेवं न यास्यसि हेपाण्डव । किंच येन ज्ञानेन भूतान्यशेषेण ब्रह्मादीनि स्तम्बपर्यन्तानि द्रक्ष्यसि साक्षादात्मनि मत्स्थानि इमानीति

---

प्रसङ्गात् । तत्त्वविदि भगवति कृष्णे तूष्णीं स्थितेसति गीताशास्त्रस्यैवाप्रवृत्तिप्रसङ्गात् । यथा गुरु शिष्यवत्सलो भवेत्तथा शिष्येण यतितव्यं, न तूदासितव्यं, नापि कुपितव्यं, किंतु सविनयं तत्र वर्तितव्य-मित्याह—प्रश्रयेणावर्जिता इति ॥३४॥

**समर्थमिति** । सार्थकमित्यर्थः । आत्मविदुपदिष्टं ज्ञानमेव कार्यक्षमं नेतरदित्यभ्युपगतेसति यद्ज्ञात्वेतीदंवचनमर्थवत्स्यादिति भावः । **यदिति** । हे पाण्डव ! यद्ज्ञात्वा पुनरेवं मोहं न यास्यसि येनाशेषेण भूतानि आत्मनि मय्यथो द्रक्ष्यसि । **इदानीमिति** । मदुपदेशात्प्रागित्यर्थः । नतूपदेश-काले इति भ्रमितव्यं- तदा मोहायोगात्- नहि भगवानतत्त्ववित्, येन तदुपदिष्टं ज्ञानं मोहनिवर्तना-क्षमं स्यादिति शङ्क्येत ।

**ननु** व्यर्थमिदं वचनं येन वाताङ्कुशादिभेषजेन यस्येदानीं वातादिरोगश्शान्तः स हि पुन-र्वातादिरोगप्राप्तौ वाताङ्कुशादिभेषजमेवास्य निवर्तकमिति स्वयमेव जानीयादेव यथा तद्वदिदानीं यद्ज्ञानं मोहनिवर्तकं तादृशं ज्ञानं पुनरपि मोहेसति तन्निवर्तकं स्यादेवेति स्वत एव जानीयादर्जुन इतिचेत, मैवम्—इदानीं महानुभावेन साक्षाद्भगवता कृष्णेनोपदिष्टत्वादस्य ज्ञानस्य मोहनिवर्तकत्व-मुक्तम् । श्रीरामप्रयुक्तस्य तृणस्यापि काकासुरोद्वेजकत्ववत् । अस्मिन् ज्ञाने विस्मृतेसति पुनर्मोह-प्रसङ्ग- तदपनयनाय यदर्वाक्तनैर्गुरुभिरुपदिश्यते ज्ञानं तस्य मोहनिवर्तकत्वमस्ति वा न वेति शङ्का जायेतैवार्जुनस्य, तदपगमेन सार्थकमिदं वचनम् । मयेव तत्त्वविद्भिरप्युपदिष्टं ज्ञानं मोहनिवर्तकमेव, नतु व्यर्थ- ममेव तेषामपि तत्त्ववित्त्वांशे भेदाभावादिति भगवता विवक्षितत्वात् ।

यद्वा, मया संग्रहेणोक्तं ते ज्ञानं अवकाशाभावात्- यदि विस्तरेण शुश्रूषा तर्हि तत्त्ववित्सकाशं गत्वा तेभ्यो विस्तरेण शृणु । इदं तु मयोक्तं संक्षिप्तं ज्ञानं तात्कालिकमोहनिवर्तनक्षममपि न भविष्य-न्मोहनिवर्तनक्षमं, तस्मात्त्वं युद्धानन्तरं तत्त्ववित्सकाशं गत्वा पुनर्विस्तरेण ज्ञानं लभस्व । सति विस्तृत-ज्ञाने न पुनर्मोहोदयप्रसङ्ग इति ।

अथ वा भगवदुपदिष्टज्ञानान्मम मोहश्शान्तः, तत्त्वविदुपदिष्टज्ञानात्किं फलं भवेल्लोकस्येतीम-मर्जुनस्य प्रश्नमुत्प्रेक्ष्याह भगवान्—यद्ज्ञात्वेति । अर्जुनस्तु लोकस्थानीयत्वेनेहोपनिबद्ध इति मास्मी-त्युक्तम् । एवं ज्ञानस्य मोहनिवर्तकत्वमेकं फलमुक्तमथ फलान्तरमाह—**येन भूतानीति** ।

यद्वा ज्ञानान्मोहे निवृत्तेसति पश्चात्किं स्यादत आह—येनेति । स्वात्मवदात्मन्येव सर्वप्रपञ्च-कल्पितत्वात्सर्वजगदधिष्ठाने मय्येव सर्वभूतानि सन्ति इति ज्ञास्यसि, तथा वासुदेवे परमेश्वरे येन,नि

अथो अपि मयि वासुदेवे परमेश्वरे चेमानीति क्षेत्रज्ञेश्वरैकत्वं सर्वोपनिषत्प्रसिद्धं द्रक्ष्यसीत्यर्थः ॥३५॥

अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ।
सर्वं ज्ञानप्लवेनैव वृजिनं सन्तरिष्यसि ॥३६॥

किंचैतस्य ज्ञानस्य माहात्म्यम्—अपीति । अपिचेदसि पापकृद्भ्यः सर्वेभ्योऽतिशयेन

---

सर्वाणि भूतानि वर्तन्त इत्यपि ज्ञास्यसि । त्वयि मयि च द्रक्ष्यसि भूतानीत्यनेन किं लब्धमत आह—क्षेत्रज्ञेति । क्षेत्रं शरीरेन्द्रियप्राणबुद्ध्यादिकं जानातीति क्षेत्रज्ञ आत्मा अन्तःकरणोपहितचैतन्यं कूटस्थः बुद्ध्यादिसाक्षी- ईश्वरः मायोपहितं चैतन्यं तयोरुभयोरेकत्वमभेदं द्रक्ष्यसि ज्ञास्यसि ।

उपाधिकृत एव भेदो न वास्तिवकः- उभयोरपि निर्धर्मकपरमानन्दबोधरूपत्वादेकस्यैव चैतन्यस्य मायोपहितत्वेनेश्वर इति, अन्तःकरणोपहितत्वेनात्मेति च भेदव्यवहारस्य कल्पितत्वात् । ततश्च वस्तुत ईश्वर एवाहमिति ज्ञास्यसीत्यर्थः ।

अयं भावः—'यतो वा इमानि भूतानि जायन्त' इत्यादिना सर्वजगदधिष्ठानं ब्रह्मेति निश्चिनोति विद्वान् वेदान्तश्रवणवशात्, पश्चान्मननादिना तु स्वस्यैव सर्वजगदधिष्ठानत्वे ज्ञातेसति स्वस्मिन्नेव सर्वं जगत्पश्यति, तथा सर्वजगदधिष्ठानत्वादात्मानमेव ब्रह्म पश्यतीति अयमेव ब्रह्मसाक्षात्कारो मुक्तिरिति नित्यमुक्तात्मसाक्षात्कारे सति बन्धभ्रमनिवृत्तेरिति ।

यत्तु रामानुजः—प्रकृतिविनिर्मुक्तं सर्वमात्मवस्तु परस्परं समं सर्वेश्वरेण च सममित्यस्य श्लोकस्य फलितार्थमाह, यच्च वेदान्तदेशिकः—स्वात्मनि निदर्शनभूते स्थालीपुलाकादिन्यायेन सर्वाणि भूतानि द्रक्ष्यसीति, अथोमयीत्यस्य मन्निदर्शनेन स्वात्मानं परांश्च द्रक्ष्यसीत्यर्थ इति, तत्सर्वं तुच्छम्—आत्मनो निदर्शनत्वे आत्मानमिव सर्वाणि भूतानि द्रक्ष्यसीति वक्तव्यत्वात् । अधिकरणे सप्तम्या विहितत्वेन कर्मणि सप्तम्या अयोगात् । नापि यस्य च भावेनेति भावलक्षणसप्तम्युचिता- आत्मनि निदर्शनभूतेसतीति- सर्वभूतदर्शनंप्रति आत्मनिदर्शनत्वस्य भावलक्षणत्वायोगात् । निदर्शनभूतपदस्य मूलाद्बहिःकल्पनस्याप्रमाणत्वात् । भवन्तीति भूतानीति भूतशब्दस्य देहेन्द्रियादिकार्यसङ्घातवाचिनः अजे नित्ये आत्मनि प्रयोगायोगात् ।

प्रकृतिविनिर्मुक्तत्वेसति आत्मनो भेदकाभावान्नैवानेकात्मसिद्धिरिति सर्वमात्मवस्त्वित्यप्ययुक्तम्—आत्मनामीश्वरतौल्यं चायुक्तं- नियाम्यनियामकादिभेदसद्भावात्- वस्तुतश्चैतन्यात्मना साम्यमितिचेत्, न तत्साम्यं, किं त्वभेद एव- चैतन्यस्यैकत्वादनेकचैतन्यकल्पनायोगात् । नच घटत्ववच्चैतन्यजात्यभेदेऽपि घटवच्चेतनव्यक्तिभेद इति वाच्यं, व्यक्तिभेदप्रयोजकाकारभेदस्य निराकारे आत्मन्यसम्भवाद्घटवत् । न च घटाकाशानामिवोपाधितो भेद इति वाच्यं, प्रकृतिविनिर्मुक्तमात्मवस्त्विति त्वया निरुपाधिकस्यैवात्मनो गृहीतत्वात् ॥३५॥

अपीति । 'दास्तं चाथ त्रिषु द्रव्ये पापपुण्यसुखादि चे'त्यमरादाह -पापेभ्यः पापकृद्भ्य इति ।

पापकृत् पापकृत्तमः सर्वं ज्ञानप्लवेनैव ज्ञानमेव प्लवं कृत्वा वृजिनं वृजिनार्णवं पाप सन्त रिष्यसि । धर्मोपीह मुमुक्षोः पापमुच्यते ॥३६॥

यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन !
ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुते तथा ॥३७॥

ज्ञानं कथं नाशयति पापमिति सदृष्टान्तमुच्यते—यथेति । यथा एधांसि काष्ठानि समिद्धस्सम्यगिद्धः दीप्तः अग्निः भस्मसात् भस्मीभावं कुरुते हेऽर्जुन ! ज्ञानमेवाग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते, तथा निर्बीजं करोतीत्यर्थः । नहि साक्षादेव ज्ञानाग्निः कर्माणीन्धनवत् भस्मीकर्तुं शक्नोति, तस्मात्सम्यग्दर्शनं सर्वकर्मणा निर्बीजत्वकारणमित्यभिप्रायः। सामर्थ्याद्येन कर्मणा शरीरमारब्ध तत्प्रवृत्तफलत्वादुपभोगेनैव क्षीयते । 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ सम्पत्स्य' इति श्रुतेः । अतो यान्यप्रवृत्तफलानि ज्ञानोत्पत्तेः प्राक्कृतानि ज्ञानसहभावीनि चातीतानेकजन्मकृतानि च तान्येव सर्वाणि कर्माणि भस्मसात्कुरुते ॥३७॥

पापवद्भ्य इत्यर्थ । पापाद्गुणभूतात्पापकृन्तो द्रव्यस्यातिशयस्य वक्तुमशक्यत्वात्पापशब्दोऽत्र द्रव्यवाची गृहीत । सर्वपापिष्ठपुरुषोत्तम इत्यर्थ । ज्ञाने प्लवत्वारोपादाह—वृजिनार्णवमिति । प्लवेनार्णवमिव ज्ञानेन वृजिन सन्तरिष्यसीत्यर्थ ।

ननु ज्ञानेन पापस्य नाशे पुण्यमवशिष्यते, ततश्च देवादिजन्मरूपसंसार इत्यत आह—धर्मोऽपीति । वृजिनशब्देन पुण्यमप्युच्यते पुन मुमुक्षो पुण्यस्यापि पापत्वादित्यर्थ । एतेन पप-पुण्यात्मक संसारसमुद्र ज्ञानप्लवेनैव सन्तरिष्यसीत्युक्तं भवति ॥३६॥

यथेति । भस्मसाद्भस्माधीनम् । फलितमाह—भस्मीभूतमिति, निर्बीजमिति । बीजसत्त्वे पुन कर्माङ्कुरोदयादिति भाव । कर्मणा बीज चाज्ञानमेव ।

ननु अग्निरिन्धनानीव ज्ञानाग्नि कर्माणि भस्मीकरोत्येवेति कृत्वा कथमुक्त निर्बीजं करोतीत्यर्थ इति तत्राह- नहीति । कर्मणामिन्धनवद्भस्मीभवनार्हस्वरूपभावादिति भाव ।

ननु सर्वाणि कर्माणीत्यनेन किं प्रारब्धानि विवक्षितानि ? अथवा सञ्चितानि ? अथवोभयकालीनान्यत आह—सामर्थ्यादिति । शास्त्रसामर्थ्यादित्यर्थ । तदिति । प्रारब्धं कर्मेत्यर्थ । प्रवृत्तेणारब्धं फलदानायेति प्रारब्ध उपभोगेनैवेति 'प्रारब्ध भोगतो नश्ये'दिति स्मरणादिति भाव ।

तत्र श्रुतिं प्रमाणयति—तस्येति । तस्य कृतात्मसाक्षात्कारस्य तावदेव चिरं विलम्ब, यावत विमोक्ष्ये शरीरपातो न स्यात् । अथ शरीरपातानन्तरं सम्पत्स्ये ब्रह्म भवति । अतश्शरीरनाशादेव प्रारब्धकर्मनाश, न त्वन्यथेति सिद्धम् । एवं शास्त्रसामर्थ्यात्प्रारब्धस्य ज्ञानान्यदाह्यत्वे सिद्धे तद्दाह्यानि कर्माण्याह—अत इति । अत प्रारब्धकर्मणा भोगं विना नाशायोगादित्यर्थ । अप्रवृत्तफलानि अप्रारब्धानीत्यर्थ । अतीतानेकजन्मकृतानि इह जन्मनि च ज्ञानोत्पत्ते प्राक्कृतानि ज्ञानेनसह भवन्तीति ज्ञानसहभावीनि ज्ञानाभ्यासकाले कृतानि गुरुसेवादिरूपाणि चेत्यर्थ । तान्येवेति । सञ्चितान्येवेत्यर्थ । आगामिनामप्यत्रैवान्तर्भाव । एवकारात्तु प्रारब्धानीत्यर्थ ।

न हि ज्ञानेन सदृशं पवित्रमिह विद्यते ।
तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥३८॥

यत एव मतः, नेति । नहि ज्ञानेन सदृशं तुल्यं पवित्रं पावनं शुद्धिकरमिह विद्यते तद् ज्ञानं स्वयमेव योगसंसिद्धो योगेन कर्मयोगेन समाधियोगेन च संसिद्धस्सस्कृतः योग्यतामापन्नस्सन् कालेन महता आत्मनि विन्दति लभत इत्यर्थः ॥३८॥

श्रद्धावान् लभते ज्ञानं तत्परस्संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥३९॥

येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपाय उपदिश्यते—श्रद्धावानिति । श्रद्धावान् श्रद्धालुर्लभते ज्ञानम् । श्रद्धालुत्वेऽपि भवति कश्चिन्मन्दप्रस्थान अत आह—तत्परः गुरूपासनादावभियुक्तो ज्ञानलब्ध्युपाये श्रद्धावान् तत्परोऽप्यजितेन्द्रियः स्यादित्यत आह—संयतेन्द्रियः संयतानि विषयेभ्यो निवर्तितानि यस्येन्द्रियाणि सः संयतेन्द्रियः य एवंभूतः श्रद्धावान् तत्परस्संयतेन्द्रियश्च सोऽवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्योऽनैकान्तिकोऽपि भवति, मायावित्वादिसम्भवान्न तु तच्छ्रद्धावत्त्वादावित्येकान्तो ज्ञानलब्ध्युपायः ।

---

यथा चापाल्लक्ष्यं प्रति निर्गतश्शरः न मध्ये निवर्तते, किंतु लक्ष्यं प्राप्यैव निर्व्यापारो भवति तद्वत्प्रारब्धं कर्म यावद्देहपातं न नश्यति । यथा च तूणस्थाश्शराः धनुषि संयोजिता वा अप्रयुक्ताः लक्ष्यप्राप्तिं विना निवारयितुं शक्यन्ते तद्वत्सञ्चितानि भोगप्रदानं विना ज्ञानेन नाश्यन्त इति बोध्यम् ॥

नहीति । नचेदं ज्ञानमकस्मात्सिध्यति, किंतु चित्तशुद्धिद्वारैव, सा च चित्तशुद्धिर्योगद्वारैवेत्याह—योगसंसिद्ध इति । योगः कर्मानुष्ठानलक्षणः समाधिलक्षणश्च । कर्मयोग इत्याह—कर्मयोगेनेति । कर्मानुष्ठानेनेत्यर्थः । समाधियोगः 'तानि सर्वाणि संयम्य युक्त आसीन मत्परः' इत्यादिना मोक्तः इन्द्रियमनोजयात्मको योगः । सस्कृत इति । चित्तगतोऽयं संस्कारः पुरुषे आरोपितः- यथा चित्तगतसंस्कारः ॥३८॥

श्रद्धावानिति । एकान्तेन नियमेनाव्यभिचारेणेत्यर्थः । मन्दप्रस्थानः मन्दप्रयाणः गुर्वभिगमने त्वरारहित इत्यर्थः । तत्परः तस्मिन्नासक्तः । आसक्तिसत्त्वे गुरुंप्रति क्षिप्रं प्रयातीत्यभिप्रेत्याह—गुर्विति । अभियुक्त आसमन्तात्सक्तः ।

ननु पूर्वं तद्विद्धीतिश्लोके प्रणिपातपरिप्रश्नसेवा ज्ञानलब्धावुपायत्वेनोक्ताः, इदानीं तु श्रद्धासक्तीन्द्रियजया उक्ता अतः कथं व्याघातपरिहार इत्यत आह—प्रणिपातादिस्त्विति । आदिशब्दात्परिप्रश्नसेवयोर्ग्रहणं । बहिर्भवो बाह्यः, श्रद्धादिस्त्वान्तरः । बाह्यादान्तरस्य बलीयस्त्वं प्रसिद्धमिति भावः । किंच अनैकान्तिकः व्यभिचारी । तत्र हेतुमाह—मायावित्वादीति ।

प्रणिपातादौ मायावित्वादेस्सम्भवोऽस्ति कश्चिन्मायावी कृत्रिमः कपटेन कस्यचित्प्रणिपातादिकं कुर्यात्, तादृशो मायावी ज्ञानं नियमेन न लभते, अतः प्रणिपातादिर्हेतुर्व्यभिचार्येवेत्यर्थः । श्रद्धावत्त्वादौ मायावित्वादिर्न सम्भवति अतः श्रद्धावत्त्वादिरव्यभिचारी उपायः । अत एवावधारिकान्ये

किंपुनः ज्ञानलाभात् स्यादिति, उच्यते—ज्ञानं लब्ध्वा परां मोक्षाख्यां शान्ति उपरतिं अचिरेण क्षिप्रमेव अधिगच्छति। सम्यग्दर्शनात् क्षिप्रं मोक्षो भवतीति सर्वशास्त्रन्यायप्रसिद्धः सुनिश्चितोऽर्थः। अतः संशयो न कर्तव्यः ॥३९॥

अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ।
नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥४०॥

पापिष्ठो हि संशयः कथमिति, उच्यते—अज्ञ इति। अज्ञश्चानात्मज्ञश्च अश्रद्दधानश्च गुरुवाक्यशास्त्रेषु अविश्वासवान् संशयात्मा संशयचित्तश्च विनश्यति। अज्ञाश्रद्दधानौ यद्यपि विनश्यतः, तथाऽपि न तथा यथा संशयात्मा। संशयात्मा तु पापिष्ठः सर्वेषाम्। कथं, नायं साधारणोऽपि लोकोऽस्ति, तथा न परः लोकोऽस्ति, न सुखं, तत्रापि संशयोत्पत्तेः। संशयात्मनः संशयचित्तस्य। तस्मात्संशयो न कर्तव्यः ॥४०॥

---

येनैकान्तेन ज्ञानप्राप्तिर्भवतीत्युक्तम्। एवं च तद्विद्धीतिश्लोकेन ज्ञानलब्धौ बाह्या अनैकान्तिका उपाया उक्ताः, अनेन तु आन्तरा एकान्ता उपाया इति न व्याघातः कश्चिदिति सिद्धम्। किंच यत्र श्रद्धादिगुणत्रयमस्ति तत्र प्रणिपातादिगुणत्रयमपि भवत्येव, यत्र तु प्रणिपातादिगुणत्रयं दृश्यते तत्र नियमेन श्रद्धादिगुणत्रयं न विद्यते अश्रद्धालोरतत्परस्याजितेन्द्रियस्यापि मायाविनः प्रणिपातादिगुणत्रयसम्भवादिति कृत्वा न प्रणिपातादिदर्शनाद् गुरुः शिष्ये विश्वासं कुर्यात्, किंतु श्रद्धादिकं तस्मिन् परीक्ष्यैवेति गुरुशिक्षाऽनेनोपदिष्टा।

क्षिप्रमिति। तरति शोकमात्मवित्, ब्रह्मविद्ब्रह्मैव भवति, तमेव विदित्वाऽतिमृत्युमेति इत्यादीनि शास्त्राणि, रज्जुयाथात्म्यज्ञानात्सर्पभ्रमनिवृत्तिवदात्मयाथात्म्यज्ञानात्संसारभ्रमनिवृत्तिरित्यादयो न्यायाः, तत्प्रसिद्धो ज्ञानात् क्षिप्रं कैवल्यलाभ। एवकारात्तु विलम्ब इत्यर्थः। तेनैव कर्मयोगादीनां चिरेण मोक्षप्रदानां व्यावृत्तिः, किंच क्षिप्रमव्यवधानेनेत्यर्थः। कर्मयोगादयस्तु ज्ञाननिष्ठाव्यवधानेन मोक्षं प्रयच्छन्ति, नतु साक्षादिति भावः ॥३९॥

अज्ञ इति। चकारादज्ञत्वादीनां त्रयाणां पृथक्पृथग्विनाशहेतुत्वं सिद्धम्। यः पुनरात्मानं न वेत्ति सोऽज्ञः, यस्तु गुरुणा तत्त्वे उक्तेऽपि न तत्र विश्वासवान् सोऽश्रद्दधानः, सच्चिदानन्द आत्मेति गुरुणोच्यते नैतद्युक्तं मम तु खिन्नत्वादेरनुभवसिद्धत्वादिति मन्यतेऽयमश्रद्दधानः। एवं गुरुवाक्यमिव शास्त्रमपि नायं विश्वसिति, किं त्वप्रमाणमेव मन्यते। अथ संशयात्मा तु किमात्मा गुरुवेदान्तोक्तविधया सच्चिदानन्दब्रह्माभिन्न ? किं वा तर्काद्युक्तरीत्या ईश्वराद्भिन्नः, किं वा बौद्धाद्युक्तरीत्या देहादिरेवात्मेत्याद्याकारकसंशयवान्। अयं हि अज्ञाश्रद्दधानाभ्यामप्यतीव पापिष्ठ इत्याह—सर्वेषामिति। सर्वेषां मध्ये इत्यर्थः।

संशयात्मनः यथा आत्मनि संशयः तथा सर्वत्रापि संशय एव तस्य संशयैकस्वभावत्वात्। तथा च पुत्रेष्ट्यादिना पुत्रादयस्सिध्येयुर्वा न वा इति सन्दिहानः पुरुषः पुत्रेष्ट्यादिकं नैव करोतीति न तस्य मनुष्यलोकफलसिद्धिः। एवं ज्योतिष्टोमेन स्वर्गो भवेद्वा न वेति सन्दिहानः ज्योतिष्टोमं नैव करोतीति न तस्य परलोकफलसिद्धिः। एवं स्रक्चन्दनादिधारणेन मम सुखं स्याद्वा न वेति सन्दिहानः स्रक्चन्दनादिधारणं नैव करोतीति न तस्य सुखसिद्धिः।

योगसन्न्यस्तकर्माणं ज्ञानसंछिन्नसंशयम् ।
आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय ॥४१॥

योगेति । योगसन्न्यस्तकर्माणं परमार्थदर्शनलक्षणेन योगेन
कस्मात् यस्मात्,
सन्न्यस्तानि त्यक्तानि कर्माणि येन परमार्थदर्शिना धर्माधर्माख्यानि त योगसन्न्यस्तकर्माणम् ।
कथं योगसन्न्यस्तकर्मेत्याह ज्ञानसंछिन्नसंशयं ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन संछिन्नः संशयो
यस्य स ज्ञानसंछिन्नसंशयः । य एव योगसन्न्यस्तकर्मा तमात्मवन्तं अप्रमत्तं कर्माणि गुण-
चेष्टारूपेण दृष्टानि कर्माणि न निबध्नन्ति अनिष्टादिरूपफलं नारभन्ते हे धनंजय ॥४१॥

तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनात्मनः ।
छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥४२॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृ-
ष्णार्जुनसंवादे ज्ञानयोगो नाम चतुर्थोऽध्यायः ।

यस्मात्कर्मयोगानुष्ठानादशुद्धिक्षयादिहेतुकज्ञानसंछिन्नसंशयो न निबध्यते कर्मभिः

यद्वा इहलोकोऽस्ति वा न वा ? परलोकोऽस्ति वा न वा ? सुखमस्ति वा न वेत्येवं सन्दिहा-
नस्य नेहलोकादय सिध्यन्ति निश्चयपूर्वकत्वात्सिद्धेः । नचेहलोकास्तित्वसंशयः कथमुदेतुमर्हतीति
वाच्यं, शून्यवादिमते प्रपञ्चस्य स्वरूपापलापदर्शनात् अन्यत्र तत्सत्यत्वदर्शनाच्च तत्रापि संशयोत्पत्ति-
सम्भवात् ॥४०॥

योगेति । ज्ञानसंछिन्नसंशयमत एव योगसन्न्यस्तकर्माणमात्मवन्तं हे धनञ्जय कर्माणि न
निबध्नन्ति धर्माधर्माख्यानि कर्माणीत्यन्वयः । आत्मा मनः तद्वान् आत्मवान् तमात्मवन्तम् । ननु
नहि कस्यापि मनोऽभावोऽस्ति, येनात्मवन्तमित्युच्येतेत्यत आह—अप्रमत्तमिति । प्रशंसाया
मतुब्विधानात् आत्मवन्तं प्रशस्तमनसमित्यर्थः । मनसः प्राशस्त्यं च प्रमादाभावप्रयुक्तमेवेत्यभिप्रे-
त्याह—अप्रमत्तमिति । अवहितमनस्कमित्यर्थः । मनोधर्मस्य प्रमादाभावस्य पुरुषे आरोपादुक्त-
ममत्वमिति । नहि वस्तुतः पुरुषस्य प्रमादादिधर्मवत्ता— निर्धर्मकात्मस्वरूपत्वात्पुरुषस्य । गुणचेष्टा-
सत्त्वादिगुणकृतनिग्रहादिचेष्टा, रज्जवः पशुमिव कर्माणि पुरुषं न निबध्नन्तीति वक्तुमयुक्तत्वादाह—
अनिष्टादीति । अनिष्टादिरूपफलारम्भद्वारा पुरुषं न निबध्नन्तीत्यर्थः । चेन्नैवम्—ज्ञानिनोऽपि
ननु आत्मवन्तमिति व्यर्थं, ज्ञानिनः प्रमादजननीदशाया अभावादिति
सति प्रमादे इन्द्रियपारवश्यादिप्रयुक्तसंसारप्रसङ्गात् । तस्माज्ज्ञानिनाऽपि जितेन्द्रियेणानस्केन भाव्यमिति
सूचनायाह—अप्रमत्तमिति । भगवता पूर्वस्मिन्नध्याये 'ध्यायतो विषयान्पुंस' इत्यादिना । प्रमत्त-
स्यानर्थः 'बलवानिन्द्रियग्रामो विद्वांसमपि कर्षती'ति च स्मर्यते । तस्मान्मुमुक्षुर्विद्वान् निते-
न्द्रियस्सावधानेन मनसा आत्मस्वरूपं सदा साक्षात्कुर्वन् वर्तेत ततो मुच्यत इत्यनेन श्लोकेनोप-
दिष्टम् ॥४१॥

तस्मादिति । तस्मादुक्तमर्थमाह—यस्मादित्यादिना । हेतुरेव हेतुः अशुद्धिक्षयादीनां

ज्ञानाग्निदग्धकर्मत्वादेव यस्माच्च ज्ञानकर्मानुष्ठानविषये संशयवान् विनश्यति तस्मादिति । तस्मात्पापिष्ठ अज्ञानसम्भूतमज्ञानादविवेकाज्जातं हृत्स्थं हृदि बुद्धौ स्थितं ज्ञानासिना शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः खड्गः तेन ज्ञानासिना आत्मनः स्वस्यात्मविषयत्वात् संशयस्य । नहि परस्य संशयः परेण छेत्तव्यतां प्राप्तः, येन स्वस्येति विशेष्यते । अत आत्मविषयोऽपि स्वस्यैव भवति । । छित्त्वैनं संशयं स्वविनाशहेतुभूतं योगं सम्यग्दर्शनोपायं कर्मानुष्ठानं आतिष्ठ कुर्वित्यर्थः । उत्तिष्ठ च युद्धायेदानीं हेभारतेति ॥४२॥

इति श्रीपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पादपूज्यशिष्य-
श्रीमच्छङ्करभगवत्पादकृतौ गीताभाष्ये
चतुर्थोऽध्यायः ।

---

हेतुकः ज्ञानेन सञ्छिन्नश्च संशयो यस्य सः ज्ञानसञ्छिन्नाशुद्धिभयादिहेतुसंशय इत्यर्थः । तच्च ज्ञानं कस्माज्जायत इत्यत आह—कर्मयोगानुष्ठानादिति । अशुद्धिक्षयहेतुकेति पाठे अशुद्धिक्षयो हेतुर्यस्य तत्तथोक्तमिति ज्ञानविशेषणम् । कुतः कर्मभिर्न निबध्यत इत्यत आह—ज्ञानाग्नीति । तस्मादित्यस्यार्थान्तरमाह—यस्माच्चेति । ज्ञानं च कर्म च ज्ञानकर्मणी प्रत्येकानुष्ठानविषये इत्यर्थः । तयोः युगपदनुष्ठानासम्भवस्य प्रागेवोक्तत्वात् । तयोरनुष्ठानविषये । तस्मादिति । कर्मज्ञानयोगानुष्ठानजन्यज्ञानाग्नेस्सर्वकर्मदाहकत्वान्निस्संशयेन ज्ञानकर्मानुष्ठानस्य कर्तव्यत्वाच्चेत्यर्थः । हेभारत अज्ञानसम्भूतं हृत्स्थमेनमात्मनस्संशयं ज्ञानासिना छित्त्वा योगमातिष्ठ उत्तिष्ठ । अविवेकादात्मानात्मविवेकाभावात् । यद्वा यस्माद्विवेको न भवति तदविवेकं भावरूपं मायेति यावत् ।

आत्मन इति विषयविषयिभावरूपे सम्बन्धे शेषे षष्ठीत्याह—आत्मविषयत्वादिति । आत्मविषयमित्यर्थः । अन्यथा यथाश्रुतार्थे दोषमाह—नहीति । संशयं छित्त्वेत्यनेनैव स्वसंशयं छित्त्वेत्यर्थलाभो भवति, परसंशयस्याच्छेत्तव्यत्वेनैव व्यावृत्ते , परसंशयं छित्त्वेत्यर्थाप्रसक्तेः ।

नन्वयमात्मसंशयः कस्य भवतीत्यत आह—स्वस्यैवेति । किमहं नित्य आत्मा उतानित्य इत्यादिरूपस्य स्वस्मिन्नेव संशयस्य सर्वाविद्वदनुभवसिद्धत्वादिति भावः । एनमितिशब्दार्थमाह—स्वविनाशहेतुभूतमिति । संशयात्मा विनश्यतीत्युक्तत्वादिति भावः । योगशब्दोऽत्रोपायपर इत्याह—सम्यगिति । कर्मानुष्ठानं कुर्विति ज्ञाननिष्ठायां तदानधिकारादिति भावः ।

उत्तिष्ठ उद्योऽन्नूर्ध्वकर्मणीति न तङ् । किमर्थमुत्थानमत आह—युद्धायेति । भारतेत्यनेन क्षत्रियस्य तव युद्धाख्यकर्मयोगएवाधिकार इति सूच्यते । सम्यग्दर्शिनोऽपि तव लोकसंग्रहार्थं कर्मैव कर्तुमुचितं जनकादिवदिति च प्रतीयते ॥४२॥

इति वेल्लंकोण्डोपनामकरामकविकृतौ
श्रीमद्भगवद्गीताभाष्यार्कप्रकाशे
चतुर्थोऽध्यायः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु-

# श्रीभगवद्गीतासु

## पञ्चमोऽध्यायः ।

'कर्मण्यकर्म यः पश्ये'दित्यारभ्य 'स युक्तः कृत्स्नकर्मकृत्, ज्ञानाग्निदग्धकर्माणं, शारीरं केवलं कर्म कुर्वन्, यदृच्छालाभसन्तुष्टो, ब्रह्मार्पणं ब्रह्महविः, कर्मजान्विद्धि तान् सर्वान्, सर्वं कर्माखिलं पार्थ, ज्ञानाग्निस्सर्वकर्माणि, योगसन्न्यस्तकर्माण'मित्येतैर्वचनैस्सर्वकर्मणां सन्न्यासमवोचत् भगवान् । 'छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारते'त्यनेन वचनेन योगं च कर्मानुष्ठानलक्षणं अनुतिष्ठेत्युक्तवान् । उभयोश्च कर्मानुष्ठानकर्मसन्न्यासयोः स्थितिगतिवत्परस्परविरोधात् एकेन सह कर्तुमशक्यत्वात् कालभेदेन च अनुष्ठानविधानाभावादर्थादेतयोरन्यतरकर्तव्यताप्राप्तौ सत्यां यत्प्रशस्यतरमेतयोः कर्मानुष्ठानकर्मसन्न्यासयोस्तत्कर्तव्यं नेतरदित्येवं मन्यमानः प्रशस्यतरबुभुत्सया अर्जुन उवाच—सन्न्यासं कर्मणां कृष्णेत्यादिना ।

---

द्वितीयेऽध्याये कर्मयोगं ज्ञानयोगं च प्रतिपाद्य तत्र कर्मणो ज्ञानस्य श्रेयस्त्वमुपपादितं भगवता । अत एव तृतीये- 'ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दने'त्यर्जुनेनोक्तम् । ततस्तृतीये ज्ञानयोगस्य साङ्ख्यविषयत्वात्कर्मयोगस्य च योगिविषयत्वादर्जुनस्य चासाङ्ख्यत्वात्कर्मयोग एव कर्तव्य इति प्रतिपादितम् । चतुर्थे स्वयमेव भगवान् ज्ञानयोगं पुनः प्रशशंस । तदन्ते च ज्ञानेन संशयं छित्त्वा योगमातिष्ठेत्यर्जुनाय योग एवोपदिष्टः । एवंस्थिते अर्जुनः पृच्छति पञ्चमाध्याये—सन्न्यासमिति ।

ननु कर्मयोगज्ञानयोगयोर्द्वयोरपि निःश्रेयसहेतुत्वं भगवतोक्तं, तत्र मुक्तिं प्रति साक्षात्साधनत्वं कर्मयोगसाध्यत्वं च ज्ञानस्य प्रतिपादयन् कर्मयोगस्य ज्ञानयोगद्वारा मुक्तिहेतुत्वं न तु साक्षादिति च प्रतिपादयन्, कर्मयोगाद्ज्ञानयोगमेव श्रेयांसं स्थापयामास भगवान् । अर्जुनस्य च ज्ञानयोगानधिकारित्वेन 'कुरु कर्मैव तस्मात्त्व'मिति कर्मयोगमेव श्रेयस्करं प्रतिपादयामास । एवंस्थिते कथमर्जुनस्येह प्रश्नावकाशः ? स्वस्य कर्मयोग एव श्रेयानिति; द्वयोर्ज्ञानयोग एव श्रेयानिति च स्फुटमुक्तत्वाद्भगवता अर्जुनेन च सावधानं ज्ञातत्वाच्चार्थस्येति चेत्, उच्यते—नायमर्जुनस्य प्रश्नः कर्मयोगज्ञानयोगयोस्तारतम्यज्ञानार्थः, नापि कर्मज्ञानयोः; किं तर्हि सन्न्यासकर्मयोगयोः प्रश्नसामर्थ्याच्चास्य सन्न्यासस्य ज्ञानरहितसन्न्यासत्वमवगम्यते, यद्यपि 'न च सन्न्यसनादेव सिद्धिं समधिगच्छती'ति ज्ञानरहितसन्न्यासस्य सिद्ध्यहेतुत्वमुक्तम् । 'कर्मणैव हि संसिद्धिमास्थिता जनकादय' इति कर्मयोगस्य सिद्धिहेतुत्वं चोक्तं भगवता । तेन च सन्न्यासाद्ज्ञानहीनात् कर्मयोगः श्रेयानिति ज्ञातुं शक्यं, तथापि विस्तरेण बुभुत्सया पृष्टमर्जुनेनेति बोध्यम् ।

ननु चात्मविदो ज्ञानयोगेन निष्ठां प्रतिपिपादयिषन् पूर्वोदाहृतैर्वचनैर्भगवान् कर्मसन्न्यासं समवोचत्, न त्वनात्मज्ञस्य। अतश्च कर्मानुष्ठानकर्मसन्न्यासयोः भिन्नपुरुषविषयत्वादन्यतरस्य प्रशस्यतरस्य बुभुत्सया अयं प्रश्नोऽनुपपन्नः।

सत्यमेवं, त्वदभिप्रायेण प्रश्नो नोपपद्यते, प्रष्टुः स्वाभिप्रायेण पुनः प्रश्नो युज्यत एवेति वदामः- कथं, पूर्वोदाहृतैर्वचनैर्भगवता कर्मसन्न्यासस्य कर्तव्यतया विवक्षितत्वात्। प्राधान्यमन्तरेण च कर्ता तस्य कर्तव्यत्वासम्भवादनात्मविदपि कर्ता पक्षे प्राप्तोऽनूद्यत एव, न पुनरात्मवित्कर्तृकत्वमेव कर्मसन्न्यासस्य विवक्षितमित्येवं मन्वानस्यार्जुनस्य कर्मानुष्ठानकर्मसन्न्यासयोरविद्वत्पुरुषकर्तृकत्वमप्यस्तीति पूर्वोक्तेन प्रकारेण तयोः परस्परविरोधादन्यतरस्य कर्तव्यत्वे प्राप्ते प्रशस्यतरं च कर्तव्यं नेतरदिति प्रशस्यतरविविदिषया प्रश्नो नानुपपन्नः।

---

सन्न्यासं योगं च शंससीत्यर्जुनेनोक्तं- तत्र क सन्न्यास उक्तः ? क वा योग इत्यत आह—कर्मणीत्यादि। कालभेदेनेति योगमादौ कृत्वा पश्चात्सन्न्यासं कुर्वित्यनुक्तत्वादित्यर्थः।

शङ्कते—ननु चेति। 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति भिन्नपुरुषविषययोः ज्ञानकर्मणोरन्यतरस्य श्रेयस्करत्वज्ञानेन नार्जुनस्य किमपि फलं, सत्यपि ज्ञानयोगस्य कर्मयोगस्य वा उत्कर्षे कर्मिणा ज्ञानस्य ज्ञानिना कर्मणश्च कर्तुमशक्यत्वादतो व्यर्थोऽयं प्रश्न इति शंकितुराशयः।

अङ्गीकृत्य परिहरति—सत्यमिति। न त्वदुक्तविधोऽर्जुनस्याभिप्रायः, किं तु भिन्नविध- तमेवार्जुनाभिप्रायं दर्शयति—पूर्वेति। प्राधान्यमन्तरेण प्राधान्यज्ञानं विनेत्यर्थः। अनयोरिदं प्रधानमिति ज्ञात्वैव प्रधाने ज्ञानयोगे कर्ता प्रवर्तते, एवं प्रधानत्वादेव सन्न्यासः कर्तव्यतया भगवता चतुर्थाध्यायेऽभिहितः। नन्वेवं कर्मयोगात्कर्मसन्न्यासः प्रधान इत्यभिहितप्राय एवेति पुनः प्रश्नोऽनुपपन्न इत्यत आह—अनात्मविदपीति। अज्ञः प्राज्ञो वा सर्वोपि जनः प्रधानमेवानुतिष्ठासति न स्वप्रधानमिति कृत्वा प्रधाने कर्मसन्न्यासे अज्ञोपि प्रवर्ततैव- तस्य चाज्ञस्य किं सन्न्यासः श्रेयानुत कर्मयोग इति युज्यते प्रश्नोऽर्जुनस्येति भावः।

ननु ज्ञानयोगेन साङ्ख्यानामिति प्राज्ञस्यैव सन्न्यासविधानात्कथमज्ञस्य पाक्षिक्यपि सन्न्यासे प्रवृत्तिरत आह—न पुनरिति। कर्मसन्न्यासस्यात्मवित्कर्तृकत्वमेव विवक्षितमिति तु न- एवं मन्वानस्यार्जुनस्य प्रश्नो नानुपपन्न इति सम्बन्धः। यदि भगवता कर्मसन्न्यास आत्मविद्विषय एव, न त्वज्ञविषय इति विवक्षितं तर्हि 'नच सन्न्यसनादेव सिद्धिं समधिगच्छ'तीति ज्ञानहीनसन्न्यासास्तित्वं कथं योच्येत। नहि ज्ञानहीनसन्न्यासस्यैवाभावे तत्सिद्धिर्नास्तीति वक्तुं शक्यते- तस्मात्सन्न्यासस्याप्यनात्मविद्विषयत्वमस्तीत्यर्जुनस्याभिप्रायः। युक्तं चेदम्—विद्वत्सन्न्यासस्येव विविदिषासन्न्यासस्यापि शास्त्रसिद्धत्वात्। विविदिषुर्विद्यासिद्ध्यर्थं यज्ञादिकर्मयोगमिव पक्षे सन्न्यासमपि कुर्यादेव, तस्मादनात्मविदपि सन्न्यासे कर्ता पक्षे प्राप्तएवेति कृत्वा किमज्ञस्य सन्न्यासः श्रेयानुत कर्मयोग इति प्रश्न उचित एवार्जुनस्य।

प्रतिवचनवाक्यार्थनिरूपणेनापि प्रष्टुरभिप्राय एवमेवेति गम्यते । कथं, सन्न्यासकर्मयोगौ निःश्रेयसकरौ, तयोस्तु कर्मयोगो विशिष्यत इति प्रतिवचनमेतन्निरूप्यम् ।

किमनेन आत्मवित्कर्तृकयोस्सन्न्यासकर्मयोगयोर्निश्श्रेयसकरत्वं प्रयोजनमुक्त्वा तयोरेव कुतश्चिद्विशेषात्कर्मयोगस्य विशिष्टत्वमुच्यते ? अहोस्विदनात्मवित्कर्तृकयोस्सन्न्यासकर्मयोगयोस्तदुभयमुच्यत इति ? किंचातः यद्यात्मवित्कर्तृकयोस्सन्न्यासकर्मयोगयोर्निश्श्रेयसकरत्वं तयोस्तु कर्मसन्न्यासात्कर्मयोगस्य विशिष्टत्वमुच्येत, यदि वाऽनात्मवित्कर्तृकयोः सन्न्यासकर्मयोगयोस्तदुभयमुच्येतेति ।

अत्रोच्यते- आत्मवित्कर्तृकयोस्सन्न्यासकर्मयोगयोरसम्भवात्तयोर्निश्श्रेयसकरत्ववचनं तदीयाच्च कर्मसन्न्यासात् कर्मयोगस्य विशिष्टत्वाभिधानमित्येतदुभयमनुपपन्नम् । यद्यात्मविदः कर्मसन्न्यासः, तत्प्रतिकूलश्च कर्मानुष्ठानलक्षणः कर्मयोगः सम्भवेतां तदा तयोर्निश्श्रेयसकरत्वोक्तिः कर्मयोगस्य च कर्मसन्न्यासाद्विशिष्टत्वाभिधानमिति एतदुभयमुपपद्येत ।

---

ननु सन्न्यासात्केवलात्सिद्धिर्नास्ति, कर्मणैव संसिद्धिमास्थिता इति च केवलसन्न्यासात्कर्मयोगस्य प्राशस्त्यं प्रतिपादितमेवेति व्यर्थोऽयं प्रश्न इति चेन्नैवम्—संसिद्धिशब्दस्य चित्तशुद्ध्यर्थकत्वात्सिद्धिशब्दस्य च मोक्षार्थकत्वात् । यथा केवलसन्न्यासान्न मोक्षः तथा कर्मयोगादपि नैव मोक्षः- यथा कर्मयोगाच्चित्तशुद्धिस्तथा केवलसन्न्यासादपि स्यादेव चित्तशुद्धिः- अन्यथा विविदिषासन्न्यासविधायकशास्त्रानर्थक्यप्रसङ्गात् । तस्मादज्ञकर्तृकयोस्सन्न्यासकर्मयोगयोस्समबलत्वमेव सिद्धमतीतग्रन्थेन तु विषमबलत्वमिति कृत्वा तयोस्तारतम्यजिज्ञासया प्रश्नोऽयमुचित एवार्जुनस्य । नच विस्तरेण बुभुत्सया पृष्टमिति स्ववचनव्याघातस्तवेति वाच्यं, प्रश्ने एकस्मिन्नप्यनेकाभिप्रायकल्पनस्य गुणत्वात् ।

ननु परहृदयस्याप्रत्यक्षत्वात्कथं त्वया विदितोऽर्जुनस्याभिप्राय इत्यत आह—प्रतिवचनेति । किं तत्प्रतिवचनं, कथं वा तन्निरूपणमिति पृच्छति—कथमिति । तत्र प्रतिवचनं दर्शयति—सन्न्यासेति । 'सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ । तयोस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यते' इति श्लोकरूपं प्रतिवचनमित्यर्थः । तन्निरूपणं कथयति—एतदिति । प्रतिवचनवाक्यमेतच्छब्दार्थः । एतन्निरूप्यं वस्तु दर्शयिष्यामस्तथाहीति शेषः । यद्वा एषः अर्जुनाभिप्रायो निरूप्यो यस्य तदेतन्निरूप्यमिति प्रतिवचनविशेषणम् ।

निरूपणप्रकारं दर्शयति—किमनेनेत्यादिना । अनेन प्रतिवचनेन कर्मयोगस्य विशिष्टत्वमुच्यते किमित्यन्वयः । तदुभयमिति । निश्श्रेयसकरत्वं कर्मयोगस्य सन्न्यासाद्विशिष्टत्वं चेत्यर्थः । विशिष्टत्वमुक्तं इत्थं । गुणदोषविवेकार्थं पृच्छति—किंचात इति । यदि कर्मयोगस्य विशिष्टत्वमुच्येत अतः अस्मिन्पक्षे किं दूषणमिति शेषः । यदि वा सन्न्यासकर्मयोगयोस्तदुभयमुच्येत अतोऽत्र पक्षे किंच किं वा फलमिति प्रश्नार्थः । इतिशब्दः प्रश्नपरिसमाप्तौ । सिद्धान्ती समाधानं वक्ष्यामीति प्रतिजानाति—अत्रोच्यत इति । अत्र दूषणामित्यर्थः । प्रश्ने इति वा- तदीयाच्चेति । आत्मवित्कर्तृकादित्यर्थः ।

आत्मविदस्तु कर्मसन्न्यासकर्मयोगयोरसम्भवात्तयोर्निःश्रेयसकरत्वाभिधानं कर्मसन्न्यासाच्च कर्मयोगो विशिष्यत इति चानुपपन्नम् ।

अत्राह- किमात्मविदः कर्मसन्न्यासकर्मयोगयोरुभयोरप्यसम्भवः ? आहोस्विदन्यतरस्य ? यदा चान्यतरस्यासम्भवः तदापि किं कर्मसन्न्यासस्यासम्भवः ? उत कर्मयोगस्येति असम्भवकारणं च वक्तव्यमिति ।

अत्रोच्यते—आत्मविदो निवृत्तमिथ्याज्ञानत्वात् विपर्ययज्ञानमूलस्य कर्मयोगस्यासम्भवस्स्यात्, जन्मादिसर्वविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन यो वेत्ति तस्यात्मविदः सम्यग्दर्शनेनापास्तमिथ्याज्ञानस्य निष्क्रियात्मस्वरूपावस्थानलक्षणं सर्वकर्मसन्न्यासमुक्त्वा तद्विपरीतस्य मिथ्याज्ञानमूलकर्तृत्वाभिमानपुरस्सरस्य सक्रियात्मस्वरूपावस्थानरूपस्य

---

ज्ञानसहितादिति यावत् । कर्मयोगकर्मसन्न्यासयोरनात्मविरकर्तृकत्व यथा सम्भवति तथा न सम्भवेदात्मविरकर्तृकत्वमिति कृत्वा प्रथमपक्षे अनुपपत्तिर्दूषणं, द्वितीयपक्षे उपपत्तिः फलमिति भावः ।

आत्मविरकर्तृकयोः कर्मयोगकर्मसन्न्यासयोरसम्भवं श्रुत्वा तदसहमानः पूर्वपक्षयति—अत्राहेत्यादिना । आहेत्यस्य पूर्वपक्षीति कर्तृविशेषः । किमात्मविरकर्तृकस्सन्न्यासो नास्ति ? यद्वा आत्मविरकर्तृकः कर्मयोगो नास्तीति पूर्वपक्षस्य फलितार्थः ।

उत्तरमाह—अत्रोच्यत इत्यादिना । आत्मविरकर्तृक. सन्न्यासोऽस्त्येव- किंतु कर्मयोगो नास्तीत्यर्थ· । तत्र हेतुमाह—आत्मविदो निवृत्तमिथ्याज्ञानत्वादिति । मिथ्याज्ञानं कर्ताहं ममेदं कर्मेत्याद्याकारकं भ्रमज्ञानं. मिथ्याभूतमज्ञानमिति वा । आत्मविदः कर्मयोगासम्भवं प्रति मिथ्याज्ञाननिवृत्ते. । कुतो हेतुत्वमत आह—विपर्ययेति । कर्मयोगस्य विपर्ययज्ञानमूलत्वादित्यर्थ । मिथ्याज्ञानमूल. कमयोग कथं पुनर्मिथ्याज्ञानरहितस्यात्मविदस्सम्भवेदिति भाव. ।

संग्रहवाक्यमेव विवृणोति—जन्मादीति । निष्क्रियमात्मानमात्मत्वेन यो वेत्ति तस्यात्मविद कर्मयोगस्याभाव प्रतिपाद्यत इति सम्बन्ध । आत्मनो निष्क्रियत्वे हेतुमाह—जन्मादीति । आदिपदात्सत्तावृद्ध्यादिभावविकारपञ्चकग्रहणम् । लोके सविक्रियस्यैव वस्तुनस्सक्रियत्वदर्शनान्निर्विकारस्यात्मनो निष्क्रियत्वमिति भाव ।

वैदिका योगिनश्च केचिन्निष्क्रियमात्मानमीश्वरत्वेन विदन्तीत्यत आह—आत्मत्वेनेति । एतेनात्मेश्वरभेदवादिनोऽनात्मवित्त्वमेव मिथ्याज्ञानवत्त्वादिति सिद्धम् । ननु स्वभिन्नस्येश्वरस्य कथमात्मत्वेन ग्रहणमत आह—आत्मानमिति । ईश्वरो हि जीवस्यात्मैव- स्वरूपत्वात्- स आत्मा तत्त्वमसीति श्रुतेश्चेति भाव ।

आत्मविदोऽपि मिथ्याज्ञानं किं न स्यादत आह—सम्यगिति । सम्यग्दर्शनं तत्त्वज्ञानं निष्क्रिय सच्चिदानन्दं ब्रह्माहमस्मीत्याकारक, तेनापास्तं निरस्तं मिथ्याज्ञानं कर्ताहं ब्राह्मण इत्याद्याकारकमयथार्थज्ञानं तन्मूलभूतमज्ञानं वा यस्य तस्य तथोक्तस्य ।

ननु तादृशस्यात्मविद. कर्मसन्न्यासोऽप्यनुपपन्न एवेत्यत आह—सर्वकर्मसन्न्यासमुक्त्वेति ।

कर्मयोगस्येह गीताशास्त्रे तत्रतत्र आत्मस्वरूपनिरूपणप्रदेशेषु सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधादभावः प्रतिपाद्यते यस्मात्तस्मादात्मविदो निवृत्तमिथ्याज्ञानस्य विपर्ययज्ञानमूलः कर्मयोगो न सम्भवतीति युक्तमुक्तं स्यात् ।

केषुकेषु पुनरात्मस्वरूपनिरूपणप्रदेशेषु आत्मविदः कर्माभावः प्रतिपाद्यत इति, अत्रोच्यते—अविनाशि तु तद्विद्धीति प्रकृत्य 'य एनं वेत्ति हन्तारं, वेदाविनाशिनं नित्य'मित्यादौ तत्र आत्मविदः कर्माभाव उच्यते ।

ननु च कर्मयोगोप्यात्मस्वरूपनिरूपणप्रदेशेषु तत्रतत्र प्रतिपाद्यत एव, तद्यथा- 'तस्मा-

---

कस्मादस्य सन्न्यासस्सम्भवतीत्यत आह—निष्क्रियेति । निष्क्रियो ह्यात्मा निष्क्रियात्मस्वरूपेणैव तिष्ठतीतिकृत्वा तत्त्वविदो निष्क्रियात्मनः निष्क्रियात्मस्वरूपावस्थानलक्षणः कर्मसन्न्यासस्सम्भवत्येवेत्यर्थः ।

आत्मविदः कर्मसन्न्यासस्यैव कर्मयोगस्य कुतो सम्भवोऽत आह—तद्विपर्ययस्येति । कर्मसन्न्यासविपरीतत्वात्कर्मयोगस्यात्मवित्कर्तृकत्वाभाव इत्यर्थः । कस्माद्विपरीतत्वमस्येत्यत आह—मिथ्येति । मिथ्याभूतमज्ञानं तत्प्रयुक्तोऽध्यासो वा मिथ्याज्ञानं तदेव मूलं कारणं यस्य स चासौ कर्तृत्वाभिमानः पुरस्सरः पूर्वो यस्य तस्य सम्यग्ज्ञानमिथ्याज्ञानयोः तन्मूलकनिष्क्रियात्माभिमानकर्तृत्वाभिमानयोश्च सन्न्यासकर्मयोगकारणयोः परस्परं विपरीतत्वात्सन्न्यासकर्मयोगयोश्च विपरीतत्वमिति भावः । न केवलं कारणद्वारैव, किंतु स्वरूपतोपि तयोर्वैपरीत्यमित्याह—सक्रियेति । निष्क्रियात्मस्वरूपावस्थानात्सक्रियात्मस्वरूपावस्थानं विपरीतमित्यर्थः ।

आत्मविदः कर्मयोगस्याभावः क्व प्रतिपाद्यते अत आह—इहेति । तदर्थमाह—गीताशास्त्र इति । गीताशास्त्रेपि कुत्र प्रतिपाद्यतेऽत आह—तत्र तत्रेति । तेषु तेष्वित्यर्थः । तच्छब्दार्थमाह—आत्मेति । आत्मविदः कर्मयोगस्याभावे किं कारणमत आह—सम्यगिति । सम्यग्ज्ञानमिथ्याज्ञानयोः तत्कार्ययोः कर्मसन्न्यासकर्मयोगयोश्च विरोधात्सहानवस्थानलक्षणविरोधात् । नहि विरुद्धधर्मयोस्सामानाधिकरण्यं क्वापि सम्भवतीति भावः । यद्वा सम्यग्ज्ञानमिथ्याज्ञानयोः तत्कार्ययोर्भ्रमनिवृत्तिभ्रमसद्भावयोश्च मिथो विरोधात्कर्तृत्वादिभ्रममूलः कर्मयोगः निवृत्तिभ्रमस्यात्मविदो न सम्भवतीति भावः । नचात्मवित्कर्तृकस्य कर्मयोगस्यैवासम्भवे कथं तत्त्वविदो जनकादेः कर्मसु प्रवृत्तिरिति वाच्यं, जनकादिकर्तृकयज्ञादिकर्मणः आत्मवित्सन्न्यासिकर्तृकभिक्षाटनादिवद्वासुदेवकर्तृकसृष्ट्यादिवच्च कर्मत्वाभावस्य प्रागेव प्रतिपादितत्वात् ।

उपसंहरति—यस्मात्तस्मादिति । यस्मादात्मविदः कर्मयोगस्याभावो गीताशास्त्रे प्रतिपाद्यते तस्मादित्यर्थः । गीताशास्त्रे आत्मविदः कर्मयोगाभावप्रतिपादने तच्छब्दार्थः । तत्रतत्रेति पूर्वं सामान्येनोक्तत्वात्तद्विशेषबुभुत्सया पृच्छति—केषुकेषु केष्विति । प्रतिपाद्यत इति भगवतेति शेषः ।

गीताशास्त्रे आत्मस्वरूपनिरूपणप्रदेशेषु आत्मविदः कर्माभाव एव प्रतिपादित इति नियन्तुं न शक्यते- कर्मयोगस्यापि प्रतिपादितत्वादिति शङ्कते—ननु चेति । कर्मयोगप्रतिपादनप्रकारमेव

युध्यस्व भारत, स्वधर्ममपि चावेक्ष्य, कर्मण्येवाधिकारस्ते' इत्यादौ। अतश्च कथमात्मविदः कर्मयोगस्यासम्भवः स्यादिति।

अत्रोच्यते, सम्यग्ज्ञानमिथ्याज्ञानतत्कार्यविरोधात् ज्ञानयोगेन साङ्ख्यानामात्मतत्त्वविदामनात्मवित्कर्तृककर्मयोगनिष्ठातो निष्क्रियात्मस्वरूपावस्थानलक्षणायाः ज्ञानयोगनिष्ठायाः पृथक्करणात् कृतकृत्यत्वेनात्मविदः प्रयोजनान्तराभावात्तस्य कार्यं न विद्यत इति कर्तव्यान्तराभाववचनाच्च 'न कर्मणामनारम्भात्, सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगत' इत्यादिना चात्मज्ञानाङ्गत्वेन कर्मयोगस्य विधानात्, 'योगारूढस्य तस्यैव शमः कारणमुच्यत' इत्यनेन चोत्पन्नसम्यग्दर्शनस्य कर्मयोगाभाववचना'च्छारीरं केवलं कर्म कुर्वन्नि'ति च शरीरस्थितिकारणव्यतिरिक्तकर्मणो निवारणात्, 'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववि दित्यनेन च शरीरस्थितिमात्रप्रयुक्तेष्वपि दर्शनश्रवणादिकर्मस्वात्मयाथात्म्यविदो नाहं करोमीतिप्रत्य-

---

दर्शयति—तद्यथेत्यादिना। आत्मविदः कर्मयोगस्यासम्भवे पूर्वोक्तं हेतु पुनरनुवदति हेत्वन्तरकथनार्थम्—सम्यग्ज्ञानेति। हेत्वन्तरमाह—ज्ञानेति। अनात्मवित्कर्तृककर्मयोगनिष्ठातः साङ्ख्यानां ज्ञानयोगनिष्ठायाः पृथक्करणादित्यन्वयः। साङ्ख्यानां साङ्ख्यकर्तृकाया इत्यर्थः। केन वाक्येन पृथक्करणमत आह—ज्ञानयोगेनेति।

ननु अनात्मवित्कर्तृककर्मयोगनिष्ठातस्साङ्ख्यकर्तृकज्ञाननिष्ठायाः पृथक्करणेपि आत्मवित्कर्तृकसन्न्यासस्य न पृथक्करणमित्यत आह—आत्मतत्त्वविदामिति। निष्क्रियात्मस्वरूपावस्थानलक्षणाया इति च। आत्मविद एव साङ्ख्याः सर्वकर्मसन्न्यास एव ज्ञानयोगनिष्ठेति भावः।

पुनरपि हेत्वन्तरमाह—कृतकृत्यत्वेनेति। आत्मविदः कर्मयोगसाध्यप्रयोजनान्तराभावात्कर्माभावः। प्रयोजनान्तराभावे हेतुमाह—कृतकृत्यत्वेनेति। कृतं कृत्यं सर्वं येन स कृतकृत्यः तद्भावेन कर्तव्यशेषाभावेनेत्यर्थः। आत्मविदः कर्तव्यशेषाभावे प्रमाणमाह—तस्येति। आत्मविच्छब्दार्थे चकारेण कर्मयोगस्याकृतकृत्याज्ञविषयत्वं बोध्यते। अकृतकृत्याज्ञविषयत्वात्कर्मयोगस्यात्मविद्यसम्भव इति भावः। इतश्च पुनरात्मविदः कर्मासम्भव इत्याह—नेति। कर्मयोगस्यात्मज्ञानाङ्गत्वेन विधानात्प्रतिपन्नात्मज्ञानस्य कर्मयोगासम्भवः। केन वाक्येन तद्विधानमत आह—न कर्मणामित्यादि। यथा अनात्मविदः कर्मयोगो विहितस्तथा आत्मविदः कर्मसन्न्यासो विहित इत्यात्मविदः कर्मसन्न्यासविधानाच्च कर्मासम्भव इत्याह—उत्पन्नेति। केन वाक्येनात्मविदः कर्माभाव उक्त इत्यत आह—योगारूढस्येति। कर्मसन्न्यासविधानादित्यनुक्त्वा कर्मयोगाभाववचनादिति वचनेन कर्मसन्न्यासो न विधिः, किंतु स्वाभाविक एवेति गम्यते- निष्क्रियत्वादात्मन इति भावः।

इतश्चात्मविदः कर्मासम्भव इत्याह—शारीरमिति। शरीरस्थितिमात्रफलकभिक्षाटनादिकर्मव्यतिरिक्तकर्मनिवारणादात्मविदः कर्मयोगासम्भवः। ननु यद्यात्मविदो भिक्षाटनादिकर्म सम्भवति तर्हि स कर्म्येव स्यादत आह—नैवेति। समाहितेनात्मतत्त्ववित्सन्न्यासी शरीरस्थितिमात्रफलकेष्वपि

यस्य समाहितचेतस्तया सदाऽकर्तव्यत्वोपदेशादात्मतत्त्वविदः सम्यग्दर्शनविरुद्धो मिथ्याज्ञानहेतुकः कर्मयोगः स्वप्नेपि न सम्भावयितुं शक्यते ।

यस्मात्तस्मात् अनात्मवित्कर्तृकयोरेव सन्न्यासकर्मयोगयोर्निःश्रेयसकरत्ववचनं तदीयाच्च कर्मसन्न्यासात् पूर्वोक्तात्मवित्कर्तृकसर्वकर्मसन्न्यासविलक्षणात् सत्येव कर्तृत्वविज्ञाने कर्मैकदेशविषयात् यमनियमादिसहितत्वेन च दुरनुष्ठेयात् सुकरत्वेन च कर्मयोगस्य विशिष्टत्वाभिधानमित्येव प्रतिवचनवाक्यार्थनिरूपणेनापि पूर्वोक्तः प्रष्टुरभिप्रायो निश्चीयत इति स्थितम् ।

---

दर्शनश्रवणादिकर्मसु अहं करोमीति कर्तृत्वाभिमानं न कुर्यादिति भगवदुपदेशादित्यर्थ । तत्त्ववित्सन्न्यासी पश्यन् शृण्वन्नपि नाहं करोमीति यस्मान्मन्यते तस्मादयं कर्मी नैव भवति कर्तृत्वाभिमानपुरस्सरं कर्मकर्तुरेव कर्मित्वादिति भाव । आत्मतत्त्वविद कर्मयोग स्वप्नेपि सम्भावयितुं न शक्यत इत्यन्वय । तत्र हेतुगर्भं विशेषणद्वयमाह—सम्यगिति । सम्यग्दर्शनविरुद्धत्वान्मिथ्याज्ञानहेतुकत्वाच्चेत्यर्थ । सम्यग्दर्शनेन कर्मयोगमूलमिथ्याज्ञानस्य बाधात्कर्मयोगस्य तद्विरुद्धत्वमिति भाव ।

तस्मादिति । आत्मवित्कर्तृककर्मयोगासम्भवादित्यर्थ । तदीयादिति । अनात्मवित्कर्तृकादित्यर्थ । कर्मसन्न्यासात्कर्मयोगस्य विशिष्टत्वाभिधानमित्यन्वय । किमयमनात्मवित्कर्तृक. कर्मसन्न्यास आत्मवित्कर्तृकसन्न्यासलक्षण इत्यत आह—पूर्वोक्तेति । ज्ञानसाहित्यराहित्याभ्यामुभयोर्वैलक्षण्यमिति भाव । भेदमेव दर्शयति—सत्येवेति । कर्तृत्वविज्ञाने सतीत्यन्वय । अज्ञकर्तृकसन्न्यासे कर्ताहमिति विपरीतज्ञानमस्ति- अहं भिक्षामटामि पश्यामीत्याद्यभिमानसत्त्वादज्ञस्य । तत्त्ववित्कर्तृकसन्न्यासे तु नैव कर्तृत्वविज्ञानमस्ति नहं करोमीति तत्त्वविन्निश्चयादिति भावः ।

भेदान्तरमाह—कर्मैकदेशविषयादिति । कर्मण एकदेश एव विषयो यस्य स कर्मैकदेशविषयस्तस्मात् अज्ञो हि यज्ञयागादिकं कर्मैकदेशमेव सन्न्यस्तवान् नतु सर्वं कर्म अज्ञसन्न्यासिन दण्डतर्पणस्नानभिक्षाटनादिकर्मसत्त्वात् तेषु च स्वाचरितेषु कर्मसु कर्तृत्वाभिमानसत्त्वात् । प्राज्ञकर्तृकसन्न्यासस्तु सर्वकर्मविषय एवेति द्वयोर्भेद इति भाव ।

भेदान्तरमाह—यमेति । प्राज्ञकर्तृकसन्न्यासस्य न यमनियमादिसापेक्षा- प्राज्ञस्याकर्तृत्वेन यमादिकर्तृत्वाभावादिति भाव । यद्वा अज्ञकर्तृकात्सन्न्यासादज्ञकर्तृक कर्मयोग कुतो भवति विशिष्टोत आह—यमेति । दुरनुष्ठेयात्सुनुष्ठेयो हि विशिष्यते 'आनृशंस्यं क्षमा सत्यमहिंसा दम आर्जवम् । प्रीति. प्रसादो माधुर्यमक्रोधश्च यमा दश ॥ दानमिज्या तपो ध्यानं स्वाध्यायोपस्थनिग्रहौ । व्रतोपवासौ मौनं च स्नानं च नियमा दश ॥' आदिपदादासनादिग्रहणम् । पूर्वोक्त इति अविद्वत्कर्तृकयो कर्मानुष्ठानकर्मसन्न्यासयोर्मध्ये किं श्रेय इत्येवंरूप इति भाव ।

ननु आत्मवित्कर्तृकात्सन्न्यासादनात्मवित्कर्तृक कर्मयोगश्श्रेयानिति भगवत्प्रतिवचनवाक्यार्थनिरूपण सुकरमिति चेन्नैवम्—साक्षान्मोक्षहेतोर्विद्वत्सन्न्यासात्परम्परया मोक्षहेतोरविद्वत्कर्मयोगस्य

वैशिष्ट्यं स्वप्नेपि सम्भावयितुं न शक्यमिति हेतोः एवंविधज्ञानेन फलाभावाच्च प्रशस्यतरं हि कर्तव्यत्वार्थं जिज्ञासितं- नह्यात्मविदः प्रशस्ततरमपि कर्म सम्भवति। तस्मादात्मवित्पुरुषः निवृत्तमिथ्याज्ञानत्वात्कर्मयोगं नैवानुतिष्ठेत्किं तु सन्न्यासमेव विदध्यादिति न तत्र मया ज्ञातव्योंऽशोस्ति, किंतु यस्त्वनात्मविन्मुमुक्षुस्स कर्मयोगं कुर्याद्वा, उत कर्मसन्न्यासं ? किं तदुभयोः प्रशस्यतरमिति जिज्ञासया पृच्छत्यर्जुन इति भावः।

ननु कर्मण्यकर्मेत्यादिना यः कृष्णेन प्रोक्तः कर्मसन्न्यासस्स आत्मवित्कर्तृक एव- ज्ञानमार्गत्वात्तस्य। अतः कथं तस्यानात्मवित्कर्तृकत्वम् ? येन अनात्मवित्कर्तृकसन्न्यासकर्मयोगयोः प्रशस्यतरबुभुत्सा स्यादर्जुनस्येति चेन्नैवम्—यद्यपि कृष्णेनात्मवित्कर्तृक एव सन्न्यास उक्तस्तथापि तदानात्मविदपि कर्ता पक्षे प्राप्त इति भाष्यकारैरुक्तत्वात्तस्यानात्मवित्कर्तृकत्वमप्यस्तीति।

अयमाशयः—कर्मसन्न्यासे सम्यग्दर्शनाद्धेतोर्यथा आत्मवित्कर्ता प्राप्तः तथा कर्मफलानित्यत्वादिदर्शनप्रयुक्तवैराग्यादिना अनात्मविदपि कर्ता पक्षे प्राप्त एव। नच 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मित्यात्मविदस्सन्न्यासोऽनात्मविदः कर्मयोगश्च नियमितः कृष्णेनेति वाच्यं, आत्मवित्सन्न्यासमेव कुर्यादिति आत्मविदस्सन्न्यासस्य नियमितत्वेपि आत्मविदेव सन्न्यासं कुर्यादिति सन्न्यासस्यात्मवित्कर्तृकत्वस्यानियमितत्वात्। नचैवं कर्मयोगस्याप्यनात्मवित्कर्तृकत्वं न नियमितमिति आत्मवित्कर्तृकत्वमपि कर्मयोगस्य सम्भवतीति वाच्यं, सम्यग्दर्शनमिथ्याज्ञानतत्कार्यविरोधान्मिथ्याज्ञानमूलकर्मयोगस्य सम्यग्दर्शनवत्पुरुषकर्तृकत्वासम्भवात्। नचैवं सम्यग्दर्शनमूलस्य कर्मसन्न्यासस्यापि कथं मिथ्याज्ञानवत्पुरुषकर्तृकत्वसम्भव इति वाच्यं, सर्वकर्मसन्न्यासस्य सम्यग्दर्शनमूलकत्वेपि कर्मैकदेशविषयसन्न्यासस्य अतन्मूलकत्वेनाज्ञकर्तृकत्वसम्भवात्।

नच सर्वकर्मसन्न्यास इति कर्मैकदेशसन्न्यास इति च द्विविधसन्न्याससद्भावे प्रमाणं न पश्याम इति वाच्यं, भाष्यकारवचनस्यैव प्रमाणत्वात्। कुटीचकादेः कर्मैकदेशसद्भावस्य परमहंसस्यावधूतस्य सर्वकर्माभावस्य च शास्त्रे दर्शनाच्च। नच प्रमाणसद्भावेप्युपपत्तिसद्भावो नेति वाच्यं, एकस्मिन्नपि सन्न्यासे ज्ञानसाहित्यराहित्याभ्यां दर्शितद्वैविध्योपपत्तेः। तस्मात्सर्वकर्मसन्न्यासात्मके ज्ञानसहितसन्न्यासे विषये आत्मविदेव कर्ता, कर्मैकदेशसन्न्यासात्मके ज्ञानरहितसन्न्यासे अनात्मविदेव कर्तेति कृत्वा सन्न्याससामान्ये आत्मविद इवानात्मविदोपि कर्तुः प्राप्तिरस्त्येव।

ननु कर्मयोगेन योगिनामिति अनात्मवित्कर्मयोगमेव कुर्यादिति कृष्णेन नियमितत्वात्कथं तस्य सन्न्यासे पाक्षिक्यपि प्रवृत्तिरिति चेन्नैवम्—यमनियमादिपूर्वकध्यानयोगात्मककर्मयोगानुष्ठानयोग्यतासम्पादककर्मैकदेशसन्न्यासस्यानात्मवित्कर्तृकस्य कर्मयोगोपायत्वेन कर्मयोगानतिरिक्तत्वात्। तस्मादनात्मवित्पुरुषस्सन्न्यस्य ध्यानयोगमभ्यसेत्, असन्न्यस्य यज्ञादिकं वा कुर्यादित्यज्ञस्य सन्न्यासे पाक्षिकप्रवृत्तिरस्त्येव। न चाविद्वत्कर्तृकसन्न्याससद्भावे प्रमाणं नास्तीति वाच्यं, 'नच सन्न्यसनादेवे'ति भगवद्वाक्यस्यैव प्रमाणत्वादिति।

ननु कर्मण्यकर्मेत्यादिना दर्शितं ज्ञानं कर्मयोगोपकारकमेव, नतु सन्न्यासविषयं- 'तस्मादज्ञानसम्भूतं हृत्स्थं ज्ञानासिनाऽऽत्मनः। छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारते'त्यध्यायोपसंहारे कर्मानुष्ठानेऽपि संशयनिरासार्थं ज्ञानमावश्यकमिति प्रतिपादितम्। 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा। इति मां योऽभिजानाति कर्मभिर्न स बध्यते ॥ एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः। कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृत'मिति चोपक्रमे ज्ञानपूर्वकं कर्मानुष्ठेयमिति दर्शितम्। एवमुपक्रमोपसंहारैकरूप्यात् 'यस्य सर्वे समारम्भाः कामसङ्कल्पवर्जिताः। ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः। कर्मण्यभिप्रवृत्तोऽपि नैव किञ्चित्करोति सः ॥ यज्ञायाचरतः कर्म समग्रं प्रविलीयते। ज्ञानाग्निस्सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने'ति च मध्येऽपि ज्ञानपूर्वकं कर्मानुष्ठानस्य दर्शितत्वाच्च। आत्मवित्कर्तृकः कर्मयोगस्सम्भवत्येव- वाक्यान्तरैरात्मविदस्सन्न्यासोऽपि दर्शितः। अत एव 'सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससी'त्युक्तमर्जुनेन। तथा च आत्मवित्कर्तृककर्मयोगसन्न्यासयोस्तारतम्यबुभुत्सयैवायं प्रश्नोऽर्जुनस्येति युक्ततरम्।

किञ्चाज्ञस्य कर्मसम्भवे सत्यपि विशिष्टकर्मयोगो न सम्भवति—कर्मयोगो हि कर्मसु फलाभिसन्ध्यादिपरित्यागप्रयुक्तः। स च त्याग आत्मज्ञानं विना नैव सम्भवति। अतएव हि त्यक्त्वा कर्मफलासङ्गमिति श्लोकस्य प्रवृत्तिमार्गस्थात्मविद्विषयत्वं व्याख्यातं भाष्यकारैरपि। 'ज्ञेयस्स नित्यसन्न्यासी यो न द्वेष्टि न काङ्क्षती'ति भगवत्प्रतिवचनादपि कर्मयोगस्यात्मवित्कर्तृकत्वमेव निश्चीयते। नहि ज्ञानं विना रागद्वेषक्षयः स्यात्। तस्मादात्मवित्कर्तृकयोरेव सन्न्यासकर्मयोगयोस्तारतम्यबुभुत्सया कृतोऽयं प्रश्नोऽर्जुनेनेति रामानुजादयः।

अत्रोच्यते—यद्ज्ञानं कर्मयोगस्योपकारकं, यत्तु ज्ञानं कर्मसन्न्यासस्य तदुभयं विविच्य त्वं न वेत्सि, येनेयमाशङ्कासीत्तव- आत्मा नित्यः, ईश्वरार्थमहं कर्म करोमि, मामून्मम क्षयिष्णु स्वर्गादिफलं, इन्द्रियाणां विषयप्रावीण्यं मया वारणीयं, मनश्च स्ववशे स्थापयितव्यं, शीतोष्णादिद्वन्द्वजातं सोढव्यं, कर्मणस्सिद्ध्यसिद्ध्योस्समचित्तेन भाव्यं, इत्यादिज्ञानं कर्मयोगस्योपकारकम्। कर्मसन्न्यासस्य तु आत्मा अविक्रियोऽकर्ताऽभोक्ता सच्चिदानन्दब्रह्मरूपः, कर्माणि देहाद्याश्रयाण्येव इत्यादिज्ञानम्। इदमेव सम्यग्दर्शनमित्युच्यते। यस्यैतद्ज्ञानं स एवात्मविदित्युच्यते। अत आत्मवित्कर्तृकस्य कर्मयोगस्यासम्भव एव।

यस्त्वात्मवित्कर्तृकः कर्मयोगो दर्शितः 'त्यक्त्वा कर्मफलासङ्ग'मित्यादिना स न कर्मयोगः, किं त्वकर्मैव- लोकसंग्रहार्थत्वान्निरभिमानपूर्वकत्वाच्च तस्येति बहुशः प्रपञ्चितम्।

यत्तु ज्ञानासिना संशयं छित्वा योगमातिष्ठेत्युक्तं, ज्ञानं तद्धि नात्मज्ञानं, किंतु शोकमोहादिदोषज्ञानमेव। तच्च कर्मयोगस्योपकारकम्। तथैव दर्शितं भाष्यकृद्भिः—शोकमोहादिदोषसम्यग्दर्शनमिति। न त्वात्मदर्शनमित्युक्तम्। अथवा, तत्त्वविदा मया लोकसंग्रहार्थं कर्म कर्तव्यं वा न वेत्याकारकं संशयं छित्वा जनकादिदृष्टान्तेन कर्म कुर्विति तदर्थः। तथा च ज्ञानंनाम तत्र लोक-

'ज्यायसी चेत्कर्मणस्ते' इत्यत्र ज्ञानकर्मणोस्सहासम्भवे 'यच्छ्रेय एतयोस्तन्मे ब्रूहि' इत्येव पृष्टोऽर्जुनेन भगवान् साङ्ख्यानां सन्न्यासिनां ज्ञानयोगेन निष्ठा पुनः कर्मयोगेन योगिनां निष्ठा प्रोक्तेति निर्णयं चकार। नच सन्न्यसनादेव केवलात्सिद्धिं समधिगच्छतीति वचनाद्ज्ञानसहितस्य सिद्धिसाधनत्वमिष्टं कर्मयोगस्य च विधानात्, ज्ञानरहितः सन्न्यासः श्रेयान्? किं वा कर्मयोगः श्रेयानित्येतयोर्विशेषबुभुत्सया अर्जुन उवाच—

सन्न्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।
यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥१॥

सन्न्यासमिति । सन्न्यासं तु परित्यागं कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां शंससि

---

संग्रहार्थं विदुषापि कर्म कर्तव्यं मया क्षत्रियेणेत्याकारकं बोध्यम् । यद्वा ज्ञानमात्मतत्त्वज्ञानमेवास्तु- संशयः किमहं ब्रह्म उत नेत्याद्याकारक एवास्तु, तथापि न क्षतिः- लोकसंग्रहार्थं कर्मकर्तव्यत्वोपदेशात् ।

सर्वथापि कृतकृत्यस्याविक्रियब्रह्मरूपेणावस्थितस्य तत्त्वविदः कर्मासम्भव एव, किं तु ब्रह्मरूपेणावस्थानलक्षणसर्वकर्मसन्न्यासस्यैव सम्भव इति न कश्चिद्दोषः । नच भगवता कर्मण्यकर्मेत्यादिना ज्ञानिकर्तृक एव सन्न्यासोऽभिहितः, अर्जुनस्तु तदविदित्वा पप्रच्छेति वाच्यं, तथासति कृष्णेन मयोक्तस्सन्न्यासो ज्ञानिकर्तृक एव न त्वज्ञानिकर्तृकः, स तु कर्मयोगाद्विशिष्ट एव- यस्त्वज्ञानिकर्तृकसन्न्यासः स तु कर्मयोगादपकृष्ट इत्येव प्रतिवचनं ब्रूयात्, तस्माच्छङ्करोक्तमेवापद्गन् ।

संक्षेपविस्तराभ्यामुक्तोर्थो जिज्ञासोर्बुद्ध्यारूढो भवतीति न्यायाद्विस्तरेणोक्तमर्थं संक्षिप्याह— ज्यायसी चेदिति । इत्यत्रेति गीताशास्त्रे तृतीयाध्याये इत्यर्थः । सहासम्भव इति सहानुष्ठानासम्भव इत्यर्थः । युगपदेकपुरुषानुष्ठेयत्वासम्भव इति यावत् । यच्छ्रेय इति । 'तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुया'मिति पृष्टत्वादिति भावः । निर्णयञ्चकारेति । 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति श्लोकेनेति भावः । साङ्ख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वेन निर्णीतत्वान्नात्र पुनः प्रश्नावकाश इत्यर्थः । हेत्वन्तरादपि नेत्याह—न चेति, इष्टमिति । अभिमतं भगवत इति शेषः । कर्मयोगस्य चेति कर्मयोगस्य च सिद्धिसाधनत्वमिष्टमित्यन्वयः—सिद्धिसाधनत्वमिष्टमिति पदद्वयस्यात्राप्यनुकर्षणात् । कस्मात्कर्मयोगस्य सिद्धिसाधनत्वमिष्टमत आह—विधानादिति । 'छित्त्वैनं संशयं योगमातिष्ठे'ति कर्मयोगस्य भगवता विहितत्वात् । निरर्थकस्य च विध्ययोगादिति भावः । एवं ज्ञानसहितसन्न्यासस्य कर्मयोगस्य च सिद्धिसाधनत्वस्य भगवदिष्टत्वान्नात्र साङ्ख्ययोगयोर्विशेषबुभुत्सया पुनः प्रश्नावकाश इत्यर्थः । तर्हि केनाभिप्रायेण प्रश्नोपपत्तिरत आह—ज्ञानेति । ज्ञानरहित इति अज्ञकर्तृक इत्यर्थः । अज्ञस्य किं सन्न्यासः श्रेयान्? किं वा कर्मयोगः श्रेयानित्यभिप्रायेणार्जुनप्रश्न उपपद्यत इत्यर्थः ।

सन्न्यासमिति । हे कृष्ण! कर्मणां सन्न्यासं पुनः कर्मणां योगं च शंससि । एतयोर्यच्छ्रेयः सुनिश्चितं तदेकं मे ब्रूहीत्यन्वयः । काम्यानां निषिद्धानां च कर्मणां सन्न्यासं विहितानां कर्मणां

कथयसीत्येतत् । पुनर्योगं च तेषामेवानुष्ठानमवश्यकर्तव्यत्वं शंससि अतो मे कतरच्छ्रेय इति संशयः । किं कर्मानुष्ठानं श्रेयः किं वा तद्धानमिति प्रशस्यतरं चानुष्ठेयम्? अतश्च यच्छ्रेयः प्रशस्यतरमेतयोः कर्मसन्न्यासकर्मानुष्ठानयोर्यदनुष्ठानाच्छ्रेयोवाप्तिर्मम स्यादिति मन्यसे तदेकमन्यतरत्सहैकपुरुषानुष्ठेयत्वासम्भवान्मे ब्रूहि सुनिश्चितमभिप्रेतं तवेति ॥१॥

श्रीभगवानुवाच—सन्न्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।
तयोस्तु कर्मसन्न्यासात्कर्मयोगो विशिष्यते ॥२॥

स्वाभिप्रायमाचक्षाणो निर्णयाय श्रीभगवानुवाच—सन्न्यास इति । सन्न्यासः कर्मणां परित्यागः कर्मयोगश्च तेषामनुष्ठानं तावुभावपि निःश्रेयसकरौ मोक्षं कुर्वाते- ज्ञानोत्पत्तिहेतुत्वेन उभौ यद्यपि निःश्रेयसकरौ, तथापि तयोस्तु निःश्रेयसहेत्वोः कर्मसन्न्यासात्केवलात्कर्मयोगो विशिष्यते ॥२॥

ज्ञेयस्स नित्यसन्न्यासी यो न द्वेष्टि न कांक्षति ।
निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥३॥

कस्मादित्याह—ज्ञेय इति । ज्ञेयो ज्ञातव्यस्स कर्मयोगी नित्यसन्न्यासीति यो न

---

योगं चाहं शंसामीति न व्याघात इत्यभिप्रेत्याह—शास्त्रीयाणामिति । शास्त्रेण विहितानां नित्यानां नैमित्तिकानां चेत्यर्थः । अनुष्ठानविशेषाः अग्निहोत्रादिक्रियाविशेषाः । शंसुस्तुताविति स्मरणात्स्तुतेरत्राभावात्कथनमात्रमेवाभिप्रेतमित्याह—कथयसीत्येतदिति । कर्मण्यकर्म यः पश्येदित्यादिनेति भावः । योगं शंससीति । योगमातिष्ठेत्युक्तत्वादिति भावः । एवं कर्मसन्न्यासकर्मानुष्ठानयोर्द्वयोरपि कर्तव्यत्वोपदेशादेकेन सह कर्तुमशक्यत्वाच्च किं मया कर्तव्यमिति मम संशयो जात इत्याह—अत इति । किंशब्दाद्द्वयोर्निर्धारणे डतरच्प्रत्यये कतरदिति रूपं भवति । द्वयोर्मध्ये किं श्रेय इत्यर्थः । संशयमेवाभिनीय दर्शयति—किमिति, तद्धानमिति । कर्मत्याग इत्यर्थः । श्रेय इति । प्रशस्यस्य श्रादेशः अतिशयेन प्रशस्यं श्रेयः । इदमेवाभिप्रेत्याह—प्रशस्यतरमिति । यद्यपि विहितत्वादुभयमपि प्रशस्यमेव, तथापि प्रशस्यतरबुभुत्सया पृच्छामीत्यर्थः । किं तव प्रशस्यतरज्ञानात्फलं तत्राह—प्रशस्यतरं चानुष्ठेयमिति, अतश्चेति । प्रशस्यतरस्यैवानुष्ठेयत्वादित्यर्थः । योगस्य प्रशस्यतरत्वं च श्रेयःप्रदत्वादेवेत्याह—श्रेयोवाप्तिरिति । निःश्रेयसप्राप्तिरित्यर्थः । योगद्वयमपि श्रेयोषापकत्वात्कर्तव्यमेवेत्यत्राह—सहैकेति । युगपदेकेन योगद्वयस्याप्यनुष्ठातुमशक्यत्वान्नैकेनोभयं कर्तव्यमित्यर्थः । सर्वज्ञस्य तव यदभिप्रेतं तदेव मादृशेन कर्तव्यमित्याह—तवेति ॥१॥

सन्न्यास इति, केवलादिति । ज्ञानसहितस्य सन्न्यासस्य साक्षान्मोक्षहेतुत्वेन कर्मयोगादुत्कृष्टत्वादिति भावः, विशिष्यते उत्कृष्टो भवति ॥२॥

ज्ञेय इति । यो दुःखं तद्धेतुं वा न द्वेष्टि सुखं तद्धेतुं वा न कांक्षति स नित्यसन्न्यासीति ज्ञेयः । हेमहाबाहो हि निर्द्वन्द्वः पुरुषः सुखं बन्धात्प्रमुच्यते, नित्यं सदा सन्न्यासोऽस्यास्तीति नित्य-

द्वेष्टि किंचिन्न कांक्षति दुःखं सुखं वा तत्साधनं च एवंविधो यः कर्मणि प्रवर्तमानोपि राग द्वेषाद्ययोगात्स नित्यसन्न्यासीति ज्ञातव्य इत्यर्थः । निर्द्वन्द्वो द्वन्द्ववर्जितः । हि यस्मात् हेमहाबाहो सुखं बन्धादनायासेन प्रमुच्यते ॥३॥

साङ्ख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ।
एकमप्यास्थितस्सम्यगुभयोर्विन्दते फलम् ॥४॥

सन्न्यासकर्मयोगयोर्हि भिन्नपुरुषानुष्ठेययोर्विरुद्धयोः फलेपि विरोधो युक्तः न तूभयोर्निश्श्रेयसकरत्वमेवेति प्राप्त इदमुच्यते—साङ्ख्ययोगाविति । साङ्ख्ययोगौ पृथग्विरुद्धभिन्नफलौ बालाः प्रवदन्ति, न पण्डिताः पण्डितास्तु ज्ञानिनः एकं फलं अविरुद्धमिच्छन्ति । कथं एकमपि साङ्ख्ययोगयोस्सम्यगास्थितस्सम्यगनुष्ठितवानित्यर्थः । उभयोर्विन्दते फलमुभयोस्तदेव हि निश्श्रेयसफलम् । अतो न फले विरोधः ।

ननु सन्न्यासकर्मयोगशब्दौ प्रस्तुत्य साङ्ख्ययोगयोः फलैकत्वं कथमिहाप्रकृतं ब्रवीति, नैष दोषः- यद्यप्यर्जुनेन सन्न्यासं कर्मयोगं च केवलमभिप्रेत्य प्रश्नः कृतः, भगवांस्तु तदपरित्यागेनैव स्वाभिप्रेतं च विशेषं संयोज्य शब्दान्तरवाच्यतया प्रतिवचनं ददौ—साङ्ख्ययोगाविति । तावेव सन्न्यासकर्मयोगौ ज्ञानतदुपायसमत्वबुद्धित्वादिसंयुक्तौ साङ्ख्ययोगशब्दवाच्याविति भगवतो मतं- अतो नाप्रकृतप्रक्रियेति ॥४॥

सन्न्यासी प्रसिद्धस्तु न सर्वदा सन्न्यासी किन्त्वाश्रमस्वीकारानन्तरमेवेति भाव । एवं कर्मयोगिनो नित्यसन्न्यासित्वादेव सन्न्यासाद्योगो विशिष्यते इत्युक्तम् । एतेन कर्मयोगिनापि सन्न्यासिनेव रागद्वेषादिद्वन्द्ववर्जितेन भाव्यमित्युपदेशस्सूचितः । किं च सुखमित्यनेन च कर्मयोगस्य सन्न्यासाद्वैशिष्ट्यं सूचितम् । सन्न्यासे यमादीनां दुष्करत्वेन तस्य क्लेशावहत्वात् प्रमुच्यत इति । परम्परयेति शेष । ज्ञानोत्पत्तिद्वारेति यावत् ॥३॥

साङ्ख्येति । साङ्ख्ययोगयोश्शब्दतोऽर्थतश्च पार्थक्यसम्भवात्कथमपृथक्त्वमत आह—विरुद्धेति । विरुद्धे अत एव भिन्ने फले ययोस्तौ तथोक्तौ फलेऽभेदादपृथक्त्वमित्यर्थ ।

ननु साङ्ख्यशब्दस्य ज्ञानयोगाभिधायित्वात्प्रकृतसन्न्यासस्य च ज्ञानहीनत्वात्कोऽयमप्रस्तुतप्रसङ्ग इति शङ्कते—नन्विति । अयमाशय उत्तरपक्षस्य—यथा साङ्ख्ययोगयोस्साक्षात्क्रमेण च निश्श्रेयससाधनत्वं, तथा ज्ञानहीनसन्न्यासकर्मयोगयोरपि परम्परया निश्श्रेयससाधनत्वमेवेति नास्ति फलतो भेदस्तयोरनयोर्वा य एव प्रकृत सन्न्यासस्स एव ज्ञानयुक्तो भवति साङ्ख्यशब्दवाच्य इति न सन्न्यासादतिरिच्यते साङ्ख्यं नापि योगात्कर्मयोग इति ।

ननु अर्जुनेन सन्न्यासस्य ज्ञानहीनसन्न्यासत्वेनाभिप्रेतत्वेपि कर्मयोगस्य न ज्ञानशून्यत्वेनाभिप्रेतत्वं वक्तुं शक्यम्—ज्ञानशून्यकर्मानुष्ठानस्य कर्मयोगशब्दवाच्यत्वाभावात्- फलाभिसन्ध्यादिपूर्वक कर्मानुष्ठानस्य च संसारहेतुत्वेन निश्श्रेयसफलाभावात्- तादृशकर्माचरणस्य ज्ञानहीनसन्न्यासाद्विशिष्

यत्साङ्ख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ।
एकं साङ्ख्यं च योगं च यः पश्यति स पश्यति ॥५॥

एकस्यापि सम्यगनुष्ठानात्कथमुभयोः फलं विन्दत इत्युच्यते—यदिति । यत्साङ्ख्यैः ज्ञाननिष्ठैस्सन्न्यासिभिः प्राप्यते स्थानं मोक्षाख्यं, तद्योगैरपि गम्यते- ज्ञानप्राप्त्युपायत्वेनेश्वरे समर्प्य कर्माण्यात्मनः फलमनभिसन्धायानुतिष्ठन्ति ये ते योगाः योगिनस्तैरपि परमार्थज्ञान-सन्न्यासप्राप्तिद्वारेणानुगम्यत इत्यभिप्रायः । अतः एकं साङ्ख्यं च योगं च यः पश्यति फलैकत्वात्स पश्यति सम्यक्पश्यतीत्यर्थः ।

एवं तर्हि कर्मयोगात्सन्न्यास एव विशिष्यते, कथं तर्हीदमुक्तं तयोस्तु कर्मसन्न्यासा-त्कर्मयोगो विशिष्यत इति, शृणु तत्र कारणं- त्वया पृष्टं केवलं कर्मसन्न्यासं कर्मयोगं चाभिप्रेत्य तयोर्यच्छ्रेयस्तन्मे ब्रूहीति, तदनुरूपं प्रतिवचनं मयोक्तं कर्मसन्न्यासात्कर्मयोगो विशिष्यत इति ज्ञानमनपेक्ष्य, ज्ञानसव्यपेक्षस्तु सन्न्यासस्साङ्ख्यमिति मयाऽभिप्रेतः । परमार्थयोगश्च स एव । यस्तु कर्मयोगो वैदिकः स तादर्थ्याद्योगः सन्न्यास इति चोपचर्यते ॥५॥

---

त्वस्य वक्तुमयुक्तत्वाच्च । एवं सति केवलं कर्मयोगमभिप्रेत्यार्जुनेन प्रश्नः कृतः तदुपायसमत्वबुद्धि-त्वादियुक्तस्स एव योगशब्दवाच्य इति च भाष्यकारोक्तमसङ्गतं, ज्ञानोत्पत्तिहेतुत्वेन उभौ यद्यपि निश्श्रेयसकराविति स्ववचनव्याघातश्चेति चेत्, नैवम्—कर्मयोगोऽत्र कर्मानुष्ठानम्-- स च फलसङ्गादि-वर्जित एवेति चित्तशुद्धिहेतुत्वेन निश्श्रेयसफलक एव । अयमेव कर्मयोगः 'सिद्ध्यसिद्ध्योस्समो भूत्वा समत्वं योग उच्यते' इति समत्वबुद्धिशमादिविशेषयुक्तस्सन् योगशब्दवाच्य इति ॥४॥

यदिति । साङ्ख्यमात्मतत्त्वज्ञानं तदेषामस्ति ते साङ्ख्या ज्ञानिनः ज्ञानस्य च वेदान्तश्रवणा-द्यधीनत्वात्तत्र च सन्न्यासिनामेवाधिकारादाह—सन्न्यासिन इति । योगस्समत्वादिलक्षणः एषा-मस्तीति योगिनः अर्शआद्यजन्तौ द्वावपि शब्दौ ।

एवं तर्हीति । साङ्ख्यस्य साक्षान्मोक्षकारणत्वेन योगस्य परम्परया मोक्षसाधनत्वेन चेत्येवं शब्दार्थः । तर्हीति शङ्कार्थः । कथं तर्हि कथं वा ज्ञानहीनात्सन्न्यासात्कर्मयोग एव विशिष्यते सुकरत्वा-दप्रमादत्वाच्च साङ्ख्यशब्दवाच्याद्ज्ञानसहितसन्न्यासात्तु कर्मयोगो न विशिष्यते, किं तु निकृष्यत एवेत्यर्थः । कर्मसन्न्यासात्कर्मयोगो विशिष्यत इत्यत्र केवलसन्न्यासकर्मयोगौ मया विवक्षितौ त्वत्प्रश्नानुगुण्याय, इह तु साङ्ख्ययोगशब्दाभ्यां ज्ञानसहितसन्न्यासकर्मयोगौ विवक्षितौ, यद्यपीदं त्वया न पृष्टं तथापि पृष्टादधिकस्यैव वक्तव्यत्वाभियशिष्याय गुरुणा त इदमप्युक्तम् ।

ज्ञानसापेक्षः परमार्थसन्न्याससाङ्ख्यशब्दार्थः । स एव परमार्थसन्न्यास एव परमार्थयोगश्च भवति, एवं परमार्थतस्सन्न्यासयोगयोश्शब्दत एव भेदः न त्वर्थतोऽपीति सिद्धम् । अथ यस्तु वैदिकः कर्मयोगस्स योग इति सन्न्यास इति चोपचर्यते- ज्ञेयस्स नित्यसन्न्यासीत्युक्तत्वात् इति । एतेन एकं साङ्ख्यं च योगं च यः पश्यति स पश्यतीत्यस्य साङ्ख्ययोगयोर्वस्तुत एकत्वादेकत्वज्ञानं सम्य-ग्ज्ञानमित्यर्थान्तरं च मूलस्य निरस्तम् ।

सन्न्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ।
योगयुक्तो मुनिर्ब्रह्म न चिरेणाधिगच्छति ॥६॥

कथं तादर्थ्यमित्युच्यते—सन्न्यास इति । सन्न्यासस्तु पारमार्थिकः महाबाहो दुःखमाप्तुमयोगतः योगेन विना योगयुक्तो वैदिकेन कर्मयोगेन ईश्वरसमर्पितरूपेण फलनिरपेक्षेण युक्तो मुनिः मननादीश्वरस्वरूपस्य मुनिः ब्रह्म परमात्मज्ञानलक्षणत्वात् प्रकृतसन्न्यासो ब्रह्मोच्यते न्यास इति ब्रह्म, 'ब्रह्मा हि परः परो हि ब्रह्मे'ति श्रुतेः ब्रह्म परमार्थसन्न्यासं परमात्म-

---

अत्रायं विवेकः—सन्न्यासयोगौ पारमार्थिकापारमार्थिकत्वभेदेन प्रत्येकं द्विविधौ- आत्मवित्कर्तृकः पारमार्थिकसन्न्यासः, अनात्मवित्कर्तृकस्त्वन्यः, आत्मवित्कर्तृको लोकसंग्रहार्थः पारमार्थिको योगः, अनात्मवित्कर्तृकश्चित्तशुद्ध्यर्थस्त्वन्य', तत्र यः पारमार्थिकस्सन्न्यासस्स पारमार्थिकयोगान्न भिद्यते, सन्न्यासिन इव योगिनोपि कर्तृत्वाद्यभिमानराहित्येन तत्कर्मणोऽकर्मत्वस्योक्तत्वात् । अनात्मवित्कर्तृकौ सन्न्यासयोगौ च न भिद्येते- उभयोरनुष्ठात्रोः कर्तृत्वाद्यभिमानस्य सत्त्वाद्यज्ञादीनामिव यमादीनामपि कर्मत्वाच्च, अतएव कर्मयोगेस्यान्तर्भावस्समाधियोगस्य केवलसन्न्यासिविषयस्येति ।

यद्वा, पारमार्थिको ज्ञानहीनश्चेति सन्न्यासो द्विविधः । समत्वादिबुद्धियुक्तः केवलश्चेति कर्मयोगो द्विविधः । तत्र पारमार्थिकसन्न्यासस्साद्धर्यं- समत्वादिबुद्धियुक्तः कर्मयोगः परमार्थयोग इति ॥५॥

सन्न्यास इति । हेमहाबाहो सन्न्यासस्तु अयोगत आप्तुं दुःखम् । योगयुक्तो मुनिरचिरेण ब्रह्माधिगच्छति । दुःखमाप्तुमिति दुर्लभ इत्यर्थः । मननाद्ध्यानात् । ननु कथं योगिनो चिराद्ब्रह्मप्राप्तिर्ज्ञाननिष्ठया व्यवधानादित्यत आह—ब्रह्मसन्न्यासमिति । कथं पारमार्थिकस्यापि सन्न्यासस्य ब्रह्मशब्दवाच्यतेत्यत्र हेतुमाह—परमात्मज्ञानलक्षणत्वादिति । परमात्मज्ञानं लक्षणं स्वरूपं यस्य तत्त्वात् । परमात्मज्ञानलक्षणे सन्न्यासे परमात्मवाचिब्रह्मशब्दप्रयोग औपचारिक इति भावः ।

एवं ब्रह्मशब्दस्य सन्न्यासे प्रयोगश्श्रुतिसिद्ध इत्याह—न्यास इति । ब्रह्म ब्रह्मशब्दवाच्यन्यासः सन्न्यासः परः सत्यादिसर्वसाधनोत्कृष्ट इति । ब्रह्मा हिरण्यगर्भः हि यस्मादाहेति शेषः । तस्मान्न्यास एवावराणि तपांस्यत्यरेचयदतिचक्रामेत्यन्वयः । हिः प्रसिद्धाविति वा । ननु हिरण्यगर्भोक्तमात्रेण कथं न्यासस्य सर्वातिशायित्वमत आह—परो हि ब्रह्मेति । हि यस्माद्ब्रह्मा हिरण्यगर्भः परः सर्वोत्कृष्टः- आदिपुरुषत्वादिति भावः । यद्वा परः परमात्मरूप एव, ननु जीवः । यद्यप्यसौ हिरण्यगर्भो देहधारी तथापि पर इति वक्तुं शक्यते- तच्छिष्यत्वेन तत्समानज्ञानत्वात् । अत एव श्वेताश्वतरा आमनन्ति 'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै' इति । इयं श्रुतिस्तैत्तिरीयकविद्यारण्यभाष्ये न्यास इति ब्रह्मा हि परः परो हि ब्रह्मेत्येव दृश्यते- न्यास एवोत्तमो मोक्षहेतुरिति ब्रह्मा हिरण्यगर्भो मन्यत इत्येवं विद्यारण्यैर्व्याख्याता च । तद्रीत्या तु न्यासे ब्रह्मशब्दप्रयोगं प्रति प्रमाणतया नेयं श्रुतिरुदाहर्तव्या । किंतु- मुक्तिहेतुत्वाच्चेति भाष्ये पूरणीयं- सन्न्यासो मुक्तिहेतुत्वाद्ब्रह्मेत्युच्यते । मुक्तेर्ब्रह्मस्वरूपत्वात्तद्धेतौ तच्छब्दप्रयोग औपचारिक । नेत्रानन्दश्चन्द्र इतिवदिति भाव. । ननु कथं

ज्ञाननिष्ठालक्षणं न चिरेण क्षिप्रमेव अधिगच्छति प्राप्नोति, अतो मयोक्त कर्मयोगो विशिष्यत इति ॥६॥

न्यासस्यैव मोक्षहेतुत्व सत्यनपरशमदमादीना सत्त्वादिति शङ्काया न्यास एक एव मोक्षहेतुर्नान्य इत्यत्र श्रुतिं पठति—न्यास इति । इति भाष्यं व्याख्येयम् ।

श्रुतौ ब्रह्मा हि पर परो हि ब्रह्मेति द्विरुक्ति तत्त्वमसि त्वन्नदसीतिवद्दार्ढ्यायेति कैश्चिदुच्यते । ब्रह्मा न्यासो मोक्षहेतुरिति मन्यते स च परो हि परमात्मरूपो हि- 'परो हि परमात्मैव ब्रह्मा हिरण्यगर्भ इति वक्तुं शक्यत' इति विद्यारण्यस्वामिन ।

'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' इत्युत्तरवाक्यं श्रुते अवराणि न्यासापेक्षया अल्पानि तपांसि सत्यदमादीनि । सत्यादीना साक्षान्मोक्षहेतुत्वाभावात्स्वर्गादिक्षयिष्णुपुरुषार्थहेतुत्वाच्च तेभ्यो न्यासस्य साक्षान्मोक्षहेतोरुत्कर्ष इति भाव ।

अत इति । योगस्य पारमार्थिकसन्न्यासप्राप्त्युपायत्वादित्यर्थ । ननु सन्न्यासोपि केवलस्तादृश एवेति कथ कर्मयोगस्य विशिष्टत्वमिति चेत्सत्य, तथापि योगयुक्तस्य पारमार्थिकसन्न्यासप्राप्तिरचिरेणैव भवेदन्यस्य तु चिरेणेति केवलसन्न्यासापेक्षया कर्मयोगस्य चित्तशुद्धिप्रत्यन्तरङ्गसाधनत्वमिति भाव । केवलसन्न्यासिन विषयप्रवृत्तिस्वभावस्य मनस प्राणायामादिना स्ववशीकरण चिरकालसाध्यं, योगिनस्तु कामादित्यागात्सुलभमिति गूढाभिसन्धि ।

अस्य श्लोकस्य योगयुक्त पुमानचिरेणैव मुनिस्सन्न्यासी भूत्वा ब्रह्म परमं पदमधिगच्छतीत्यप्यन्वयस्सुवच । योगादचिरादेव पारमार्थिकसन्न्यासलाभस्ततो ब्रह्मप्राप्तिरित्यर्थ । न चिरेणेति नञर्थकनशब्देन सह समास , न चिरेणेति पदद्वयमिति वा, चिरेण ब्रह्म नाधिगच्छति, किन्त्वचिरेणैवेत्यर्थ । अस्मिन्पक्षे चिरेणापि नाधिगच्छतीत्यपार्थप्रतीतिस्स्यादिति समासपक्ष एवोचित ।

ननु अयोगतस्सन्न्यासो दुर्लभ इत्यनेनैव योगतस्सन्न्यासस्सुलभ इति सिद्धत्वाद्व्यर्थं श्लोकस्योत्तरार्धमिति चेन्नैवम्—यस्माद्योगिनस्सन्न्यासस्सुलभस्तस्मादयोगतस्सन्न्यासो दुर्लभ इति हेतुहेतुमद्भावस्य पूर्वोत्तरार्धयोर्विवक्षितत्वात् । अतएव अयोगत इत्यस्य 'योगेन विनेत्यर्थ' उक्त आचार्यैर्नतु योगरहितस्येति । यस्मादयोगतस्सन्न्यासो दुर्लभस्तस्माद्योगयुक्तस्सन्न्यासं लभत इति वा हेतुहेतुमद्भावो बोध्य । ननु योगयुक्त एव सन्न्यासमाप्नोति, नतु योगरहित इत्यनेन योगसाहित्यं सन्न्यासस्य सिद्धमिति, चेन्नैवम्—कर्मानुष्ठानलक्षणयोगस्य कर्मसन्न्यासलक्षणसन्न्यासस्य च साहित्यासम्भवात्तेजस्तिमिरवत् । नच नाय कर्मत्यागलक्षणस्सन्न्यास , किंतु पारमार्थिक परमात्मज्ञानलक्षण इति वाच्यं, परमात्मज्ञाननिष्ठालक्षणसन्न्यासस्यैव सर्वकर्मत्यागरूपत्वात्- न ब्रह्मज्ञस्सर्वं कर्म त्यक्तुं शक्नुयात्- देहादितादात्म्याध्यासेन तस्य कर्ताहमिति विपरीतबुद्धिसत्त्वात् । तूष्णीं तिष्ठामीति विपरीतबुद्धिविषयस्यापि तूष्णींभावस्य कर्मत्वस्य सिद्धान्तितत्वात् । तस्माचेन योगो युक्तस्स चित्तशुद्धिद्वारा ज्ञान प्राप्य योग सन्न्यस्यैव पारमार्थिकसन्न्यासमाप्नोतीति सर्वमनवद्यम् ।

योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ।
सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥७॥

यदा पुनरयं सम्यग्दर्शनप्राप्त्युपायत्वेन—योगेति । योगेन युक्तो योगयुक्तः—विशुद्धात्मा विशुद्धसत्त्वः विजितात्मा विजितदेहः जितेन्द्रियश्च सर्वभूतात्मभूतात्मा सर्वेषां भूतानां ब्रह्मादीनां स्तम्बपर्यन्तानां आत्मभूत आत्मा प्रत्यक्चेतनो यस्य स सर्वभूतात्मभूतात्मा सम्यग्दर्शीत्यर्थः । स तत्रैव वर्तमानोपि लोकसङ्ग्रहाय कर्म कुर्वन्नपि न लिप्यते न कर्मभिर्बध्यत इत्यर्थः । न चासौ परमार्थतः करोतीत्येतत् ॥७॥

यत्तु रामानुजः—कर्मयोगयुक्तस्यात्मप्राप्तिस्सुलभा, ज्ञानयोगयुक्तस्य तु कष्टसाध्येति, तत्तुच्छम्—आत्मप्राप्ति किं मुक्तिरुत ज्ञानम् ? नाद्य कर्मणा मुक्त्ययोगात् । आत्मप्राप्तेर्मुक्तित्वेन त्वयानभ्युपेतत्वाच्च । द्वितीये यदात्मज्ञानं कर्मयोगमुपाप तद्योगस्यैव ज्ञानयोगत्वेन कथं ज्ञानयोग दुष्प्रापत्व ज्ञानस्य । नच ज्ञानयोगगतं ज्ञान परोक्ष, कर्मयोगप्राप्य त्वपरोक्षमिति वाच्यं, परोक्षज्ञान विनाऽपरोक्षज्ञानालाभात्तथापि ज्ञानयोगमुपापमेवापरोक्षज्ञान, कर्मयोगस्तु परोक्षज्ञानमुत्पाद्य तत एवापरोक्ष जनयेदिति बहिरङ्गसाधनमेवेत्यलम् ॥६॥

योगेति । योगयुक्त पुरुष विशुद्धात्मा विजितात्मा जितेन्द्रियश्च भूत्वा सर्वभूतात्मभूतात्मा च भूत्वा कुर्वन्नपि न लिप्यते योगिनो योगवशान्मनश्शरीरेन्द्रियजयानन्तरमात्मतत्त्वज्ञान जायते, स तत कर्म कुर्वन्नपि न लिप्यत इत्यर्थ ।

सर्वभूतेति । [redacted] स्वस्यात्मा प्रत्यक्चेतन स एव सर्वभूतानामप्यात्मेति यो मन्यते स सर्वभूतात्मभूतात्मेत्युच्यते । इद च ज्ञान ब्रह्मात्माभेदज्ञानाद्भवति न त्वन्यथा, ततश्च अहं ब्रह्मास्मीति सम्यग्दर्शनवान् सर्वभूतात्मभूतात्मेत्युच्यत इत्यभिप्रेत्याह —सम्यग्दर्शीत्यर्थ इति । तत्रैवेति सम्यग्दर्शन एवेत्यर्थ । कर्मबन्ध एव कर्मलेप इत्याह—न कर्मभिर्बध्यत इति । कुतोस्य कर्तुरलेप इत्यत आह—न चेति । परमार्थत आत्मनोऽकर्तृत्वान्नायमात्मवित्कर्ता भवति आत्मविद एवात्मत्वादिति भाव ।

यत्तु रामानुजः—सर्वभूतेति विशेषणेन ज्ञानैकाकारतया सर्वात्मना साम्यमुच्यत इति, तत्तुच्छम् मूलकारानभिप्रेतत्वादस्यार्थस्य । यदि मूलकर्तुस्सोभिप्रायस्तर्हि सर्वभूतात्मतुल्यात्मेत्येव ब्रूयात् । किंच व्यर्थ एवायं सर्वात्मना स्वरूपतौल्योपदेश सर्वदेहाना भौतिकत्वेन तुल्यत्वोपदेशवत्- नात्यन्तसाम्ये वस्तु भेदोपि युज्यते भेदकविशेषस्यैवाभावात् । यदि तूपाधितो भेद इति तर्हि सिद्धमात्मैक्यं घटाद्युपाधिभेदे सत्यप्याकाशैक्यवत् ।

किंच यदिदमात्मन आकारत्वेनोच्यते ज्ञानं किं तच्चैतन्यमथवा वृत्ति ? न द्वितीय - तस्य मनोजन्यत्वात् । आद्ये चैतन्यस्य सर्वविशेषविरयसाक्षित्वं सुषुप्त्याद्यनुभवसिद्धम् । तस्य च निर्विशेष परिपूर्णपरिच्छिन्नवैरूप्य कथं भेदसिद्धि - भेदकस्यैवाभावात् । अत एव ह्येकमेवाद्वितीय ब्रह्मेत्युपदिश्यते श्रुत्या । तस्मादलं भेदवादेन भयहेतुना 'द्वितीयाद्वै भयं भवतीति श्रुते ॥७॥

नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ।
पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥८॥

नेति । नैव किंचित्करोमीति युक्तस्समाहितस्सन् मन्येत चिन्तयेत्- तत्त्वविदात्मनो याथात्म्यं- तत्त्वं वेत्तीति तत्त्ववित् परमार्थदर्शीत्यर्थः ॥८॥

प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥९॥

कदा कथं वा तत्त्वमवधारयन्मन्येतेत्युच्यते—पश्यन्निति । मन्येतेति पूर्वेण सम्बन्धः । तस्यैवं तत्त्वविदः सर्वकार्यकरणचेष्टासु कर्मसु अकर्मैव पश्यतः सम्यग्दर्शिनः सर्वकर्मसन्न्यास एवाधिकारः-- कर्मणोऽभावदर्शनात् । न हि मृगतृष्णिकायामुदकबुद्ध्या पानाय प्रवृत्त उदकाभावज्ञानेपि तत्रैव पानप्रयोजनाय प्रवर्तते ॥९॥

---

नैवेति । तत्त्ववित् युक्तस्सन् पश्यन् शृण्वन् स्पृशन् जिघ्रन् अश्नन् गच्छन् स्वपन् श्वसन् प्रलपन् विसृजन् गृह्णन् उन्मिषन् निमिषन्नपि इन्द्रियाणि इन्द्रियार्थेषु वर्तन्ते इति धारयन् सन् अहं किंचिन्न करोम्येव इति मन्येत इति श्लोकद्वयान्वयः ।

दर्शनं चक्षुरिन्द्रियकर्म, न त्वात्मनः, श्रवणं श्रोत्रेन्द्रियकर्म, स्पर्शनं त्वगिन्द्रियस्य कर्म, घ्राणं घ्राणेन्द्रियस्य, अशनं वक्त्रस्य, गमनं पादस्य, स्वपनमन्तःकरणस्य, अन्तःकरणोपरमस्यैव स्वापत्वात् । श्वसनं प्राणवायोः, प्रलपनं वागिन्द्रियस्य, विसर्जनं पायोः, ग्रहणं हस्तयोः, उन्मेषनिमेषौ पक्ष्मणोः, इति विवेकः ॥८॥

इन्द्रियार्थाः विषया दर्शनादयः रूपादयो वा कर्मस्वकर्मैव पश्यत इति कर्मण्यकर्म यः पश्येदिस्युक्तरीत्येति भावः । सम्यग्यथावदात्मानं पश्यतीति सम्यग्दर्शी, तस्य कुतोस्य कर्मस्वनधिकार इत्यत आह—कर्मण इति । तत्त्वविद्दृष्ट्या कर्मणाममावादेव कर्मस्वनधिकार इत्यर्थः । तत्रैव दृष्टान्तमाह—यथेति । मृगतृष्णिकायामुदकमिवात्मनि कर्म अज्ञानवशात्प्रतीतं, ततस्तत्राज्ञः प्रवर्तते, यस्तु मृगतृष्णिकायामुदकाभावमिव आत्मनि कर्माभावं वेत्ति स कथं तत्र प्रवर्तेत, न कथमपीत्यर्थः । एतेन योऽहङ्करोमीति मन्यते तस्यैव कर्माधिकार इति सिद्धम् ।

ननु दर्शनादिकर्माणि कुर्वन्नपि न करोमीति यो मन्यते स हि मिथ्याज्ञानीति चेन्नैवम्— यथोक्तदर्शनेऽयमात्मदृष्ट्या कर्माभावात्, यानि कर्माणि कुर्वन्ति तेषां देहेन्द्रियादीनामनात्मत्वाच्च ।

ननु तर्हि कथं पश्यन्नित्यादिकमुक्तमिति चेल्लोकदृष्ट्येति विद्धि, लोकदृष्ट्या कर्माणि कुर्वन्निव प्रतीयमानोपि वस्तुतो न करोतीत्यर्थः । उक्तं हि विश्वामित्रेणाध्यात्मरामायणे- 'रामो न गच्छति न तिष्ठति नानुशोचत्याकांक्षते त्यजति नो न करोति किञ्चित् । आनन्दमूर्तिरचलः परिणामहीनो मायागुणाननुगतो हि तथा विभाति' इति । न च परमात्मविषयं तदिति वाच्यं, आत्मत्वात्परमात्मनः न ह्यात्मनोऽन्यः कश्चित्परमात्मा नामास्ति- 'एकमेवाद्वितीयं ब्रह्मे'त्यादिश्रुतिविरोधात् ॥९॥

ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥१०॥

यस्तु पुनरतत्त्ववित् प्रवृत्तश्च कर्मयोगे—ब्रह्मणीति । ब्रह्मणीश्वरे आधाय तदर्थं कर्म करोमीति भृत्य इव स्वाम्यर्थं मोक्षेऽपि फले सङ्गं त्यक्त्वा करोति यः सर्वाणि कर्माणि, लिप्यते न स पापेन सम्बध्यते, पद्मपत्रमिवाम्भसा उदकेन केवलं सत्त्वशुद्धिमात्रमेव फलं तस्य कर्मणस्स्यात् ॥१०॥

कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि ।
योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये ॥११॥

यस्मात्, कायेनेति । कायेन देहेन, मनसा बुद्ध्या च, केवलैरिन्द्रियैरपि ममत्ववर्जितैरीश्वरायैव करोमि न मम फलायेति ममत्वबुद्धिशून्यैरिन्द्रियैः, केवलशब्दः कायादिभिरपि प्रत्येकं सम्बध्यते । सर्वव्यापारेषु ममत्ववर्जिताः योगिनः कर्मिणः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयं आत्मशुद्धये सत्त्वशुद्धय इत्यर्थः । तस्मात्त्वैव तवाधिकार इति कुरु कर्मैव ॥११॥

युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ।
अयुक्तः कामकारेण फले सक्तो निबध्यते ॥१२॥

यस्माच्च युक्त इति । युक्त ईश्वराय कर्माणि न मम फलायेत्येवं समाहितस्सन्

---

ब्रह्मणीति । ■ ब्रह्मणि आधाय सङ्गं त्यक्त्वा कर्माणि करोति स अम्भसा पद्मपत्रमिव पापेन न लिप्यते । नैव किञ्चित्करोमीति युक्तो मन्येत । तत्त्वविदित्यस्य कर्माणि करोतीत्यस्य च एकपुरुषविषयत्वासम्भवादाह यस्तु पुनरतत्त्वविदिति । आधाय न्यस्य समर्प्येति यावत् । पापेन न लिप्यत इत्येवोक्तं, ननु ब्रह्म प्राप्नोतीति । अत आह—केवलमिति । तस्येति ईश्वरार्पणबुद्ध्या निस्सङ्गं कृतस्येत्यर्थः ।

यत्तु रामानुजः—ब्रह्मणि इन्द्रियाकारेणावस्थितायां प्रकृतौ कर्माण्याधायेति, तत्तुच्छम्—इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्नित्यनेन पौनरुक्त्यात् ॥१०॥

कायेनेति । 'कायेन वाचा मनसेन्द्रियैर्वा बुद्ध्यात्मना वा प्रकृतेस्स्वभावात् । करोमि यद्यत्सकलं परस्मै नारायणायेति समर्पयामी'ति सर्ववैदिकवचनेन सन्ध्यावन्दनाद्यन्तेषु पठ्यमानस्य श्लोकस्य मूलभूतोऽयम् ।

सङ्कल्पविकल्पात्मकं मनः, अध्यवसायात्मिका बुद्धिरिति विवेकः । ममत्वबुद्धिशून्यैरिति । कर्तृगता ममत्वबुद्धिः करणेष्वारोपिता । अथवा ममत्वबुद्ध्ययुक्तैरित्यर्थः । अत एवाह—ममत्ववर्जिता इति, तत्त्वेनेति । ननु साङ्गत्ये इत्येवकारार्थः ॥११॥

युक्त इति । निष्ठाया ज्ञाननिष्ठायामित्यर्थः । ननु कथं ज्ञाननिष्ठामवमोक्षस्य कर्मयोगेन

कर्मफलं त्यक्त्वा परित्यज्य शान्तिं मोक्षाख्यां आप्नोति । नैष्ठिकीं निष्ठायां भवां सत्त्वशुद्धिज्ञानप्राप्तिसर्वकर्मसन्न्यासज्ञाननिष्ठाक्रमेणेति वाक्यशेषः । यस्तु पुनरयुक्तः असमाहितः कामकारेण करणं कारः कामस्य कारः कामकारः तेन कामकारेण कामप्रेरिततयेत्यर्थः । मम फलायेदं करोमि कर्मेत्येवं फले सक्तो निबध्यते । अतस्त्वं युक्तो भवेत्यर्थः ॥१२॥

सर्वकर्माणि मनसा सन्न्यस्यास्ते सुखं वशी ।
नवद्वारे पुरे देहे नैव कुर्वन्न कारयन् ॥१३॥

यस्तु परमार्थदर्शी सः, सर्वेति । सर्वाणि कर्माणि सर्वकर्माणि मनसा सन्न्यस्य परित्यज्य नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं च सर्वकर्माणि तानि मनसा विवेकबुद्ध्या कर्मादावकर्मदर्शनेन सन्त्यज्येत्यर्थः । आस्ते तिष्ठति सुखं त्यक्तवाङ्मनःकायचेष्टो निरायासः प्रसन्नचित्त आत्मनोऽन्यत्र निवृत्तसर्वबाह्यप्रयोजन इति सुखमास्त इत्युच्यते । वशी जितेन्द्रिय इत्यर्थः । क्व आस्त इत्याह—नवद्वारे पुरे देहे सप्त शीर्षण्यान्यात्मनः उपलब्धिद्वाराणि,

---

सिद्धिरत आह—सत्त्वशुद्धीति । कर्मयोगात्सत्त्वशुद्धिः, ततः परोक्षज्ञानप्राप्तिः, ततस्सर्वकर्मसन्न्यासः, ततोऽपरोक्षज्ञाननिष्ठा, ततो विदेहकैवल्यात्मको मोक्ष इत्यर्थः । वाक्यशेष इति । येनार्थः परिसमाप्यते पदेनाहार्येण स वाक्यशेष इत्युच्यते । असमाहित इति । फलाशाविक्षिप्तचित्त इत्यर्थः । कामकारः कामस्याशायाः कारः करणं कामकारः तेन फलाशायुक्तत्वेनेत्यर्थः । निबध्यते कर्मभिर्जन्मादिरूपं संसारं प्राप्यत इत्यर्थः । किमनेन श्लोकेनोपदिष्टमर्जुनायेत्यत आह—अत इति । योगेन मुक्तिसत्त्वादयोगेन बन्धसत्त्वाधेत्यर्थः । त्वमिति मुक्तिकाम इत्यर्थः ॥१२॥

सर्वेति । युक्त इत्यनेन पूर्वश्लोकस्य योगिपरत्वनिश्चयात्सन्न्यस्येत्यनेनास्य श्लोकस्य साङ्ख्यपरत्वनिश्चयाच्च साङ्ख्ययोगयोरुभयोरेकपुरुषानुष्ठेयत्वाद्वाह—यस्तु परमार्थदर्शी स इति । सर्वकर्माणि मनसा सन्न्यस्य वशीसन्, नैव कुर्वन् न कारयंश्च सन् नवद्वारे पुरे देहे सुखमास्ते । मनसेति न करणे तृतीया- कर्मत्यागं प्रति मनसोऽकरणत्वात् अत आह—विवेकबुद्ध्येति । मनश्शब्दोऽत्र सद्विकल्पविवेकज्ञानं लक्षणया बोधयतीति भावः । तच्च हेतौ तृतीयेति बोध्यम् । मनःपूर्वकत्वाद्वाक्कायचेष्टयोस्ताभ्यामपि मनस आयासो भवेदिति कृत्वा आह—त्यक्तवाङ्मनःकायचेष्ट इति । वाक्चेष्टा भाषणं, मनश्चेष्टा आलोचनं, कायचेष्टा गमनादिकम् ।

प्रसन्नं शान्तं चित्तं यस्य स प्रसन्नचित्तः आत्मनोऽन्यत्र- आत्मभिन्नेषु सर्वेषु बाह्येषु विषयेषु प्रयोजनं यस्य निवृत्तं स निवृत्तसर्वबाह्यप्रयोजनः । अथवा निवृत्तानि सर्वाणि बाह्यानि प्रयोजनानि यस्य स तथोक्तः- आत्मैकप्रयोजन इति यावत् ।

नव द्वाराणि यस्य तत् नवद्वारं तस्मिन् नवद्वारे, नवद्वाराण्याह—सप्तेति । आत्मनः पुरुषस्य शीर्षण्यानि शिरोगतानि उपलब्धिद्वाराणि शब्दादिज्ञानसाधनानि सप्त श्रोत्रे चक्षुषी नसे वदनं चेति, अर्वाक्स्रोतसी मूत्रपुरीषयोर्विसर्गार्थे, अर्थः प्रयोजनं कार्यं वा ययोस्ते द्वे द्वारे इति शेषः । मिलित्वा नवद्वाराणीति भावः ।

अर्वाग्द्वे मूत्रपुरीषविसर्गार्थे, तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थ-प्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं, तस्मिन् नवद्वारे पुरे देहे सर्वं कर्म सन्न्यस्य आस्ते ।

किं विशेषणेन? सर्वोऽपि देही सन्न्यास्यसन्न्यासी वा देह एवास्ते, तत्रानर्थकं विशेषण मिति, उच्यते—यस्त्वज्ञो देही देहेन्द्रियसङ्घातमात्रात्मदर्शी स सर्वो गेहे भूमावासने वा आस इति मन्यते नहि देहमात्रात्मदर्शिनो गेह इव देहे आस इति प्रत्ययस्सम्भवति, देहादि-सङ्घातव्यतिरिक्तात्मदर्शिनस्तु देहे आस इति प्रत्यय उपपद्यते—परकर्मणां च परस्मि न्नात्मन्यविद्ययाऽध्यारोपितानां विद्यया विवेकज्ञानेन मनसा सन्न्यास उपपद्यते— उत्पन्नविवेक

---

कथं शरीरस्य नवद्वारपुरत्वं, तद्धि पत्तनधर्म अत आह—पुरमिव पुरमिति गौणोऽयं प्रयोग । सिंहो माणवक इतिवत्पुरे देहे इति । यथा पुरस्य नवद्वारत्वं तथा देहस्यापीति साम्यं स्फुटम् ।

कोऽस्य देहपत्तनस्य स्वामी अत आह—आत्मेति । आत्मा एक एव स्वामी यस्य तत् आत्मैकस्वामिकं । ननु पुरे पौरास्सन्ति, अत्र देहे तु के पुनः पौरस्थानीया अत आह—तदर्थेत्यादि । तस्मै आत्मने इदं तदर्थं प्रयोजनं येषां तैस्तदर्थप्रयोजनैः अनेकेषां फलानां विज्ञानस्य अनेकफलस्य विविधज्ञानस्येति वा उत्पादकैः । इन्द्रियमनोबुद्धय विषयाश्च तैरेव पौरैरधिष्ठितम् ।

ननु देहे सर्वं कर्म सन्न्यस्यास्ते इति विशेषणेन विशेषवचनेन किम् ? इति शङ्कते—किमिति । कुतो विशेषणस्य वैयर्थ्यमत आह—सर्व इति । यथा सन्न्यासी देहे आस्ते, तथा ऽसन्न्यास्यपि देहे एवास्ते तत्रैवसति देहे इति विशेषणमनर्थकमिति प्रश्नः ।

उत्तरमाह—यस्त्विति । कोसावज्ञोऽत्र आह—देहेति । देहेन्द्रियसङ्घातरूपमेवात्मानं पश्यति, ननु तद्भिन्नं यस्सोऽयमज्ञः । आसे तिष्ठामि । कुतस्तथा मन्यते अत आह—नहीति । यो देह-मेवात्मानं मन्यते सहि यत्र देह आस्ते तत्रैवाहमास इति मन्यते देहस्यैवात्मत्वात् । देहश्च भूम्यादिषु वर्तते न तु देहे अधाराधेयभावस्य द्विनिष्ठत्वेन एकस्यैव देहस्य आधारत्वमाधेयत्वं च न सम्भवतीति । तस्मात्प्राज्ञ एव देहे आस इति मन्यते न त्वज्ञः । ततश्च न सर्वसाधारण्येन देहिनो देहे आसनमिति कृत्वा अज्ञव्यावृत्त्यर्थं अज्ञाभिमतभूम्याद्यासनव्यावृत्त्यर्थं वा विशेषणस्यावश्यकत्वान्न वैयर्थ्यशङ्का सन्यासश्च ज्ञान्येकाश्रय इति युक्तं सन्न्यासिनो देहे आसनमिति भावः ।

ननु त्यागस्य प्रसक्तिपूर्वकत्वादात्मनि कर्मणां प्रसक्तेरेवाभावात्कथं सन्न्यस्येत्युक्तमत आह—परकर्मणामिति । देहेन्द्रियकर्माणि परकर्माणि तान्यविद्ययाऽऽत्मन्यारोपितानीत्यज्ञानादात्मनि कर्म-प्रसङ्गः । अतो विद्यया तत्सन्न्यासोपपत्तिः । केयं विद्येत्यत आह—विवेकज्ञानेनेति । आत्मानात्म-विवेकज्ञानेनेत्यर्थः । ननु मनसा सन्न्यस्येति मूले उक्तमत आह—मनसेति । मनश्शब्दस्य विद्ये-त्येवार्थ इति भावः ।

ज्ञानस्य सर्वकर्मसन्न्यासिनोपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलशेषसंस्कारानुवृत्त्या देहएव विशेपविज्ञानोत्पत्तेर्देह एवास्त इत्यस्यैव विशेषणफलं- विद्वदविद्वत्प्रत्यय-भेदापेक्षत्वात् ।

यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि सन्न्यस्यति, तथापि कृत-सन्न्यासस्यात्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याह—नैव कुर्वन् स्वयं च नच कार्यकरणानि कारयन् क्रियासु नं प्रवर्तयन् ।

---

ननु यस्तत्त्ववित्तस्य कथमतत्त्वविद इव देहे स्थितिरुपपद्यते- प्रत्युत देहत्यागाद्ब्रह्मणि स्थिति-रेवोचितेरयत आह—उत्पन्नेति । यथाऽनुत्पन्नविवेकः पुरुषः यावत्प्रारब्धावसानं देहमत्यजन्नेव गेहे आस्ते तथा विवेक्यपि प्रारब्धफलशेषसंस्कारानुवृत्त्या देहे एवास्ते । प्रारब्धं कर्मविशेषः तत्फलं शरीर-भोगादिः तस्य शेषः तस्य संस्कारः तस्यानुवृत्तिः तया यावत्प्रारब्धावसानं विवेक्यपि देहे आस्ते इत्यर्थः ।

यद्वा ननु य आत्मवित्स हि सर्वत्र वर्तते, सर्वं चात्मनि तस्मिन्वर्तत इति कृत्वा आत्मवि-त्सुमान् देहे एवास इति नैव मन्येत, किंतु सर्वत्रास इत्येव मन्येत इत्यत आह—उत्पन्नेति । याव-त्प्रारब्धावसानं विवेक्यपि देहे आस इति मन्यत इत्यर्थः । सर्वकर्मसन्न्यासिनोपि प्रारब्धफलशेष-संस्कारानुवृत्त्या देह एवासनं सम्भवतीति शेष इत्यन्वयः ।

हेत्वन्तरमाह—देह एवेति । स्थूलसूक्ष्मकारणात्मना देहस्त्रिविधः- तत्र सूक्ष्मदेहस्य प्रधानाङ्गं मनः, तस्मिन्मनोमये देहेएव विशेषविज्ञानस्योत्पत्तेर्हेतोर्देह एवास्त इत्युक्तं, विवेकी अन्तर्मुखत्वा-न्मनस्येवात्मानमनुसन्धत्त इति मनस्येवास्त इति भावः ।

यद्वा श्वादिदेहेषु विशेषविज्ञानाभावान्मनुष्यदेहे एव तत्सद्भावाद्विशेषविज्ञानोत्पत्तिहेतावस्मिन् देहे वर्तमानोहं तत्त्वविदासमिति कृत्वा देह एवास इति तत्त्वविन्मन्यत इत्यर्थः ।

अथवा संस्कारानुवृत्त्या हेतुना देह एव विशेषविज्ञानस्य अवस्थानविषयज्ञानस्योत्पत्तेर्हेतो-रित्येकएव हेतुर्विदुषो देह आसनस्य । फलसत्त्वे हेतुमाह—विद्वदिति । विदुषो देह आस इति प्रत्ययः, अविदुषस्तु भूम्यादावास इति प्रत्यय इति विवेकः ।

एतावता श्लोकस्य पादत्रयं व्याख्यातमथ तुरीयपादं व्याख्यातुमाक्षेपसङ्गतिमाह—यद्यपीति । अविद्ययाऽऽत्मन्यध्यस्तानां कर्मणां सन्न्यासो विद्ययोपपद्यत इत्युक्तं, स सन्न्यासो न कर्मणां परित्याग-रूपः, किंतु नात्मनि कर्माणि सन्ति देहेन्द्रियादिसङ्घात एवेत्यनुसन्धानमेव- विद्यया सन्न्यस्येत्युक्त-त्वात् । ततश्च देहाद्याश्रयदर्शनादिकर्मपरत्वात्तत्कर्तृत्वमात्मनि समवैति-- आत्मसमवेतस्यैव देहेन्द्रिय-सङ्घातस्य कर्मदर्शनात् । तथा अन्तर्यामिण आत्मनस्सङ्घातप्रेरकत्वात्कारकत्वमप्यात्मनि समवैति देहादीनां पारतन्त्र्यदर्शनात् । तस्मादात्मा स्वयमकर्तापि देहादिभिः कर्म करोति, अथवा कारयतीति कृत्वा कथं सन्न्यासिनः कर्माभाव इत्यत आह भगवान्नैव कुर्वन्न कारयन्निति तीत्यर्थः ।

स्वयं कुर्वन्तीति । देहादिभिः करणैरात्मा न कर्म करोति । देहादिभिः प्रयोज्यकर्तृभिर्वा

सर्वांङ्गे मूत्रपुरीषविसर्गार्थं, तैर्द्वारैर्नवद्वारं पुरमुच्यते शरीरं पुरमिव पुरमात्मैकस्वामिकं तदर्थ-प्रयोजनैश्चेन्द्रियमनोबुद्धिविषयैरनेकफलविज्ञानस्योत्पादकैः पौरैरिवाधिष्ठितं, तस्मिन् नवद्वारे पुरे देहे सर्वं कर्म सन्न्यस्य आस्ते ।

किं विशेषणेन? सर्वोऽपि देही सन्न्यास्यसन्न्यासी वा देह एवास्ते, तत्रानर्थकं विशेषण-मिति, उच्यते—यस्त्वज्ञो देही देहेन्द्रियसङ्घातमात्रात्मदर्शी स सर्वो गेहे भूमावासने वा आस इति मन्यते- नहि देहमात्रात्मदर्शिनो गेह इव देहे आस इति प्रत्ययस्सम्भवति, देहादि-सङ्घातव्यतिरिक्तात्मदर्शिनस्तु देहे आस इति प्रत्यय उपपद्यते—परकर्मणां च परस्मि-न्नात्मन्यविद्ययाध्यारोपितानां विद्यया विवेकज्ञानेन मनसा सन्न्यास उपपद्यते— उत्पन्नविवेक-

---

कथं शरीरस्य नवद्वारपुरत्वं, तद्धि पत्तनधर्म. अत आह—पुरमिव पुरमिति गौणोऽयं प्रयोग. । सिंहो माणवक इतिवत्पुरे देहे इति । यथा पुरस्य नवद्वारत्वं तथा देहस्यापीति साम्यं स्फुटम् ।

कोऽस्य देहपत्तनस्य स्वामी अत आह—आत्मेति । आत्मा एक एव स्वामी यस्य तत् आत्मैकस्वामिकं । ननु पुरे पौरास्सन्ति, अत्र देहे तु के पुन पौरस्थानीया अत आह—तदर्थेत्यादि । तस्मै आत्मने इदं तदर्थं प्रयोजनं येषा तैस्तदर्थप्रयोजनै अनेकेषा फलाना विज्ञानस्य अनेकफलस्य विविधज्ञानस्येति वा उत्पादकै । इन्द्रियमनोबुद्धय विषयाश्च तैरेव पौरैरधिष्ठितम् ।

ननु देहे सर्वं कर्म सन्न्यस्यास्ते इति विशेषणेन विशेषवचनेन किम् ? इति शङ्कते—किमिति । कुतो विशेषणस्य वैयर्थ्यमत आह—सर्व इति । यथा सन्न्यासी देहे आस्ते, तथा ऽसन्न्यास्यपि देहे एवास्ते- तत्रैवंसति देहे इति विशेषणमनर्थकमिति प्रश्न ।

उत्तरमाह—यस्त्विति । कोऽसावज्ञोऽत्र आह—देहेति । देहेन्द्रियसङ्घातरूपमेवात्मानं पश्यति, नतु तद्भिन्नं यस्सोऽयमज्ञ । आसे तिष्ठामि । कुतस्तथा मन्यते अत आह—नहीति । यो देह-मेवात्मानं मन्यते सहि यत्र देह आस्ते तत्रैवाहमास इति मन्यते देहस्यैवात्मत्वात् । देहश्च भूम्यादिषु वर्तते न तु देहे- अधाराधेयभावस्य द्विनिष्ठत्वेन एकस्यैव देहस्य आधारत्वमाधेयत्वं च न सम्भवतीति । तस्मात्प्राज्ञ एव देहे आस इति मन्यते न त्वज्ञ । ततश्च न सर्वसाधारण्येन देहिनो देहे आसनमिति कृत्वा अज्ञव्यावृत्त्यर्थं अज्ञाभिमतभूम्याद्यासनव्यावृत्त्यर्थं वा विशेषणस्यावश्यकत्वान्न वैयर्थ्यशङ्का सन्न्यासश्च ज्ञान्येवाश्रय इति युक्तं- सन्न्यासिनो देहे आसनमिति भाव ।

ननु त्यागस्य प्रसक्तिपूर्वकत्वादात्मनि कर्मणां प्रसक्तेरेवाभावात्कथं सन्न्यस्येत्युक्तमत आह—परकर्मणामिति । देहेन्द्रियकर्माणि परकर्माणि तान्यविद्ययाऽऽत्मन्यारोपितानीत्यज्ञानादात्मनि कर्म-प्रसङ्ग । अतो विद्यया तत्सन्न्यासोपपत्ति । केयं विद्येत्यत आह—विवेकज्ञानेनेति । आत्मानात्म-विवेकज्ञानेनेत्यर्थ । ननु मनसा सन्न्यस्येति मूले उक्तमत आह—मनसेति । मनश्शब्दस्य विवे-कस्यैवार्थ इति भाव· ।

ज्ञानस्य सर्वकर्मसन्न्यासिनोपि गेह इव देह एव नवद्वारे पुरे आसनं प्रारब्धफलशेषसंस्कारानुवृत्त्या देहएव विशेषविज्ञानोत्पत्तेर्देह एवास्त इत्यस्त्येव विशेषणफलं- विद्वदविद्वत्प्रत्ययभेदापेक्षत्वात् ।

यद्यपि कार्यकरणकर्माण्यविद्ययात्मन्यध्यारोपितानि सन्न्यस्यति, तथापि कृतसन्न्यासस्यात्मसमवायि तु कर्तृत्वं कारयितृत्वं च स्यादित्याशङ्क्याह—नैव कुर्वन् स्वयं च नच कार्यकरणानि कारयन् क्रियासु न प्रवर्तयन् ।

---

ननु यस्तत्त्ववित्तस्य कथमतत्त्वविद इव देहे स्थितिरुपपद्यते- प्रत्युत देहत्यागाद्ब्रह्मणि स्थितिरेवोचितेत्यत आह—उत्पन्नेति । यथाऽनुत्पन्नविवेकः पुरुषः यावत्प्रारब्धावसानं देहमत्यजन्नेव गेहे आस्ते तथा विवेक्यपि प्रारब्धफलशेषसंस्कारानुवृत्त्या देहे एवास्ते । प्रारब्धं कर्मविशेषः तत्फलं शरीरभोगादिः तस्य शेषः तस्य संस्कारः तस्यानुवृत्तिः तया यावत्प्रारब्धावसानं विवेक्यपि देहे आस्ते इत्यर्थः ।

यद्वा ननु य आत्मवित्स हि सर्वत्र वर्तते, सर्वं चात्मनि तस्मिन्वर्तन इति कृत्वा आत्मविद्वान् देहे एवास इति नैव मन्येत, किंतु सर्वत्रास इत्येव मन्येत इत्यत आह—उत्पन्नेति । यावत्प्रारब्धावसानं विवेक्यपि देहे आस इति मन्यत इत्यर्थः । सर्वकर्मसन्न्यासिनोपि प्रारब्धफलशेषसंस्कारानुवृत्त्या देह एवासनं सम्भवतीति शेष इत्यन्वयः ।

हेत्वन्तरमाह—देह एवेति । स्थूलसूक्ष्मकारणात्मना देहस्त्रिविधः- तत्र सूक्ष्मदेहस्य प्रधानाङ्गं मनः, तस्मिन्मनोमये देहेएव विशेषविज्ञानस्योत्पत्तेर्हेतोर्देह एवास्त इत्युक्तं, विवेकी अन्तर्मुखत्वान्मनस्येवात्मानमनुमन्यत इति मनस्येवास्त इति भावः ।

यद्वा श्वादिदेहेषु विशेषविज्ञानाभावान्मनुष्यदेहे एव तत्सद्भावाद्विशेषविज्ञानोत्पत्तिहेतावस्मिन् देहे वर्तमानोहं तत्त्वविदासमिति कृत्वा देह एवास इति तत्त्वविन्मन्यत इत्यर्थः ।

अथवा संस्कारानुवृत्त्या हेतुना देह एव विशेषविज्ञानस्य अवस्थानविषयज्ञानस्योत्पत्तेर्हेतोरित्येकएव हेतुर्विदुषो देह आसनस्य । फलसत्त्वे हेतुमाह —विद्वदिति । विदुषो देह आस इति प्रत्ययः, अविदुषस्तु भूम्यादावास इति प्रत्यय इति विवेकः ।

एतावता श्लोकस्य पादत्रयं व्याख्यातमथ तुरीयपादं व्याख्यातुमाक्षेपसङ्गतिमाह—यद्यपीति । अविद्ययाऽऽत्मन्यध्यस्तानां कर्मणां सन्न्यासो विद्ययोपपद्यत इत्युक्तं, स सन्न्यासो न कर्मणां परित्यागरूपः, किंतु नात्मनि कर्माणि सन्ति देहेन्द्रियादिसद्भाव एवेत्यनुसन्धानमेव- विद्यया सन्न्यस्येत्युक्तत्वात् । ततश्च देहाद्याश्रयदर्शनादिकर्मपरत्वात्कर्तृत्वमात्मनि समवैति- आत्मसमवेतस्यैव देहेन्द्रियसङ्घातस्य कर्मदर्शनात् । तथा अन्तर्यामिण आत्मनस्सङ्घातप्रेरकत्वात्कारकत्वमप्यात्मनि समवैति देहादीनां पारतन्त्र्यदर्शनात् । तस्मादात्मा स्वयमकर्तापि देहादिभि कर्म करोति, अथवा कारयतीति कृत्वा कथं सन्न्यासिनः कर्माभाव इत्यत आह भगवान्नैव कुर्वन् कारयन्नितीत्यर्थः ।

स्वयं कुर्वन्नीति । देहादिभिः करणैरात्मा न कर्म करोति । देहादिभिः प्रयोज्यकर्तृभिर्वा

किं यत्तत्कर्तृत्वं कारयितृत्वं च देहिनः स्वात्मसमवायिसत्सन्न्यासान्न भवति यथा गच्छतो गतिः, किं वा स्वत एवात्मनो नास्तीति ? अत्रोच्यते—नास्त्यात्मनः स्वतः कर्तृत्वं कारयितृत्वं चोक्तं 'ह्यविकार्योऽयमुच्यते, शरीरस्थोपि कौन्तेय न करोति न लिप्यत' इति, 'ध्यायतीव लेलायतीवे'ति च श्रुतेः ॥१३॥

न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ।
न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥१४॥

किंच, नेति । न कर्तृत्वं स्वयं कुर्विति, नापि कर्माणि रथघटप्रासादादीनि ईप्सिततमानि लोकस्य सृजति उत्पादयति प्रभुरात्मा, नापि रथादि कृतवतस्तत्फलेन संयोगं कर्मफलसंयोगमुत्पादयति । यदि किंचिदपि स्वयं न करोति न कारयति च देही-कस्तर्हि कुर्वन् कारयंश्च प्रवर्तत इत्युच्यते—स्वभावस्तु स्वो भावः स्वभावः अविद्यालक्षणा प्रकृतिर्माया प्रवर्तते- 'दैवी ह्येषा गुणमयी'ति वक्ष्यमाणा ॥१४॥

---

न कर्म कारयतीत्यर्थः । न कर्ता नापि कारक आत्मेति यावत् । विद्यया सर्वकर्मसन्न्यासादिति भावः । अत्र शङ्कते—किमिति । गच्छतो गतिरिव देहिनस्स्वात्मसमवायिसद्यत्कर्तृत्वं कारयितृत्वं चास्ति, तत्सन्न्यासान्न भवतीति किमित्यन्वयः । आत्मसमवेतयोः कर्तृत्वकारकत्वयोः किं सन्न्यासान्निवृत्तिः ? उत आत्मनि कर्तृत्वकारकत्वयोस्समवेतत्वमेव नास्तीति ? आद्ये- पृथिव्यां समवायसम्बन्धेन वर्तमानस्य गन्धस्य यथा पृथिवीनाशं विना न नाशः, तथा आत्मसमवेतस्य कर्तृत्वादेरात्मनाशं विना न नाशः, तथा च विद्यया सन्न्यासेन वा नात्मसमवेतयोः कर्तृत्वकारकत्वयोर्निवृत्तिरुपपद्यते ।

ततो द्वितीयमाश्रित्योत्तरमाह—अत्रोच्यत इति, स्वत इति । समवायेनेत्यर्थः । नतु भ्रान्त्यैवेति भावः । कुतो नास्तीत्यत आह—अविकार्य इति । अविकार्ये आत्मनि कर्तृत्वादिविकारायोगादिति भावः । गीतावाक्ये प्रमाणत्वेनोपन्यस्य श्रुतिमुपन्यस्यति—ध्यायतीवेति । बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव प्रतिभाति, बुद्धौ चलन्त्यामात्मा लेलायति चलतीव इति । तस्माद्गच्छति पुरुषे गतिरिव आत्मनि कर्तृत्वादिर्न समवैतीत्युपपद्यते कर्माभावस्सन्न्यासिनः ।

यत्तु रामानुजः—कर्माणि देहे सन्न्यस्येति, तद्देहाविनाशिनमिति श्लोकभाष्ये भाष्यकारैरेव प्रत्याख्यातम् । सम्पूर्वस्य न्यासस्य त्यागार्थकत्वेन निक्षेपार्थकत्वायोगादित्यादिना ॥१३॥

नेति । प्रभुः लोकस्य कर्तृत्वं न सृजति, कर्माणि न सृजति, कर्मफलसंयोगं न सृजति, स्वभावस्तु प्रवर्तते- प्रभुरीश्वर आत्मा- ईश्वरस्यैवात्मत्वात् । लोको देहेन्द्रियादिसङ्घातः लोक्यते दृश्यते ज्ञायत इति लोक इति व्युत्पत्तेः । कर्तृत्वं न सृजति नोत्पादयति, त्वमिदं कुर्विति लोकं न प्रवर्तयति कर्मस्वित्यर्थः । लोकेन न कारयतीति यावत् । नैव कुर्वन्न कारयन्नित्यस्यैवार्थस्य सुबोधत्वाय भङ्ग्यन्तरेणोपपादनमिदमिति न पुनरुक्तिः । प्रवर्तते कुर्वन् कारयंश्च सन्निति शेषः । लोकस्य कर्तृत्वादिकं सृजन् सृजति वा- स्वभावस्यैवं प्रवृत्तत्वे प्रमाणमाह—दैवीति । 'दैवी ह्येषा गुणमयी मम माया

नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ।
अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥१५॥

परमार्थतस्तु, नेति । नादत्ते न गृह्णाति भक्तस्य कस्यचिदपि पापं नचैवादत्ते, सुकृतं

दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति सप्तमाध्याये वक्ष्यते । अथवा स्वभावस्य मायात्वे प्रमाणमाह—दैवीति । देवस्य विष्णोरीश्वरस्यात्मनः स्वभावः दैवीति- वक्ष्यमाणत्वादित्यर्थः ।

अत्र स्वभावः वासनेति रामानुजः, तत्तुच्छम्—असङ्गस्यात्मनः प्रकृतिसंसर्गस्यैवासम्भवेन तत्कृतदेहाद्यात्माभिमानजनितवासनाया दूरापास्तत्वात् । निर्धर्मकपरमानन्दबोधस्वरूपे आत्मनि देहाद्यात्माभिमानस्य तत्कृतवासनाया वा स्थातुमयुक्तत्वात् इति ॥१४॥

नादत्त इति । स्वभावस्तु प्रवर्तते इति मायिकस्य कार्यस्योक्तत्वादाह—परमार्थतस्त्विति । तुशब्दो वैलक्षण्यार्थः । न पुनः स्वभावत इति तदर्थः । विभुः कस्यचित्पापं नादत्ते, कस्यचित्सुकृतं च नैवादत्ते, अज्ञानेन ज्ञानमावृत तेन जन्तवो मुह्यन्ति ।

यो हि ब्रह्महत्यादिमहापातकापनुत्तये जन्मान्तरसञ्चितपापापनुत्तये वा भगवति भक्तिं तनोति तस्य भक्तस्य पाप विभुरीश्वर आत्मा नादत्ते, यश्चेश्वरार्पणबुद्ध्या यज्ञदानजपादिकर्माणि करोति तस्य यज्ञादिकर्मजन्यं सुकृतमपि नादत्ते न स्वीकरोति - असङ्गस्यात्मनः पुण्यपापसम्बन्धाभावात् । सति तु पुण्यपापसम्बन्धे धर्माधर्मवत्त्वेनेश्वरत्वस्यैव व्याघातात् इत्याह—नादत्ते न गृह्णातीत्यादि मयुक्तं दत्तं समर्पितमिति यावत् ।

नच भक्ता ईश्वराय विष्णवे शिवायान्याय दैवताय वा सुकृतादिकं समर्पयन्ति, न त्वात्मन इति वाच्यं, 'आकाशात्पतितं तोयं यथा गच्छति सागरम् । सर्वदेवनमस्कारः केशवं प्रति गच्छती'ति स्मरणाच्छिवादिदेवतान्तरसमर्पितमपि सुकृतादिकमात्मानमेव प्राप्नोति ।

नच केशवमिति विष्णुपर्यायदर्शनात् शिवादिदेवतान्तरसमर्पितस्य विष्णुगामित्वमेव, न त्वात्मगामित्वमिति वाच्यं, विष्णोरेवात्मत्वात् । नच विष्णुरपि शिवादिवदनात्मैवेति वाच्यं, शिवादेरनात्मत्वस्यैवासिद्धेः । नच त्र्यक्षत्वादिधर्मविशिष्टानां शिवादीनां कथमात्मत्वमिति वाच्यं, चतुर्भुजत्वादिधर्मविशिष्टविष्ण्वादावपीद चोद्यं समानम् । नन्वेवं शिवविष्ण्वादयः सर्वेऽप्यनात्मान एवेति वाच्यं, देहबुद्ध्या अनात्मत्वेऽपि अन्तर्यामिबुद्ध्या आत्मत्वात् । तस्माच्छिवादिबुद्ध्या समर्पितमपि सर्वं शिवादिदेहस्थितात्मसमर्पितमेव भवति । यस्तु शिवादिदेहस्थित आत्मा स एव भक्तदेहस्थितोऽपीति युक्तमुक्तमात्मने समर्पयन्तीति । अत एवाकाशात्पतितमिति स्मृतिश्च सङ्गच्छते, कथमन्यथा देहान्तरसमर्पितं वस्तु देहान्तरगामि भवेत्, येन शिवाद्यर्पितं वस्तु विष्ण्वर्पितं भवतीत्युच्येत ।

नच केशवपदं चतुर्भुजत्वादिविशिष्टविग्रहविशेषपरमिति वाच्यं, क आत्मा को ब्रह्मात्मेति कोशात् ईश· प्रभु वाति गच्छति जानातीति व· वातेर्डः द्रष्टेत्यर्थः । कश्चासावीशः केशः केशश्चासौ वश्च केशव इति व्युत्पत्त्या आत्मपरत्वात्केशवशब्दस्य । नच योगाद्रूढिर्बलीयसीति यौगिकाद्योगरूढोऽर्थ एव बलवानिति वाच्यं, बलवत्त्वेऽपि तस्यार्थस्येहानन्वयेनोपेक्ष्यत्वात् ।

भक्तैः प्रयुक्तं विभु । किमर्थं तर्हि भक्तैः पूजादिलक्षण यागदानहोमादि सुकृतं प्रयुज्यत इत्याह—अज्ञानेनावृत ज्ञान विवेकज्ञान तेन मुह्यन्ति करोमि कारयामि भोक्ष्ये भोजयामी त्येत्र मोह गच्छन्त्यविवेकिनस्संसारिणो जन्तवः ॥१५॥

ननु यद्ययमात्मा नादत्ते कस्यचित्पापं नचैव सुकृतं तर्हि ईश्वरार्पणमस्त्विति कथं स्वानुष्ठित यागादिसुकृतस्येश्वरे प्रयोगो भक्तानाम् ? कथं चेश्वरस्य पूजादिकमिति शङ्कते—किमर्थमिति । प्रयुज्यते समर्प्यते । अज्ञानमविद्या न तु ज्ञानाभाव - तस्यावरणत्वायोगात् । आवरण हि भावकार्य- यथा घटाद्यावरण तम भावरूप तद्वत् । न च तमोपि तेजोभाव एवेति वाच्य, तमसि तम इत्येव सर्वे प्रत्येति, नतु तेजोभाव इति कृत्वा सर्वलोकव्यवहारविरोधात् । आवृत नाशिनमित्यर्थ । अथवा ज्ञान बुद्धिरित्यर्थ । आवृत छादित मलेन दर्पणमिवेति भाव । तेन ज्ञानस्याज्ञानावृतत्वेन हेतुना करोमि अह पूजादिकमिति शेष । कारयामि अह पूजादिक पुत्रादिनेति शेष । भोक्ष्ये अह- मन्नादिकमिति शेष । भोजयामि अहमन्नादिकमतिथ्यादिनेति शेष ।

अत्र मत्त ईश्वरोऽन्योस्ति, स मत्पाप नाशयति, मया दत्तमल्पमपि सुकृतं गृहीत्वा मम बहु फल दास्यतीत्याकारकोपि मोहो ज्ञेय । एतन्मोहप्रयुक्तत्वादेव कर्मणा कर्तृत्वस्य कारयितृत्वस्य च ईश्वरादात्मनि भेदभ्रमे सत्येव कर्ताह कारकोह भोक्ताह फलदाता त्वीश्वर इत्यादिभ्रमसम्भवात् । तस्मादात्मानात्मविवेकशून्या एवैते य ईश्वरार्थमपि कर्माण्यनुतिष्ठन्तीत्याह—अविवेकिन इति । अत एवैते जन्ममरणादिलक्षण ससार प्राप्नुवन्तीत्याह—ससारिण इति । जायन्ते पुन पुनरुत्पद्यन्ते अविवेकवशादिति जन्तव इति व्युत्पत्तेरिति भाव ।

यत्तु रामानुजः—नादत्ते नापनुदति अज्ञानेन प्राचीनकर्मणास्य ज्ञानमावृत संकुचितं तेना- ज्ञानेनेति, तत्तुच्छम्—आदानस्य अपनोदनाभेदानौचित्यात् आदानापनोदनयोर्भिन्नक्रियात्वात् । आदत्त इत्यस्यापनोदनार्थकत्वस्य व्याकरणकोशादिविरुद्धत्वात् आत्मज्ञानस्य सर्वपुण्यपापतूलाग्नित्वस्य ज्ञानाग्नि- दग्धकर्माणमित्यनेनोक्तत्वादात्मनस्सुखदु खापनोदनसम्भवाच्च । तथा पुत्रादे पाप दु ख न नादत्त इत्य प्ययुक्तम्— पुत्रादेरात्मत्वटात्मनि च पापाद्ययोगात् । यदि पुत्रादिसङ्घात इति मतं, तर्हि तस्य सङ्घातस्य आत्मसम्बन्धित्वमेव नास्तीति कथमुक्तं स्वसम्बन्धितयाभिमतस्य पुत्रादेरिति ।

ननु सङ्घातो न स्वसम्बन्धी, किंतु तथाभिमत इतिचेत्तदपि नयुज्यते- स्वप्ने निर्विशेषे आत्म- न्यभिमानायोगात् । यस्तु ममायं पुत्रोहमस्य पितेत्यभिमन्यते, सहि सङ्घात एव । नच सङ्घातस्या- चेतनस्य कथमभिमान इति, वाच्य, तत्र चिदाभाससत्त्वात् कथमन्यथा अन्त करणस्य केवलस्य सङ्क ल्पादिव्यापार उपपद्येत ? स एवं पुत्रादिक स्वसम्बन्धिन मन्यते स पुत्रादेर्दु खं यथाशक्त्यपनुदत्येवेति कथमुक्तं नापनुदतीति ।

तथा रावणादिर्देहादिसङ्घातो रामादे प्रतिकूलस्य देहादिसङ्घातस्य भार्यापहारादिना सुखमप- नुनोदैवेति कथमुक्त प्रतिकूलतयाभिमतस्य सुखं नापनुदतीति । तथा अज्ञानशब्दस्य कर्मार्थकत्वमप्यनुप-

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥१६॥

ज्ञानेनेति । ज्ञानेन तु येनाज्ञानेनावृता मुह्यन्ति जन्तवस्तदज्ञानं येषां जन्तूनां विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवति, तेषां जन्तूनामादित्यवद्यथादित्यः समस्तं वस्तुजातमवभासयति, तद्वत् ज्ञानं ज्ञेयं वस्तु सर्वं प्रकाशयति- तत्परं परमार्थतत्त्वम् ॥१६॥

पन्नमज्ञानकर्मणोः कार्यकारणभावेन भेदात् । यदि ज्ञानविरोधिकर्मोज्ञानशब्देन विवक्षितं तर्हि, मूलकर्ता कर्मणेत्येव ब्रूयान्न त्वज्ञानेनेति ।

कर्मणो ज्ञानावरणत्वं चानुपपन्नमद्रव्यात्वात्कर्मणः, आवरणस्य च द्रव्यकार्यत्वात् । ननु कर्मणा ज्ञानस्यावरणं नाम कर्मणा हेतुना ज्ञानस्य संकोच इत्यर्थः इति चेन्मैवमपि—ज्ञानावरणरूपेण कर्मणेति त्वयोच्यमानत्वात्- नहि कर्मणो ज्ञानसंकोचन स्वरूपं, किंतु गुण एव । नच कर्मापि गुण एवेति वाच्यं, गुणकर्मणोर्भेदात् । नच पुण्यापुण्यसंस्काररूपमिदं कर्म गुण एवेति वाच्यं, तादृशस्य गुणस्य संस्काररूपत्वेन ज्ञानावरणरूपत्वाभावात् ।

किंच न कर्मणो ज्ञानविरोधित्वमपि युक्तं- कर्मणो ज्ञानोपायत्वात् । नच यद्ज्ञानविरोधि कर्म तदेवेह गृह्यत इति वाच्यं, अज्ञानशब्दस्य ज्ञानविरोधिवस्तुमात्रोपस्थापनक्षमत्वेन ज्ञानविरोधिवस्तुविशेषाबोधकत्वात्- सति ज्ञानविरोधिनया प्रत्यक्षे अज्ञाने मायाख्ये तद्विहायान्यार्थबोधनस्यासम्भवात् । नह्यसुरशब्दो राक्षसान्विहायान्यान्बोधयितुमीष्टे । तस्मात् नञो विरोधार्थमभ्युपेत्य न ज्ञानमज्ञानं ज्ञानविरोधीत्यर्थस्य वचनेपि तादृशमज्ञानं मायैव भवितुमर्हति- तस्या एव तथात्वात् । नहि कर्म वा अन्यद्वा एकान्तेन ज्ञानविरोधि- यज्ञादिकर्मणां गुरुशास्त्रादिद्वैतस्य च ज्ञानोपायत्वेन ज्ञानाविरोधदर्शनात् । तथा तेनेत्यस्य प्रकृतवाक्यार्थपरामर्शि न्याय्यं विहाय अज्ञानेनेत्यर्थकरणं चान्याय्यं, अज्ञानं ज्ञानावरणद्वारैव मोहयति, नतु साक्षादिति कृत्वा अज्ञानेन मुह्यन्तीति वचनं पुनरयुक्तम् । इति ॥१५॥

ज्ञानेनेति । येषां तु तदात्मनोऽज्ञानं ज्ञानेन नाशितं, यद्वा येषां तु तदज्ञानमात्मनो ज्ञानेन नाशितं, अथवा येषां तु तदात्मनोऽज्ञानमात्मनो ज्ञानेन नाशितम् । तेषां ज्ञानमादित्यवत्तत्परं प्रकाशयति । आत्मनः स्वस्याज्ञानं स्वस्वरूपावरकमज्ञानमित्यर्थः । स्वविवेकज्ञानावरकमिति वा । ज्ञानेन विद्यया आत्मविषयज्ञानेनेत्यर्थः । नाशितम् । द्वितीययोजनायां तु- येषां तत्पूर्वोक्तमज्ञानं येन ज्ञानमावृतं तदित्यर्थः । आत्मनो ज्ञानेन अहं ब्रह्मास्मीत्याकारकस्वस्वरूपज्ञानेन आत्मविषयज्ञानेनेति यावत् । नाशितम् । तृतीययोजनायां तु आत्मस्वरूपावरकमज्ञानमात्मस्वरूपज्ञानेन नाशितमिति आत्मविषयज्ञानेनात्मविषयाज्ञानं नाशितमिति चार्थः ।

भाष्ये—तृतीययोजनानुसारेणैवात्मशब्दस्यावृत्तिमभिप्रेत्योक्तं विवेकज्ञानेनात्मविषयेण नाशितमात्मनो भवतीति । तदज्ञानमिति कर्तृपदं पूर्वमेवोक्तम् । आत्मनस्तदज्ञानमित्यन्वयः । ज्ञायतेनेनेति ज्ञानम् । ज्ञेयं वस्तु चात्मैव । सर्वमिति । साकल्येनेत्यर्थः । अथवा ज्ञेयं सर्वं वस्तु ममैव—

सर्वस्य ब्रह्मत्वात् । नच कथं ब्रह्मण परमार्थतत्त्वस्य दृष्टुर्ज्ञेयत्वमिति वाच्यं, अध्यस्तत्वाद्ज्ञेयत्वस्य तस्मिन्, परमार्थतस्तु ज्ञातृज्ञानतत्करणानामभावात्कथं ज्ञेयत्वं ब्रह्मण स्यात् ।

ननु ज्ञानं तत्प्रकाशयतीत्ययुक्तम्—प्रकाशात्मकस्य ज्ञानस्य प्रकाशकत्वायोगात्, आत्मनैव सर्वस्य भास्यमानत्वाच्च 'तस्य भासा सर्वमिदं विभाती'ति श्रुते । 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यात्मन एव ज्ञानस्वरूपत्वाच्चेतिचेत्, मैवम्—सर्वावभासकचैतन्यस्वरूपमप्यात्मानमविद्याऽऽवृत्य वर्तते । अविद्यात्मनो रविरोधादात्मनैवाविद्यया भास्यमानत्वाच्च । तस्याश्चाविद्याया विद्यैव विरोधिनी सैव विद्येह ज्ञानशब्देन विवक्षिता सा तु बुद्धिवृत्तिरूपा, नतु प्रकाशरूपा । इयं बुद्धिवृत्तिर्विद्या आत्मावरकाविद्या नाशयति । तत आत्मप्रकाशो जायत इति ब्रह्मवस्तुप्रकाशकत्वमुक्तं विद्याया ।

तस्माच्चैतन्यभासितयैव बुद्धिवृत्त्या ज्ञानेन करणेन आत्मावरकाज्ञाननाशनद्वारा आत्मा प्रकाश्यते, घटावरकाज्ञाननाशनद्वारा घट इवेति न कश्चिद्दोष । एतेन बुद्धिवृत्तिरूपं ज्ञानं न प्रकाशात्मकं, किंतु प्रकाशकरणात्मकमेव प्रकाशात्मकं ज्ञानं तु चैतन्यमेवेति सिद्धम् ।

यत्तु रामानुजः—तेषामिति विनष्टाज्ञानानां बहुत्वाभिधानादात्मस्वरूपबहुत्वमादित्यदृष्टान्तेन च प्रभाप्रभवतोरिव ज्ञातृज्ञानयोरवस्थानमात्मनो ज्ञानधर्मवत्त्वं च प्रतिपादितमिति, तत्तुच्छम्—'तेन मुह्यन्ति जन्तव' इति पूर्वश्लोकोक्तजन्तूनामिह तत्पदेन परामर्शात् । जन्तवश्च भूतानि प्राणिन एव, न त्वात्मा आत्मनो जन्तुत्वासम्भवात् । अजोह्यात्मा । जायत इति जनिमास्तु जन्तु । यदि जन्तव इत्यनेनापि आत्मान एव लक्षणया विवक्षिता इत्युच्येत, तर्हि महदनिष्ट- यदात्मनस्स्वप्रभस्यापि मोह ! मोहादयो ह्यन्त करणधर्मा ।

अथ ह्यन्त करणतादात्म्याभिमानादात्मनो मोह इत्युच्यते, तर्हीमे जन्तव न निरुपाधिकात्मना, किंतु सोपाधिका एवेति सिद्धम् । अन्त करणाद्युपाधिकृतमात्मबहुत्वमस्माकमिष्टमेव । एवं सोपाधिकानां जन्तूनामात्मना मोह इत्युक्त्वा तेषामिति तच्छब्दपरामृष्टानां तज्जन्तूनां कथमकस्मा दुच्यते निरुपाधिकत्वम् ?

नच विनष्टाज्ञानानामुपाधिगन्धाभाव इति वाच्यं, अज्ञानविनाशमात्रेण तत्कार्यभूतान्त करणा द्युपाधिस्वरूपनाशाभावात् । नच वस्तुत उपाध्यभावादज्ञानादेवोपाधिसम्भवादज्ञाननाशे कुत उपाध्यनाश इति वाच्यं, अस्य वचनस्य परमार्थविषयत्वाभावात् । परमार्थतोऽज्ञानस्यैवाभावात्कथमुच्येताज्ञानं ज्ञानेन नाशितमिति । 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधक । न मुमुक्षुर्न वै मुक्त इत्येष परमार्थ'तेति कैवल्योपनिषछ्रुते । तस्मादुपाधिभेदादेव तेषामिति बहुत्वसिद्धे आत्मबहुत्वकल्पनं गौरवादप्रमाणत्वाच्चोपेक्ष्यम् ।

तथा निर्धर्मके आत्मनि ज्ञानधर्मकल्पनमप्ययुक्तं वृत्तिरूपं हीदं ज्ञानमन्त करणधर्म, न त्वात्म धर्म । अन्त करणक्षये वृत्त्यदर्शनात् । नच तस्य भासेति श्रुत्या ज्ञानस्यात्मधर्मत्वमिति वाच्यं राहोश्शिर इति वदौपचारिकभेदवादात् । आत्मस्वरूपभूतज्ञानेनेति तदर्थात् । यद्यात्मा ज्ञानवान् स्यात्तर्हि ज्ञानमान्तरं स्यादात्मन, पृथिव्या गन्ध इव । तच्चानिष्टमात्मनस्सर्वान्तरत्वविरोधात् ।

तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ।
गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥१७॥

तद्बुद्धय इति । यत्परं ज्ञानप्रकाशितं तस्मिन्ब्रह्मणि गता बुद्धिर्येषां ते तद्बुद्धयः- तदात्मानः तदेव परं ब्रह्मात्मा येषां ते तदात्मानः- तन्निष्ठा निष्ठा अभिनिवेशस्तात्पर्यं सर्वाणि कर्माणि सन्न्यस्य तस्मिन् ब्रह्मण्येवावस्थानं येषां ते तन्निष्ठाः तत्परायणाश्च तदेव परमयनं परा गतिर्येषां भवति ते तत्परायणाः- केवलात्मरता इत्यर्थः । ते गच्छन्ति एवंविधा अपुनरावृत्तिं अपुनर्देहसम्बन्धं- ज्ञाननिर्धूतकल्मषाः यथोक्तेन ज्ञानेन निर्धूतो निर्हृतो नाशितः कल्मषः पापादिसंसरणकारणदोषो येषां ते ज्ञाननिर्धूतकल्मषा यतय इत्यर्थः ॥१७॥

---

ननु नात्मा सर्वान्तरः, किं तु परमात्मैव- 'य आत्मानमन्तरो यमय'तीति श्रुतेरिति वाच्यं, आत्मानं प्रमातारं यः कूटस्थ आत्मान्तरो यमयतीति तच्छ्रुत्यर्थात् । कूटस्थस्य साक्षिण आत्मनोऽन्यस्यादर्शनात्साक्षीचेतेति श्रुत्या परमात्मन एव साक्षित्ववचनाच्च नात्मनोन्य. परमात्मा, किं त्वात्मैव । न च 'कूटस्थोऽक्षर उच्यते, उत्तमः पुरुषस्त्वन्य' इति वक्ष्यत इहैव कूटस्थात्परमात्मभेद इति वाच्यं, तत्र कूटस्थशब्देन मायाया विवक्षितत्वात् । उत्तमपुरुषस्य कूटस्थादन्यत्वे अकूटस्थत्वस्य सिद्धत्वाद्वयनिष्टमनित्यत्वापत्तेः ।

न च ज्ञाता आत्मा कथं ज्ञानं स्यादपि तु ज्ञानवानेवेति वाच्यं, त्वयाप्यात्मनो ज्ञानस्वरूपस्याभ्युपगतत्वात् । निर्विशेषज्ञानस्य तार्किकादिभिरप्यभ्युपगतत्वात् । न च निर्विशेषज्ञाने कथं ज्ञातृत्वविशेष इति वाच्यं, ज्ञातृत्वस्यापि कल्पितत्वात् । अथवा ज्ञातृत्वस्य ज्ञानानन्यत्वादिति ॥१६॥

तद्बुद्धय इति । तच्छब्दार्थमाह—यदिति । ज्ञानप्रकाशितं परमार्थतत्त्वं ब्रह्म तच्छब्दार्थः । प्रकृतत्वादिति भावः । तस्मिन् बुद्धिर्येषां ते तद्बुद्धय इति समासः । गतेति तु फलितार्थकथनं स्थितेत्यर्थः ।

ननु तदात्मान इति व्यर्थमज्ञस्यापि तदात्मत्वाव्यभिचारादिति चेन्नैवम्—यद्यप्यज्ञोपि तदात्मैव, तथापि स तथा न जानाति, प्राज्ञस्तु जानाति, अत उच्यते तदात्मेति प्राज्ञः । अहं ब्रह्मेत्यात्मज्ञानवन्त इत्यर्थः । ब्रह्मण्येवेति । न कर्मादावित्येवकारार्थः । परा गतिः परमं प्राप्यं अपुनरावृत्तिं पुनरावृत्त्यभावं मोक्षमिति यावत् । पुनरावृत्तिशब्दार्थमाह—पुनर्देहसम्बन्धमिति । यतीनां सन्न्यासिनामेव ब्रह्मनिष्ठादिसद्भावादाह—यतय इति ।

ननु तद्बुद्धय इत्यादीनि चत्वारि विशेषणानि- एकार्थबोधकत्वात्पुनरुक्तानीति चेन्नैवम्—सूक्ष्मदृष्ट्या अर्थभेदसत्त्वात् । तथाहि- तद्बुद्धय इत्यनेन परोक्ष्येण ब्रह्मज्ञानं, तदात्मान इत्यनेन ब्रह्मात्मापरोक्षज्ञानं, तन्निष्ठा इत्यनेन नैरन्तर्येण तत्स्वरूपानुसन्धानं, तत्परायणा इत्यनेन तद्वनिश्चाभिहितमिति ॥१७॥

विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि ।
शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥१८॥

येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिताः कथं, तत्त्वं पश्यन्तीत्युच्यते—विद्येति । विद्याविनयसम्पन्ने विद्या च विनयश्च विद्याविनयौ विद्या आत्मनो बोधः, विनयः उपशमः ताभ्यां विद्याविनयाभ्यां सम्पन्नो विद्वान् विनीतश्च यो ब्राह्मणः तस्मिन् ब्राह्मणे- गवि हस्तिनि शुनि चैव श्वपाके च पण्डिताः समदर्शिनः- विद्याविनयसम्पन्ने उत्तमे संस्कारवति ब्राह्मणे सात्त्विके, मध्यमायां च राजस्यां गवि संस्काररहितायां, अधमे च केवलतामसे हस्त्यादौ, सत्त्वादिगुणैस्तज्जैश्च संस्कारैस्तथा राजसैः तथा तामसैश्च संस्कारैरत्यन्तमेवासंस्पृष्टं सममेकमविक्रियं तद्ब्रह्म द्रष्टुं शील येषां ते पण्डिताः समदर्शिनः ॥१८॥

इहैव तैर्जितस्सर्गो येषां साम्ये स्थितं मनः ।
निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः ॥१९॥

नन्वभोज्यान्नास्ते दोषवन्तः 'समासमाभ्यां विषमसमे पूजातः' इति स्मृतेः । न तर्हि ते

---

विद्येति । कथमिति कथ ते पण्डिता इत्याक्षेप. । समाधानमाह—तत्त्व पश्यन्तीति । यतस्ते ज्ञाननाशिताज्ञानास्तत्त्वं पश्यन्ति, ततः पण्डिता इत्यर्थः । अयमेवार्थः श्लोकेनानेनोच्यत इत्याह—उच्यत इति । यद्वा ते पण्डितास्तत्त्वं कथं पश्यन्तीति प्रश्न । तेषां पण्डितानां कीदृशं तत्त्वज्ञानमित्यर्थः । तस्योत्तरमनेनोच्यत इत्याह—उच्यत इति । पण्डिता ब्राह्मणादिषु समदर्शिनो भवन्तीत्यन्वय. ।

नन्वव्युत्पन्नस्य बालस्याप्यस्ति ब्राह्मणादिषु समदर्शित्वं, ब्राह्मणत्वादिविवेकग्रहणसामर्थ्याभावादत आह- समं ब्रह्म द्रष्टुं शीलं येषां ते समदर्शिन इति । ननु ब्राह्मणादीनां वैषम्ये प्रत्यक्षसिद्धे कथं तत्र ब्रह्मणस्समत्वमत आह—सत्त्वादीति । सत्त्वादिगुणभेदात्तत्कृतसंस्कारभेदाच्च ब्राह्मणादिभेदो युक्तः । आत्मनस्तु तद्गुणादिस्पर्शाभावाद्भेदो न युक्त इत्यर्थः । कुतः स्पर्शाभावोत आह—अविक्रियमिति । सति तु गुणादिस्पर्शे आत्मनो विक्रिया स्यात्तच्चानिष्ट'मविकार्योऽयमुच्यत' इत्यादिप्रमाणविरोधादिति भावः ।

नन्वविक्रियस्याप्यात्मन प्रतिशरीरं भिन्नत्वात्कथं समत्वमत आह—एकमिति । आत्मनश्शरीरभेदप्रयुक्तो भेदो नास्ति घटादिप्रयुक्तो भेद आकाशस्येवेति भावः । एवमेकत्वादेवास्याविक्रियत्वमन्यथा सति सजातीयादिभेदे विकारित्वमेव स्याद्वृक्षादिवत्- भेदो हि विकारः- तस्मात्सर्वत्राप्येकमद्वितीयं ब्रह्मात्मानं पश्यति स एव पण्डितो न त्वन्य । तच्च समदर्शित्वमेव पण्डितस्य तत्त्वज्ञानं न त्वन्यदिति ॥१८॥

इहेति । ननु यदि ब्राह्मणादिषु सर्वत्राप्यात्मन एकत्वेन समबुद्धिः पण्डितस्य तर्हि ब्राह्मणादिभिस्समं गवादयोपि पूज्या एव- एवंविधस्यान्नभोजनं दोषावहं स्मृतिविरोधादित्याक्षिपति—

दोषवन्तः कथं, इहेति । इहैव जीवद्भिरेव तैस्समदर्शिभिः पण्डितैः जितः वशीकृतः सर्गो जन्म येषां साम्ये सर्वभूतेषु ब्रह्मणः समभावे स्थितं निश्चलीभूतं मनः अन्तःकरणं निर्दोषं हि, यद्यपि दोषवत्सु श्वपाकादिषु मूढैस्तद्दोषैर्दोषवदिव विभाव्यते, तथापि तद्दोषैरस्पृष्टमिति निर्दोषं दोषवर्जितं, हि यस्मात् नापि स्वगुणभेदभिन्नं निर्गुणत्वाच्चैतन्यस्य- वक्ष्यति च भगवान्

नन्विति । अभोज्यं भोक्तुमयोग्यमन्नं येषां ते अभोज्यान्नाः यद्वान्नं शिष्टानामभोज्यं ते इत्यर्थः । अत एव ते पण्डिताः दोषवन्तः भवन्तीति शेषः ।

समेतिस्मृतेरयमर्थः—कुलशीलविद्यादिभिस्तुल्यस्समः तद्विपरीतोऽसमः विषमसमशब्दौ भावपरौ समाहारद्वन्द्वः । पूजातः पूजयामासनपरिचरणादिकायां विषमसमे समेन सह पूजायां विषमे वैषम्ये असमेन च समे साम्ये क्रियमाणे तदन्नमभोज्यं इति मिताक्षरा । 'नित्यमभोज्य'मिति सूत्रादभोज्यपदस्यानुवृत्तिः तत्प्रकरणस्थत्वादेतत्सूत्रस्य । अन्नलाभस्तु पशुपालेतिसूत्रगतभोज्यान्नशब्दगतान्नशब्दानुवृत्तेरिति बोध्यम् ।

सूत्रस्यायमाशय - यज्ञादौ विदुषां पूजासमये वेदविदो वेदविद्भिस्समं षडङ्गविद्षडङ्गविद्भिस्समं ब्रह्मविदो ब्रह्मविद्भिस्समं शास्त्रविदश्शास्त्रविद्भिश्च समं पूजनीया यजमानेन । तत्र यदि वेदविद्षडङ्गविद्भिस्समं ब्रह्मविदो वेदविद्भिस्समं षडङ्गविदश्शास्त्रविद्भिस्समं पूज्यन्ते, तर्हि तद्यज्ञाद्यन्नमभोज्यं, समेन वेदविदा समं वेदविदो पूजितत्वादसमेन षडङ्गविदा समं वेदविदः पूजितत्वाच्च यजमानस्य सदोषत्वाद्द्वारा तदन्नमपि सदोषमेवेत्यभोज्यमिति । तस्मात्पण्डितेन न ब्राह्मणादिषु गवादिषु च समदृष्टिः कर्तव्येति पूर्वपक्षः ।

परिहरति—नेति । तथेत्यर्थः । ते ब्राह्मणादिषु समदर्शिनः पण्डिताः दोषवन्तो न भवन्ति । तत्र हेतुमाक्षिपति—कथमिति । प्रकृतश्लोकेन हेतुरुच्यत इत्याह—इहेति । येषां मनः साम्ये स्थितं तैरिहैव सर्गो जितः- इहैव जीवद्दशायामेवेत्यर्थः । तदेवाह—जीवद्भिरेवेति । किं तत्साम्यमत आह—सर्वभूतेषु ब्रह्मणस्समभाव इति । सर्वभूतेष्वप्येकमेव ब्रह्मास्तीत्येवंरूपे ब्रह्मसाम्ये इत्यर्थः । स्थितं दृढमवस्थितमित्यर्थः । ननु कस्माद्ब्रह्मसाम्यविद्भिरिहैव सर्गो जित इत्यत आह—निर्दोषमिति । हि यस्माद्ब्रह्म निर्दोषं समं चेति ।

ननु कुतो निर्दोषत्वं ब्रह्मणः सदोषश्वादिशरीरावस्थितस्य तत्संसर्गाद्दोषवत्त्वेन भाव्यत्वाच्चण्डालगृहस्थितब्राह्मणवदित्यत आह —यद्यपीति । तद्दोषैः श्वपाकादिदोषैः विभाव्यते ज्ञायते । श्वपाकादिसङ्घातस्य तदन्तर्गतात्मनश्चाविवेकान्मूढाश्श्वपाकादीनात्मत्वेन प्रतिपद्य दुष्ट आत्मेति मन्यन्त इत्यर्थः । तथापीति । एवं मूढैर्विभावितत्वेपीत्यर्थः । तद्दोषैरस्पृष्टमिति घटादिदोषैराकाश इवेति भावः । अध्यस्तसर्पदोषै रज्जुवदिति वा । असङ्गस्य पुरुषस्य वस्तुतश्शरीरसङ्गस्यैवाभावात्कुतः पुनस्तद्दोषसङ्ग इति तत्त्वम् ।

ननु निर्दोषमपि ब्रह्म समं न भवति-- गुणवत्त्वात्प्रकृतिवदित्यत आह—नापीति । यथा

इच्छादीनां क्षेत्रधर्मत्वमनादित्वान्निर्गुणत्वादिति च नाप्यन्त्या विशेषा आत्मनो भेदकास्सन्ति-प्रतिशरीरं तेषां सत्त्वे प्रमाणानुपपत्तेः। ततस्सम ब्रह्मैक च तस्माद्ब्रह्मण्येव ते स्थिताः, तस्मान्न दोषगन्धमात्रमपि तान् स्पृशति देहादिसङ्घातात्मदर्शनाभिमानाभावात्तेषाम् ।

देहादिसङ्घातात्मदर्शनाभिमानवद्विषय तु तत् सूत्र 'समासमाभ्यां विषमसमे पूजात'

प्रकृति स्वकीयसत्त्वादिगुणभेदाद्बहुविधा न तथा ब्रह्म बहुविधं सगुणत्वाभावात्। चैतन्यात्मकस्य ब्रह्मणो निर्गुणत्वे गीतामेव प्रमाणयति—वक्ष्यति चेति। ब्रह्मणोऽनादित्वान्निर्गुणत्वाच्च इच्छादीना न ब्रह्मधर्मत्व, किंतु क्षेत्रधर्मत्वमेवेति त्रयोदशाध्याये— 'अनादिमत्पर ब्रह्म न सत्तन्नासदुच्यते। असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्। इच्छा द्वेषस्सुख दुःखं सङ्घातश्चेतना धृतिः ॥ एतत्क्षेत्रं समासेन सविकारमुदाहृत मिति वक्ष्यमाणत्वादिति भाव ।

ननु मास्त्वात्मनो गुणतो भेद, विशेषतस्तु भेदो भविष्यति, नित्यद्रव्यवृत्तयो व्यावर्तका विशेषा यै परमाण्वादीना मिथो भेदस्सिद्ध्यति इति शङ्कायां किमिमे विशेषा आत्मनि स्थित्वा आत्मानं भेदयन्ति? उत शरीरे स्थित्वेति विकल्प्य तत्र निर्विशेषे आत्मनि विशेषस्थित्ययोगाच्छरीरे स्थित्वेति प्राप्ते परिहरति—नापीति। आत्मनो भेदका विशेषा प्रतिशरीरं शरीरेशरीरे न सन्ति शरीरस्यानित्यत्वाद्विशेषाणा नित्यद्रव्यवृत्तित्वाच्चेति भाव ।

ननु पृथिव्यादिपरमाण्वारब्धे शरीरे तन्त्वारब्धे पटे तन्तव इव परमाणवस्सन्ति, ते हि नित्यद्रव्याणि- अतस्तत्र विशेषास्सन्त्येवेत्यत आह--तेषां सत्त्वे प्रमाणाभावादिति। वेदान्तमते ब्रह्मभिन्नस्य सर्वस्याप्यनित्यत्वेन नित्यद्रव्यस्यैवाभावात्, गुणवत्त्वस्य द्रव्यलक्षणत्वेन निर्गुणे ब्रह्मणि द्रव्यत्वाभावाच्च, नित्यद्रव्यवृत्तित्वे सति व्यावर्तकत्वरूपलक्षणस्यासम्भवादप्रमाणैव विशेषकल्पना इति। विशेषाणामभ्युपगमेपि शरीराश्रयाणा तद्गतपरमाण्वाश्रयाणां वा तेषां शरीरभेदकत्वं परमाणुभेदकत्वं वा स्यात्, न त्वात्मभेदकत्वमन्यगतविशेषस्यान्यभेदकत्वासम्भवात्। नहि घटगता पृथिवीपरमाणुगता वा विशेषा आकाशं भेदयितुं क्षमन्ते इति तस्मान्नापि विशेषकृतोप्यात्मभेद ।

तत इति। आत्मभेदप्रयोजकाभावादित्यर्थ। सममिति। सर्वत्रैकरूपमित्यर्थ। कुतस्समत्वमाह—एकं चेति। सर्वत्राप्येकस्यैव ब्रह्मण स्थितत्वात्समत्वमित्यर्थ। श्लोकतुरीयपादं व्याख्याति—तस्मादिति। यस्मात्तेषा मन साम्ये स्थितं तस्मादित्यर्थ। यद्वा यस्मान्निर्दोषं समं ब्रह्म तस्मादित्यर्थ। ब्रह्मणो निर्दोषत्वादित्यर्थ। ब्रह्मण्येवेति नतु दोषवत्पिण्डे इत्यर्थ। तस्मादिति। ब्रह्मण्येव स्थितत्वाद्ब्रह्मणश्च निर्दोषत्वादित्यर्थ। गन्धो लेश। तान् पण्डितान् समदर्शिन कुतो न स्पृशतीत्यत आह— देहादीति। येषा देहादिसङ्घाते दोषवति आत्माभिमानो नास्ति तेषां कथं सङ्घातगतदोषस्पर्श इत्यर्थ ।

अथ सूत्रस्य गतिं दर्शयति—देहादीति। ये सङ्घातमात्मत्वेनाभिमन्यते तद्विषयं समासमाभ्यामिति सूत्रं, न त्वात्मविद्विषयम्। ननु कथमिदं ज्ञायतेऽत आह—पूजात इति। पूजाया विषये इत्युक्तत्वात्पूजायाश्च कर्मत्वात्कर्मविषयमेवेदं, नतु ज्ञानविषयमित्यर्थ ।

इति पूजाविषयत्वेन विशेषणाद्दृश्यते हि च ब्रह्मवित् षडङ्गविच्चतुर्वेदविदिति पूजादानादौ गुणविशेषसम्बन्धः कारणं, ब्रह्म तु सर्वगुणदोषसम्बन्धवर्जितमित्यतो ब्रह्मणि ते स्थिता इति युक्तं, कर्मविषयं च सत्वं समासमाभ्यामित्यादि । इदं तु सर्वकर्मसन्न्यासविषयं प्रस्तुतं सर्वकर्माणि मनसेत्यारभ्याध्यायपरिसमाप्तेः ॥१९॥

न प्रहृष्येत्प्रियं प्राप्य नो द्विजेत्प्राप्य चाप्रियम् ।
स्थिरबुद्धिरसम्मूढो ब्रह्मविद्ब्रह्मणि स्थितः ॥२०॥

यस्मान्निर्दोषं हि समं ब्रह्म आत्मा तस्मात्, नेति । न प्रहृष्येत् प्रहर्षं न कुर्यात्, प्रियमिष्टं प्राप्य नोद्विजेत्, प्राप्य चाप्रियं अनिष्टं लब्ध्वा, देहमात्रात्मदर्शिनां हि प्रियाप्रिये

ननु कर्मणि कथमस्योपयोगोऽत आह—दृश्यत इति । पूजादानादौ कर्मणि ब्रह्मवित् षडङ्गविच्चतुर्वेदविदित्येवं गुणविशेषसम्बन्धरूपं तारतम्यकारणं दृश्यते । हिः प्रसिद्धौ । पूजायां प्राप्तायां कः प्रथमं पूज्य इति शङ्कायां ब्रह्मविदादौ पूज्य इति ब्रह्मवित्त्वरूपगुणविशेषसम्बन्धाद्ब्रह्मवित्प्रथमं पूज्यते, पश्चात्तु वेदविदित्येवमित्यर्थः । यस्तु ब्रह्मनिष्ठः तस्य पूजाप्रसक्तिरेव नास्ति- तस्य निर्गुणे निर्दोषे च ब्रह्मण्येव स्थितत्वादित्याह—ब्रह्मत्विति । गौतमस्मृतिगीताश्लोकयोर्विभिन्नविषयत्वान्न विरोध इत्युपसंहरति—कर्मविषयं चेति ।

एतेन पण्डितस्य जनकादेरपि ज्ञानविषय एव ब्राह्मणगवादिसमदर्शित्वं, नतु पूजादिकर्मविषये इति लोकसंग्रहो दर्शितः । पूजादेरज्ञातविषयत्वादज्ञातेषु च गुणदोषतारतम्यसत्त्वात् । ज्ञानस्य त्वात्मविषयत्वादात्मनश्चैकत्वादिति । अतो ज्ञानविषयेण विद्याविनयेति श्लोकेन न कोपि स्मृत्यादिसिद्धस्य लोकधर्मस्य भङ्गः- ब्राह्मणे श्वपाकादिकं च समदृष्ट्या पूजयेदित्यनुक्तत्वात् । किंतु ब्राह्मणे श्वपाकादौ च वर्तमानमात्मानं समं पश्येदित्युक्तत्वात् ।

नचेदं समदर्शनं पूजोपयोगि, प्रत्युत सर्वद्वैतनिरासेन पूजानिर्मूलकमेव । सत्यां पूज्यपूजकपूजासाधनपूजारूपभेदबुद्धौ अद्वितीयब्रह्मबुद्धेरेवानुदयात्तदुदये सूर्योदये तमस इव भेदबुद्धेस्सर्वात्मना नाशाच्च । तस्माद्युक्तमुक्तं पण्डिता ब्राह्मणादिषु समदर्शिन इति । ननु समपूजका इत्ययुक्तमुक्तं, येनाशङ्क्येत स्मृत्यादिविरोध इति । आ अध्यायपरिसमाप्तेरिति छेदः । यावदध्यायसमाप्तीत्यर्थः ।

अत्र 'इहैव तैर्जितस्सर्ग' इत्येतज्जीवन्मुक्तिव्यवस्थापकं जीवद्भिरेव जन्मादिलक्षणसंसारो जित इति र्जीवतां संसारजयरूपमुक्तिप्रतिपादनात् आत्मसु ज्ञानैकाकारतया साम्यमेवानुसन्दधाना मुक्ता एवेत्यर्थ इति रामानुजः, संसारो जित इति मुक्तप्रायास्त इत्यर्थ इति वेदान्तदेशिकश्चार्याज्जीवन्मुक्तिमभ्युपगतवन्तावेव- गत्यभावात्, मूलस्यार्थान्तरपरिकल्पनेऽवकाशाभावाच्च । अतो योऽस्मीयां द्वैतिनां च जीवन्मुक्तिप्रतिक्षेपणो समीचीनो वादस्सोऽनेन पराहत एव गीताविरोधात्, स्वाभ्युपगमविरोधाच्चेति ज्ञेयम् ॥१९॥

नेति । स्थिरबुद्धिरसम्मूढो ब्रह्मणि स्थितो ब्रह्मवित् प्रियं प्राप्य न प्रहृष्येत्, अप्रियं प्राप्य

हर्षविषादौ कुर्वाते, न केवलात्मदर्शिनः- तस्य प्रियाप्रियप्राप्त्यसम्भवात् । किञ्च सर्वभूतेष्वेकः समो निर्दोष आत्मेति स्थिरा निर्विचिकित्सा बुद्धिर्यस्य स स्थिरबुद्धिः- असम्मूढः सम्मोहवर्जितश्च स्यात्- यथोक्तब्रह्मवित् ब्रह्मणि स्थितः अकर्मकृत्सर्वकर्मकृत्सन्न्यासीत्यर्थः ॥२०॥

बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम् ।
स ब्रह्मयोगयुक्तात्मा सुखमक्षयमश्नुते ॥२१॥

किञ्च ब्रह्मणि स्थितः, बाह्येति । बाह्यस्पर्शेषु बाह्याश्च ते स्पर्शाश्च बाह्यस्पर्शाः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयास्तेषु बाह्येषु स्पर्शेषु । असक्त आत्मान्तःकरणं यस्य सोयमसक्तात्मा विषयेषु प्रीतिवर्जितस्सन् विन्दति लभते आत्मनि यत्सुखं तद्विन्दतीत्येतत् । स ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगः समाधिर्ब्रह्मयोगस्तेन योगेन युक्तस्तस्मिन् व्यापृत आत्माऽन्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा । सुखमक्षयमश्नुते व्याप्नोति । तस्माद्बाह्यविषयप्रीतेः क्षणिकाया इन्द्रियाणि निवर्तयेत् आत्मन्यक्षयसुखार्थीत्यर्थः ॥२१॥

---

नोद्विजेत, यद्वा— ब्रह्मवित् प्रियं प्राप्य न हृष्येत, अप्रियं प्राप्य नोद्विजेत्, स्थिरबुद्धिरसम्मूढश्च स्यात्, एवंविधो ब्रह्मवित् ब्रह्मणि स्थित इत्युच्यत इत्यन्वयः ।

असम्भवादिति । 'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशतः' इति श्रुतेरिति भावः । निर्विचिकित्सा निस्संशया । सम्मोहः अनात्मस्वात्माभिमानः । ब्रह्मणि स्थितो ब्रह्मनिष्ठः । ननु कर्मनिष्ठ इत्याह— अकर्मकृदिति । कर्मकृन्न भवतीत्यकर्मकृत् । फलितार्थमाह— सर्वकर्मसन्न्यासीति ॥

बाह्येति । य बाह्यस्पर्शेष्वसक्तात्मा सन् आत्मनि सुखं विन्दति, ब्रह्मयोगयुक्तात्मा स अक्षयं सुखमश्नुते । आत्मनि सुखमित्यस्यार्थमाह— आत्मनि यत्सुखं तदिति । आत्मानन्दमित्यर्थः ।

ननु आत्मन एव सुखत्वात्कथमात्मनि सुखमित्युक्तमिति चेन्नैष दोषः । आनन्दं ब्रह्मणो विद्वानितिवद्भेदस्य कल्पितत्वात् । आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति तद्धर्माः । अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इत्युक्तत्वाच्च ।

ननु य आत्मसुखं विन्दति स आत्मैवेति कथमेकस्य आत्मनः प्राप्यप्राप्तृभाव इति चेत्, नैष दोषः । एक एवात्मा- सुखरूपत्वेन प्राप्य- अनुभवरूपत्वेन प्राप्ता चेति । यद्वा प्रमातृत्वेन प्राप्ता ब्रह्मत्वेन प्राप्यश्चेति । अथवा यदात्मनस्सुखस्वरूपेणावस्थानं तदेव सुखानुभव इतीह विवक्षितत्वान्न प्राप्यप्राप्तृभावप्रसक्तिः ।

आत्मनि सुखं विन्दतीत्यनेनात्मरतिरात्मक्रीड इति श्रुत्यर्थोऽभिप्रेतः । ब्रह्मयोग इति । ब्रह्म आत्मा योगश्चित्तसमाधानम् । अक्षयमिति । आत्मसुखस्याक्षयत्वादिति भावः । तस्मादिति । ब्रह्मानुसन्धानस्याक्षयसुखप्रदत्वादित्यर्थः । बाह्यविषयप्रीतेः शब्दाद्यनुभवजन्यसुखात् आत्मनि यदक्षयं सुखं तदर्थी पुरुषः । यः पुमान् ममाक्षयसुखलाभस्स्यादिति वाञ्छति स न बहिर्विषयेषु सज्जेत्, तत्र क्षणिकसुखमात्रत्वात्, किंतु आत्मस्वरूपानुसन्धान एव सज्जेत् तत्रैवाक्षयसुखसत्त्वात्- विषयाणां क्षणिकत्वात्तत्सुखमपि क्षणिकं नित्यत्वादात्मनस्तत्सुखं च नित्यमिति बोध्यम् ॥२१॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ।
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥२२॥

इतश्च निवर्तयेत्—य इति । ये हि यस्मात्संस्पर्शजाः विषयेन्द्रियसंस्पर्शेभ्यो जाताः भोगा भुक्तयो दुःखयोनय एव ते अविद्याकृतत्वाद्दृश्यन्ते हि । आध्यात्मिकादीनि दुःखानि तन्निमित्तान्येव यथेह लोके तथा परलोकेपीति गम्यते । एवशब्दान्न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा विषयमृगतृष्णिकाया इन्द्रियाणि निवर्तयेत् । न केवल दुःखयोनय एव आद्यन्तवन्तश्च आदिर्विषयेन्द्रियसंयोगो भोगानां, अन्तश्च तद्वियोग एव । अतः

ये हीति । हि ये भोगास्संस्पर्शजा ते दुःखयोनय एव, आद्यन्तवन्तश्च भवन्ति । तस्मात् हेकौन्तेय तेषु बुधो न रमते ।

संस्पर्शस्सम्बन्धः । कयोरित्यत आह—विषयेन्द्रियेति । विषयस्य शब्दादेरिन्द्रियस्य श्रोत्रादेश्च संस्पर्शा सम्बन्धा, भोगा भुक्तयोऽनुभवा इति यावत् । दुःखानां योनयः कारणानि दुःखयोनयः । अविद्याकृतत्वादिति भोगानामिति शेषः । अनात्मन्यात्माभिमानः अनात्मीये आत्मीयाभिमानश्च ह्यविद्येत्युच्यते । अविद्याकार्यत्वात्तत्र तदुपचारः ।

अहं शब्दं शृणोमि, ममायं शब्दः, ममेदं श्रोत्रमित्यादिभ्रमप्रयुक्तत्वाद्भोगा अविद्याकृता इत्युच्यन्ते । एतद्भोगवशादेवाध्यात्मिकादिदुःखप्राप्तिः- पुरुषाणां प्रतिकूलभोगस्य अनुकूलभोगाभावस्य च तापहेतुत्वात् । तन्निमित्तानीति भोगनिमित्तानीत्यर्थः । बहुव्रीहिः । ऐहलौकिकभोगस्य दुःखहेतुत्वानुभवेन पारलौकिकभोगस्यापि दुःखहेतुत्वमनुमीयत इत्याह—यथेति । पारलौकिको भोगो दुःखप्रदः विषयेन्द्रियसंस्पर्शजन्यभोगत्वात्, ऐहलौकिकभोगवदित्यनुमानम् ।

नच कथमनुमानमात्रेण रम्भासम्भोगादिस्वर्गसुखस्य दुःखहेतुत्वमिति वाच्यं, "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति शास्त्रात् क्षयिष्णुत्वदोषेण सातिशयित्वादिना च स्वर्गभोगोपि भयदुःखादिहेतुरेवेति ।

दुःखयोनय एवेत्यत्र एवकारस्यार्थमाह—एवशब्दादिति । न तु सुखयोनय इत्यर्थः । यद्वा, गम्यत एव शब्दादित्येकं वाक्यं - शब्दादागमात्प्रमाणादित्यर्थः । किमेवद्भ्रानस्य भोगा दुःखयोनय एवेत्याकारकस्य फलमत आह—इति बुद्ध्वेति । विषया एव मृगतृष्णिका तस्यास्सकाशात् यथा मृगतृष्णिकायामुदकं नास्ति तथा विषयेषु सुखं नास्तीति विषयेषु मृगतृष्णिकात्वरूपणम् ।

न केवलं दुःखयोनय एवेत्यनन्तरं किन्त्विति पूरणीयं, आद्यन्तौ एषां स्त इति आद्यन्तवन्तः विषयेन्द्रियसंयोगजन्यत्वाद्भोगानां विषयेन्द्रियसंयोग एवादिः । विषयेन्द्रियवियोगनाशत्वाद्भोगानां तद्वियोग एवान्तः । यथा चक्षुरिन्द्रियस्य कामिनीसम्बन्धे पुरुषस्य भोगः, तदसम्बन्धे भोगनाश इति ।

आद्यन्तवन्तः अनित्याः मध्यमक्षणभावित्वादित्यर्थः। हे कौन्तेय! न तेषु भोगेषु रमते बुधः विवेकी अवगतपरमार्थतत्त्वः। अत्यन्तं मूढानामेव हि विषयेषु रतिर्दृश्यते यथा पशुप्रभृतीनाम् ॥ ॥२२॥

शक्नोतीहैव यस्सोढुं प्राक्छरीरविमोक्षणात्।
कामक्रोधोद्भवं वेगं स युक्तस्स सुखी नरः ॥२३॥

अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवारश्चेति तत्परिहारे यत्नोऽधिकतरः कर्तव्य इत्याह- श्रीभगवान्—शक्नोतीति। शक्नोत्युत्सहते इहैव जीवन्नेव यस्सोढुं प्रसहितुं प्राक्पूर्वं शरीरविमोक्षणात् मरणात्, मरणसीमाकरणाज्जीवतोऽवश्यम्भावी हि कामक्रोधोद्भवो वेगः अनन्तनिमित्तवान् हि स इति यावन्मरणं तावन्न विस्रम्भणीय इत्यर्थः।

काम इन्द्रियगोचरप्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वा अनुभूते सुखहेतौ या तृष्णा स कामः, क्रोधश्चात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा यो विद्वेषः स क्रोधः, तौ कामक्रोधौ उद्भवौ यस्य वेगस्य स कामक्रोधोद्भवो वेगः रोमा-

---

अतः विषयेन्द्रियसंयोगवियोगप्रयुक्तजन्मनाशवत्त्वादित्यर्थः। सिद्धार्थमाह—अनित्या इति। तत्र हेतुमाह— मध्यमेति। विषयेन्द्रियसंयोगात्पूर्वक्षणे विषयेन्द्रियवियोगक्षणे च भोगा न सन्ति, किंतु विषयेन्द्रियसंयोगक्षण एवेत्यर्थः। एतेन विषयसुखस्य क्षणिकत्वं विवृतम्।

बुध इति। न तर्कादिशास्त्रवेत्तेत्याह—विवेकीति। आत्मानात्मविवेकवानित्यर्थः। सति विवेके किं भवतीत्यत आह— अवगतेति। आत्मैव परमार्थतत्त्वमन्यत्सर्वं मृषैवेति जानातीत्यर्थः। य एवं वेत्ति स कथं नित्यसुखमात्मानं विहाय विषये सुखे क्षणिके रज्येत? न कथमपीत्यर्थः।

ये तु विषयेषु रतास्ते अतीव मूढा एव, न त्वल्पज्ञा अपीत्याह—अत्यन्तेति। आत्मानात्मविवेकशून्यत्वमत्यन्तमूढत्वं, देहात्मभ्रमवत्त्वं वा। ननु ये विषयरतास्ते मूढा एवेत्यत्र को दृष्टान्त इत्यत आह—यथा पश्विति। प्रभृतिशब्दात्पक्षिसर्पादिग्रहणम्।

तस्माद्बुधेनात्मरतिनैव भाव्यम्। योऽनात्मरतस्सोऽबुध एव। इमे चात्मरतिविषयरती गृहस्थस्य दुष्करे। तस्य इन्द्रियदमनेऽनधिकारात्। अतस्सर्वकर्मसन्न्यास्येव बुधः, गृहस्थास्तु मूढा एव ॥२२॥

शक्नोतीति। य इहैव शरीरविमोक्षणात्प्राक् कामक्रोधोद्भवं वेगं सोढुं शक्नोति, स युक्तो नरः सुखी अयं चेति वक्ष्यमाणः कामक्रोधोद्भववेगरूप इत्यर्थः। ननु जीवन्नेवेत्यनेन मरणात्प्रागिति लब्धत्वात्पुनस्तद्वचनमनर्थकमत आह—मरणसीमाकरणादिति। अनन्तानि निमित्तानि उत्पत्तिकारणानि अस्य सन्तीति अनन्तनिमित्तवान्। हिः प्रसिद्धौ, तावन्मरणपर्यन्तमित्यर्थः। न विस्रम्भणीयः न विश्वसनीयः।

कामक्रोधयोः स्वरूपं दर्शयति—काम इत्यादिना। इन्द्रियगोचरप्राप्ते इन्द्रियाणां गोचरं

ञ्चनप्रहृष्टनेत्रवदनलिङ्गोन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः गात्रप्रकम्पप्रस्वेदसंदष्टोष्टपुटरक्तनेत्रादिलिङ्गः क्रोधोद्भवो वेगः तं कामक्रोधोद्भवं वेगं यः जीवन् सोढुं प्रसहितुं शक्नोति, स युक्तो योगी सुखी चेह लोके नरः ॥२३॥

योऽन्तस्सुखोऽन्तरारामस्तथाऽन्तर्ज्योतिरेव यः ।
स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥२४॥

कथं भूतश्च ब्रह्मणि स्थितो ब्रह्म प्राप्नोतीत्याह- श्रीभगवान्—य इति । यः अन्तरात्मनि सुखं यस्य सोन्तस्सुखः- तथान्तरेवात्मनि आराम आरमणमाक्रीडा यस्य सोन्तरारामः- तथा अन्तरेवात्मन्येव ज्योतिः प्रकाशो यस्य सोन्तर्ज्योतिरेव य ईदृशः स योगी ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं मोक्षं इह जीवन्नेव ब्रह्मभूतस्सन् अधिगच्छति प्राप्नोति ॥२४॥

---

विषयं प्राप्ते इन्द्रियगोचरतां प्राप्ते इत्यर्थः । इन्द्रियविषयभूते इति यावत् । सुखहेतौ अत एव इष्टे विषये स्त्रीपुत्रादौ या तृष्णा स कामो विधेयप्राधान्यात्स इति पुंलिङ्गनिर्देशः ।

सच विषयः त्रिविधः- श्रूयमाणः, स्मर्यमाणः, अनुभूतश्चेति । यथा देशान्तरस्थितां कामिनीं श्रुत्वा तत्र सकामो भवति पुरुषः । तामेव मनसि स्मृत्वा स्मृत्वा च, स्मरणमिह चिन्तनम् । तामेव सन्निहितामनुभूय तत्र सकामो भवतीति । सति वक्तरि श्रवणं तस्मिन्नसति तु स्मरणमिति विवेकः । श्रूयमाणस्मर्यमाणानुभूयमानान्यतमेष्टविषयविषया तृष्णा काम इत्युच्यत इति निष्कृष्टार्थः । तथा दृश्यमानश्रूयमाणस्मर्यमाणान्यतमानिष्टविषयविषयविद्वेषः क्रोधः । उद्भवत आभ्यामित्युद्भवौ उपादानभूताविस्यर्थः । कामक्रोधाभ्यामुद्भव उत्पत्तिर्यस्य स कामक्रोधोद्भव इत्यपि समासो वक्तुमुचितः । नेत्रे च वदनं च नेत्रवदनं प्रहृष्टं च तन्नेत्रवदनं च प्रहृष्टनेत्रवदनं रोमांचनं प्रहृष्टनेत्रवदनं च रोमाञ्चनप्रहृष्टनेत्रवदने लिङ्गे चिह्ने यस्य स रोमाञ्चनप्रहृष्टनेत्रवदनलिङ्गः- अन्तःकरणस्य प्रक्षोभः प्रकृष्टं चलनं विकार इति यावत्, तद्रूपः । गात्रप्रकम्पश्शरीरचलनं प्रस्वेदो घर्मजलोद्गमः सन्दष्टोष्टपुटौ रक्तनेत्रे एतदादीनि लिङ्गानि यस्य स तथोक्तः । युक्तो योगी चित्तसमाधानवानित्यर्थः । सुखी चेहेति चकारात्परलोकेपीत्यर्थः । अयं श्लोको न केवलं सन्न्यासिविषयः, किंतु योगिविषयोपि साङ्ख्ययोगयोर्द्वयोरपि श्रेयोमार्गत्वेन दर्शितवेगस्य तदुभयमार्गप्रतिपक्षित्वात् ॥२३॥

य इति । आक्रीडा विहार इति यावत् । ज्योतिर्दृष्टिरिति यावत् । अन्तरेवेत्येवकारान्न बहिर्विषयेष्वित्यर्थः । ब्रह्मनिर्वाणं ब्रह्मानन्दं ब्रह्मभूतः ब्रह्मतुल्य इति नार्थः, किंतु ब्रह्मैव भवन् इत्यर्थः । आत्मन एव ब्रह्मत्वादिति भावः ।

अत्र योगीत्यनेन कर्मयोगीति न भ्रमितव्यं- तस्यात्मरत्याद्यभावात् । किं त्वात्मनि चित्तसमाधानवान् सन्न्यास्येवेह योगी ॥२४॥

न्द्रियमनोबुद्धिः मननान्मुनिस्सन्न्यासी मोक्षपरायणः मोक्ष एव परमयनं परमा गतिर्यस्य सोयं मोक्षपरायणो मुनिर्भवेत्, विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधास्ते विगताः यस्मात् स विगतेच्छाभयक्रोधः य एवं वर्तते सदा सन्न्यासी मुक्तएव सः। न तस्य मोक्षायान्यः कर्तव्योऽस्ति ॥२८॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥२९॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे कर्मसन्न्यासयोगोनाम
पञ्चमोऽध्यायः ।

एवं समाहितचित्तेन किं विज्ञेयमित्युच्यते—भोक्तारमिति । भोक्तारं यज्ञानां तपसां

---

यद्वा यो मुनि यतेन्द्रियमनोबुद्धि मोक्षपरायण विगतेच्छाभयक्रोध सदा वर्तत इति शेष । स मुक्त एव ।

कथमस्य मुक्तत्वमत आह—न तस्येति । मोक्षसाधनान्तरानुष्ठानराहित्यमेवास्य मुक्तत्वमित्यर्थ । एतस्मिन् ध्यानयोगे कृते सति ज्ञानप्राप्तिद्वारा मोक्षस्य भविष्यत्वान्नान्यो मोक्षोपायोऽनुष्ठेय इति भाव ।

न चास्य योगिनो ज्ञानमनुष्ठेयमिति वाच्यं, ज्ञानस्यानुष्ठेयत्वाभावात् । नच श्रोतव्य इति ज्ञाने विधि श्रूयत इति वाच्यं, तस्य विधिच्छायावचनत्वात् । नच सुतरां ज्ञाने विध्यभावे विधिच्छायावचनमपि व्यर्थमिति वाच्यं, स्वाभाविकविषयप्रवृत्तिविमुखीकरणार्थत्वाद्विधिच्छायावचनस्य ।

ननु "ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिनां"मिति साङ्ख्यानां ज्ञानयोगो विहित इति चेत्तत्र ज्ञानयोगस्य सन्न्यासार्थकत्वात् ।

यद्वा ब्रह्मणि चित्तसमाधानार्थकत्वात्। उक्तं हि ब्रह्मसंस्थोऽमृतत्वमेतीति ब्रह्मसंस्थत्वं ज्ञानयोगात्मक सन्न्यासिनो मोक्षकारणमिति श्रुत्या ।

तस्माद्ध्यानयोगिनो मोक्षाय कर्तव्यो नास्त्येव । किंतु ज्ञातव्योस्ति- तदुत्तरश्लोकेन वक्ष्यते । नच ब्रह्मणि चित्तसमाधानं कर्तव्यमस्त्येवेति वाच्यं, तस्य ध्यानेनैव सिद्धत्वात् ।

नचैवं ध्यानयोगज्ञानयोगयोरेकत्वमिति वाच्य, ब्रह्मणि चित्तसमाधानरूपांशे एकत्वेपि यत्र चित्त समाहितं तद्ब्रह्मेति ज्ञान ध्यानयोगिनो नास्ति अन्यस्य त्वस्तीति वैलक्षण्यसत्त्वात् । अतएव समाहि०चित्तेन ब्रह्मैकमेव ज्ञातव्यमिति वक्ष्यत्यनन्तरश्लोकेन ॥२८॥

भोक्तारमिति । यज्ञतपसां भोक्तारं सर्वलोकमहेश्वरं सर्वभूतानां सुहृदं मां ज्ञात्वा योगीति शेष । शान्तिमृच्छति ।

च कर्तृरूपेण देवतारूपेण च सर्वलोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं सर्वलोकमहेश्वरं सुहृदं सर्वभूतानां सर्वप्राणिनां प्रत्युपकारनिरपेक्षतयोपकारिणं सर्वभूतानां हृदयेशयं सर्वकर्मफलाध्यक्षं सर्वप्रत्ययसाक्षिणं नारायणं मां ज्ञात्वा शान्तिं सर्वसंसारोपरतिमृच्छति प्राप्नोति ॥

इति परमहंसपरिव्राजकाचार्य गोविन्दभगवत्पादपूज्यशिष्य
श्रीमच्छङ्करभगवत्पादकृतौ गीताभाष्ये
पञ्चमोऽध्यायः ।

---

समाहितचित्तेनेति । पूर्वोक्तध्यानयोगिनेत्यर्थः । यज्ञानां तपसां च भोक्तारं, कथं भोक्तृत्वमत आह—कर्त्रिति । यो यज्ञानां तपसां च कर्ता स एव तत्फलमैहिकमामुष्मिकं च भुंक्ते इति कर्तुरेव भोक्तृत्वादाह—कर्तृरूपेणेति ।

यजमानेन तपस्विना च हविरादिना यः पूज्यते देवस्स तद्धविरादिकं भुंक्त इति देवानां भोक्तृत्वादाह—देवतारूपेणेति । महान्तमिति । यस्मादधिकः यस्य समानो वा नास्ति स महान् तन्निरुपाधिकमिति वा कथमस्य कर्तृदेवतात्मकत्वमत आह—सर्वभूतानां हृदये शयमिति । हृदये शेत इति हृदयेशयः तं शयवासवासिष्वकालात् । कथमस्य सर्वलोकेश्वरत्वमत आह—सर्वकर्मफलाध्यक्षमिति । सर्वेषां कर्मफलानामध्यक्षः प्रभुः तं, अयमेक एव पुंसां स्वस्वकर्मानुगुणं फलप्रदः, तत्रेन्द्रादीनां वृथैवाभिमानः वयं फलप्रदा इति । अस्माकं च वृथैव भ्रमः इन्द्रादयः फलदा इति च । एवं सर्वकर्मफलदत्वादेवायं सर्वलोकमहाप्रभुः । कथमस्य सर्वभूतसुहृत्त्वमत आह—सर्वप्रत्ययसाक्षिणमिति । सर्वेषां प्रत्ययानां बुद्धिवृत्तीनां साक्षिणं साक्षाद्द्रष्टारं प्रेरकमिति यावत् । अन्तर्यामिण एव साक्षित्वात् । अन्तः स्थित्वा तत्तदिन्द्रियद्वारा तत्तद्विषयानुभवमयमेव दिशति पुरुषस्येत्यर्थः । अत एवायं नारायण इत्याह—नारायणमिति । न रीयन्ते न क्षीयन्ते यावद्व्यवहारमिति नराः प्राणिनः साभासबुद्धिशब्दवाच्या जीवा इत्यर्थः । यद्वा न रीयन्त इत्यराः ते न भवन्तीति नाराः क्षयिष्णव इत्यर्थः । कार्यकरणसङ्घातात्मका जन्तव इति यावत् । तेषां समूहो नारं तदेवायनं स्थानं यस्य स नारायणः तदयति प्राप्नोति वा नारायणः तं सर्वभूतहृदयेशयमित्यर्थः । नराणां जीवनाभिमानि फलानि नाराणि तेषामयनं प्राप्तिर्यस्मात्तं नारायणं सर्वकर्मफलाध्यक्षमित्यर्थः । नारस्य अयनं प्राप्तिरस्मात्फलानां यस्मात्तं नारायणमिति वा । अर्थस्तु स एव । नराणां जीवानामिमे नाराः प्रत्ययाः तानयति वेत्तीति नारायणः तं सर्वप्रत्ययसाक्षिणमित्यर्थः । नारं जीवसमूहमयति वेत्तीति वा नारायणः तं सर्वजीवसाक्षिणमित्यर्थः । सर्वजीवसाक्षित्वादेव सर्वप्रत्ययसाक्षित्वं सिद्धं भवतीति बोध्यम् । मामिति । आत्मभूतमित्यर्थः । आत्मन एव नारायणत्वान्नारायणस्यैव कृष्णत्वाच्चेति भावः । अन्यथा नारायणस्यात्मभिन्नत्वे तद्ज्ञानेन

संसारोपरतिर्न स्यात्पुंसा- अन्यज्ञानेनान्यसंसारनिवृत्त्ययोगात्, भिन्नात्मज्ञानस्य प्रत्युत भयहेतुत्वात्- 'य उदरमन्तरं कुरुते अथ तस्य भयं भव'तीति श्रुते । शान्तिर्मोक्षमित्यर्थ - तस्यैव संसारोपरमरूपत्वात् । ऋच्छति ऋगताविति धातो प्राप्नेति ऋच्छादेश इति । एतेन ध्यानयोगिनोपि ब्रह्मात्मज्ञानादेव मोक्ष न तु स्वत इति सिद्धम् । अत एव "तमेवं विदित्वातिमृत्युमे"तीत्यादिश्रुतिविरोधो न गीताशास्त्रस्य । यत्तु रामानुजः—मा ज्ञात्वा मदाराधनरूप कर्मयोग इति सुखेन तत्र प्रवर्तत इत्यर्थ इति, तत्तुच्छम्—मूले मा ज्ञात्वा शान्तिमृच्छतीति ज्ञानशान्तिप्राप्त्योर्मध्ये क्रियानन्तरव्यवधानस्यानुक्तत्वात् । तत्कल्पनस्य चाप्रमाणत्वाद्दर्शितश्रुतिविरोधाच सर्वकर्माणि मनसेत्यारभ्य सन्न्यासस्यैव प्रस्तुतत्वेन कर्मयोगस्यात्राप्रस्तुतत्वाच, स्पर्शानित्यादिना च ध्यानयोगस्यैवोक्तत्वाच्च नात्र कर्मयोगस्यावकाश । नापि कर्मयोगफलभूतचित्तशुद्धिरूप्यज्ञानप्राप्त्यनन्तर पुन कर्मयोगस्य कर्तव्यत्वप्रसक्ति ।

इति येर्लकोण्डोपनामकरामकविकृतौ श्रीमद्भगवद्गीता-
शाङ्करभाष्यार्कप्रकाशे
पञ्चमोऽध्याय ।

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु-

# श्रीभगवद्गीतासु

## षष्ठाध्यायप्रारम्भः ।

अतीतानन्तराध्यायान्ते ध्यानयोगस्य सम्यग्दर्शनंप्रत्यन्तरङ्गस्य सूत्रभूताः श्लोकाः 'स्पर्शान् कृत्वा बहिर्बाह्यानित्यादय' उपदिष्टाः, तेषां वृत्तिस्थानीयोऽयं षष्ठोऽध्याय आरभ्यते। तत्र ध्यानयोगस्य बहिरङ्गं कर्मेति यावद्ध्यानयोगारोहणासमर्थः तावद्गृहस्थेन अधिकृतेन कर्तव्यं कर्मेत्यतः तत् स्तौति ।

ननु किमर्थं ध्यानयोगारोहणसीमाकरणं यावतानुष्ठेयमेव विहितं कर्म यावज्जीवं, न--'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यत' इति विशेषणादारूढस्य च शमेनैव सम्बन्धकरणात् । आरुरुक्षोरारूढस्य च शमः कर्म चोभयं कर्तव्यत्वेनाभिप्रेतं चेत् स्यात्तदा आरुरुक्षोरारूढस्येति शमकर्मविषयभेदेन विशेषणं विभागकरणं चानर्थकं स्यात् ।

---

'पञ्चमाध्यायानन्तरं षष्ठाध्यायकथने का वा सङ्गतिरिति शङ्कां निराकरिष्यमाणः वृत्तानुवादपुरस्सरमध्यायान्तरमवतारयति—अतीतेति । पञ्चमाध्यायान्ते आत्मज्ञानंप्रत्यन्तरङ्गसाधनस्य ध्यानयोगस्य सूत्रभूतास्श्लोकाः "स्पर्शान्कृत्वा बहिर्बाह्यान्" इत्यादयो उपदिष्टाः । तेषां विवरणस्थानीय एष षष्ठोऽध्यायः । तत्र प्रथमं तावद्यावद्ध्यानयोगारोहणासमर्थः गृहस्थः तेन अधिकृतेन ध्यानयोगबहिरङ्गसाधनं कर्म शास्त्रविहितमनुष्ठेयं, यदा तु ध्यानयोगारोहणसमर्थो भवति तदा कर्मोपरम इति भावः ।

एतेन—पञ्चमाध्यायानन्तरं षष्ठाध्यायकथने हेतुहेतुमद्भाव एव सङ्गतिरिति सूचितम् ।

ध्यानयोगारोहणसीमाकरणमिति । यावद्ध्यानयोगारोहणसामर्थ्यं तावदिति मर्यादाया विधानमित्यर्थः । यावता निश्चयेनेत्यर्थः । विहितं कर्म यावज्जीवं मरणपर्यन्तमित्यर्थः । अनुष्ठेयमेव--"यावज्जीवमग्निहोत्रं जुहुया"दिति श्रुतेरिति भावः ।

परिहरति—नेति । "आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ॥" इति वक्ष्यतीदैवाध्याये भगवान् योगमारुरुक्षोः कर्मणा सम्बन्धः; योगारूढस्य तु शमेन सर्वकर्मसन्न्यासात्मकेन सम्बन्धः भगवदभिप्रेतः । ततश्च यावद्ध्यानयोगारोहणसमर्थस्तावत्कर्म कुर्यात्, सति तु योगारोहणे सन्न्यासमेव कुर्यादिति न यावज्जीवं कर्म करणम् ।

ननूभयस्योभयं कर्तव्यत्वेनाभिमतं भगवत इति शङ्कते—आरुरुक्षोरिति । अभिप्रेतं स्याच्चेदित्यन्वयः । शङ्कां निराकरोति—आरुरुक्षोरिति । मुनेरारुरुक्षुत्वमित्यारूढत्वमिति च विशेषणं व्यर्थं--मुनेश्शमः कर्म च कर्तव्यमिति वचनादेव आरुरुक्षोरारूढस्य च मुनेरुभयकर्तव्यत्वसिद्धेः ।

तत्राश्रमिणां कश्चिद्योगमारुरुक्षुर्भवत्यारूढश्च, कश्चिदन्येनारुरुक्षवो न चारूढास्ता-नपेक्ष्यारुरुक्षोरारूढस्य चेति विशेषण विभागकरण चोपपद्यत एवेति चेन्न, तस्यैवेति वचना-त्पुनर्योगग्रहणाच्च योगारूढस्येति य आसीत् पूर्वं योगमारुरुक्षुस्तस्यैवारूढस्य शमएव कर्तव्य:, कारणं हि योगफलं प्रत्युच्यत इत्यतो न यावज्जीवं कर्तव्यत्वप्राप्तिः कस्यचिदपि कर्मणः।

ननु स्पष्टार्थं विशेषणमत आह— विभागकरणश्चेति। आरुरुक्षो. कर्म कारणमिति, आरूढस्य शमः कारणमिति च विभागकरणं व्यर्थमुभयेनोभयस्यापि कर्तव्यत्वात्।

ननु योगमारुरुक्षोर्मुनेर्यत्कर्मयोगारूढस्य मुनेर्यश्च शम.- तदुभयमनारुरुक्षितयोगानामनारूढयोगाना च कर्तव्यत्वेन भगवताभिप्रेतमिति शङ्कते— तत्रेत्यारभ्य चेदित्यन्तेन ग्रन्थेन। तत्रेत्यस्य व्यवहारभूमा-वित्यर्थः। अनारुरुक्षूणामनारुढना चेति पदद्वयस्य मूले शेष.। योगमारुरुक्षोर्मुनेर्विहितं कर्म कारण-मुच्यते, योगारूढस्य तस्य मुनेश्शम एव शमश्च कारणमुच्यत इति पूर्वपक्षिमतानुसारेण श्लोकस्यान्वय।

परिहरति— नेति। कारणमाह— तस्यैवेति वचनादिति। य पूर्वं योगमारुरुक्षुरभवत्स एवेदानीं योगमारूढो भवति। अतएव तस्यैवेति तत्पदेन पूर्वोक्तप्रकृतयोगारुरुक्षुग्रहणम्। ततश्च आरुरुक्षुत्वारूढत्वयोः कालभेदेनैकपुरुषनिष्ठत्वादाश्रमिणा मध्ये कश्चिदारुरुक्षु कश्चिदारूढश्चेति पुरुष-भेदवर्णनमयुक्तमिति भाव.।

कारणान्तरमाह— पुनरिति। योगारूढस्येति पुनर्योगग्रहणाच्चेत्यन्वय। आरूढस्येत्येतावत एवोक्तौ योगमारुरुक्षुरित्यतो योगपदस्यात्राप्यनुवर्तनेन योगमारूढस्येतीष्टसिद्धौ व्यर्थं पुनर्योगपदग्रहण-मित्यर्थः।

नचेदं चोद्यं सिद्धान्तेपि समानमिति वाच्यं, सिद्धान्ते पुनर्योगपदाभावे य एव योगमारुरुक्षुस्स एवारूढ इत्युक्तौ किमारूढ इत्याकांक्षाया योगमिति वक्तुं न शक्यते- एकस्मिन्नेकदा आरुरुक्षुत्वारूढ-त्वयोः स्थित्ययोगात्। तथा च आसनादिकमारूढ इत्यापतेदिति।

न च यः पूर्वं योगमारुरुक्षुस्स इदानीमारूढः किमारूढ इति शङ्कायां सान्निध्याद्योगमेवेति वाच्यं, यः पूर्वं यत्कामितवान् स इदानीं तदेवाप्तवानित्यत्र नियामकाभावात्। पूर्वं काशीं जिगमिषु-रिदानीं रामेश्वरं गत इति दर्शनाच्च, पूर्वस्मिन्नहनि सोऽहं यज्ञं करिष्यइति सङ्कल्पितवत. पुरुषस्य परस्मिन्नहनि वैराग्यात्कर्मसन्न्यासस्य दर्शनाच्च। तस्माद्यः पूर्वं योगमारुरुक्षुस्स इदानीं योगमारूढ इति पुनरवश्यं वक्तव्यो योगशब्दः।

पूर्वपक्षिमते तु- योगमारुरुक्षोरारूढस्य च कर्म शमश्च कारणमित्येतावतैव योगमारूढस्येति सिद्ध्यतीति व्यर्थमेव पुनर्योगग्रहणम्।

शम एवेति ननु कर्मेत्येवकारार्थः। ननु मूले शम. कारणमुच्यत इत्येवोक्तं, न तु शम कर्तव्य इत्यत आह— कारणमिति। हि यत. शम इति शेष.। योगफलंप्रति कारणमुच्यते तत-श्शमः कर्तव्य इति सिद्ध्यतीत्यर्थ। योगफलंप्रति शमस्य साधनत्वाद्योगफलार्थिना शमः कर्तव्य इति मूलेन सूचितमिति भावः। योगफलं सम्यग्दर्शनमिति विवेक।

योगविभ्रष्टवचनाच्च गृहस्थस्य चेत्कर्मिणो योगो विहितः षष्ठेऽध्याये- स योगविभ्रष्टोपि कर्मगतिं कर्मफलं प्राप्नोतीति तस्य नाशाशङ्कानुपपन्ना स्यात् ।

अवश्यं हि कृतं कर्म काम्यं नित्यं वा मोक्षस्य नित्यत्वादनारभ्यत्वे स्वं फलमारभत एव नित्यस्य च कर्मणो वेदप्रमाणावबुद्धत्वात् । फलेन हि भवितव्यमित्यवोचाम- अन्यथा वेदस्यानर्थक्यप्रसङ्गादिति ।

नच कर्मणि सत्युभयविभ्रष्टवचनमर्थवत्- कर्मणो विभ्रंशकारणानुपपत्तेः । कर्म कृतमीश्वरे सन्न्यस्तमिति अतः कर्तुः कर्मफलं नारभत इति चेन्न, ईश्वरे सन्न्यस्तस्य अधिकतरफलहेतुत्वोपपत्तेः ।

---

अत इति । योगारूढस्य कर्म कर्तव्यत्वाभावादित्यर्थः । कस्यचिदपि कर्मणो यावज्जीवं कर्तव्यत्वप्राप्तिर्नेत्यन्वयः ।

उक्तार्थे हेत्वन्तरमाह— योगविभ्रष्टवचनाच्चेति । 'कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यतीति, शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इति च योगभ्रष्टप्रतिपादनात् ।

संग्रहवाक्यमेव विवृणोति— गृहस्थस्येत्यादिना । अर्जुनेन योगभ्रष्टस्य नाश आशंकितः- "कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्य"तीति । योगो ध्यानयोगस्तस्यैवेह प्रकृतत्वात् । तस्माद्भ्रष्टो योगभ्रष्टः यस्य योगो विहितस्स एव ततो भ्रंशमाप्तुमर्हति, न त्वन्यः । नहि शूद्रः कर्मभ्रष्टो भवेत्, किंतु द्विज एव- तस्यैव कर्मविधानात् । तथा च यदि गृहस्थस्य ध्यानयोगो विहितस्तर्हि योगभ्रष्टस्य गृहस्थस्यार्जुनेन नाश आशंकितस्स्याच्चानिष्टं- ध्यानयोगाद्भ्रष्टोपि गृहस्थः पुनः कर्मणि स्थित्वा तत्फलमाप्नुयादेवेति ।

ननु नास्ति कर्मणां फलमिति वादिनंप्रत्याह— अवश्यमिति । अनारभ्यत्वे अकार्यत्वे नित्यत्वादकार्यमेकं मोक्षरूपं फलं विहाय तदतिरिक्ता धर्मार्थकामाख्योपि कर्मभिरारभ्यन्त एव ।

ननु काम्यस्य कर्मणः कामप्रयुक्तत्वादस्तु फलवत्त्वं, नित्यस्य तु तन्नास्ति अकामप्रयुक्तत्वादित्यत्र आह— नित्यस्य चेति, अन्यथेति । नित्यस्य वेदमूलस्य कर्मणः फलाभाव इत्यर्थः । आनर्थक्यमिति । निष्फलनित्यकर्मविधानादिति भावः ।

एवं योगभ्रष्टस्यापि गृहस्थस्य फलप्रदकर्मसत्त्वात् छिन्नाभ्रमिव नश्यतीत्येतन्नाशाशङ्काऽनुचितार्जुनस्येति प्रतिपाद्य, कच्चिन्नोभयविभ्रष्ट इत्यंशमपि विवृणोति— नचेति ।

उभयविभ्रष्टत्वंनाम कर्मयोगध्यानयोगद्वयतो विभ्रंशः नायं गृहस्थस्य घटते- तस्य कर्मसत्त्वादित्याह— कर्मणि सतीति । कर्माप्यमन्दस्यैव ध्यानयोगे प्रवृत्तत्वाद्गृहस्थस्य यदा ध्यानयोगाद्भ्रंशस्तदा कर्मयोगे स प्रवर्तत एवेति कथमस्य कर्मयोगाद्भ्रंशः, न कथमपीति भावः ।

ननु कर्मणो विभ्रंशकारणमस्ति कर्मणामीश्वरार्पणात्मकमिति शङ्कते— कर्म कृतमिति । अतः ईश्वरार्पितत्वादित्यर्थः । कर्मेति कर्तृपदं । नारभते न जनयतीत्यर्थः ।

मोक्षायैवेति चेत् स्वकर्मणां कृतानामीश्वरे सन्न्यासो मोक्षायैव न फलान्तराय योगसहितो योगाच्च विभ्रष्ट इत्यतः तं प्रति नाशाशङ्का युक्तेति चेन्न, एकाकी यतचित्तात्मा निराशीरपरिग्रहः ब्रह्मचारिव्रते स्थित इति च कर्मसन्न्यासस्य विधानान्न चात्र ध्यानकाले स्त्रीसहायत्वशङ्का, येन एकाकित्वं विधीयते । नच गृहस्थस्य निराशीरपरिग्रह इत्यादिवचनमनुकूलं- उभयविभ्रष्टप्रश्नानुपपत्तेश्च ।

यद्वा कर्मयोगं विहाय ध्यानयोगे प्रवृत्तः तमपरिसमाप्यैव मृतो यो गृहस्थ स उभयभ्रष्ट इत्युच्यत इति पूर्वपक्षमभिप्रेत्याह—नचेति ।

कर्मणि सतीति । कर्मसन्न्यासस्याकृतत्वादित्यर्थ । नच कर्मयोगाननुष्ठानमेव सन्न्यास इति वाच्यं, शूद्रस्यापि सन्न्यासित्वापत्तेः । तस्माद्विधिपूर्वकं कर्मसन्न्यास एव सन्न्यासः । स यस्यास्ति तस्य सन्न्यासिनः कर्म नास्ति । अन्यस्य त्वस्त्येवेति ।

ननु यदि प्राक् गृहस्थेन कर्म कृतं तदीश्वरायार्पितमेवेति नास्ति गृहस्थस्यास्य कर्मेति शङ्कते—कर्म कृतमिति । अधिकतरेति अनीश्वरसमर्पितकर्मफलापेक्षयाऽधिकेत्यर्थः ।

ननु मोक्षापेक्षया कर्माणीश्वरे समर्पितानि कर्मयोगिना- अतस्तानि कर्माणि मोक्षेतरं फलं जनयितुं नेशते- सच मोक्ष परिपक्वकर्मयोगसाध्य कर्मयोगपरिपाकश्च यावज्जीवमनभिसंहितफलकर्मानुष्ठानादेव भवति, नतु मध्ये कर्मत्यागात्- तस्माच्च कर्मयोगमनुतिष्ठन् तं विहाय ध्यानयोगमाश्रित्य तमप्यपरिसमाप्यैव मृतो गृहस्थ. स कर्मयोगाद्ध्यानयोगाच्च भ्रष्ट इत्युभयभ्रष्ट एवेति शङ्कते—मोक्षायैवेति चेदिति । संग्रहवाक्यं विवृणोति—स्वकर्मणामिति ।

अत्र योगपदं कर्मयोगध्यानयोगोभयपरं- योगद्वयसहितो योगद्वयाद्भ्रष्टश्चेत्यर्थः । अतः उभयभ्रष्टत्वादित्यर्थः । तं प्रतीति एवमुभयभ्रष्टं गृहस्थंप्रतीत्यर्थः ।

परिहरति—नेति । "योगी युञ्जीत सततमात्मानं रहसि स्थितः । एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥ प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः । मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥" इतीव वक्ष्यते । एतच्छ्लोकोक्तानामेकाकित्वापरिग्रहत्वब्रह्मचर्याणां गृहस्थेऽसम्भवात्सन्न्यासिविषय एवायं ध्यानयोगो न गृहस्थविषय इत्यर्थः ।

ननु एकाकीत्यनेन सन्न्यासी नोच्यते, किंतु गृहस्थ एव । सद्वितीयस्यापि तस्य ध्यानकाले स्त्रीवियोगेन एकाकित्वमप्युपपद्यत इत्यत आह—नचेति । यदि ध्यानकाले स्त्रीसहायत्वशङ्का स्यात्तर्हि तन्निवृत्तये एकाकित्वविधानं सार्थकं स्यात्- नतु तदस्ति, नहि कर्मकाल इव ध्यानकाले गृहस्थेन स्त्रीसहायेन भाव्यमिति विधिरस्ति, तस्मात्नैकाकिशब्दस्य स्त्रीसहायरहित इत्यर्थः । किंतु सन्न्यासीत्येव ।

ननु एकाकिनश्चासहाया इति एकाकिशब्दस्यासहाय इत्यर्थः । तथासहायत्वं गृहस्थस्य ध्यानकाले आवश्यकमिति भवतु, यथा कथंचिद्गृहस्थस्याप्यसहायत्वविधिरित्यत आह—न च गृहस्थ-

अनाश्रित इत्यनेन कर्मिण एव सन्न्यासित्वं योगित्वं चोक्तं प्रतिषिद्धं च, निरग्नेरक्रियस्य च सन्न्यासित्वं योगित्वं चेति चेन्न, ध्यानयोगंप्रति बहिरङ्गस्य सतः कर्मणा फलाकांक्षा सन्न्यासस्तुतिपरत्वान्न केवलं निरग्निरक्रिय एव सन्न्यासी योगी च, किं तर्हि

स्येति । कामपरिग्रहाभावादीनां गृहस्थेऽसम्भवात्तत्साधारण्यादेकाकित्वमपि सन्न्यासिविषयमेवेत्यर्थः । पूर्वोक्तमेव कारणं पुनराह—उभयेति ।

ननु योगसहितस्य योगाच्च विभ्रष्टस्य गृहस्थस्योभयभ्रष्टत्वमुपपद्यत एवेति प्रागुक्तशङ्कायाः कः परिहार ? येनोभयविभ्रष्टप्रश्नानुपपत्तेश्चेति वक्तुं शक्यत इतिचेत्, उच्यते— एकाकीत्यादिना सन्न्यासिन एव ध्यानयोगेऽधिकारस्य विहितत्वाद्गृहस्थस्य ध्यानयोगारोहणं नास्त्येव- येन कर्मयोगत्याग माशङ्क्येत, गृहस्थस्य भ्रंशहेतुः- एवं गृहस्थस्य ध्यानयोगारोहणाभावादेव न कर्मयोगाद्भ्रंशः, नापि ध्यानयोगादिति नास्ति गृहस्थस्योभयभ्रष्टत्वप्रसक्तिः ।

सन्न्यासिनस्तु सोस्ति- 'कर्माणि सन्न्यस्य ध्यानयोगमधिष्ठितत्वेन कर्मफलभ्रंशाद्ध्यानयोगस्य चापक्वत्वेन ध्यानयोगभ्रंशाच्च । नहि कर्माणि सन्न्यस्य ध्यानयोगे प्रवृत्तस्सन्न्यासी ध्यानयोगानुष्ठान-स्याशक्यत्वे तं विहाय पुनः कर्मसु प्रवर्तितुमर्हति ।

नच सन्न्यासिनोपि प्रागनुष्ठितकर्मफलसत्त्वात्कथमुभयभ्रंश इति वाच्यं, सर्वकर्मसन्न्यासेन पूर्वाचरितसर्वकर्मफलत्यागस्यापि कृतत्वात्पूर्वाचरितकर्मफलभूतस्वर्गादिकामस्य सन्न्यासेऽनधिकारात्, इहामुत्र-फलभोगविरागस्य सन्न्यासहेतुत्वात्, "यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति श्रुतेः । न सन्न्यासिनो गृहस्थाश्रमसमयानुष्ठितयज्ञादिकर्मफलसम्भव, चित्तशुद्धिस्तु दृष्टफलमेवेति न तन्निराकर्तुं त्यक्तुं वा शक्यते । तस्मात् सन्न्यासिनः पूर्वाचरितकर्मवैफल्यात, सन्न्यासाश्रमस्वीकारानन्तरं कर्मणामकर्तव्यत्वाच्च न कर्माणि सन्तीति कर्मभ्रंशस्तावत्सम्पन्नः । ध्यानयोगस्याप्यसाधितत्वेन तु योगभ्रंशश्च जायते । अत उभयभ्रष्टत्वं सन्न्यासिन एवोपपद्यत इति कृत्वा गृहस्थविषयोभयभ्रष्टप्रश्नानुपपत्तिर्दुर्वारैव ।

एतावता यावद्ध्यानयोगारोहणासामर्थ्यं तावद्गृहस्थेन कर्म कर्तव्यं, सति तु सामर्थ्ये सन्न्यस्य ध्यानयोगः कर्तव्य इति सन्न्यासिन एव ध्यानयोगेऽधिकारः ज्ञानयोगवत्- नतु गृहस्थस्येति सिद्धम् ।

ननु अनाश्रितः कर्मफलमिति प्रकृतश्लोकेन कर्मिण एव सन्न्यासित्वं योगित्वं चोक्तं- 'स सन्न्यासी च योगी'चेति अनग्नेरक्रियस्य च सन्न्यासित्वं योगित्वं च प्रतिषिद्धम्- 'न निरग्निर्न चाक्रिय' इति । तथा च यः कर्मयोगी गृहस्थस्स एव सन्न्यासी ध्यानयोगी च, नतु त्वदुक्तसन्न्यासाश्रमी सन्न्यासी योगी वा भवितुमर्हतीति गृहस्थस्य कर्मिण एव ध्यानयोगेऽधिकारः, नतु सन्न्यासिन इति भगवतो मतमित्याक्षिपति—कर्मिण एवेति । यद्वा सन्न्यास इति कश्चनाश्रमो नास्त्येव, किं तर्हि कर्मफलसन्न्यासी गृहस्थ एव सन्न्यासीति भगवतो मतमित्याक्षिपति—कर्मिण एवेति ।

परिहरति—नेति । स्तुतिपरत्वादिति दर्शितवचनस्येत्यर्थः । फलाकांक्षायाः सन्न्यासः त्यागः तस्य स्तुतिः तत्परत्वात् । स्तुतिप्रकारमेव दर्शयति—न केवलमित्यादिना स्तूयत इत्यन्तेन मन्येन ।

कर्म्यपि कर्मफलासङ्गं सन्न्यस्य कर्मयोगमनुतिष्ठन् सत्त्वशुद्ध्यर्थं सन्न्यासी च योगी च भवतीति स्तूयते । न चैकेन वाक्येन कर्मफलासङ्गसन्न्यासस्तुतिश्चतुर्थाश्रमप्रतिषेधश्चोपपद्यते ।

नच प्रसिद्धं निरग्नेरक्रियस्य च परमार्थसन्न्यासिनः श्रुतिस्मृतिपुराणेतिहासयोगशास्त्रविहितं सन्न्यासित्वं योगित्वं च प्रतिषेधति भगवान् स्ववचनविरोधाच्च सर्वकर्माणि मनसा सन्न्यस्य नैव कुर्वन्नकारयन् आस्ते मौनी सन्तुष्टो येन केनचित् अनिकेतस्थिरमतिः 'विहाय कामान् यस्सर्वान् पुमांश्चरति निस्पृहः, सर्वारम्भपरित्यागी'ति च तत्रतत्र भगवता स्ववचनानि प्रदर्शितानि तैर्विरुध्यते चतुर्थाश्रमप्रतिषेधः ।

---

यः कर्मफलमनाश्रित्य कार्यं कर्म करोति सच सन्न्यासी योगी च भवति निरग्निरक्रिय एव सन्न्यासी योगी च न । इति श्लोकस्यान्वय । कर्मफलासङ्गं सन्न्यस्य त्यक्त्वा सत्त्वशुद्ध्यर्थं कर्मयोगमनुतिष्ठन् कर्म्यपीति भाष्यान्वयः । ननु 'सन्न्यासी च योगी' चेत्यनेन कर्मयोगिस्तुतिः, 'न निरग्निर्न चाक्रिय' इत्यनेन सन्न्यासप्रतिषेधश्च भगवताऽभिप्रेत इत्यत आह—**न चैकेनेति**। वाक्यभेदाभावात्तादृशाभिप्रायकल्पना नोपपद्यत इत्यर्थः ।

ननु श्लोकैकत्वेपि वाक्यस्य द्वित्वमस्त्येव, अनाश्रित इत्यारभ्य योगीचेत्यन्तमेकं वाक्यं, न निरग्निर्न चाक्रिय इति द्वितीयं वाक्यमतो नात्रैकवाक्यत्वम् । यद्वा यः कर्मफलमनाश्रित्य कार्यं कर्म करोति स एव सन्न्यासी योगी चेत्येव, वाक्यं स एवेत्येवकारार्थविवरणं न निरग्निर्नचाक्रिय इत्यतो न वाक्यद्वित्वम् । तथा च एकेनैव वाक्येन कर्मस्तुतिसन्न्यासप्रतिषेधावुपपद्येते एव, यथा 'आत्मैव ह्यात्मनो बन्धु'रित्यत्र आत्मनो बन्धुत्वमन्यस्याबन्धुत्वश्चेति द्वयमेकेन वाक्येन बोध्यते तद्वदित्यत्राह **न च प्रसिद्धमिति** । प्रसिद्धं सन्न्यासित्वं योगित्वं च न च प्रतिषेधति भगवानित्यन्वयः ।

ननु श्रुत्याद्यपेक्षया सर्वज्ञस्य भगवतस्सर्वस्वतन्त्रस्य प्रमाणत्वाच्छ्रुत्यादिविरुद्धमपि भगवान् ब्रूयादेव, तदेव भगवद्वचनमस्माकं प्रमाणमपीत्यत आह— **स्ववचनविरोधाच्चेति**। स्ववचनान्येवोदाहरति-- **सर्वकर्माणीत्यादिना** । 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादयश्श्रुतयः । 'यथोक्तान्यपि कर्माणि परीहाप्य द्विजोत्तम' इत्यादयः स्मृतयः । भागवतादिपुराणेषु च प्रसिद्धस्सन्न्यासः ।

वस्तुतस्तु- सिंहो माणवक इतिवत्कर्मी सन्न्यासीति वचनं गौणं स्तुतिपरमित्यविवादम् । साच स्तुतिः प्रसिद्धसिंहवत्प्रसिद्धसन्न्यासिनस्सत्त्व एव सम्भवति न त्वत्यन्तासत्त्वे । नहि प्रसिद्धसिंहस्याभावे सिंहो माणवक इति वक्तुं शक्यते । सिंहवच्छौर्यधैर्यादिसम्पन्नो माणवक इति हि तत्र विवक्षितं वक्त्रा ।

किंचालङ्कारिकैः—'नायं सुधांशुः किंतर्हि सुधांशुः प्रेयसीमुख'मिति प्रसिद्धसुधांश्वपह्नवपूर्वकं कामिनीमुखे सुधांशुत्वमारोप्यमाणं दृश्यते, तत्रापि सन्तमेव प्रसिद्धसुधांशुमपह्नुत्य ते मुखे सुधांशुत्वारोपं कृतवन्तः- न त्वत्यन्तासन्तम् । तद्वदिहापि निरग्निर्न सन्न्यासी, किंतु कर्म्येव सन्न्यासीति वदनेन प्रसिद्धे सन्न्यासिनि सन्न्यासित्वमपह्नुत्य कर्मिणि तदारोपितमिति सिद्ध एव प्रसिद्धसन्न्यासी।

अपि च- प्रसक्तस्यैव निषेधो नाप्रसक्तस्येति नियमात्परमार्थसन्न्यासिनस्सुतरामभावे कथं तन्निषेध उपपद्यते ? अतो नात्र चतुर्थाश्रमप्रतिषेधो भगवता विवक्षित इति कल्पयितुं शक्यं ब्रह्मणोपि।

तस्मान्मुनेर्योगमारुरुक्षोः प्रतिपन्नगार्हस्थ्यस्याग्निहोत्रादिफलनिरपेक्षमनुष्ठीयमानं ध्यानयोगारोहणसाधनत्वं सत्त्वशुद्धिद्वारेण प्रतिपद्यत इति स सन्न्यासी च योगी चेति स्तूयते ॥

श्रीभगवान्-- अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स सन्न्यासी च योगी च न निरग्निर्न चाक्रियः ॥१॥

अनाश्रितेति । अनाश्रितः न आश्रित अनाश्रितः, किं- कर्मफलं कर्मणां फलं यत्तदनाश्रितः कर्मफलतृष्णारहित इत्यर्थः । यो हि कर्मफले तृष्णावान् स कर्मफलमाश्रितो भवति, अयं तु तद्विपरीतो योऽनाश्रितः कर्मफलं एवंभूतस्सन् कार्यं कर्तव्यं नित्यं काम्यविपरीतमग्निहोत्रादिकं कर्म करोति निर्वर्तयति यः कश्चिद् ईदृशः कर्मी स कर्म्यन्तरेभ्यो विशिष्यत इत्येतमर्थमाह—स सन्न्यासी च योगी चेति, सन्न्यासः परित्यागो यस्यास्ति स सन्न्यासी च, योगी च योगश्चित्तसमाधानं यस्यास्तीति स योगी चेत्येवंगुणसम्पन्नोयं

तस्मादिति । सन्न्यासिन एव ध्यानयोगाधिकारादित्यर्थः । मुनेरिति । मननशीलस्येत्यर्थः । ननु सन्न्यासिन इति- प्रतिपन्नगार्हस्थ्यस्येति विशेषणात् । अनुष्ठीयमानमग्निहोत्रादि कर्मेति शेषः । स इति । य एवं फलनिरपेक्षः शुद्ध्यर्थं कर्मयोगमनुतिष्ठति स इत्यर्थः ।

अथ श्लोकं व्याख्यातुमारभते—अनाश्रित इति । नञ्तत्पुरुषः आश्रित इति कर्तरि क्तः । तेन कर्माकांक्षा जातेत्याह—किमिति । किमनाश्रित इत्यर्थः । आकांक्षां पूरयति—कर्मफलमिति ।

ननु कालान्तरभाविनः जन्मांतरभाविनश्च कर्मफलस्य कथमाश्रयणप्रसक्तिः येनानाश्रित इति तन्निषेधस्यार्थवत्त्वमत आह— कर्मफलतृष्णेति । कर्मफले आशाराहित्यमेव तदनाश्रयणमित्युच्यत इत्यर्थः ।

कथं पुनराशाराहित्यमात्रेण फलानाश्रयणमत आह—यो हीति । फलस्य कामप्रयुक्तत्वात्कामाभावे फलाभाव इत्यर्थः ।

तद्विपरीत इति तृष्णावत्पुरुषाद्विलक्षणः कोयमत आह—योऽनाश्रित इति । एवम्भूतस्सन्निति कर्मफलमनाश्रितस्सन्नित्यर्थः । कार्यं कर्तुं योग्यं । किं तत्कार्यमत आह—नित्यमिति । नित्यस्याकामप्रयुक्तत्वाच्छास्त्रैकमूलत्वाच्चेति भावः । ननु काम्यनित्याह—काम्यविपरीतमिति । काम्यस्य कामप्रयुक्तत्वात्तद्वैपरीत्यं नित्यस्येति भावः ।

ईदृश इति फलनिरपेक्षं नित्यकर्म कर्तेत्यर्थः । कर्म्यन्तरेभ्य इति । फलसापेक्षं कर्माणि कुर्वद्भ्य इत्यर्थः । विशिष्यते उत्कृष्टो भवति, नतु सन्न्यासिभ्यो नापि ध्यानयोगिभ्य उत्कृष्टत्वमस्य कर्मयोगोपेयत्वात्सन्न्यासध्यानयोगयोः नहि काप्युपाय उपेयाद्विशिष्यमाणो दृष्टः श्रुतो चेति भावः ।

स इति कर्मयोगीत्यर्थः । परमार्थसन्न्यासिवैलक्षण्यमाह—सन्न्यासः परित्याग इति । तथा परमार्थयोगिवैलक्षण्यमाह—योगश्चित्तसमाधानमिति । एवंगुणसम्पन्न इति परित्यागचित्तसमाधानरूपगुणयुक्त इत्यर्थः ।

मन्तव्यः, न केवलं निरग्निरक्रिय एव सन्न्यासी योगी चेति मन्तव्यः। निर्गता अग्नयः कर्माङ्गभूता यस्मात् स निरग्निः। अक्रियश्च अनग्निसाधना अविद्यमानाः क्रियास्तपोदानादिका यस्यासावक्रियः।

---

अयं भावः—यथा सिंहो माणवक इति गौणप्रयोगे सिंहशब्दस्य मुख्यार्थं केसरादिमदाकृतिविशेषं विहाय लक्षणया शौर्यधैर्यादिगुणयोगमर्थं वदन्ति बुधाः माणवकस्सिंहवच्छौर्यधैर्यादिगुणविशिष्ट इति तद्वत्कर्मी योगी सन्न्यासी चेति वचनेपि योगिसन्न्यासिशब्दयोः कर्मसन्न्यासिध्यानयोगिरूपार्थौ विहाय लक्षणया कर्मी सन्न्यासिवद्योगिवच्च परित्यागचित्तसमाधानरूपगुणविशिष्ट इत्यर्थो ग्राह्यो विद्वद्भिः।

तथा च शौर्यधैर्यादिनिमित्तो यथा माणवके सिंहप्रत्यय, तथा परित्यागनिमित्तश्चित्तसमाधाननिमित्तश्च कर्मिणि सन्न्यासिप्रत्ययो योगिप्रत्ययश्चेति। यथा सन्न्यासी कर्माणि परित्यजति तथा कर्मी कर्मफलानि परित्यजतीति कर्मिसन्न्यासिनो परित्यागविषये सादृश्यम्। यथा योगी ब्रह्मणि चित्तं समाधत्ते तथा कर्मी कर्मणि चित्तं समाधत्त इति कर्मियोगिनोस्सादृश्यं चित्तसमाधाने। कर्मणि चित्तसमाधानं च "योगः कर्मसु कौशल"मित्यनेन प्रतिपादितं फलतृष्णाभावादिरूपम्।

तस्मान्न मुख्य सन्न्यासित्वं योगित्वं वा कर्मिणि सम्भवति- विरोधात्किन्तु गौणमेव। विरोधश्च कर्मसन्न्यासकर्मकरणयोः प्रसिद्ध एव। ध्यानयोगेप्यस्ति हि यज्ञादिविहितकर्मपरित्याग इति।

यद्यपि सन्न्यासीत्यनेनैव योगीत्यपि सिद्धं- सन्न्यासिन एव योगाधिकाराद्योगिन एव सन्न्यासित्वात्तथापि ज्ञानयोगनिष्ठस्सन्न्यासीह सन्न्यासिशब्देन, ध्यानयोगनिष्ठस्सन्न्यासी तु योगिशब्देनोच्यत इति वैलक्षण्यं बोध्यम्।

किंच यदीह कर्मिणि मुख्यं सन्न्यासित्वं विधित्सितं तर्हि सन्न्यासियोगिशब्दयोरन्यतरेणैवालं, परन्तु गौणं विधित्सितं सन्न्यासिनि तु गुणद्वयमस्ति परित्यागश्चित्तसमाधानं चेति। तदेव प्रवृत्तिनिमित्तीकृत्य सन्न्यासियोगिशब्दद्वयं तत्र प्रवर्तते- तस्यैव गुणद्वयस्य कर्मिण्यपि यथाकथञ्चित्सत्त्वेन कर्मिणि गौणं सन्न्यासित्वं विधित्सितमिति सन्न्यासी योगीति शब्दद्वयप्रयोगस्सार्थकः।

ननु निरग्निरित्यनेनैवाक्रियत्वस्य लाभात्किमर्थमक्रिय इति पदमत आह—अनग्निसाधना इति। अग्निसहितक्रियाप्रतिषेधो निरग्निशब्देनोक्त - अग्निरहितक्रियाप्रतिषेधायाऽक्रिय इति पदमावश्यकमित्यर्थः।

साग्नयः क्रिया यज्ञादयः प्रसिद्धाः, निरग्नयः क्रियास्त्वप्रसिद्धा इति तद्बोधनायाह—तपोदानादिका इति। अविद्यमाना क्रिया यस्यासावक्रिय इति सम्बन्ध - नञोऽस्त्यर्थानां वाच्यो वाचोत्तरपदलोप इति वार्तिकात्समास उत्तरपदलोपश्च।

ननु च निरग्नेरक्रियस्यैव च श्रुतिस्मृतियोगशास्त्रेषु सन्न्यासित्वं योगित्वं च प्रसिद्धं; कथमिह साग्नेः सक्रियस्य च सन्न्यासित्वं योगित्वं चाप्रसिद्धमुच्यत इति, नैष दोषः-- कयाचिद्गुणवृत्त्योभयस्य सम्पिपादयिषितत्वात् ॥१॥

नन्वप्रसिद्धाभिधानमिदमयुक्तं भगवत इत्याशङ्क्य परिहरति—ननु चेत्यादिना । गुणवृत्त्येति लक्षणयेत्यर्थः । सम्पादयितुमिष्टं सम्पिपादयिषितं तत्त्वात् । न वयं . निरग्नेरक्रियस्य च सन्न्यासित्वं योगित्वं वा प्रतिषेधामः, नापि साग्नेस्सक्रियस्य तदुभयं विदधामः, किंतु यथोक्तकर्मयोगिनो लक्षणया सन्न्यासित्वं योगित्वं च ब्रूमः-- सन्न्यासियोगिसादृश्यस्य परित्यागचित्तसमाधानरूपस्य कर्मणि सत्त्वादतो न श्रुतिस्मृत्यादिविरोधः ।

यत्तु रामानुजः—यः कर्म करोति स ज्ञानयोगनिष्ठः कर्मयोगनिष्ठश्च सः निरग्निः कर्मस्वप्रवृत्तो न भवति, अक्रियः केवलज्ञाननिष्ठश्च न भवति, ज्ञानयोगनिष्ठस्य तु केवलज्ञाननिष्ठैव कर्मयोगनिष्ठस्य तूभयमस्तीत्यभिप्राय इति, तत्तुच्छम्—यः कर्मी सन्न्यासी योगी च भवतीत्युक्तः कथं स एव कर्मी निरग्निर्न भवति अक्रियश्च न भवतीति वक्तुं शक्यते ? न ह्येकस्मिन्नेव कर्मणि सन्न्यासित्वविधिः तत्प्रतिषेधश्चेति द्वयमुपपद्यते- निरग्न्यक्रियशब्दौ हि सन्न्यासिनं बोधयतः- तस्यैवाग्निक्रियाभावात् । न च निरग्न्यक्रियशब्दौ कर्मस्वप्रवृत्तं ज्ञाननिष्ठं च बोधयतो न तु सन्न्यासिनमिति वाच्यं, सन्न्यासिन एव तथात्वात् । न हि गृहस्थस्य कर्मसु प्रवृत्त्यभावः ज्ञाननिष्ठा च सम्भवतः । कर्मस्वप्रवृत्तिर्हि कर्मसन्न्यासः स एव ज्ञाननिष्ठा च । नच गृहस्थस्यापि नास्तिकस्यातुरस्य वा कर्मस्वप्रवृत्तिरिति वाच्यं, तादृशगृहस्थस्यात्र शास्त्रे प्रसक्त्यभावात् । कर्म करोतीति आस्तिकं शक्तमेव गृहस्थमुद्दिश्य ह्युच्यते ।

किंच स सन्न्यासी च योगीचेति चकारेण सन्न्यासित्वयोगित्वसमुच्चयस्य कर्मणि त्वदभिमतस्य सिद्धत्वेन न निरग्निर्न चाक्रिय इति पुनरुक्तं । न केवलं कर्मस्वप्रवृत्तो न केवलं ज्ञाननिष्ठश्चेत्येतस्य सन्न्यासी च योगी चेत्यनेनैव सिद्धत्वादिति भावः । अपि च न केवलं कर्मस्वप्रवृत्त इत्यनेन कर्मस्वप्रवृत्तश्चेत्येव लभ्यते, नतु कर्मसु प्रवृत्त इति । तथा च यः कर्म करोति स कर्मस्वप्रवृत्तो ज्ञाननिष्ठश्चेति सिद्धम् ; तच्च पुनरुक्तं कर्मस्वप्रवृत्तत्वस्य ज्ञाननिष्ठत्वस्य चैक्यात् । तथा यः कर्म करोति स सन्न्यासी योगी कर्मस्वप्रवृत्तो ज्ञाननिष्ठश्चेति त्वदभिमतयोजनया हि सिद्धं- तत्र कर्मकरणसन्न्यासयोः कर्मयोगकर्माप्रवृत्त्योः कर्मनिष्ठत्वज्ञाननिष्ठत्वयोश्च विरोधो बालस्यापि विदित एव । सन्न्यासीत्यस्य ज्ञाननिष्ठ इत्यर्थाश्रयणेपि कर्मकरणकर्माप्रवृत्त्योः कर्मयोगनिष्ठत्वज्ञानयोगनिष्ठत्वयोश्च विरोधः स्फुटः; ज्ञाननिष्ठो ज्ञाननिष्ठश्चेति कर्मस्वप्रवृत्तश्चेति शब्दतोऽर्थतश्च पुनरुक्तम् । यः कर्म करोति स कर्मयोगीति सर्वविदितमेवेति कृत्वा यः कर्म करोति स योगीत्युक्तिर्व्यर्था पुनरुक्ता च, यः कर्म करोति स न निरग्निर्न चाक्रियः, किंतु साग्निस्सक्रिय एवेति सर्वजनविदितत्वान्न निरग्निर्न चाक्रिय इत्युक्तिर्व्यर्था पुनरुक्ता च ।

यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डव ।
न ह्यसन्न्यस्तसङ्कल्पो योगी भवति कश्चन ॥२॥

तत्कथं कर्मफलसङ्कल्पस्य सन्न्यासात्सन्न्यासित्वं योगाङ्गत्वेन च कर्मानुष्ठानात्कर्मफलसङ्कल्पस्य च चित्तविक्षेपहेतोः परित्यागाद्योगित्वं चेति गौणमुभयं न पुनर्मुख्यं सन्न्यासित्वं योगित्वं चाभिप्रेतमित्येतमर्थं दर्शयितुमाह—यमिति । यं सर्वकर्मतत्फलपरित्यागलक्षणं परमार्थसन्न्यासमिति प्राहुः श्रुतिस्मृतिवादाः योगं कर्मानुष्ठानलक्षणं तं परमार्थसन्न्यासं विद्धि विजानीहि । हेपाण्डव !

कर्मयोगस्य प्रवृत्तिलक्षणस्य तद्विपरीतेन निवृत्तिलक्षणेन परमार्थसन्न्यासेन कीदृशं साम्यमङ्गीकृत्य तद्भाव उच्यत इत्यपेक्षायामिदमुच्यते-- अस्ति हि परमार्थसन्न्यासेन साम्यं कर्तृद्वारकं कर्मयोगस्य, यो हि परमार्थसन्न्यासी स सन्त्यक्तसर्वकर्मतत्साधनतया सर्वकर्म-

---

अथ कर्मयोगनिष्ठस्योभयनिष्ठत्वमित्येतद्व्याहतं- कर्मयोगनिष्ठस्य कर्मयोगनिष्ठत्वेन ज्ञानयोगनिष्ठस्य ज्ञानयोगनिष्ठत्वेन उभयनिष्ठस्योभयनिष्ठत्वेन च भाव्यत्वात्कर्मयोगनिष्ठस्य वा ज्ञानयोगनिष्ठस्य वा उभयनिष्ठत्वासम्भवात् ।

तथा एकस्य पुरुषस्य उभयनिष्ठत्वमपि नैव सम्भवति- 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति भगवतैव साङ्ख्ययोगयोर्भिन्नपुरुषानुष्ठेयत्वस्योक्तत्वात्, स्थितिगतिवत् ज्ञानकर्मणोः परस्परं विरोधाच्च । प्रपञ्चितं चैतदधस्तात् ।

तस्मान्न कर्मयोगनिष्ठस्य ज्ञानयोगनिष्ठत्वमुभयनिष्ठत्वं वा स्वप्नेपि सम्भवति । यद्येवमसम्भावितार्थं ब्रूयाद्भगवांस्तर्हि सोप्यप्रमाणभूत एव स्यात् । अहो ! रामानुजस्य पाण्डित्यम् ! येन भगवत्यप्रमाणबुद्धिरापादिता ॥१॥

अत्रादौ किंचिद्व्याख्यानं अष्टम् ।

के प्राहुरत आह—श्रुतिस्मृतिवादा इति । श्रुतिस्मृतिवाक्यानीत्यर्थः । श्रुतीः स्मृतीश्च वदन्ति ये ते इति वा । श्रुतिस्मृतिविज्ञा इत्यर्थः ।

ननु कर्मसन्न्यासकर्मानुष्ठानयोर्मिथो विरोधात्कथं कर्मसन्न्यासस्य कर्मानुष्ठानरूपयोगत्वसम्भव इत्याक्षिपति—कर्मयोगस्येति ।

आक्षेपं समाधत्ते—अस्ति हीत्यादिना । कर्मयोगस्य परमार्थसन्न्यासेन कर्तृद्वारकं साम्यमस्ति हीत्यन्वयः । तदेव विवृणोति—यो हीत्यादिना । सन्न्यासिनि योगिनि च फलविषयसङ्कल्पत्यागरूपाशस्यैवगात्कर्तृसाम्यप्रयुक्तं साम्यं सन्न्यासयोगयोरस्तीत्यर्थ. ।

तत्रेयान् विशेषः—सन्न्यासी कर्मविषयं तत्फलविषयं च सङ्कल्पं सन्न्यस्यति; योगी तु न कर्मविषयं, किंतु तत्फलविषयमेव कर्मविषयसङ्कल्पस्यापि त्यागे कर्मानुष्ठानासम्भवादिति ।

तत्फलविषयं संकल्पं प्रवृत्तिहेतुकामकरणं सन्न्यस्यति; अयमपि कर्मयोगी कर्म कुर्वाणएव फलविषयं सङ्कल्पं सन्न्यस्यतीत्येतमर्थं दर्शयिष्यन्नाह—

नहि यस्मादसन्न्यस्तसङ्कल्पः असन्न्यस्तः अपरित्यक्तः फलविषयसङ्कल्पोऽभिसन्धिर्येन सोऽसन्न्यस्तसङ्कल्पः कश्चन कश्चिदपि कर्मी योगी समाधानवान् भवति, न भवतीत्यर्थः। फलसङ्कल्पस्य चित्तविक्षेपहेतुत्वात्तस्माद्यः कश्चन कर्मी सन्न्यस्तसङ्कल्पो भवेत्स योगी समाधानवानविक्षिप्तचित्तो भवेत्- चित्तविक्षेपहेतोः फलसङ्कल्पस्य सन्न्यस्तत्वादित्यभिप्रायः। एवं परमार्थसन्न्यासकर्मयोगयोः कर्तृद्वारकं सन्न्याससामान्यमपेक्ष्य यं सन्न्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेति कर्मयोगस्य स्तुत्यर्थं सन्न्यासत्वमुक्तम् ॥२॥

---

अयमेव सङ्कल्पः कामस्य कारणं, सच कामः कर्मसु प्रवृत्तेर्हेतुरित्याह—प्रवृत्तिहेतुकामकारणमिति। सङ्कल्पस्य विशेषणम्। कामकारणस्य सङ्कल्पस्यैव त्यागात्कामस्यानुदयः, ततश्च कर्मस्वप्रवृत्तिस्सन्न्यासिन इति भावः।

नच योगिनोऽपि सङ्कल्पत्यागात्कामानुदये कथं कर्मसु प्रवृत्तिरिति वाच्यं, फलविषयसङ्कल्पत्यागात्फलकामानुदयेऽपि योगिनः कर्मविषयसङ्कल्पत्यागाभावात्कर्मकामोदयेन कर्मसु प्रवृत्तिसिद्धेः।

नच फलसङ्कल्पाभावे योगिनः कुतः कर्मसङ्कल्प इति वाच्यं, ईश्वरप्रीतिरूपे चित्तशुद्धिरूपे पापक्षयरूपे वा नित्यकर्मफले योगिनः कामसत्त्वात्, तस्य चेश्वरप्रीत्यादिरूपस्य फलस्य पुण्यपापान्यतरत्वाभावेन देवतिर्यगादिजन्मद्वाराऽबन्धकत्वेन फलत्वाभावात्।

नचैवं मोक्षस्यापि फलत्वाभाव इति वाच्यं, तस्येष्टत्वात् नहि वयं नित्यसिद्धं सच्चिदानन्दब्रह्मरूपं मोक्षं फलं ब्रूमः- यज्जन्यं यच्च बन्धकं तदेव हि फलम्। अतएव नित्यकर्मणः फलाभाववचनमप्युपपद्यते।

यद्वा यस्य कस्यापि फलस्य सङ्कल्पो मास्तु योगिनः, तथापि स कर्म करोत्येव- गृहस्थेनावश्यं कर्म कर्तव्यमित्येवंरूपेश्वराज्ञातिक्रमे नरकभयात्। अतएव प्रत्यवायपरिहारार्थानि नित्यकर्माणीति कर्मिणां राद्धान्तः।

नच प्रत्यवायपरिहारएव फलमित्यस्ति तत्सङ्कल्पात्फलसङ्कल्पो योगिन इति वाच्यं, प्रत्यवायाभावस्य भावरूपफलत्वायोगात्। फलं हि स्वर्गादिकं पुत्रादिकं भावरूपमेवेष्यते। नच रोगाभावस्यारोग्यस्य फलत्वमस्तीति वाच्यं, अरोगस्य भाव आरोग्यं दृढगात्रत्वादिकं तद्धि भाव एवेति।

अथ वा ईश्वराज्ञारूपत्वान्मया कर्माणि कर्तव्यानि गृहस्थेनेत्येतावत्येव बुद्धिर्योगिनः- तावतैव कर्मानुष्ठानसम्भवात्। अतो न यस्यकस्यापि फलस्य सङ्कल्पप्रसक्तिरिति।

न हीति। हि असन्न्यस्तसङ्कल्पः कश्चन योगी न भवति। तस्मात्कर्मयोगिनः फलसङ्कल्पसन्न्यासरूपसन्न्यासवत्त्वेन सन्न्यासित्वं सिद्धमिति भावः। एतेनैकस्मिन्नेव कर्मणि चित्तविक्षेपहेतुफलसङ्कल्पत्यागाद्योगित्वं सन्न्यासित्वं चेत्युभयं सम्भवति रक्षणयेति सिद्धम्।

सन्न्यस्तसङ्कल्पस्य सन्न्यासित्वं तावत्प्रसिद्धम्; अत्र च श्लोके असन्न्यस्तसङ्कल्पस्यायोगित्व-

आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ।
योगारूढस्य तस्यैव शमः कारणमुच्यते ॥३॥

ध्यानयोगस्य फलनिरपेक्षः कर्मयोगोपि बहिरङ्गसाधनमिति त सन्न्यासत्वेन स्तुत्वाऽधुना कर्मयोगस्य ध्यानयोगसाधनत्वं दर्शयति—

कथनेन सन्न्यस्तसङ्कल्पस्यैव योगित्वं प्रतिपादितम् । ततश्च सन्न्यासिनो योगिनश्च सन्न्यस्तसङ्कल्पत्वं समानधर्म इति सिद्धम् । एव सन्न्यासियोगिनोस्साम्याद्द्वारा सन्न्यासयोगयोस्साम्यमिति निष्कर्षः ।

वस्तुतस्तु सर्वकर्मतत्फलविषयसङ्कल्पसन्न्यासाद्यथा सर्वकर्मसन्न्याससिद्धिस्सन्न्यासिन· तथा सर्वकर्मफलविषयसङ्कल्पसन्न्यासाद्योगसिद्धिर्योगिन इति सन्न्यासयोगयोः कारणद्वारा किमपि साम्यमस्त्येव-सङ्कल्पसन्न्यासप्रयुक्तत्वात्सन्न्यासयोगयोः यथा मृज्जन्यत्वाद्घटशरावयोः साम्यं तद्वत् ।

यत्तु रामानुजः—सन्न्यासं ज्ञानयोगं योगं कर्मयोगं विद्धि कर्मयोगान्तर्गतत्वादात्मयाथात्म्यज्ञानस्य । अनात्मन्यात्मतादात्म्याभिमान सङ्कल्पस्तदपरित्यागी कर्मयोगी न भवत्येवेति, तत्तुच्छम्-योगान्तर्गतस्य ज्ञानस्य योगशब्दवाच्यत्वं तावद्विरुद्धं- पेटिकान्तर्गतस्य वस्त्रस्यापि पेटिकाशब्दवाच्यत्वापत्तेः । लक्षणाश्रयणं तु दुष्टं- मुख्यार्थपरित्यागे कारणाभावात् । नापि कर्मयोगे ज्ञानयोगस्यान्तर्भावः· कर्मयोगोपेयत्वाद्‌ज्ञानयोगस्य । नाप्यात्मान्ये आत्माभिमानस्य सङ्कल्पत्वं, किं तर्ह्यध्यासत्वमेव । तस्य परित्यागे कर्मयोगस्य स्वरूपासिद्धिरेव- अकर्तृत्वादात्मनः, अनात्मनां च जडत्वात् । नहि जडस्य वा घटादेः कर्तृत्वं दृष्टं लोके श्रुतम् ।

किंच अहं कर्म कुर्यामिति सङ्कल्पमूलकत्वं कर्मणस्सर्वसम्प्रतिपन्नम् । स चाहङ्कारेऽनात्मन्यात्माभिमानप्रयुक्तः- अहङ्कारस्यैव कर्तृत्वात्, आत्मनश्चाकर्तृत्वात् । तस्याप्यभिमानस्य परित्यागे कथं कर्मयोगसिद्धिः । अतो न कर्मयोगिनोऽध्यासनिवृत्तिरावश्यकी, किं तर्हि देहातिरिक्तः कश्चिनित्य आत्माऽस्तीत्येतावत्येव बुद्धिस्तस्यावश्यकी ।

नच अनात्मनां जडत्वादात्मनश्चाकर्तृत्वे विधिशास्त्रवैयर्थ्यात्- 'कर्ता शास्त्रार्थवत्त्वा'दित्यधिकरणानुसाराच्च कर्तैवात्मेति वाच्यं, शास्त्राणामविद्यावद्विषयत्वात् देहाद्यनात्मसङ्घाते आत्माभिमानिनः कर्तुस्सत्त्वान्न शास्त्रवैयर्थ्यं, नाप्यधिकरणविरोधः- 'निष्कलं निष्क्रियं शान्त'मित्यादिश्रुतिविरोधादात्मा स्वकर्तैव । अन्यथा कर्तृत्वे सति भोक्तृत्वं स्यात्तदुभयसत्त्वे विकारित्वं स्यात्तस्यापि सत्त्वेऽनित्यत्वं स्यात्- 'अजो नित्यश्शाश्वत' इति 'अविकार्योऽयमुच्यत' इति गीताशास्त्रोक्तार्थ एवाप्रमाणः कल्पितः स्यात् । तस्मान्नास्त्यात्मनः कर्तृत्वमिति सिद्धान्तः ।

य एवमात्मानमकर्तारं वेत्ति कथं तस्य कर्म कुर्यामिति सङ्कल्पः, येन कर्मयोगप्रवृत्तिः । तस्मादज्ञ एव। कर्मयोगी । ज्ञानार्थं हि स कर्मयोगे प्रवृत्तः । यदि प्रागेव ज्ञानी तर्हि कुतस्तस्य कर्मयोगप्रवृत्तिः । कस्मान्न कर्मयोगे ज्ञानस्यान्तर्भावः । उक्तमपीदं पुन.पुनर्मया वर्ण्यते प्रतिपत्तृप्रतिपत्तिदार्ढ्याय ।

एवं कीर्तयन्नारुरुक्षोरिति श्लोकमवतारयति—ध्यानयोगस्येति ।

आरुरुक्षोरिति । आरुरुक्षोः आरोढुमिच्छोरनारूढस्य ध्यानयोगेऽवस्थातुमसमर्थस्येत्यर्थः । तस्यारुरुक्षोर्मुनेः कर्मफलसन्न्यासिन इत्यर्थः । किमारुरुक्षोर्योगं कर्म कारणं साधनमुच्यते योगारूढस्य पुनस्तस्यैव शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढत्वस्य साधनमुच्यत इत्यर्थः ।

यावद्यावत्कर्मभ्य उपरमते तावत्तावन्निरायासस्य जितेन्द्रियस्य चित्तं समाधीयते ।

आरुरुक्षोरिति । योगमारुरुक्षोरित्यन्वयः । योगोऽत्र ध्यानयोगः, नतु कर्मयोगः कर्मयोगमारुरुक्षोः कर्म कारणमिति वक्तुमयुक्तत्वात्, कर्मयोगारोहणस्यैव कर्मकरणरूपत्वात् । अयं हि ध्यानयोगमारोढुं केवलमिच्छति, नतु ध्यानयोगमारुह्य स्थातुं क्षमते; अत एवारुरुक्षुरित्युच्यते इत्यभिप्रेत्याह—अनरूढस्येत्यादि ।

ध्यानयोगस्य मन इन्द्रियजयप्रयुक्तत्वात्तज्जयस्य च दुष्करत्वादुक्तमसमर्थस्येति । दृष्टश्रुतसर्वविषयेभ्यो व्यावर्त्य केवलात्मनि मनः स्थापयितुमसमर्थस्येत्यर्थः ।

ननु सन्न्यासवाचिनो मुनिशब्दस्य कथमिह प्रयोगोऽत्र आह—कर्मफलसन्न्यासिन इति । भविष्ययोगिनोपि कर्मफलसन्न्यासित्वेन गौण्या वृत्त्या सन्न्यासित्वान्मुनिशब्दबोध्यत्वमस्तीति भावः । भविष्यसन्न्यासित्वाद्भाविनीं वृत्तिमाश्रित्य ओदनं पचतीतिवन्मुनिरिति निर्देश इति वा । कर्मकारकदेवतास्वरूपादिमननशीलत्वान्मुनिरिति वा वक्तुं शक्यते ।

प्रपञ्चस्य ब्रह्मेव पुत्रस्य पितेव वा मुनेः कर्म कारणमिति भ्रमव्युदासायाह—साधनमिति । कर्मरूपसाधनेन मुनिर्योगमारोढुं प्रभवति निश्श्रेणिकया प्रासादं पुरुष इवेति भावः । एतेन ध्यानयोगारोहणसाधनत्वं कर्मणस्सिद्धम् ।

तस्यैवेति । य एवं कर्मानुष्ठानद्वारा योगमारूढस्तस्यैवेत्यर्थः । शमः सन्न्यास इति यावत् । ननु कर्मयोगस्य साधनमित्युक्तं, शमः पुनः कस्य कारणमत आह—योगारूढत्वस्येति । कर्मयोगो ध्यानारोहणसामर्थ्यमात्रं जनयति पुरुषस्य, ध्यानयोगारोहणं तु शमसाध्यमेवेत्यर्थः ।

यद्वा निश्श्रेणिकया पुरुषः प्रासादमिव कर्मणा मुनिर्ध्यानयोगमारोहति केवलम् । आरुह्य तत्र चिरं स्थातुं तु मुनेश्शम एव साधनं यथा प्रासादमारुह्य चिरं स्थातुमासनादिकं साधनं पुरुषस्य । एतेन योगे यश्चिरमवस्थितस्स एव योगारूढः, न तु योगारोहणमात्रेणेति सिद्धम् । एतदनुसारेण योगारूढत्वस्येत्यस्य योगमारुह्य चिरमवस्थानस्येत्यर्थो वाच्यः । पूर्वस्मिन् मते तु यथाश्रुत एवार्थः ।

ननु कथमुपरमस्य योगारूढत्वसाधनत्वमत आह—यावद्यावदिति । तथासतीति चित्तसमाधाने सतीत्यर्थः ।

अयमाशयः—कर्मिणः फलसङ्कल्पत्यागेन चित्तविक्षेपाभावेपि कर्मकारकसामग्रीसम्पादनायासादिना मन इन्द्रियजयस्तस्य दुष्करः, ततस्तस्य चित्तसमाधानं दुर्लभमिति न कर्मी कथमपि योगारूढो भवितुमर्हति, किं तु सन्न्यासिन एवायासाभावादिन्द्रियजयश्चित्तसमाधानं चेति सन्न्यास्येव योगारूढो

तथासति स योगारूढो भवति । तथाचोक्तं- 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च । शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्य' इति ॥३॥

यदा हि चेन्द्रियार्थेषु न कर्मस्वनुषज्जते ।
सर्वसङ्कल्पसन्न्यासी योगारूढस्तदोच्यते ॥४॥

अथेदानीं कदा योगारूढो भवतीत्युच्यते—यदेति । यदा समाधीयमानचित्तो योगी हि यस्मात् इन्द्रियार्थेषु इन्द्रियाणामर्थाश्शब्दादयस्तेष्विन्द्रियार्थेषु कर्मसु च नित्य-

भवितुमर्हति । अतः सन्न्यासिन एव ध्यानयोगेऽधिकारः, कर्मिणस्तु ध्यानयोगारोहणसामर्थ्याय कर्मयोग एवाधिकार इति ।

स्वोक्तार्थे प्रमाणमाह—नैतादृशमिति । ब्राह्मणस्य सन्न्यासिन इत्यर्थः-- तस्यैव वक्ष्यमाणगुणयोगसम्भवात्; एतादृशं वक्ष्यमाणवित्ततुल्यमित्यर्थः । वित्तं नास्ति । किं तद्वित्तमत आह—यथेति । एकता सर्वत्रात्मैकत्वबुद्धिः, समता सर्वत्रात्मसमत्वबुद्धिः, सत्यता ब्रह्मात्मैकसत्यत्वबुद्धिः, शीलं सत्स्वभावः, स्थितिर्ब्रह्मनिष्ठा, दण्डनिधानं मनोवाक्कायानां दण्डकरणं, तेषां दण्डोनाम नियमनं; स्वाधीनीकरणमिति यावत् । आर्जवं सर्वत्र ऋजुबुद्धिः, ततस्ततस्ताभ्यस्ताभ्यः क्रियाभ्यः सर्वकर्मभ्य इत्यर्थः । उपरमः निवृत्तिश्च इत्येतत्सर्वं ब्राह्मणस्य वित्तं, न तु कनकादिकं- तद्बन्धनात्मज्ञस्य वित्तम् । तस्य च लौकिकवित्तस्य वैदिकवित्तस्य चास्ति महदन्तरं यतेन तस्य संसारः, अनेन त्वस्य संसारनाश इति । अत उक्तं नैतादृशं वित्तमस्तीति । तस्मादुपरतिरेव योगारूढत्वं सम्पादयतीत्यनवद्यम् ।

योगोऽत्र वैराग्यं; तथा च यावद्वैराग्योदयं कर्म कार्यं, विरक्तस्य तु सन्न्यास एव ज्ञानपरिपाकसाधनमिति मधुसूदनः । योगो ज्ञानयोगश्शमस्समाधिरिति तु श्रीधरः ।

यत्तु रामानुजः—यावदात्मावलोकनरूपमोक्षावाप्ति कर्म कार्यमित्यर्थ इति, यच्च वेदान्तदेशिकश्शमः कर्मनिवृत्तिरेव नतु पारिव्राज्यमिति, तदुभयं तुच्छम्—परमते आत्मावलोकनस्यामोक्षत्वात्, कर्मणा आत्मावलोकनासम्भवात्, आत्मावलोकनस्य वेदान्तविचारसाध्यत्वादथवा समाधिसाध्यत्वात् ।

शमः कर्मनिवृत्तिर्न तु पारिव्राज्यमित्येतदयुक्तं—गृहस्थस्य कर्मिणः कर्मनिवृत्त्यसम्भवात्सन्न्यासिनः कर्मासम्भवाच्च कुतः कर्मनिवृत्तेरपारिव्राज्यम् । नच गृहस्थस्यापि ध्यानयोगारूढस्य कर्मनिवृत्तिरिति वाच्यं, गृहस्थस्य ध्यानयोगारूढत्वस्यैवासम्भवात् । तस्मात्कर्मसन्न्यासं विना कर्मनिवृत्तिर्न सम्भवतीति शमः पारिव्राज्यमेव ॥३॥

यदेति । हि यस्मादिति । यस्मात्कर्मसु विषयेषु चानुषङ्गाभावात्सर्वसङ्कल्पसन्न्यासाच्च योगारूढो भवति पुरुषस्तस्माद्योगारूढत्वस्य शमः कारणमित्यर्थः । इन्द्रियाणामिति ग्राह्यग्राहकभावसम्बन्धे शेषे षष्ठी । इन्द्रियग्राह्येष्वर्थेष्वित्यर्थः । अर्थाश्शब्दादयो विषयाः- अर्थ्यन्ते प्रार्थ्यन्ते संसारिभिरित्यर्थः ।

यदा हि चेत्यत्रत्यस्य चकारस्य कर्मस्वित्यनेनान्वय इत्याह—कर्मसु चेति । चतुर्विधानि कर्माणि- तत्र नित्यानि अग्निहोत्रादीनि, नैमित्तिकानि दर्शादीनि, काम्यानि कारीरीष्ट्यादीनि, प्रतिषिद्धानि हिंसादीनि ।

नैमित्तिककाम्यप्रतिषिद्धेषु च प्रयोजनाभावबुद्ध्या नानुषज्जते; अनुषङ्गं कर्तव्यताबुद्धिं न करोतीत्यर्थः । सर्वसङ्कल्पसन्न्यासी सर्वान् सङ्कल्पान् इहामुत्रार्थकामहेतून् सन्न्यसितुं शीलमस्येति सर्वसङ्कल्पसन्न्यासी योगारूढः; प्राप्तयोग इत्येतत् । तदा तस्मिन् काले उच्यते ।

सर्वसङ्कल्पसन्न्यासीतिवचनात्सर्वांश्च कामान् सर्वाणि च कर्माणि सन्न्यसेदित्यर्थः । सङ्कल्पमूला हि सर्वे कामाः 'सङ्कल्पमूलः कामो वै यज्ञास्सङ्कल्पसम्भवाः । काम! जानामि ते मूलं सङ्कल्पात्किल जायस' इत्यादिस्मृतेः । सर्वकामपरित्यागे च सर्वकर्मपरित्यागः सिद्धो भवति, 'स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते' इत्यादिश्रुतिभ्यः, 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टित'मित्यादिस्मृतिभ्यश्च, न्यायाच्च । नहि सर्वसंकल्प-

एतेषु कुतो नानुषज्जते इत्यत आह—प्रयोजनाभावबुद्ध्येति । विषयभोगसुखस्य कर्मफलस्य अल्पत्वास्थिरत्वसातिशयत्वदुःखोदर्कत्वाद्यनुसन्धानेन तस्याप्रयोजनत्वान्नास्ति विषयजन्यं कर्मसाध्यं वा किञ्चिदपि प्रयोजनं विवेकिन इति भावः ।

ननु कर्मणां घटादिवत्स्वरूपाभावात्कथं तत्सङ्गः पुरुषस्य, येन तन्निवारणं सार्थकं स्यादत आह—कर्तव्यताबुद्धिमिति । कर्माणि मया कर्तव्यानीत्याकारकबुद्धिरेव कर्मसु सङ्गः । स्वरूपवत्सु विषयेषु तु साक्षादेव सङ्ग इति बोध्यम् । यद्वा विषयेषु कर्तव्यताबुद्धिर्भोक्तव्यताबुद्धिस्सङ्ग इति ।

इहेति । इह मनुष्यलोके अर्थाः पशुपुत्रादयः, अमुत्र परलोके अर्थाः स्वर्गादयः तेषु इहामुत्रार्थेषु कामास्तृष्णाः तेषां हेतवः कारणानि तान् कामस्य सङ्कल्पप्रभवत्वात्कामहेतुत्वं सङ्कल्पस्येति भावः । शीलं स्वभावः ताच्छील्ये णिनिः । सन्न्यासीति । योगमारूढो योगारूढः द्वितीयेति योगविभागात्समासः । यावदर्थमाह—प्राप्तयोग इति । यो विषयकर्मसङ्गरहितः सर्वसङ्कल्पसन्न्यासी च तेन ध्यानयोगस्सम्यक्प्राप्त इत्यर्थः । उच्यते विद्वद्भिरिति शेषः, शास्त्रैरिति वा ।

नन्वत्र सङ्कल्पसन्न्यास एवोक्तो, नतु कामसन्न्यास इत्यत आह—सर्वेत्यादि । कारणस्य सङ्कल्पस्यैव त्यागे कुतः कार्यस्य कामस्य सत्त्वमिति भावः । सङ्कल्पमूला इति । सङ्कल्पो मूलः कारणं येषां ते सङ्कल्पमूलाः । हिशब्दः प्रसिद्धिं द्योतयति । तामेव प्रसिद्धिं दर्शयति—संकल्पमूल इत्यादिना । एवं सङ्कल्पत्यागात्कामत्यागमुक्त्वा कामत्यागात्कर्मत्यागसिद्धिं वदति—सर्वेति । कथं कामपरित्यागे कर्मपरित्याग इत्यत्र श्रुत्यादीन् प्रमाणयति—सः कामी यथाकामः यत्पुरुषार्थकामः भवति तत्क्रतुः तत्पुरुषार्थसाधनानुष्ठानदृढनिश्चयो भवति; यत्क्रतुर्भवति यदनुष्ठानदृढनिश्चयो भवति तत्कर्म कुरुते । न्यायाच्चेति । यो यत्कामः सः तत्साधकं कर्म कुरुते तत्तत्कामहेतुत्वात्तत्तत्कर्मणः, यथा जलकामः कूपं गच्छतीत्यनुमानादित्यर्थः ।

न्यायमेव व्यतिरेकमुखेन द्रढयति—नहीति । स्पन्दितुं चलितुमपि चलनसङ्कल्पाभावे चलनाभावादिति भावः । यद्वा चलनसङ्कल्पाभावे चलनकामाभावाच्चलनकामाभावे चलनाभावश्चेति भावः ।

सङ्कल्पाभावे कर्माभाव इति व्यतिरेकव्याप्तिरनेन दर्शिता । सङ्कल्पसत्त्वे कर्मसत्त्वमित्यन्वय-

सन्न्यासी कश्चित् स्पन्दितुमपि शक्तस्तस्मात्सर्वसङ्कल्पसन्न्यासीतिवचनात्सर्वान्कामान् सर्वाणि च कर्माणि त्याजयति भगवान् ॥४॥

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥५॥

यदैवं योगारूढस्तदा आत्मा आत्मना उद्धृतो भवति संसारानर्थव्रातादतः उद्धरेदिति उद्धरेत् संसारसागरे निमग्नमात्मानमात्मना, स्वत ऊर्ध्वं हरेद्योगारूढतामापादयेदित्यर्थ

व्याप्तिस्तु श्रुत्यादिभिर्दर्शिता । अन्वयव्यतिरेकयोर्न्यायत्वं च शास्त्रप्रसिद्धम् । तथा च न्यायाच्चेत्य अन्वयव्यतिरेकरूपन्यायादित्यप्यर्थो वाच्यः । अनुमानमप्येतन्न्यायाधीनसत्ताकमेव- व्याप्तिज्ञानस्यैव तत्र कारणत्वात्; वह्निसत्त्वे धूमसत्त्वं, वह्न्यभावे धूमाभाव इत्यन्वयव्यतिरेकवशादेव हि पर्वते वह्निरनुम शक्यते धूमवत्त्वलिङ्गेन इति ।

तस्मादिति । सङ्कल्पसन्न्यासे कामसन्न्यासपूर्वककर्मसन्न्यासससिद्धेरित्यर्थः । त्याजयती योगानुष्ठात्रेति शेषः । अतस्सर्वकर्मसन्न्यास्येव योगारूढः, नतु गृहस्थ इति नास्ति गृहस्थ योगाधिकार इति भावः ।

यत्तु विषयाननुषङ्गाभ्यासरूपः कर्मयोग इति रामानुजः, तत्तुच्छम्—कर्मानुष्ठानविषयान पङ्गयोर्मिथो विरुद्धत्वात्- इन्द्रियाणां हविरादिविषयानुषङ्गाभावे यज्ञादिकर्मानिष्पत्तेः ॥४॥

उद्धरेदिति । आत्मा स्वयमात्मना स्वेन संसारानर्थव्रातादुद्धृतो भवति । यद्यप्यात्म निमज्जनमुद्धरणं चेति द्वयमसम्भवि, तथापि साभासबुद्धेः बुद्धिप्रतिफलितचिदाभासस्य वा जीव प्रमातुः कूटस्थात्मस्वरूपापरिज्ञानमूलकं यदासीत्संसारसागरे निमज्जनं तदिदानीं कूटस्थात्मस्वरूपज्ञा द्विनश्यतीत्यभिप्रेत्येदमुक्तम् ।

अस्ति हि यावदात्मसाक्षात्कारं बन्धमुक्त्यादिस्सर्वोपि व्यवहारः अविद्यावस्थायां- यथा उ चलतिसति तत्प्रतिफलितस्सूर्यबिम्बश्चलन्निव लक्ष्यते, तथा बुद्धौ संसरन्त्यां तत्प्रतिफलितश्चिदाभासस्संस न्निव दृश्यतेऽज्ञानात्- 'ध्यायतीव लेलायती'ति श्रुतेः । तस्यां च बुद्ध्यां योगेन स्थिरीकृतायां सत्य असंसार्यात्मस्वरूपसाक्षात्कारो जायते- यथा जले निश्चले सति निश्चलसूर्यप्रतिबिम्बसाक्षात्कारः । एवं ततो योगेन बुद्धिं स्थिरीकुर्यात्पुरुषः । ततश्चात्मा संसारव्रातादुद्धृतो भवतीत्यर्थः ।

उद्धरेदिति । अनिमग्नस्योद्धरणासम्भवादाह—संसारसागरे निमग्न इति । संसारसाग निमग्नबुद्धितादात्म्याध्यासात्स्वयमप्यात्मा तत्र निमग्न इव स्थितः, नतु वस्तुतो निमग्न इति भावः ।

आत्मानं स्वं स्वतः स्वेन सार्वविभक्तिकः तसिः । उदित्युपसर्गस्याव्ययस्य ऊर्ध्वार्थकत्वादाह- ऊर्ध्वं हरेदिति । नेदमूर्ध्वनयनं स्वर्गाद्यूर्ध्वलोकगमनं- तस्यापि ससंसारमण्डलान्तःपातित्वात् । ना सत्यलोकगमनं- तस्यापि मायिकत्वादित्यभिप्रेत्याह—योगारूढतामापादयेदिति । प्रमातुरात्मन आत्म स्वरूपावलोकननिष्ठत्वापादनमेवोर्ध्वनयनम् । तत एव संसारसागरोद्धरणरूपोर्ध्वगमनसम्भवादिति भावः

नात्मानमवसादयेत् नाऽधो नयेत्। आत्मैव हि यस्मादात्मनो बन्धुः, न ह्यन्यः कश्चिद्बन्धुः संसारमुक्तये भवति। बन्धुरपि तावत् मोक्षप्रतिकूल एव स्नेहादिबन्धनायतनत्वात्तस्माद्युक्त-

अवसादयेत् खेदयेत् नाशयेदिति वा। तच्चाधोनयनरूपमेवेत्याह—अधोनयेदिति। संसारसागरे न पातयेदित्यर्थः। आत्मावलोकनाभावे संसारसागरपातादिति भावः।

ननु कूपे पतितं तत उद्धन्तुमशक्तं यथोपरिस्थो रज्ज्वादिसाधनैरुद्धरति, तद्वत्संसारसागरे निमग्नं पुरुषमुद्धरेदेव कश्चिदन्यो गुर्वादिरीश्वरादिर्वा इत्यत आह—आत्मैवेति। 'महावाक्योपदेशमात्रमेव गुरुः करोति; चित्तशुद्धिरूपमनुग्रहमेवेश्वरः करोति; पुरुषस्तु वाक्यार्थमननं निदिध्यासनं च स्वयमेव कुर्यात्। एवं विचारेणात्मसाक्षात्कारानुदये गुरूक्तविधया प्राणायामादिरूपं योगं स्वयमेवाभ्यसेत्; विषयेभ्य इन्द्रियाणि मनश्च स्वयमेव निवर्तयेत्; कूटस्थमात्मानं च स्वयमेव साक्षात्कुर्यात्, न त्वन्य-पुरुषसहायसाध्यं किमप्यस्ति- यथा सुषुप्तिः स्वैकसाध्या तथा समाधिरपि स्वैकसाध्य एव। यत एवं तत आत्मैवात्मनो बन्धुरित्युच्यते- मुक्तिप्रदत्वात्। यथा बन्धुः पुरुषस्य भोजनादिसत्कारदानेन सुखप्रदस्तद्वदिति भावः। आत्मा आत्मनो बन्धुरित्यनुक्त्वा आत्मैवात्मनो बन्धुरित्युक्तं, तत्रावधारणार्थमाह—बन्धुरपीति। आत्मन आत्मैव बन्धुः, न त्वन्यः प्राकृतः पितृभ्रात्रादिः- ते हि मोक्षप्रतिकूलत्वादात्मनो नैव बान्धवः।

नहि पुरुषार्थप्रतिबन्धकस्य लोके बन्धुत्वं दृश्यते, द्रव्यापहारिणं द्रव्यागमप्रतिबन्धकं वा पुरुषं न हि लोको बन्धुं स्वस्य मन्यते, किं तर्हि? शत्रुमेव। मोक्षस्तु परमपुरुषार्थ इति सर्वास्तिकजन-सम्मतम्। यस्तु तस्य प्रतिकूलः कथं स बन्धुर्भवेत्। अतो मोक्षरूपपरमपुरुषार्थप्रतिकूलाः पितृभ्रात्रादयः सर्वेऽपि नैव बान्धवाः, किं तर्हि शत्रव एव- पुरुषार्थप्रतिकूलत्वात्।

कुतस्तेषां मोक्षप्रतिकूलत्वमत आह—स्नेहादिबन्धनायतनत्वादिति। स्नेहशोकमोहादि-बन्धनस्थानत्वादित्यर्थः। पित्रादिर्हि पुत्रादिं स्नेहादिना पाशस्थानीयेन दृढं बध्नात्येव, न तु मोचयतीत्यर्थः।

'मय्ययं स्नेहादिमान् यतस्ततोऽस्मिन्मया स्नेहादिमता भाव्यं, कथं मय्यनुरागिणमिमं पुत्रादिजनं परित्यजेयं, इमे वा मामनुरागिणं विहाय क्व गच्छेयुः' इत्येवं परस्परं स्नेहमयपाशेन निबद्धा बान्धवाः परस्परं बन्धका एवेति भावः।

एतेन मुमुक्षोः पितृपुत्रादिसर्वस्वजनपरित्यागरूपः सन्यासाश्रमस्वीकार आवश्यक इति सूचितम्। तस्मादिति। प्राकृतानां पित्रादीनां मोक्षप्रतिकूलत्वेनाबन्धुत्वादित्यर्थः। आत्मैवेति। योगारूढ आत्मैवेत्यर्थः। अन्यस्यात्मनश्शत्रुत्वस्यानन्तरमेव वक्ष्यमाणत्वादिति भावः। नच पित्रादेर-प्यात्मत्वात्कथं तस्याबन्धुत्वमिति वाच्यं, न ह्ययमात्मानं पित्रादिं मन्यते, किं तु देहादिसङ्घातमेव—सङ्घातस्य चानात्मत्वं सर्वसम्मतम्।

न ह्यात्मनि पित्रादिभेदोऽस्ति, येनाऽयमात्मा मत्पिता अयं मद्भ्रातेत्येवं प्रतीयात्। किं तर्हि देहादिसङ्घाते पित्रादिभेदोस्ति- देहादिसङ्घातगताकारभेदाद्धि पितायं भ्रातायमित्येवं प्रत्येति लोकः।

मवधारणमात्मैव ह्यात्मनो बन्धुरिति । आत्मैव रिपुः शत्रुः, योऽन्योऽपकारी बाह्यश्शत्रुः स आत्मप्रयुक्त एवेति युक्तमवधारणं- आत्मैव रिपुरात्मन इति ॥५॥

बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ।
अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥६॥

आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तं, तत्र किं लक्षणः आत्मा आत्मनो बन्धुः, किंलक्षणो वा आत्मा आत्मनो रिपुरित्युच्यते—बन्धुरिति । बन्धुरात्मात्मनस्तस्य तस्यात्मनस्स आत्मा बन्धुः, येनात्मनात्मैव जितः- आत्मा कार्यकरणसङ्घातो येन वशीकृतः जितेन्द्रिय इत्यर्थः । अनात्मन अजितात्मनस्तु शत्रुभावे वर्तेत आत्मैव शत्रुवत् । यथा अनात्मा शत्रुरात्मनोऽपकारी तथा आत्मा आत्मन अपकारे वर्तेत इत्यर्थः ॥६॥

---

आत्मैव रिपुरिति असम्पादितयोग आत्मैवात्मनश्शत्रुः । यस्मादयमात्मानं संसारसागरे निमज्जयति यथा शत्रुः धनाद्यपहरणेन पुरुषं दुःखसागरे निमज्जयति तद्वदिति ।

अत्राप्यवधारणार्थमाह—योन्य इति । अपकारित्वं शत्रोर्लक्षणम् । ननु पूर्ववाक्येन पित्रादिबन्धूनां मोक्षप्रतिकूलत्वाच्छत्रुत्वमिति व्यवस्थापितं, सत्सु च तेषु शत्रुषु कथमात्मैव शत्रुरित्यवधारणं युक्तं स्यादत आह—आत्मप्रयुक्त इति । यद्वा धनाद्यपहारिषु बाह्येषु शत्रुषु बहुषु सत्सु कथमात्मैवेत्यवधारणमत आह—आत्मप्रयुक्त इति ।

अयंभावः—पितृपुत्रादिषु बन्धुषु क्षेत्रवित्ताद्यपहारिषु शत्रुषु वा नास्ति स्वतो बन्धुत्वं शत्रुत्वं वा, किं तर्हि आत्मप्रयुक्तमेव तत्- ममायं पुत्रो ममेदं धनमित्यादिममकाराभावे अहमनेन वर्धितोऽहमनेन नाशित इत्याद्यहङ्काराभावे कः कस्य कथं बन्धुर्भवेत्कथं वा शत्रुर्भवेत् ? न कथमपि । तथा च अहङ्कारममकाररूपात्माभिमानप्रयुक्तत्वाद्बन्धुत्वशत्रुत्वयोः बन्धुश्शत्रुश्चात्मप्रयुक्त एवेति ।

एतेन पूर्ववाक्योक्तं बन्धुगतं मोक्षप्रतिकूलत्वरूपं शत्रुत्वं, एतद्वाक्योक्तमर्थादिपुरुषार्थप्रतिकूलत्वरूपं शत्रुगतं शत्रुत्वं चात्मप्रयुक्तमेव- पित्रादिपिण्डेष्वात्मनः स्नेहाभावे, शत्रुहृतधनादिष्वात्मनो ममकाराभावे च पित्रादीनां मोक्षप्रतिकूलत्वस्य शत्रूणामर्थप्रतिकूलत्वस्य चासम्भवादिति सिद्धम् । अत एवोक्तमात्मैव बन्धुरात्मैव रिपुरात्मन इति ॥५॥

जितेन्द्रिय आत्मैवात्मनो बन्धुः, अजितेन्द्रिय आत्मैवात्मनश्शत्रुरिति पर्यवसन्नार्थः । येनात्मना आत्मैव जितः तस्यात्मनस्स आत्मा बन्धुः, अनात्मनस्तु शत्रुत्वे आत्मैव शत्रुवद्वर्तेतेत्यन्वयः ।

किं लक्षणं यस्य स किंलक्षण—तस्यात्मनस्स आत्मेति । जितात्मन आत्मनः जितात्मा आत्मा इत्यर्थः । यो हि जितात्मा आत्मा स एव स्वस्य जितात्मनो बन्धुरिति यावत् ।

कथं स्वेनैवात्मना स्वयमात्मा जितो भवेदित्यत आत्मशब्दस्यार्थान्तरमाह—कार्यकरणसङ्घात इति । कार्यं देहः करणानीन्द्रियाणि तेषां सङ्घातस्समूहः । इन्द्रियव्यापाराधीनत्वात्कायव्यापारस्य न कायजयस्य पृथग्वचनमित्यभिप्रेत्याह—जितेन्द्रिय इति । अत्रेन्द्रियशब्देन मनसोपि ग्रहणं—वेदान्तमतैकदेशे मनसोपीन्द्रियत्वात् । अन्तरिन्द्रियमिति हि तस्य व्यवहारः ।

जितात्मनः प्रशान्तस्य परमात्मा समाहितः ।
शीतोष्णसुखदुःखेषु तथा मानावमानयोः ॥७॥

जितात्मन इति । जितात्मनः कार्यकरणसङ्घात आत्मा जितो येन सः जितात्मा; तस्य जितात्मनः प्रशान्तस्योपशान्तस्य परमात्मा समाहितः साक्षादात्मभावेन वर्तत इत्यर्थः ।

अनात्मनः अविद्यमान इति नार्थः- तस्यासम्भवात्, असङ्गत्वाच्च । किंतु अजितात्मन इति । शाकपार्थिवादित्वाज्जितपदलोपः । अविद्यमानपदस्यैवाजित इत्यर्थ इति वा धातूनामनेकार्थत्वात् । नञोऽस्त्यर्थानामिति विद्यमानपदलोपः । अस्वाधीनत्वाद्विरुद्ध आत्मा यस्य स अनात्मेति वा । नञो विरोधार्थकत्वात् अजितेन्द्रियस्येत्यर्थः ।

आत्मैवेति । अजितेन्द्रियः स्वयमेवेत्यर्थः । शत्रुवद्वर्तनं नाम अपकारकरणमित्याह— यथेत्यादिना । अजितेन्द्रियस्यात्मापकारित्वं चात्मनस्संसारसागरे पातनमेव, शत्रोरात्मापकारित्वं चात्मनो दुःखसागरे पातनम् । तस्मादजितेन्द्रियस्सन् पुरुषो नात्मानमवसादयेत् शत्रुवत्, किंतु जितेन्द्रियस्सन्नात्मानमुद्धरेन्मित्रवदिति फलितार्थः ॥६॥

जितात्मन इति; प्रशान्तस्येति । वाचिकमानसिककायिकसर्वव्यापारोपरमरूपं प्रकृष्टं शमं प्राप्तस्येत्यर्थः । समाहितः सम्यगाहितः स्थितः भवतीति शेषः । सम्यक्पदार्थमाह—साक्षादिति । प्रत्यक्षमित्यर्थः । केन रूपेण साक्षात्त्वमत आह—आत्मभावेनेति । आहितशब्दार्थमाह—वर्तत इति । साक्षादात्मत्वेन प्रतिभातीति यावत् ।

यस्त्वजितात्मा स आत्मानं कूटस्थमविदित्वा प्रमातारमात्मानं मत्वा कूटस्थमीश्वरमन्यं परोक्षं मन्यते अतो न तद्दृष्ट्या परमात्मान आत्मत्वेन वर्तनं यः पुनर्जितेन्द्रियस्स आत्मानं कूटस्थमीश्वरं वेत्तीति तद्दृष्ट्या परमात्मान एवात्मत्वेन वर्तनमिति भावः ।

जितेन्द्रियस्यैव स्वात्मभूतपरमात्मसाक्षात्कारो न त्वजितेन्द्रियस्येति परमार्थः ।

अत्र जितात्मनः प्रशान्तस्य हृदि परमात्मा समाहित इत्यप्यन्वयस्सम्भवति, अर्थस्तु पूर्वोक्त एव । शास्त्रोपदेशशमदमादिसंस्कृतमनस आत्मदर्शने करणत्वात्तादृशे समाहिते मनसि परमात्मा स्वयमात्मत्वेन स्फुरतीत्यर्थः ।

उक्तं हि हंसगुह्ये व्यासेन भागवते—'यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतसम्प्रमोषात् । य ईयते केवल्या स्वसंस्थया हंसाय तस्मै शुचिपद्मने नमः' इति जितेन्द्रियस्य मनस्युपरते हंसात्म्यात्मस्फुरणं स्वत एव भवतीति श्लोकार्थः ।

यद्यपि 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'तीति सर्वस्यापि हृदि परमात्मा समाहित एव, तथापि न तु सर्वो वेत्ति किंतु प्राज्ञ एव । ततश्च यं परमात्मानं हृद्गतं न वेत्ति परमात्मा तस्य हृदि अवर्तमान इव वर्तते । पारोक्ष्येण यस्तु वेत्ति तस्य हृदि साक्षादात्मत्वेन वर्तत एवेत्यभिप्रायेण- 'जितात्मनः प्रशान्तस्य परमात्मा समाहित' इत्युक्तं व्यासेन । शङ्करेण न तथैव भाषितं साक्षादात्मभावेन वर्तत इत्यर्थ इति । साक्षादात्मत्वेन प्रतिभातीति पूर्वोक्तरीतौ तु न कापि शंकेति बोद्धव्यम् ।

किंच शीतोष्णसुखदुःखेषु च, तथा माने च अवमाने च मानावमानयोः पूजापरिभवयोस्समस्स्यात् ॥७॥

ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ।
युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥८॥

ज्ञानेति । ज्ञानविज्ञानतृप्तात्मा ज्ञानं शास्त्रोक्तपदार्थानां परिज्ञानं, विज्ञानं तु शास्त्रतो ज्ञातानां तथैव स्वानुभवकरणं ताभ्यां ज्ञानविज्ञानाभ्यां तृप्तः सञ्जातालंप्रत्ययः आत्मा यस्य स ज्ञानविज्ञानतृप्तात्मा कूटस्थः अप्रकम्पो भवतीत्यर्थः । विजितेन्द्रियश्च ईदृशो युक्तस्समाहित इति उच्यते कथ्यते । स योगी समलोष्टाश्मकाञ्चनः लोष्टाश्मकाञ्चनानि समानि यस्य सः ॥

सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ।
साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥९॥

किंच, सुहृदिति । सुहृदित्यादिश्लोकार्धमेकं पदं । सुहृदिति प्रत्युपकारानपेक्ष्यैवोपकर्ता, मित्रं स्नेहवान्, अरिः शत्रुः, उदासीनः न कस्यचित्पक्षं भजते मध्यस्थः विरुद्धयोरुभयोर्हितैषी,

---

किंचेति । जितेन्द्रियस्य योगिन इदमप्यावश्यकमिति भावः । सम इति मूले शेषः । जितेन्द्रिय इति, योगीति वा कर्तुरुभयत्र शेषः । समो हर्षविषादवर्जितः । साम्याभावे तु विकारप्रसङ्गेन जितेन्द्रियत्वं भज्येत, तेन च योगो नैव निष्पद्येत, तस्मात्समत्वं योग उच्यत इति प्रागुक्तस्समत्वरूपो योगोऽपि ध्यानयोगिन आवश्यक इति भावः ॥७॥

ज्ञानेति । ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः पुरुषः युक्त इत्युच्यते । योगीत्यादिकमुत्तरश्लोकान्वयि । तथैवेति शास्त्रोक्तविधयैवेत्यर्थः । स्वानुभवकरणं स्वानुभवापादनम् । ज्ञानविज्ञानयोर्विषयपारोक्ष्यापरोक्ष्याभ्यां भेद इति भावः ।

अलम्प्रत्ययोऽलंबुद्धिः, आत्मा मनः, बुद्धिर्वा । कूटवत्तिष्ठतीति कूटस्थः निर्विकारः, अप्रकम्पो निश्चल इति यावत् । यद्यपि वस्तुत आत्मा कूटस्थएव, तथापि बुद्धौ चलन्त्यामकूटस्थ इव प्रतिभातीति कूटस्थ इत्युक्तम् । बुद्धिचाञ्चल्याभावात्कूटस्थरूपेण प्रतिभातीत्यर्थः । निश्चलबुद्धिरिति कूटस्थशब्दस्य यावदर्थः समाहितश्चित्तसमाधानवान् । योगो हि चित्तसमाधानं उच्यते शास्त्रे शास्त्रैरिति वा । नत्वनेवंविधस्य कापि कथमपि चित्तसमाधानं भवितुमर्हतीति भावः ॥८॥

सुहृदिति । समलोष्टाश्मकाञ्चनः सुहृदादिषु साधुषु पापेष्वपि च समबुद्धिर्योगी विशिष्यते । लोष्टं मृत्पिण्डः अश्मा पाषाणः उपलो मणिर्वा काञ्चनं हेम एतानि यस्य समानि स समलोष्टाश्मकाञ्चनः - लोष्टादिषु न परित्याज्यताबुद्धिः, काञ्चने न स्वीकार्यताबुद्धिर्योगिन इत्यर्थः । लोष्टादिकमिव काञ्चनमपि परित्यजत्येव नतु स्वीकरोतीति यावत् । द्रव्यसाध्यप्रयोजनाभावादस्य । इदं तु काञ्चने अमरादिर्यं दुष्करं योगिनः । यत उक्तं- 'द्वेधा द्वेधा भ्रमं चक्रे कान्तासु कनकेषु च । तासु तेष्वप्यनासक्तः साक्षाद्भर्गो नराकृति'रिति । तस्मात्काञ्चनं सत्त्वतत्परित्याज्यं योगिनः ।

ः आत्मनः अप्रियः; बन्धुस्सम्बन्धीत्येतेषु, साधुषु शास्त्रानुवर्तिषु, अपि च पापेषु प्रति-
कारिषु, सर्वेषु तेषु समबुद्धिः कः कर्ता किं कर्मेत्यव्याकृतबुद्धिरित्यर्थः। विशिष्यते; स
त इति पाठान्तरम्। योगारूढानां सर्वेषामयमुत्तम इत्यर्थः ॥९॥

योगी युञ्जीत सततमात्मानं रहसि स्थितः।
एकाकी यतचित्तात्मा निराशीरपरिग्रहः ॥१०॥

अतएव उत्तमफलप्राप्तये—योगीति। योगी ध्यायी युञ्जीत समादध्यात् सततं
। आत्मानमन्तःकरणं रहस्येकान्ते गिरिगुहादौ स्थितस्सन् एकाकी असहायः रहसि
ः; एकाकी चेति विशेषणात् सन्न्यासीत्यर्थः। यतचित्तात्मा चित्तमन्तःकरणमात्मा

---

समबुद्धिरिति। समा अविकृता बुद्धिर्यस्य स समबुद्धिः, समः आत्मा तस्मिन् बुद्धिर्यस्य स
द्धिरिति वा- समदर्शीत्यर्थः। इदमेवाहाव्याकृतबुद्धिरिति। अव्याकृतो निर्विकार आत्मा,
कृता विकृतिरहिता बुद्धिर्यस्य स इति वा।

बुद्धिमेवाभिनीय दर्शयति—कः कर्ता किं कर्मेति। आत्मनोऽविकारित्वादनात्मनोऽचेतनत्वा-
त कर्ता। तथा आत्मान्यस्य सर्वस्यापि मृषात्वात्कर्मापि नास्ति। यद्वा ममाकर्तृत्वाद्देहादेरना-
त्वास्ति कर्मेत्यर्थः।

विशिष्यत इति। न ज्ञानयोगिभ्यः- सर्वोत्तमत्वात्तेषां, न च कर्मयोगिभ्यः- कर्मयोग्यपेक्षया
योगिन उत्कर्षस्य स्वतस्सिद्धत्वेन वचनानर्हत्वात्। किंतु स्वेतरध्यानयोगिभ्य एवेत्यभिप्रेत्याह—
रूढानामिति। सर्वेषां मध्ये इत्यर्थः। सर्वत्र समबुद्धिमत्त्वात् समबुद्धेश्च ज्ञानयोगप्रधानांशत्वा-
भावः ॥९॥

योगीति। योगी रहसि स्थितः एकाकी यतचित्तात्मा निराशीरपरिग्रहश्च सन्नात्मानं सततं
। ध्यायीत, ध्यानशीलः आत्मानं युञ्जीत चित्तं ब्रह्मणि समादध्याद्ब्रह्मणि चित्तसमाधानं कुर्यात्।

असहाय' भार्यादिसहायरहितः; गृहस्थस्य गृहएव स्थितिः, नतु गिरिगुहादौ, भार्यासहितस्यैव
स्य कर्मस्वधिकारो नतु तद्रहितस्येति। यद्वा गृहस्थस्य भार्यादिसहायपरित्यागोऽनुचितः- भार्यादि-
स्य दोषावहत्वात्- 'ऋतौ भार्यामुपेया'दित्यादिशास्त्रात्। अतो न गृहस्थस्यैकाकित्वं रहस्स्थितत्वं
ऽभवतीति कृत्वा एकाकी रहसि स्थित इति विशेषणात्सन्न्यासिलाभ इत्याह—रहसीति।

नच भार्यापरित्यागो गृहस्थस्येव सन्न्यासिनोपि दोषावहएव- 'ऋतौ भार्यामुपेया'दिति शास्त्र-
ादिति वाच्यं, ऋताविति शास्त्रस्य परिसङ्ख्याविधित्वेन ऋतुकालइव तदितरकालेष्वपि भार्यागमनं
नित्यप्राप्त तं गृहस्थं प्रत्येव ऋतावेव भार्यामुपेयादिति विहितं, नतु सन्न्यासिनं प्रति। तस्य
या एवाभावेन तद्गमनस्याऽप्राप्तत्वात्।

न चैतदर्थमपूर्वविधिरेव स इति वाच्यं, गृहस्थे भार्यागमनस्य नित्यप्राप्तत्वेनापूर्वविधित्वाभावात्।
ासिनस्सर्वपरित्यागस्य विधानाच्च 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दित्यादिशास्त्रेण।

देहश्च संयतौ यस्य सः यतचित्तात्मा निराशीर्विगततृष्णः अपरिग्रहः परिग्रहरहितश्च । सन्न्यासित्वेपि त्यक्तसर्वपरिग्रहस्सन् युञ्जीतेत्यर्थः ॥१०॥

शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ।
नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरम् ॥११॥

अथेदानीं योगं युञ्जानस्य आसनाहारविहारादीनां योगसाधनत्वेन नियमो वक्तव्यः प्राप्तयोगलक्षणं तत्फलादिकं चेत्यत आरभ्यते- तत्र आसनमेव तावत् प्रथममुच्यते—शुचाविति । शुचौ शुद्धे विविक्ते स्वभावतः संस्कारतो वा देशे स्थाने प्रतिष्ठाप्य स्थिरमचलं आत्मन आसनं नात्युच्छ्रितं अतीवोच्छ्रितं अत्युच्छ्रितं नाप्यतिनीचं तच्च चेलाजिनकुशोत्तरं चेलं अजिनं कुशाश्चोत्तरे यस्मिन्नासने तदासनं चेलाजिनकुशोत्तरं विपरीतोत्र क्रमश्चेलादीनां प्रतिष्ठाप्य ॥११॥

---

तस्मादेकाकित्वं रहस्स्थितिश्चेति द्वयं सन्न्यासिनएव, नतु गृहस्थस्य- गृहे तिष्ठतीति गृहस्थः, गृहे भार्यया सह तिष्ठतीति गृहस्थ इति च व्युत्पत्तेः ।

संयतौ नियमितौ युक्ताहारविहारादिना स्वायत्तीकृतावित्यर्थः । परिग्रहः धनधान्यादिः । यद्यपि सन्न्यासिनोऽपरिग्राह्यमेव, तथापि सन्न्यासोचितकाषायाम्बरादिपरिग्रहनिषेधायोक्तमपरिग्रह इत्याह—सन्न्यासित्वेपीति । सन्न्यासिनो यः परिग्रह आवश्यकः तमपि त्यजेदित्यर्थः । एतेन दिगम्बरत्वं दण्डकमण्डलुराहित्यं च परमहंससन्न्यासाश्रमलक्षणं सूचितम् ।

यद्वा सन्न्यासी भवन्नपि यः कश्चन देवालयादिधर्मकार्यार्थं धनादिपरिग्रहं सम्पादयेत् तं प्रत्याह—अपरिग्रह इति । सन्न्यासिनो देवालयादिधर्मकार्यसाध्यप्रयोजनाभावात्सन्न्यासिनो मुमुक्षुत्वान्मोक्षस्याकार्यत्वात्किं मुमुक्षोस्सन्न्यासिनो धर्मकार्यैरधर्मकार्यैर्वा । तस्मात्सन्न्यासित्वेपि परिग्रहरहितएव स्याद्योगी । सति परिग्रहे तद्रक्षादिव्यग्रस्य चित्तस्य ब्रह्मणि समाधानालाभादिति भावः ।

यत्तु रामानुजः—योगी कर्मयोगनिष्ठः यतचित्तात्मा यतचित्तमनस्क इति, तत्तुच्छम्—कर्मयोगिनो विजनस्थित्यसम्भवात्, कारकादिसापेक्षो हि कर्मयोगः । यतचित्त इत्यनेन यतमन इत्यनेन वा विवक्षितमनोजये सिद्धे यतचित्तमनस्क इति चित्तमनसोर्ग्रहणं पुनरुक्तम् ॥१०॥

शुचाविति । प्राप्तयोगलक्षणं योगारूढलक्षणं च वक्तव्यं तत्फलादिकं च वक्तव्यमित्यतो हेतोरारभ्यते उत्तरग्रन्थ इति शेषः । शुचौ स्वभावतः शुद्धे परिशुद्धे संस्कारतो विविक्ते विजने निस्संसारे इत्यर्थः । संसारः पशुशिश्वादिः । शुचौ देशे नात्युच्छ्रितं नातिनीचं चेलाजिनकुशोत्तरं स्थिरमात्मन आसनं प्रतिष्ठाप्येत्यन्वयः । आसनं दार्वादिमयं पीठं । विपरीत इति । कुशाजिनचेलानीत्यर्थः । आसनस्योपरि कुशाः, तदुपर्यजनं, तदुपरि चेलं चेति क्रमः प्रतिष्ठाप्य स्थापयित्वा ॥११॥

तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ।
उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥१२॥

किंच, तत्रेति । तत्र तस्मिन्नासने उपविश्य योगं युंज्यात्- समाधानं कुर्यात् । कथं, सर्वविषयेभ्य उपसंहृत्य एकाग्रं कृत्वा मनः । यतचित्तेन्द्रियक्रियः चित्तं च इन्द्रियाणि च चित्तेन्द्रियाणि तेषां क्रियाः संयताः यस्य सः यतचित्तेन्द्रियक्रियः । स किमर्थं योगं युञ्ज्यादित्याह—आत्मविशुद्धये अन्तःकरणस्य शुद्ध्यर्थमित्येतत् ॥१२॥

समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ।
सम्प्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥१३॥

बाह्यमासनमुक्तमधुना शरीरधारणं कथमित्युच्यते—सममिति । समं कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं, तत् समं धारयन्नचलं च समं धारयतश्चलनं सम्भवत्यतो विशिनष्टि- अचलमिति । स्थिरःस्थिरो भूत्वेत्यर्थः । संप्रेक्ष्य सम्यक्प्रेक्षणं दर्शनं कृत्वेवेतीवशब्दो लुप्तोद्रष्टव्यः । न हि स्वनासिकाग्रसम्प्रेक्षणमिह विधित्सितं, किं तर्हि चक्षुषोर्दृष्टिसन्निपातः । स चान्तःकरणसमाधानापेक्षो विवक्षितः- स्वनासिकाग्रसम्प्रेक्षणमेव चेद्विवक्षितं मनस्तत्रैव समाधीयेत, आत्मनि हि मनससमाधानं वक्ष्यति आत्मसंस्थं मनः कृत्वेति । तस्मादिवशब्दलोपेनाक्ष्णोः दृष्टिसन्निपात एव सम्प्रेक्ष्येत्युच्यते । स्वं दिशश्च अनवलोकयन् दिशां चावलोकनं स्वयमकुर्वन्नित्येतत् ॥१३॥

---

तत्रेति । तत्रासने उपविश्य यतचित्तेन्द्रियक्रियस्सन् मन एकाग्रं कृत्वा आत्मविशुद्धये योगं युञ्ज्यात् । एकाग्रमिति । एकमग्रं चिन्तनीयमस्येत्येकाग्रम् । 'एकाग्रमेकताने स्यादेकाग्रं चाप्यनाकुले' इति विश्वः । एकतानं सावधानं आत्मैकध्यानपरमिति यावत् । इदं च मनसो विषयप्रत्याहारं विना न सम्भवतीत्यभिप्रेत्याह—सर्वविषयेभ्य उपसंहृत्येति । निवर्त्येत्यर्थः । आत्मविशुद्धये आत्मा नात्र कूटस्थः- तस्य सर्वपवित्रीकरणक्षमस्य स्वतः पवित्रतमस्य भवितव्यशुद्ध्यभावात् । किंतु मन एवेत्याह—अन्तःकरणमिति । तस्य शुद्धिर्नाम रागादिदोषाभावः प्रसन्नतेति यावत् ॥१२॥

सममिति । कायशिरोग्रीवं सममचलं च धारयन् स्थिरो भूत्वा स्वं नासिकाग्रं सम्प्रेक्ष्यैव दिशश्चानवलोकयन् सन् प्रशान्तात्मा विगतभीः ब्रह्मचारिव्रते स्थितश्च सन् योगीति शेषः; मनः संयम्य मच्चित्तः युक्तः मत्परश्च सन्नासने इति शेषः । आसीत इति श्लोकद्वयस्यान्वयः ।

कायशिरोग्रीवमिति समाहारत्वादेकत्वं क्लीबत्वं च । कायश्च शिरश्च ग्रीवा च तत्समाहारः कायशिरोग्रीवम् । कण्ठश्रोणिमध्यदेशोऽत्र कायः- ऊर्वादिकायस्यासनबन्धनेनैव समीकृतत्वादचलीकृतत्वाच्च । ग्रीवाग्रहणं स्पष्टार्थं- शिरश्चलनं विना ग्रीवाचलनासम्भवात्, शिरसि समेऽचले च कृते सति ग्रीवायास्समत्वाचलत्वलाभाच्च ।

स्थिर इति । स्थैर्यमत्र बुद्धिगतं बोध्यम्- कायगतस्योक्तत्वात् । स्थिरबुद्धिरित्यर्थः । यद्वा काय-

प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ।
मनस्संयम्य मच्चित्तो युक्त आसीत मत्परः ॥१४॥

किंच, प्रशान्तेति । प्रशान्तात्मा प्रकर्षेण शान्तः आत्मान्तःकरणं यस्य सोऽयं प्रशान्तात्मा, विगतभीः विगतभयः, ब्रह्मचारिव्रते स्थितः ब्रह्मचारिणो व्रतं ब्रह्मचारिव्रतं ब्रह्मचर्यं गुरुशुश्रूषा भैक्षभुक्त्यादि तस्मिन् स्थितस्तदनुष्ठाता भवेदित्यर्थः । किंच मनस्संयम्य मनसो वृत्तीस्संयम्येत्येतत् । मच्चित्तो मयि परमेश्वरे चित्तं यस्य सोऽयं मच्चित्तः, युक्तः समाहितस्सन् आसीत उपविशेत्; मत्परः अहं परो यस्य सोऽयं मत्परो भवति । कश्चिद्रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेन गृह्णाति, किं तर्हि राजानं महादेवं वा । अयं तु मच्चित्तो मत्परश्च ॥

युञ्जन्नेवं सदात्मानं योगी नियतमानसः ।
शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥१५॥

अथेदानीं योगफलमुच्यते—युञ्जन्निति । युञ्जन् समाधानं कुर्वन् एवं यथोक्तेन विधिना सदात्मानं सर्वदा योगनियतमानसः नियतं संयतं मानसं मनो यस्य सोयं नियतमानसः- शान्तिमुपरतिं निर्वाणपरमां निर्वाणं मोक्षः परमा निष्ठा यस्याश्शान्तेः सां निर्वाणपरमां मत्संस्थां मदधीनां अधिगच्छति प्राप्नोति ॥१५॥

---

शिरोग्रीवं सममचलं धारयन्नतएव स्थिर इति । अनेन च स्थिरपदेन चिरकालं कायाद्यचलनपूर्वकमासने स्थातुं क्षम इति व्यज्यते ।

दृष्टिसन्निपात इत्यस्य दृष्टेस्सन्निपातो रूपादिविषयप्रवृत्तिराहित्यमित्यर्थः । स चेति । दृष्टिसन्निपात इत्यर्थः । अन्तःकरणस्य समाधानमपेक्षत इत्यन्तःकरणसमाधानापेक्षः अन्तःकरणसमाधानार्थ इत्यर्थः । तत्रैव नासाग्रसंप्रेक्षण एव । स्वं स्वीयमित्यर्थः । स्वयमिति वा । स्वो ज्ञातावात्मनि स्वमिति आत्मार्थे क्लीबत्वात् ॥१३॥

प्रशान्तात्मेति । शान्तः प्रसन्नः । विगतभीरिति । निर्जनदेशस्थित्यादिप्रयुक्तभयरहित सर्वशून्यात्मावलोकनप्रयुक्तभयरहित इति वा । अभये भयदर्शन इति निर्विकल्पसमाधेर्भयहेतुत्वमुक्तं हि गौडपादाचार्यैः । मनस्संयमनं नाम मनसो निर्वृत्तीकरणं; कामादिवृत्तिसत्त्वे मनश्चाञ्चल्यादिति भावः ।

मच्चित्त आत्मनिष्ठमना इत्यर्थः । परमेश्वरस्यैवात्मत्वात् । ननु यो यच्चित्तस्स तत्परएव भवतीति मत्पर इति विशेषणं व्यर्थमत आह—कश्चिदिति । परत्वेन उत्कृष्टत्वेन प्राप्यत्वेनेति वा । अयं योगी तु मत्परश्च मय्येव परत्वबुद्धिमान् ॥१४॥

युञ्जन्निति । योगी नियतमानसः एवं सदा आत्मानं युञ्जन् मत्संस्थां निर्वाणपरमां शान्तिमधिगच्छति । आत्मानमन्तःकरणं युञ्जन् ब्रह्मणि समाहितं कुर्वन्नित्यर्थः । शान्तिमुपरतिं सर्वकर्मसन्न्यासमिति यावत् । निष्ठापर्यवसानं फलमिति यावत् । मदधीनामिति । अकर्त्रात्मस्वभावभूतामित्यर्थः । एवं समाहितमना निर्व्यापारस्तूष्णीमात्मानमवलोकयन् वर्तेत इत्यर्थः ॥१५॥

नात्यश्नतस्तु योगोस्ति नचैकान्तमनश्नतः ।
नचातिस्वप्नशीलस्य जाग्रतो नैव चार्ज्जुन ॥१६॥

योगिनः आहारादिनियम उच्यते—नेति । न अत्यश्नतः आत्मसम्मितं अन्नपरिमाणं अतीत्य अश्नतःअत्यश्नतः योगोस्ति,नचैकांतमनश्नतः योगोस्ति; तदुक्तं- 'यदुह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदव'तीति श्रुतेः। तस्माद्योगी आत्मसम्मितादन्नादधिकं न्यूनं वा नाश्नीयात् । अथ वा योगिनो योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रमश्नतो योगो नास्ति, उक्तं हि- 'अर्धं सव्यञ्जनान्नस्य तृतीयमुदकस्य च । वायोस्सञ्चरणार्थं तु चतुर्थमवशेषयेत् ॥' इत्यादिपरिमाणम् । तथा न चातिस्वप्नशीलस्य योगो भवति; नैव चातिमात्रं जाग्रतो योगो भवति चार्जुन ! ॥१६॥

युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ।
युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥१७॥

कथं पुनर्योगो भवतीत्युच्यते—युक्ताहारेति । युक्ताहारविहारस्य आह्रियत इत्याहारोऽन्नं विहरणं विहारः पादक्रमः तौ युक्तौ नियतपरिमाणौ यस्य; तथा अन्या च नियता चेष्टा यस्य कर्मसु- तथा युक्तस्वप्नावबोधस्य युक्तौ स्वप्नावबोधौ स्वप्नश्च अवबोधश्च तौ नियतकालौ यस्य तस्य युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु युक्तस्वप्नावबोधस्य योगिनो योगो भवति दुःखहा दुःखानि सर्वाणि हन्तीति दुःखहा, सर्वसंसारदुःखक्षयकृद्योगो भवतीत्यर्थः ॥१७॥

---

नेति; आत्मसम्मितमिति । आत्मनः स्वस्य सम्यक् मितं सम्मितं आत्मतृप्तये पर्याप्तमित्यर्थः । स्वजठरकोशाय पर्याप्तमिति वा ।

यदिति श्रुतेरयमर्थः- उ ह वेति प्रसिद्धौ । यदात्मसम्मितमन्नं तत्पुरुषं भोक्तारमवति रक्षति । तच्च न हिनस्ति न नाशयति रोगादिजननद्वारेति भावः । यद्भूयः अपरिमितमन्नं तच्च हिनस्ति; यत्कनीयः अल्पमप्यन्नं तन्नावति, किंतु हिनस्त्येवेत्यर्थः ।

यस्मादिति । आत्मसम्मितान्न्यूनाधिकान्नयोररक्षकत्वात्प्रत्युत हिंसकत्वाच्चेत्यर्थः । अल्पाशने शरीरधारणं न सम्भवति, अधिकाशने शरीरादीनामालस्यत्वं न सम्भवतीति भावः ।

व्यञ्जनानि घृतसूपादीनि । अर्धमिति । अन्नकोशस्येति शेषः । अयं श्लोकः 'द्वौ भागौ पूरयेदन्नैः तोयेनैकं प्रपूरयेत् । मारुतस्य प्रचारार्थं चतुर्थमवशेषये'दिति प्रकारान्तरेणापि पठ्यते । अर्थस्त्वभिन्न एव । अन्नैरिति बहुत्वं व्यञ्जनापेक्षया । एतेन मिताशिन एव योगलाभ इति सिद्धम् ।

अतिस्वप्नशीलं अतिस्वप्नोऽत्यन्तनिद्राशीलं यस्य स अतिस्वप्नशील.- नक्तं दिवमपि निद्राण इत्यर्थः । तस्य अतिनिद्रा अतिजागरणं च योगिना परित्याज्यमित्युत्तरार्धार्थः ॥१६॥

युक्तेति । आह्रियते भुज्यते । पादक्रमः पादविक्षेपः; सञ्चार इति यावत् । न केवलमाहार-

यदा विनियतं चित्तमात्मन्येवावतिष्ठते ।
निस्पृहस्सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥१८॥

अथाऽधुना कदा युक्तो भवतीत्युच्यते—यदेति । यदा विनियतं विशेषेण नियत संयतं एकाग्रतामापन्नं चित्तं हित्वा बाह्यार्थचिन्तामात्मन्येव केवलेऽवतिष्ठते, स्वात्मनि स्थितिं लभत इत्यर्थः । निस्पृहस्सर्वकामेभ्यो निर्गता स्पृहा तृष्णा दृष्टादृष्टविषयेभ्यो यस्य योगिनः स युक्तस्समाहित इत्युच्यते तदा ॥१८॥

यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥१९॥

योगिनः समाहितचित्तस्योपमोच्यते—यथेति । यथा दीपः प्रदीपः निवातस्थो निवाते वातवर्जिते देशे स्थितः नेङ्गते न चलति, सा उपमा उपमीयते अनयेत्युपमा योगज्ञैः चित्तप्रचारदर्शिभिः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्य युञ्जतो योगमनुतिष्ठत आत्मनः समाधिमनुतिष्ठत इत्यर्थः ॥१९॥

---

रहितो गमनरहितश्च स्यात्, नाप्यतिमात्रमाहारवान् सञ्चारवान् वा स्यादित्यर्थः । कर्मसु स्नानादिषु चेष्टा व्यापार; अवबोधो जागरम् ॥१७॥

यदेति । मनस केवलात्मस्थितिलाभे सति तदात्मानन्दानुभवव्यग्रतया तन्मनो न बाह्यविषयानुभवसुखमपेक्षते तुच्छत्वादस्य । अत. सर्वकामेषु निस्पृहत्वं जायते । य एवंविधो योगी स युक्त इत्युच्यते विद्वद्भिश्शास्त्रेण वा ॥१८॥

यथेति । निवातस्थो दीपो यथा नेङ्गते सा यतचित्तस्यात्मनो योगं युञ्जतो -योगिन उपमा स्मृता । उपमोच्यते उपमानमुच्यत इत्यर्थः । यथेति । य इत्यर्थः । सेति विधेयप्राधान्यात् स्त्रीत्वम् । स इत्यर्थ । दीप इति यावत् । यो दीपो निवातस्थो नेङ्गते स दीपो योगिन उपमा स्मृता· निवातस्थो निश्चलदीपो योगिन उपमानभूत इत्यर्थः ।

कै· स्मृतेत्यत आह—योगज्ञैरिति । योगिन एव स्वानुभवानुसारेण स्वस्योपमानं निवातस्थदीपमुक्तवन्त इत्यर्थ । योगं युञ्जत इति पाकं पचति वाचं वदतीत्यादिवन्निर्देश. ।

यद्वा योगशब्दसान्निध्यबलाद्युञ्जत इत्यस्य अनुष्ठानसामान्यमेवार्थः, नतु योगानुष्ठानविशेष— पौनरुक्त्यात् । अत एवाहानुतिष्ठत इति; आत्मनो योगं युञ्जत आत्मन· समाधिमनुतिष्ठत इत्यर्थ । आत्मात्र मन तस्यैव समाधेयत्वात् । बुद्धिरिति वा, नतु प्रत्यक् तस्य समाधानायोगात् ।

अथ वा आत्मा प्रत्यगेव- विषयविषयिभावसम्बन्धे शेषे षष्ठी । आत्मनो योगमात्मविषयकं योगमित्यर्थ· । योगश्चित्तसमाधानम् । पूर्वोक्तार्थे तु समाधानमात्रमेवार्थ । आत्मविषयकचित्तसमाधानं नाम आत्मनि चित्तसमाधानं तद्युञ्जतोऽनुतिष्ठत इति । आत्मनि चित्तं समाहितवत इत्यर्थ· । आत्मनि समाहितचित्तस्येति यावत् । आत्मनो मनस इति मते तु मनसो योगं समाधानं प्रकरणादात्मन्येवेति बोध्यम् ।

यत्रोपरमते चित्तं निरुद्धं योगसेवया ।
यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥२०॥

एवं योगाभ्यासबलात् एकाग्रीभूतं निवातप्रदीपकल्पं सत्, यत्रेति । यत्र यस्मिंश्च काले उपरमते चित्तमुपरतिं गच्छति- निरुद्धं निवारितं योगसेवया सर्वतो निवारितप्रचारं योगानुष्ठानेन, यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेनान्तःकरणेन आत्मानं परं चैतन्यं ज्योतिस्स्वरूपं पश्यन्नुपलभमानः स्व आत्मनि तुष्यति तुष्टिं भजते ॥२०॥

सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ।
वेत्ति यत्र नचैवायं स्थितश्चलति तत्त्वतः ॥२१॥

किंच- सुखमिति । सुखमात्यन्तिकं अत्यन्तमेव भवतीत्यात्यन्तिकं अनन्तमित्यर्थः । यत्तद्बुद्धिग्राह्यं बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यं अतीन्द्रियमिन्द्रियगोचरातीत-

---

यथा निवातस्थो दीपः न चलति तथा आत्मयोगे स्थितो योगी न चलतीति परमार्थः । न च योगिन आत्मत्वेन आत्मनश्चाचलत्वेन चलनस्य प्रसक्तिरेव नास्तीति कुतो निषेध इति वाच्यं, बुद्धि-वाच्यस्यप्रयुक्तस्यारोपितचलनस्यात्मनि प्रसक्तत्वेन तन्निषेधसम्भवात् ।

यद्वा यतचित्तस्य योगं युञ्जतो योगिन आत्मनश्चित्तस्य सोपमेत्यन्वयः । एवं च निवातस्थित-दीपवदात्मस्थितं योगिनश्चित्तं न चलतीति पर्यवसन्नार्थः । अयमेव निर्विकल्पसमाधिः- यत्र निर्वृत्ति-कस्य मनस आत्मस्वरूपे लीनवदवस्थानम् ।

श्लोकस्य योजनान्तरमुच्यते— यतचित्तस्यात्मनो योगं युञ्जतो योगिनश्चित्तं नेङ्गत इत्यस्मिन्नर्थे यथा निवातस्थो दीपो नेङ्गते सा एषोर्थे उपमा दृष्टान्तो योगज्ञैः स्मृतेति । यथा निवातस्थो दीपो नेङ्गते तथा योगिन आत्मस्थं चित्तं नेङ्गत इति वाक्यार्थद्वयस्य दृष्टान्तदार्ष्टान्तिकभाव इत्यर्थः । आत्मस्थयोगिचित्तं निवातस्थदीपवन्न चलतीत्येव पर्यवसन्नार्थः ।

अन्यापि योजना प्रदर्श्यते— यथा सम्यक् निवातस्थः निवाते सम्यगवस्थापित इत्यर्थः । दीपो नेङ्गते सा निवातस्थो निश्चलस्स दीप इत्यर्थः । अन्यत्पूर्ववत् ॥१९॥

- यत्रेति । प्रदीपकल्पं सदिति चित्तविशेषणम् । उपरमते निर्व्यापारं भवति, सर्वतः सर्व-विषयेभ्यः उपलभमानः अनुभवन् ज्योतिर्ज्ञानम् ॥२०॥

सुखमिति । यत्तत्प्रसिद्धमित्यर्थः । यद्वा यत् तत् इति पदद्वयम् । यदात्यन्तिकमतीन्द्रियं बुद्धिग्राह्यं च तत्सुखं यत्र वेत्तीत्यन्वयः ।

बुद्धिग्राह्यमिति । 'दृश्यते त्वग्र्यया बुद्ध्ये'ति श्रुतेरिति भावः । यद्यपि विषयसुखमपि बुद्ध्यैव गृह्यते, तथापीन्द्रियद्वारा गृह्यते- विषयेन्द्रियसंयोगाभावे विषयसुखस्यैवानुदयेन कुतः पुनस्त-ल्लक्षे केवलाद् बुद्धेरित्याह—इन्द्रियनिरपेक्षयेति । कुत इन्द्रियनिरपेक्षत्वमत आह—अतीन्द्रिय-मिति । इन्द्रियगोचरं हि वस्तु बुद्ध्या तत्सापेक्षया गृह्यते, इदं त्विन्द्रियातीतमिति नात्र बुद्धेरिन्द्रि-

मविषयजनितमित्यर्थः। वेत्ति तदीदृशं सुखमनुभवति यत्र यस्मिन्काले। नचैवायं विद्वा नात्मस्वरूपे स्थितस्तस्मान्नैव चलति तत्त्वतः, तत्त्वस्वरूपान्न प्रच्यवत इत्यर्थः ॥२१॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥२२॥

किंच- यमिति। यं लब्ध्वा यमात्मलाभं लब्ध्वा प्राप्य च अपरमन्यं लाभान्तरं ततोऽधिकमस्तीति न मन्यते न चिन्तयति, किंच- यस्मिन्नात्मतत्त्वे स्थितो न दुःखेन शस्त्रपातादिलक्षणेन गुरुणा महतापि न विचाल्यते ॥२२॥

तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम्।
स निश्चयेन योक्तव्यो योगो निर्विण्णचेतसा ॥२३॥

यत्रोपरमत इत्याद्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः। तमिति। तं विद्याद्विजानीयात्- दुःखसंयोगवियोगं दुःखैस्संयोगो दुःखसंयोगः तेन वियोगः दुःखसंयोगवियोगः तं दुःखसंयोगवियोगं योग इत्येव संज्ञितं विपरीतलक्षणेन विद्याद्विजा-

---

यापेक्षेति भावः। ननु विषयसुखमपि मानसिकत्वेनातीन्द्रियमेव, मनो हि तव मते नेन्द्रियमत आह— अविषयजनितमिति। विषयेन्द्रियसंयोगजं सुखमतीन्द्रियं न भवति- इन्द्रियपरतन्त्रत्वादिति भावः।

ईदृशमुक्तलक्षणं सुखमात्मस्वरूपभूतमानन्दं-- अयं योगीत्यर्थः। तस्मात्तत्त्वतः तत्त्वादात्मस्वरूपादित्यर्थः। न चलतीत्यस्यार्थमाह—प्रच्यवत इति। नैव भ्रश्यतीत्यर्थः। योगिन आत्मस्वरूपाधिगमः भ्रंशस्साक्षादेव सम्भवति, विदुषस्तु अनात्मतादात्म्याध्यासद्वारेति विवेकः ॥२१॥

यमिति। यं लब्ध्वा ततोऽधिकमपरं लाभं न च मन्यते, यस्मिन् स्थितो गुरुणा दुःखेनापि न विचाल्यते। लभ्यत इति लाभः प्राप्यं वस्तु ॥२२॥

तमिति। तं दुःखसंयोगवियोगं योगसंज्ञितं विद्यात्। स योगः अनिर्विण्णचेतसा निश्चयेन योक्तव्यः दुःखसंयोगवियोगः दुःखसंयोगाभावः दुःखासंयोग इति यावत्। ननु वियोगस्य कथं योगसंज्ञेत्यत आह—विपरीतलक्षणेनेति। विरुद्धलक्षणयेत्यर्थः।

यद्वा योगेऽप्यस्मिन् दुःखसंयोगाभावरूपविपरीतलक्षणसत्त्वाद्योगमेवामुं दुःखसंयोगवियोगं विद्यात्। अस्मिंश्च पक्षे योगसंज्ञितं तं दुःखसंयोगवियोगं विद्यादित्यन्वयः।

ननु यत्तच्छब्दार्थयोरैक्येन भाव्यत्वात् यत्रोपरमते यत्र चैवात्मना वेत्ति यत्र न चैवायं इत्येषु स्थलेषु यच्छब्दस्य कालार्थ उक्तः, यं लब्ध्वा यस्मिन् स्थित इत्यत्र य आत्मार्थ उक्तः तं विद्यादिति तच्छब्दस्य तु योगार्थ उक्त इति कथमिदमुपपद्यते यत्तदोर्भिन्नार्थत्वमिति चेदुच्यते—तं तत्कालोपलक्षितं तदात्मविषयकं च योगमित्यर्थाददोष इति।

ननु रामानुजभाष्यरीत्या यच्छब्दप्रचकस्य योगार्थ एव वाच्य, तथा च सति तं योगमिति स्वरसतस्सिद्ध्यति यत्तदोरेकार्थत्व, इदानीं तु तच्छब्दस्य लक्षणाश्रयणं दुष्टमिति चेन्नैवम्—यत्र योगी

नीयादित्यर्थः। योगफलमुपसंहृत्य पुनरन्वारम्भेण योगस्य कर्तव्यतोच्यते- निश्चयानिर्वेदयोः योगसाधनत्वविधानार्थं सः यथोक्तफलो योगो निश्चयेनाध्यवसायेन योक्तव्यः। अनिर्विण्णचेतसा न निर्विण्णमनिर्विण्णं किं तच्चेतः तेन निर्वेदरहितेन चेतसा चित्तेनेत्यर्थः॥

योगसेवया चित्तं निरुद्धमिति वाक्यस्य पुनरुक्तिदोषग्रस्तत्वात्। योगश्चित्तवृत्तिनिरोध इति पतञ्जलिना भाषितमिह च योगश्चित्तसमाधानमित्युक्तम्। तथा च चित्तं निरुद्धमित्यस्य योग इत्यस्य चैकार्थ्यात्पुनरुक्तिः; योगे योगसेवयेति पुनरुक्तिर्विदितैव।

किं च चित्तनिरोधरूपस्य योगस्य चित्तनिरोधाधिकरणत्वमसम्भवि। उक्तं हि योगे चित्तं निरुद्धमित्यधिकरणत्वं योगस्य। एकस्यैव योगस्याधिकरणत्वं योगसेवयेति हेतुत्वं च विरुद्धम्। तस्माच्चित्तनिरोधे चित्तनिरोधसेवया चित्तनिरोध इति वाक्यार्थस्य दुष्टत्वं सर्वविदितम्।

तथा यत्र योगे आत्मानमात्मना पश्यन्नित्यप्ययुक्तम्—मनसा आत्मदर्शनस्यैव योगत्वात्। योगो हि आत्मनि चित्तसमाधानम्। तथा च योगस्यैव योगाधिकरणत्वमिहापि विरुद्धम्।

यं योगं लब्ध्वा ततोऽधिकमपरं लाभं न मन्यत इत्यप्ययुक्तं-- योगप्राप्यस्य योगादधिकस्य मोक्षलाभस्य योग्याकांक्षितस्य सत्त्वात्। अस्मन्मते तु आत्मस्वरूपस्यैव मोक्षत्वान्न मोक्षस्याधिक्यमपरत्वं वा स्यादात्मन इति नैष दोषः।

यस्मिन् स्थित इत्यस्य योगे स्थित इत्यप्ययुक्तम्-- योगस्य चित्तसमाधानात्मकस्य क्रियारूपस्य पुरुषाधिकरणत्वासम्भवात्। नच स्थित इत्यस्य व्याप्रृत इत्यर्थ इति वाच्यं, तदर्थस्य लाक्षणिकत्वेनाभिधेयत्वाभावात्। ष्ठागतिनिवृत्ताविति हि धात्वर्थः स्मर्यते इति।

यच्च उपरमते अतिशयेन रमत इति रामानुजः, तच्च तुच्छम्—उपोपसर्गसङ्गतरमधातोरुपरत्यर्थस्यैव दर्शनात्, अर्थान्तरवर्णनस्य च क्लिष्टत्वात्- उपरमेदुपरत उपरम्येत्यादौ त्वयाप्यस्मदुक्तार्थस्यैव स्वीकृतत्वात्।

उपसंहृते योगफले किमिति योगस्य पुन. कर्तव्यत्वमुच्यते, तत्राह—**योगफलमिति**। आत्मसुखानुभव आत्मतुष्टिरात्मलाभः दुःखसंयोगवियोगश्चेत्येतानि योगफलानि। फलमिति तु जात्येकवचनम्। प्रकारान्तरेण योगस्य कर्तव्यत्वोपदेशारम्भोऽत्रान्वारम्भः किमर्थं तद्वचनमत आह—**निश्चयेति**। निश्चयानिर्वेदौ योगस्य साधनभूतावतस्तावस्य योगारम्भे कर्तव्यावित्यर्थः। स इत्यस्यार्थमाह—**यथोक्तेति**। यथोक्तानि फलानि यस्य स यथोक्तफलो योगः। ध्यानयोगः निश्चयेन योक्तव्यः।

केन योक्तव्य इति करणाकांक्षां पूरयति—**अनिर्विण्णचेतसेति**। न निर्विण्णमनिर्विण्णं निर्वेदरहितमित्यर्थः। तच्च तच्चेत इति कर्मधारयः। तेन, कर्ता तु योगसाधकः पुरुष इति बोध्यम्। साधकेन अनिर्विण्णचेतसा निश्चयेन स योगो योक्तव्य इत्यन्वयः।

अनिर्विण्णं चेतो यस्य तेनेति बहुव्रीहिसमासेपि यद्यपि कर्तृलाभः, तथापि करणस्य चेतसः प्राधान्येन निर्देशो न स्यात्- तद्धि करणं प्राधान्येन ज्ञेयं, कर्ता तु वचनं विनापि सिद्धयत्येवेति कर्मधारयसमास उक्तः।

सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः ।
मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥२४॥

किंच सङ्कल्पेति । सङ्कल्पप्रभवान् सङ्कल्पः प्रभवो येषां कामानां ते सङ्कल्पप्रभवाः कामाः तान् त्यक्त्वा परित्यज्य सर्वानशेषतः निर्लेपेन, किंच, मनसैव विवेकयुक्तेन इन्द्रियग्राममिन्द्रियसमुदायं विनियम्य नियमनं कृत्वा समन्ततः समन्तात् ॥२४॥

---

योगसिद्ध्यादिषु संशये योगानुष्ठाने निर्वेदे च सति योगो न सिद्ध्येदतस्तौ द्वौ न कर्तव्याविति फलितार्थः ॥२३॥

सङ्कल्पेति । प्रभवत्यस्मादिति प्रभवः कारणं सङ्कल्पात्प्रभवन्तीति सङ्कल्पप्रभवा इत्यपि वक्तुं शक्यम् । कामाः विषयाभिलाषाः अशेषतो निश्शेषेण, सति कामशेषे तेन लेपस्स्यादिति फलितमाह— निर्लेपेनेति । कामानां सङ्कल्पप्रभवत्वविशेषणं तु कामत्यागस्सङ्कल्पत्यागात्सुकर इति द्योतयितुम् । तेन सर्वसङ्कल्पत्यागपूर्वकं सर्वकामपरित्यागं कृत्वेति सिद्ध्यति । समन्ततः सर्वविषयेभ्य इत्यर्थः । विनियम्य निवर्त्य मनोविनियमने इन्द्रियविनियमनमप्रयत्नत एव सिद्ध्यति, मनोव्यापारपूर्वकत्वादिन्द्रियव्यापारस्येति भावः ।

यत्तु रामानुजः—काम्यन्त इति कामा विषयाः ते द्विविधाः स्पर्शजाः सङ्कल्पजाश्चेति, तत्र स्पर्शजाः शीतोष्णादयः स्वरूपतस्त्यक्तुं न शक्याः, सङ्कल्पजास्तु पुत्रमित्रादयः स्वरूपेणैव त्यक्तुं शक्याः, अत एवाशेषतस्सङ्कल्पजाः कामास्त्याज्या इति, तन्मन्दम्—किमत्र स्पर्शोनाम त्वगिन्द्रियग्राह्यो गुणः, यद्वा विषयेन्द्रियसम्बन्धः ? आद्ये शीतोष्णभेदभिन्नस्य स्पर्शस्यैव विषयत्वेन स्पर्शजत्वं शीतोष्णादेर्न सम्भवति; किंच यथा असङ्कल्पजस्पर्शविषयसत्त्वं तथा असङ्कल्पजशब्दादिविषयसत्त्वमपीति न विषयद्वैविध्यसिद्धिः । वर्षास्थितेन जलस्थितेन वा योगिना शीतस्पर्शस्य उष्णस्पर्शस्य च स्वरूपतस्त्यक्तुं शक्यत्वान्न तयोः स्वरूपतो त्याज्यत्वसिद्धिः । द्वितीये विषयेन्द्रियसम्बन्धरूपस्पर्शोद्भवा विषया इत्ययुक्तं- विषयोत्पत्तेः प्रागेव विषयेन्द्रियसम्बन्धस्य कारणत्वेन वर्तमानत्वेन विषयोत्पत्तेः प्रागेव विषयसिद्धेः इन्द्रियसंसृष्टविषयाद्विषयोत्पत्तिरिति स्वस्मात्स्वोत्पत्तिप्रसङ्गाच, विषयोत्पत्तेः प्राग्विषयेन्द्रियसम्बन्धायोगाच्च ।

तस्मात् स्पर्शजा भोगा एव, नतु विषयाः । स्पर्शास्तु विषया एव- स्पृश्यन्त इति स्पर्शा इति 'मात्रास्पर्शास्तु कौन्ते'येत्यत्र निरुक्तत्वात् ।

तथा पुत्रक्षेत्रादयो विषयाश्च न स्वसङ्कल्पजाः, किं त्वीश्वरसङ्कल्पजा एव- 'तदैक्षत बहु स्यां प्रजाये'येति सङ्कल्प्य तत्सृष्ट्वा तदेवानुप्राविशत्, सच्च त्यच्चाभवदिति, तत्तेज ऐक्षत तत्तेज सृष्ट्वा' इत्यादिना ईश्वरस्य जगत्स्रष्टृत्वस्योक्तत्वाद्वेदेन ।

इमे चश्वरसङ्कल्पजा विषया अपि सर्वे न स्वरूपतस्त्यक्तुं शक्याः, न हि सार्वभौमेण राज्ञा भूरूपो विषयस्त्यक्तुं शक्यः सर्वस्या अपि भूमेः स्वीयक्षेत्रत्वात् । परन्तु तत्र स्वीयत्वाभिमान एव त्यक्तुं शक्यते । स एव हि जीवसङ्कल्पसृष्टः प्रपञ्चः जीवस्य बन्धकश्च ।

शनैश्शनैरुपरमेद्बुद्ध्या धृतिगृहीतया ।
आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ॥२५॥

शनैरिति । शनैश्शनैर्न सहसा उपरमेदुपरतिं कुर्यात्, कया बुद्ध्या; किं विशिष्टया धृतिगृहीतया धृत्या धैर्येण गृहीतया धृतिगृहीतया धैर्ययुक्तयेत्यर्थः । आत्मसंस्थं आत्मनि संस्थितंआत्मैव

---

नहि स्तनादिमत्स्त्रीपिण्डे भार्यात्वरूपभोग्यत्वबुद्ध्यभावे मृण्मये क्षेत्रे स्वीयत्वबुद्ध्यभावे च तदुभयं पुरुषं बध्नीयात्, स हि जीवसङ्कल्पसम्भवः स्वीयत्वाद्यभिमानरूपः काममयः प्रपञ्चः योगिना सर्वात्मना त्याज्यः योगविरोधात् । अत एवोक्तं- 'सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषत' इति ।

ईश्वरसङ्कल्पसृष्टो विषयप्रपञ्चस्तु चेलाजिनकुशासनादिरूपो योगिनस्साधनभूत एवेति न तस्य सर्वस्यापि त्याग उचितश्शक्यश्च । तस्मात्कामा अत्र विषयाभिलाषा एव, नतु विषयाः ॥२४॥

शनैरिति । शनैश्शनैरिति नित्यार्थे द्विर्भावः । धृतिगृहीतया बुद्ध्या मन आत्मसंस्थं कृत्वा शनैश्शनैरुपरमेत्, किञ्चिदपि न चिन्तयेत्, उपरमेदित्यस्यैव व्याख्यानभूतं तुरीयपादम् ।

ननु मनसः कथमात्मनि स्थितिः- 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'त्युक्तलक्षणे भूमात्मनि निर्विशेषे चिन्मात्रे अद्वितीयब्रह्मणि निरवकाशे परमार्थसत्ये मनसो व्यावहारिकसत्यस्य जडस्य द्वितीयवस्तुनः स्थित्ययोगात् सत्यामात्मनि मनसः स्थितौ तेन मनसा सद्वितीयस्यात्तस्यात्मा सविशेषश्च जडसंसृष्टश्च । अतएव हि- 'यत्र वाचो निवर्तन्ते अप्राप्य मनसा स'हेति श्रुतिर्मनसोप्यविषयत्वं ब्रवत्यात्मनः । नच सर्वभूतानि चात्मनीति सर्वस्यापि जगत आत्मन्येव स्थितत्वस्य वक्ष्यमाणत्वेन मनोमात्रस्यात्मनि स्थितौ को व्याघात इति वाच्यं, आत्मनि सर्वभूतस्थितेरविद्याकृतत्वात् । अविद्याकृतानि हि सर्वाणि भूतानि न परमार्थसत्यानि । अन्यथा 'एकमेवाद्वितीयं ब्र'ह्मेति श्रुतिव्याकोपस्स्यात् । नच तथैवात्मनि मनसः स्थितिरप्यविद्याकृतैवेति वाच्यं, तदभिप्रायवर्णनस्येहानुपयुक्तत्वात् । न ह्यात्मनि मनो रज्जौ सर्पवदविद्यया कल्पितं वर्तत इत्यभिप्रायेणात्मसंस्थं मनः कृत्वेत्युक्तं, तथासति कृत्वेत्यस्य वैयर्थ्यापत्तेः । करणात्प्रागपि तत्रैव सत्वात् । वस्तुविषयेभ्यो मनो निवर्त्य आत्मन्येव स्थापयेदिति ह्युच्यते । इदं च स्थापनं नाविद्याकार्यं, किंतु विद्याकार्यमेव । तस्मात्कथमात्मनि मनः स्थापयितुं शक्यते योगिना विदुषा वेति अत आह—आत्मैवेति । पेटिकायां वस्त्रस्येवात्मनि मनसः स्थापनं नेह विवक्षितं, किं तु आत्मतत्वानुसन्धानमेव मनस आत्मनि स्थापनमिति विवक्षितम् । आत्मतत्वं च 'इदं सर्वं यदयमात्मा सर्वं खल्विदं ब्रह्म नान्यत्किञ्चन मिष'दित्यादिश्रुतिभ्यः सर्वमात्मैव, आत्मनोऽन्यत्किञ्चिदपि नास्तीत्येवंरूपमिति ज्ञायते इति ।

ननु न ततोन्यत्किञ्चिदस्तीति सर्वाभावत्वं युक्तमद्वितीयत्वाद्भूमात्मनः- सच्चिदानन्दस्वरूपस्यात्मनस्तु सर्वात्मकत्वमयुक्तं- सर्वस्य अनृतजडदुःखात्मकत्वात्प्रपञ्चस्य । अतः कथमात्मैव सर्वमिति ज्ञाने यथार्थज्ञानं भवितुमर्हतीति चेत्, उच्यते—रज्जौ सर्पस्येवात्मन्येव सर्वस्य मायया कल्पितत्वेन भ्रान्त्या प्रतीयमानमिदं सर्वं वस्तुत आत्मैव, यथा रज्जौ भ्रमणप्रतीयमानस्सर्पो वस्तुतो रज्जुरेवेति । तस्माद्रज्ज्वोस्सर्पात्मत्वमिव स्थाणोः पुरुषात्मत्वमिव गगनस्य नीलात्मकत्वमिवात्मनस्सर्वात्मकत्वं युक्तमेवेति ।

सर्वं न ततोन्यत्किंचिदस्तीत्येवमात्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्। एष योगस्य परमोऽवधिः ॥२५॥

यतो यतो निश्चरति मनश्चञ्चलमस्थिरम्।
ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥२६॥

तत्रैवं आत्मसंस्थं मनः कर्तुं प्रवृत्तो योगी, यत इति। यतोयतो यस्माद्यस्माच्छब्दादेर्निमित्तान्निश्चरति निर्गच्छति स्वाभाविकदोषात् मनश्चञ्चलमत्यर्थं चलमत एवास्थिरम्। ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तन्निमित्तयाथात्म्यनिरूपणेनाभावीकृत्य वैराग्यभावनया चैतन्मनः आत्मन्येव वशं नयेत् आत्मवश्यतामापादयेत्। एवं योगाभ्यासबलात् योगिनः आत्मन्येव प्रशाम्यति मनः ॥२६॥

---

न किञ्चिदपि चिन्तयदिति। आत्मनोऽन्यस्य कस्य चिदपि वस्तुनोऽभावात्किञ्चिदपि न चिन्तयेत्किं स्वात्मानमेकमेव चिन्तयेत्, इयमेवात्मैकचिन्ता उपरतिरित्युच्यते—सर्वव्यापारोपरमरूपत्वात्। एष इति उपरम इत्यर्थः। आत्मैकचिन्तनमिति यावत् ॥२५॥

यत इति श्लोकमवतारयति—तत्रेति। योगारम्भे इत्यर्थः। चञ्चलमस्थिरं मन यतो यतो निस्सरति ततस्तत एतन्नियम्यात्मन्येव वशं नयेत्, यतोयतस्ततस्तत इति च वीप्सार्थे द्विर्भावः। निमित्तादिति। मनसो निस्सरणक्रियामति हेतुभूतादित्यर्थः। मनो हि शब्दाद्यर्थं श्रोत्रादिद्वारा बहिर्निर्गच्छति।

स्वाभाविकदोषादिति। मनस प्रवृत्तिस्वभावत्वादित्यर्थः। अग्नेरौष्ण्यादिवन्मनस प्रवृत्तिरेव स्वभाव, नतु निवृत्तिरिति भाव। स्वाभाविक स्वभावसिद्ध स चासौ दोष प्रवृत्तिरूप स्वाभाविकदोष, तस्मादित्यक्षरार्थः। सङ्कल्पविकल्पात्मकस्य मनस प्रवृत्तिरेव स्वभाव प्रवृत्तेस्सङ्कल्पविकल्पपूर्वकत्वादिति रहस्यम्। स्वाभाविकदोषो रागादिरिति वा।

कथं नियमनमत आह—तत्तदिति। निमित्तभूताना शब्दादीना तेषां तेषा विषयाणां याथात्म्यं मृषास्वरूपं तस्य निरूपणेन हेतुना। अभावीकृत्य तत्तन्निमित्तान्यभावरूपाणि कृत्वा- मृषैवायं शब्दादिप्रत्यय, नतु वस्तुतश्शब्दादयस्सन्ति- आत्मान्यस्य सर्वस्य मिथ्यात्वादित्येवं विवेकज्ञानेन मनसश्शब्दादिषु प्रवृत्तिं वारयित्वेत्यर्थः।

एवं मनसश्शब्दादिसकाशान्निवर्तने तत्तद्याथात्म्यरूपणमेकं हेतुमुक्त्वा अन्यमाह—वैराग्यभावनया चेति। क्षयिष्णुत्वात्सातिशयत्वाद्दु खोदर्कत्वाच्च न विषयेषु सक्तव्यमित्येवं विषयवैराग्यमुत्पाद्येत्यर्थः। वैराग्यस्य विरागत्वस्य भावना चिन्तनं तयेत्यक्षरार्थः।

आत्मन्यवेति। न तु विषयेष्वित्येवकारार्थः। मनसो विषयपारवश्यं वारयित्वा स्वाधीनतां सम्पादयेदित्यर्थः। एवं पूर्वोक्तप्रकारेण मनसो विषयप्रवृत्तिवारणपूर्वकमात्मवश्यापादनेनेत्यर्थः। प्रशाम्यति प्रकर्षेणोपशमं प्राप्नोति। आत्मन्येव लयं प्राप्नोतीत्यर्थः। प्रशान्तमनसमित्युत्तरश्लोके मनःप्रशान्तेर्वक्ष्यमाणत्वादिह तदानुगुण्येन भाष्ये वाक्यशेष उक्त इति बोध्यम् ॥२६॥

प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम् ।
उपैति शान्तरजसं ब्रह्मभूतमकल्मषम् ॥२७॥

प्रशान्तेति । प्रशान्तमनसं प्रकर्षेण शान्तं मनो यस्य सः प्रशान्तमनाः तं प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमं निरतिशयमुपैति उपगच्छति । शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमित्यर्थः । ब्रह्मभूतं जीवन्मुक्तं ब्रह्मैव सर्वमित्येवं निश्चयं ब्रह्मभूतमकल्मषमधर्मादिवर्जितम् ॥२७॥

युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ।
सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥२८॥

युञ्जन्निति । युञ्जन्नेवं यथोक्तेन क्रमेण योगी योगान्तरायवर्जितः सदात्मानं विगतकल्मषो विगतपापः सुखेनानायासेन ब्रह्मसंस्पर्शं ब्रह्मणा परेण संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं अत्यन्तं अन्तमतीत्य वर्तत इत्यत्यन्तमुत्कृष्टं निरतिशयं सुखमश्नुते प्राप्नोति ॥२८॥

---

प्रशान्तेति । प्रशान्तमनसं शान्तरजसं ब्रह्मभूतमकल्मषमेनं योगिनमुत्तमं सुखमुपैति हि । प्रशान्तमनसमात्मनि लीनहृदयमत एव शान्तरजसं शान्तं नष्टं रज. मोहादिक्लेशः यस्य तम् ।

रजोधूलिर्यथा गगनमावृत्य तदप्रकाशजनकं वर्तते तद्वन्मोहादिक्लेश आत्मानमावृत्य तदप्रकाशको वर्तत इति गौण्या वृत्त्या रजश्शब्दप्रयोगो मोहादिक्लेशे । यद्वा रजो रजोगुणः तत्कार्यमोहादौ तत्त्वेन व्यपदेश उपचारादिति । अथ वा रजः मोहादिक्लेशहेतुभूतरजोगुणः । उपलक्षणमिदं सत्त्वतमसोरपि । ध्वस्तसत्त्वरजस्तमोगुणमित्यर्थः ।

अतएव ब्रह्मभूतं ब्रह्मणा तुल्यं; नित्यसमासः । तौल्यं च मुक्तत्वरूपम् । यथा ब्रह्म नित्यमुक्तं तथायं योगी जीवन्मुक्त इति । अतएवाह—जीवन्मुक्तमिति ।

ब्रह्माभिन्ने आत्मनि ब्रह्मतुल्यत्ववचनमस्वरसमित्यर्थान्तरमाह—ब्रह्मैवेति । सर्वं ब्रह्मेति निश्चयज्ञानवन्तमित्यर्थः । यस्य सर्वं ब्रह्मैवेति निश्चयः स स्वयमपि ब्रह्मैव । ततश्च ब्रह्मभूतं ब्रह्मैव भूतमित्यर्थः— 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेः ।

अतएवाकल्मषं धर्माधर्मसंस्कारवर्जितमधर्मवद्धर्मस्यापि बन्धकत्वात्कल्मषत्वम् । भाष्ये आदिपदाद्धर्मग्रहणम् । नहि ब्रह्मणि धर्माधर्मसंस्कारास्सन्तीति भावः ।

एनं योगिनमुत्तमं सुखमात्मानन्दः स्वयमेवोपैति । हिः प्रसिद्धौ । मनोलये सुषुप्त्यादौ स्वरूपसुखाविर्भावः प्रसिद्ध इत्यर्थः ॥२७॥

युञ्जन्निति । योगी एवं सदा आत्मानं युञ्जन् विगतकल्मषस्सन्, सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते- आत्मानं मनः युञ्जन् ब्रह्मणि समादधानः; आत्मानं कूटस्थं युञ्जन् पश्यन्निति वा । योगोऽस्यास्तीति योगी । योगान्तरायसत्त्वे कथं योगवत्त्वमित्यभिप्रेत्याह—योगान्तरायवर्जित इति । अन्तराय [illegible], सदा आत्मानं युञ्जन्नित्यनेनैव योगित्वात्योगिपदं व्यर्थमित्यभिप्रेत्याह—योगी

सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ।
ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥२९॥

इदानीं योगस्य यदुत्कृष्टं निरतिशयं फलं ब्रह्मैकत्वदर्शनं सर्वसंसारविच्छेदकारणं तत्प्रदर्शयति—सर्वेति । सर्वभूतस्थं सर्वेषु भूतेषु स्थितं स्वमात्मानं सर्वभूतानि चात्मनि ब्रह्मादीनि च सर्वभूतान्यात्मन्येकतां गतानि ईक्षते पश्यति । योगयुक्तात्मा समाहितान्तःकरणस्सन्, सर्वत्र समदर्शनः सर्वेषु ब्रह्मादिस्थावरान्तेषु विषयेषु सर्वभूतेषु समं निर्विशेषं ब्रह्मात्मैकत्वविषयं दर्शनं यस्य सः सर्वत्र समदर्शनः ॥२९॥

योगान्तरायवर्जित इति । सदेति विघ्नाभावात्सर्वदा विगतपाप इति । पुण्यस्यापि पापत्वाद्विगतपुण्यपाप इत्यर्थः ।

पूर्वश्लोके सुखं योगिनमुपैतीत्युक्तमिदानीं तु योगी सुखमुपैतीति । अतः पूर्वश्लोकार्थस्यैव भङ्ग्यन्तरेण कथनमिदं, न त्वन्यार्थस्य । यद्वा पूर्वश्लोके जीवन्मुक्तिदशानुभाव्यसुखलाभ उक्तः, इह तु विदेहमुक्तिदशानुभाव्यसुखलाभ इति विवेकः । अथ वा पूर्वश्लोके योगदशानुभाव्य आत्मानन्द उक्तः, इह तु ब्रह्मानन्द इति ।

न च कथं ध्यानयोगान्मोक्षसुखलाभ इति वाच्यं, ध्यानयोगाद्ज्ञानलाभद्वारा मोक्षसुखलाभात्, ज्ञानलाभस्य चोत्तरश्लोके वक्ष्यमाणत्वात् । श्लोकद्वयमपीदं जीवन्मुक्तिसुखपरमेवेति पक्षे तु नैतद्बोधस्यावकाशः - संसारोपरमरूपजीवन्मुक्तिसुखस्य ज्ञानिन इव योगिनोऽपि योगदशायामनुभाव्यत्वात् ॥२८॥

सर्वेति, उत्कृष्टं फलमिति । एतेन पूर्वश्लोकोक्तं सुखं योगस्य न परमं फलं, किन्त्ववान्तरफलमेवेति सूचितम् । आत्मानन्दानुभवशालिनोऽपि योगिनो ज्ञानाभावे पुनरुत्पत्तिप्रसङ्गात्, स्वानुभूयमानात्मानन्दस्यात्मत्वेन ज्ञानं विना तस्य कृतकृत्यत्वाभावाच्च । तस्माद्यथा व्यवायस्य तात्कालिकसुखलाभोऽवान्तरफलं, पुत्रोत्पत्तिः प्रधानफलं तद्वद्योगस्य तात्कालिकसुखलाभोऽवान्तरफलं, ज्ञानोत्पत्तिरेव प्रधानं फलमिति । कीदृशं ज्ञानं योगस्य फलमत आह—ब्रह्मात्मैकत्वदर्शनमिति । अहं ब्रह्मास्मीति ज्ञानमित्यर्थः । न ह्यस्माद्ज्ञानादन्यं सर्वसंसारविच्छेदे हेतुरस्तीत्याह—सर्वेति ।

अज्ञानकार्यस्य संसारस्य सम्यग्ज्ञानं विना नहि निवृत्तिः, अज्ञानकृतात्मानात्मतादात्म्याध्यासप्रयुक्तः स्थूलोऽहं काणोऽहं सुख्यहं दुःख्यहमित्यादिसंसारः अज्ञानकृतः एवेश्वराद्भिन्नोऽहं ममेश्वरश्शास्तेत्यादिसंसारश्च । अहं सच्चिदानन्दरूप आत्मा- न तु देहादिसङ्घातरूपः, अहं ब्रह्मैव न तु तद्भिन्नः, ईश्वरश्च ब्रह्मैव- न तु तद्भिन्नः, चैतन्यरूपत्वादेवं चाहमीश्वरादभिन्नः एवेत्याकारकब्रह्मात्मैक्यज्ञानं विना नैव निवर्तते । नहि रज्ज्वावारोपितस्सर्पो रज्जुज्ञानं विना निवर्तते, येनात्मन्यारोपितस्संसारः आत्मज्ञानं विना निवर्तेत । तस्माद्ब्रह्मात्मैकत्वज्ञानमेव संसारच्छेदकारणं, नतु कर्मणापि समुच्चयः कर्मज्ञानयोस्समुच्चयानुपपत्तेः, कर्मसंसारयोरविरोधाच्चेत्यसकृदुक्तं प्राक् ।

पुरुष इति शेषः । योगयुक्तात्मा सन्, सर्वत्र समदर्शनो भूत्वा, सर्वभूतस्थमात्मानं सर्वभूतानि आत्मनि च ईक्षते इत्यन्वयः ।

आत्मन्येकतां गतानि आत्माभेदं प्राप्तानि यथा सर्पो रज्ज्वैक्यं गच्छति तद्वत् । कार्यकारण-सङ्घात इह भूतशब्देन विवक्षितः । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविश'न्तीति श्रुत्या भूतानां स्वोपादाने आत्मनि लयस्योक्तत्वात् । कार्यस्य घटादेः कारणे मृदादौ लयदर्शनात् । कार्यस्य कारणे लयो नाम कारणाभेदेनाऽवस्थानमेव, न त्वन्यदिति सिद्धान्ता-दात्मनि सर्वभूतलय एव सर्वभूतानामात्मन्येकत्वप्राप्तिरिति भावः ।

नच कथं प्रलयात्प्रागात्मनि सर्वभूतलय इति वाच्यं, प्रलयेपि सूक्ष्मभूतसत्त्वात् । न प्रलये सर्वभूतानामात्मनि लयः- तथासति ज्ञानं विनैव प्रलये सर्वमुक्तिप्रसङ्गात् । किं तु परमार्थदशाया-मात्यन्तिकप्रलये मोक्षरूपे एव सर्वभूतलयः ।

प्रलयो हि चतुर्विधः- नित्यः, नैमित्तिकः, महान् , आत्यन्तिकश्चेति । तत्र सुषुप्तिर्नित्यप्रलयः; ब्रह्मणो निशायां नैमित्तिकप्रलय.; ब्रह्मणश्चतुर्मुखस्य द्विपरार्धावसाने महाप्रलय; मोक्ष आत्यन्तिक-प्रलयः । आत्मस्वरूपश्च मोक्ष एवेत्यात्मस्वरूपे सर्वभूतलय उचितएव ।

एतेन यस्सर्वेषु भूतेषु वर्तते स आत्माऽहमेव, इमानि तु सर्वाणि भूतानि कालत्रयेपि मयि न सन्त्येवेति समदर्शी विद्वानीक्षते पश्यति जानातीत्यर्थ इति सिद्धम् ।

ब्रह्मात्मनोरेकत्वमेव विषयो यस्मिन् तद्ब्रह्मात्मैकत्वविषयं दर्शनं ज्ञानं विषयीत्यर्थः । ज्ञानस्य विषयित्वं ज्ञेयस्य विषयत्वं च न्यायमतप्रसिद्धं च । इदं च ज्ञानमहं ब्रह्मास्मीत्याकारकवृत्तिरूपं, न तु चैतन्यरूपं- तस्य निर्विशेषत्वेन निर्विषयत्वात् ।

यत्तु रामानुजः—सर्वभूतसमानाकारं स्वात्मानं, स्वात्मसमानाकाराणि सर्वभूतानि च पश्य-तीति, तत्तुच्छम्—सर्वभूतस्थमिति आत्मनीति च सर्वभूतानामात्मनश्चाधिकरणत्वस्योक्तत्वात् । सर्वेषु भूतेषु तिष्ठतीति सर्वभूतस्थ इति हि समास. । अनेन च समासेन भूतानामधिकरणत्वं स्फुट-मुक्तम् । आत्मनीति च अधिकरणे सप्तमी । आत्मनोऽधिकरणत्वं च स्फुटमुक्तम् । तदेवं स्फुट-मुक्तस्याधिकरणत्वस्य त्यागोऽप्रमाणमेव ।

नच कथमेकस्यैवात्मन आधारत्वमाधेयत्वं चेत्युभयं सम्पद्यत इति वाच्यं, आकाशे घटस्य घटे आकाशस्य च सत्त्वदर्शनादेवमेवात्मनि भूतानां, भूतेषु चात्मनस्सत्त्वानुमानस्य सुकरत्वात्; सर्वान्तरस्सर्वाधार इत्यादिशास्त्राच्च । जागरावस्थायां देहेष्वात्मसत्त्वस्य स्वप्ने आत्मनि रथादिप्रपञ्चसत्त्वस्य च सर्वानुभव-सिद्धत्वाच्च, नहि स्वप्ने आत्मातिरिक्तं रथाद्यधिकरणं किञ्चिदस्ति ।

तस्मात्सर्वभूतस्थमात्मानमित्यस्य सर्वभूतसमानाकारमात्मानमिति, सर्वभूतानि चात्मनीत्यस्य स्वात्मसमानाकाराणि सर्वभूतानीति चार्थः स्वमताभिनिवेशकल्पितो मूलविरुद्ध इति स्वस्यापि विदित-मेव रामानुजस्य ।

किंच यदा सर्वभूतसमानाकारत्वं स्वात्मन उक्तं तदैव स्वात्मसमानाकारत्वं सर्वभूतानां सिद्ध-मेवेति पुनस्तद्वचनं व्यर्थमेव ।

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥३०॥**

एतस्यात्मैकत्वदर्शनस्य फलमुच्यते—य इति । यः मां पश्यति वासुदेवं सर्वस्यात्मानं सर्वत्र सर्वभूतेषु सर्वं च ब्रह्मादिभूतजातं मयि सर्वात्मनि पश्यति, तस्यैवमात्मैकत्वदर्शिनः अहमीश्वरो न प्रणश्यामि न परोक्षतां गमिष्यामि; स च मे न प्रणश्यति स च विद्वान्मे

---

अपि च भूतशब्दः महाभूतेषु प्राणिषु कार्येषु च प्रयुज्यते, न त्वात्मनि- भूतत्वाभावात्तस्य । नच प्राण्येवात्मेति वाच्यमात्मनः प्राणादिसम्बन्धाभावात् । न च प्राणोपाधिकत्वादात्मा प्राण्येवेति वाच्यं, घटोपाधिकत्वादाकाशो घटीति वाच्यत्वापत्तेः । उपाधेरपमार्थत्वात्परमार्थात्मतत्त्वस्य चेहोपदिश्यमानत्वात् ।

यद्यात्मनां बहुत्वं जात्येकत्वं च स्यात्तर्हि घटानामिवात्मनामपि परस्परसाम्यमज्ञेनापि विदितमेवेति व्यर्थोऽयमुपदेशः; नापि तेन किञ्चिदपि फलम् ।

तस्माद्यदि भूतशब्द आत्मवाची तर्हि आत्मन एवात्मस्थत्वमसम्भवि । यदि भूतशब्दो देहादिसङ्घातवाची तर्हि तस्यात्मसमानाकारत्वमसम्भवि । देहादेर्जडत्वादात्मनश्च चेतनत्वात् । अतस्तुच्छं रामानुजभाष्यम् ॥२९॥

य इति । सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनीक्षतेत्यस्यैवानुवादः- यो मां पश्यति सर्वत्र सर्वं च मयि पश्यतीति । एतस्यात्मैकत्वदर्शनस्य फलं तु- तस्याहं न प्रणश्यामि; स च मे न प्रणश्यतीति । इति विवेकः ।

मामिति । मत्यगभिन्नं परमात्मानमित्यर्थः । यः पूर्वश्लोके सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनीक्षत इत्युक्तः स एवायं सर्वत्र परमात्मानि सर्वं च परमात्मनि पश्यतीत्यनूदितः स्वात्मन एव परमात्मत्वादात्मदर्शनमेव परमात्मदर्शनमिति हेतोः ।

आत्मैकत्वदर्शिन इति । सर्वत्रापीश्वराभिन्न आत्मैक एवास्तीति ज्ञानशालिन इत्यर्थः । ईश्वरपारोक्ष्याभाव फलमित्याह—न प्रणश्यामीति । कृतप्रत्यगभिन्नब्रह्मात्मसाक्षात्कारस्य न पुनरीश्वरपारोक्ष्यं, यथैतादृशज्ञानप्राप्तेः प्रागीश्वरपारोक्ष्यं तद्वदिति भाव ।

सति त्वीश्वरपारोक्ष्ये ईश्वरात्तस्य भयं संसारश्च स्यात्- 'भीषास्माद्वातः पवत इति, य उदरमन्तरं कुरुते अथ तस्य भयं भव'तीत्यादिश्रुतिभ्यः । अत ईश्वरपारोक्ष्याभाव उत्कृष्टं फलमेव मोक्षरूपत्वात् ।

फलान्तरमाह—स च मे न प्रणश्यतीति । ईश्वरस्यापि स्वयं परोक्षो न भवति, वाञ्छति हि भृत्यादिः सर्वदापि राजपारोक्ष्याभावं स्वस्य, स्वपारोक्ष्याभावं राज्ञश्च । कामुकश्च स्वस्य कामिनीपारोक्ष्याभावं कामिन्याश्च स्वपारोक्ष्याभावं तद्वद्विद्वानपि स्वस्येश्वरपारोक्ष्याभावमीश्वरस्य च स्वपारोक्ष्याभावं वाञ्छतीति तदुभयं तस्य सिद्ध्यतीति भाव ।

ईश्वरस्य स्वपारोक्ष्याभावे स्वस्य चेश्वरपारोक्ष्याभावे हेतुमाह—तस्य चेति । ईश्वरस्य विदुषश्च एकात्मत्वादित्यर्थः । नन्वात्मत्वेपि कथं पारोक्ष्याभाव इत्यत आह—स्वात्मेति । प्रकाशः प्रत्यक्ष एवकारान्न तु कदाचिदप्यप्रकाश इत्यर्थः । न हि स्वस्य स्वाप्रत्यक्षत्वमिति भावः ।

ननु तस्याहं न प्रणश्यामि स च मे न प्रणश्यतीति आत्मपरमात्मनोर्भेद एवोपदिष्टो भगवता, तस्याहमिति, स च म इति, न हि तदहंशब्दयोरेकार्थत्वमिति चेन्नैवम्—सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनीति य एव धर्म आत्मन उक्तः, सर्वभूतस्थत्वसर्वभूतान्तरत्वरूपः स एव यो मां पश्यति सर्वत्र सर्वं च मयि पश्यतीति परमात्मनोप्युक्तः । न हि धर्मभेदं विना धर्मिभेदः सम्भवति-धर्मभेदस्यैव धर्मिभेदप्रयोजकत्वात् ।

तथा च सर्वभूतस्थमिति, यो मामिति च वाक्यद्वयेनात्मपरमात्मैकत्वं प्रतिपाद्य कथं पुनस्तस्याहमिति वाक्यद्वयेन आत्मपरमात्मभेदं प्रतिपादयेत्सर्वज्ञो भगवान् ।

नच सर्वभूतस्थितात्मस्थितत्वात्परमात्मनस्सर्वभूतस्थितिः, सर्वभूताश्रयत्वात्परमात्मनि सर्वभूतस्थितिश्चोच्यते- पर्यङ्ककशिपुशायिनः पुरुषस्य पर्यङ्कशायित्वं, देहाश्रयपीठाश्रयभूमेर्देहाश्रयत्वं च यथोच्यते तद्वदिति वाच्यं, यदि तथा आत्मनि परमात्मास्ति परमात्मन्यात्मास्तीति च विवक्षा व्यासमुनेः- तर्हि सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनीत्यनन्तरं-- ईक्षते मयि चात्मानं तमात्मनि च मामपीत्येव ब्रूयादृजुमार्गेण, नतु वक्रमार्गेण- वक्रमार्गाश्रयणस्य निष्फलत्वात्प्रतिपत्तृक्लेशकरत्वाच्च । यः कोपि त्वादृशो हि महानुभावः यो मां पश्यति सर्वत्रेत्यस्य सर्वत्र स्थिते आत्मनि स्थितं मां यः पश्यतीत्यर्थं जानीयात् । निरवयवे निरवकाशे आत्मवस्तुनि कथं परमात्मस्थित्यवकाशः ? आत्मनो निरवयवत्वं सम्प्रतिपन्नम् । नच निरवकाशत्वे विप्रतिपत्तव्यं- सावयवस्यैव सावकाशत्वं, न तु निरवयवस्येति सिद्धान्तात् । नहि निरवयवः परमाणुस्सावकाशः ।

नन्वेवं कथं निरवयवे ब्रह्मणि जगत्स्थित्यवकाश इति वाच्यं, तदनवकाशस्यैवास्माकमिष्टत्वान्न हि वयं सद्वितीयं ब्रह्म ब्रूमः, येन जगतो ब्रह्मणि स्थितिरस्माकमिष्टा स्यात्- रज्जौ सर्पवद्ब्रह्मणि जगन्मायया प्रतिभाति, नतु वस्तुत इत्यसकृदुक्तं हि । एतेन निरवयवे निरवकाशे परमात्मन्यात्मस्थितिश्च प्रत्युक्ता । परमात्मन्यप्यात्मसत्त्वे आत्मन एव परमात्मान्तरत्वेन त्वदुदाहृतान्तर्यामिब्राह्मणविरोधात् । सर्वान्तरः खलु परमात्मा ।

नच परमात्मन्यात्मा माययास्तीति वाच्यं, आत्मनो नित्यशुद्धबुद्धमुक्तस्वभावस्य मायिकत्वासम्भवात् । देहादेरसत्त्वमात्मनश्च सत्त्वं- 'नासतो विद्यते भाव' इत्यादिना त्वयाप्यभ्युपेतम् । असत्त्वमेव हि मायिकत्वम् । सतो नाशायोगान्मायिकस्य चावर्जनीयनाशत्वादविनाशस्वभावः सत्त्वं विनाशस्वभावत्वमसत्त्वमिति त्वयैवोक्तत्वात् । तस्मात्सन्नात्मा न मायिकः, येन मायया तस्यात्मनः परमात्मनि स्थितिः स्याज्जगत इव ।

तदेवमात्मनि परमात्मनः परमात्मनि चात्मनः स्थित्ययोगात् सर्वभूतस्थमात्मानमित्यनेन, यो मां

वासुदेवस्य न प्रणश्यति न परोक्षो भवति- तस्य च मम चात्मैकत्वात् । स्वात्मा हि नाम आत्मनः प्रकाश एव भवति ॥३०॥

सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ।
सर्वथा वर्तमानोपि स योगी मयि वर्तते ॥३१॥

यस्माच्च अहमेव सर्वात्मैकत्वदर्शी, सर्वेति । इत्येतत्पूर्वश्लोकार्थमनूद्य सम्यग्दर्शनं तत्फलं मोक्षो विधीयते । सर्वथा सर्वप्रकारैर्वर्तमानोपि सम्यग्दर्शी योगी मयि वैष्णवे परमे

पश्यति सर्वत्रेत्यनेन च आत्माभिन्नस्य परमात्मनः परमात्माभिन्नस्य चात्मन. सर्वत्र स्थितिरुक्ता । ननु भिन्नात्मन इति सिद्धेऽद्वैते कथं तस्याहमिति स च मे इति च भेद उच्यते भगवताऽऽत्मेश्वरयो. ।

ननु भवतु पूर्ववाक्यविरोध., तथापि तस्याहमिति स च मे इति च प्रसिद्धस्य आत्मेश्वरभेदस्य कथमपलाप इति चेत् उच्यते—श्रोतुरर्जुनस्य जीवेश्वरभेदबुद्ध्याविष्टत्वात्तं प्रति तथा तस्याहं स च मे इत्युपदेश । लोकसिद्धजीवेश्वरभेदानुवादमात्रं तस्याहं स च मे इति । ननु तत्त्वनिर्णयरूपमिति ।

तथा च य ईश्वरत्वेन लोकस्याभिमत परोक्षश्च परमात्मा स तत्त्वविदो न परोक्ष । यश्च जीवत्वेन लोकस्याभिमतस्तत्त्ववित्स च नेश्वरस्य परोक्ष इति तस्याहं न प्रणश्यामि स च मे न प्रणश्यतीत्यस्यार्थ ।

एवमपरोक्ष्ये हेतुर्भाष्यकृता दर्शित आत्मैकत्वादिति । जीवेश्वरयोश्चैतन्यात्मना एकत्वात्त तत्रापरोक्ष्याभावशंकेति भाव । यद्यपि तस्याहं न प्रणश्यामीत्यनेनैवेष्टं सिद्ध्यति, तथापि दार्ढ्याय स च मे इत्यप्युक्तम् ।

यत्तु रामानुजः—यः सर्वतात्मवस्तुनि च मा पश्यति, मयि सर्वमात्मवस्तु च पश्यतीति, तत्तुच्छम्—आत्मवस्तुनीति आत्मवस्त्विति च मूलाद्बहि· पदद्वयस्य कल्पनाया अप्रमाणत्वात् । कर्था-सम्भवस्तु दर्शित एव ॥३०॥

सर्वेति । य एकत्वमास्थितस्सन् सर्वभूतस्थितं मा भजति स योगी सर्वथा वर्तमानोपि मयि वर्तते । अत्र पूर्ववाक्यं पूर्वोक्तसम्यग्दर्शनानुवादपरं, द्वितीयं तु तत्फलप्रदर्शनपरमिति विवेक ।

यस्मादिति । यस्मात्सर्वात्मैकत्वदर्शी विद्वानहमेव न तु मत्तोन्य इत्येवकारार्थ । तस्मात्स मय्येव वर्तत इत्याह- सर्वेति श्लोकेन भगवान् ।

सर्वभूतस्थमिति । यो मा पश्यति सर्वत्रेति च पूर्वोक्तश्लोकद्वयार्थभूतं सम्यग्दर्शनमनेन श्लोकेनानूद्य तत्फलं मोक्षो विधीयत इत्यन्वय ।

तत्र सर्वभूतस्थितं यो मां भजत्येकत्वमास्थित इत्येतद्व्याख्यातप्रायमिति न तस्य भाष्यं कृतम् । एकत्वं स्वात्माभेदमित्यर्थ । आस्थित प्राप्त । भजति प्राप्नोति पश्यतीति यावत् । सेवाया द्वैतिविषयाया अद्वैतासम्भवयोगात् ।

सर्वथेति । ज्ञानोत्पत्तिपर्यन्तमेव शास्त्रनियम , न तु पश्चात् । ततश्च यथेच्छं यथाप्रारब्ध·

पदे वर्तते नित्यमुक्त एव स न मोक्षं प्रति केनचित्प्रतिबध्यत इत्यर्थः ॥३१॥

मुत्पन्नसम्यग्दर्शनो वर्ततैव; नतु तस्य कोपि शास्त्रनिर्बन्ध । शास्त्रस्याविद्यावद्विषयत्वाद्विदुषोऽविद्याया विद्यया नाशितत्वाच्चेति भाव ।

मयि मदीये इत्यर्थ । तमेवाह—वैष्णवे इति । विष्णोर्व्यापकस्य परमात्मनो मम सम्बन्धिनि परमे उत्कृष्टे पदे स्वरूपे सच्चिदानन्दलक्षणे वर्तते । यद्वा 'तद्विष्णो परम पद'मित्युक्तलक्षणे वैष्णवपरमपदशब्दाभिधेये मयीत्यर्थ ।

स्वस्वरूपस्य स्वाभिन्नत्वाद्वैष्णवं स्वस्वरूप परमपदशब्दाभिधेयं तत्साक्षाद्विष्णुरेव, न तु विष्णोरन्यत् निर्धर्मकपरमानन्दबोधस्वरूपे विष्णावात्मनि धर्मधर्मिभावकल्पनायोगादिति भाव ।

स्वस्वरूपे वर्तनं च विदुष स्वस्वरूपेणावस्थानमेव, न त्वाधाराधेयभावरूपं स्वस्य स्वरूपस्य च आधाराधेयभावायोगात् । स्वमेव हि स्वरूपम् । इदमेव स्वस्वरूपेणावस्थानं मुक्ति । ब्रह्मभावापत्तेर्मोक्षत्वाद्ब्रह्मभावस्य च ब्रह्माभिन्ने आत्मनि कालत्रयेपि सत्त्वादित्यभिप्रेत्याह—नित्यमुक्त एव स इति ।

ईश्वरस्य नित्यमुक्तत्वं सर्वसम्मतं, जीवस्य नित्यमुक्तत्वं तु सम्यग्दर्शिन एव सम्मतं—तस्यैव जीवेश्वराभेदज्ञानात् । अत उक्तम्—स एव नित्यमुक्त' इति । सम्यग्दर्श्येव नित्यमुक्त, अन्ये भेदवादिनस्तु न मुक्ता किंतु बद्धा एव भीतिग्रस्तत्वादिति भाव ।

ननु कथमस्य सम्यग्दर्शिनोपि नित्यमुक्तत्वं देहादिबन्धसत्वादत आह—नेति । नास्य मोक्षप्रतिबन्धकं किञ्चिदपि वस्त्वस्ति । ब्रह्मात्मैकत्वज्ञानेन सूर्यस्थानीयेन तमस्स्थानीयस्याज्ञानस्य पिशाचादिस्थानीयदेहादिकार्यसहितस्य समूल नाशितत्वादिति भाव । अतो यावत्प्रारब्ध देहादिसत्त्वेपि विदुषो न तेन कश्चिद्बन्ध — दग्धपटवद्देहादेस्तस्याबन्धकत्वात् ।

यद्वा धर्माधर्मादिसंस्काररूपप्रतिबन्धकसत्त्वात्कथं सम्यग्दर्शनमात्रेण मोक्षलाभस्तत्त्वविद इत्यत आह—नेति । विद्यया धर्माधर्मादिसंस्काराणा नाशितत्वान्न तत्प्रतिबन्ध इत्यर्थ ।

यत्तु रामानुजः—मयि वर्तते मत्साम्यमेव पश्यतीत्यर्थ इति, तत्तुच्छम्—तत्पदार्थ्यार्थाग्रमस्य सर्वविदितत्वात् । आत्मपरमात्मनोर्द्वयोर्वस्तुनोर्दर्शने सति रत्नदर्पणयोरिव तत्साम्य सुबोधं स्यात्, नतु तदस्ति- न हि समाधौ अन्यत्र वा द्वयोर्दर्शनं सम्भवति, किं त्वात्मन एकस्यैव-- अनुभवमात्रस्यैव समाधौ परिशेषात्, अनुभवरूपत्वाचात्मन ।

यदि चतुर्भुजत्वादिमत्पिण्ड परमात्मा द्विभुजत्वादिमत्पिण्डो जीवात्मा च स्यात्तर्हि बुद्धिद्वयं स्यात्, तत्रापि न साम्यस्यावकाश - ईश्वरविग्रहस्याप्राकृतत्वाज्जीवविग्रहस्य च प्राकृतत्वात् ।

यदि तु स्वभिन्न परमात्मा स्वेन दृष्ट स्यात् तर्हि परमात्मनो ज्ञेयत्वं स्यात्तद्धि न सहते श्रुति - 'साक्षी चेता केवलो निर्गुण'श्चेत्यादि ; 'नान्योतोस्ति द्रष्टेति च परमात्मनो ज्ञातृत्वमेव ब्रूते श्रुतिर्न तु ज्ञेयत्वम् । सति च ज्ञेयत्वे घटादिवज्जड एव स्यात्परमात्माऽनित्यश्च ।

तदेवमात्मपरमात्मरूपवस्तुद्वयदर्शनासम्भवान्नात्र तत्साम्यस्यावकाश ॥३१॥

आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ।
सुखं वा यदि वा दुःखं स योगी परमो मतः ॥३२॥

किंचान्यत्स्यात्, आत्मेति । आत्मा स्वयमेवोपमा तद्भाव औपम्यं तेनात्मौपम्येन सर्वत्र सर्वभूतेषु समं तुल्यं पश्यति योऽर्जुन। स च किं समं पश्यतीत्युच्यते—यथा मम सुखमिष्टं तथा सर्वप्राणिनां सुखं अनुकूलं । वाशब्दश्चार्थे । यदि वा यच्च दुःखं ममानिष्टं प्रतिकूलं यथा तथा सर्वप्राणिनां प्रतिकूलं अनिष्टं दुःखमिति । एवमात्मौपम्येन सुखदुःखे अनुकूलप्रतिकूले तुल्यतया सर्वभूतेषु समं पश्यति, न कस्यचित्प्रतिकूलमाचरति, अहिंसक इत्यर्थः ।

आत्मेति । हेऽर्जुन ! य आत्मौपम्येन सर्वत्र सुखं वा यदि वा दुःखं समं पश्यति स योगी परमो मत इत्यन्वयः । ननु यदि विदुषो मोक्षप्रति न कश्चित्प्रतिबन्धस्तर्हि विद्वान् यथेष्टमाचरेदिति पक्षे विद्वान् हिंसामपि कुर्यादेवेत्यत आह—किंचान्यदिति । आत्मा स्वयमेवोपमा उपमानमात्मोपमा तस्या भाव आत्मौपम्यम्, स्वसादृश्यं तेनात्मौपम्येन स्वदृष्टान्तेनेति यावत् । सुखं वा सुखं च समं तुल्यं पश्यति, यदि वा यच्च यद्वेत्यर्थः । दुःखं समं पश्यति, कथं सुखदुःखयोस्सर्वत्रात्मौपम्येन समदर्शनमत आह—यथेति । यथा मम सुखमिष्टमनुकूलं तथा सर्वप्राणिनामपि सुखमिष्टं यथा वा मम दुःखमनिष्टं प्रतिकूलं तथा सर्वप्राणिनामपि दुःखमनिष्टमित्येवमात्मौपम्येन सर्वभूतेषु सुखदुःखे अनुकूलप्रतिकूले तुल्यतया समं पश्यतीत्यन्वयः ।

सममित्यस्यार्थः तुल्यतयेति साम्येनेत्यर्थः । किमेतद्दर्शनेन फलमत आह—न कस्यचिदिति । यथा स्वस्य प्रतिकूलं दुःखकरं तथैव सर्वस्यापीति यो वेत्ति स कथं परस्य प्रतिकूलमाचरेत् ? न कथमपीत्यर्थः । तत्रापि फलितार्थमाह—अहिंसक इति ।

ननु अज्ञोऽपि यथा स्त्रीगमनं स्वस्य सुखं तथा परस्यापि सुखमेव यथा शस्त्रपातः स्वस्य दुःखं, तथा परस्यापि दुःखमेवेति जानात्येव । कथमन्यथा स्वमित्रस्य परस्य जारस्त्रियमर्पयेत्, कथं वा स्वशत्रोः परस्य शस्त्रपातं कुर्याद्वपुषि ? तस्माद्व्यर्थोऽयमुपदेश इतिचेत्, मैवम्—अत एव खलु न कस्यचित्प्रतिकूलमाचरतीति भाषितमाचार्यैः । यो हि स्वस्येव परस्यापि स्त्रीगमनं सुखमिति स्वदपहरणं दुःखमिति च मन्यते स कथं परस्त्रीहरणरूपं परस्य प्रतिकूलमाचरेत् । यस्तु परस्त्रीहरणरूपं परस्य प्रतिकूलमाचरति, स हि स्वस्त्रीहरणतुल्यं परस्त्रीहरणं नैव मन्यते, किंतु परस्त्रीहरणं स्वस्य सुखमित्येव मन्यते ।

अथ वा आत्मौपम्येन सर्वत्र समं सुखं दुःखं वा पश्यन् यः परस्य प्रतिकूलं नाचरति स योगी परम इत्येव भगवद्वाक्यमिति ब्रूमः । तत्र च परस्य प्रतिकूलं नाचरतीति तु वाक्यशेष इति ।

एवं च अहिंसकत्वमनेन श्लोकेन योगिनः परमसाधनमित्युक्तम् । तस्य चाहिंसकत्वस्य सर्वत्रात्मौपम्येन सुखदुःखसमदर्शनं कारणमिति च । अत एव स एवमहिंसक इति भाष्यकारैरहिंसकत्वमेवानूदितम् ।

य एवमहिंसकस्सम्यग्दर्शननिष्ठस्स योगी परम उत्कृष्टो मत अभिमतस्सर्वयोगिनाम् ॥३२॥

अर्जुनः— योऽयं योगस्त्वया प्रोक्तस्साम्येन मधुसूदन !

एतस्याहं न पश्यामि चञ्चलत्वात् स्थितिं स्थिराम् ॥३३॥

एतस्य यथोक्तस्य समदर्शनलक्षणस्य योगस्य दुःखसम्पाद्यतामालक्ष्य शुश्रूषुस्तत्प्राप्त्युपायमर्जुन उवाच—य इति । योऽयं योगस्त्वया प्रोक्तस्साम्येन समत्वेन हे मधुसूदन ! एतस्य योगस्याहं न पश्यामि नोपलभे चञ्चलत्वान्मनसः किं स्थिरामचञ्चलां स्थितिम् ॥

चञ्चलं हि मनः कृष्ण! प्रमाथि बलवद्दृढम् ।

तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥३४॥

प्रसिद्धमेतत् ; चञ्चलमिति । चञ्चलं हि मनः कृष्ण ! इति कृषतेर्विलेखनार्थस्य रूपम् । भक्तजनपापादिदोषापकर्षणात्कृष्णः तस्य संबुद्धिः हे कृष्ण ! चञ्चलं, न केवलमत्यर्थं

---

न केवलमहिंसकत्वमात्रमेव योगिन उत्कर्षावहं, किंतु सम्यग्दर्शनपूर्वकं तत् । अन्यथा अज्ञोऽप्यहिंसक उत्कृष्टस्स्यादित्याह—सम्यग्दर्शननिष्ठ इति । ब्रह्मात्मैकत्वदर्शननिष्ठ इत्यर्थः । एतेन ब्रह्मात्मैकत्वदर्शनसम्पन्नस्यापि योगिनो भूतदयाऽऽवश्यकीति सूचितम् ।

यत्तु रामानुज.—परपुत्रजन्ममरणादिसमं स्वपुत्रजन्ममरणादिकं यः पश्यतीत्यर्थ इति, तत्तुच्छम्—अर्थस्य साधुत्वेपि एतदर्थबोधकशब्दाभावान्मूले । आत्मन एव मूले उपमात्वेन ग्रहणात् । परपुत्रजन्ममरणादिनापि स्वस्य सम्बन्धो नास्तीत्येतदंशस्य दुर्वचत्वात् । परस्य शत्रोः पुत्रजन्मना तन्मरणेन च स्वस्य वैमनस्यसन्तोषरूपविकारदर्शनात्परस्य स्वेतरस्य भावादेः पुत्रजन्मतन्मरणाभ्यां स्वस्य सुखदुःखविकारदर्शनाच्च, तेन च विकारदर्शनेन तत्सम्बन्धस्यानुमीयमानत्वात् । नहि सम्बन्धं विना कार्योदयः । शत्रुपुत्रजन्ममरणादिवत्स्वपुत्रजन्ममरणादिकं द्रष्टव्यमित्यनेन स्वपुत्रजन्ममरणयोरपि दुःखसुखयोः कर्तव्यत्वापत्तेः । स्वबन्धुपुत्रजन्ममरणादिवदिति स्वीकारे उपदेशानर्थक्यापत्तेः । अज्ञोपि हि स्वबन्धुपुत्रोदयादाविव स्वपुत्रोदयादौ सुखादिकं भजत्येव । तस्मान्नात्र स्वपुत्रजन्ममरणादेः परपुत्रजन्ममरणादिसाम्यमनेनोच्यत इति वक्तुं शक्यते ।

न च परोऽत्र शत्रुमित्राभ्यामन्य उदासीनः, तत्पुत्रजन्मतन्मरणादिना न स्वस्य कोपि विकार इति वाच्यं, सर्वसमस्य भूतदयादिशालिनः पुरुषस्य परपुत्रमरणस्यापि दुःखावहत्वात् । अन्यथा नैर्घृण्यस्यापि गुणत्वापत्तेः । तस्मात्स्वस्य यथा पुत्रजन्मसुखं तन्मरणं च दुःखं तद्वत्परस्यापीति बुध्वा यः परस्य पुत्रद्रोहाद्यनिष्टं नाचरति स योगी परम इत्येव श्लोकार्थः ॥३२॥

य इति । साम्येन समत्वेनोपलक्षित इति शेषः । सर्वत्र समदर्शनरूपो योग इत्यर्थः । चञ्चलत्वादिति । कस्येत्यत आह—मनस इति । मनसश्चञ्चलत्वादेतस्य स्थिरां स्थितिमहं न पश्यामीत्यन्वयः ॥

चञ्चलमिति । हिः प्रसिद्धौ । विलेखनं छेदनं कर्षति भिनत्ति भक्तपापादिदोषमिति कृष्ण आत्मा; आत्मचिन्तनाद्धि सर्वपापक्षय. । 'कृषिर्भूवाचकश्शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं

चलं प्रमाथि प्रमथनशीलं च प्रमथ्नाति शरीरमिन्द्रियाणि च विक्षिपत्सत् परवशीकरोति। किंच- बलवत् न केनचित् नियन्तुं शक्यम्। किंच दृढं तन्तुनाभवत् तस्यैवंभूतस्य मनसः अहं निग्रहं निरोधं मन्ये- वायोरिव यथा वायोर्दुष्करो निरोधः ततोपि दुष्करं मन्य इत्यभिप्रायः ॥३४॥

श्रीभगवानुवाच— असंशयं महाबाहो! मनो दुर्निग्रहं चलम्।
अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते ॥३५॥

श्रीभगवानुवाच—एवमेव यथा ब्रवीपि, असंशयमिति। असंशयं नास्ति संशयः हेमहाबाहो! मनो दुर्निग्रहं चलमित्यत्र। किं त्वभ्यासेन तु अभ्यासोनाम चित्तभूमौ कस्यांचित्समानप्रत्ययावृत्तिश्चित्तस्य वैराग्येण। वैराग्यं नाम दृष्टादृष्टभोगेषु दोषदर्शनाभ्यासात् वैतृष्ण्यं

ब्रह्म कृष्ण इत्यभिधीयते' इति निरुक्त्यन्तरम्। भवतीति भू- भूसत्तायाम्। परमानन्दसद्रूप इत्यर्थः। सच्चिदानन्दरूपत्वादात्मन इति भाव।

तन्तुनाभ ऊर्णनाभ कीटविशेष; सहि तन्तून् यथाऽविच्छेदेन सृजति वयति दृढं कीटान्तरांस्तत्र बध्नाति तद्वन्मनोपि सङ्कल्पविकल्पादीनविच्छेदेन सृजति तै. पुरुषं बध्नाति च दृढमिति भाव। एतेन दृढमित्यस्य दृढबन्धकमित्यर्थस्सिद्धः। तन्तुनाग इति पाठे वरुणपाशाख्यस्तोयचरः पदार्थस्तन्तुनागस्स इतिदृढत्वादच्छेद्य इति बोध्यम्।

वायोरिवेत्यत्रत्यस्य इवशब्दस्य औपम्यवाचित्वमयुक्तम्-- उत्कृष्टस्य मनस अपकृष्टेन वायुना औपम्यायोगात्। उपमानस्य हि चन्द्रादेरुत्कृष्टतया भाव्यं मुखादेरुपमेयात्। वेगवत्त्वादिषु मनसो वाय्वपेक्षया उत्कृष्टत्वं प्रसिद्धम्। तस्मादव्ययानामनेकार्थत्वादिवशब्दस्यात्र अप्यर्थकत्वमित्यभिप्रेत्याह— वायोरपीति। सुन्दु दुष्कर सुदुष्करः तं सुदुष्करम्।

हेकृष्ण! मन· चञ्चल प्रमाथि बलवद्दृढं च भवति। अहं वायोरिव तस्य निग्रहं सुदुष्करं मन्ये इत्यन्वयः। दु खेन कर्तुं शक्यो दुष्करः; कर्तुमशक्य इत्यर्थ.। ईषद्दिति खल् ॥३४॥

असंशयमिति। असंशयमित्यर्थाभावेऽव्ययीभाव इत्यभिप्रेत्याह—नास्ति संशय इति। तुल्यार्संशयमत आह मनो दुर्निग्रहं चलमित्यत्रेति। त्वदुक्तार्थे न कश्चित्संशय; चञ्चलं हि मन इति त्वदुक्तार्थस्सत्य एवेत्यर्थ.।

तुशब्दार्थमाह—किं त्विति। कस्यांचिच्चित्तभूमौ चित्तस्य समानप्रत्ययावृत्तिरभ्यास.; चित्तस्य भूमि. स्थल विषय इति यावत्। विष्णुमूर्त्यादिरूप इति भावः। समानप्रत्यया एकाकारज्ञानानि तेषामावृत्ति; यथा प्रणवोपासकाना प्रणवश्चित्तभूमि.। ओं ब्रह्म प्रणवो ब्रह्मेति वा। असकृच्चिन्तनं समानप्रत्ययावृत्तिः-- यथा वा विष्णुमूर्त्युपासकाना विष्णुमूर्तिश्चित्तभूमिः तद्विषयास्समानप्रत्ययाः— विष्णुमूर्तिर्ब्रह्म विष्णुमूर्तिर्ब्रह्म इत्याकारका। तेषामावृत्ति.- यथा वा आत्मोपासकानामात्मा चित्तभूमिः। तद्विषयाश्चित्तस्य समानप्रत्यया. अहं ब्रह्मास्मि अहं ब्रह्मास्मीत्येवंरूपा बुद्धिवृत्तयः; तेषामावृत्तिरिति।

तेन वैराग्येण च गृह्यते विक्षेपरूपः प्रचारः चित्तस्य । एवं तन्मनो गृह्यते निगृह्यते निरुध्यत इत्यर्थः ॥३५॥

असंयतात्मना योगो दुष्प्राप इति मे मतिः ।
वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥३६॥

यः पुनरसंयतात्मा तेन, असंयतात्मनेति । असंयतात्मना अभ्यासवैराग्याभ्यामसंयत आत्मा अन्तःकरणं यस्य सोऽयमसंयतात्मा तेन असंयतात्मना योगः दुष्प्रापः दुःखेन प्राप्यत इति मे मतिः । यस्तु पुनर्वश्यात्मा अभ्यासवैराग्याभ्यां वश्यत्वमापादितः आत्मा मनो यस्य सोऽयं वश्यात्मा, तेन वश्यात्मना तु यतता भूयोपि प्रयत्नं कुर्वता शक्योऽवाप्तुं योग उपायतः यथोक्तादुपायात् ॥३६॥

अर्जुनः— अयतिश्श्रद्धयोपेतो योगाच्चलितमानसः ।
अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥३७॥

तत्र योगाभ्यासाङ्गीकरणेनेहलोकपरलोकप्राप्तिनिमित्तानि कर्माणि सन्न्यस्तानि, योगसिद्धिफलं च मोक्षसाधनं सम्यग्दर्शनं न प्राप्तमिति योगी योगमार्गान्मरणकाले चलित-

दोषाः क्षयिष्णुत्वसातिशयत्वदुःखोदर्कत्वादयः, तेषां दर्शनाभ्यासादसकृद्दर्शनादित्यर्थः । जातमिति शेषः । वैतृष्ण्यं विगता तृष्णा विषयाभिलाषो यस्य स वितृष्णः तद्भावो वैतृष्ण्यं तृष्णाभाव इत्यर्थः । गृह्यते किं गृह्यतेऽत आह—**चित्तस्य प्रचार इति** । चित्तप्रचारस्याकारमाह—**विक्षेपरूप इति** । विक्षेपश्चलनं; विषयेषु प्रवृत्तिरित्यर्थः । विषयसङ्कल्पविकल्पादिरूपा क्रियेति यावत् । चित्तविक्षेप-निरोधे सति चित्तनिरोधो जातप्राय इत्याह—**एवं तन्मनो गृह्यत इति** । तन्मनः चञ्चलं मन इत्यर्थः ।

हेमहाबाहो ! चलं मनो दुर्निग्रहमित्यसंशयम् । तु तदिति शेषः । हेकौन्तेय ! अभ्यासेन वैराग्येण च गृह्यते पुरुषेणेति शेषः । चञ्चलमपि मनः अभ्यासवैराग्याभ्यां साधनाभ्यां चित्तविक्षेप निरोधद्वारा पुरुषेण निरुद्धं भवतीत्यर्थः ।

सङ्कल्पविकल्पादिक्रियास्वभावस्य मनसस्सहसा निर्व्यापारीकरणस्याशक्यत्वात् भगवदाद्यालम्बन-चिन्तनात्मकक्रियायां तन्मनः प्रवर्त्य विषयदोषदृष्ट्या विषयचिन्तनान्निवर्त्य च शनैश्शनैस्स्वाधीनं कुर्या-त्स्वभावदुष्टं वाजिनमिव कुशल इत्यभिप्रायः ॥३५॥

**असंयतेति** । असंयतोऽनियतः; अस्वाधीन इत्यर्थः । दुःखेन प्राप्तुं शक्यो दुष्प्रापः प्राप्तु-मशक्य इत्यर्थः । मे मतिर्मम मतम् । **भूयोपीति** । इतः प्राक् मनसस्स्वायत्तीकरणे प्रयत्नस्य कृतत्वा-द्भूयोपीत्युक्तम् । अनेन जितेपि मनसि न विश्वासः कर्तव्यः, किंतु सर्वदापि तज्जय एव कृतावधानेन भवितव्यमन्यथा स्वाभाविकदोषस्य पुनरप्यापातप्रसङ्गान्मनस इति सूचितम् । उपायस्साधनानुष्ठानम् । यथोक्तं निश्चयानिर्वेदसमदर्शनादिकम् ॥३६॥

**अयतिरिति, योगाभ्यासकरणेनेति** । असन्न्यासिनो योगमार्गानधिकारादिति भावः ।

चित्त इति तस्य नाशमाशङ्क्यार्जुन उवाच--अयतिरिति । अयतिः अप्रयत्नवान् योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या चोपेतः योगादन्तकाले चलित मानस मनो यस्य स चलितमानसः भ्रष्टस्मृतिः सः अप्राप्य योगससिद्धिं योगफल सम्यग्दर्शन कां गतिं हेकृष्ण गच्छति ॥३७॥

कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ।
अप्रतिष्ठो महाबाहो! विमूढो ब्रह्मणः पथि ॥३८॥

कच्चिदिति । कच्चित् किं नोभयविभ्रष्टः कर्ममार्गाद्योगमार्गाच्च विभ्रष्टस्सन् छिन्नाभ्रमिव नश्यति किं, अप्रतिष्ठो निराश्रयः, हेमहाबाहो! विमूढस्सन् ब्रह्मणः ब्रह्मप्राप्तिमार्गे ॥

---

योगमार्गाद्ध्यानमार्गात्। मरणकाल इति । तदानीं कफवातदोषवशादिति भाव । चलित विक्षिप्त चित्तं यस्य स । न हि म्रियमाणस्य चित्तसमाधानं सुकरमिति भाव ।

नाशमिति । कर्मतत्फलसन्न्यासादैहिकामुष्मिकभोगभ्रंश , योगस्य चासमाप्तत्वान्मोक्षाद्भ्रंश इत्युभयभ्रंशरूपो नाश इति भाव ।

गृहस्थस्य कर्मफलभ्रंशरूपनाशासम्भवात् , मोक्षभ्रंशमात्रेण नाशस्य दुर्वचत्वान्नायं गृहस्थविषय प्रश्न , किंतु सन्न्यासिविषय एवेति प्रागेव व्यावस्थापितमाचार्यै ।

अयति श्रद्धयोपेन योगाच्चलितमानस सन्न्यासीति शेष प्रकरणात् । योगसंसिद्धिमप्राप्य हेकृष्ण! कां गतिं गच्छति ।

यतत इति यति , न यतिरयति अयतमान । यावदर्थमाह—अप्रयत्नवानिति । यद्वा गतिरिति वद्यतिरिति। भावप्रत्ययान्त । न विद्यते यति प्रयत्नो यस्य सोऽयति । अप्रयत्न प्रयत्नोऽस्यास्तीति प्रयत्नवान् स न भवतीत्यप्रयत्नवानिति भाष्ये विग्रह । आफलोदयं प्रयत्नरहित इत्यर्थ । सुतरामप्रयत्नत्वे योगाच्चलितमानस इति वक्तुमयुक्तत्वात् ।

श्रद्धात्र योगमार्गविषयिण्येव प्रकरणादित्याह—योगमार्गे इति । विषयसप्तमी । आस्तिक्यबुद्धि॰ अस्ति दिष्ट मतिर्यस्य स आस्तिक तद्भाव आस्तिक्यं तद्बुद्धि । योगप्राप्यमोक्षादावस्तित्वबुद्धिरित्यर्थ । गम्यते प्राप्यत इति गति । अप्राप्तेनानेन किं प्राप्यत इत्यर्थ ॥३७॥

कच्चिदिति । हेमहाबाहो! पूर्वश्लोकोक्तो योगी अप्रतिष्ठ -ब्रह्मण पथि विमूढस्सन्नत एव उभयभ्रष्टस्सन् , छिन्नाभ्रमिव न नश्यति कच्चित् ॰ सन्न्यासस्वीकारात्कर्ममार्गभ्रंश , योगस्यासमाप्तत्वाद्योगमार्गाद्भ्रंश इत्युभयभ्रंशवानुभयभ्रष्ट । छिन्नाभ्रं वायुना विशकलितो मेघ ; तद्धि निराश्रयं गगन एव नश्यति, नतु पर्वतादिकं स्वस्थानं प्राप्नोति, नापि समुद्रं गम्यस्थानं, किंतु मध्य एव नश्यति अत उभयभ्रष्टमेव तत् । स्वस्थानत्यागाद्गन्तव्यस्थानाप्राप्तेश्च, तद्वदयमपीति भाव ।

असङ्गस्य ब्रह्मण कथं मार्गसङ्गित्वमत आह—ब्रह्मप्राप्तिमार्गे इति । मोक्षमार्ग इत्यर्थ । अभ्युदयमार्गं विहाय मोक्षमार्गं प्रविष्ट कालाद्यभावात्तत्र निरालम्बनं विमोहं च प्राप्तस्सन्नयं योगी न नश्यति किमित्यर्थ । नश्यति किमिति प्रष्टव्ये न नश्यति किमिति प्रश्न । तादृशयोगिनो नाशाभाव

एतं मे संशयं कृष्ण! छेत्तुमर्हस्यशेषतः ।
त्वदन्यस्संशयस्यास्य छेत्ता नह्युपपद्यते ॥३९॥

एतमिति । एतं मे मम संशयं कृष्ण! छेत्तुमपनेतुमर्हसि- अशेषतः त्वदन्यस्त्वत्तोन्यः ऋषिर्देवो वा छेत्ता नाशयिता संशयस्यास्य न हि यस्मादुपपद्यते न सम्भवति; अतः त्वमेव छेत्तुमर्हसीत्यर्थः ॥३९॥

श्रीभगवानुवाच— पार्थ! नैवेह नामुत्र विनाशस्तस्य विद्यते ।
न हि कल्याणकृत्कश्चिद्दुर्गतिं तात! गच्छति ॥४०॥

श्रीभगवानुवाच—पार्थेति । पार्थ! नैवेह इहलोके, नामुत्र परस्मिन् लोके वा विनाशस्तस्य विद्यते नास्ति; नाशोनाम पूर्वस्माद्धीनजन्मप्राप्तिः । स तस्य योगभ्रष्टस्य नास्ति । न हि यस्मात्कल्याणकृच्छुभकृत् कश्चिद्दुर्गतिं कुत्सितां गतिं हे तात! तनोत्यात्मानं पुत्र-

---

त्वस्येष्ट इति सूचयितुं छिन्नाभ्रमिवेति तु व्यतिरेकदृष्टान्तः । यथा छिन्नाभ्रं नश्यति तथायं न नश्यति किमिति । अत्र छिन्नाभ्रं पूर्वस्माद्बृहतो मेघाच्छिन्नश्शकलः । परं बृहन्मेघमप्राप्य पूर्वं बृहन्मेघं च त्यक्त्वा मध्ये यथा नश्यति तद्वदिति केचित् ।

यत्तु रामानुजः—यथावस्थितं स्वर्गादिसाधनभूतं कर्म फलाभिसन्धिरहितस्यास्य पुरुषस्य स्वफलसाधनत्वेन प्रतिष्ठा न भवतीत्यप्रतिष्ठः । प्रक्रान्ते ब्रह्मणः पथि विमूढः तस्मात्पथः प्रच्युत अत उभयभ्रष्ट इति, तत्तुच्छम्—स्वर्गादिसाधनभूतस्यापि फलाभिसन्धिरहितस्यानुष्ठितस्य कर्मणः चित्तशुद्धिदुरितक्षयादिरूपमहाफलसत्त्वात्, ईश्वरार्थमनुष्ठितस्यापि कर्मणो महाफलसत्त्वात्स्वर्गाद्यसाधननित्यकर्मफलसत्त्वाच्च न गृहस्थस्य योगमार्गाश्रयणमात्रेण कर्मपथभ्रंशः । तस्मान्न गृहस्थं प्रत्युभयभ्रष्टप्रश्नोपपत्तिः । प्रतिपादितं चैतदध्यायारम्भएव श्रीमच्छङ्करभगवत्पादाचार्यैः ॥३८॥

एतमिति । एतं पूर्वोक्तं सन्न्यासिनोऽप्रतिष्ठितयोगस्योभयभ्रष्टत्वप्रयुक्तनाशसत्त्वासत्त्वरूपमित्यर्थः । ईश्वरादन्यत्वं द्वैपायनादिष्वप्यस्ति, परं तु तेषु दर्शितसंशयच्छेदनसामर्थ्यशङ्काया एवासम्भव इत्यभिमेत्याह—ऋषिर्देवो वेति । ऋषिर्मन्त्रद्रष्टा वसिष्ठादिः । देवो ब्रह्मादिः । सामान्यतस्संशयच्छेदनसामर्थ्यशाल्यपि ऋषिर्देवो वा नास्य संशयस्य छेदने प्रभवतीति मन्येऽहमित्यर्थः । अत इति । यस्मादन्यः प्रकृतसंशयच्छेत्ता नास्ति तस्मादित्यर्थः । तवैव सर्वज्ञत्वादिति भावः ॥३९॥

पार्थेति । ऐहलौकिकतिर्यगादिहीनजन्मप्राप्तिरूपः, पारलौकिकनारक्यादिहीनजन्मप्राप्तिरूपो वा नाशो नास्ति योगभ्रष्टस्येत्यर्थः । कल्याणकृतो दुर्गतिप्राप्त्यसम्भवस्सर्वविदित एव । योगो हि परं कल्याणम् । तस्माद्योगकृतो नास्ति दुर्गतिप्राप्तिरिति द्वितीयवाक्यार्थः ।

हेतात हेशिष्य! कथं शिष्ये तातशब्दप्रयोगोऽत्र आह—तनोतीत्यादि । आत्मानं पुत्ररूपेण तनोति विस्तारयत्युत्पादयतीति यावत् तातः । 'अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे' इति श्रुतेः पितृभुक्तान्नपरिणामरूपवीर्यमयत्वाच्च पुत्रस्य । ननु कथमात्मनो जन्यत्वं जनकत्वं वेति वाच्यं, पितृदेहात्पुत्रदेहो जायत इति कार्यकारणसङ्घातरूपयोरेव पितृपुत्रयोरिह ग्रहणात् ।

रूपेणेति पिता तात उच्यते- शिष्योपि पुत्रवदित्यपुत्रोपि तात उच्यते, न गच्छति ॥४०॥

प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीस्समाः ।
शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥४१॥

किं त्वस्य भवति, प्राप्येति । योगमार्गे प्रवृत्तस्सन्यासी सामर्थ्यात् प्राप्य गत्वा पुण्यकृतामश्वमेधादियाजिनां लोकान् तत्रोषित्वा वासमनुभूय शाश्वतीर्नित्याः समाः संवत्सरान् तद्भोगक्षये शुचीनां यथोक्तकारिणां श्रीमतां विभूतिमतां गेहे गृहे योगभ्रष्टोऽभिजायते॥४१॥

अथ वा योगिनामेव कुले भवति धीमताम् ।
एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥४२॥

अथ वेति । अथवा श्रीमतां कुलादन्यस्मिन् योगिनामेव दरिद्राणां कुले भवति

---

एवं पितुस्तातशब्दवाच्यत्वमुत्पाद्य पुत्रस्यापि तद्व्युत्पादयति—पितैवेति । 'आत्मा वै पुत्रनामासी'ति श्रुतेरिति भाव । अथ शिष्यस्य तत्त्वं प्रतिपादयति—शिष्योपीति । 'वंशो द्वेधा विद्यया जन्मना' चेति शास्त्रात्पिता पुत्रं जन्मना जनयति, आचार्यस्तु शिष्यं विद्यया जनयति । तथा च विद्यया जन्यजनकभावश्शिष्याचार्ययोरस्तीति गुरु पिता, शिष्यस्तु पुत्र । दर्शितरीत्या यथा पुत्रस्तात तथा शिष्योपि तात एवेत्यभिप्रेत्याह—शिष्योपि पुत्रवदिति ।

अपुत्रोपीति पुत्रसदृश शिष्योपीत्यर्थ । नञर्थस्तत्सादृश्यस्याप्यर्थत्वात् । नच पुत्रादन्योऽपुत्र इति तदन्यत्वमत्र नञर्थ इति वाच्यं, तथासति पुत्रादन्यस्य घटस्याप्यपुत्रत्वापत्ते । न चेष्टापत्ति, अपुत्रस्य घटस्य तातपदवाच्यत्वापत्ते । शिष्योपि पुत्र उच्यत इत्येतावन्मात्रमेव केषुचित्पुस्तकेषु पाठान्तरं दृश्यते ॥४०॥

प्राप्येति । योगभ्रष्ट पुण्यकृतां लोकान् प्राप्य शाश्वती समा उषित्वा शुचीनां श्रीमतां गेहे अभिजायते, कोसौ योगभ्रष्टोत आह—योगमार्गे प्रवृत्तस्सन्यासीति । योगमार्गे प्रवृत्तिं विना ततो भ्रष्टायोगात् । असन्यासिनो योगमार्गेऽधिकाराभावाच्चेति भाव । इदमेव सूचयति—सामर्थ्यादिति । योगभ्रष्टपदग्रहणबलादित्यर्थ ।

पुण्यमश्वमेधयागादिरूपं धर्मं कृतवन्त इति पुण्यकृत । पुण्यं कुर्वन्तीति [illegible] विग्रह । तेषां लोकानिति यान् लोकान् ते गच्छन्ति तानित्यर्थ । नित्या इति । अनेका इत्यर्थ । अविनाशित्वरूपनित्यत्वासम्भवात्संवत्सराणाम् । कदा जायते अत आह—तद्भोगक्षये इति । प्रारब्धक्षयं विना देवादिशरीरपातासम्भवादिति भाव । वेदविहितकर्माननुष्ठातृषु शुचित्वासम्भवादाह—यथोक्तकारिणामिति । उक्तमनतिक्रम्य यथोक्तं कर्तुं शीलं येषां ते यथोक्तकारिण, वेदविहितानुष्ठातार इत्यर्थ । तेषां विभूतिस्सम्पत् अभिजायते अवश्यं जायते ॥४१॥

अथ वेति । अथ वेति पक्षान्तरात् पूर्वं श्रीमत्कुलजन्मपक्षस्योक्तत्वादिदानीं तद्भिन्नदरिद्रकुलजन्मपक्ष उच्यत इत्याह—श्रीमतां कुलादन्यस्मिन्निति । योगिनां कर्मयोगिनां दरिद्राणां कुले भवे।

ायते धीमतां बुद्धिमताम् । एतद्धि दुर्लभतरं एतद्धि जन्म दरिद्राणां योगिनां कुले दुर्लभतरं दुःखलभ्यतरम्- पूर्वमपेक्ष्य लोके जन्म यदीदृशं यथोक्तविशेषणे कुले ॥४२॥

तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम् ।
यतते च ततो भूयस्संसिद्धौ कुरुनन्दन ! ॥४३॥

यस्माच्च, तत्रेति । तत्र योगिनां कुले तं बुद्धिसंयोगं बुद्ध्या संयोगं लभते पौर्वदैहिकं पूर्वस्मिन् देहे भवं पौर्वदैहिकं; यतते च प्रयत्नं च करोति ततस्तस्मात्पूर्वकृतात् संस्कारात्, भूयो बहुतरं संसिद्धौ संसिद्धिनिमित्तं हे कुरुनन्दन ! ॥४३॥

---

ननु श्रीमतां कुले जन्मैव श्लाघ्यं, न तु दरिद्राणां योगिनामिति मन्वानमालक्ष्यार्जुनमाह—एतद्धीति । एतच्छब्दार्थमाह—दरिद्राणां योगिनां कुले जन्मेति । अयोगिनां दरिद्राणां कुले जन्मनः पापहेतुत्वाद्योगिनामपि धनिकानां कुले जन्मनो मदहेतुत्वाच्च दरिद्राणां योगिनामित्युक्तम् । दुःखेन लब्धुं शक्यं दुर्लभमतिशयेन दुर्लभं दुर्लभतरं- दुःखेनापि लब्धुमशक्यमित्यर्थः । किमपेक्षयेत्यत्र आह—पूर्वमपेक्ष्येति । शुचीनां श्रीमतां गेहे जन्मापेक्ष्येत्यर्थः । तत्तु शुचीनां श्रीमतां गेहे जन्म दरिद्रयोगिकुलजन्मेतरजन्मापेक्षया उत्कृष्टमेवेति बोध्यम् ।

यथोक्तविशेषण इति दरिद्रत्वयोगित्वरूपविशेषणद्वयविशिष्टे इत्यर्थः । यदीदृशं जन्म तदेतज्जन्म लोके दुर्लभतरं हीत्यन्वयः । हिः प्रसिद्धौ ॥४२॥

तत्रेति । दरिद्रयोगिकुलजन्मनः कुतः प्राशस्त्यं, श्रीमच्छुचिकुलजन्मापेक्षयेत्यत्र आह—तत्रेति ।

ननु दरिद्रयोगिकुले जातस्य योगभ्रष्टस्य पौर्वदैहिकबुद्धिसंयोगलाभः; श्रीमच्छुचिकुले जातस्य तस्यैव तल्लाभो नेति कुत उच्यत इति चेत्, उच्यते—दारिद्र्यानुभवेन पूर्वजन्मार्जितं पापमेव क्षीयते, न तु सुकृतं- दारिद्र्यानुभवस्यासुकृतफलत्वात् 'भिक्षिता शतमखी सुकृतं यत्तत्परिश्रमविदः स्वविभूतौ' इति श्रीहर्षेण इन्द्रैश्वर्यस्य शतमखीसुकृतजन्यत्वस्योक्तत्वात्, ऐहिकैश्वर्यस्यापि सुकृतपरिपाकरूपत्वस्य शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायत इत्यनेनैवोक्तत्वात् ।

तस्माद्यैस्सम्पदनुभूयते तैः पूर्वसुकृतक्षय एव सम्पाद्यते—अत एव 'पूर्वपुण्यविभवव्ययलब्धास्सम्पदो विपद एव विमृष्टा' इति श्रीहर्षस्सम्पदां पूर्वपुण्यक्षयकारित्वेन विपद्रूपत्वमेवावोचत् । यदेवं सम्पदनुभवेन पूर्वार्जितयोगसुकृतस्य क्षीणत्वान्नास्ति श्रीमच्छुचिकुलजातस्य पौर्वदैहिकबुद्धिसंयोगलाभः । दरिद्रयोगिकुलजातस्य तु दारिद्र्यानुभवेन योगसुकृतस्याक्षीणत्वाच्चद्बलेन पौर्वदैहिकबुद्धिसंयोगलाभः । तस्माद्यस्य योगसुकृतं सम्पदनुभवेन क्षीणं सोऽपकृष्टएव दरिद्रयोगिकुलजापेक्षया- अस्य योगसुकृतांकुरस्याक्षीणस्य पुनःप्रयत्नेनाभिवृद्धिं गमिष्यमाणत्वात् । तस्मात्सम्पदनुभवनाशितयोगांकुराच्छ्रीमच्छुचिकुलजन्मनः दारिद्र्यानुभवानाशितवर्धितयोगांकुरं दरिद्रयोगिकुलजन्मैव परमोत्तमम् ।

तं पूर्वजन्मसम्पादितं संयोगं सम्बन्धं । बुद्धिश्चित्तसमाधानरूपो योगः । तद्विषयं ज्ञानं वा आत्मविषया बुद्धिरिति वा । पौर्वदैहिकमनुशतिकादित्वादुभयपदवृद्धिः । संसिद्धाविति विषयसप्तमी । संसिद्धिर्मोक्षस्सम्यग्दर्शनं वा ॥४३॥

पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ।
जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥४४॥

पूर्वाभ्यासेनेति । यः पूर्वजन्मनि कृतोऽभ्यासः स पूर्वाभ्यासः तेनैव बलवता ह्रियते हि यस्मात्, अवशोपि सः योगभ्रष्टः तेन कृत चेत् योगाभ्यासजनितसंस्कारात् बलवत्तर मधर्मादिलक्षण कर्म तदा योगाभ्यासजनितेन संस्कारेण ह्रियते; अधर्मश्चेद्बलवत्तरः कृतस्तेन योगजोपि संस्कारोऽभिभूयत एव, तत्क्षये तु योगजसंस्कारः स्वयमेव कार्यमारभते । न दीर्घकालस्थस्यापि विनाशस्तस्यास्तीत्यर्थः । अतो जिज्ञासुर्योगस्य स्वरूपं ज्ञातुमिच्छन्नपि योगमार्गे प्रवृत्तः सन्न्यासी योगभ्रष्टस्सामर्थ्यात् सोपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमति वर्तते अपाकरिष्यति । किमुत बुध्वा योगं तन्निष्ठोऽभ्यास कुर्वन् ॥४४॥

---

पूर्वेति । अवशोपि स तेनैव पूर्वाभ्यासेन ह्रियते योगस्य जिज्ञासुरपि शब्दब्रह्मातिवर्तते । स दरिद्रयोगिकुले जात इत्यर्थ । इदमेवाह—योगभ्रष्ट इति ।

पूर्वाभ्यासेन ह्रियत इति सामान्यत उक्तांशे विशेषमाह—तेनेति । योगभ्रष्टेनेत्यर्थ । तेन कर्म न कृत चेदित्यन्वय । कीदृश कर्मेत्यत आह—बलवत्तरमिति । किमपेक्षयेत्यत आह—योगाभ्यासेति । किं लक्षण कर्मात्र आह—अधर्मादीति । आदिपदाद्धर्मग्रहणम् । धर्माधर्मापेक्षया योगसंस्कारो बलवत्तरस्याच्चेदित्यर्थ । तदेति तर्हीत्यर्थ । ह्रियत इति योगाभ्यासं प्रति नीयत इत्यर्थ । पुनर्योगमार्गे प्रवर्त्यत इति यावत् ।

विपक्षे किं भवेदित्यत आह—अधर्मश्चेति । धर्मस्याप्युपलक्षणमिदम् । अधर्मादिलक्षणं योग संस्कारापेक्षया बलवत्तर कर्म तेन कृत चेत्तर्हि तेन कर्मणा योगजोपि संस्कारोऽभिभूयत एव ।

नच अधर्मेण बलवत्तरेण योगसंस्कारस्याभिभवोस्तु नाम, कुत पुनर्धर्मेणेति वाच्यं, अधर्मवद्धर्मस्यापि योगप्रतिबन्धकत्वाभ्युपगमात । अधर्मजन्यद्वन्द्वरोगादेरिव धर्मजन्यबलसम्पदादेरपि चित्तविक्षेपहेतुत्वेन योगप्रतिबन्धकत्वमिति ।

नच योगसंस्कारोपि धर्मसंस्कार एव योगस्य धर्मत्वादिति वाच्य, 'अशुक्लकृष्णं कर्मयोगिन स्त्रिविधमितरेषा मिति सूत्रा शुक्लकृष्णमिश्रपदवाच्यधर्माधर्मतदुभयात्मककर्मभिन्नमेव योगिन कर्मादृष्टाख्यमशुक्लकृष्णमिति धर्माधर्मसंस्कारभिन्न एव योगसंस्कार ।

ननु अधर्मादिलक्षणकर्मणा योगसंस्कारस्याभिभव इति किं, नाश इत्येव वक्तव्यमत आह—नेति । दीर्घकालस्थस्यापि तस्य योगसंस्कारस्य नाशो नास्तीत्यन्वय । कालान्तरेणापि योगसंस्कार स्वकार्यं योगलक्षणमारभत एव, नतु सर्वात्मना नश्यतीत्यर्थ । तस्मान्न सर्वथा योगसंस्कारस्य वैफल्यमिति भाव ।

अत इति । सर्वथा योगसंस्कारस्य नाशाभावादित्यर्थ । जिज्ञासुरपीति । न तु ज्ञातयोग स्वरूपोपीत्यपेरर्थ । किमुत ज्ञातयोगस्वरूप इति यावत् । शब्दब्रह्म शब्दो वेद तद्रूप ब्रह्म शब्दब्रह्म । लक्षणया वेदोक्तकर्मानुष्ठानफलमित्यर्थ । अतिक्रम्य वर्तते अतिवर्तते । फलितार्थमाह—अपाकरिष्य

तीति । निरसिष्यतीत्यर्थः । वेदोक्तकर्मानुष्ठानजन्यं फलं तुच्छीकृत्य तद्विहाय महत्तरमेव फलं प्राप्स्यतीति भावः । तन्निष्ठः योगनिष्ठः । जिज्ञासुरपीत्यपिशब्दार्थं स्वयमेव स्फुटीकरोति—किमुतेत्यादिना ।

यत्तु रामानुजः—शब्दब्रह्म देवमनुष्यादिशब्दप्रतिपाद्यप्रकृतिरिति, तत्तुच्छम्—ब्रह्मशब्देनैव प्रकृत्यर्थलाभे शब्दपदवैयर्थ्यात् । नच शब्दाभिलापयोग्यं ब्रह्मैवाभिधीयते प्रकृतिरिति, अन्यत्तु परब्रह्मेति वाच्यं, परब्रह्मरूपशब्दाभिलापयोग्यब्रह्मत्वस्य परब्रह्मण्यपि सत्त्वात् । नच देवमनुष्यादिशब्दाभिलापयोग्यं ब्रह्मात्र विवक्षितमिति वाच्यं, देवमनुष्यादिविशेषशब्दाभावान्मूले ।

किंच शब्दशब्दस्य शब्दाभिलापयोग्यार्थलाभोपि न लक्षणां विना निर्वोढुं शक्यते, अतोऽस्मन्मत इव तव मतेपि लक्षणा स्वीकृतैव । अथ योगं जिज्ञासुना प्रकृतिः कथमतिवर्त्येत ? न कथमपि । प्रकृत्यतीतो हि तव मते परमात्मैव तदधीनत्वात्प्रकृतेः । मुक्ताश्च भगवदनुग्रहादेव मायां तरन्ति न तु स्वतः, नहि योगं जिज्ञासुः परमात्मा, नापि मुक्तः किंतु बद्धजीव एव; कथमस्य प्रकृत्यतिवर्तनम् ।

नच स च योगं जिज्ञासुर्योगं ज्ञात्वा योगमनुष्ठाय प्रकृतिमतिवर्तत इत्यभिप्रायाज्जिज्ञासुरित्युक्तमिति वाच्यं, जिज्ञासुरपीत्यपिशब्देन ज्ञातयोगयोगानुष्ठातृभ्यां जिज्ञासोः पृथक्करणात्, अन्यथापि शब्दवैयर्थ्यप्रसङ्गात् ।

अपि च अनुष्ठितयोगस्यापि न योगानुष्ठानमात्रेण प्रकृत्यतिवर्तनं, किंतु तज्जन्यसम्यग्दर्शनेनैव । ततश्च ज्ञानिन एव प्रकृत्यतिवृत्तिर्न तु योगिन इति सिद्धे किं पुनर्जिज्ञासितयोगस्य इति ।

यच्चोक्तमत्र ज्ञानानन्दमयस्त्वात्मा शेषोऽस्य परमात्मन इति वेदान्तदेशिकः, तच्च तुच्छम्—ज्ञानानन्दमय इति मयटः किं प्राचुर्यमर्थः ? यद्वा विकारः ? अथ वा स्वार्थः ? नाद्यः- आनान्दप्राचुर्ये दुःखाल्पत्वप्रतीतेः । न द्वितीयः- निर्विकारत्वादात्मनः, अकार्यत्वाच्च । नान्त्यः- वैयर्थ्यात् ।

वैलक्षण्यार्थकस्तुशब्दोप्ययुक्तः- किमिदं वैलण्यं परमात्मापेक्षया ? उत अनात्मापेक्षया ? नाद्यः—परमात्मनस्तव मते आनन्दमयत्वाद्ज्ञानस्वरूपत्वाच्च । 'आनन्दमयोऽभ्यासा'दिति सूत्रे आनन्दमय ईश्वर इति हि त्वयोक्तम् । कथं ज्ञानानन्दमयः परमात्मा तादृशादेवात्मनो भिन्नः स्यात् । अस्मन्मतेपि आनन्दरूपत्वादुभयोर्न भेदः । न द्वितीयः- विज्ञानमयानन्दमयकोशयोरनात्मनोर्ज्ञानानन्दमयादात्मनो वैलक्षण्यस्य दुरुपपादत्वात् । नच विज्ञानमयकोशो जीवः, आनन्दमयकोश ईश्वरश्चेति वाच्यं, विज्ञानमयमात्मानमुपसंक्र'म्येति विज्ञानमयस्यानन्दे लयश्रवणात्, जीवस्य नित्यत्वाच्च । एवमानन्दमयस्याप्यानन्दे लयसम्भवेन तस्येश्वरत्वायोगाच्च । कोशवदात्मस्वरूपावरकत्वेन विज्ञानमयस्यानन्दमयस्य च कोशत्वव्यवहारादात्मनश्च कोशान्तरत्वात् ।

एवं विज्ञानानन्दमयकोशयोरान्तरस्य ज्ञानानन्दरूपस्यात्मनो न परमात्मशेषत्वमनन्यशेषत्वादात्मनः, सर्वंप्रति शेषित्वाच्च । आत्मभिन्नत्वे तु ईश्वरस्याप्यात्मशेषत्वापत्तेः प्रपञ्चवत् ।

नहि ज्ञानानन्दरूपादात्मनो भिन्न ईश्वरो ज्ञानानन्दरूपो भवितुमर्हति । तथासति भेदायोगात् ।

प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ।
अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥४५॥

कुतश्च योगित्वं श्रेय इति, प्रयत्नादिति । प्रयत्नात्प्रयतनाद्यतमानस्तु अधिकं प्रयतमान इत्यर्थः । तत्र योगी विद्वान् संशुद्धकिल्बिषः संशुद्धपापः अनेकजन्मसंसिद्धः अनेकेषु जन्मसु किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकजन्मकृतेन संसिद्धः अनेकजन्मसंसिद्धस्ततस्समुत्पन्नसम्यग्दर्शनस्सन् याति परां गतिं प्रकृष्टां गतिम् ॥४५॥

तपस्विभ्योऽधिको योगी ज्ञानिभ्योपि मतोऽधिकः ।
कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ! ॥४६॥

यस्मादेव तस्मात् , तपस्विभ्य इति । तपस्विभ्योऽधिको योगी, ज्ञानिभ्योपि ज्ञानमत्र शास्त्रार्थपाण्डित्यं तद्वद्भ्योपि अधिको मतः ज्ञातोऽधिक इति, कर्मिभ्योऽग्निहोत्रादि कर्म तद्वद्भ्योऽधिको योगी तस्माद्योगी भवार्जुन ! ॥४६॥

---

नच घटाद्घटस्येव मृण्मयान्मृण्मयस्य ज्ञानानन्दरूपादात्मनो ज्ञानानन्दरूप ईश्वरो भिन्न इति वाच्यं घटयोर्भेदं प्रत्याकारभेदस्य प्रयोजकस्य सत्त्वात् । जीवेश्वरयोस्तु ज्ञानैकाकारत्वेन भेदप्रयोजकाकारान्तरासत्त्वात् ।

नच स्वरूपतो भेदाभावेपि धर्मतस्सोस्ति; आत्मन किंचिद्ज्ञत्वात्परमात्मनश्च सर्वज्ञत्वादिति वाच्य, किंचिद्ज्ञत्वसर्वज्ञत्वयोरुपाधिधर्मत्वेनात्मधर्मत्वाभावाद् , औपाधिकभेदस्य चानादिकत्वात् एतस्मात्स्यात्मन परमात्मान्य शेषी किंत्वात्मैव सर्वस्य शेषी ॥४४॥

प्रयत्नादिति । ननु यतमान इत्यनेनैवाल, कः पुन प्रयत्नादित्यस्यार्थ ? प्रत्युत पुनरुक्तिरत आह—अधिकमिति । तत्र योगमार्गे इत्यर्थ । पापस्य सम्यक् शुद्धिर्नाममाभाव । तेन संशुद्धं निरस्तमित्यर्थ । संसिद्ध सम्यक्चित्तशुद्धिलक्षणसिद्धिं प्राप्त इत्यर्थ । उपचित्य वर्धयित्वा यथा अनेकदिनैः अनेकरूपिकारसम्पाद्य धनी भवति कुशलस्तद्वदनेकजन्मसु अनेकयोगसंस्कारान् सम्पाद्य तत्समवायेः संसिद्धिं भजते योगीत्यर्थ । तत्संसिद्धिलाभानन्तरं ज्ञानप्राप्तिद्वारा मुक्तो भवतीत्याह —समुत्पन्नेनेति परा गतिं मोक्षम् ॥४५॥

तपस्विभ्य इति । कथं नित्यमुक्तेभ्य ज्ञानिभ्य योगिन आधिक्यमत आह—ज्ञानमत्र शास्त्रार्थपाण्डित्यमिति । ननु ब्रह्मात्मैक्यज्ञानमित्यर्थ । मुक्तिं प्रति ज्ञानस्य साक्षात्साधनत्वात् ज्ञानसाधनयोगस्य परम्परासाधनत्वाच्चेति भाव । तस्मादिति । यस्माद्ध्यानयोगी तपस्व्याद्यधिकस्तस्मादित्यर्थ । आधिक्यस्यैव सर्वैराकांक्ष्यमाणत्वादिति भाव ।

ननु क्षत्रियस्याज्ञस्य ते कर्मयोग एवाधिकार इति 'कुरु कर्मैव तस्मात्त्वं, कर्मण्येवाधिकारस्ते' इत्यादिना भगवता पूर्वमर्जुनं प्रत्युपदिष्टमिदानीं तु योगी भवेत्युच्यते, ध्यानयोगश्च सन्न्यासिन एव

योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ।
श्रद्धावान् भजते यो मां स मे युक्ततमो मतः ॥४७॥

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे आत्मसंयमयोगो-
नाम षष्ठोऽध्यायः ।

योगिनामिति । योगिनामपि सर्वेषां रुद्रादित्यादिपरायणानां मद्गतेन मयि वासुदेवे समाहितेन अन्तरात्मना अन्तःकरणेन श्रद्धावान् श्रद्दधानस्सन् भजते सेवते यो मां स मे मम युक्ततमोऽतिशयेन युक्तो मतोऽभिप्रेत इति ॥४७॥

इति श्रीपरमहंसपरिव्राजकाचार्यगोविन्दभगवत्पाद-
पूज्यशिष्य श्रीमच्छङ्करभगवत्पादकृतौ
गीताभाष्ये षष्ठोऽध्यायः ।

---

नु गृहस्थस्येति सिद्धान्तितं, क्षत्रियस्य नास्ति सन्न्यासाधिकार इति स्थापितमतः कथमुच्यते योगी भवार्जुनेति चेत्, नैष दोषः—युद्धादिरूपं कर्मयोगमनुष्ठाय ततस्सन्न्यस्य योगी भवार्जुनेति श्रीकृष्णतात्पर्यात् ।

नच क्षत्रियस्य सन्न्यासेऽनधिकार इति वाच्यं, शिखायज्ञोपवीतत्यागादिरूपसमन्त्रकमुख्यसन्न्यासे क्षत्रियस्यानधिकारेपि दारापत्यादिसर्वपरिग्रहपरित्यागरूपामुख्यसन्न्यासेऽधिकारोऽस्त्येव- मुचुकुन्दादीनां क्षत्रियाणां सर्वपरिग्रहपरित्यागपूर्वकं कस्मिंश्चिद्विजने देशे ध्यानयोगावस्थितत्वस्य पुराणादिष्ववगमादेतादृशसन्न्यासस्यैव क्षत्रियस्य विहितत्वेन विध्यतिक्रमदोषाभावाच्च ।

नचैवं सन्न्यासिन एव ध्यानयोगेऽधिकारे कथमसन्न्यासिना वसिष्ठादीनां ध्यानयोगित्वमिति वाच्यं, लोकातीतचरिताना तेषामिहोदाहरणस्यायुक्तत्वात्तत्त्वविदो हि ते यथाप्रारब्धं यथा कथंचिद्वर्तन्ते । प्रपञ्चितं चैतदयस्ताद्बहुशः । तस्माद्युक्तमुक्तं भगवता योगी भवार्जुनेति ॥४६॥

योगिनामिति । यः श्रद्धावान् सन् मद्गतेनान्तरात्मना मां भजते, स मे सर्वेषां योगिनां मध्ये युक्ततमो मतः । योगः क्वापि ध्येये वस्तुनि चित्तसमाधानं; स च ध्येयनानात्वान्नानाविध इति तद्वन्तोपि नानाविधा एवेत्याह—योगिनामपि सर्वेषामिति ।

सर्वेषामित्यस्यार्थमाह—रुद्रादित्यादिपरायणानामिति । रुद्रादित्यादयः परमयनं प्राप्यं येषां तेषां तथोक्तानां रुद्रादित्याद्युपासकानामित्यर्थः । यो यमुपास्ते स तमुपैतीति न्यायात् । रुद्रादित्यादिध्यानपराणामिति पाठान्तरम् । आदिपदेन विराड्हिरण्यगर्भेन्द्रादिदेवानां परमेश्वरस्य च ग्रहणम् ।

वासुदेव इति । परमेश्वर इत्यर्थः । वसति जगत्त्रयमिति, वसन्ति जगन्त्यस्मिन्निति वासुः; स चासौ देवस्स्वप्रकाशो वासुदेव इति व्युत्पत्तेः । मामिति । सगुणं निर्गुणं वा परमात्मानमित्यर्थः ।

सेवत इति । सोहमस्मीतिबुद्धया प्रत्यगभेदेन चिन्तयतीत्यर्थ । ममेति । सर्वज्ञस्य ममेत्यर्थ एतेन सर्वज्ञेश्वरेण यदभिप्रेत तत्तथैव भवतीति भगवदभिप्रेतार्थस्य सत्यत्वं सूच्यते ।

रुद्रादित्यादीना जीवत्वात्तदुपासनाया भिन्नोपासनत्वाद्वासुदेवस्य च परमात्मत्वात्तदुपासनाय अभिन्नोपासनात्वाच्च वासुदेवपरो योगी रुद्रादित्यादिपरयोग्यपेक्षया परमोत्कृष्ट इति भाव ।

ननु अन्त करणमायावच्छिन्नयो प्रत्यक्परयोर्भिन्नत्वात्तदभेदचिन्तनमन्नादेर्ब्रह्माभेदचिन्तनमिव काल्पनिकमेवेति चेत् मैवम्—यदेव मायावच्छिन्न चैतन्यं तदेवान्त करणावच्छिन्नमिति प्रत्यक्परयो-रभेदस्य वास्तवत्वात् । घटमठाद्युपाधिभिराकाशस्येव मायान्त करणाभ्या चैतन्यस्य भेदाभावाच्च ।

नच प्रत्यक्परयो परिच्छिन्नत्वपूर्णत्वप्रयुक्तोऽस्ति विशेष इति वाच्यं, ययोरौपाधिकत्वेनावास्तिकत्वाद्वस्तुतश्चैतन्ये मायान्त करणयोरभावाच्च 'एकमेवाद्वितीयं ब्र'ह्मेति हि श्रूयते । अन्यथा प्रतीच परिच्छिन्नत्वाभ्युपगमे घटादिवदनित्यत्वजडत्वादिकं स्यात्तच्चानिष्टमजो नित्य इत्यादिशास्त्रात् ।

नच प्रत्यगात्मा जीव एव जीवेश्वरयोरस्ति हस्तिमशकयोरिव महदन्तरमिति वाच्यं, 'जीव प्राणधारणे' इत्यनुशासनात्प्राणधारिण एव जीवा ; प्रत्यगात्मा तु अप्राण एव- 'अप्राणो ह्यमनाश्शुभ्र' इति श्रुते ।

तस्मादेवमनुष्यादिभेदभिन्नकार्यकरणसङ्घातविशेषेष्वहममाभिमानिनश्चिदाभासा एव जीवा ; अमीषा च प्रतीचि कूटस्थे कल्पितत्वेन वस्तुन प्रत्यगात्मत्वमेव रज्जौ कल्पितस्य सर्पस्य वस्तुतो रज्ज्वात्मत्ववत् । अत एव तत्त्वमस्यादिश्रुतय जीवेश्वरयोरभेदं ब्रुवन्ति लक्षणया ।

तथाहि, अन्त करणविशिष्टचैतन्यं संसारिजीवशब्दाभिधेयं त्वम्पदस्य वाच्यार्थ । अन्त करणोपहितं निस्संसारं प्रत्यक्चैतन्यं लक्ष्यार्थ । मायाविशिष्टचैतन्यं जगत्कर्तृ ईश्वराख्य तत्पदस्य वाच्यार्थ । मायोपहित परं ब्रह्माख्यं चैतन्य लक्ष्यार्थ । असिपदस्यैक्यमर्थ । वाच्यार्थयोरैक्यानुपपत्त्या लक्ष्यार्थयोस्तदुच्यते- यदेव चैतन्यं मायोपहितं तदेवान्त करणोपहित तदेव मायोपहितं चेति- मायान्त करणोपाधिभेदेप्युपहिताभेदात् ; तथाच तत्त्वमसीत्यस्य वाक्यस्य अखण्डं ब्रह्मैव लक्ष्यार्थ ।

एवमनेन प्रथमषट्केन त्वंपदार्थो निर्धारित ; संसारिणश्चिदाभासस्य कूटस्थे कल्पितस्य स्वस्वरूपं प्रत्यक्चैतन्यमेव निर्धर्मकपरमानन्दबोधरूपमिति ॥४७॥

इति वेल्लङ्कोण्डोपनामक रामकविकृते श्रीमच्छाङ्करभगवद्गीता-
भाष्यार्कप्रकाशे षष्ठोध्याय । समाप्तं प्रथमषट्कम् ।
श्रीहयग्रीवार्पणमस्तु ।

---

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## सप्तमोऽध्यायः ।

'योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मत' इति प्रश्नबीजमुपन्यस्य, स्वयमेव- 'ईदृशं मदीयं तत्त्वमेवं मद्गतान्तरात्मा स्या'दित्येतद्विवक्षुः ।

श्रीभगवानुवाच—मय्यासक्तमनाः पार्थ! योगं युंजन्मदाश्रयः ।
असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु ॥१॥

मयीति । मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य सः मय्यासक्तमनाः, हेपार्थ! योगं युंजन्मनस्समाधानं कुर्वन्, मदाश्रयः अहमेव परमेश्वरः आश्रयो यस्य स मदाश्रयः । यो हि कश्चित् पुरुषार्थेन केनचिदर्थी भवति स तत्साधनं कर्माग्निहोत्रादि तपो दानं वा

---

पूर्वोत्तराध्याययोस्सङ्गतिं दर्शयति—योगिनामिति, प्रश्नबीजमुपन्यस्येति । कीदृशं वासुदेवस्य तव तत्त्वम्? कथं वा योगी वासुदेवगतान्तरात्मा स्यात्? इत्यर्जुनस्य प्रश्नद्वयं यथा स्यात्तथोक्त्वेत्यर्थः । नहि 'तस्माद्योगी भवार्जु'नेति (भग- ६-४६) श्लोकेनैव पूर्वाध्यायस्य समाप्तौ कृतार्थां दर्शितयोः प्रश्नयोरुत्थितिस्स्यादिति भावः । एतेन तत्पदार्थस्य वासुदेवस्य तत्त्वनिर्धारणपरमिदं सप्तमाध्यायप्रभृतिकं मध्यमषट्कं गीताशास्त्रस्येति सूचितम् । स्वयमेवेति । अर्जुनेनापृष्टस्सन्नेवेत्यर्थः । शिष्यमीत्यादिनेति भावः । 'मदीयं तत्त्वमीदृशं, योगी एवं मद्गतान्तरात्मा स्या'दित्येतदंशद्वयं विवक्षुर्वक्तुमिच्छुर्भगवानुवाच—मयीत्यादिकम् ।

हेपार्थ! त्वं मय्यासक्तमनाः मदाश्रयस्सन् योगं युञ्जन् असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु इत्यन्वयः । मयीत्यस्यार्थमाह—परमेश्वर इति । ननु अस्मत्पदस्य वक्तरि शक्तिः वक्ता च कृष्णः स्थातविशेष एवेति कथं मयीति कृष्णोक्तपदस्य परमेश्वरार्थलाभ इति चेदुच्यते—कृष्णस्य स्थातविशेषेहमभिमानाभावात्स्वस्वरूपचैतन्ये परमात्मन्येवाहंबुद्धिसत्त्वादस्मच्छब्दस्य चात्र लाक्षणिकत्वादिति । नैवमस्मदादिभिरप्यहं परमात्मेत्युच्येतेति वाच्यं, इष्टापत्तेः । नचाहं ब्रह्मास्मीत्यत्राहंपदस्य प्रतीचि लक्षणेति वाच्यं, प्रत्यक्परयोरभेदात् । नच परः परोक्षः प्रत्यगात्मा त्वपरोक्ष इति वाच्यं, 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति श्रुतेः परस्याप्यपरोक्षत्वात् । नच परः परमाकाशेऽस्ति, प्रत्यगात्मा तु हृदीति वाच्यं, हृदयाकाशस्यैव परमाकाशत्वात् । 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'तीति (भग- १८-६१)गीतायां अन्तर्यामिब्राह्मणेन च ईश्वरस्य हृदि स्थितिप्रतिपादनाच्च । नच परस्यैव प्रत्यक्त्वे आगमाद्यनुपपत्तिः स्वस्य

सच्चिदानन्दमयत्वज्ञानानुदयात् , सच्चिदानन्दमयत्वज्ञानं विना प्रपञ्चविविक्तत्वविज्ञानानुदयाच्च ईश्वरः सच्चिदानन्दरूपः प्रपञ्चोऽनृतजडदु.खात्मक इति ज्ञाने सतीश्वरः प्रपञ्चाद्विविक्त इति विवेकस्योपदेशं विनैव सिद्धत्वेन सविज्ञानत्वविशेषणानर्थक्यप्रसङ्गात् । अविवेकस्याज्ञानत्वेन विवेकज्ञानरूपविज्ञानातिरिक्तज्ञानसद्भावस्याप्रमाणत्वाच्च, घटपटविवेकं विना घट इति पट इति च स्वरूपज्ञानस्यानुदयाच्च ।

ननु सर्वथाऽपि घट इति स्वरूपज्ञानाद्घटः पटाद्भिन्न इति विवेकज्ञानं भिन्नमेव- ज्ञाने घटमात्रस्यैव विषयत्वात् विवेकज्ञाने घटपटयोस्तद्भेदस्य च विषयत्वात् । तथेश्वर इति ज्ञानादीश्वरः सच्चिदानन्दरूप इति ज्ञानाद्वेश्वर प्रपञ्चाद्भिन्न इति विज्ञानस्य विवेकज्ञानरूपस्य वैलक्षण्यमवश्यमभ्युपेयमिति चेत ; तर्ह्याकारभेदात् ज्ञानविज्ञानभेद इवाकारभेदात् ज्ञानभेदोऽपि स्यादेव; घटः पटः कुड्यं कुसुलमिति । नचेष्टापत्तिः- विषयभेदेऽपि विषयिणो ज्ञानस्याभेद इति सिद्धान्तात् । अन्यथा प्रतिविषयं ज्ञानमिव प्रतिज्ञानं ज्ञातापि भिद्यत एव । तथात्वे एकस्मिन्नेव देहे नानाजीवसत्त्वप्रसङ्ग । नच चैतन्यरूपज्ञानस्यैकत्वेऽपि बुद्धिवृत्तिरूपज्ञानानामनेकत्वात्स्वत एव भेद.- वृत्तेः क्षणिकत्वात् , क्षणे क्षणे जायमानानां वृत्तीनामभेदस्य दुर्वचत्वादिति वाच्यं, वृत्तेः क्रियारूपाया जडत्वेनाज्ञानत्वाद्वृत्तिप्रतिफलितचैतन्यस्यैव ज्ञानत्वात्तत्रापि तस्माद्वृत्तिभेदेऽपि न ज्ञानभेदः, ज्ञानस्य नित्यत्वात्स्वप्रभत्वाच्च न जन्मादिकं किंतु वृत्तेरेव । तदेव ज्ञानं चैतन्यात्मकमीश्वर इति सिद्धमीश्वरस्यात्मनो ज्ञानैकाकारत्वम् ।

ननु वृत्तावेव ज्ञानत्वमुपचारादुच्यते; सैव वृत्तिर्ज्ञानविज्ञानभेदभिन्ना; सा चेश्वरविषयैहोच्यते सच्चिदानन्दरूप ईश्वर इति, ईश्वरः प्रपञ्चाद्विविक्त इति च; इतिचेत् , मैवम्—वृत्तिज्ञानं वृत्तिविज्ञानं चेति वृत्तिद्वैविध्यस्य काप्यप्रसिद्धेः त्वदुक्तवृत्तिविज्ञानस्यापि वृत्तिज्ञानत्वात् , यथा घट इत्येतद्वृत्तिज्ञानं तथा घटः पटाद्भिन्न इत्येतदपि वृत्तिज्ञानमेव हि ।

ननु घटादिप्रत्यक्षस्थलेऽन्त.करणस्य चक्षुर्द्वारा विषयदेशं गतस्य विषयाकारेण य. परिणाम स वृत्तिरिति परिभाषितत्वाद्घट इत्यस्य वृत्तिज्ञानत्वेऽपि घटः पटाद्भिन्न इत्यस्य न वृत्तिज्ञानत्वं- घटपटयोः प्रत्यक्षत्वेऽपि घटः पटाद्भिन्न इत्यस्य ज्ञानस्य जायमानत्वाद्घटपटरूपेणान्तःकरणपरिणामाभावात्, घटपटभेदाकारेणान्त करणस्य परिणामासम्भवाच्च । ततश्च घटः पटाद्भिन्न इतीदं विज्ञानमेव न वृत्तिज्ञानमिति चेन्न, एवमपि वृत्तिज्ञानचैतन्यज्ञानातिरिक्तविज्ञानस्याप्रसिद्धत्वात् , तत्कल्पनाया गौरवत्वात्, सुखाद्याकारान्त.करणपरिणामवद्घटपटभेदाकारान्त.करणपरिणामस्य भवितव्यत्वाद्घटपटभेदज्ञानस्यापि वृत्तिज्ञानत्वसम्भवात् ।

ननु भवतु नाम विज्ञानमपि वृत्तिज्ञानं, तथाऽपि घटपटज्ञानयोरिव ज्ञानविज्ञानयोर्दर्शितयोरस्त्याकारभेदाद्भेदः कल्पित इति चेत्सत्यम्—कल्पितोऽस्तुनाम भेदः, न तस्येह प्रयोजनं- ईश्वरस्वरूपस्यैवेह वक्ष्यमाणत्वात्तावतैवेश्वरजगतोर्वैलक्षण्यसिद्धेः । प्रपञ्चवैलक्षण्यस्यैवेश्वरस्वरूपत्वाच्च । द प्रपञ्चविलक्षणत्वेनेश्वरं न जानाति, स ईश्वरस्वरूपानभिज्ञ एव हि ईश्वरस्वरूपस्य प्रपञ्चविलक्षणत्वा[illegible]

तस्मात्प्रपञ्चविलक्षणसच्चिदानन्दमयेश्वरस्वरूपज्ञानमेव ज्ञानमित्युच्यते । न तु प्रपञ्चविलक्षणेश्वरज्ञानस्य विज्ञानत्वं तदेकदेशस्य ।

अथ यदुक्तं चिदचिद्वस्तुवैलक्षण्यमीश्वरस्य तत्राचिद्वैलक्षण्यसत्त्वेपीश्वरे चिद्वैलक्षण्यं नास्ति--चिद्रूपत्वादीश्वरस्य, नहि चिद्रूपश्चिद्विलक्षणो भवेत् । नच किंचिदूज्ञसावयजीववाची चिच्छब्दोऽत्र, तस्माच्च जीवात्सर्वज्ञो निरवद्य ईश्वरो विलक्षण एवेति वाच्यं, चैतन्यवाचिनश्चिच्छब्दस्य तादृशजीववाचित्वासम्भवात् । जीवेश्वरयोर्द्वयोरपि वस्तुतश्चिन्मात्रत्वात्किञ्चिदूज्ञत्वसर्वज्ञत्वादीनामुपाधिधर्मत्वात् । उपाध्योर्घटमठयोर्भेदेप्युपहितस्याकाशस्यैकरूपत्ववन्मायाविद्ययोरुपाध्योर्भेदेपि चैतन्यस्यैकरूपत्वात् । तस्मान्न चिति किंचिदूज्ञत्वादिजीवधर्मा वा भवितुमर्हन्ति निर्धर्मकत्वाच्चितः ।

नापि चिन्मात्रे ईश्वरे कल्याणगुणसम्भवः- सत्त्वगुणविकारत्वात्कल्याणगुणानां चैतन्यस्य च निर्गुणत्वात् । नच सत्ताचित्त्यानन्दादिगुणानां सत्त्वात्कथं निर्गुणत्वं ब्रह्मण इति वाच्यं, ब्रह्मणोऽपृथग्भूतत्वात्तेषां सत्तादीनामेव ब्रह्मस्वरूपत्वात् । न च सद्रूपत्वं सत्तारूपत्वं च कथमेकस्येति वाच्यं, नारायणस्य तद्रूपत्वतत्त्वरूपत्वयोर्भवताऽप्यभ्युपगतत्वात् । 'तदैक्षत, तत्त्वं नारायणः पर' इति श्रुतेश्च । तस्मात्तच्छब्दतत्त्वशब्दयोर्यथा ब्रह्मवाचकत्वं तद्वत्सच्छब्दसत्ताशब्दयोः चिच्छब्दचित्त्वशब्दयोश्च ब्रह्मवाचकत्वमेव, नतु धर्मधर्मिवाचकत्वम् ।

नच निर्गुणे ब्रह्मणि निर्गुणत्वधर्मसत्त्वात्कथं निर्धर्मकत्वमिति वाच्यं, तथासति निर्धर्मकत्वस्यापि धर्मरूपत्वेन निर्धर्मकत्वाभावस्यैव धर्मभावरूपत्वापत्तेः । नचेष्टापत्तिः- निर्धर्मकत्वाभावस्य धर्मस्वरूपत्वेन धर्माभावरूपत्वासम्भवात् । अथ यदि निर्धर्मकत्वं धर्माभाव इत्येव मतं तर्हि निर्गुणत्वमपि गुणभाव इत्येवेष्यताम् । गुणस्यैव धर्मत्वाद्गुणाभावो हि धर्माभावः । तथा च निर्गुणब्रह्मणो निर्धर्मकत्वमव्याहतम् ।

किंच यन्निर्गुणे ब्रह्मणि वर्तमानं निर्गुणत्वं तद्ब्रह्मरूपमेव सत्तादिवत् । अपि च निर्गुणत्वं हि गुणाभावः, सच ब्रह्मरूप एव- सर्वाभावस्यैव ब्रह्मरूपत्वात् । निष्प्रपञ्चं हि ब्रह्म । नच भावरूपस्य ब्रह्मणः कथमभावरूपत्वमिति वाच्यं, अभावरूपस्य सर्वस्य यथा भावरूपत्वं तथैव भावरूपस्य ब्रह्मणोऽभावरूपत्वं—भावाभावविषये भ्रान्तत्वाल्लोकस्य । लोको हि कालत्रयेप्यविद्यमानत्वादभावरूपं जगद्भावं मन्यते, तद्विलक्षणं ब्रह्माभावं मन्यते ।

तथा लोकैस्सर्वाभावत्वेन व्यवह्रियमाणो भावपदार्थ एव ब्रह्म, सर्वत्वेन व्यवह्रियमाणोऽभावपदार्थ एव प्रपञ्चः । तस्माद्भाव एव सर्वाभावो ब्रह्मेति । नच कथं सर्वाभावस्य भावत्वमिति वाच्यं, यथा घटाभावाभावस्य भावत्वं तथैवेति सर्वस्याभावरूपत्वे सर्वाभावो ह्यभावाभावः । सच भाव एवेति भाव इत्यलं प्रसक्तानुप्रसक्तेन ॥२॥

अतो विशिष्टफलत्वाद्दुर्लभतरं ज्ञानं कथमिति, उच्यते—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥३॥

मनुष्याणामिति । मनुष्याणां मध्ये सहस्रेषु अनेकेषु कश्चिद्यतति प्रयत्न करोति सिद्धये सिद्ध्यर्थम् । तेषां यततामपि सिद्धानां, सिद्धा एव हि ते ये मोक्षाय यतन्ते, तेषां कश्चिदेव हि मां वेत्ति तत्त्वतो यथावत ॥३॥

---

मनुष्याणामिति, अत इति । मत्तत्त्वज्ञानेन ज्ञातव्यपरिशेषाभावादित्यर्थ । अस्यैव फलितमाह—विशिष्टफलत्वादिति । सर्वोत्कृष्टफलप्रदत्वादित्यर्थ । मोक्षप्रदत्वादिति यावत् । मोक्षस्यैव सर्वोत्कृष्टफलत्वादिति भाव । सहस्रशब्दोऽत्र न सङ्ख्याविशेषवाची । किंत्वनन्तवाचीत्याह—अनेकेष्विति । सिद्धये मोक्षार्थं यततीति योगाद्यनुष्ठानरूप प्रयत्नं करोति । एवं मोक्षाय यतमानाना मध्ये कश्चिदेव कुशली मत्तत्त्वज्ञानपूर्वक मुक्तो भवतीत्याह—यततामिति, सिद्धानामिति । भाविनीं वृत्तिमाश्रित्य निर्देश । सिद्धिं प्राप्तुमर्हाणामित्यर्थ । सिद्धा एवेति । ये यतन्ते ते सिद्धा एव मोक्षाय; मुक्तप्राया एवेत्यर्थ । औपचारिकोऽय सिद्धशब्द । एषा मुक्तप्रायत्वं च इहजन्मनि जन्मान्तरे वाऽवश्य मुक्तिलाभादिति भाव । यद्वा ये मोक्षाय यतन्ते ते पुरुषा वस्तुतो नित्यमुक्तात्मरूपत्वात्सिद्धा एवेत्यर्थ । कश्चिदेवेति । य कोऽपि धन्य इत्यर्थ । न त्वेक एवेति नियम, येन कश्चिदेव न द्वाविति वेदान्तदेशिकेन शङ्करमतं दूष्येत, मृषारोपणप्रथमदेशिको हि वेदान्तदेशिक । अनेन च कश्चिदेवेति वचनेन न सर्वसुलभमिद ज्ञानं, किंतु यस्यकस्यापि सुकृतिन सुलभत्वाद्दुर्लभतरमेवेति सिद्धम् । इदमेव हि ज्ञानस्य दुर्लभतरत्वमवतारिकायामुक्तमाचार्यैर्दुर्लभतर ज्ञानमिति ।

यत्तु रामानुजः—मनुष्या शास्त्राधिकारयोग्या, तेषा सहस्रेषु कश्चिदेव सिद्धिपर्यन्त यतते, सिद्धिपर्यन्त यतमानाना सहस्रेषु कश्चिदेव मा विदित्वा मत्त सिद्धये यतते, मद्विदा सहस्रेषु कश्चिदेव तत्त्वतो यथाऽवस्थित मा वेत्ति । न कश्चिदित्यभिप्राय 'स महात्मा सुदुर्लभ, मा तु वेद न कश्चन' (भग ७-१६)ति हि वक्ष्यत इति,

तत्तुच्छम्—देवादीनामपि शास्त्राधिकारयोग्यत्वस्य शारीरकसूत्रैर्बादरायणेन व्यवस्थापितत्वात् । सिद्धये यतत इत्यस्य सिद्धिपर्यन्त यतत इत्यर्थासिद्धे, सिद्धये यतत इति पदद्वयस्य आवृत्त्या वाक्य भेदकल्पनस्यान्याय्यत्वात्, मा विदित्वा मत्त इति पदत्रयस्य मूलाद्बहि कल्पितत्वेनाप्रमाणत्वात्, सिद्धिपर्यन्त यतमानाना मध्ये कश्चिदेव सिद्धये यतत इत्यस्य वाक्यस्यानन्वितत्वात्- सिद्धिपर्यन्तं यतमान एव हि सिद्धये यतमान । कश्चिन्मा वेत्तीत्यस्य न कश्चिन्मां वेत्तीत्यर्थोऽप्ययुक्त - विरुद्धलक्षणाश्रयणस्याप्रमाणत्वात् । मा तु वेद न कश्चनेति तु मद्भक्तं मच्छरणं विना कोऽपि मा न वेदेति विवक्षयोक्तत्वात् । अन्यथा येन केनापीश्वरतत्त्वस्य दुर्ज्ञेयत्वे ईश्वरतत्त्व सम्प्रदायसिद्धं नैव भवेत् । त्वानिष्टमीश्वरतत्त्वस्यैव लोपप्रसङ्गात । 'दृश्यते त्वग्र्यया बु द्ध्येत्यादिनेश्वरतत्त्वस्य ज्ञेयत्वश्रवणात् । 'तमेव विदित्वातिमृत्युमेतीति (श्वेता ३ ८) श्रुत्या ईश्वर तत्त्वज्ञानादेव मुक्तिप्रतिपादनात्तस्य चागोच

श्रोतारं प्ररोचनेनाभिमुखीकृत्याह—

भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।
अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥४॥

भूमिरिति । भूमिरिति पृथिवीतन्मात्रमुच्यते- न स्थूला, 'भिन्ना प्रकृतिरष्टधा' इति

---

रत्वे मुक्तिरेवाप्रसिद्धेः मुक्त्यर्थं वेदान्तशास्त्रे न कस्यचित्प्रवृत्तिः । गृहस्थं सन्न्यासाश्रमे प्रवर्तयदिदं वेदान्तशास्त्रमनर्थकरमेव भवेत्- त्रिवर्गसाधकगृहस्थाश्रमत्यागात् । मोक्षस्य सन्न्यासाश्रमस्वीकारेणालाभाच्च । तस्मान्मां यः कोऽपि धन्यो वेत्तीत्येवाभिप्रायः, नतु न वेत्तीति ।

अथ यदुक्तं वेदान्तदेशिकेन मनुष्यशब्दो न जातिविशेषाभिप्रायः, किंतु सिद्ध्यर्थयतनयोग्यमात्राभिप्राय इति, तदपि तुच्छम्—मुख्यार्थपरित्यागे कारणाभावात् । अर्जुनस्य मनुष्यत्वान्मनुष्याणां भवतामिदं ज्ञानं दुर्लभतरमित्येतावत एवार्थस्य भगवता विवक्षितत्वात् । देवादीनामेतद्ज्ञानदौर्लभ्यसौलभ्यश्रवणेनार्जुनस्य फलाभावात् ।

यच्च सिद्ध्यर्थयतनमात्रं प्रायेण सर्वसाधारणमतस्सिद्धिपर्यन्तमित्युक्तमिति, तन्नासत्, सिद्ध्यर्थयतनमात्रस्याप्यसर्वसाधारणत्वात् । नहि सर्वे सिद्ध्यर्थं यतमाना उपलभ्यन्ते । संसारप्रयतनमेव हि सर्वसाधारणम् । किंच य एव सिद्ध्यर्थं यतते स एव सिद्धिपर्यन्तं यतते, मध्ये तद्यतनं नैव जहाति, दैवान्मरणसम्भवे तु जन्मान्तरेपि यतत एव । अथवा सिद्ध्यर्थं यतमानानां सहस्रेषु सिद्धिपर्यन्तं कश्चिद्यतत इति वक्तव्यं, सिद्ध्यर्थं यतमानानां सर्वेषामपि सिद्धिपर्यन्तयतनासम्भवात् । यस्य कस्यचिदेव तत्सम्भवाच्च । तच्च नोक्तं मूलकर्त्रा । यदि रामानुजेन तदुच्यते तर्हि निर्मूलमेव तत् ।

यच्च यततामपि सिद्धानां कश्चिन्मां वेत्ति मद्विदिषु च कश्चिन्मां तत्त्वतो वेत्तीति वाक्यद्वयं विवक्षितमिति च, तत्तुच्छम्—तादृशविवक्षागमकपदाभावान्मूले । नहि यततामपि सिद्धानां कश्चिन्मां वेत्ति मद्विदां सहस्रेषु कश्चिन्मां तत्त्वतो वेत्तीति मूले स्थितम् । तदेतत्कल्पनमपि निर्मूलमेव ।

किंच निर्मूलमप्यसङ्गतं च- यो मां वेत्ति स मां तत्त्वतो न वेत्ति, किंतु अन्य एव सः यो मां तत्त्वतो वेत्तीति वचनस्यायुक्तत्वात् । नहि य ईश्वरं तत्त्वतो न वेत्ति स ईश्वरं वेत्तीत्युच्यते, यश्चेश्वरं तत्त्वतो वेत्ति स ईश्वरं न वेत्तीत्युच्यते । नच मां वेत्तीत्यनेन सामान्यत ईश्वरवेदनं, मां तत्त्वतो वेत्तीत्यनेन विशेषत ईश्वरवेदनं चाभिप्रेतमिति वाच्यं, निर्विशेषचिन्मात्रे ईश्वरे सामान्यविशेषभावकल्पनायोगात् । नच परोक्षापरोक्षत्वाभ्यां भेद इति वाच्यं, 'यत्साक्षादपरोक्षाद्ब्र'ह्मेति ईश्वरस्य नित्यापरोक्षब्रह्मत्वात् । आत्मन एवेश्वरत्वाच्च । न ह्यात्मा कस्यचिदप्रत्यक्षः । नच ईश्वरस्वरूपस्वभावज्ञानाभ्यां तद्भेदोपपत्तिरिति वाच्यं, य ईश्वरस्वरूपं वेत्ति स एवेश्वरस्वभावं वेत्ति- ईश्वरस्वरूपस्यैवेश्वरस्वभावत्वात् । नहि स्वरूपादन्यस्स्वभावोऽस्ति । यस्तु स्वरूपादन्यः स्वभावः स मायैव - स्वरूपस्यैकस्यैव सत्यत्वात् । तस्माद्य ईश्वरं तत्त्वतो वेत्ति स एवेश्वरं वेत्ति, यश्चेश्वरं तत्त्वतो न वेत्ति स ईश्वरं नैव वेत्तीति स्थितम् ॥३॥

भूमिरिति । प्ररोचनं रुच्युत्पादनं । आहेति । स्वतत्त्वमिति शेषः । ईश्वरस्य स्वरूपं

वचनात् । तथा अबादयोपि तन्मात्राण्येवोच्यन्ते—आपोऽनलो वायुः खं मनः इति मनसः कारणमहङ्कारो गृह्यते। बुद्धिरित्यहङ्कारकारणं महत्तत्त्वम् । अहङ्कार इत्यविद्यासंयुक्तमव्यक्तम्। यथा विषसंयुक्तमन्नं विषमित्युच्यते, एवमहङ्कारवासनावदव्यक्तं मूलकारणमहङ्कार इत्युच्यते प्रवर्तकत्वादहङ्कारस्य । अहङ्कार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके, इतीयं यथोक्ता प्रकृतिर्मे मम ऐश्वरी माया शक्तिरष्टधा भिन्ना भेदमागता ॥४॥

---

स्वभावश्च तावदुच्येते- तद्ज्ञानादीश्वरज्ञानसिद्धेः । प्रकृतिशब्दश्च स्वरूपस्वभावयोरुभयोरपि प्रयुज्यते । अत ईश्वरस्य स्वरूपमेका प्रकृति. स्वभावोऽन्या प्रकृतिः । तत्र प्रथममनात्मनि ज्ञाते सति पश्चादात्मज्ञानं सुलभमिति तावदनात्मभूतेश्वरस्वभावनामकप्रकृतिं लक्षयति—**भूमिरिति** ।

अष्टौ प्रकृतय इति श्रुते; 'मूलप्रकृतिरविकृतिर्महदाद्या· प्रकृतिविकृतयस्सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष' इति साङ्ख्यशास्त्राच्च मूलप्रकृतेः महदहङ्कारपञ्चतन्मात्राणा च प्रकृतीना विकृतीना सप्ताना प्रकृतिपदवाच्यत्वम् । प्रकृतिरुपादानं- 'जनिकर्तु. प्रकृति'रिति पाणिनिसूत्रात् । विकृति. कार्यं अनादित्वात्सर्वजगदुपादानत्वाच्च मायायाः प्रकृतित्वं विकारषोडशककारणत्वान्मूलप्रकृतिकार्यत्वाच्च । महदादिसप्तकस्य प्रकृतित्वं विकृतित्वं चेति । तत्र प्रकृतिरष्टधाग्रहणेन महदादीना सप्ताना प्रकृतित्वेन व्यपदेश । भूतपञ्चकमिन्द्रियदशकं, मनश्चेति विकारषोडशकम् । तस्य तु कार्यत्वमेव, न कारणत्वमिति कृत्वा नास्ति प्रकृतित्वेन व्यपदेशः । यद्यपि भौतिकान् देहान् प्रति भूतानां स्थूलानामप्यस्ति कारणत्वं, तथाऽपि देहानां तत्त्वेष्वप्रवेशात्तत्त्वानामेव परस्परकार्यकारणभावस्य तत्र विवक्षितत्वात् । षोडशकारकस्यापि तत्त्वस्याप्रादुर्भावान्नास्ति प्रकृतित्व षोडशकस्य । यद्धि प्रलयेऽपि न नश्यति तदेव हि तत्त्वं साङ्ख्यानामभिमतम् । यद्वा प्राणादिवायुपञ्चकमिन्द्रियदशकं मनश्चेति विकारषोडशकमिति वेद्यम् । इद सर्वमभिप्रेत्याह—**भूमिरिति** । पृथिवीतन्मात्रमुच्यत इत्यादि ।

अपञ्चीकृतसूक्ष्मभूताना तन्मात्रत्वेन व्यवहार । एभ्यएव तन्मात्रेभ्य. पञ्चीकृतेभ्य' स्थूलभूतोत्पत्ति', यान्यधुनोपलभ्यन्ते तानि स्थूलभूतानि । एतद्भूतोत्पत्ते' प्राक् स्थितानि तु तन्मात्राणीति विवेकः । शब्दस्पर्शरूपाणि तन्मात्राणीति केचित् ।

कुत· स्थूलानि विहाय तन्मात्राणा ग्रहणमत आह—**भिन्ना प्रकृतिरष्टधेति, वचनादिति** । स्थूलभूतानां प्रकृतित्वाभावादित्यर्थः । तथा मनस प्रकृतित्वाभावान्मनश्शब्दोऽत्र स्वकारणमहङ्कारं लक्षयतीत्याह—**मन इति** । मनोऽन्त करणमहङ्कारस्तु तत्कारणं तत्त्वान्तरमिति विवेक' । महत्तत्त्वं बुद्धिरित्याह—**बुद्धिरितीति** । मूलप्रकृतिरेवाहङ्कार इत्याह—**अहङ्कार इति** । अविद्याहङ्कारवासनातत्संयुक्तमव्यक्तं मूलप्रकृतिरहङ्कार इत्युच्यते । कुतोऽस्याहङ्कारशब्दवाच्यतेत्यत्र दृष्टान्तमाह—**यथेति** । दार्ष्टान्तिकमाह—**एवमिति** । अहङ्कारवासना अविद्याऽस्मिन् अस्तीति अहङ्कारवासनावत् । मूलकारणमादिकारणमनादीत्यर्थ. । मूलप्रकृतिरिति यावत् ।

अव्यक्तस्य अहङ्कारशब्दवाच्यत्वे हेत्वन्तरमाह—**प्रवर्तकत्वादिति** । अहङ्कारस्य प्रवर्तकत्वात्प्रवर्तकमव्यक्तमहङ्कारशब्दवाच्यमित्यर्थ· । अहङ्कारस्य प्रवर्तकत्वमेव दर्शयति—**अहङ्कार एवेति** ।

सर्वस्य लोकस्य कर्मसु प्रवृत्तौ अहङ्कार एव कारणमहमिदं कुर्यामित्यहङ्कारपूर्वकसङ्कल्पाभावे कर्मसु प्रवृत्त्यसम्भवात् ।

नन्वेवमहङ्कारस्य भवतु प्रवर्तकत्वं, कथं पुनरव्यक्तस्येति चेदुच्यते—अज्ञानमूलकत्वादनात्मन्यात्माभिमानरूपस्याहङ्कारस्य, अहङ्कारगतं तत्प्रवर्तकत्वमप्यज्ञानगतप्रवर्तकत्वमूलकमेव- कारणधर्मपूर्वकत्वात्कार्यधर्मस्येति । माया ह्यात्मस्वरूपमावृत्य सर्वं सर्वत्र प्रेरयति ।

कासौ प्रकृतिरत आह—मायेति । कासौ मायेत्यत आह—शक्तिरिति । ईश्वरनिष्ठं जगज्जननादिसामर्थ्यमित्यर्थः । अष्टधा भिन्नेति । कार्यकारणरूपेणेति भावः । महदादीनां सप्तानां कार्यप्रकृतित्वान्मूलप्रकृतेः कारणप्रकृतित्वाच्चेति बोध्यम् ।

ननु साङ्ख्यमतस्य शारीरकशास्त्रे बादरायणेन प्रत्याख्यातत्वात्कथं तस्यैवेहोपन्यासस्त्वयमेव इति चेदुच्यते—शारीरके प्रकृत्यादीनां ब्रह्मणः पृथक्त्वं दूषितं, न तु प्रकृत्यादीनां स्वरूपमेव निषिद्धं—मायादिपदार्थानां तत्राप्यभ्युपगतत्वात् । न च महत्तत्त्वाहङ्कारतत्त्वानभ्युपगमः- बुद्धेरेव महत्तत्त्वत्वात् । एवमेव बुद्ध्याख्यमन्तःकरणं मन इत्यहङ्कार इति च वृत्तिभेदाद्द्विधोच्यते- 'अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधे'ति विद्यारण्यवचनात् । तत्राहंवृत्तिरहङ्कार इदंवृत्तिस्तु मनः । अन्तःकरणपरिणामत्वाद्वृत्तिद्वयात्मकमनोऽहङ्कारद्वयस्य महत्तत्त्वकार्यत्वेन व्यवहारः । तत्र च अहंवृत्तिपूर्वकत्वादिदंवृत्तेरहङ्कारकार्यत्वव्यपदेशो मनस इति ।

वचनात्। तथा अबादयोऽपि तन्मात्राण्येवोच्यन्ते—आपोऽनलो वायुः खं मनः इति मनसः कारणमहङ्कारो गृह्यते। बुद्धिरित्यहङ्कारकारणं महत्तत्त्वम्। अहङ्कार इत्यविद्यासंयुक्तमव्यक्तम्। यथा विषसंयुक्तमन्नं विषमित्युच्यते, एवमहङ्कारवासनावदव्यक्तं मूलकारणमहङ्कार इत्युच्यते प्रवर्तकत्वादहङ्कारस्य। अहङ्कार एव हि सर्वस्य प्रवृत्तिबीजं दृष्टं लोके, इतीयं यथोक्ता प्रकृतिर्मे मम ऐश्वरी माया शक्तिरष्टधा भिन्ना भेदमागता ॥४॥

---

स्वभावश्च तावदुच्येते- तद्ज्ञानादीश्वरज्ञानसिद्धेः। प्रकृतिशब्दश्च स्वरूपस्वभावयोरुभयोरपि प्रयुज्यते। अत ईश्वरस्य स्वरूपमेका प्रकृतिः स्वभावोऽन्या प्रकृतिः। तत्र प्रथममनात्मनि ज्ञाते सति पश्चादात्मज्ञानं सुलभमिति तावदनात्मभूतेश्वरस्वभावनामकप्रकृतिं लक्षयति—भूमिरिति।

अष्टौ प्रकृतय इति श्रुतेः, 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयस्सप्त। षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुष' इति साङ्ख्यशास्त्राच्च मूलप्रकृतेः महदहङ्कारपञ्चतन्मात्राणां च प्रकृतीनां विकृतीनां सप्तानां प्रकृतिपदवाच्यत्वम्। प्रकृतिरुपादानं- 'जनिकर्तुः प्रकृति'रिति पाणिनिसूत्रात्। विकृतिः कार्यं अनादित्वात्सर्वजगदुपादानत्वाच्च मायायाः प्रकृतित्वं विकारषोडशककारणत्वाऽमूलप्रकृतिकार्यत्वाच्च। महदादिसप्तकस्य प्रकृतित्वं विकृतित्वं चेति। तत्र प्रकृतित्वांशग्रहणेन महदादीनां सप्तानां प्रकृतित्वेन व्यपदेशः। भूतपञ्चकमिन्द्रियदशकं, मनश्चेति विकारषोडशकम्। तस्य तु कार्यत्वमेव, न कारणत्वमिति कृत्वा नास्ति प्रकृतित्वेन व्यपदेशः। यद्यपि भौतिकान् देहान् प्रति भूतानां स्थूलानामप्यस्ति कारणत्वं, तथाऽपि देहानां तत्त्वेष्वप्रवेशात्तत्त्वानामेव परस्परकार्यकारणभावस्य तत्र विवक्षितत्वात्। षोडशकारकस्यापि तत्त्वस्याप्रादुर्भावान्नास्ति प्रकृतित्वं षोडशकस्य। यद्धि प्रलयेऽपि न नश्यति तदेव हि तत्त्वं साङ्ख्यानामभिमतम्। यद्वा प्राणादिवायुपञ्चकमिन्द्रियदशकं मनश्चेति विकारषोडशकमिति वेद्यम्। इदं सर्वमभिप्रेत्याह—भूमिरिति। पृथिवीतन्मात्रमुच्यत इत्यादि।

अपञ्चीकृतसूक्ष्मभूतानां तन्मात्रत्वेन व्यवहारः। एभ्यएव तन्मात्रेभ्यः पञ्चीकृतेभ्यः स्थूलभूतोत्पत्तिः, यान्यधुनोपलभ्यन्ते तानि स्थूलभूतानि। एतद्भूतोत्पत्तेः प्राक् स्थितानि तु तन्मात्राणीति विवेकः। शब्दस्पर्शरूपाणि तन्मात्राणीति केचित्।

कुतः स्थूलानि विहाय तन्मात्राणां ग्रहणमत आह—भिन्ना प्रकृतिरष्टधेति, वचनादिति। स्थूलभूतानां प्रकृतित्वाभावादित्यर्थः। तथा मनसः प्रकृतित्वाभावान्मनश्शब्दोऽत्र स्वकारणमहङ्कारं लक्षयतीत्याह—मन इति। मनोऽन्तःकरणमहङ्कारस्तु तत्कारणं तत्त्वान्तरमिति विवेकः। महत्तत्त्वं बुद्धिरित्याह—बुद्धिरितीति। मूलप्रकृतिरेवाहङ्कार इत्याह—अहङ्कार इति। अविद्याहङ्कारवासनासंयुक्तमव्यक्तं मूलप्रकृतिरहङ्कार इत्युच्यते। कुतोऽस्याहङ्कारशब्दवाच्यतेत्यत्र दृष्टान्तमाह—यथेति। दार्ष्टान्तिकमाह—एवमिति। अहङ्कारवासना अविद्याऽस्मिन् अस्तीति अहङ्कारवासनावत्। मूलकारणमादिकारणमनादीत्यर्थः। मूलप्रकृतिरिति यावत्।

अव्यक्तस्य अहङ्कारशब्दवाच्यत्वे हेत्वन्तरमाह—प्रवर्तकत्वादिति। अहङ्कारस्य प्रवर्तकत्वात्प्रवर्तकमव्यक्तमहङ्कारशब्दवाच्यमित्यर्थः। अहङ्कारस्य प्रवर्तकत्वमेव दर्शयति—अहङ्कार एवेति।

सर्वस्य लोकस्य कर्मसु प्रवृत्तौ अहङ्कार एव कारणमहमिदं कुर्यामित्यहङ्कारपूर्वकसङ्कल्पाभावे कर्मसु प्रवृत्त्यसम्भवात् ।

नन्वेवमहङ्कारस्य भवतु प्रवर्तकत्वं, कथं पुनरव्यक्तस्येति चेदुच्यते—अज्ञानमूलकत्वादनात्मन्यात्माभिमानरूपस्याहङ्कारस्य, अहङ्कारगतं तत्प्रवर्तकत्वमप्यज्ञानगतप्रवर्तकत्वमूलकमेव- कारणधर्मपूर्वकत्वात्कार्यधर्मस्येति । माया ह्यात्मस्वरूपमावृत्य सर्वं सर्वत्र प्रेरयति ।

कासौ प्रकृतिरत आह—मायेति । कासौ मायेत्यत आह—शक्तिरिति । ईश्वरनिष्ठं जगज्जननादिसामर्थ्यमित्यर्थः । अष्टधा भिन्नेति । कार्यकारणरूपेणेति भावः । महदादीनां सप्तानां कार्यप्रकृतित्वान्मूलप्रकृतेः कारणप्रकृतित्वाच्चेति बोध्यम् ।

ननु साङ्ख्यमतस्य शारीरकशास्त्रे बादरायणेन प्रत्याख्यातत्वात्कथं तस्यैवेहोपन्यासस्त्वयमेव इति चेदुच्यते—शारीरके प्रकृत्यादीनां ब्रह्मणः पृथक्त्वं दूषितं, न तु प्रकृत्यादीनां स्वरूपमेव निषिद्धं—मायादिपदार्थानां तत्राप्यभ्युपगतत्वात् । न च महत्तत्त्वाहङ्कारतत्त्वानभ्युपगमः- बुद्धेरेवं महत्तत्त्वत्वात् । एवमेव बुद्ध्याख्यमन्तःकरणं मन इत्यहङ्कार इति च वृत्तिभेदाद्द्विधोच्यते- 'अहंवृत्तिरिदंवृत्तिरित्यन्तःकरणं द्विधे'ति विद्यारण्यवचनात् । तत्राहंवृत्तिरहङ्कार इदंवृत्तिस्तु मनः । अन्तःकरणपरिणामत्वाद्वृत्तिद्वयात्मकमनोऽहङ्कारद्वयस्य महत्तत्त्वकार्यत्वेन व्यवहारः । तत्र च अहंवृत्तिपूर्वकत्वादिदंवृत्तेरहङ्कारकार्यत्वव्यपदेशो मनस इति ।

किंच साङ्ख्यमते मूलप्रकृतेरेव जगदुपादानत्वमुक्तं न ह्यात्मनः- 'न प्रकृतिर्न विकृतिः पुरुष' इत्यात्मन उपादानत्वनिषेधात् । इह तु 'जन्माद्यस्य यत' (ब्र सू १-१-) इति पुरुषस्यैवोपादानत्वमुच्यते मायाद्वारेति । एवमादि बहुवैलक्षण्यं साङ्ख्याद्वैतयोरूह्यम् । तस्मान्नात्र साङ्ख्यमतोपन्यासः ।

अथ वा 'अदुष्टमन्यतो ग्राह्य'मिति न्यायात्साङ्ख्योक्तोऽप्यदुष्टोंशो ग्राह्य एव । तत्र च प्रकृत्यष्टकस्य दर्शितस्य ग्रहणं न दुष्टं श्रुतिसिद्धत्वादित्यतस्तदंश इह गृह्यते । 'न प्रकृतिर्न विकृतिः पुरुष' इति तु न गृह्यते श्रुतिविरोधात् । यद्यपि वस्तुतः पुरुषस्याप्रकृतित्वमविकृतित्वं, तथाऽपि मायाद्वारा तस्य प्रकृतित्वं श्रुत्युक्तमिति बोध्यम् ।

यत्तु रामानुजः—भूम्यादयः यथाश्रुति स्थूलभूताद्यर्थबोधका एवेति तत्प्रत्युक्तम्—स्थूलभूतादीनां प्रकृतित्वाभावप्रतिपादनात् ।

यच्चोक्तं देशिकेन—'एषा हि पूर्वमेका पश्चादष्टधा परिण'तेति, तदसत्—पञ्चभूतमनोबुद्ध्यहङ्कारात्मनैव परिणतेति वक्तुमशक्यत्वाद्भूतपञ्चकप्राणपञ्चकेन्द्रियदशकविषयपञ्चकमनोबुद्ध्यहङ्कारात्मना अष्टाविंशतिधा परिणतेति वक्तव्यत्वात् । घटात्मना परिणतमृदतिरिक्तापरिणतमृद्वद्भूतादिरूपेण परिणतप्रकृत्यतिरिक्तापरिणतप्रकृतेरसत्त्वेन पूर्वमेका पश्चादष्टधेति वक्तुमयुक्तत्वात् । कार्यात्मना अष्टधा कारणात्मना एकेति च नवधा स्थितेति वक्तव्यत्वात् । न च कृत्स्नाऽपि प्रकृतिः कार्यात्मना परिणतैवेति वाच्यं, ईश्वरोपाधेरव्याकृतस्यैवाभावप्रसङ्गात् । जीवस्य च कारणशरीरभूना-

अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।
जीवभूतां महाबाहो! ययेदं धार्यते जगत् ॥५॥

अपरेति । अपरा न परा निकृष्टा अशुद्धा अनर्थकरी संसारबन्धनात्मिकेयम् । इतः अस्याः यथोक्तायास्त्वन्यां विशुद्धां प्रकृतिं ममात्मभूतां विद्धि, मे परां प्रकृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूताम्; हे महाबाहो! यया प्रकृत्या इदं धार्यते जगदन्तः प्रविष्टया ॥५॥

---

ज्ञानाभावप्रसङ्गात् । न चेष्टापत्तिः सुषुप्तावज्ञानानुभवसत्त्वात् । व्यवहारकालेऽप्यहमज्ञ इत्यनुभवसिद्धाज्ञानस्य दुरपलापत्वाच्च, घटज्ञानेन तदज्ञाननिवृत्तिदर्शनाच्च ।

न चाज्ञानं ज्ञानाभाव एव न मायेति वाच्यं, अनादिभावत्वे सति ज्ञाननिवर्त्यत्वस्य मायालक्षणत्वादज्ञानस्य च तथात्वात्, ज्ञानाभाववानहमिति प्रतीत्यभावात्, अज्ञानवानहमिति प्रतीतिसत्त्वाच्च भावरूपमेवाज्ञानं, न त्वभावरूपमिति ॥४॥

अपरेति । इयं पूर्वोक्ताऽष्टधा भिन्ना प्रकृतिरपरा । इतस्त्वन्या जीवभूतां मे प्रकृतिं परां विद्धि । हे महाबाहो ! ययेदं जगद्धार्यते । प्रकृतिशब्दार्थमाह—ममात्मभूतामिति । मत्स्वरूपभूतामित्यर्थः । पूर्वश्लोकोक्तप्रकृतिस्तु ईश्वरस्वभावभूतेति विवेकः । जीवभूतां जीवयति चेतयति देहमिति जीवः तद्रूपां, क्षेत्रं जानातीति क्षेत्रज्ञः; देहेन्द्रियाद्यनात्मपदार्थस्सर्वोऽपि क्षेत्रमित्युच्यते । व्यक्तीभविष्यत्ययमंशः त्रयोदशाध्याये । आत्मा कूटस्थः तल्लक्षणां तत्स्वरूपाम् । अनेन ईश्वरस्वरूपं जीव एवेति जीवेश्वराभेदः स्पष्टः ।

जीवति प्राणान् बिभर्ति अस्माद्देह इति जीवः । जीव प्राणधारणे इति व्युत्पत्तिमाश्रित्याह—प्राणधारणनिमित्तभूतामिति । देहस्य प्राणधारणे जीवो निमित्तभूत इत्यर्थः । 'जीवापेतं वाव किल शरीरं म्रियते' (छा- ६-११-२३) इति श्रुतेः । म्रियते प्राणत्यागं करोतीत्यर्थः । 'मृङ् प्राणत्यागे' इति धातुः ।

ननु पूर्णस्य जीवस्य कथमपगमनं येन शरीरस्य मरणं स्यादिति चेदुच्यते—परिपूर्णस्यापि जीवस्य बुद्ध्युपाधिवशाद्गमनादि सम्भवतीव घटोपाधिवशादाकाशस्येव । 'ध्यायतीव लेलायतीव' इति श्रुतेः । यथा बुद्धौ ध्यायन्त्यामात्मा ध्यायतीव बुद्धौ चलन्त्यामात्मा चलतीव तथा बुद्धावुत्क्रामन्त्यामात्मा उत्क्रामतीवेति भावः । एवं चैतन्यस्य प्राणधारणनिमित्तभूतत्वमपि बुद्ध्यवच्छिन्नत्वरूपेणैवेति बोद्धव्यम् ।

कथम्भूतया धार्यते जगदत आह—अन्तःप्रविष्टयेति । अन्तर्यामिनारायणादिशब्दवाच्यकूटस्थसाक्षिप्रत्यगात्मरूपेण जीवो जगदन्तः प्रविश्य धारयतीत्यर्थः । यच्च'प्यन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति जीवस्य सर्वजगदन्तर्बहिर्व्याप्तिरस्ति, तथापि बहिर्व्याप्य स्थितस्य तस्य न जगद्धारकत्वमित्यभिप्रेत्याह—अन्तःप्रविष्टेति । अन्तर्व्याप्य स्थितयेत्यर्थः । यथाश्रुतार्थे तु परिपूर्णस्य पर्य प्रवेश इति बोध्येत ।

एतद्योनीनि भूतानि सर्वाणीत्युपधारय ।
अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥६॥

एतदिति । एतद्योनीनि एते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिः येषां भूतानां

---

यद्वा परिपूर्णस्यापि बुद्ध्युपाधिवशात्प्रवेशस्सम्भवत्येव- 'तत्सृष्ट्वा तदेवानुप्राविश'दिति श्रुतेः । बुद्ध्यवच्छिन्नत्वाकारेण प्राविशदिति तदर्थः । इदं च स्थावरजङ्गमदेहापेक्षयोक्तमचेतनेषु तु नापूर्वोऽस्ति कथनेश्वरस्य प्रवेशः ।

एवमन्तर्व्याप्य स्थितं चैतन्यं जीव इति, कूटस्थ इति, साक्षीति, आत्मेति च व्यवहरन्ति; बहिर्व्याप्य स्थितं तु ईश्वर इति, ब्रह्मेति च व्यवहरन्ति । अस्य चान्तर्बहिर्भावस्य चैतन्ये कल्पितत्वा-द्वस्तुतो निष्प्रदेशमेकरूपमद्वैतमेव चैतन्यमिति न जीवेश्वरभेदावकाशः । न च जीवस्य कथमचेतनान्त-स्स्थितिरिति वाच्यं, चिदाभासलक्षणजीवस्यैव तदनुपपत्तिर्न तु प्रत्यगात्मलक्षणजीवस्य- 'चेतनाचेतन-भिदा कूटस्थात्मकृता नहि । किंतु बुद्धिकृताभासकृतैवेत्यवगम्यता'मिति वचनात् ।

यत्तु रामानुजः—ईश्वरस्याचेतनरूपा चेतनरूपा च प्रकृती द्वे स्तः; तत्र भोग्यभूताऽचेतनप्रकृतिः 'भूमिराप' इति श्लोकेन दर्शिता; भोक्तृभूता तु चेतनप्रकृतिः सेहोच्यत इति, तत्तुच्छम्— 'अविकार्योऽयमुच्यत' (भग- २-२५) इति जीवस्य चेतनस्य भोक्तृत्वविकारनिषेधात्; अहंवृत्तिरूप-विज्ञानमयकोशात्मकबुद्धेरेव भोक्तृत्वात्, तस्याश्च वस्तुतो जडत्वेन भोक्तृभोग्यात्मकप्रकृतेरचेतनत्वात्, चेतनस्य च जीवस्याकर्तृत्वेनाप्यभोक्तृत्वात् । 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहङ्कार-विमूढात्मा कर्ताहमिति मन्यते' (भग- ३-२७) इति, 'न करोति न लिप्यते' (भग- १३-३२) इति च । जीवस्याकर्तृत्वस्यैव प्रतिपादितत्वात् । 'निष्कलं निष्क्रियं शान्त' (श्वेता- ६-१९) मित्यादि-श्रुतेः कर्तृबुद्धितादात्म्याध्यासप्रयुक्तत्वाच्च जीवे कर्तृत्वभ्रमस्य तदध्यासाभाववत्यां सुषुप्तौ जीवस्य कर्तृत्वादर्शनात् । अकर्तुर्भोक्तृत्वायोगाच्चयासति सोमयाजिनोऽन्यस्यैव स्वर्गफलभोगप्रसङ्गात्, स्वन्मते रीत्या अणुना जीवेन भोक्त्रा कृत्स्नस्य जगतोऽधार्यमाणत्वात् ॥५॥

एतदिति, परापरे इति । क्षेत्रज्ञलक्षणा परा प्रकृतिः, क्षेत्रलक्षणा त्वपरेति विवेकः । इदं-प्रत्ययविषयः भूम्यादिः क्षेत्रमहंप्रत्ययविषयस्तु चिदात्मा क्षेत्रज्ञ इति विवेकः ।

न चाहङ्कारोऽप्यहंप्रत्ययविषय इति वाच्यं; ममाहङ्कार इति प्रतीत्या अहङ्कारस्य केवलाहंप्रत्यय-विषयत्वाभावात् । न च ममात्मेति प्रतीत्या आत्मापि केवलाहंप्रत्ययविषयो नेति वाच्यं, स्वरूप-वाचित्वाच्चात्मशब्दस्य । न चाहंप्रत्ययविषयत्वस्यापि सत्त्वादहङ्कारस्य साक्षिकात्मत्वं स्यादिति वाच्यं, अनात्मनः साक्षिकात्मत्वस्यासम्भवात्; आत्मतादात्म्याध्यासप्रयुक्तत्वाच्च तदहंप्रत्ययविषयत्वस्येति ।

योनी कारणे उपादाने इति यावत् । न च क्षेत्रज्ञस्य कथं भूतप्रकृतित्वं कार्यकारणयोस्साल-क्षण्यनियमात्; भूतानां जडत्वात् क्षेत्रज्ञस्य च चेतनत्वादिति वाच्यं, परिणामपक्षे एव कार्यकारण-सारूप्यनियम, न तु विवर्तपक्षे इति सिद्धान्तात् ।

तान्येतद्योनीनि भूतानि सर्वाणीत्येवमुपधारय जानीहि । यस्मान्मम प्रकृती योनिः कारणं सर्वभूतानां, अतोऽहं कृत्स्नस्य समस्तस्य जगतः प्रभवः उत्पत्तिः प्रलयो विनाशस्तथा प्रकृतिद्वयद्वारेणाहं सर्वज्ञ ईश्वरः जगतः कारणमित्यर्थः ॥६॥

---

मायाप्रकृतेर्भूताना परिणाम्युपादानत्वेऽपि क्षेत्रज्ञप्रकृतेर्भूताना विवर्ताधिष्ठानत्वात्, एवं जगद्रूपविवर्ताधिष्ठानत्वलक्षणोपादानत्वसम्भवात्प्रकृतिशब्दवाच्यत्वं क्षेत्रज्ञस्य । प्रकृतिर्ह्युपादानम् । तस्माद्रज्जुसर्पस्येव जीवस्सर्वभूतानामुपादानमिति स्थितम् । स्वाभिन्नकार्यजनिहेतुत्वमुपादानत्वमिति लक्षणात् । इदं विवर्ताधिष्ठाने परिणामिनि चानुगतं साधारणं लक्षणम् । तदेव सर्वभूताना चेतनविवर्तत्वाच्चेतनयोनित्व, मायापरिणामत्वान्मायायोनित्वमित्यस्ति परापरप्रकृतिद्वययोनित्वम् । परिणामविवर्तलक्षणे तु उपादानसमसत्ताककार्यापत्ति परिणाम, तद्विषमसत्ताककार्यापत्तिर्विवर्त इति बोध्ये ।

सत्ता च पारमार्थिकी व्यावहारिकी प्रातिभासिकी चेति त्रिविधा, तत्र आद्या ब्रह्मणि क्षेत्रज्ञे, द्वितीया जगति; तृतीया स्वप्नप्रपञ्चे रज्जुसर्पादौ चेति विवेक । मृद्घटयोरिव मायाजगतोर्व्यावहारिकसत्ताकत्वादुपादानसमसत्ताकं घटादिकमिव जगद्रूप कार्यं परिणाम । रज्जुसर्पयोरिव व्यावहारिकप्रातिभासिकसत्ताकयो ब्रह्मजगतो पारमार्थिकव्यावहारिकसत्ताकयोर्भिन्नसत्ताकत्वात्सर्परूपमिव जगद्रूपं कार्यं विवर्त इति बोध्यम् ।

सर्वाणि भूतानि कार्यकरणसङ्घातात्मकानि भौतिकानि, पृथिव्यादिमहाभूतानि च कार्यमात्रं सर्वमित्यर्थ । महदादिसप्तकमपि मूलप्रकृतिक्षेत्रज्ञयोनिकमेव कार्यत्वात् । मूलप्रकृतिस्तु न कस्यचित्कार्यमनादित्वादत एव तस्या मूलप्रकृतित्वव्यपदेश । मूलं कारणमित्यर्थ । क्षेत्रज्ञस्त्वजो नित्यश्शाश्वत इत्यनादिरेव । ततश्च मूलप्रकृतिं क्षेत्रज्ञं विहाय सर्वं जगत्कार्यभूतमेवेति बोध्यम् ।

एवमनादिरपि मूलप्रकृतिस्सान्तैव, नैयायिकाभिमतप्रागभाववत् । न तु नित्या क्षेत्रज्ञवत् । एवं क्षेत्रज्ञमूलप्रकृत्यो नित्यत्वानित्यत्वाभ्या ज्ञानजाड्याभ्या च महदस्ति वैलक्षण्यमिति सिद्धम् ।

ननु सर्वभूताना क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वययोनित्वकथनात्कृत्स्नस्य जगत प्रभव प्रलयश्च तत्प्रकृतिद्वयमेव स्यान्न त्वीश्वर इति स्थिते कथं 'अहं कृत्स्नस्य जगत प्रभव प्रलयस्तथा' (भग ७-६) इत्युच्यते, अत आह—यस्मादिति, प्रकृतिरिति । स्वरूप स्वभावश्चेत्यर्थ । मत्स्वरूपस्य चैतन्यस्य क्षेत्रज्ञस्य मत्स्वभावस्य मायाया मूलप्रकृतेश्च सर्वजगदुपादानत्वादीश्वरोऽहं सर्वजगदुपादानं भवामीत्यर्थ ।

उपादानान्मृदादेर्घटादिकार्यं जायते, पुनरुपादान एव लीयते- घटस्य मृद्येव लयदर्शनात् । तथा चोपादानमेव कार्योत्पत्तिप्रलययोरधिष्ठानमित्यभिप्रायादाह—प्रभवः प्रलयस्तथेति । अहं स्वरूपस्वभावद्वारा जगदुपादानभूतस्सर्वेश्वर इत्यर्थ । कृत्स्नस्य प्रत्यक्षानुमानागमप्रमाणसिद्धस्य सर्वस्येत्यर्थ ।

जगत जायत इति जं, गच्छतीति गमिति जगत् । ह्रस्वस्य पिति कृनीति तुक् । उत्पत्तिविनाशरूपावस्थावदित्यर्थ । अनित्यमिति यावत् । तस्य प्रभव प्रभवत्यस्मादिति प्रभव उत्पत्तिस्थानम् । प्रलीयतेऽस्मिन्निति प्रलय विनाशस्थानम् । भवामीति शेष । उपादानत्वादिति भाव ।

भाष्ये उत्पत्तिविनाशशब्दावपि उत्पत्तिविनाशस्थानपरौ । अन्यथा जन्ममरणरूपधर्मपरत्वे अनन्वयप्रसङ्गात् । न हीश्वरो जगतो जन्मधर्मो मरणधर्मो वा भवेत् । जगत कारणमिति सृष्टिस्थितिलयकारणमित्यर्थ । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति' (तै- उ- ९-१) इति श्रुतेरिति भाव ।

कृत्स्नजगदाकारपरिणतमायाधिष्ठानचैतन्यमात्मपरमार्थकूटस्थसाक्षिक्षेत्रज्ञेश्वरब्रह्मादिशब्दप्रतिपाद्यमहमेवेत्यत्र पर्यवसन्नार्थ । अनेन जीवेश्वरभेदवाद समूलमुन्मूलित ।

यत्तु रामानुजः—चेतनाचेतनप्रकृत्योर्द्वयोरपीश्वरयोनित्वमित्युवाच, तत्तुच्छम्—'अजो नित्यश्शाश्वतोऽय पुराण' इतीश्वरात्सकाशाज्जीवस्य जन्माभावनिषेधात् । सति तु जन्मनि 'जातस्य हि ध्रुवो मृत्यु'रिति जीवस्य विनाशप्रसङ्गात् । प्रकृतिपुरुषकालादीनामनादित्वस्य भवताऽप्यभ्युपगतत्वेन अजामित्यादिश्रुत्यनुसारेण च मायाया अनादित्वेनेश्वरात्सकाशात्तस्या अपि जन्माभावात् । सति तु मायाया जन्मनि मायोत्पत्ते प्रागीश्वरस्यामायित्वप्रसङ्गात् । 'मायिन तु महेश्वर'मिति श्रुतिविरोधात्, निर्मायस्येश्वरस्य मायाजननसामर्थ्याभावेन मायाया उत्पत्त्ययोगात्, ईश्वरसामर्थ्यस्यैव शक्तिरूपस्य मायापदवाच्यत्वात्, एतन्मायाजननसामर्थ्यरूपमायान्तरसत्त्वे तन्मायाजननसामर्थ्यरूपमायान्तरस्यापि कल्पनीयत्वात्तस्या अपि तदन्यमायाया इत्येव मनवस्थाप्रसङ्गात्, ईश्वरसामर्थ्यातिरिक्तमायानामकतत्त्वान्तरस्याप्रसिद्धत्वात्, साङ्ख्यमतस्य चावैदिकत्वेनाप्रमाणत्वात् । तस्मात्सिद्धं जीवस्येव मायाया अप्यनादित्वमिति कथमेतयोनित्वमीश्वरस्य । अत एव हि परमेश्वरात्सकाशाज्जीवा जायन्त इति दोषाद्भागवतमत प्रत्याख्यातं भगवद्बादरायणेन शारीरकशास्त्रे । न च बुद्ध्युपाधिपरिच्छिन्नस्वरूपेण जीवस्य जन्म, तद्भङ्गरूपेण च नाशो मोक्षरूप इति वाच्यं, उपाधिगतजन्मनाशाभ्यामुपहितस्य न सम्बन्ध इति सिद्धान्त । अन्यथा आकाशस्यापि घटजन्मनाशाभ्या जन्मनाशप्रसङ्गात्, बुद्धिपरिच्छिन्नस्यापि शरीरोपाधिजन्मनाशाभ्यां जन्मनाशप्रसङ्गात् । नचेष्टापत्ति - 'न हन्यते हन्यमाने शरीरे' (भग- २-२०) इतीहैवोक्तत्वात्, तत्त्वकथनावसरे औपाधिकातात्त्विकजन्मनाशकथनायोगाच्च । तस्माज्जीवस्य मायाया वा नेश्वरयोनित्वम् ।

या तु श्रुतिस्तेनोपन्यस्ता 'महानव्यक्ते लीयते, अव्यक्तमक्षरे लीयते, अक्षरं तमसि लीयते, तम परे देव एकीभवति' इति, तस्या श्रुतेर्न स्वाभिमतार्थबोधकत्वं, किं तु अव्यक्तत्वाक्षरत्वतमस्त्वानि प्रकृतेरवस्थाविशेषा एव । प्रकृतेश्चात्मनि लयोऽस्मदभ्युपगत एव । नच तदकार्यस्य तस्मिन् कथं लय इति वाच्यं, अकार्यस्यापि प्रागभावस्य लयदर्शनात्, गगनाकार्यस्यापि मेघस्य गगने लयदर्शनात्, कार्पासजन्यस्यापि पटस्याग्नौ लयदर्शनात्कार्यस्यैव कारणएव लय इति न नियम ।

नाप्यनया श्रुत्या मायाया लय उच्यते, किं तु 'तम परे देव एकीभवति' इत्येकीभावएव । स च ब्रह्मण पृथक्कार्यकरणादिरूपेणानवस्थानमेव ।

न चात्राक्षरशब्दो जीववाचीति वाच्यं, अक्षरमिति क्लीबस्य तस्य जीववाचित्वाभावात् ।

जीववाच्यक्षरशब्दो हि पुंलिङ्ग । न हि 'अजो नित्यश्शाश्वत' इति जीवं नित्यं ब्रुवा जीवं विनाशिन ब्रूयात्स्ववचोव्याघातात् ।

न च जीवस्य ब्रह्मण्यज्ञानद्वारा सुषुप्तौ लयो दृश्यते, श्रूयते च- 'सति सम्पद्य न सम्पत्स्यामह' इति श्रुते, अनुभवाच्च । ततश्च जीवस्याज्ञाने लय, सजीवस्य चाज्ञानस्य परमात्मनि लय इति वाच्यं, जीवस्य सुषुप्तौ ब्रह्मणि सम्पत्तिर्नाम ब्रह्मस्वरूपेणावस्थानमे नात्मना सम्परिष्वक्त' इति श्रुत्यन्तरात् ।

न च ब्रह्मणा जीवस्य सङ्गस्तत्राप्यभिप्रेत इति वाच्यं, तथापि जीवस्य लयाभ नष्टस्य जीवस्य ब्रह्मणा सह सङ्गस्स्यात् विद्यमानपदार्थद्वयस्यैव परस्परसङ्गदर्शनात्, गगनकु सङ्गादर्शनाच्च । तस्माज्जीवस्याविद्यकसंसारित्वरूपप्रहाणपूर्वकब्रह्मस्वरूपस्थितिरेव सति सा शेषात् । सति सम्पद्य न विदु सम्पत्स्यामह इति न विदुरिति हि वाक्यशेष । नष्टाना जीवाना वेदनस्यैव मप्रसक्तस्य निषेध । न विदुरिति ह्यज्ञानानुभवो जीवानाम् । अयं च बहुत्वनिर्देश उ नतु वस्तुत- आत्मैकत्वात् ।

अथ वा जीवोपाधेरन्त करणस्याज्ञाने लयस्तस्य च ब्रह्मणीत्यौपाधिक एव जीवस्य विवक्षित नतु वस्तुत- अपरिच्छिन्नस्य पूर्णस्य नित्यस्य तस्य नाशायोगात्, जीवस्यैव त्वाच्च । नहि घटाकाशान्महाकाशो भिद्यते, येन बुद्ध्युपाधिकाज्जीवादीश्वरो भिद्येत । विलयादेव हि जीवस्य ब्रह्मस्वरूपेणावस्थान सुषुप्तौ प्रलये मुक्तौ वा । तत्र सुषुप्तिप्रलय वासनारूपेण वर्तमानत्वात्पुनरागति । मुक्तौ तु सर्वात्मना लयाच्च पुनरावृत्तिरुपाधेरिति- चोपाधिर्जीवेऽज्ञानकल्पितेति ज्ञानेन निवर्तत एव । अत एव ज्ञानात्कैवल्यमुक्तिं ब्रुवन्ति ।

अथ यदि त्वयापि जीवस्योपाधिभङ्ग एव जीवस्य ब्रह्मणि लय इति विवक्ष्यते, त तव स्वमते सायुज्यस्यैवाभावात्, यदि तु वास्तवो जीवस्य लयो विवक्ष्यते तर्हि नित्यत्व यदि प्रलये जीवाना लय, प्रपञ्चे पुन उदयेषा जीवानामुदयश्च तर्हि, कृतनाशाकृताभ्य स्रष्टुरीश्वरस्य च वैषम्यनैर्घृण्यदोषप्रसक्ते । नच कर्मसापेक्षत्वात्तदप्रसक्तिरिति वाच्यं, कर्तु कर्मसत्त्वम् ? जीवादृष्ट हि कर्मशब्दवाच्यम् । 'न जायते म्रियते वा विपश्चिन्नायं भूत्वा न भूय' (भ०गी० २-२०) इति हि स्मृतं भगवतैव । श्रुतं च तथा, व्याख्यातं च त्वया स्ववचनविरोधोऽपि ।

या तु स्मृतिरनेनोपन्यस्ता 'प्रकृतिर्या मया ख्याता व्यक्ताव्यक्तस्वरूपिणी । पुरुष लीयते परमात्मनि' इति, सा च न प्रकृतिपुरुषयो प्रलये परमात्मनि वास्तवं लयं ब्रूते प्रकृतिरव्यक्षमा लीनेव वर्तत इति, पुरुषश्च बुद्धिपरिच्छिन्नो जीवोऽज्ञानत्वादव्याप्यासमा वर्तत इति च औपचारिकलय ब्रूते । अन्यथा प्रलये मायायास्स्वरूपत सर्वात्मना नाशे विनापि यत्नं मुच्यन्त एवेति मोक्षशास्त्रवैयर्थ्यम् । सर्वजीवमुक्तौ प्रपञ्चे पुनर्जीवान्तरसृष्टिप्र

तः तस्मात्—

मत्तः परतरं नान्यत्किञ्चिदस्ति धनंजय !
मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥७॥

मत्त इति । मत्तः परमेश्वरात्परतरं अन्यत्कारणान्तरं किंचिन्नास्ति न विद्यते, अहमेव रणमित्यर्थः । हे धनंजय ! यस्मादेवं तस्मान्मयि परमेश्वरे सर्वाणि भूतानि सर्वमिदं प्रोतमनुस्यूतमनुगतं अनुविद्धं प्रग्रथितमित्यर्थः । दीर्घपटतन्तुवत् सूत्रे मणिगणा इव ॥

तिः जीवस्य जन्मनाशहीनस्य जन्मनाशप्रसङ्गः, कृतहानाकृताभ्यागमदोषप्रसङ्गः, ईश्वरस्य च दिदोषप्रसङ्गः । प्रलये जीवनाशपक्षे चेमे दोषाः सम्भवन्ति हि ।

तस्माद्यथा सुप्तः पुरुषः ब्रह्मणि लीन इत्युच्यते तथैव प्रलयेऽपीति न वास्तवो जीवस्य लयः । ॥ हि सतो जीवस्य नाशे असतो जीवस्य पुनरुत्पत्तौ च 'नाऽसतो विद्यते भावो नाऽभावो विद्यते (गी० २-१६) इति गीतावचनमेव विरुध्येत, असतस्सत्ताऽयोगात्सतश्चासत्तायोगादनुपपन्ना कल्पना ।

न चैवं कथं सतः प्रपञ्चस्यापि लयं इति वाच्यं, प्रपञ्चस्यासत्त्वात् । न च कथमसतः प्रतीतिः शशृङ्गादेरनुपलम्भादिति वाच्यं, असतो रज्जुसर्पादेरुपलभ्यमानत्वात् । असतोऽप्युपलभ्यमानत्वादेव स्य शुक्तिरजतादिवन्मिथ्यात्वस्यास्माभिरुच्यमानत्वात् । यत्प्रतीयते बाध्यते च तद्धि मिथ्या इन्द्र- ादिवत् । तस्मान्नित्यस्य जीवस्य प्रलये मुक्तौ वा न लयः, मायायाश्च प्रलये न लयः, किं तु मेव । प्रलये प्रकृतिपुरुषयोर्लयस्मरणं त्वौपचारिकमेव । एवं प्रकृतिपुरुषयोः प्रलये लयाभावादेव नोत्पत्तिः । अतो नेश्वरयोनित्वं प्रकृतिपुरुषयोरिति स्थितम् ॥६॥

मत्त इति । हे धनञ्जय ! मत्तोऽन्यत्परतरं किंचिदपि नास्ति । मत्तोऽन्यत्किंचित्परतरं नास्तीति सूत्रे मणिगणा इव मयीदं सर्वं प्रोतम् । यस्मात्तस्मादिति । यस्मादहं सर्वस्य जगतः प्रभवः, च तस्मादित्यर्थः । अन्यशब्दसत्त्वादत्र परतरशब्दो नान्यपरः पौनरुक्त्यात् किन्तु कारणपर इत्याह— णान्तरमिति । कारणस्य कार्यापेक्षयोत्कृष्टत्वात्परशब्दवाच्यत्वमतिशयेन परं परतरं प्रधानकारण- र्थः । मृदादिकारणे घटादिकार्यस्यानुगतत्वदर्शनादाह—मयि सर्वमिदं प्रोतमिति । मयि परमात्मनि मीदं प्रमेयं सर्वं जगत्प्रोतम् । दृष्टान्तमाह भाष्यकारः—दीर्घपटतन्तुवदिति । यथैकस्यां दीर्घ- ौ पटः प्रोतः तद्वदित्यर्थः । घटाकारपरिणतमृदि घट इव जगदाकारपरिणतमायायां जगदनुगतम् । त्मनाधिष्ठानत्वादात्मनोऽपि जगदनुस्यूतत्वव्यवहार इति भावः । साक्षादन्तर्यामित्वात्मन्यपीदं जग- गतम् । कथमित्यत्र दृष्टान्तमाह मूलकारः—सूत्रे मणिगणा इवेति । यथा सूत्रे मणिगणाः ेन प्रथितास्तथा आत्मनि जगदित्यर्थः । एवं दृष्टान्तद्वयसाधारण्यादेव प्रोतशब्दस्यानुगतमप्रदर्श- र्पेद्वयकथनं भाष्ये । एतेनान्तःप्रविष्टेन सूत्रेण मणिगणा यथा धार्यन्ते तथा अन्तःप्रविष्टजीव- त्या जगद्धार्यत इति दृष्टान्ताशयः सूचितः ॥७॥

केन केन धर्मेण विशिष्टे त्वयि सर्वमिदं प्रोतमित्युच्यते—

रसोऽहमप्सु कौन्तेय! प्रभास्मि शशिसूर्ययोः ।
प्रणवस्सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥८॥

रस इति । रसोऽह, अपां यः सारः स रसः, तस्मिन् रसभूते मयि आप प्रोता इत्यर्थः । एवं सर्वत्र । यथाऽहमप्सु रस एव प्रभाऽस्मि शशिसूर्ययोः । प्रणव ओंकारः सर्ववेदेषु । तस्मिन् प्रणवभूते मयि सर्वे वेदाः प्रोताः । तथा खे आकाशे शब्दस्सारभूतः । तस्मिन्मयि ख प्रोतम् । तथा पौरुषं पुरुषस्य भावः, पौरुषं यतः पुंबुद्धिः नृषु, तस्मिन् पौरुषे मयि पुरुषाः प्रोताः ॥८॥

पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ।
जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥९॥

पुण्य इति । पुण्यस्सुरभिर्गन्धः पृथिव्यां चाहमस्मि, तस्मिन्मयि गन्धभूते पृथिवी प्रोता । पुण्यत्वं गन्धस्य स्वभावत एव पृथिव्यां दर्शितमबादिषु रसादेः पुण्यत्वोपलक्षणार्थम् ।

---

रस इति । ननु सर्वं जगत्त्वय्येव कुतः प्रोतं, किंतु तत्कारणे तत्तत्कार्यं प्रोतं यथा मृदि घट तन्तुषु पटश्चेति शङ्कायां तत्तद्धर्मविशिष्टे मय्येव तत्तत्कार्यं प्रोतमित्याह—रस इति । शब्दादिपञ्च तन्मात्रेभ्य खादिपञ्चभूतोत्पत्तिश्रवणात्त्वकारणेषु शब्दादिषु खादिभूतानि प्रोतानि, तानि च कारणभूतानि शब्दादिवस्तून्यहमेव मज्जन्यत्वेन तेषां मदात्मकत्वात्, यथा घटः पृथिवीजन्यत्वात्पृथिव्यात्मक ।

हे कौन्तेय ! अहमप्सु रसोऽस्मि, खे शब्दोऽस्मि, पृथिव्यां पुण्यो गन्धोऽस्मि, विभावसौ तेजोऽस्मि, अनुक्तमपि वायौ स्पर्शोऽस्मीतीह ज्ञातव्यम् । कोऽसौ रसोऽत आह—अपां यस्सार इति । सार स्थिरांश , कार्यस्य कारणं स्थिरांश । यथा घटस्य मृत्तिका कुण्डलस्य कनकं तथऽपां रस सार । एवं खादीनामपि शब्दादयस्सारा इत्यूह्यम् ।

रसभूत इति । मायया रसाकारेण परिणते इत्यर्थः । मय्यात्मनीत्यर्थ । प्रभा चन्द्रिका आतपश्च चन्द्रिकारूपमातपरूपं च यत्तेजोऽस्ति शशिसूर्ययोस्तदहमेवेत्यर्थ ।

'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥' (भग- १५-१२)

इति वक्ष्यमाणत्वात् तेजोऽतिरेकेण चन्द्रसूर्यरूपकार्याभावाच्चन्द्रसूर्यस्थिरांशस्तेज एवेत्यर्थ । एवमग्नेरपि । ओंकारस्य सर्ववेदादित्वात्स ओंकारोऽहमेव, पुरुषस्य भाव इति वीर्यमिति यावत् । निर्वीर्यस्य क्लीबत्वात्पुंस्त्वहेतुर्वीर्यमेव । कारणभूते च वीर्ये कार्यभूता पुरुषा देहशब्दवाच्या प्रोता वीर्यमयत्वाद्देहानाम् । यद्यप्यत्र पुरुषशब्द पुरुषदेहपर तथाऽपि स्त्र्यादिदेहानामपि वीर्यकार्यत्वाविशेषाद्देहमात्रपर । मूले तु नृषु मनुष्येषु पुरुषेष्विति यावत् , स्त्रीनपुंसकयोर्वीर्याभावात् । पश्वादौ वीर्यमस्ति स्थिरांशभूतं तदहमस्मीत्यर्थ ॥८॥

पुण्य इति । इदं पुण्यत्वविशेषणं रसादीनामपि देयमित्याह—उपलक्षणार्थमिति । पृथि-

पुण्यत्वं तु गन्धादीनां अविद्याधर्माद्यपेक्षं संसारिणां भूतविशेषसंसर्गनिमित्तं भवति । तथ दीप्तिश्चास्मि विभावसौ अग्नौ, तथा जीवनं सर्वभूतेषु, येन जीवन्ति सर्वाणि भूतानि तज्जीवनं; तपश्चास्मि तपस्विषु तस्मिंस्तपसि मयि तपस्विनः प्रोताः ॥९॥

बीजं मां सर्वभूतानां विद्धि पार्थ! सनातनम् ।
बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥१०॥

बीजमिति । बीजं प्ररोहकारणं मां विद्धि सर्वभूतानां हेपार्थ! सनातनं चिरन्तनम् ।

---

त्यादिषु स्वाभाविका गन्धादयः पुण्याः; आगन्तुकास्त्वपुण्या इत्याह—अपुण्यत्वं त्विति । अविद्या चधर्मश्चाविद्याधर्मौ तदादीनपेक्षत इति तथोक्तं, भूतविशेषसंसर्गो निमित्तं हेतुर्यस्य तत्तथोक्तम् । अविद्याधर्मादिप्रयुक्तभूतविशेषसंसर्गजन्या गन्धादयोऽपुण्या इत्यर्थः । यथा पृथिवीजलसंयोगजन्यौ जले गन्धपृथिवीरसौ तद्वदिति भावः ।

अयं च पृथिवीजलसंयोगादिः संसारिणां भोगार्थमविद्याधर्मादिवशाद्भवतीत्याह—विद्याधर्माद्यपेक्षमिति । तत्र सर्वस्याविद्यकत्वादविद्यावशाद्भवतीति सिद्धमेव । अधर्मवशात्तु दुःस्वहेतुर्दुर्गन्धः कर्दमादिजन्यः; आदिपदाद्धर्मवशाज्जलचन्दनसंयोगादिजन्यसुगन्धोऽप्यागन्तुक इति बोध्यम् । एवं रसादिष्वपि ।

जीवन्त्यनेनेति जीवनमन्नमित्यर्थः । 'अन्नाद्भूतानि जायन्ते जातान्यन्नेन जीवन्ति, अन्नं प्रयन्त्यभिसंविशन्ती'ति (तै- उ) श्रुतेः । भूतानामन्नकार्यत्वात्सर्वमन्ने प्रतिष्ठितमित्यर्थः । अथवा इत्यन्नं व्रीह्यादिमयं जलं च ।

एवं कारणे रसादौ कार्यस्य जलादेः प्रोतत्वमुक्त्वा अथाकारणेऽपि तपसि तपस्विनां प्रोतत्वमाह—तपश्चेति । ननु कथमकारणे तपसि तपस्विनां प्रोतत्वमिति चेदुच्यते—यथा कार्यं कारणाश्रयमेवं तपस्विनः तप आश्रया इति तपस्विनां तपसि प्रोतत्वमौपचारिकमिति । एवं बुद्धिर्बुद्धिमतामस्मीत्यादिष्वपि बोध्यम् । यद्वा पूर्वत्र रसजलादिष्वप्ययमेवाश्रयाश्रयिभावो बोध्यः । तथा च रसाद्याश्रयत्वाज्जलादीनां रसादिषु प्रोतत्वमिति ।

ननु गुणिनमाश्रित्य गुणो वर्तत इति गुण्येव गुणस्याश्रय इति गुणिन्येव गुणः प्रोतो न तु गुणे गुणी प्रोत इति वाच्यं, गुणोऽस्यास्तीति गुणीति व्युत्पत्त्या गुणवत्त्वस्य गुणपूर्वकत्वाद्गुण एव गुण्याश्रय इति ।

गुणिनि गुणस्यैव प्रधानत्वात्प्रधानाश्रयत्वादप्रधानानां प्रधानभूतो गुण एवाप्रधानगुण्याश्रय इति । अत एवापां यस्सार इति आकाशो शब्दस्सारभूत इति च भाष्यम् । सारः प्रधान इत्यर्थात् । एवं तप प्रधानत्वात्तपआश्रयत्वाच्च तपस्विनस्तपसि प्रोताः । तथा बुद्ध्याश्रयत्वाद्बुद्धिप्रधानत्वाच्च बुद्धिमन्तो बुद्धौ प्रोताः । बलाश्रयत्वाद्बलप्रधानत्वाच्च बलवन्तो बले प्रोता इत्याद्यूह्यम् । यद्वा कारणाभावे कार्याभाववद्विशेषणाभावे विशिष्टाभावात्कारणे कार्यमिव विशेषणे विशिष्टं प्रोतमिति वेद्यम् ॥९॥

बीजमिति । हेपार्थ! मां सर्वभूतानां सनातनं बीजं विद्धि । बीजशब्दार्थमाह—प्ररोह-

कारणमिति । प्ररोहः प्रादुर्भावः, तत्र कारणं यथा वृक्षाणां प्रादुर्भावे वटादिबीजजातं कारणं तद्व त्सर्वभूतप्रादुर्भावे अहमेव अनादिकारणमित्यर्थः । तथा च बीजत्वधर्मविशिष्टे मयि सर्वभूतानि प्रोता नीति फलितार्थः प्रकरणानुरोधात् । न च जीवनं सर्वभूतेष्विति पुनरुक्तिः, ईश्वरस्य जीवनभूतत्व बीजभूतत्वधर्मद्वयवशात्सर्वभूतप्रोतत्वस्य द्वेधोक्तिरित्यदोषात् ।

इदं च बीजत्वमुक्तं मायैव- वृक्षस्थानीयं स्थूलं जगत्प्रति सूक्ष्माया मायाया एव बीजस्थानीय त्वात् । चिन्मात्रेश्वरे 'अस्थूलमन'ण्विति श्रुत्या स्थूलत्वस्य सूक्ष्मत्वस्य च निषिद्धत्वात् । तदेवं माय भूते मयि सर्वभूतानि प्रोतानीति सिद्धम् ।

नच 'मयि सर्वमिदं प्रोत'मित्यस्य पुनरुक्तिरिति वाच्यं, तस्यैव विवरणपरत्वादस्य । यत 'सूत्रे मणिगणा इ'वेति दृष्टान्तानुरोधान्मयि प्रत्यगात्मनीति तत्रार्थः; अत्र तु प्रकृत्यात्मक इति भेदात् ; अथवा दीर्घपटतन्तुवदिति दृष्टान्तानुरोधान्मयीत्यस्य जगदाकारपरिणतमायाधिष्ठानब्रह्मचैतन्य इति तत्रार्थः; अत्र तु मायाभूते मयीत्येवेति भेदात् ।

मयि सर्वमित्यनेन प्रत्यक्त्वेन ब्रह्मत्वेन वा सर्वजगदधिष्ठानत्वमीश्वरस्योक्तम् ; जीवनं सर्वभूते ष्वित्यनेन तु अन्नत्वेन रूपेण; बीजं मां सर्वभूतानामित्यनेन तु मायात्वेन रूपेणेति विवेकः.

नन्वन्नस्य ईश्वरविवर्तत्वादीश्वराश्रितमायापरिणामत्वाद्वा ईश्वरस्यान्नात्मत्वमस्तु, कथं पुनर्मायात्मत्व मायायाः अकार्यत्वादिति चेत् , उच्यते—ईश्वरातिरिक्तस्य सर्वस्यापीश्वरे अध्यस्तत्वान्मायापीश्वरेऽध्य स्तैव; अन्यथा मायाया अनध्यस्तत्वे सत्यत्वापत्तेः ।

नचेश्वरे जगदध्यस्तं मायया, सा तु केनाध्यस्तम् ? न केनापि- अन्यस्याभावात् , भावे तस्याप्यन्यस्तस्याप्यन्यो ऽध्यासकर्ता स्यादित्यनवस्थादोष इति न मायाया अध्यस्तत्वसिद्धिरिति वाच्यं, स स्वयमेवाध्यस्तेति 'माया चाविद्या च स्वयमेव भव'तीति श्रुतेः । न चासम्भवः- श्रुतिप्रामाण्येन सर्व सम्भवात् । युक्त्या च ज्ञाननिवर्त्यमायाया अध्यस्तत्वसिद्धेः । न ह्यनध्यस्तं सत्यं वस्तु ज्ञाननिवर्त्यं अनिवर्त्यत्वस्यैव सत्यवस्तुस्वरूपत्वाद्धर्मिग्राहकमानेनाध्यस्तमायस्यैवेश्वरस्य सिद्धेः- 'यतो वा इमानि भूतानि जायन्त' इति श्रुतिसूचितेन जगज्जन्मादिलिङ्गकानुमानेन मायिन ईश्वरस्यैव सिद्धत्वादेव मायायाः स्वय मेवाध्यस्तत्वादेवाकार्यत्वमनादित्वं च । तनश्च स्वाध्यस्तान्नात्मत्वमिव स्वाध्यस्तमायात्मत्वमपीश्वरस्य युक्तमेवेति न कश्चिद्दोषः । मायाया अनीश्वरात्मत्वे मायापरिणामस्याऽन्नस्याप्यनीश्वरात्मत्वप्रसङ्गात् ।

सनातनमिति । अनादीत्यर्थः । अस्मिन्वेदान्तमते दृग्दृश्यं चेति द्वावेव पदार्थौ; दृक् क्षेत्र आत्मा, दृश्यं क्षेत्रम् । तत्त्रिविधमव्याकृतममूर्तं मूर्तं चेति । तत्राव्याकृतमव्यक्तमज्ञानं माया मूलप्रकृति रीश्वरोपाधिः; सैवामूर्तस्याकाशादेर्मूर्तस्य पृथिव्यादिप्रपञ्चस्य च कारणत्वाद्बीजमित्युच्यते । यस्यकस्या प्यकार्यत्वात्सनातनमिति च । तत्राव्याकृतमेकविधमेव । मूर्तामूर्तं तु दृश्यपृथिव्यादिप्रपञ्चात्मना बहुवि धमेव च; तत्र मां मयि मत्त इत्यादयस्मच्छब्दप्रतिपाद्योऽत्र दृक्पदार्थ आत्मा; सनातनबीजशब्दप्रतिपा द्यं तु अव्यक्तम् ; रसादिशब्दप्रतिपाद्यं तु मूर्तामूर्तात्मकं जगदिति विवेकः । एवं यद्यपि बीजशब्दादे वाव्याकृतपदार्थलाभः, तथाऽपि तस्यानादित्वं स्फुटयितुं सनातनमिति विशेषणम् ।

किं च बुद्धिर्विवेकशक्तिः अन्तःकरणस्य बुद्धिमतां विवेकशक्तिमतामस्मि, तेजः प्रागल्भ्यं तद्वतां तेजस्विनामहम् ॥१०॥

बलं बलवतां चाहं कामरागविवर्जितम् ।
धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ! ॥११॥

बलमिति । बलं सामर्थ्यं ओजः बलवतामहं, तच्च बलं कामरागविवर्जितं, कामश्च रागश्च कामरागौ- कामस्तृष्णा असन्निकृष्टेषु विषयेषु; रागो रंजना प्राप्तेषु विषयेषु; ताभ्यां कामरागाभ्यां विवर्जित देहादिधारणमात्रार्थं बलं सत्त्वमहमस्मि, न तु यत्संसारिणां तृष्णा रागकारणम् । किं च धर्माविरुद्धः धर्मेण शास्त्रार्थेनाविरुद्धो यः प्राणिषु भूतेषु कामः, यथा देहधारणमात्राद्यर्थः अशनपानादिविषयः स कामः अस्मि हे भरतर्षभ! ॥११॥

---

यद्वा कारणमात्रवाची बीजशब्दः पृथिव्यादिकारणभूतजलादीनि, घटादिकारणभूतपृथिव्यादीनि, पुत्रादिदेहकारणभूतपित्रादिदेहान्, वृक्षादिकारणभूतबीजादीनि चावान्तरकारणजातं ब्रूयादिति तद्व्यावृत्तये सनातनपदम् । नहि पृथिव्यादिष्वनादिकारणत्वमस्ति । नचेश्वरे अनादिकारणत्वसत्त्वात्तत्रातिव्याप्तिरिति वाच्यं, ईश्वरस्य निर्विशेषचिन्मात्रस्य वस्तुतः कारणत्वाभावात्, वस्तुतोऽनादिकारणत्वस्यैवात्र विवक्षितत्वात्, ईश्वरस्य च मायाद्वारैव जगत्कारणत्वादिति । सनातनं मां सर्वभूतानां बीजं विद्धीति चान्वय. । सर्वभूतपदेन मूर्तामूर्तप्रपञ्चग्रहणात्तत्कारणस्याव्याकृतस्यैव बीजपदेन ग्रहणमिति ।

अत्र बीजमुपादानत्वं सर्वेषां परिणामिद्रव्याणां स्वकार्यपरिणामसामर्थ्यमिति, यद्वा तत्तदवान्तरोपादानद्रव्यमिति वेदान्तदेशिकः, तदसत्— धर्मिवाचिनो बीजशब्दस्योपादानत्वरूपधर्मवाचित्वासम्भवात्, सति मुख्यार्थसम्भवे लक्षणाया अनाश्रयणीयत्वात् । अवान्तरोपादानमित्यपि न युक्तं-सर्वशब्दस्वारस्यभङ्गापत्तेः ।

बुद्धिशब्दो नात्रान्त.करणपरः- सर्वेषामपि बुद्धिमत्त्वेन बुद्धिमतामिति विशिष्य वक्तुमयुक्तत्वात्; किंतु विवेकशक्तिपर इत्याह— बुद्धिर्विवेकशक्तिरिति । सदसद्वस्तुविवेचनसामर्थ्यमित्यर्थः । कस्येयं शक्तिरत आह—अन्तःकरणस्येति । बुद्धिमतामाश्रयभूता प्रधानभूता च बुद्धिरहमस्मीत्यर्थः ॥१०॥

बलमिति, ओज इति । शरीरपाटवमित्यर्थः । इन्द्रियपाटवं वा तदुभयं वा । असन्निकृष्टाः दूरस्था; रञ्जना आसक्तिः; सति बले स्त्र्यादिविषयेषु कामरागौ भवत इति तृष्णारागयोर्बलं कारणमित्युक्तम् । परमकारणं तु तयोरज्ञानमेव ।

ननु बलवतां बलमस्मि, भूतेषु कामोऽस्मि इत्येवालं; किमिति कामरागविवर्जितत्वग्रहणमिति चेदुच्यते— यथा संसार्यविद्याऽधर्माद्यपेक्षभूतविशेषसंसर्गनिमित्तापुण्यगन्धादिव्यावृत्तये गन्धादीनां पुण्यत्वविशेषणं कृतं, तथैव संसार्यविद्याधर्माद्यपेक्षदुष्टबलकामव्यावृत्तये कामरागविवर्जितत्वधर्माविरुद्धत्वविशेषणद्वयमिति ।

यद्यपि दुष्टा अदुष्टाश्च सर्वेऽपि भगवदात्मका एव, तथाऽपि प्राधान्यायेहाऽदुष्टानामेव भगव-

ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ।
मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥१२॥

किंच, य इति । ये चैव सात्त्विकाः सत्त्वनिर्वृत्ताः भावाः पदार्थाः, राजसाः रजोनिर्वृत्ताः, तामसाः तमोनिर्वृत्ताश्च ये केचित् प्राणिनां स्वकर्मवशात् जायन्ते भावाः तान्मत्त एव जायमानानित्येवं विद्धि सर्वान्समस्तान् । एव यद्यपि ते मत्तो जायन्ते, तथापि न त्वहं

---

दात्मत्वमुक्तम् । अत एवोत्तरश्लोके सर्वस्यापि भगवदात्मत्वमुच्यते । एवमेवोत्तरत्रापि 'वृक्षाणामहमश्वत्थ' इत्यादिना तावदुत्कृष्टवस्तूनां स्वात्मत्वमुक्त्वा पश्चात् 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'(भग- १०- ४२-)दिति सर्वस्यापि स्वात्मत्वं वक्ष्यति ।

एतेन च उदकादिषु वर्तमाना रसादयो भगवद्रूपेणोपास्या इति, तपोबुद्धितेजोबलकामा धर्माविरुद्धा आत्मनि सम्पादयितव्या इति च योगिन उपदेशस्सूचितः ॥११॥

ये चेति । सत्त्वादागताः सात्त्विकाः सत्त्वगुणाज्जाता इत्यर्थः । निर्वृत्ता निष्पन्ना जाता इति यावत् । रजस इमे राजसाः; तमस इमे तामसाः । यद्वा रजसा निर्वृत्ता राजसाः, तमसा निर्वृत्तास्तामसाः । तेन निर्वृत्तमित्यण् । के ते भावा अत आह—ये केचित्प्राणिन इति । कुतस्तेषां सात्त्विकत्वादिकमत आह—स्वकर्मवशादिति । स्वादृष्टप्रयुक्तसत्त्वादिगुणनिर्वृत्ता इत्यर्थः । एतेन पदार्थानां सात्त्विकत्वादिकं स्वकर्मप्रयुक्तमेव, न तु मत्प्रयुक्तमितीश्वरस्य वैषम्यादिदोषः परिहृतः । मत्त एवेतीश्वरात्सकाशादेवेत्यर्थः ।

ननु सत्त्वादिभ्यो जातानां भावानां कथमीश्वरजातत्वावधारणमिति चेदुच्यते—सत्त्वाद्याकारपरिणतमायावच्छिन्नत्वादीश्वरस्येति, ईश्वराधिष्ठितमायागुणभूतसत्त्वादिकार्यत्वाद्भावानामीश्वरकार्यत्वमिति वा । परमकारणजन्यस्य वस्तुनोऽवान्तरकारणजन्यत्वव्यभिचारेऽपि अवान्तरकारणजन्यस्य वस्तुनः परमकारणजन्यत्वं नैव व्यभिचरति, यथा घटशकलानां मृत्तिकामयत्वं, न तु शकलमयत्वं घटस्य तद्वदिति भावः ।

मत्त एवेत्यवधारणेन च ये सत्त्वादयस्त्रयो गुणा ते वस्तुतोऽहमेव; यथा रजतं वस्तुतः शुक्तिकैवेति गम्यते ।

मत्त इति पञ्चमी । जनिकर्तुः प्रकृतिरपादानं स्यादपादाने पञ्चमी स्यादिति व्याकरणात्प्रकृतिरूपापादाने विहितेति कृत्वा तदनुगुणं पदमिह योजयति—जायमानानिति । अन्यथा पञ्चम्यनुपपत्तेरिति भावः ।

समस्तानिति भावानित्यर्थः । तत्र सात्त्विका भावा देवादयः, राजसा मनुष्यादयः, तामसास्तिर्यगादय इति विवेकः ।

ननु प्राणिनामीश्वरजातत्ववचनादप्राणिनामन्यजातत्वं प्रतिभातीति चेन्मैवम्—अनुपलब्धकर्तृकक्षित्यादिकार्यलिङ्गकानुमानेनेश्वरस्य तर्कादिमते सिद्धत्वात् तार्किकादयः अप्राणिक्षित्यादिभव

तेषु तदधीनः तद्वशः, यथा संसारिण ते पुनर्मयि मद्वशाः मदधीनाः ॥१२॥

कर्तारमीश्वर-मन्यन्त एवेति नाप्राणिनामीश्वराज्जातत्वमिह वक्तव्यमन्यतस्सिद्धत्वात् । किं तर्हि देव दत्तायज्ञदत्तो यज्ञदत्ताद्विष्णुमित्र इत्येव प्राणिनामेव जन्म प्राणिनस्सकाशाद्भवतीति लोकसिद्धतया तन्निरासक शास्त्रसिद्ध प्राणिनामीश्वरात्सकाशाज्जन्मेहोच्यत इति ।

न च वथ वाच्यात्रेण लोकसिद्धार्थपरित्याग इति वाच्य, भ्रमप्रमादादिदूषितलोकदृष्ट्यपेक्षया शास्त्रस्यैव बलवत्तरत्वात्, शास्त्राविरोधिलोकदृष्टेरेव प्रमाणत्वात् । अन्यथा सूर्योदयास्तमयग्रहणग्रहण कलङ्कगगननैल्यप्रमुखानामपि लोकदृष्टिसिद्धाना सत्यत्व स्यात्, शास्त्र तु 'यतो वा इमानि भूतानि जायन्ते' (तै उ ४१) इति प्राणिनामीश्वरादेव जन्मादिक ब्रूते ।

नित्यस्यैकस्याविक्रियस्येश्वरस्यात्मनो नास्ति जन्मादि, देवदत्तादिदेहाकारपरिणतमायायास्सकाशा द्विष्णुदत्तादिदेहाना जन्म ।

न च मायापरिणामाद्देहात्कुत पुन परिणामोदय इति वाच्य, अन्नपरिणामस्यापि रक्तस्य क्षीराकारपरिणामदर्शनात, मृत्परिणामाद्घटात् कपालपरिणामोदयदर्शनाद्बीजपरिणामाद्वृक्षात, पुष्पादि परिणामोदयदर्शनात्, मेघपरिणामाज्जलाद्बुद्बुदादिपरिणामोदयदर्शनात इहापि देहभुक्तान्नस्य रक्तात्मना रक्तस्य वीर्यात्मना वीर्यस्य च पिण्डात्मना परिणाम इति न कश्चिद्दोष ।

ननु 'सर्वभूतस्थमात्मान सर्वभूतानि चात्मनीति (भग ६ २९) पूर्वमुक्त्वा कथमधुना 'न त्वह तेषु ते मयीति विरुद्धमुच्यत इत्यत आह—तदधीन इति । अधीनपदमत्र शेष । तस्य चावृत्ति, वचनविपरिणामश्च । अहं तेष्वधीनो न । ते तु मय्यधीना इति । यथेति । यथा भावा मदधीनास्तथाऽह न त्वधीन इत्यर्थ ।

के ते भावा अत आह—संसारिण इति । संसरन्तीति संसारिण ; आत्मानात्मनादात्म्या ध्यासवन्त इति भाव । न त्वात्मा- तस्य मम चैकत्वादित्येतदर्थं संसारिपदनिवेश आत्मनोऽसंसा- रित्वात् । न च कथमात्मान्यस्य जडस्य संसारित्वमिति वाच्यं, आत्माभासवत्त्वाद्बुद्धौ साभासबुद्धिर्हि जीव संसारी । आभास प्रतिबिम्ब । अन्यत्रान्यधर्मप्रतिफलन तच्चात्र नाद्भवति ।

ननु पितुर्ज्ञान पुत्रो यथा पितुर्वशो पिता च पुत्रस्य वशोऽस्मि तद्वत्त्वयाऽपि भूतवशो, भूतैश्च त्वद्वशो स्यातव्यमेवेति कुतस्तत्र भूतावशत्वमत आह—यद्यपीति । नचो आना अपि त एव यद्वशो सन्ति, न त्वहं तद्वश इत्यर्थ । त्वस्य सर्वेश्वरत्वात्प्राणिना परतन्त्रत्वाचेति भाव । एवमपरतन्त्रत्वा देवेश्वरस्येश्वरत्वम् । लोके सर्वस्याप्यचेतनस्य चेतनवशत्वदर्शनादाननश्चेतनस्य अतो सर्वमचेतन माणितत सर्वत इति बोध्यम् । न च बुद्धिश्चेतनैवेति वाच्य, आत्मधर्मप्रतिफलनयुक्तत्वाद्बुद्धिगत चेतनत्वस्य । स्वतोऽचेतनैव बुद्धि । मायापरिणामत्वान्मायायाश्च जडत्वादिति बोध्यम् ।

एतेन प्राणिशब्दवाच्यसंसारिण कार्यकारणसङ्घातमत्रा ज्ञात्वा, किन्तु तद्भिन्नस्तत्सदुपादान- मीश्वर एवामेति सिद्धम् ॥१२॥

एवम्भूतमपि परमेश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वभूतात्मानं निर्गुणं संसारदोषबीजप्रदाहकारणं मां नाभिजानाति जगदित्यनुक्रोशं दर्शयति भगवान्, तच्च किं निमित्तं जगतोऽज्ञानमित्युच्यते—

त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् ।
मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥१३॥

त्रिभिरिति । त्रिभिर्गुणमयैर्गुणविकारैः रागद्वेषमोहादिप्रकारैः भावैः पदार्थैः एभिः यथोक्तैः सर्वमिदं प्राणिजातं जगत् मोहितमविवेकतामापादितं सत् नाभिजानाति मां; एभ्यः गुणेभ्यः यथोक्तेभ्यः परं व्यतिरिक्तं गुणविलक्षणं च अव्ययं व्ययरहितं जन्मादिसर्वभावविकाररहितमित्यर्थः ॥१३॥

---

त्रिभिरिति श्लोकमवतारयति—**एवमिति** । एवं पूर्वोक्तरूपेण भूतं स्थितमेवम्भूतं पूर्वोक्तविधमित्यर्थः । परमश्चासावीश्वरश्च परमेश्वरस्तं ब्रह्मविष्णुरुद्रेन्द्रादीश्वराणामीश्वरमित्यर्थः । निरुपाधिकेश्वरमिति वा । नित्यो विनाशरहितः; शुद्धो निरवद्यः; बुद्ध सर्वज्ञ; मुक्तः संसाररहित; स्वः स्वासाधारणः भावो धर्मो यस्य तं तथोक्तं; नित्यं शुद्धं बुद्धं मुक्तं चेत्यर्थ. । नित्यत्वादिधर्मवन्तमित्यक्षरार्थः । निर्धर्मकेऽप्यात्मनि नित्यत्वादयो धर्माः कल्पिता व्यवहारार्थमिति बोध्यम् । तच्च कल्पनमनित्याशुद्धजडबद्धजगद्वैलक्षण्यार्थम् । यद्वा नित्यादिपदान्यनित्यवैलक्षण्याद्यर्थबोधकानि लक्षणया । तथा चानित्यत्वादिधर्मानात्मनि निरस्यन्ति नित्यादिपदानि; नतु नित्यत्वादिधर्मान् कल्पयन्तीति न कश्चिद्दोषः ।

कोऽसौ परमेश्वरोऽत आह—**सर्वभूतात्मानमिति** । पूर्वोक्तानां सर्वेषां भूतानामात्मभूतमित्यर्थः । नास्मिन् सत्त्वादिगुणास्सन्तीत्याह—**निर्गुणमिति** । गुणकार्याभावादिति भावः । नच मायाया गुणवत्त्वादात्मनश्च मायित्वाद्गुणवत्त्वमात्मन इति वाच्यं, वस्तुतो निर्मायत्वादात्मनः, मायाया एव मिथ्यात्वेन तद्गुणानामपि मिथ्यात्वान्मिथ्यागुणैरात्मनि सगुणत्वस्यासम्भवान्मिथ्यामरीचिकोदकेन भूमेः पंकिलत्ववदिति वा सिद्धान्तात् ।

मां जगत्प्राणिन इत्यर्थ । नाभिजानाति । किमर्थं ज्ञानमत आह—**संसारबीजदोषप्रदाहायेति** । संसारबीजभूता दोषा अविद्यातत्कार्यरागद्वेषादयश्च तेषां प्रकर्षेण दाहाय दहनार्थं तूलानग्निनेवेति भावः । अनुक्रोशं दयाम् । कुतस्त्वां जगन्न जानातीत्याक्षिपति—**तच्चेति** । तस्य चाक्षेपस्य परिहारोऽनेन श्लोकेनोच्यत इत्याह—**उच्यते, त्रिभिरितीति** ।

इदं सर्वं जगत् एभिर्गुणमयैस्त्रिभिर्भावैर्मोहितं सत् एभ्यः परमव्ययं मां नाभिजानाति । **त्रिभिर्गुणमयैरिति** । त्रिगुणमयैरित्यर्थः । सत्त्वादिगुणत्रयपरिणामभूतैरिति यावत् । **रागद्वेषमोहादिप्रकारैः** रागादिरूपैरित्यर्थ. । रागः सात्त्विको राजसश्च, द्वेषो राजसः, मोहस्तु तामस इति विवेकः । आदिपदात्सुखदुःखादिग्रहणम् । अचेतनस्य मृदादेर्मोहासम्भवादाह—**प्राणिजातमिति** । देवमनुष्यादि-

दैवी ह्येषा गुणमयी मम माया दुरत्यया।
मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥१४॥

दैवी देवस्य ममेश्वरस्य विष्णोः स्वभावभूता हि यस्मादेषा यथोक्ता गुणमयी मम माया दुरत्यया दुःखेनात्ययः अतिक्रमणं यस्याः सा दुरत्यया। तत्रैवं सति सर्वधर्मान् परित्यज्य मामेव मायाविनं स्वात्मभूतं सर्वात्मना ये प्रपद्यन्ते ते मायामेतां सर्वभूतमोहिनीं तरन्त्यतिक्रामन्ति; ते संसारबन्धनान्मुच्यन्ते इत्यर्थः ॥१४॥

चेतनवर्ग इत्यर्थः। अविवेकतां विवेकराहित्यं, विवेक आत्मानात्मविवेकः; स न विद्यते येषां ते अविवेकाः तेषां भावं आपादितं प्रापितं व्यतिरिक्तमन्यं गुणविलक्षणं चेति गुणगतलक्षणभिन्नलक्षणवन्तमित्यर्थः। चकारात् स्वरूपतः स्वभावतश्च गुणेभ्योऽत्यन्तभिन्नमित्यर्थः। तत्र स्वरूपतो भेदाय परमिति, स्वभावतो भेदाय गुणविलक्षणमिति च पदद्वयनिर्देशः। न व्येति विकारमापद्यत इत्यन्वयः। व्ययो विकारः, न तु परिक्षयमात्रम्। प्राणिनां रागद्वेषमोहादिभिरन्तःकरणस्यात्मानात्मविवेचनसामर्थ्ये नष्टे सति देहादिविलक्षणात्मज्ञानं न सम्भवतीति परमार्थः ॥१३॥

दैवीति। सत्त्वादिगुणमयरागद्वेषादिमोहितमपि जगन्मायामोहितमेव मायागुणत्वात्सत्त्वादीनामित्यभिप्रेत्याह भाष्यकारः—कथं पुनरिति। देवस्येयं दैवी तां; कोऽसौ देवो अत आह—वैष्णवीमिति। केयं विष्णुदेवसम्बन्धिनीत्यत आह—मायामिति। काऽसौ मायेत्यत आह—त्रिगुणात्मिकामिति। सत्त्वादिगुणत्रयस्वरूपाम्। कुत्रोक्तेयमत आह—एतामिति। पूर्वश्लोकोक्तामित्यर्थः। अतिक्रामतीति जगदिति कर्तृशेषः। इति शङ्कायामुच्यते—दैवीति।

दीव्यति स्वयं प्रकाशत इति देवः, ईष्टे शक्नोतीतीश्वरः, वेवेष्टि व्याप्नोतीति विष्णुः। कोऽसौ देव ईश्वरो विष्णुश्चेत्यत आह—ममेति। आत्मन इत्यर्थः। स्वभावः जगन्मोहकत्वजगज्जन्मादिहेतुत्वादिः गुणास्सत्त्वादयः प्रकृतमुच्यन्ते यस्यां सा गुणमयी त्रिगुणात्मिकेत्यर्थः। सत्त्वादिगुणत्रयस्वरूपेति यावत्। दुःखेनात्येतुं शक्या दुरत्यया अत्येतुमशक्येत्यर्थः। तत्रेत्यध्याहारः। तदर्थमाह—एवं सतीति। मायया दुरत्ययत्वे सतीत्यर्थः। 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' (भग० १८-६६) इति वक्ष्यमाणत्वादाह—सर्वधर्मान् परित्यज्येति, मामेवेति। यस्य मायया मोहिताः तं मायावन्तं मामेवेत्यर्थः। कस्त्वमत आह—स्वात्मभूतमिति। स्वेषां भजमानानामात्मभूतमात्मानमित्यर्थः। सर्वात्मना सर्वभावेन प्रपद्यन्ते भजन्ते साक्षात्कुर्वन्तीति यावत्।

आरोपितसर्वाधिष्ठानभूतरज्जुस्वरूपज्ञानाद्रज्जुसर्पभ्रमो यथा निवर्तते, तथाऽऽरोपितदेहादिप्रपञ्चाधिष्ठानभूतात्मतत्त्वज्ञानान्माया सकार्या निवर्तत इति परमार्थः। आत्मानात्मविवेकपूर्वकमात्मसाक्षात्कारे सति कुतः पुनरात्मानात्मनोरविवेकस्यावकाशः। अविवेकस्य चाभावे तदनुमेयमायायाः कथं सत्त्वम्? न कथमपीत्यर्थः।

तदप्यात्मसाक्षात्कारमात्रेण देहपातं विना मायाकार्यप्रपञ्चनाशाभावेन माययास्सत्त्वमनुमीयते,

तथाऽपि कृतात्मसाक्षात्कारस्य माया दग्धपटवन्निस्सारा न बन्धहेतुरिति बोध्यम् । अत एव संसारबन्धनान्मुच्यन्त इति भाषितमाचार्यैः ।

यद्वा मायाया आवरणशक्तिर्विक्षेपशक्तिरिति शक्तिद्वयमस्ति; तत्रावरणशक्त्या जीवानामात्मस्वरूपावरणं तत्पूर्वकससारश्च भवति, विक्षेपशक्त्या सर्वप्रपञ्चोदयः; तत्रात्मसाक्षात्कारेणावरणशक्तिर्नश्यति; नतु विक्षेपशक्ति - आत्मज्ञानविक्षेपशक्त्योरविरोधात् । घटसाक्षात्काराद्धि तद्विरोधिघटावरणमज्ञानमेव नश्यति, इमामेवावरणशक्तिमविद्येति व्यवहरन्ति केचित् । तदेवमात्मसाक्षात्कारेणाविद्यानाशेऽपि मायाया अनाशात्प्रपञ्चप्रतीतावपि न संसारः ।

तथा चाविद्याजनितात्मानात्मविवेकमूलकस्संसारः विद्ययात्मसाक्षात्काररूपया समूलो निवर्तते । यथा अन्धकारस्थस्थाणुपुरुषाविवेकमूलकः स्थाणुपुरुषसंशयः प्रदीपप्रभयाऽन्धकारे नष्टमति समूलो निवर्तते तद्वदिति श्लोकस्य परमार्थः ।

एतेन देहादिप्रपञ्चो न पुरुषस्य बन्धहेतु, येन देहादिनाशं विना पुरुषस्य संसारनिवृत्तिर्न स्यादित्यापत्तिर्दीयेत, किं तु देहाद्यनात्मतादात्म्याध्यास एव । सत्वात्मज्ञानेनैव निवर्तते । अतो मुमुक्षुणाऽत्मज्ञानमेव सम्पाद्यं गुरुशुश्रूषावेदान्तश्रवणादिनेति सिद्धम् ।

अनेन चात्मज्ञानेनात्मन्यारोपितोऽनात्मतादात्म्याध्यासो निवर्तते; अनात्मनस्तु देहादयं प्रारब्धावसाने निवर्तन्ते; तदेवमात्मज्ञानाज्जीवन्मुक्तिर्देहनाशात्मज्ञानपूर्वकाद्विदेहमुक्तिरिति सिद्धम् ।

वस्तुतस्तु आत्मनि कालत्रयेऽपि देहादिप्रपञ्चाभावाद् आत्मानं साक्षात्करोति न तद्दृष्टया कोऽप्याविद्यको मायिको वाऽज्ञानप्रपञ्चोऽर्थप्रपञ्चश्चेत्यात्मज्ञानात्सकार्याया मायाया निवृत्तिरिति बोध्यम् ।

अहङ्कारममकारादिरूपोऽज्ञानप्रपञ्चो यस्यैव जीवसृष्टं द्वैतमिति व्यवहाराश्रयत्वं, अर्थप्रपञ्चस्तु सूर्यादिरूपो यस्येश्वरसृष्टद्वैतमिति व्यवहाराश्रयत्वं तत्र जीवप्रपञ्च एव पुंसां बन्धकः, न त्वीश्वरसृष्टप्रपञ्च इति ।

अत्राह रामानुजीयः—

> त्वदन्यश्शरणं नास्ति त्वमेव शरणं मम ।
> तस्मात्कारुण्यभावेन रक्ष रक्ष जनार्दन ॥

इत्येवं निश्चयरूपं प्रपत्तिमतमिहोपदिश्यते भगवता—तत्र मामिति विष्णुः प्रपत्तव्य इति, एवेति न देवतान्तरं प्रपत्तव्यमिति, प्रपद्यन्त इति भक्तिज्ञानादिभ्यः प्रपत्तिरेव गरीयसी कर्तव्येति बहुवचनेन जीवभेद, [illegible] प्रपद्यन्त इति प्रपत्तिक्रियाकर्तृकर्मणोर्जीवेश्वरयोर्भेद 'मायामेतां तरन्ति ते' इति प्रपन्नानामेव मोक्षलाभो मायानिवृत्तिपूर्वक इति च सिद्धम् । तदेवं स्वरसतः सिद्धमर्थं विहाय शाङ्करी कुकल्पना अनादरणीयेति ।

अत्रोच्यते— नेदं प्रपत्तिप्रकरणं- 'ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः' इति (गी॰ ७-२) प्रक्रम्य 'ते ब्रह्म तद्विदुः कृत्स्न'(भग- ७-२)मित्युपसंहरिष्यमाणत्वात् । 'प्रियो हि ज्ञानिनोऽत्यर्थ'मिति

यदि त्वां प्रपन्ना मायामेतां तरन्ति कस्मात्त्वामेव सर्वे न प्रपद्यन्त इत्युच्यते—नेति ।

न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ।
माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥१५॥

न मां परमेश्वरं नारायणं दुष्कृतिनः पापकारिणः मूढाः प्रपद्यन्ते नराधमाः नराणां मध्ये अधमा निकृष्टाः । ते च मायया अपहृतज्ञानाः सम्मुषितज्ञाना आसुरं भावं हिंसानृतादिलक्षणमाश्रिताः ॥१५॥

---

(भग- ७-१७) 'ज्ञानवान् मां प्रपद्यत' इति (भग- ७-१९) च ज्ञानस्यैव मध्ये कीर्तितत्वादसङ्गत् । नच ज्ञानिन एव प्रपत्तिरुपदिश्यत इति वाच्यं, ज्ञानिनः स्वात्मन एवेश्वरत्वेन स्वात्मातिरिक्तप्रपत्तव्येश्वराभावात् । उक्तं हि- सर्वभूतस्थमात्मानं' (भग- ६-२९) इत्यादिना ईश्वरस्यात्मत्वम् । 'ज्ञानी त्वात्मैव मे मत'(भग- ७-१८)मिति भगवता चेहैवोक्तम् । ईश्वरस्य चान्तर्यामित्वादात्मव्यतिरिक्तस्यान्तर्यामिणश्चादर्शनात् , आत्मेश्वरयोर्भेदे ईश्वरस्यासर्वात्मत्वप्रसङ्गात् , प्रपद्यन्त इति बहुवचनस्य उपाधिभेदबोधकत्वात् । सोपाधिकस्यात्मनः प्रपत्तृत्वान्निरुपाधिकस्य तस्यैव प्रपत्तव्यत्वात् , मामित्यस्मच्छब्दस्य स्वभावादेवात्मपरत्वादात्मनोऽन्यस्य दैवतस्यैवाभावात् , सर्वदेवशरीरोपहितात्मन एकत्वात् , विष्णोश्चात्मत्वाच्छरीरस्य चानात्मत्वेनाविष्णुत्वात् , मामित्यनेनात्मपरिग्रहे तु वसुदेवात्मजकृष्णशरीरस्यैव वक्तुः परिग्राह्यत्वात्तस्य च नष्टस्य प्रपत्तेरधुनातनानां पूर्वकालिकानां च कर्तुमशक्यत्वादसम्भावितत्वाच्च, अनात्मोपासनया मायातरणासम्भवाच्च, मायायाश्चात्माश्रयाया आत्मसाक्षात्कारं विनाऽनिवृत्तेरिति ।

आत्मप्रपदनं च- 'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥' इत्युक्तलक्षणब्रह्माभ्यास एव- ब्रह्मण एवात्मत्वात् । अयं च ब्रह्माभ्यासो न धर्मान्तरसक्तस्य सुलभ इत्यत आह—सर्वधर्मान्परित्यज्येति ।

अनेन चात्मप्रपत्तौ सन्न्यासिनामेवाधिकारो न तु गृहस्थानामिति सूचितम् । तस्यैव सर्वकर्मसन्न्यासविधानेन सर्वधर्मपरित्यागसम्भवात् । न हि परित्यक्तसर्वधर्मो गृहस्थो भवितुमर्हति सर्वधर्मकर्तृत्वस्यैव गृहस्थलक्षणत्वात् । न चायमंशो भाष्ये काप्यनुक्त इति शङ्क्यम् , ज्ञाननिष्ठायास्सन्न्यास्येकविषयत्वस्य भाष्ये स्फुटमुक्तत्वादात्मप्रपत्तेश्च ज्ञाननिष्ठारूपत्वात् । ब्रह्मणि स्थितिर्हि ज्ञाननिष्ठा । ब्रह्म त्वात्मैव खलु तस्मादात्मप्रपत्तिः ब्रह्मनिष्ठा ज्ञानयोग आत्मसमाधिरित्येतच्छब्दाः पर्याया एव, न त्वतिरिक्तार्थबोधकाः । तदेवं ये सन्न्यस्य मां प्रपद्यन्ते त एव मायां तरन्तीति बोधयितुमेव सर्वधर्मान् परित्यज्येति भाषितमाचार्यैः । ततश्च मायातरणात्मकसंसारनिवृत्तिकामैर्मायानिवर्तकात्मसाक्षात्कारायावश्यं सन्न्यासाश्रमः स्वीकर्तव्यो विवेकवद्भिरिति सिद्धम् । अत एव ज्ञानिनां सन्न्यास एवाधिकार इति, गृहस्थानां न ज्ञानयोगेऽधिकार इति चासकृदुक्तं भाष्यकारैः ॥१४॥

नेति । दुष्कृतिनो मूढा नराधमाः मायया अपहृतज्ञाना अत एवासुरं भावमाश्रितास्सन्तः मां न प्रपद्यन्ते, जन्मान्तरदुष्कृतवशान्मायया आत्मानात्मविवेकेऽपहृते सति देहादिष्वात्माभिमानमग्ना-

ये पुनर्नरोत्तमाः पुण्यकर्माणः,

चतुर्विधा भजन्ते मां जनास्सुकृतिनोऽर्जुन !

आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ! ॥१६॥

चतुर्विधा इति । चतुर्विधाः चतुष्प्रकारा भजन्ते सेवन्ते मां जनाः सुकृतिनः पुण्यकर्माणः हे अर्जुन ! आर्तः आर्तिपरिगृहीतः तस्करव्याघ्ररोगादिना अभिभूतः आपन्नः, जिज्ञासुर्भगवत्तत्त्वं ज्ञातुमिच्छति यः, अर्थार्थी धनकामः, ज्ञानी विष्णोः तत्त्ववित् हे भरतर्षभ !

स्सन्तः देहादिविलक्षण आत्मा नास्ति न भातीत्येवं ब्रुवाणाश्शिश्नोदरपरायणाः 'आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया' इत्यादि(भग-१६-१५)वक्ष्यमाणासुरसम्पच्छालिनस्संसरन्तीत्यर्थः ॥१५॥

चतुर्विधा इति । चतस्रो विधाः प्रकारा रीतयो तेषां ते चतुर्विधाः, सुकृतं जन्मान्तरार्जितं पुण्यकर्म येषामस्ति ते सुकृतिनः 'अत इनि ठनौ'वितीनिप्रत्ययः । सुकृतिनां चातुर्विध्यमेव दर्शयति— आर्त इत्यादिना । आर्तिः पीडा दुःखमिति यावत् । आपन्न आपदं प्राप्तः, अतएव- 'विपदस्सन्तु नश्शश्वत्तासु संकीर्त्यते हरिः' इति भागवते कुन्ती प्राह । धनकाम इत्युपलक्षणं- पुत्रादिकामानाम् । अमीषां चतुर्णां मध्ये ज्ञानी साक्षादात्मानं मत्वा वासुदेवं भजते, अन्ये त्रयस्त्वीश्वरं परोक्षं मत्वेति विवेकः ।

यद्यपि ज्ञान्येक एवात्मानमेव भजते, अन्ये त्वार्तादयः रोगादिनिवृत्त्यर्थं ज्ञानार्थं धनाद्यर्थं वा औषधादिकं कर्म योगादिकं कृष्यादिकं वा सेवन्ते, देवतान्तराणि वा भजन्ते, वासुदेवं वा भजन्ते नतु तत्र नियमः; तथापि आर्तादिषु सुकृतिनो वासुदेवं भजन्ते, अन्ये तु भेषजादिकमिति बोध्यम् । अत एव सुकृतिन इत्युक्तम् ।

यद्वा ये आर्तिहरणाद्यर्थं देवतान्तरादिकं भजन्ते तेऽपि वासुदेवमेव भजन्ते- वासुदेवस्य सर्वात्मत्वात् । 'येऽप्यन्यदेवता भक्ता यजन्ते श्रद्धयान्विताः, तेऽपि मामेव कौन्तेय ! यजन्त्यविधिपूर्वकम्' इति नवमाध्याये (श्लो २३) वक्ष्यमाणत्वात् ।

ऐश्वर्यादिमदमत्तास्तु दुष्कृतिनो न मां कथञ्चिदपि कथमपि भजन्त इति सूचयितुमार्तग्रहणमर्थार्थिग्रहणं च ।

अनेन श्लोकेन आर्तिनिवारणार्थं दारापत्यधनादिसिद्ध्यर्थं।ज्ञानार्थं मोक्षार्थं च भगवानेक एव नृणां सेव्य इत्युपदिष्टम् । सोपाधिकं निरुपाधिकं वा यस्येश्वरभजनं नास्ति स नराधमः पापश्शोच्य एवेति भावः ।

ननु 'पूर्वजन्मकृतं पापं व्याधिरूपेण बाधते' इति शास्त्रात्पापफलस्य व्याधेः कथं सुकृत्याश्रयत्वमेवं दारिद्र्यप्रयुक्तस्य धनार्थित्वस्य वा कथं सुकृत्याश्रयत्वं दारिद्र्यस्य पापफलत्वादिति चेत्, मैवम्— मनुष्यजन्मनः पुण्यपापमिश्रफलत्वात्पापफलं व्याध्यादिकमनुभवन्नपि पुरुषः कृतपुण्य एव तन्निवृत्त्यर्थं भगवन्तं भजते, भगवद्भजनस्य सुकृतं विना दुर्लभत्वात् । नच धनिकस्यार्तस्य धनभोगेन सुकृतस्य

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ।
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥१७॥

तेषामिति । तेषां चतुर्णां मध्ये ज्ञानी तत्त्ववित् तत्त्वविच्वान्नित्ययुक्तो भवति; एकभक्तिश्च । अन्यस्य भजनीयस्यादर्शनादतः स एकभक्तिर्विशिष्यते विशेषमाधिक्यमापद्यते; अतिरिच्यत इत्यर्थः । प्रियो हि यस्मादहमात्मा ज्ञानिनः, अतस्तस्याहमत्यर्थं प्रियः; प्रसिद्धं हि लोके, 'आत्मा प्रियो भवति' इति । तस्मात् ज्ञानिन आत्मत्वाद्वासुदेवः प्रियो भवतीत्यर्थः । स च ज्ञानी मम वासुदेवस्य आत्मैवेति मम अत्यर्थं प्रियः ॥१७॥

---

क्षीणत्वादीश्वरभजनं न स्यादिति वाच्यं, सुकृतकर्मणां विचित्रत्वेनानन्तत्वेन च धनभोगप्रदसुकृतकर्मणो धनभोगप्रदानेन क्षीणत्वेऽपीश्वरभजनप्रदसुकृतकर्मणोऽक्षीणत्वात्तस्माच्चतुर्विधास्सुकृतिनः परोक्षमपरोक्षं वाऽऽत्मानमीश्वरं भजन्त इति स्थितम् ।

भरतवंश्या राजानो भरताः तेषामृषभः श्रेष्ठो भरतर्षभः तत्सम्बुद्धिः । कृष्णार्जुनयोर्नरनारायणावतारत्वान्नरावतारस्यार्जुनस्य भरतर्षभत्वमिति भावः । शौर्यधैर्यादिसम्पन्नत्वादिति वा ।

अनेन च श्लोकेन शत्रुत्वाभिभूतिरूपविपदं प्राप्तस्य तत्त्वजिज्ञासोः राज्यकामस्य च तव सुकृतिनो मद्भजनमवश्यं कर्तव्यं, तच्च मद्भजनं तवानभिसंहितफलस्वधर्मयुद्धानुष्ठानरूपमेवेत्यर्जुनस्य उपदेशस्सूच्यते ॥

तेषामिति । ननु किमार्तादयश्चत्वारः समाः, उत तेषां मध्ये कश्चिद्विशिष्यत इत्यत आह—तेषामिति । तेषां मध्ये इत्यर्थः । नित्ययुक्तः सदाप्यात्मनि चित्तसमाधानवान् भवति; कुतस्तत्त्ववित्त्वादात्मयाथात्म्यवित्त्वादात्मत्वादेवेत्यर्थः । भज्यते सेव्यत इति भक्तिः; भक्तिरिति पाणिनिसूत्रात् । एक आत्मेत्यर्थः । भक्तिर्यस्य स एकभक्तिः । एकस्मिन्नात्मनि भक्तिः स्नेहविशेषो यस्य एकभक्तिरिति वा; आत्मैकभजनतत्पर इत्यर्थः । एवं ज्ञानी नित्ययुक्तत्वादेकभक्तित्वाच्च तेषां मध्ये विशिष्यते । अत इति । यस्मादहं ज्ञानिन आत्मा तस्मादित्यर्थः । मम ज्ञानिन आत्मत्वादिति यावत् । अत्यर्थं भृशं आत्मा प्रियो भवतीति लोके प्रसिद्धं शास्त्रे च- 'आत्मनस्तु कामाय सर्वं प्रियं भव'तीति परमप्रेमास्पदत्वात्प्रियतमत्वमात्मनः प्रसिद्धम् । तस्माच्छब्दार्थं स्वयमेवाह—ज्ञानिन आत्मत्वादिति । ज्ञानिनो वासुदेवः प्रियो भवति आत्मत्वाद्वासुदेवस्येत्यन्वयः । स च ज्ञानी मम प्रिय इत्यत्र हेतुमाह—आत्मैवेत्यत इति । आत्मैवेति हेतोरित्यर्थः । आत्मत्वादिति यावत् । यथा ज्ञानिन आत्मत्वाद्वासुदेवः प्रियः तथा वासुदेवस्यात्मत्वाद्ज्ञानी प्रियः ज्ञानिवासुदेवयोरेकात्मरूपत्वादिति भावः ।

हि यस्मान्नित्ययुक्त एकभक्तिर्ज्ञानी तेषां विशिष्यते तस्मादहं ज्ञानिनोऽत्यर्थं प्रियः; स च मम प्रिय इत्यन्वयः । ज्ञानी नित्ययुक्त एकभक्तिरत एव तेषां विशिष्यते । हि यस्मादहं ज्ञानिन आत्मा तस्मादहं ज्ञानिनोऽत्यर्थं प्रियः । स च मम आत्मत्वात्प्रिय इति वा- 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' अत एवेति शेषः । अहं ज्ञानिनोऽत्यर्थं प्रियः; स च मम प्रियो भवति । हिः प्रसिद्धौ इति वा । 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' अहमात्मत्वादिति शेषः । ज्ञानिनोऽ-

त्यर्थं प्रियः भवामि; स चात्मत्वान्मम प्रियो भवतीति वा । न चात्मपदाध्याहारे नास्ति प्रमाणमिति वाच्यं, 'ज्ञानी त्वात्मैव मे मत'मिति (भग- ७-१८) वक्ष्यमाणवाक्यस्यैव प्रमाणत्वात् । यद्वाऽहं ज्ञानिनोऽत्यर्थं प्रियः, स च मम प्रिय इत्येवात्रान्वयः । तत्र हेतुस्तु 'ज्ञानी त्वात्मैव मे मत'मिति वक्ष्यते । अतएव तत्कस्मादित्याहेत्यवतारित ज्ञानी त्वात्मैवेति वाक्यं भाष्यकारैः । अत्रात्मत्वहेतूपन्यासस्तु वक्ष्यमाणश्लोकसिद्धार्थस्येहैव स्पष्टार्थमनुवाद इति बोध्यम् ।

यत्तु रामानुजः—ज्ञानिनो मदेकप्राप्यस्य मया योगो नित्यः मय्येकस्मिन्नेव भक्तिः, अतस्स एव विशिष्यते । अत्यर्थमत्यभिधेयं ज्ञानिनोऽहं यथा प्रियस्तथा सर्वज्ञेन सर्वशक्तिना मयाऽप्यभिधातुं न शक्यत इत्यर्थ इति, इतरयोस्तु यावत्स्वाभिलषितप्राप्ति मया योगः; स्वाभिलषिते तत्साधनत्वेन च मयि भक्तिरिति च, तदसत्—सति जीवस्येश्वरेण नित्ययोगे नित्यप्राप्त एवेश्वर इति कथं तस्य प्राप्यत्वम् ? अप्राप्तस्य हि प्राप्यत्वं सम्भवति । कथं वा परोक्षेण परमपदवैकुण्ठनिलयेनेश्वरेण जीवानां नित्ययोगः ? कथं परोक्षेणान्तर्यामिणा वा ? न हि त्वमेवं कुर्विति प्रेरकः कश्चिद्धृदये कस्यापि प्रत्यक्षः, किं त्वनुमेय एव- जीवपारतन्त्र्यादिलिङ्गात् । न च 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति, आदित्यवर्णः' इत्यादिश्रुत्या हृदि साकार ईश्वरोऽस्तीति वाच्यं, निरवयवाणुप्रायजीवान्तर-परमाणुभूतेश्वरस्य भवदभिमतस्य साकारत्वायोगात्, 'अशब्दमस्पर्शमरूपमव्यय'मित्यादिश्रुतिविरोधाच्च, अंगुष्ठमात्रत्वादेः कल्पितरूपत्वाच्च । न च कल्पितेश्वररूपेण नित्ययोगो विवक्षित इति वाच्यं, वास्तवस्वरूपपरित्यागे कारणाभावात्, रूपं कल्पयित्वाऽहं भजनीय इतीश्वरेणानुक्तत्वात्तत्त्वकथनप्रकरणत्वाच्च ।

तथा एकभक्तिशब्देनापि नात्मातिरिक्तपरोक्षेश्वरभक्तिरुच्यते, किं तर्हि आत्मभक्तिरेव । वस्तुस्वरूपदर्शनं विना वस्तुनि प्रीत्यात्मकभक्त्ययोगात् । कल्पितार्चादिस्वरूपी त्वज्ञजनविषये ज्ञानिनः प्रीत्ययोगात् । 'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वाऽर्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥' इति भागवते व्यासेन मौढ्यादिति मूढजनविषयोऽर्चाभजनादिरिति दर्शितत्वात्तत्त्वविद एव ज्ञानित्वात्सच्चिदानन्दरूपस्य च तत्त्वत्वादतो न ज्ञानिनः कल्पितेश्वराकारे प्रीतिरुपपद्यते ।

अहं ज्ञानिनोऽभिधेयमतिक्रम्य प्रिय इति वाक्यस्यानन्वितत्वात्, अभिधेयमतिक्रम्येत्यस्मादभिधातुं न शक्यत इत्यर्थालाभात्, अभिधानमतिक्रम्येत्यस्मादेव तादृशार्थलाभसम्भवात्, प्रसिद्धभूरार्थपरित्यागे कारणाभावात् ।

विषयगतप्रियत्वस्यापीयत्तारहितत्वेनेश्वरप्रियत्वस्येयत्तारहितत्ववचनस्यानर्थकत्वात्, विषयप्रियत्वं सातिशयमीश्वरप्रियत्वं तु निरतिशयमित्येव वक्तव्यत्वात्, ईश्वरस्य चानात्मत्वे निरतिशयप्रियत्वायोगात्,

आत्मनो निरतिशयप्रियत्वस्य च श्रुत्यादिसिद्धत्वात्, आत्माभिरपितप्रदानादिनैव परोक्षेश्वरस्य प्रियत्वव्यवहार इति परोक्षेश्वरस्याप्यात्मशेषत्वात्, 'स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः' इति प्रह्लादस्य कृष्णस्मरणजन्यानन्दस्तु आत्मानन्द एव,

न ह्यार्तादयस्त्रयो वासुदेवस्य प्रिया न, किं तर्हि ?

उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ।
आस्थितस्स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥१८॥

उदारा इति । उदाराः उत्कृष्टाः सर्व एवैते, त्रयोऽपि मम प्रिया एवेत्यर्थः । न हि कश्चिद्भक्तो मम वासुदेवस्य अप्रियो भवति । ज्ञानी त्वत्यर्थं प्रियो भवतीति विशेषः । तत्कस्मादित्यत आह—ज्ञानी त्वात्मैव नान्यो मत्त इति मे मम मतं निश्चयः । आस्थित

नातिरिक्तः- कृष्णस्यास्मरत्वात् । साकारेश्वरध्यानजन्योऽप्यानन्दः चूतफलाद्यनुभवजन्यानन्दवदात्मानन्द-प्रतिबिम्बानन्द एव, न त्वतिरिक्तः । तेन च प्रतिबिम्बानन्दापेक्षया मुख्यत्वं बिम्बानन्दस्यास्त्येवेति सातिशय एव प्रह्लादस्य कृष्णस्मरणजन्यानन्दः, यदि कृष्णस्साकार ईश्वरः ।

एवमीश्वरस्मरणाद्भक्तस्य निरतिशयानन्दलाभेन प्रियतमत्वमीश्वरस्य यथा तथा भक्तस्मरणादपीश्वरस्य निरतिशयानन्दलाभेन प्रियतमत्वं भक्तस्येत्येतदप्युपहासास्पदम् । परिपूर्णानन्दस्येश्वरस्य भक्तस्मरणादधिकानन्दलाभ इति, तदभावे आनन्दनाश इति च कल्पनस्याप्रमाणत्वादयुक्तत्वाच्च, ईश्वरेणाप्यानन्दार्थं भक्तस्य स्मरणीयत्वापत्तेः, सर्वसेव्यस्यापीश्वरस्य स्वभक्तसेवकत्वदोषापत्तेः ।

आर्तो जिज्ञासुरर्थार्थी ज्ञानी चेति चतुर्विधान् सुकृतिन उपक्रम्य, तत्र ज्ञानी विशिष्यत इत्युक्त्या इतरेषु तेष्विति वक्तव्ये इतरयोस्त्विति वचनमयुक्तम् । नचार्तस्यार्थार्थिनश्चैकाधिकारित्वादेकत्वमिति वाच्यं, अनार्तस्यार्थार्थित्वादर्थानर्थिन आर्तत्वाच्च । नच व्याधिनिवृत्तिरूपं धनादिरूपं वा अर्थं प्रयोजनमर्थयते आर्तोऽर्थार्थी वेत्यस्त्युभयत्रार्थार्थित्वरूपमेकत्वमिति वाच्यं, तथासति ज्ञानार्थित्वरूपमर्थार्थित्वं जिज्ञासावप्यस्तीति, आर्तजिज्ञास्वर्थार्थिनां त्रयाणामप्येकत्वापत्तेः । ज्ञानस्यापि प्रयोजनरूपार्थत्वाविशेषात् । आर्तो जिज्ञासुरर्थार्थीति त्रयाणां पृथगुपदेशानर्थक्याच्च । जिज्ञासुरर्थार्थी ज्ञानीति त्रिविधास्सुकृतिनो मां भजन्त इति अर्थार्थी ज्ञानीति द्विविधा इति वा वक्तव्यत्वापत्तेः । तस्मादितरयोस्त्विति वचनमयुक्तमेव ॥१७॥

उदारा इति । ननु सर्वसमस्य वासुदेवस्य कुतो ज्ञान्येव प्रियः, इतरे त्रयो न प्रिया इति शङ्कायामाह—न हीति । आर्तादयस्त्रयो वासुदेवस्य प्रिया न हीति न, किं तर्हि ? किंतु सर्वशब्दः पूर्वोक्तत्रित्वपर इत्याह—त्रयोऽपीति । उदारशब्दस्य फलितार्थमाह—प्रिया एवेति । यथा राजभक्तो राज्ञः प्रियस्तद्वदिति भावः । तत्र ज्ञानिनोऽत्यर्थं प्रियत्वमित्यर्थः । कस्माद्धेतोरित्यपेक्षायामाह—भगवानिति शेषः । आत्मैवाहमेवेत्यर्थः । एवकारार्थमाह—नान्य इति । पञ्चम्यास्तसिः मत्त इति ।

ननु 'विद्याविनयसम्पन्ने ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डितास्समदर्शिनः' इति (भग- ५ ५८) त्वदुक्तरीत्या तव सर्वसमस्य सर्वमप्यात्मैवेति कुतो ज्ञान्येवात्मा नेतरे त्रयः, इत्यत आह—आस्थितस्सहीत्यादि । हि सः युक्तात्मा सन् मामेवानुत्तमां गतिमास्थितः- आस्थित

**आरोढुं प्रवृत्तः स ज्ञानी, हि यस्मात् 'अहमेव स भगवान् वासुदेवः नान्योऽस्मि' इत्येवं युक्तात्मा समाहितचित्तस्सन्मामेव परं ब्रह्म गन्तव्यं अनुत्तमां गतिं गन्तुं प्रवृत्त इत्यर्थः॥१८॥**

आरोढुं प्रवृत्त इत्यस्य फलितार्थमाह—**गन्तुं प्रवृत्त इति** । युक्तस्समाहित आत्मा मनो यस्य स युक्तात्मा । अस्यैव चित्तसमाधानस्याकारमाह—**अहमेवेत्यादि** । स भगवान् वासुदेवोऽहमेव । अहं वासुदेवादन्यो नास्मि न भवामि । अहं ब्रह्मास्मीति महावाक्यार्थजन्यं ज्ञानमिदमिति भाव । गम्यते प्राप्यत इति गतिः, न विद्यते उत्तमा यस्यास्सा अनुत्तमा सर्वोत्तमेत्यर्थः । परब्रह्मण आत्मन एव परमप्राप्यत्वादनुत्तमगतित्वमिति भाव· । 'ब्रह्मविदाप्नोति पर'मिति (तै· आ· ९·१) 'ब्रह्मविद्ब्रह्मैव भव'तीति च श्रुतेरिति भावः ।

अयमाशयः—यद्यप्यार्तादयस्सर्वेऽप्यात्मभूता एव, तथापि योऽहं ब्रह्मास्मीति वेद स एवाहं 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुते । यस्तु नाहं ब्रह्मेति वेद स नैवाहं, ब्रह्मविद आत्मत्वादब्रह्मविदोऽनात्मत्वाच्च । ब्रह्मविद्धि कूटस्थमात्मानं मन्यते, स च कूटस्थो ब्रह्मैव चिन्मात्रत्वात् । अब्रह्मवित्तु अकूटस्थं कर्तारं भोक्तारं च जीवमात्मानं मन्यते, स चाकूटस्थो न ब्रह्मविकारित्वादकूटस्थस्य ब्रह्मणश्चाविकारित्वात् । तथा च आर्तादिभिरात्मत्वेनाभिमतस्संसारी जीवो नाहमित्यार्तादयो नाहम् । ज्ञानिना कूटस्थश्चिदात्मैवात्मत्वेनाभिमत इति स चिदात्माहमेवेति ज्ञानी त्वहमेव । तस्मादार्तादयस्संसारिणश्चिदाभासा मत्प्रिया एव । ज्ञानी तु चिदात्मा कूटस्थोऽहमेवेति स्थितम् ।

ननु अहमेव स भगवान् वासुदेवो नान्योऽस्मीत्येवासमाहितचित्तो ज्ञानी चिदात्मत्वात्परं ब्रह्म भवत एवेति कथमुच्यते ? परं ब्रह्म गन्तुं प्रवृत्त इति चेदुच्यते—य· परं ब्रह्मात्मानं गत· स हि केवलानुभवानन्दरूपेणैवावतिष्ठते, न त्वहं ब्रह्मास्मीत्यनुसन्धत्ते- सर्वोपाधिलयेन तादृशानुसन्धानहेतोश्चित्तोपाधेरभावात् । तस्माद्यो ब्रह्मात्मनाऽवस्थास्यति स युक्तात्मा भवतीत्यभिप्रायाद्गन्तुं प्रवृत्त इत्युक्तम् ।

न च चिदात्मनो ज्ञानिन कथं गन्तुं प्रवृत्तिरिति वाच्यं, चिदात्मापि मायया बुद्ध्यादितादात्म्यं प्रतिपद्य संसारी भूत्वा शनैस्तत्तादात्म्यं विहाय कूटस्थात्मस्वरूपानुसन्धानेन स्वचिदात्मत्वं पुन प्राप्तुं प्रवृत्त इव प्रतिभाति । सर्वस्य बन्धमुक्त्यादिव्यवहारस्य मायामयत्वाद्वस्तुनस्तदसिद्धेरस्माकमलङ्कार एवेति ।

ननु त्रिगुणात्मिका देवेन विष्णुना क्रीडार्थं निर्मिता प्रकृतिर्माया । अस्या मायाशब्दवाच्यत्वमासुरराक्षसास्त्रादीनामिव विचित्रकार्यकरत्वेन । यथा च- 'ततो भगवता तस्य रक्षार्थं चक्रमुत्तमम् । आजगाम समाज्ञप्तं ज्वालामालि सुदर्शनम् ॥ तेन मायासहस्रं तच्छम्बरस्याशुगामिना । बालस्य रक्षता देहमेकैकश्येनसूदित'मित्यादौ । अतो मायाशब्दो न मिथ्यार्थवाची । इन्द्रजालिकादिष्वपि केनचिन्मन्त्रौषधादिना मिथ्यार्थविषयाया पारमार्थिक्या एव बुद्धेरुत्पादकत्वेन मायावीति प्रयोगः । तथा मन्त्रौषधादिरेव च तत्र माया । सर्वप्रयोगेष्वनुगतस्यैकस्यैव शब्दार्थत्वात् । तत्र मिथ्यार्थेषु मायाशब्दप्रयोगो मायाकार्यबुद्धिविषयत्वेनौपचारिक. । मञ्चाः क्रोशन्तीतिवत् । अत· सत्यैव माया 'मायां तु

प्रकृतिं विद्यान्मायिनं तु महेश्वर'मिति श्रुतेः । 'त्वं हि लोकगतिर्देव न त्वां केचित्प्रजानते । ऋते मायां विशालाक्षीं तव पूर्वपरिग्रहाम् ॥ योगनिद्रा महामाया' इत्यादिप्रयोगाच्च । प्रकृतितत्त्वाभिमानिदेवता वा माया । उभयथापि सत्यैव माया, न मिथ्येति कृत्वा कथं बन्धमुक्त्यादिव्यवहारस्य मिथ्यात्वं, तद्धेतुमायाया वेति रामानुजीयपूर्वपक्षः ।

अत्रोच्यते—एषा गुणमयी पारमार्थिकी भगवन्मायैवेति मायायाः पारमार्थिकत्वं सत्यत्वं ब्रूते स्म रामानुजः । किमिदं मायानिष्ठं सत्यत्वमविनाशित्वरूपम् ? यद्वा अर्थक्रियाकारिविचित्रकार्यजनकत्वरूपम् ?

नाद्यः- प्रकृतिपुरुषयोः परमात्मनि लयस्य त्वयैवोपन्यस्तत्वात् । 'तस्मान्न विज्ञानमृतेऽस्ति किञ्चित्क्वचित्कदाचिद्द्विज वस्तुजातम्, सद्भाव एवं भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्', 'अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । तत्तु नाशि न सन्देहो नाशि द्रव्योपपादितम् ॥ यत्तु कालान्तरेणापि नान्यसंज्ञामुपैति वै । परिणामादिसम्भूतां तद्वस्तु नृप तच्च कि'मिति पराशरेणोक्तमिति त्वयैवोदाहृतत्वान्नासत इति श्लोकव्याख्यानावसरे नाशिद्रव्योपपादितस्य नाशित्वेन नाशिनो जगत उपादानस्य प्रकृतेरपि नाशवत्त्वेन भाव्यत्वात्प्रकृतेरसत्यत्वे तदुपपादितस्य जगतोऽपि सत्यत्वप्रसङ्गात् । ज्ञानं यथा सत्यमसत्यमन्यदित्यात्मनो ज्ञानाकारस्यैकस्यैव सत्यत्वमन्यस्य प्रकृतित्वादेरज्ञानस्य चासत्यत्वं स्फुटमुक्तं हि पराशरेण । तस्मान्नास्ति मायाया अविनाशित्वरूपं सत्यत्वं त्वन्मतेनापि ।

न द्वितीयः- अर्थक्रियाकारिकार्यजनकत्वस्य सत्यत्वे निद्राया अपि सत्यत्वप्रसङ्गात् । सा हि स्वाप्नप्रपञ्चं सृजति माया यथा जाग्रत्प्रपञ्चं, रज्जुसर्पभ्रमजनकाविद्यापि सत्या स्यादर्थक्रियाकारिकार्यजनकत्वात् । न च रज्जुसर्पादिर्नार्थक्रियाकारीति वाच्यं, भ्रमकम्पादिकारित्वात् । भवतु वा प्रातिभासिकरजतस्य व्यावहारिकरजतवत्कटकाद्यर्थक्रियाकारित्वाभावः, न तावता व्यावहारिकरजतस्य पारमार्थिकसत्यत्वम् । परमार्थतो रजतस्यैवाभावात् । न हि सुषुप्तात्मनि रजतादिप्रपञ्चः प्रतिभाति । तस्मादर्थक्रियाकारिविचित्रकार्यजनकत्वमात्रेण न मायायाः पारमार्थिकत्वं- परमार्थतो मायाया अभावात् । न हि विनाशि वस्तु परमार्थतोऽवतिष्ठते- परमार्थतोऽवस्थानविनाशयोर्विरुद्धत्वात् । यच्च विनाशि वस्तुतस्तु तन्मिथ्यैव- यथा घटो यथा वा रज्जुसर्पः । तस्माद्विनाशित्वान्मायाऽपि मिथ्यैव । अविनाशित्वमेव सत्यत्वप्रयोजकं- नार्थक्रियाकारित्वादिकमिति सिद्धान्तात् ।

अथ यदीश्वरस्याविनाभूता शक्तिर्माया सत्यैवेश्वरवदित्युच्यते, तच्चासत्—'जहात्येनां भुक्तभोगामजोऽन्यः' इतीश्वरेण प्रकृतेः त्यक्तत्वश्रवणात् । न ह्यविनाभूता त्यक्तुं शक्यते, नापि सत्येनेश्वरेण त्यक्ता माया सत्या भवितुमर्हति- मायायाः सत्यत्वे च 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' (भग- ७-१४) इति मायायास्तर्तव्यत्ववचनं च न सङ्गच्छते । न च सत्यस्यापि नदीजलस्य बाहुभ्यां तरणवत्सत्याया अपि मायायाः प्रपदनेन तरणमुपपद्यत इति वाच्यं, नाशरहितत्वेन मायायाः पारायोगात् । पारमाप्तैरेव तरणत्वात् । पारस्य च नाशरूपत्वात् । नहि पारे नदीस्वरूपमस्ति । नदीस्वरूपाभावस्यैव पारता-

यद्वन्मायाया अपि पारो नाश एव। नच संसारमण्डले मायास्ति, विष्णुपदे तु नास्ति, अतो मायातरणमुपपद्यत इति वाच्यं, सत्याया विष्णुपदे सत्त्वायोगात्। 'नाऽसतो विद्यते भावो नाऽभावो विद्यते सतः' (भग- २-१६) इति ह्युक्तं भगवता। तथा विष्णुपदे अविद्यमानाया मायायास्सत्त्वं चायुक्तम्। अत एव माया मिथ्येत्युक्तमस्माभिः। या हि सर्वत्र नास्ति सा मिथ्या यथा घटः। व्यतिरेकेण यथा आत्मा। आत्मा हि सर्वत्रास्ति। अत एव तस्य न कदाचिदप्यभावः। अत एव स सत्यः। उक्तं हि पराशरेणापि- 'ज्ञानं सत्यमसत्यमन्य'दिति। तस्मान्माया विनाशित्वान्मिथ्यैव न सत्या।

विचित्रकार्यकरत्वेनास्या मायाशब्दवाच्यत्वमित्येतदस्माकमिष्टमेव- ऐन्द्रजालिकशक्तेरपि विचित्रकार्यकारिण्या मायाशब्दवाच्यत्वात्। सर्वस्यापि प्रपञ्चस्य मायामयत्वे राक्षसास्त्रादीनां मायामयत्वमस्माकमिष्टमेव। शम्बरस्य मायासहस्रमित्यत्रापि मायाशब्दो मिथ्यार्थ पर एव चक्रनाश्यत्वलक्षणमिथ्यात्वस्य सत्त्वात्। किंचासुरकल्पिता मायाः प्रातिभासिक्य एव रज्जुसर्पादिवन्न पुनर्व्यावहारिक्योपि, ऐन्द्रजालिकादयश्च प्रातिभासिक्य एव।

यदुक्तमैन्द्रजालिकमणिमन्त्रादिकल्पितार्थानां मिथ्यात्वेऽपि मणिमन्त्रादिरूपा माया सत्यैवेति तदपहास्यास्पदम्। सर्वत्र शक्तेरेव मायापदवाच्यत्वादीश्वरशक्तिर्मायेति त्वयाऽप्यभ्युपगम्यत्वात्, मणिमन्त्रादिगतविचित्रशक्तेश्च मायाया विचित्रकार्यानुमेयायास्सत्यत्वस्य दुर्वचत्वात्, मिथ्याकार्यजनकशक्तेरमिथ्यात्वस्यासम्भवात्, शक्तेरसत्यत्वे तत्कार्यस्यापि सत्यत्वापत्तेः, गन्धर्वनगरादिकार्यानुमेयाया मणिमन्त्रादिशक्तेः कार्यकाल एव सत्त्वेन कार्यकालात्प्रागपश्चाच्चाभावेन रज्जुसर्पस्येव प्रातिभासिकत्वसिद्धेः। प्रातिभासिकत्वस्यैव मिथ्यात्वात्। इन्द्रजालशक्तिमत्सु मणिमन्त्रादिषु मायाशब्दवाच्यत्वे सति ऐन्द्रजालिकेपि तद्वाच्यत्वप्रसङ्गात्, लोके तथा प्रसिद्ध्यभावात्, न ह्यैन्द्रजालिकं तन्मण्यादिकं वा लोको मायेति प्रपद्यते, किं तर्हीन्द्रजालमेव। मण्यादिकं तु मायासाधनमिति प्रत्येति। पिञ्छाभ्रमणमात्रेण ऐन्द्रजालिको गगने गन्धर्वनगरं निर्मातीत्युक्तौ पिञ्छभ्रमणपदस्य मायेत्यर्थ इति नहि कोपि विवेकी ब्रूते, किं तर्हि मायामयत्वाद्गन्धर्वनगरमेव मायेति वक्ति। पिञ्छाभ्रमणं तु तादृशमायाजननसाधनमिति। तथा च मणिमन्त्रादयो मायावत्पदार्था एव, नतु माया। मणिमन्त्रादिशक्तिस्तु माया, सा तु मणिमन्त्रादेस्सकाशात्पृथक्सत्त्वासत्त्वाभ्यां दुर्निरूपेति मिथ्यैव।

यच्चार्थस्य मिथ्यात्वेपि तद्विषयबुद्धिः पारमार्थिकीति, तदसत्—बुद्धेः पारमार्थिकत्वव्यावहारिकत्वप्रातिभासिकत्वानां विषयाधीनत्वात्। ब्रह्मेति बुद्धिः पारमार्थिकी विषयस्य ब्रह्मणः पारमार्थिकत्वात्। घट इति बुद्धिर्व्यावहारिकी विषयस्य घटस्य व्यावहारिकत्वात्। रज्जौ सर्प इति बुद्धिः प्रातिभासिकी— विषयस्य रज्जुसर्पस्य प्रातिभासिकत्वादिति सिद्धान्तात्। विषयस्यैव मिथ्यात्वे तद्विषयकविज्ञानस्य सत्यत्वं ह्ययुक्तम्। अन्यथा भ्रमप्रमाज्ञानयोरैक्यप्रसङ्गात्। नच भ्रान्तिज्ञानमपि स्वरूपतः सत्यमिति वाच्यं, रज्ज्वावयं सर्प इति ज्ञाने विषयस्य सर्पस्यासत्यत्वे अयं सर्प इति ज्ञानस्य कथं सत्यत्वम्? यत्तु विषयातिरिक्तं शुद्धं ज्ञानस्वरूपं तदात्मैव तस्य चोत्पादकं किमपि नास्ति- अजत्वादविक्रियत्वाच्चात्मनः; अतो न

ज्ञानी पुनरपि स्तूयते—

बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।
वासुदेवस्सर्वमिति स महात्मा सुदुर्लभः ॥१९॥

बहूनामिति । बहूनां जन्मनां ज्ञानार्थसंस्काराश्रयाणामन्ते समाप्तौ ज्ञानवान् प्राप्तपरि-

---

मिथ्यार्थविषयस्य ज्ञानस्य पारमार्थिकत्वं तदभाववति तत्प्रकारकानुभवोऽयथार्थानुभव इति न्यायशास्त्राच, विषयसत्यत्वासत्यत्वयोरेव ज्ञानसत्यत्वासत्यत्वप्रयोजकत्वस्य लोकतस्सिद्धत्वाच । एवं मिथ्यार्थविषयज्ञान स्यापि सत्यत्वे अग्निना सिञ्चेदिति वाक्यजन्यज्ञानस्यापि सत्यत्वापत्तेरप्रामाण्यमेव स्यात्सर्वस्य ।

तस्मादनिर्वचनीयेश्वरशक्तिरेव माया- इन्द्रजालशक्तिवदेवमनिर्वचनीयत्वादेव मायाकार्ये जगत्यपि मायात्वव्यवहारः (अनिर्वचनीयत्वं मिथ्यात्वस्य लक्षणम्) ।

न चैवं 'ऋते मायां विशालाक्षी'मित्यादिप्रयोगानिर्वाह इति वाच्यं, मायावत्यां विशालाक्ष्यां मायाशब्दप्रयोगात् । अन्यथा लक्ष्म्याद्याकारपरिणतमायावच्छिन्नचैतन्ये कथं मायाशब्दप्रयोगस्स्यात् ? न हि लक्ष्म्यादयश्चैतन्यशून्यजडप्रकृतिरूपाः । न च प्रकृतिरपि चेतनैवेति वाच्यं, 'ईक्षतेर्नाशब्द'(ब्र- सू- १-१-५)मिति प्रकृतेरचेतनत्वस्य शारीरकसूत्रे सिद्धान्तितत्वात् । लक्ष्मीपार्वत्यादीनां ब्रह्मविष्ण्वादीनां च शरीरगत एव स्त्रीत्वपुंस्त्वभेदो न त्वात्मगत इति कथं लक्ष्म्यादीनां स्त्रीणां प्रकृतित्वं, ब्रह्मादीनां पुंसामीश्वरत्वं च ? न कथमपि । जगन्नियमनादिकं तु विष्णोरिव लक्ष्म्या अपि सङ्कुच्छन्न एवात्मत्वात्, अतो विष्णुरिव लक्ष्मीरपीश्वर एव, न माया । एवं ईश्वरत्वेन मायावत्त्वादेव लक्ष्म्यां मायाशब्दप्रयोगः । यदा तु लक्ष्म्या ईश्वरशक्तित्वेन परिग्रहस्तदा लक्ष्मीर्मायैव, न त्वीश्वरः- विवक्षाधीनत्वाच्छब्दप्रवृत्तेः ।

कथमन्यथा 'तव पूर्वपरिग्रहा'मित्युच्येत ? पूर्वपरिग्रहत्वं लक्ष्म्या विष्णोरनपायिन्याः परिग्रहात्मा विष्णोर्मायावित्वासिद्धेः । नच प्रकृतिर्देहाद्याकारपरिणता, माया तु तदभिमानिदेवता लक्ष्मी रेति वाच्यं, देहाद्याकारपरिणतप्रकृतेरेव मायात्वात्, अग्न्यादीनां वागाद्यभिमानिदेवतात्वात्, विराट्पुरुषस्यैव कृत्स्नप्रपञ्चाभिमानिदेवतात्वात्, लक्ष्म्या एव विराट्पुरुषत्वे तल्लाभेऽपि मायात्वालाभात् । सति तु मायात्वे लक्ष्म्या अपि मिथ्यात्वापत्तेः । न हि निर्विशेषचैतन्यरूपा लक्ष्मीर्माया भवितुमर्हति, किं तु मायाविन्येव जगज्जननादिसामर्थ्यरूपमायाया लक्ष्म्यामपि सत्त्वात् ।

तस्माल्लक्ष्म्यादशक्तिरेव माया, न तु लक्ष्मीः । सा च शक्तिः 'निस्तत्त्वा कार्यगम्याऽस्य शक्तिर्मायाग्निशक्तिव'दिति पञ्चदश्युक्तरीत्या निस्तत्त्वा मिथ्यैव । तदेवं मायामयत्वाद्बन्धमुक्त्यादिव्यवहारस्य मिथ्यात्वं सुस्थितम् ॥१८॥

बहूनामिति । पुरुषः बहूनां जन्मनामन्ते वासुदेवस्सर्वमिति ज्ञानवान् सन् मां प्रपद्यते । यद्वा पुरुषः बहूनां जन्मनामन्ते ज्ञानवान् सन् वासुदेवस्सर्वमिति मां प्रपद्यते । अथ वा बहूनां जन्मनामन्ते ज्ञानवान् पुरुषः वासुदेवस्सर्वमिति मां प्रपद्यते । स महात्मा सुदुर्लभः ।

पशुपक्ष्यादिबहुजन्मान्त इति भ्रान्तिवारणायाह—ज्ञानार्थसंस्काराश्रयाणामिति । आत्म-

पाकज्ञानः मां वासुदेवं प्रत्यगात्मानं प्रत्यक्षतः प्रपद्यते । कथम्? वासुदेवस्सर्वमिति । य एवं

साक्षात्कारजनकयोगादिसुकृतजन्यसंस्काराश्रयाणामित्यर्थः । अनेकेषु सहस्रेषु मनुष्यजन्मसु प्राग्योगी कर्मी वा भूत्वा वेदान्तविचारं वा कृत्वा ज्ञानार्थसंस्कारमुपचित्येदानीं जन्मनि तत्संस्कारवशाद्वेदान्तविचारे प्रवृत्त्य ज्ञानं प्राप्तवानित्यर्थ । किं तद्ज्ञानमत आह—परिपाकेति । फलभूतमात्मसाक्षात्कारात्मकं ज्ञानं प्राप्त इत्यर्थ । आत्मैवेदं सर्वमित्यादिकां ज्ञानस्य परां काष्ठां प्राप्त इति वा । प्रपद्यते निरन्तरं भजते साक्षात्करोतीति वा ।

कथं प्रपद्यत इत्याक्षिपति—कथमिति । कथं ज्ञानवानिति वाऽऽक्षिपति—कथमिति । सर्वस्य वासुदेवत्वे स्वस्यापि वासुदेवत्वं सिद्धमिति भावः । यद्वा सर्वमप्यहमेव ममैव वासुदेवत्वात्सर्वस्य च वासुदेवमयत्वादिति भावः । वसति सर्वभूतेष्विति वासुः, दीव्यति स्वयं प्रकाशत इति देवः, वासुश्चासौ देवो वासुदेव आत्मा- आत्मन एव सर्वान्तरत्वात् स्वयंप्रभत्वाच्च । दीपादिप्रातिलोम्येनाञ्चति भासत इति प्रत्यक्, दीपादयो हि स्वात्मानमन्यांश्च परस्मै भासयन्ति । आत्मा तु स्वात्मानमन्यांश्च स्वस्मै भासयतीति दीपादिप्रातिलोम्यादात्मा प्रत्यक्छब्दवाच्य. । यद्वा प्रति सर्वमञ्चति गच्छति व्याप्नोति जानातीति वा प्रत्यक्, सर्वव्यापी सर्वसाक्षी चेत्यर्थ । अतति सर्वं व्याप्नोतीत्यात्मा, उभयोः कर्मधारयः । प्रत्यगात्मा अहंशब्दलक्ष्यार्थः कूटस्थ ; तच्छब्दलक्ष्यार्थस्तु परमात्मा; उभयोश्च चिन्मात्रत्वादेकत्वं 'तत्त्वमस्यहं ब्रह्मास्मी'त्यादिश्रुतिसिद्धम् । अतएव भाष्ये कचिद्वासुदेवं परमात्मानं कचित्प्रत्यगात्मानं च प्रतिपादयति भाष्यकार· । प्रत्यगात्मपरमात्मशब्दयोरेकार्थवाचित्वाभिप्रायात् ।

स इति तच्छब्दार्थमाह—य इति । सर्वेषामात्मा सर्वात्मा तं सर्वभूतात्मभूतमित्यर्थ· । नारायणं परमात्मानं वासुदेवमेवमुक्तरीत्या वासुदेवस्सर्वमिति विषयेत्यर्थः । यः प्रपद्यते स इत्यर्थ. ।

महात्मा समाभ्यधिकरहित·, समाभ्यधिकराहित्यं हि महत्त्वं; तच्चात्मन· स्वतस्सिद्धमेव । आत्मान्यस्य सर्वस्य मिथ्यात्वेन तस्य समाभ्यधिकवस्तुरहितत्वात् । आत्मान्यं वस्तु तु जगदस्त्येव यावद्व्यवहारम् । व्यवहारेऽपि आत्मनस्समधिकं वा वस्तु नास्ति । आत्मन एकस्यैव चेतनत्वादीश्वरत्वाच्च । आत्मान्यस्य जगतोऽचेतनत्वात्परतन्त्रत्वाच्चेति भाव· । अत उक्तं 'न तत्समोऽन्योऽस्त्यभ्यधिको'वेति । 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतेरिति भावः । न च ईश्वरपरा सा श्रुतिर्न ज्ञानिपरेति वाच्यं, ज्ञानिन आत्मत्वादात्मन ईश्वरत्वाच्च सर्वासामपीश्वरपरश्रुतीनां ज्ञानिनि समन्वयलाभात् । यथा अज्ञानिनि जीवे सर्वजीवश्रुतिसमन्वयलाभ. ।

नन्वज्ञस्य जीवत्वमनुभवसिद्धं, प्राज्ञस्येश्वरत्वं तु नानुभवसिद्धं, यस्मिन् कस्मिन्नपि ज्ञानिनि सर्वज्ञत्वसत्यकामत्वादीश्वरधर्माणामनुपलम्भादिति चेत् , उच्यते—सर्वं ब्रह्मेति ज्ञानमेव सर्वज्ञत्वं, न तु सर्वप्रपञ्चद्रष्टृत्वम् । तथा सत्ये आत्मनि काम एव सत्यकामत्वं, न त्वमोघतृष्णत्वम् । तच्च ज्ञानिनि दृश्यत एवेति ।

अथ वा ये सर्वज्ञत्वादयो धर्मा भवद्भिरीश्वरे दृश्यन्ते न ते धर्मा ईश्वरगताः, किं तु मायागता एव- सच्चिदानन्दा एवेश्वरगतधर्माः । ते तु ज्ञानिन्यपि सन्तीति ।

यद्वा विष्ण्वादिशरीरोपाधिके आत्मनि ये सर्वज्ञत्वादिधर्मास्सन्ति ते ज्ञानिशरीरोपाधिकेऽप्यात्मनि सन्त्येव- आत्मन एकत्वात् । नचैवमज्ञानिशरीरोपाधिकेऽप्यात्मनि सन्तीति वाच्यं, इष्टापत्तेः । परं तु अज्ञ आत्मानं न वेत्तीत्यत उक्तम्—ज्ञानिशरीरोपाधिकेति । तथा च एकस्यैवात्मन ईश्वरस्य विष्ण्वादिशरीरप्रदेशेषु सर्वज्ञत्वाद्युपलम्भः । अस्मदादिशरीरदेशेषु तु किञ्चिद्ज्ञत्वाद्युपलम्भः । इयं च निष्प्रदेशे आत्मनि प्रदेशकल्पना मायिक्येव । यथा एकस्मिन्नेव गगने कचित्प्रदेशे बहुजलमेघोपलम्भः, कचिन्निर्जलमेघोपलम्भः स्तद्वत् । अतो न जीवेश्वरभेदावकाशः सर्वज्ञत्वादिधर्मनिमित्तः कल्पयितुं शक्यते आत्मनि पूर्णे एकरूपे ।

वस्तुतस्तु हिरण्यगर्भचतुर्भुजत्रिलोचनषडाननगजाननलक्ष्मीपार्वतीसरस्वतीप्रभृतयः इन्द्रयमवरुणादयः आदित्यचन्द्राग्न्यादयः पितरो वसवस्सिद्धसाध्यादयो मनुष्याः पशुपक्षिसरीसृपकीटादयः व्रीहिवृक्षलतादयः स्थावराश्च सर्वेऽपि प्राणिनः जीवा एव- 'जीवप्राणधारणे' इति धातोः प्राणित्वस्य प्राणधारणस्य जीवधर्मत्वात् । 'अप्राणोह्यमनाश्शुभ्र' इति श्रुत्या ईश्वरस्याप्राणत्वाच्च । न चाप्राणाः पाषाणादय ईश्वर इति वाच्यं, तेषां शुभ्रत्वभारूपत्वाद्यभावात् । हिरण्यगर्भादीनां जीवत्वस्य सूत्रभाष्यादिसिद्धत्वात् । 'हिरण्यगर्भस्समवर्तताग्रे' इति श्रुत्या हिरण्यगर्भस्यैव प्रथमजीवस्योक्तत्वात् । चतुर्भुजादीनां सर्वेषां हिरण्यगर्भसन्ततिगतत्वात् । विराट्पुरुषस्यापि हिरण्यगर्भपुत्रत्वात् । हिरण्यगर्भश्च सत्यलोकस्वामी ब्रह्मा । ईश्वरो हि स्वयमविकारी सन् हिरण्यगर्भादिद्वारेण सृष्ट्यादिकं करोति । अत एव 'धाता यथापूर्वमकल्पय'दिति हिरण्यगर्भस्य स्रष्टृत्वमुपपद्यते ।

एवं चतुर्भुजत्रिलोचनयो रक्षकत्वनाशकत्वे । त्रयोऽपीमे सत्यलोकाधिपतय एवेति केचित् । एकस्यैव सत्यलोकस्य सत्यवैकुण्ठकैलासात्मना भेदादिति । यथैकैव भूः भारतादिखण्डभेदभिन्ना । वैकुण्ठकैलासौ सत्यादर्वाक्तनावित्यन्ये । अयमेव सत्यलोकः सगुणमुक्तिक्षेत्रमिति व्यवह्रियते । इमे ब्रह्मविष्णुरुद्रास्त्रयोऽपि स्वयम्भुव इति केचित् । हिरण्यगर्भ एव स्वयम्भूः विष्णुरुद्रौ तत्पुत्राविति परे । विष्णुः स्वयम्भूः, ब्रह्मा तत्पुत्रो रुद्रस्तु तत्पौत्र इत्यपरे । रुद्रस्स्वयम्भूः, ब्रह्मविष्णू तत्पुत्रावित्यन्ये । स्वयं प्रभवत्वेऽपि मायाया इवैषामुत्पत्तिलक्षणो विकारोऽस्त्येव । स्वयं भवति जायत इति स्वयम्भूरिति व्युत्पत्तेः । मायामयत्वाच्च तद्विमहादीनाम् । ततश्च सर्वथा शरीरेन्द्रियप्राणमनोभृत एते त्रयोऽपि कार्यत्वाज्जीवा एव । एक एव ह्यज ईश्वरः- अशरीरत्वात्तस्य जन्मायोगात् । सशरीराणां च जन्ममरणयोरवर्जनीयत्वाज्जन्ममरणादिविकारशालिनो ये ते जीवास्संसारिण एवेति सिद्धान्तात् । हिरण्यगर्भस्य द्विपरार्धावसायित्वेन नाशश्रवणात् । तस्मादर्वाक्तनानां ब्रह्मदिनप्रलयादिष्वेव नाशसम्भवात् । एवं हिरण्यगर्भस्यैव जन्ममृत्युमत्त्वेन जीवत्वे तत्सृष्टानामिन्द्रादीनां देवानां दक्षादीनां प्रजापतीनां सनकादीनां परमहंसानां नारदादीनामृषीणां पितृसिद्धसाध्यादीनां मनुष्यपशुपक्ष्यादीनां वृक्षादीनां वा

न्ममृत्युग्रस्तानां जीवत्वे का विप्रतिपत्तिः ? न कापीत्यर्थः । एवं रामकृष्णाद्यवताराश्च वैष्णवाश्शरीरित्वेन जन्मजरामरणसुखदुःखादिविकारमत्तत्वाज्जीवा एव । विष्णोरेव शरीरित्वेन लक्ष्मीवियोगसंयोगादिसुखदुःखादिमत्त्वेन च जीवत्वे का पुनस्तदवताराणां जीवत्वे विप्रतिपत्ती रामकृष्णादीनाम् ? तथा च जन्मादिविकारवत्त्वस्य जीवलिङ्गत्वात्सशरीरस्य च जन्मादिविकारवत्त्वात्सशरीरा ब्रह्मविष्ण्वादयस्सर्वेऽपि जीवा एव । अशरीर एक एवात्मा । एवंस्थिते जीवेश्वरविभागे ये सर्वज्ञत्वसर्वशक्तित्वोपलक्षितेश्वरत्वेन स्वान्यस्य वा अभिमताः ब्रह्मविष्णुरुद्रादयस्ते सर्वेऽपि जीवा एवेति कथं जीवस्यासार्वज्ञत्वासर्वशक्तित्वासम्भवः ? कथं वा निर्विकारे ईश्वरे निर्धर्मके सर्वज्ञत्वादिसम्भवः ? तस्मात् किंचिद्ज्ञत्वादिगुणवानिव सर्वज्ञत्वादिगुणवानपि जीव एवेश्वरः । ब्रह्मादिष्वीश्वरत्वव्यवहारस्तु भूपालादिषु नृणामीश्वरत्वव्यवहारवत् । जीवोपि भूपालो यथा प्रजाः पालयन्नीश्वर इत्युच्यते, तथा ब्रह्मादिरपि लोकान् सृजन् अवन् हरंश्चेश्वर इत्युच्यते । नच 'यतो वा इमानि भूतानि जायन्ते' इति श्रुत्या सृष्टिस्थितिलयानामीश्वरधर्मत्वमुक्तमिति वाच्यं, अस्मदादिशरीरसृष्टिस्थितिलयहेतुब्रह्मादिजीवसृष्टिस्थितिलयहेतुत्वेन परमकारणत्वादीश्वरस्य जगत्सृष्ट्यादिव्यवहारः । यथा पुत्रदेहसृष्टिहेतुं पितृदेहं सृष्टवतः पितामहदेहस्य पुत्रदेहस्रष्टृत्वं तद्वत् । यथा वा भूखण्डपालकराजाधिराजस्य भूपालकत्वं तद्वत् । यथा प्रजापतिद्वारा हिरण्यगर्भस्य जगत्स्रष्टृत्वं तथा हिरण्यगर्भद्वारा जगत्स्रष्टृत्वमीश्वरस्येति बोध्यम् । हिरण्यगर्भाद्याकारपरिणतमायाधिष्ठानत्वाद्वा हिरण्यगर्भादिस्तम्बान्तजगदाकारेण विवर्तमानत्वाद्वा । तस्माद्धिरण्यगर्भादिस्तम्बान्तयावच्छरीरिजातस्य सिद्धं जीवत्वम् । तत्र केषांचित्सर्वज्ञत्वं केषां चित् किञ्चिद्ज्ञत्वं च तरतमभावेन सिद्धम् । अतो न ज्ञानिन्यात्मनीश्वरधर्मसर्वज्ञत्वाद्यसम्भवदोषः- सर्वज्ञत्वादीनामीश्वरधर्मत्वाभावात्, जीवधर्मत्वाच्च । बुद्धिधर्मा हि ते । साभासबुद्ध्यश्च जीवास्संसारिणः । नच 'सर्वज्ञस्सर्ववि'दिति श्रुतिविरोधः, सर्वावभासकत्वलक्षणसर्वज्ञत्वस्य तत्र विवक्षितत्वात् ।

अथ वा क्षेत्रशब्दवाच्यं सर्वं जगदात्मैक एव जानातीति स क्षेत्रज्ञस्सर्वज्ञ एव । य एवं क्षेत्रज्ञमात्मानं वेद स ज्ञान्यपि सर्वज्ञ एव । एवं क्षेत्रज्ञात्मवित्त्वादेव हिरण्यगर्भादीनां सर्वज्ञेश्वरत्वम् । न च हिरण्यगर्भादयो जीवा इति पूर्वोक्तविरोधः, कार्यकरणसङ्घाताभिमानिदृष्ट्या तेषां जीवत्वमात्मदृष्ट्या त्वीश्वरत्वमिति सिद्धान्तेनाविरोधात् । यं कार्यकरणसङ्घातं चतुर्मुखत्वचतुर्भुजत्वत्रिलोचनत्वद्विभुजत्वचतुष्पात्त्वादिविशेषवन्तं त्वं ब्रह्मविष्णुरुद्रमनुष्यपश्वादिं मन्यसे, स सर्वोपि जीव एव विकारित्वात् । यस्तु तस्य सर्वस्यान्तर आत्माऽदृश्यस्य द्रष्टा क्षेत्रज्ञ आत्मा ईश्वरः, स चैक एवेति ज्ञानी ईश्वर एवात्मत्वात् । अज्ञास्तु जीवा एवानात्मत्वात् । कार्यकरणसङ्घातं हि ते अनात्मानमात्मानं मन्यन्ते । श्रुतयश्च- हिरण्यगर्भादीन् क्वचिदीश्वरान् ब्रुवन्ति आत्मदृष्ट्या, क्वचिज्जीवान् ब्रुवन्ति सङ्घातदृष्ट्येति न विरोधः ।

नन्वेवं संसारिजीवस्यासंसार्यात्मनश्च भेदे सिद्धे कथमद्वैतसिद्धिरिति चेदुच्यते—यस्सङ्घातमात्मानं मन्यते स सङ्घाताभिमानी जीव एव वेदान्तश्रवणादिना ज्ञातविवेकस्सन् सङ्घातातिरिक्तक्षेत्रज्ञमेवात्मानं मन्यते । स च क्षेत्रज्ञ आत्मैव भवति । तथा च जीवस्यैव वस्तुतः क्षेत्रज्ञत्वादद्वैतसिद्धिः ।

सर्वात्मान मां नारायणं प्रपद्यते स महात्मा, न तत्समोऽन्योस्ति, अधिको वा । अतः सुदुर्लभः, 'मनुष्याणां सहस्रे'ष्विति हि उक्तम् ॥१९॥

आत्मैव सर्वं वासुदेव इत्येवमप्रतिपत्तौ कारणमुच्यते—

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ।
तं तं नियममास्थाय प्रकृत्या नियतास्स्वया ॥२०॥

कामैरिति । कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैर्हृतज्ञानाः अपहृतविवेकविज्ञानाः, प्रपद्यन्ते अन्यदेवताः प्राप्नुवन्ति वासुदेवादात्मनः अन्याः देवताः, तं तं नियमं देवताराधनाय प्रसिद्धो

---

ननु यस्सङ्घातं क्षेत्रज्ञं वा आत्मानं मन्यते स किमात्मा ? उतान्य ? नाद्य - आत्मनस्तथाविध मननासम्भवात् । नान्त्य - अन्यस्य आत्मबुद्ध्ययोगात् क्षेत्रज्ञे । तद्योगे वा तद्बुद्धेर्भ्रान्तिरूपत्वादिति चेन्मैवम्—आत्मैव मायया प्राप्तजीवभावस्सन्नात्मानं मायया सङ्घातं मन्यते, विद्यया त्वात्मानं क्षेत्रज्ञं कूटस्थमिति । यथा पुरुष आत्मानं निद्रया हस्त्यादिरूपं मन्यते, प्रबोधे नतु यथापूर्वं मनुष्यं तद्वत् । नच कथमपि कार्यात्मन माययापि विकारिजीवत्वमिति वाच्यं, मायाया तर्काद्यसम्भवात् । रज्ज्वादेरपि मायया सर्पाद्याकारेण प्रतीयमानत्वात् । वस्तुत आत्मनि जीवत्वासम्भवस्य चास्माकमलङ्कारत्वात् ।

तस्मादेक एवात्मा क्षेत्रज्ञ ईश्वर मायया हिरण्यगर्भादिस्तम्बान्तशरीरिजीवभावमापन्नस्सन् बद्ध इव मुमुक्षुरिव मोक्षाय यतमान इव प्रतिभाति, मुक्त इति च व्यवह्रियते, वस्तुनस्तु नात्मनि बद्धमुक्तादिव्यवहार - 'न निरोधो न चोत्पत्तिर्न बद्धो नच साधक । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थ'तेति शास्त्रात् । य एवमात्मतत्त्ववित्स ज्ञानी सर्वज्ञ ईश्वर आत्मा नारायण एव ।

एवंविधश्च ज्ञानी दुर्लभ एवेत्याह—अत इति । अनेकजन्मसञ्चितज्ञानार्थसंस्कारपरिपाकजन्यत्वादात्मज्ञानस्येत्यर्थ । स ज्ञानी सुतु दुर्लभः प्राप्तुमशक्य । अस्य दुर्लभत्वे पूर्वोक्तगीतावाक्यमेव प्रमाणयति—मनुष्याणामिति । अनेकसहस्रेष्वपि मनुष्येषु तत्त्वविदेकोपि लभ्येत वा नवेति भाव । एवं ज्ञानिदौर्लभ्योक्त्या आत्मतत्त्वज्ञानस्य दुर्लभत्वं सिद्धं, तेन च आत्मनो दुर्लभत्वं सिद्ध्यति । इदं चात्मनो दुर्लभत्वमाश्चर्यवत्पश्यति कश्चिदेनमिति प्रागेवोक्तम् । अहो भगवन्माया ! यत्र सर्वात्मभूतत्वेन सर्वप्रत्यक्षं सर्वसुलभमपि कूटस्थचैतन्यमासीत्परोक्षं सुदुर्लभम् । यतश्चात्मन्यप्यनात्मभ्रमोऽनात्मन्यप्यात्मभ्रमो ब्रह्मादिस्तम्बपर्यन्तानां सर्वेषां जीवानाम् ॥१९॥

कामैरिति । ननु सर्वोपि आत्मैव वासुदेवस्सर्वमिति कुतो न प्रतिपद्यत इत्याशङ्कते—आत्मैवेति । वासुदेव आत्मैव सर्वमित्येवमप्रतिपत्तौ प्रतिपत्त्यभावे, सर्वस्येति शेष । अन्यदेवता इति विशेषणाभिप्रायमत आह—आत्मनो वासुदेवादिति । देवता इत्येतत् मनुष्यपश्वादिदेवतानाम् उपलक्षणं देवत्वादेश्शरीरधर्मत्वात् । अन्यशब्दस्तु स्पष्टार्थ । आत्मनस्सकाशादन्यात्मानो देवा अन्या इति देवतान्यत्वं स्फुटयितुमन्यशब्दप्रयोग इति भाव ।

**यो यो नियमस्तं तं आस्थाय आश्रित्य अधिष्ठाय प्रकृत्या स्वभावेन जन्मान्तरार्जितसंस्कारविशेषेण नियताः नियमिताः, स्वया आत्मीयया ॥२०॥**

यो यो यां यां देवता जन्मान्तरे आराधितवान् तत्संस्कारवशादिह जन्मनि स स तां तां भजन इत्याह—**प्रकृत्या नियाः स्वयेति ।**

अत्र रामानुजः—प्रकृत्या पापवासनया नियता अन्यदेवता विष्णुव्यतिरिक्तेन्द्रादिदेवता आश्रित्यार्चयन्ते इति,

तदसत्—पापवासनया नियतानां देवताभजनायोगात्, देवतानाराधकानां नास्तिकानां पापिनां सत्त्वात्, विष्णुदेवाराधनवदिन्द्ररुद्रादिदेवाराधनस्यापि पुण्यवासनाप्रयुक्तत्वात्, इन्द्रादिदेववद्विष्णुदेवस्यापि देवत्वजातिमत्त्वेन तदाराधकस्य रुद्रादिदेवाराधकेभ्य उत्कर्षस्य दुर्वचत्वात् । यथा विष्णुविग्रहः शुद्धसत्त्वमयस्तथा शिवविग्रहोऽपि शुद्धसत्त्वमय एव । एवं ब्रह्मादिविग्रहा अपि सत्त्वमया एवेति वैष्णवशैवहैरण्यगर्भकौमारशाक्तेयादिप्रवादात्, नृसिंहाद्यवतारेषु विष्णोरपि तमोगुणदर्शनात्, दक्षिणामूर्त्याद्यवतारेषु शिवस्यापि सत्त्वगुणदर्शनात् ।

एकस्यैवेश्वरस्यात्मन मायाविनः मायानिष्ठसत्त्वादिगुणभेदेन स्रष्टृत्वविवक्षायां ब्रह्मेति, पालकत्वविवक्षायां विष्णुरिति, संहर्तृत्वविवक्षायां रुद्र इति च नामभिर्व्यवहारः, न तु ब्रह्मविष्णुरुद्राणां शरीरिणामीश्वरत्वं शरीरित्वेश्वरत्वयोर्विरुद्धत्वादिति सिद्धान्तेन विष्णुदेवस्य सत्त्वमयत्वं, ब्रह्मदेवस्य राजसत्वं, रुद्रदेवस्य तामसत्वं वा कल्पयितुमशक्यं हि- सर्वेषामपि देवानां सात्त्विकत्वान्मनुष्याणां राजसत्वाद्वृक्षादीनां तामसत्वाच्च सत्त्वगुणोद्रेकं विना देवजन्मायोगात् ।

मलिनसत्त्वात्मकाविद्या हि जीवोपाधिश्शुद्धसत्त्वात्मिका तु मायेश्वरोपाधिरिति स्थिते कथं मायोपाधिकयोर्ब्रह्मरुद्रयो राजसतामसत्वे ? कथं वा एकस्येश्वरस्य त्रित्वप्रसक्तिः ? तस्मात् ब्रह्मविष्णुरुद्रास्त्रयोऽपि शरीरिण ईश्वरभूता, किं तर्हि एकस्यैवेश्वरस्य ब्रह्मविष्णुरुद्रनामानि सृष्टिस्थितिसंहारप्रयुक्तानि । ततश्च अन्यदेवतापदेनैव विष्णुदेवोऽपीन्द्ररुद्रब्रह्मादिदेववद्गृह्यते देवत्वात् । तस्य च विष्णुदेवस्यान्यत्वमात्मापेक्षयास्ति । अनात्मत्वाद्देवस्य मनुष्यादिवत् । एवमात्मनोऽन्यान्विष्णुं रुद्रं ब्रह्माणमन्यं वा यो य उपास्ते स सर्वोऽपि तत्कामहृतज्ञान एव- यो निष्कामो मोक्षकामो वा स एक एवात्मानमुपास्ते मपद्यते वा; ये तु चित्तशुद्ध्यर्थं निष्कामा अपि विष्ण्वादीनुपासते ते तु मध्यस्था एव, न त्वज्ञानाः प्रोज्ञा इति बोध्यम् । साकारब्रह्मोपासनत्वात्तस्य ।

न च 'मोक्षमिच्छेज्जनार्दना'दिति स्मरणाद्विष्णूपासनं मोक्षप्रदमिति वाच्यं, तत्र जनार्दनशब्दस्यात्मवाचित्वात् । अथ वा चित्तशुद्धिद्वारा विष्णूपासनं ज्ञानप्रदत्वान्मोक्षप्रदमिति । एवं 'ज्ञानं महेश्वरादिच्छे'दिति महेश्वरोपासनस्यापि ज्ञानप्रदत्वमुक्तमेव ।

किं बहुना ? निष्कामस्सन् यं कमपि देवं सर्वेश्वरत्वेनोपास्ते तेन चित्तशुद्धिर्भवेदेव, न तु विष्णुमेवेत्यादिर्नियमः- निर्गुणब्रह्मणि कल्पितानां सर्वासां व्यक्तीनां सगुणब्रह्मत्वेन व्यपदेशात्- मायया

तेषां च कामिनाम्—

योे यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥२१॥

य इति । यो यः कामी यां यां देवतातनुं श्रद्धया संयुक्तः भक्तश्च सन्नर्चितुं पूज-यितुमिच्छति, तस्य तस्य कामिनः अचलां स्थिरां श्रद्धां तामेव विदधामि स्थिरीकरोमि॥२१॥

---

शरीरेन्द्रियादियुक्तं ब्रह्म हि सगुणब्रह्म । इदं सगुणब्रह्मत्वं पाषाणदार्वादिष्वप्यस्ति । कथमन्यथा श्रीरङ्ग-नायकजगन्नाथस्वाम्यादीनां सगुणब्रह्मत्वम्? परंत्वज्ञाः पाषाणादिकं सगुणब्रह्मेति न जानन्ति, किं तु पाषाणत्वादिरूपेणैव प्रतिपद्यन्ते । अत एव 'वासुदेवस्सर्वमिति, स महात्मा सुदुर्लभ' इत्युक्तम् ।

न च निर्गुणब्रह्मविदेव महात्मेति वाच्यं, निर्गुणब्रह्मविदेव सगुणब्रह्मविच्च । न हि निर्गुणत्व-सगुणत्वयोर्भेदेऽपि ब्रह्मभेदः । निर्गुणमेकमेव ब्रह्म सर्वजगद्रूपेण सगुणं सत्परिणतं माययेति यो वेद स एव हि ब्रह्मवित् । स एव महात्मा ।

तस्मादिन्द्रादिदेववद्विष्णुदेवोऽप्यनात्मैव । अथ वा विष्णुदेववदिन्द्रादिदेवोऽपि सगुणब्रह्मैवेति न रुद्रादिदेवोपासनापेक्षया विष्णुदेवोपासनस्य प्राशस्त्यं, किं तु सर्वदेवभजनापेक्षया आत्मभजनमेव प्रशस्तमिति स्थितम् ॥२०॥

यो य इति । तेषां च कामिनां मध्ये तनुं देवतामित्यर्थः । आत्मनि देवतात्वादिजा-त्यभावात् । शरीर एव तत्सत्त्वात् । अनेन च ये देवतोपासकास्ते अनृतजडदुःखात्मकशरीरोपासका एव, न त्वात्मोपासका इति स्पष्टम् । यो यो भक्तः यां यां तनुं श्रद्धया अर्चितुमिच्छति तस्य तस्य तामेव श्रद्धामहमचलां विदधामि; तामेव तत्तद्देवताविषयामेवेत्यर्थः ।

अत्र रामानुजः—यां यामादित्यादिरूपामन्तर्यामिणो मम तनुमिति । 'य आदित्ये तिष्ठन् यस्यादित्यश्शरीर'मिति श्रुतेरित्याह । तदस्मन्मतरीत्या युक्तमपि त्वमतरीत्या विरुद्धमेव ।

तथाहि- चिदचिद्विशिष्टसकलकल्याणगुणनिलय दिव्यमङ्गलविग्रहो हि विष्णुः शङ्खचक्रादि-दिव्यायुधधरः परमेश्वरस्तव मते, तस्य कथमन्तर्यामित्वम्? कथं वा आदित्यादिशरीरवत्त्वम्? आदि-त्यादिशरीराणि हि तत्तदभिमानिजीवसम्बन्धीनि, तत्तच्छरीरसम्बन्धादेवादित्यादीनां जीवस्य व्यवहारात् । जीवस्य च शारीरकत्वस्य शारीरकसूत्रभाष्यादौ स्थापितत्वात् ।

न चादित्यादिशरीरेषु आदित्यादिजीवास्सन्ति, तेष्वीश्वरोऽस्तीति वाच्यं, अणुपरिमाणेषु निरवयवेषु च जीवेषु दिव्यमङ्गलविग्रहस्येश्वरस्य सत्त्वायोगान्मध्यमपरिमाणस्य चिदचिद्विशिष्टस्य च चिरन्तस्थित्वयोगात् ।

अस्मन्मतरीत्या तु सर्वात्मन ईश्वरस्य सर्वमपि शरीरभूतमेवेति सर्वत्रेश्वरस्यानुलोपपत्तिः । नैवं सर्वस्यापीश्वरशरीरत्वे अशरीरेश्वरश्रुतिविरोध इति वाच्यं, वस्तुतोऽशरीरस्यापीश्वरस्य मायया सशरीरत्वमिति सिद्धान्तात् । न च माययाप्यशरीरस्य कथं सशरीरत्वसम्भव इति वाच्यं, मायायां सर्व-सम्भवात् । असम्भावितसर्वसंभावनस्यैव मायात्वात् ॥२१॥

**यथैव पूर्वं प्रवृत्तः स्वभावतः यो यः यां यां देवतातनुं श्रद्धया अर्चितुमिच्छति—**

**स तया श्रद्धया युक्तस्तस्याराधनमीहते ।**
**लभते च ततः कामान् मयैव विहितान्हितान् ॥२२॥**

स इति । स तया मद्विहितया श्रद्धया युक्तस्सन्, तस्याः देवतातन्वाः राधनं आराधनमीहते चेष्टते लभते च; ततस्तस्या आराधिताया देवतातन्वाः कामान् ईप्सितान् मयैव परमेश्वरेण सर्वज्ञेन कर्मफलविभागज्ञतया विहितान्निर्मितान् हि यस्मात्ते भगवता विहिताः कामाः तस्मात्तानवश्यं लभत इत्यर्थः । 'हिता'निति पदच्छेदे हितत्वं कामानामुपचरितं कल्प्यम्; न हि कामा हिताः कस्यचित् ॥२२॥

---

स इति । मद्विहितया मया स्थिरीकृतयेत्यर्थः । नतु मयोत्पादितयेति स्वभावत एवोत्पन्नत्वात् । देवतातन्वाः देवतारूपायास्तन्वा इत्यर्थ. । देवतायाः कार्यकरणसङ्घाताभिमानीन्द्रादिजीवस्य तनुश्शरीरं तस्या इति वा । चेष्टते करोति तस्यास्सकाशात् राधनमाराधनं पूजामिति यावत् । स्वाभाविकश्रद्धया देवतामर्चितुमिच्छति । मत्स्थिरीकृतश्रद्धया तु देवतामर्चतीति विवेक. । विहितान्निर्मितान्न तु दत्तानित्यर्थः । एतद्देवतोपासकस्य एतत्कामलाभ इति सव्यवस्थं निर्मितानित्यर्थः । एतेनेश्वरकृतां व्यवस्थामनतिक्रम्यैव तत्तद्देवतास्तं तं कामं तस्मै तस्मै सेवकाय दिशन्ति, नतु स्वातन्त्र्येणेति सर्वस्येश्वरपारतन्त्र्यं सूचितम् । स तया श्रद्धया युक्तस्सन् तस्याराधनमीहते मयैव विहितान् तान् कामान् ततो लभते च ।

हिशब्दस्य शेषपूरणेन वाक्यान्तरत्वं दर्शयति—हि यस्मादिति । यस्मात्ते कामा मयैवैतदर्थं विहितास्तस्मादेते तान् कामान् लभन्ते तत्तद्देवताद्वारेणेत्यर्थः । हिशब्दमात्रस्य वाक्यान्तरीकरणमस्वरसमित्यभिप्रेत्याह—हितानिति । हितप्रायानित्यर्थः । कामिभिर्हि तत्त्वेनाभिमेतानिति यावत् । उपचरितमारोपितमित्यर्थः । गौणोऽयम् । कामेषु हितत्वव्यवहारो न मुख्य इति भावः । तत्रोपपत्तिमाह—न हीति । प्रिया एव कामा न तु हिताः संसारबन्धहेतुत्वादिति भावः ।

हि तानिति पदच्छेदेऽपि हिशब्दस्य प्रसिद्ध्यर्थमुक्त्वा एकवाक्यान्वयस्सुकर एव, परं तु ईश्वरो देवतोपासकार्थं कामान्निर्मितवानिति कोऽपि न वेदेति तदर्थस्याप्रसिद्धत्वाद्धिशब्दस्यात्र प्रसिद्ध्यर्थकथनमनुपपन्नमिति भाष्यकारहृदयम् । मयैव विहितानिति पदाभावे तु उपासको देवतायास्सकाशात्कामान् लभत इत्येतावत उक्तौ हिशब्दस्य प्रसिद्ध्यर्थत्वमुपपद्यत एव- तदर्थस्य सर्वविदितत्वात् ।

रामानुजस्तु- तत्तद्देवताराधकस्यापि तत्तत्कर्मानुगुणः तत्तत्फलप्रदोऽहमेवेति व्याचख्यौ; तदपि युक्तमेव—तत्तत्फलप्रददेवताकारपरिणतमायाधिष्ठानस्येश्वरस्य तत्तत्फलप्रदत्वमिति । वस्तुतः फलप्रदत्वं तु विरुद्धमेव निर्धर्मकत्वादात्मन· ॥२२॥

यस्मादन्तवत्साधनव्यापारा अविवेकिनः कामिनश्च ते, अतः—

अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ।
देवान् देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥२३॥

अन्तवदिति । अन्तवद्विनाशि तु फलं तेषां तद्भवत्यल्पमेधसां अल्पप्रज्ञानाम् । देवान् देवयजो देवान् यजन्त इति देवयजः, ते देवान् यान्ति । मद्भक्ता यान्ति मामपि । एवं समानेऽप्यायासे मामेव न प्रपद्यन्ते अनन्तफलाय । अहो ! खलु कष्टतरं वर्तते इत्यनुक्रोशं दर्शयति भगवान् ॥२३॥

किं निमित्तं मामेव न प्रपद्यन्ते इत्युच्यते—

अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥२४॥

अव्यक्तमिति । अव्यक्तमप्रकाशं व्यक्तिमापन्नं प्रकाशं गतमिदानीं मन्यन्ते मां नित्यप्रसिद्धमीश्वरमपि सन्तं अबुद्धयो अविवेकिनः परं भावं परमात्मस्वरूपमजानन्तोऽविवेकिनः ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं मदीयं भावमजानन्तो मन्यन्त इत्यर्थः ॥२४॥

---

अन्तवदिति । अन्तवान् साधनव्यापारः कारकव्यापारो येषां ते अन्तवत्साधनव्यापाराः । अतः कामिनामन्तवत्साधनव्यापारत्वादित्यर्थः । अल्पमेधसां 'नित्यमसिच्प्रजामेधयो'रित्यसिच् । यजन्ते पूजन्ते । यजदेवपूजादिष्विति धातुपाठः । मद्भक्ता आत्मसेविनः, मामात्मानमनादिमनन्तं सच्चिदानन्दमयमीश्वरं परब्रह्म यान्ति; मुच्यन्त इति यावत् । आयासो भजनश्रमः । इदं च देवयजनात्मभजनक्लेशसाम्यप्रतिपादनं स्थूलदृष्ट्यैव । सूक्ष्मदृष्ट्या तु अनेककारणोपसंहारपूर्वकदेवयजनमेवातिक्लेशावहमात्मयजनं तु सुलभमेव ।

'आत्मत्वात्सर्वभूतानां सिद्धत्वादिह सर्वत' इति भद्रादेनोक्तत्वाद्भागवते कारकोपसंहाराभावाच न कश्चिदपि क्लेशः । किंतु विषयप्रवणस्य मनस आत्मन्यवस्थापनमेवेह क्लेशः । तच्चाविरक्तानां दुष्करमपि विरक्तानामभ्यासवशेन सुकरमेव । विरक्तानां सन्न्यासिनामेव चात्मभजनेऽधिकार इति प्रागेवोक्तम् । तथाच देवयजने वाचिककायिकमानसिकक्लेशास्त्रयस्सन्ति, आत्मभजने तु मानसिकक्लेश एक एव । तस्मादात्मभजने देवयजनवन्नातीवायास इति बोध्यम् ।

अनन्तफलाय मोक्षायात्मसायुज्यायेति यावत् । कष्टतरमतिकष्टं वर्तते जनानामिति शेषः । अल्पमेधसां तेषां तु तत्फलमन्तवद्भवति । तुशब्दात्प्राज्ञानां निष्कामानां मद्भक्तानामनन्तं फलं भवतीति सूच्यते ॥२३॥

अव्यक्तमिति । नन्वनन्तफलाय किमिति सर्वे परमात्मानमेव न प्रतिपद्यन्त इत्याक्षेपप्रकृतिं पूर्वोत्तरश्लोकयोर्दर्शयति—किंनिमित्तमिति । केन निमित्तेनेत्यर्थः । अबुद्धयः ममाव्ययमनुत्तमं परं भावमजानन्तस्सन्तः मामव्यक्तं व्यक्तिमापन्नं मन्यन्ते । व्यक्तमिति भावेक्तः । व्यक्तिः प्रकाश इति

यावत् । तन्न विद्यते यस्य तमव्यक्तम्; प्रकाशोऽत्र ज्ञानम्; तथा चाव्यक्तमज्ञातमिति फलितार्थः । व्यक्तिमापन्नं व्यक्तं ज्ञातमिति यावत् । मन्यन्ते सम्भावयन्ति उत्प्रेक्षन्त इति यावत् । नित्यप्रसिद्धं सदाप्यपरोक्षमात्मत्वादिति भावः । परमुत्कृष्टं भावं स्वरूपं सच्चिदानन्दात्मकं रूपमित्यर्थः । व्ययो नाशो विकार इति वा । न विद्यते उत्तमो यस्मात्तमनुत्तमम् ।

मदीयं ममेदं 'वृद्धाच्छ' शाहोश्शिर इतिवच्छेदनिर्देश औपचारिकः । ईश्वरस्यैव सच्चिदानन्दरूपत्वेन सच्चिदानन्दानामीश्वरीयत्वायोगात् । अत एव हि आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति तद्धर्माः । अपृथक्त्वेपि चैतन्यात्पृथगिवावभासन्त इति प्रोक्तमार्यैः । विषयानुभवश्चैतन्यं, नित्यत्वं सच्चेति विवेकः ।

आत्मैवेश्वर इत्यविदित्वा परोक्षमीश्वरं वैकुण्ठादिगतं विष्ण्वादिकं मन्यमानाः परोक्षो विष्णुरीश्वरोऽधुना श्रीकृष्णरूपेण भक्तानुग्रहार्थं दुष्टशिक्षणार्थं चावतीर्ण इति आत्मानात्मविवेकशून्या ईश्वरतत्त्वमविद्वांसो मूढा जना मन्यन्त इति निर्गलितार्थः । एतेनात्मपरमात्मभेदवादिनो द्वैतिनो विशिष्टाद्वैतिनश्च निरस्ताः ।

न च सर्वेश्वरो विष्णुरजहत्स्वभाव एव; वसुदेवसूनुरवतीर्ण इति ममैवं परं भावमजानन्तः प्राकृतराजसूनुसमानमिव पूर्वमनभिव्यक्तमिदानीं कर्मवशाज्जन्मविशेषं प्राप्य व्यक्तिमापन्नं मामबुद्धयो मन्यन्त इति रामानुजभाष्यात्कथमनेन श्लोकेन विशिष्टाद्वैतिनिरास इति वाच्यं, अयुक्तत्वात्तद्भाष्यस्य ।

तथाहि- कृष्णावतारस्येतः पूर्वमनभिव्यक्तत्वमिदानीं व्यक्तत्वं च सर्वविदितमेवेति कुतस्तदज्ञानस्याज्ञविषयत्ववर्णनम् ? न हि त्रेतायुगे कृष्णावतारोऽस्ति; न वा कलियुगे, किं तु द्वापरान्त एव । ततश्च तस्य पूर्वमव्यक्तत्वं मध्ये व्यक्तिमापन्नत्वं च सिद्धमेव, एवं तस्य व्ययोऽपि सिद्ध एव- द्वापरावसाने कृष्णावतारनाशेन कलियुगे तददर्शनात् । अत. कथमव्ययत्वं कृष्णावतारस्य ?

न च लीलावशाद्व्यक्तिमापन्नं मां कर्मवशाद्व्यक्तिमापन्नं यतो मन्यन्ते ततस्ते अबुद्धय इति वाच्यं, मूले कर्मवशादिति पदाभावात्तन्निर्मूलपदकल्पनस्य चाप्रमाणत्वात् । कल्पनेऽपि स्वेष्टासिद्धेः ।

तथाहि- भागवते विदुरमैत्रेयसंवादे भगवद्बादरायणेन कश्चित्प्रश्नोत्तरग्रन्थः कृतः; स तावच्छृणु—

'ब्रह्मन् कथं भगवतश्चिन्मात्रस्याविकारिणः । लीलया वापि युज्येरन् निर्गुणस्य गुणाः क्रियाः ॥
क्रीडायामुद्यमोऽर्भस्य कामश्चिक्रीडिषाऽन्यतः । स्वतस्तृप्तस्य च कथं निवृत्तस्य सदा स्वतः ॥
अस्राक्षीद्भगवान् विश्वं गुणमय्यात्ममायया । तया संस्थापयत्येतद्भूयः प्रत्यपिधास्यति ॥
देशतः कालतो योऽसाववस्थातस्स्वतोऽन्यतः । अविलुप्तावबोधात्मा स युज्येताजया कथम् ॥
भगवानेक एवैष सर्वक्षेत्रेष्ववस्थित । अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुतः ॥
एतस्मिन् मे मनो विद्वन् खिद्यते ज्ञानसङ्कटे । तन्नः पराणुद विभो कश्मलं मानसं महत् ॥
स इत्थं चोदित क्षत्त्रा तत्त्वजिज्ञासुना मुनिः । प्रत्याह भगवच्चित्तः स्मयन्निव गतस्मयः ॥
सेयं भगवतो माया यन्न येन विरुध्यते । ईश्वरस्य विमुक्तस्य कार्पण्यमुत बन्धनम् ॥

यथार्थेन विना पुंसो मृषैवात्मविपर्यय । प्रतीयन उपद्रष्टु स्वशिरश्छेदनादिना ॥
यथा जले चन्द्रमस कम्पादिस्तत्कृतो गुण. । दृश्यते सन्नपि द्रष्टुरात्मनोऽनात्मनो गुण ॥'

इति चिन्मात्रस्याविकारिणो निर्गुणस्येश्वरस्य कथ लीलयापि गुणक्रियासम्बन्ध ? देशकालादिभिरलुप्तज्ञानस्य तस्य कथ प्रकृतिसम्बन्ध ? भगवतस्तस्य कथं दुर्भगत्वकर्मक्लेशौ भवत इति प्रश्ननिष्कर्ष । मायया सर्वमप्युपपद्यते यथा निद्रया जीवस्य स्वशिरश्छेदनादिक, यथा जलचलनवशाच्चन्द्रप्रतिबिम्बस्य चलनादिक तद्वदात्मन्यसन्नप्यनात्मगुणो मायावशात्प्रतिभातीत्युत्तरग्रन्थार्थ —

एव स्थिते निर्विशेषचिन्मात्रेश्वरस्य कथं लील्या वापि जन्मादिसम्बन्ध ? कथ वा कर्मवशात्तस्य जन्म नेत्यपि वक्तु शक्यते ? दैत्यहननार्थं भृगोर्भार्यां हत्वा तेन 'अहमिव त्वमपि भार्यावियोगमनुभ'वेति दत्तशापस्सन् विष्णु तच्छापनिर्वहणार्थं तत्पापक्षयार्थं च श्रीरामरूपेणावतीर्य सीतावियोग मनुबभूव हि । तथा रामावतारे निगूढस्सन् वालिन हत्वा तत्पापफलभूत किरातशरताडनकृत शरीर वियोग कृष्णावतारेऽनुबभूव हि । तथा च जन्मान्तरार्जितसुकृतदुष्कृतप्रयुक्तसुखदु खफलानुभवशालिन कृष्णावतारादे कथमकर्मप्रयुक्तत्वम् ? कथ वा लीलया स्वदु खप्रयोजककर्मकरणम् ? न हि कोऽपि लीलयाऽग्नौ पतति । लीलाप्रयुक्ते वा कर्मप्रयुक्ते वा जन्मजरामरणसुखदु खादिविकारजाते सति कथमीश्वरस्य मीश्वरस्य ? निर्विकारो हीश्वर - 'अजो नित्य' इत्यादिश्रुते । तस्मादीश्वरस्य लील्या कर्मणा वा न कृष्णावतारपरिग्रहस्सम्भवति । नच माययापि न सम्भवतीति वाच्यं, मायाया सर्वसम्भवात् ईश्वरस्य न वस्तुतो जन्मादिविकार , किंतु मायया जन्मादियुक्त इवास्माकं प्रतिभातीति हि तदर्थ ।

तस्मान्नित्यशुद्धबुद्धसिद्धमुक्तस्वभावमात्मानमीश्वरं ये कृष्णात्मनाऽवतीर्णं परोक्षमीश्वरं मन्यन्ते त एवाबुद्धय । यद्यपि मायामय कृष्णावतारं प्राकृतराजसूनुसम ते मन्यन्ते तेऽप्यबुद्धय एव । तथापि तदपेक्षयाप्यबुद्धय पूर्वोक्ता इति बोध्यम् । आत्मानात्मविवेकशून्या पूर्वोक्ता , अनात्मस्वेव तारतम्य ज्ञानशून्या एते इति भेदात् ।

ननु यथा राजसूनव प्राकृता मायामयास्तथा कृष्णोऽपीति कथ कृष्ण एव मायामय इत्युच्यत इति चेत् , उच्यते—यथा व्यावहारिकसर्पस्यापि प्रातिभासिकसर्पवन्मायामयत्वे सत्यपि प्रातिभासिकसर्पमेव मायामय ब्रुवन्ति लोका , तथा लोकदृष्ट्या कृष्णस्यैव मायामयत्वमिति ।

मायाकार्यभूतपरिणामत्वाद्भौतिकत्वेन प्राकृतत्वं राजसूनूना, कृष्णशरीरस्य तु साक्षान्मायाकार्यत्वमेव, नतु भूतपरिणामत्वमित्यभौतिकत्वादप्राकृतत्वेन मायामयत्वेन च व्यपदेश ।

एवं च गगनगन्धर्वनगरादितुल्य कृष्णावतार । साक्षाद्गन्धर्वनगरादितुल्यास्तु प्राकृतराजसूनव इति सिद्धम् । गन्धर्वनगरादीनामिन्द्रजालस्थितानामिव मायाकल्पितस्य कृष्णावतारस्य प्रातिभासिकत्वेन मायामयत्वम् ।

एवमभौतिकत्वेन मायामयत्वादेव कृष्णावतारस्य गोवर्धनोद्धरणादिलोकातिगचेष्टासम्भव । यथा वा निद्राजन्यस्य स्वाप्नगजादे पर्वतोद्धरणादिचेष्टासम्भव ।

इयं च माया ब्रात्मन ईश्वरस्य स्वभाव एवेति बहुवारमुक्तम् । अत एव रामकृष्णादीनामीश्वरावतारत्वव्यवहारः । आत्ममायाकार्यत्वाद्रामकृष्णादिशरीराणाम् ।

यद्यप्येक एवात्मा स्वमायया रामकृष्णादिरूपेणेव मनुष्यपश्वादिरूपेणापि परिणत एवेति रामकृष्णादीनामिव देवमनुष्यपश्वादीनां सर्वेषामपीश्वरावतारत्वमेव सुवचं, तथापि आत्मा साक्षात्स्वमायया रामकृष्णादिरूपेण परिणतः, महदहङ्कारभूतादिद्वारा तु मनुष्यादिरूपेण परिणत इति न मनुष्यादीनामीश्वरावतारत्वव्यवहारः ।

नच साक्षान्मायापरिणामस्य महत्तत्त्वस्येश्वरावतारत्वव्यवहारापत्तिरिति वाच्यं, इष्टापत्तेः । हिरण्यगर्भात्मकत्वाच्च महत्तत्त्वस्य । हिरण्यगर्भो हीश्वरस्य प्रथमावतारः । तस्यैव प्रथमत्वाज्जीवानाम् । तथा रुद्रमयस्याहङ्कारस्यापीश्वरावतारत्वमेव । तस्मादभौतिकत्वात्साक्षान्मायामया ईश्वरावतारा', अन्ये तु भौतिकत्वात्प्राकृता जीवावतारा इति स्थितम् ।

ननु दृश्यत्वजडत्वस्थूलत्वाद्यंशेष्वविशेषादेते देहा ईश्वरावताराः, एते पुनर्जीवनामिति कथं सुज्ञेयमिति चेदुच्यते— लोकातिगप्रभाववशादिति ।

येषु येषु देहेषु लोकातिगं चरित्रं दृश्यते ते ते ईश्वरदेहाः । यथा समुद्रपानहालाहलपानपर्वतोत्क्षेपणदावानलकबलनसेतुनिर्माणस्तम्भोद्गमनमृत्युद्धरणवेदाहरणत्रिलोकाभिव्यापनादिलोकातिगकर्मभिः अगस्त्यशम्भुहनूमत्कृष्णदाशरथिनरसिंहवराहमत्स्यवामनादीनामीश्वरावतारत्वम् । लोकसामान्यचरित्रास्तु जीवदेहाः- यथा मनुष्यादयः ।

अमुमेव भौतिकाभौतिकरूपजीवेश्वरदेहभेदमवलम्ब्य भौतिकदेहस्थमात्मानं जीव इति, अभौतिकदेहस्थमात्मानमीश्वर इति च व्यवहरन्ति । देहभेदाज्जीवांश्चानेकान् वदन्ति । ईश्वरं च देहभेदादेवानेकविधं ब्रुवन्ति स्वस्वमतरीत्या तत्तद्देहावच्छिन्नमीश्वरं पृथक्पृथग्वदन्ति ।

अयमेव जीवेश्वरव्यवहार. श्रुतिभिरप्यनूद्यते स्वमतमद्वैतं सिद्धान्तयितुम् । नहि पूर्वपक्षानुवादं विना सिद्धान्तसुकरः । नैतावता जीवेश्वरविभागः श्रुत्यभिमत इति भ्रमितव्यमनुवादमात्रत्वात्तस्य । श्रुत्यभिमतमतं तु दर्शितमेव- आत्मैक एवेश्वर इति, तद्भिन्नास्सर्वे अनात्मान इति, तत्र कल्पना इति च ।

तथा च य एवमात्मानात्मविवेकशून्याः प्राकृता' ते हि रामकृष्णशङ्करागस्त्यहनूमदादींस्तत्तत्कार्यकरणसङ्घातविशेषात्मकानीश्वरत्वेन प्रतिपद्यन्ते । ये तु विवेकिनः ते हि विध्वस्तनिखिलोपाधिकं निरस्ताशेषविशेषं सच्चिदानन्दं सर्वभूतान्तरस्थमात्मानमेकमेवेश्वरं प्रतिपद्यन्ते । इति सिद्धं ज्ञानिनामद्वैतमज्ञानां च द्वैतम् ।

विशिष्टाद्वैतं तु सङ्कराणामेव- अर्थौतत्वाद्विशिष्ट द्वैतपदस्य । विशिष्टत्वाद्वैतत्वयोरसामानाधिकरण्यायोगाच्च । प्रतिपादितमिदं विस्तरेण मयैव सिद्धान्तबिन्दुव्याख्यानभूते सिद्धान्तसिन्धुनामके ग्रन्थे इत्यत इहोपरम्यते ।

तदेवमज्ञानसिद्धो द्वैतव्यवहारो मुमुक्षुभिर्नादरणीय.- द्वैतस्य भयहेतुत्वात् 'द्वितीयाद्वै भयं भव'-

तदज्ञानं किं निमित्तमित्युच्यते—

नाहं प्रकाशस्सर्वस्य योगमायासमावृतः ।
मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥२५॥

नेति । नाहं प्रकाशः सर्वस्य लोकस्य; केषांचिदेव मद्भक्तानां प्रकाश अहमित्यभिप्रायः । योगमायासमावृतः योगः गुणानां युक्तिर्घटनं सैव माया योगमाया, तया योगमायया समावृतः; संछन्न इत्यर्थः । अत एव मूढो लोकोऽयं नाभिजानाति मामज-

तीति श्रुतेः । अतश्चाभयकामेनाद्वैतमाप्यमेव श्रोतव्यं, तदर्थश्च मन्तव्यो, निदिध्यासितव्यः, ब्रह्मभूतत्वात्तदर्थस्य ॥२४॥

नेति । कुत एवं परमात्मनस्तत्र स्वरूपं सर्वैरविदितमित्याक्षिपति—तदज्ञानं किंनिमित्तमिति । किं निमित्तं यस्य तत्किंनिमित्तं; केन निमित्तेन भवतीत्यर्थः । इत्यस्याक्षेपस्य समाधानमुच्यते—नाहमिति श्लोकेन । अहं सर्वस्य प्रकाशो न भवामि, अयं योगमायासमावृतो मूढो लोकः अजमव्ययं मां नाभिजानाति ।

प्रकाशत इति प्रकाशः प्रत्यक्ष इत्यर्थः । सर्वस्याप्यप्रकाशकत्वे तु ज्ञानमार्गसम्प्रदायस्यैवाप्रवृत्तिस्स्यादत आह—केषांचिदिति । ममात्मनो भक्ता मद्भक्ता आत्मरतास्तत्त्वविद इति यावत् । आत्मतत्त्वविदामेव आत्मनि भक्तिः- यथा स्त्रीसौन्दर्यविदामेव स्त्रियां भक्तिः । सच्चिदानन्दलक्षणात्मस्वरूपवेदनाभावादेव लोकस्य नात्मरतिरिति भावः ।

गुरुशास्त्रादिना आत्मतत्त्वे ज्ञाते सति पुंसामात्मनि रतिर्भवति, तत आत्मसाक्षात्कारो जायते; एवंविधास्तु पुरुषास्सुदुर्लभा इति प्रागेवोक्तमत एवाह—केषांचिदेवेति । अत्यल्पसङ्ख्यानामेवेत्यर्थः । द्वित्रादीनामेवेति भावः ।

ननु केचिदेव त्वां जानन्ति, न तु सर्वे इत्यत्र को हेतुरत आह—योगमायेति । केषांचिदेव शङ्करसनकनारदादीनां योगमाययाऽनावृतानामहं प्रकाशः, न तु सर्वस्य लोकस्य- योगमायासमावृतत्वात्सर्वस्येत्यर्थः ।

काऽसौ योगमायेत्यत आह—योग इति । गुणानां सत्त्वादीनां युक्तिर्योगः । युक्तिशब्दार्थमाह—घटनमिति । सैवेति युक्तिरेवेत्यर्थः । योग एव माया योगमायेति समास इति भावः । 'त्रिभिर्गुणमयैर्भावैरेभिस्सर्वमिदं जगत् । मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥' इति पूर्वमेवोक्तं लोकस्य योगमायासमावरणप्रयुक्तमोहवत्त्वं सत्त्वादिगुणत्रयसंयोगवशाल्लोकस्य बुद्धिर्मोहमापद्यते सुखदुःखनिद्रादिलक्षणं, ततश्चैवं मूढो लोको मां नाभिजानाति; एवं गुणसंयोगमूढबुद्धित्वाल्लोकस्याहमप्रकाश इति भावः ।

(योगमायाशब्दस्यार्थान्तरमाह—अथ या भगवत इति । चित्तस्य समाधानं समाधि ; प्रणिधानं चिन्तनं सङ्कल्प इति यावत् । भगवतस्सङ्कल्प इत्येव पादान्तरम् । तत्कृता माया अविवेकः योगकृता माया योगमायेति मध्यमपदलोपसमासः ।

**मन्ययम् । यया योगमायया समावृतं मां लोको नाभिजानाति नासौ योगमाया मदीया सती मम ईश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति; यथान्यस्यापि मायाविनो माया तद्वत् ॥२५॥**

अथ वा स कृतो यया सा तत्कृता योगहेतुरित्यर्थ । योगहेतुर्माया योगमायेति समासः । स्वतो निर्विशेषस्य ब्रह्मणः मायायोगादेव सङ्कल्पः जगत्सर्गादिविषय. सम्भवति । अस्मिन् पक्षे मायानामाऽज्ञानमेव भावरूपमिति ।)

लोकश्चात्र चिदाभास एव प्रमातृनामकः, न तु साक्षी प्रत्यगात्मा- साक्षिण एवावृतत्वे जगदान्ध्यप्रसङ्गात् । मामनात्मविलक्षणं स्वात्मभूतं परमात्माभिन्नं प्रत्यञ्चं नाभिजानाति ।

ननु यथा लोको योगमायासमावृतज्ञानस्सन् त्वा न वेत्ति, तथा त्वमप्यात्मानं न वेत्सि किमित्यत आह—**ययेति** । मम स्वाधीनमायत्वान्मायायाश्च मदीयत्वान्ममैव मायाप्रेरकत्वान्मत्परतन्त्रा मन्नियाम्या मद्वशवर्तिर्माया मां मोहयितुं न क्षमत इत्यर्थः ।

मदीया सतीति मदीया भूत्वेत्यर्थः । तत्र दृष्टान्तमाह—**यथेति** । अन्यस्येति ऐन्द्रजालिकादेरित्यर्थः । *यथा ऐन्द्रजालिकप्रयुक्ता माया द्रष्टूनेव मोहयति, न त्वैन्द्रजालिकं तद्वदित्यर्थः* । एवं मायाऽमोहितत्वादेवेश्वरस्येश्वरत्वमिति भाव. ।

अत्र लोकस्य योगमायासमावृतत्वं नाम घटादिवज्ज्ञानविषयत्वं चैतन्यवदज्ञानाश्रयत्वं, किं तु योगमायाप्रतिबद्धज्ञानत्वमेव परमेश्वरस्य ज्ञानं माया न प्रतिबध्नातीति वाक्यानुसारात् । व्यतिरेकदृष्टान्तो हि जीवस्येश्वरः ।

इदं च मायया प्रतिबद्धं ज्ञानं जीवस्य न स्वरूपचैतन्यं- तस्यावरणे जगदान्ध्यप्रसङ्गात् । व्यापकस्य तस्य व्याप्यया माययाऽऽवृतत्वासम्भवान्मायाया अपि भासकत्वाच्च चैतन्यस्य । किं तर्हि वृत्तिज्ञानमेव । मायया जीवावच्छेदकान्तःकरणस्य सत्यावृतत्वे वृत्तिज्ञानस्य प्रतिबन्धो भवति । अन्तःकरणे योगमायासञ्छन्ने सति अहं ब्रह्मास्मीति वृत्तिज्ञान नोदेतीत्यर्थः ।

इदं च जीवावच्छेदकान्तःकरणगत मायावृतत्वं जीवेऽध्यस्तमित्यभिप्रेत्योक्तम्—**योगमायासमावृतो लोक इति** । योगमायासमावृतान्तःकरण इत्यर्थः । योगमायाप्रतिबद्धज्ञान इति फलितार्थकथनम् । अन्तःकरणावरणपूर्वकत्वाद्ज्ञानप्रतिबन्धस्य ।

न च ज्ञानमेव मायाऽऽवृतमिति किमिति नोच्यत इति वाच्यं, उत्पन्नस्य ज्ञानस्य मायावरणासम्भवात् । अत एवोक्तं ज्ञानं न प्रतिबध्नातीति न त्वावृणोतीत्युक्तम् ।

न चेश्वरस्यान्तःकरणाभावेन वृत्तिज्ञानस्यैवाभावात्कुत उक्तं परमेश्वरस्य ज्ञानं न प्रतिबध्नाति मायेति अप्रसक्तस्य निषेधो ह्यनर्थक इति वाच्यं, मायावृत्तिज्ञानसत्त्वादीश्वरस्य ।

न चेश्वरीयापि माया कुत ईश्वरज्ञानं न प्रतिबध्नातीति वाच्यं, ईश्वरावच्छेदकमायाया मायावरणाभावेन तदीयज्ञानस्य मायाप्रतिबन्धाभावात् । न हि माया स्वयमेव स्वमावृणुयात्, स्ववृत्तिं वा प्रतिबध्नीयात् ।

यत एवं अतः—

वेदाहं समतीतानि वर्तमानानि चार्जुन।
भविष्याणि च भूतानि मां तु वेद न कश्चन ॥२६॥

वेदेति। अहं तु वेद समतीतानि समतिक्रान्तानि भूतानि, वर्तमानानि चार्जुन!

---

तस्मादीश्वरोपाधेरनावृतत्वादीश्वरस्य ब्रह्माहमस्मीति सदापि ज्ञानमस्ति। जीवोपाधेरावृतत्वाज्जीवस्य ज्ञानं प्रतिबद्धमिति सिद्धम्।

ननु यदि जीवेश्वरयोस्स्वरूपचैतन्यमनावृतं तर्हि तस्य कुतो न भानमिति चेदुक्तमेव जीवान्तःकरणस्यावृतत्वादिति।

ननूक्तमेव परं तु तदयुक्तमन्यस्यावरणमन्यस्याप्रकाश इति चेन्नायं दोषः—चक्षुष आवरणे घटस्याप्रकाशदर्शनात्। न च घटोऽप्यज्ञानावृत एवेति वाच्यं, चक्षुषोऽन्तःकरणस्य वाङ्गुलिनाऽज्ञानेन वावृतत्वे सति घटाप्रकाशसिद्धौ घटावारकज्ञानान्तराभ्युपगमस्य व्यर्थत्वात्। तस्मान्न चैतन्यस्यावरणम्।

ननु यद्येवं जीवेश्वरयोर्मायावृतत्वानावृतत्वाभ्यां भेदस्तर्हि कथमद्वैतसिद्धिरिति चेदुच्यते—यावद्व्यवहारं सत्यप्यौपाधिके भेदे परमार्थतश्चैतन्यैकरसत्वेन तयोरेकत्वाज्जीवेश्वरयोश्चैतन्यात्मना अद्वैतसिद्धिरिति ॥२५॥

वेदेति,'यत इति। यस्मादेवं पूर्वोक्तरीत्या परमेश्वरस्य ज्ञानं माययाऽप्रतिबद्धं; लोकस्य ज्ञानं तु मायया प्रतिबद्धमतः एवं ममामायावृतत्वाल्लोकस्य च मायावृतत्वादित्यर्थः।

हे अर्जुन! अहं समतीतानि वर्तमानानि भविष्याणि च भूतानि वेद, मां तु कश्चन न वेद। अहं त्विति तुशब्दो जीववैलक्षण्यार्थः। प्रत्यगभिन्नः परमात्मा परमेश्वरोऽहंशब्दार्थः।

नच मायावच्छिन्नचैतन्यस्य परमेश्वरस्य अन्तःकरणोपहितचैतन्यस्य प्रत्यगात्मनश्च कथमभेद इति वाच्यं, मायावच्छिन्नेश्वरस्य मायोपहितब्रह्मणश्चैक्यं तावत्सर्वविदितमवच्छिन्नत्वोपहितत्वयोर्भेदेऽपि मायाया अभेदेनेश्वरब्रह्मणोरप्यभेदात्। एवं मायोपहितान्तःकरणोपहितयोः प्रत्यग्ब्रह्मणोरप्यभेद एव— उपाध्योर्भेदेऽप्युपहिताभेदात्। तथा मायावच्छिन्नान्तःकरणोपहितयोरप्यभेद एव- उपाध्योर्भेदेऽप्युपहिताभेदात्। यदेव चैतन्यं मायावच्छिन्नं मायोपहितं च तदेवान्तःकरणोपहितमपीति। नचैवमन्तःकरणावच्छिन्नं चैतन्यमपि तदेवेति जीवोपि प्रत्यगीश्वरब्रह्माभिन्न एवेति वाच्यं, इष्टापत्तेः।

तर्हि लोको मां न वेदाहं सर्वं वेदेति कुतो भेदेन निर्देशो जीवेश्वरयोरिति चेदुच्यते—उपाधिकृताज्ञत्वप्राज्ञत्वसंसारित्वासंसारित्वादिभेदादिति।

न चैवं प्रत्यग्ब्रह्मणोरभेदेप्यस्ति प्रत्यगीश्वरयोर्भेद इति वाच्यं, जीवस्येवेश्वरस्यापि स्वरूपत्वात्प्रत्यगात्मनः। नच ब्रह्मैवेश्वरस्य स्वरूपमिति वाच्यं, प्रतीच एव ब्रह्मत्वात्, ब्रह्मणोऽन्तःकरणप्रदेशोपलभ्यमानत्वमात्रेण प्रत्यक्त्वस्योक्तत्वात्। तस्मात्प्रत्यगभिन्न एव परमेश्वरः।

**भविष्याणि च भूतानि वेदाहं; मां तु वेद न कश्चन मद्भक्तं मच्छरणमेकं मुक्त्वा; मत्तत्त्व-वेदनाभावादेव न मां भजते ॥२६॥**

**भविष्याणीति** । भविष्यन्तीत्यर्थः । **भूतानीति** । प्राणिन इत्यर्थः । वेद जानामि; स्वरूप-चैतन्येन मायावृत्त्या वेति भावः- सृष्टेः प्रागीश्वरस्य मायावृत्तिरूपेण सद्भावश्रवणात् । मां तु कश्चना-प्यविद्वान् प्राणी न वेद न जानाति । अविदुषामीश्वरस्यानात्मत्वेन परोक्षत्वादित्यभिप्रायः ।

न चाविद्वानिति किं, सर्वोपि न वेदैवेति वाच्यं, सर्वस्याप्यनीश्वरत्वे शास्त्रप्रवृत्त्यनुपपत्तेः । नहीश्वरमविद्वांस आचार्यव्यासादयश्शुकादिभ्यश्शिष्येभ्य ईश्वरतत्त्वमुपदिशेयुः । अत एवाह—**मद्भक्तं मच्छरणमेकं मुक्त्वेति** । आत्मभक्त आत्मैकशरणश्च स एक एव मां वेद, तस्यात्मतत्त्वज्ञत्वात्-ह्यात्मतत्त्वज्ञानं विना पुंसामात्मरत्यादिकं भवितुमर्हति- तस्य चात्मज्ञस्येश्वरोऽपरोक्ष एवात्मत्वादीश्वरस्य।

यद्यपि विदुषामिवाविदुषामपीश्वर आत्मैव, तथाप्यविद्वांस ईश्वरमात्मानं न मन्यन्ते, किं त्वन्यमेवेत्यत उक्त विदुषामात्मैवेश्वरो न त्वविदुषामिति । अविद्वांसो ह्यनात्मन्यन्तःकरणादा-वात्मबुद्धिं दधत इति तेषामन्तःकरणादिरेवात्मेत्यन्तःकरणादिसङ्घाता एवाविद्वांसः प्राणिनः । विद्वांस्तु आत्मनीश्वरे एवात्मबुद्धिं धत्त इति विदुष ईश्वर एवात्मेति विद्वानात्मैवेश्वरः । ननु कार्यकरणसङ्घात-रूपः प्राणी । तथा च विद्वानात्मैव- मामात्मानं वेत्ति न त्वन्यः कोऽपि प्राणीति युक्तमुक्तम्—**मां तु वेद न कश्चनेति** ।

सर्वाणि भूतानि अहमेव वेद, मामप्यहमेव वेद, किमपि भूतं मां न वेद, यो विद्वान्मां वेद स विद्वानात्माहमेवेति न ममान्यवेद्यत्वसम्भव इति फलितार्थः ।

'चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं यन्मनसा न मनुते, येनाहुर्मनो मतं, विज्ञातारमरे केन विजानीयात्' इति श्रुतिभ्यः ह्यात्मा केनापि न दृश्यते ।-दृश्यत्वे सति घटस्येवात्मनो जडत्वमिथ्यात्वादिप्रसक्तेः—दृग्रूपेणात्मना कार्यकरणसङ्घाताद्यात्मकसर्वप्रपञ्चस्य भास्यमानत्वेनैव सर्वस्य दृश्यत्वात् । 'तस्य भासा सर्वमिदं विभा'तीति श्रुतेः । प्रपञ्चावभासकादित्यादिज्योतिषामपि तेनैव भास्यमानत्वात्तस्य चानन्य-भास्यत्वादत एव स्वयंज्योतिष्ट्वप्रसिद्धिः, प्रत्यक्त्वप्रसिद्धिश्च । दीपादिप्रातिलोम्येन सर्वं जगदात्माने चात्मने भासयतीति प्रत्यक्पदनिरुक्तेर्दर्शितत्वात् । अनन्यभास्यत्वे सति सर्वावभासकत्वस्य स्वयंज्योति-र्लक्षणत्वात्, स्वयंज्योतिषि दीपादौ दर्शितलक्षणसमन्वयात्, अनन्यभास्यत्वे सत्यात्मने सर्वावभासकत्वस्य प्रत्यक्स्वयंज्योतिर्लक्षणत्वात् । अथ वा अनन्यभास्यत्वे सति सर्वावभासकत्वमित्येव प्रत्यक्स्वयंज्योति-र्लक्षणम् । दीपादीनां च चक्षुरादिभास्यत्वसत्त्वान्न तत्रातिव्याप्तिर्लक्षणस्य । प्रकृतश्लोकेन च मां तु वेद न कश्चनेत्यनेनानन्यभास्यत्वस्य, अहं सर्वं वेदेत्यनेन सर्वावभासकत्वस्य चोक्तत्वात्प्रत्यक्स्वयंज्योतिर्लक्षण-पर एवायं श्लोकः ।

**ननु** अनन्यभास्यत्वे सति सर्वावभासकत्वमित्येतदात्मनो लक्षणमसम्भवि- आत्मनि 'दृश्यते त्वग्र्यया बुद्ध्येति बुद्धिवेद्यत्वश्रवणादिति चेन्नैवम्—विचारात्मिकया बुद्ध्या आत्मतत्त्वमीदृशमिति

ानमात्रं जायते, न त्वात्मसाक्षात्कारः- तस्यानन्याधीनत्वादिति । कथमन्यथा 'विज्ञातारमरे केन वेजानीया'दित्यादिश्रुतिविरोधनिरासः ।

अथ वा जाग्रत्स्वप्नवद्विक्षेपशून्यायां सुषुप्तिवल्लयशून्यायां च शान्तायामेकाग्रायां बुद्धौ पूर्वोक्तलक्षणस्वयम्प्रभ आत्मा स्फुरतीति बुद्धिवेद्यत्वोपचार आत्मन इति बोध्यम् ।

इदं चैतच्छ्लोकोक्तमनन्यावभास्यत्वे सति सर्वावभासकत्वमात्मनो लक्षणं द्वैतादिमतेषु न सिद्ध्यति- भिन्नयोर्जीवेश्वरयोः परस्परवेद्यत्वसत्त्वेनानन्यावभास्यत्वाभावात् ।

न चेश्वरावभास्यत्वस्य जीवे सत्त्वेन जीवे भ्रकृतिलक्षणासम्भवेऽपीश्वरे जीवावभास्यत्वाभावाल्लक्षणसङ्गतिरिति वाच्यं, 'तमेवं विदित्वातिमृत्युमे'तीत्यादिना जीवज्ञेयत्वसत्त्वादीश्वरे । 'यतवामपि कश्चिन्मां वेत्ति तत्त्वत' इतीहैवोक्तत्वात् । मुक्तौ जीवानामीश्वरसाक्षात्कारसत्त्वाच्च ।

अस्मन्मते त्वात्मन एव वेदितृत्वाद्वेद्यत्वाच्च न लक्षणानुपपत्तिः- आत्मावभास्यत्वस्यान्यावभास्यत्वप्रतियोगित्वात् । आत्मा खल्वन्यप्रतियोगी; न ह्यन्यं यः कोऽप्यात्मत्वेन प्रत्येति । न चैकस्यैव कर्तृकर्मत्वं कथमिति वाच्यं, मायया तदुपपत्तेः । न चास्त्यन्तर्यामिण ईश्वरस्य जीवानवभास्यत्वमिति वाच्यं, सुतरामन्तर्यामिण ईश्वरस्य जीवप्रमाऽविषयत्वे अन्तर्यामिण एवासिद्धेः ।

मां तु वेद न कश्चनेत्युक्तं; तस्य फलमाह—मत्तत्त्वेति । आत्मज्ञानं विना आत्मभजनासम्भवादिति भावः ।

नन्वयं श्लोक ईश्वरपर एव- सर्वज्ञेश्वरश्रीकृष्णपरमात्मना अहमिति मामिति चोक्तत्वात् । अत एव अतीतानागतवर्तमानसर्वभूतज्ञानरूपसर्वज्ञत्वोपपत्तिरिति चेन्नेति केनोक्तम् ?

न च प्रत्यगात्मपर इति त्वयोक्तमिति वाच्यं, प्रत्यगात्मा हीश्वरः । न चान्तःकरणावच्छिन्नः प्रत्यगात्मा, मायावच्छिन्नः परमात्मेश्वर इति वाच्यं, कृष्णस्यापि तच्छरीरान्तरान्तःकरणावच्छिन्नत्वेन प्रत्यगात्मत्वात् न हि कृष्णशरीरेऽन्तःकरणाभावः, न वा तदवच्छिन्नप्रत्यगात्माभावः । कथमेवं प्रत्यगात्मनः कृष्णस्यापीश्वरत्वम् ? यदि प्रत्यगात्मा जीवः स्यात् । न च कृष्णशरीरगतान्तःकरणं साक्षान्मायापरिणामत्वान्मायैवेति वाच्यं, महत्तत्त्वात्मकस्याऽस्मदन्तःकरणस्यापि साक्षान्मायापरिणामत्वेन मायात्वापत्तेः । न च शुद्धसत्त्वात्मकत्वात्कृष्णान्तःकरणं मायेति वाच्यं, योगिचित्तस्यापि शुद्धसत्त्वमयत्वेन मायात्वापत्तेः । न च कृष्णस्य सर्वभूतसाक्षात्काररूपसर्वज्ञत्ववत्त्वादीश्वरत्वमिति वाच्यं, वसिष्ठादियोगिनामपि जीवानां तद्वत्त्वेनेश्वरत्वापत्तेः । न च योगाद्यजन्यं सर्वज्ञत्वं कृष्णस्यास्तीति कृष्णस्सर्वज्ञ ईश्वर इति वाच्यं, तत्रापि कृष्णशरीरान्तरान्तःकरणावच्छिन्नप्रत्यगात्मन एव सर्वज्ञत्वेनेश्वरत्वात् । आत्माभासवशादेवान्तःकरणस्यापि ज्ञातृत्वलाभात् । न च यदि कृष्णोऽपि प्रत्यगात्मा अस्मदादिवदसर्वज्ञ एव स्यान्न हि प्रत्यगात्मनामस्माकं सर्वज्ञत्वमनुभवसिद्धम् । न ह्यनुभवसिद्धं प्रत्यगात्मनामसार्वज्ञ्यं शास्त्रशतेनापि निराकर्तुं शक्यते, तस्मात्सर्वज्ञः कृष्ण परमात्मैव, न प्रत्यगात्मेति वाच्यं, यदि प्रत्यगात्मनां किञ्चिद्ज्ञत्वं स्वाभाविकं स्यात्तर्हि सदैकरूपमेव स्यात्तत्किञ्चिद्ज्ञत्वं; न तु तथा दृश्यते ।

बालस्यांकाराद्यक्षरापरिज्ञानात्तस्यैव तरुणस्य वेदवेदाङ्गादिवित्त्वात्तस्यैव वृद्धस्य पुनस्तद्विस्माराच्च । किंच सुषुप्तावपि तत्किञ्चिद्ज्ञत्वं दृश्येत, न तु दृश्यते । तस्मादन्तःकरणधर्म एव किञ्चिद्ज्ञत्वमन्तःकरणं च संकोचविकासादिकं प्राप्नोति । लीने चास्मिन्नन्तःकरणे सुषुप्तौ नास्ति किञ्चिद्ज्ञत्वोपलम्भः । एवमन्तःकरणे सति किञ्चिद्ज्ञत्वसत्त्वं, तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यां किञ्चिद्ज्ञत्वस्यान्तःकरणधर्मत्वं स्थितम् । यथा किञ्चिद्ज्ञत्वं तथा सर्वज्ञत्वमप्यन्तःकरणधर्म एव । योगाभ्यासादिना योग्यन्तःकरणस्य विकसितस्य सर्वज्ञत्वसम्भवाद्वसिष्ठविश्वामित्राद्यन्तःकरणस्य सर्वज्ञत्वसर्वकर्तृत्वादिश्रवणात् ।

अन्तःकरणस्य चायं धर्मः केवलं जडस्य चित्प्रतिबिम्बसम्बन्धकृत एवेति तद्धर्म आरोप्यते चिति सर्वज्ञ आत्मा किञ्चिद्ज्ञ आत्मेति । वस्तुतस्त्वात्मनः अन्तःकरणादिसर्वावभासकत्वात्सर्वज्ञत्वं, सर्वज्ञस्य किञ्चिद्ज्ञस्य वा अन्तःकरणस्य सर्वस्यापि साक्षी खल्वात्मा । तथा च सर्वज्ञान्तःकरणसाक्षित्वात्प्रत्यगात्मनि सर्वज्ञत्वोपचारः, किञ्चिद्ज्ञान्तःकरणसाक्षित्वात्किञ्चिद्ज्ञत्वोपचारश्च ।

नचैवमनन्यावभास्यत्वे सति सर्वावभासकत्वलक्षणस्य सर्वज्ञान्तःकरणेऽतिव्याप्तिरिति वाच्यं, तस्य साक्षिभास्यत्वेनानन्यभास्यत्वाभावात् । सर्वावभासकत्वं स्वतःसर्वावभासकत्वमिति विवक्षितम् । तथा चान्तःकरणस्य चित्प्रतिफलनसामर्थ्यादेव भासकत्वं, नतु स्वत इति न तत्रातिव्याप्तिरिति वा ।

अनेन च सर्वज्ञान्तःकरणेनात्मनस्तादात्म्याध्यासात्सर्वज्ञः परात्मेति, किञ्चिद्ज्ञान्तःकरणेनात्मनस्तादात्म्याध्यासात्किञ्चिद्ज्ञः प्रत्यगात्मेति च भ्रान्ता व्यवहरन्ति । विवेकिनस्तु आत्मान्तःकरणयोस्तादात्म्याध्यासं निरस्य अन्तःकरणादिसर्वसाक्षित्वेन सर्वावभासकत्वात्प्रत्यगात्मानमेव सर्वज्ञमीश्वरं वदन्तीति स्थितम् ।

नन्वेवमीश्वरस्य कृष्णस्य स्वाभाविकानवधिकातिशयासङ्ख्येययोगविभववदन्तःकरणत्वात्सर्वज्ञत्वमर्जुनादीनां तु तादृशान्तःकरणराहित्यादसर्वज्ञत्वमितीमं व्यवहारसिद्धमेव जीवेश्वरभेदमाश्रित्य अहं सर्वाणि भूतानि वेद मां तु न कश्चनेत्युक्तं कृष्णेन; न तु तत्त्वदृष्ट्या- तत्त्वत आत्मनि सर्वभूतज्ञानादिरूपान्तःकरणधर्मसर्वज्ञत्वाभावादिति चेन्मैवम्——तत्त्वकथनसमये शास्त्रदृष्टेरेव आश्रयणीयत्वेन लोकदृष्टेरनाश्रयणीयत्वात् । तादृशान्तःकरणादिसहितेश्वरस्य साकारस्य रामकृष्णादेस्सर्वविदित्वेन मां तु वेद न कश्चनेति वचनस्यायुक्तत्वात् ।

न च प्रत्यगात्मनः परिच्छिन्नस्य सर्वभूतसाक्षात्कारो न सम्भवतीति वाच्यं, प्रत्यगात्मनः परिच्छिन्नत्वे घटादिवदनित्यत्वप्रसङ्गात् । 'नित्यस्सर्वगतस्स्थाणुरचलोऽयं सनातन' इति वाक्यविरोधात् । परिपूर्ण एव प्रत्यगात्मा । स च सर्वगतत्वात्सर्वं वेदैव; तदन्यस्य सर्वस्यापि जडत्वात्स एव सर्वं वेद; तं तु कोऽपि न वेद' तदाभासयुक्तमप्यन्तःकरणं तमेव भासयेन्न हि सूर्यादिप्रतिबिम्बं सूर्यादिकं भासयति । इदं चान्तःकरणगतं वेत्तृत्वं तदन्तर्गतचिदाभासस्यैवेति चिद्धर्म एवायमिति न जडस्यान्तःकरणस्य वेत्तृत्वप्रसङ्गः । तस्मात्तत्त्वतो नास्त्येवान्तःकरणस्य किञ्चिद्ज्ञत्वं, सर्वज्ञत्वं वा जडत्वेति सिद्धमात्मन एव सर्वद्रष्टृत्वम् ।

'नान्योऽतोऽस्ति द्रष्टेति श्रुतिरप्यमुमेवार्थमाह- अतोऽस्मादात्मनोऽन्यो द्रष्टा नास्तीति श्रुत्यर्थः। यदि श्रुतिगतस्यात इत्यस्य जीवोऽर्थः तर्हि द्रष्टुरीश्वरस्य जीवादन्यस्य सिद्धत्वेन तदपलापः सम्भवति। यदि त्वीश्वरोऽर्थस्तर्हीश्वरादन्यस्य जीवस्य द्रष्टुरपलापः। अथ वा जीवस्य दृश्यत्वेन जडत्वमनित्यत्वं चेति द्वैतिमते न श्रुत्युपपत्तिः। एवं श्रुतिविरुद्धत्वादेव तार्किकादिद्वैतमतान्यप्रमाणानि। श्रुतेरेव प्रबलप्रमाणत्वात्तदनुग्रहादेव स्मृतीनां प्रामाण्यात्। एवं प्रत्यगभिन्नपरमात्मन एकस्यैव सर्वद्रष्टृत्वं, तदन्यस्यान्तःकरणादिसर्वप्रपञ्चस्यापि दृश्यत्वमिति सिद्धम्।

न च भूतानि प्रत्यगात्मानः, अहंशब्दार्थस्तु परमात्मेति वाच्यं, कार्यकरणसङ्घाताभिमानिनः स्तदात्मकास्साभासबुद्धयः प्राणिनो जीवा एवेह भूतानीति सिद्धान्तात्। भवन्तीति भूतानीति हि व्युत्पत्तिः। प्रत्यगात्मनोऽन्यस्सर्वमपि जगत्कार्यत्वेन भूतशब्दवाच्यं हि। प्रत्यगात्मा अजो नित्य इति मन्त्रान्न कार्यभूतः। स एवेहाहंशब्दार्थः- तदन्यस्य परमात्मनोऽभावात्। स चैक एव- द्रष्ट्रन्तर-निषेधश्रवणात्। स एव सर्वज्ञः- क्षेत्रज्ञत्वात्सर्वस्य च क्षेत्रत्वात्। आभासोऽपि चित्कार्यत्वान्मिथ्यात्वाच्च क्षेत्रमेव बुद्ध्यादिवत्।

आभासस्तस्य एव चिद्रूपत्वात्तस्य च चिद्भेदः कल्पित इति केचित्, तन्मते तु आभासोऽपि प्रत्यगात्मैवेति न तस्य क्षेत्रत्वं बुद्ध्यादय एव क्षेत्रम्।

नच चिच्चिदाभासयोरुभयोः कथं प्रत्यगात्मत्वमिति वाच्यं, चिच्चिदाभासभेदस्य कल्पितत्वेन तदभेदस्य सिद्धत्वादेकैव चिदुपाधिवशाद्बिम्बप्रतिबिम्बाभावेन दृश्यते। यथा एकमेव मुखं दर्पणोपाधि-वशादिति बिम्बप्रतिबिम्बभावस्यौपाधिकत्वेनावास्तिकत्वादिति।

अत्र च एकस्मिन्नेवाज्ञाने चित्प्रतिफलति; तत्र बिम्बभूता चिदीश्वरः; प्रतिबिम्बभूता तु जीव इति बिम्बप्रतिबिम्बभावेन जीवेश्वरयोः कल्पितं भेदमाहुः। एकस्मिन्नेवान्तःकरणे चित्प्रतिफलति। तत्र बिम्बभूता चित्कूटस्थः प्रत्यगात्मा, प्रतिबिम्बभूतस्तु जीव इति केचित्।

अमुं च बिम्बभूतं प्रत्यगात्मानमीश्वरं वक्ष्यति कृष्णएव 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'-तीति प्रत्यग्रूपेण तिष्ठतीति तदर्थात्।

सर्वथापि बिम्बचैतन्यमीश्वरः, प्रतिबिम्बचैतन्यं जीवः।

श्लो॥ 'स्वलभुजीवप्रियमिच्छसि चेन्नरहरिपूजां कुरु सततं
प्रतिबिम्बालंकृतिविधिकुशला बिम्बालंकृतिमादधते।
भव मरुभूमौ विरसायां त्वं चेतोभृङ्ग भ्रमसि वृथा
भज भज श्रीलक्ष्मीनरसिंहानघपदसरसिजमकरन्दम्॥' इति शङ्कराचार्योक्तेश्च।

अयं च प्रतिबिम्बो जीवः उपाधिभूतबुद्धिधर्मान् कर्तृत्वादीनात्मन्यध्यस्य संसरतीव, यथा सूर्यप्रतिबिम्बस्तज्जलचलनाच्चलतीव। बिम्बस्य तूपाधिसंयोगाभावादुपाधिसंयोगे सति प्रतिबिम्बस्यैवा-भ्युदयान्नोपाधिधर्मसम्बन्ध इति प्रत्यगात्मेश्वरो निर्विकारः। प्रतिबिम्बोऽपि वस्तुतो बिम्बाभिन्नत्वादविकार एव- उपाधितादात्म्यभ्रमात्तु विकारी चेति सिद्धं जीवस्यास्य संसारित्वमीश्वराभेदश्च।

अयं च प्रतिबिम्ब बुद्धितादात्म्याध्यासात् क्षेत्रत्वं प्रत्यग्बिम्बतादात्म्यात्तु क्षेत्रज्ञत्वं च प्रतिपद्यत इति प्रतिबिम्बस्य भूतत्वेन प्रत्यक्त्वेन च निर्देशस्सङ्गच्छते विवक्षाभेदात् ।

तथा च य प्रतिबिम्ब आत्मानं चिद्रूपं वेद स ज्ञानी प्रत्यगात्मैव; यस्तु प्रतिबिम्ब आत्मानं कर्तारं भोक्तारं च वेद बुद्धितादात्म्याध्यासात्सोऽविद्वान् जीव एव, न प्रत्यगात्मा- केवलप्रतिबिम्बस्य जीवत्वाभावेपि उपाधिधर्माध्यस्तप्रतिबिम्बस्य संसारित्वेन जीवत्वात् ।

अमुमेव जीवेश्वरविभागमाश्रित्य प्रवृत्तोऽय श्लोक —वेदाहमिति । बिम्बभूत ईश्वरोऽहं प्रत्यगात्मा सर्वाणि वेद भूतानि । य प्रतिबिम्बो बिम्बप्रतिबिम्बैक्यरूप तत्त्वं वेत्ति स च प्रत्यगात्मैवेति सर्वाणि वेद भूतानि, मा च वेद स्वाभिन्नमात्मानम् । यस्तूपाधितादात्म्यमापन्नः प्रतिबिम्बस्स सर्वाणि वेद, मां च न वेदेत्यर्थ. ।

य प्रतिबिम्ब एवं प्रत्यगात्मानं न वेद स किञ्चिदुज्ञ ; यस्तु प्रतिबिम्ब आत्मानं वेद स सर्वज्ञ इति सिद्धं बिम्बस्येव प्रतिबिम्बस्यापि सर्वज्ञत्वम् । बिम्बैक्येऽपीमे प्रतिबिम्बा अनेकान्त.करणानामनेकत्वात् । सूर्यैक्येपि तत्प्रतिबिम्बानेकत्ववत् । अत एवैक ईश्वरो जीवा अनेके इति व्यवहार ।

वस्तुतस्तु बिम्बप्रतिबिम्बैक्याज्जीवेश्वरयो रभेद एव । कृष्णश्च वसिष्ठादिवदस्मदादिवच्च प्रतिबिम्ब एव । परं तु वसिष्ठादिवद्बिम्बतादात्म्यमापन्न , न त्वस्मदादिवद्बुद्धितादात्म्यमापन्न अतएव बिम्बाभेदमात्मनि सिद्धवत्कृत्य सर्वेश्वर सर्वज्ञं प्रत्यगात्मानमहमित्यात्मत्वेन व्यवहरति । एव वामदेवोऽप्यह मनुरभवमित्यादि प्रोवाच । प्रह्लादश्च 'मत्तस्सर्वमहं सर्वं मयि सर्वं सनातन' इति ।

यस्तु बिम्बभूत ईश्वरस्स शुद्धचैतन्यं ब्रह्मैव, तस्य नास्ति वक्तृत्वादिव्यवहार - शरीराद्यभावात् । परं स सर्वं केवलं वेद- चैतन्यरूपत्वात् । 'न तस्य कार्यं करण च विद्यते, स सर्वज्ञस्सर्वविदि'ति श्रुते । तस्मात्सिद्धं प्रत्यगात्मन ईश्वरस्य सर्वज्ञत्वमनन्यवेद्यत्वं च । नच ज्ञानिप्रतिबिम्बजीववेद्यत्वमस्तीति वाच्यं, तस्य बिम्बानन्यत्वाद्ज्ञानिन प्रतिबिम्बस्य ।

एतेनान्त करणादावहमभिमानी प्रतिबिम्बो जीव किञ्चिद्ज्ञ परतन्त्र संसारी, बिम्बस्तु सर्वज्ञ ईश्वर प्रत्यगात्मेत्यौपाधिकजीवेश्वरभेद । तत्प्रयुक्त सर्वव्यवहार । वस्तुतो जीवेश्वरैक्यादद्वैत चेति सर्वमनवद्य सिद्धम् ।

यथा मुखमेव दर्पणवशात्प्रतिमुखत्वेन प्रतीयते तथा चैतन्यमेवोपाधिवशा.ज्जीवत्वेन प्रतीयते, न तु वस्तुतो जीवोऽस्ति, यथा प्रतिमुख वस्तुतो नास्ति । तथा च ब्रह्मैव मायया प्राप्तजीवभाव सत्संसरति, विद्यया च निर्मुच्यत इव । न तु मायाद्युपाधिषु नीरूपेषु ब्रह्मणो नीरूपस्य कश्चिदस्ति प्रतिबिम्ब - असम्भवात् । तदेव परमार्थदृष्ट्या जीवस्यैव ब्रह्मत्वाज्जीव एव प्रत्यगात्मा सर्वज्ञश्च । तदन्यत्सर्वं जडं दृश्यं च । अत एवोक्तं सर्वमह वेद मां तु वेद न कश्चनेति ।

य एवमात्मानं न वेद स ब्रह्मापि जीव किञ्चिद्ज्ञोऽज्ञ एव । स चोपाधिभेदादनेक एव, तस्यैवेह भूतशब्देन ग्रहणम् । अयं हि कार्यकरणसङ्घाते भूतशब्दवाच्येऽहमभिमानी ।

केन पुनर्मत्तत्त्ववेदनप्रतिबन्धेन प्रतिबद्धानि सन्ति जायमानानि सर्वभूतानि मां न विजानन्तीत्यपेक्षायामिदमाह—

इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत !
सर्वभूतानि संमोहं सर्गे यान्ति परन्तप ! ॥२७॥

इच्छेति । इच्छाद्वेषसमुत्थेन इच्छा च द्वेषश्च इच्छाद्वेषौ ताभ्यां समुत्तिष्ठतीति इच्छाद्वेषसमुत्थस्तेन इच्छाद्वेषसमुत्थेन, केनेति विशेषापेक्षायामिदमाह—द्वन्द्वमोहेनेति । द्वन्द्वनिमित्तो मोहो द्वन्द्वमोहः तेन, तावेव इच्छाद्वेषौ शीतोष्णवत् परस्परविरुद्धौ सुखदुःखतद्धेतुविषयौ यथाकालं सर्वभूतैस्सम्बध्यमानौ द्वन्द्वशब्देन अभिधीयेते । तत्र यदा इच्छाद्वेषौ

---

यश्चैवमात्मानं वेद स जीवोऽपि ब्रह्मैव- तस्य च पूर्णत्वादात्मन एकत्वं ब्रह्मगः । तस्मात्तत्त्वविद्दृष्ट्या एक एवात्मा सर्वज्ञ ईश्वरः । अतत्त्वविद्दृष्ट्या त्वीश्वराद्भिन्ना अनेके जीवास्संसारिणः । तदनुसारेण चायं श्लोकः तत्त्वविदां सर्वज्ञ आत्मान्येत्वनात्मानो जडाः प्राणिन इति वाक्यार्थमतत्त्वविदां तु सर्वज्ञ ईश्वरो जीवास्तु किञ्चिद्ज्ञा नेश्वरज्ञा इति वाक्यार्थं च जनयतीति युक्तम् ।

परन्तु रामानुजः—मां कृष्णं कश्चनापीश्वरमवतीर्णं न वेदेति, तदसत्—मां न वेदेत्येव मूले स्थितत्वेन ईश्वरमवतीर्णमिति मूलाद्बहिः कल्पनस्याप्रमाणत्वात् । मां कृष्णं न वेदेति वर्णनं त्वयुक्तं- कृष्णस्य सर्वतात्कालिकजनविदितत्वात् ॥२६॥

इच्छेति । पूर्वस्मिन् श्लोकभाष्ये मद्भक्तं मच्छरणमेकं मुक्त्वा मां कोऽपि न जानातीत्युक्तम् । तत्र शङ्कते—त्वद्भक्तानां त्वदशरणानां च कार्यकरणसङ्घाताभिमानिनां जीवानां त्वत्तत्त्ववेदने कः प्रतिबन्ध इति केनेत्यादिना—यद्यपि योगमायाप्रतिबन्ध इति प्रागुक्तं, तथापि प्रतिबन्धान्तरं पृच्छति—पुनरिति, जायमानानीति । कार्यकरणसङ्घाततादात्म्याध्यासाच्छरीरेषु जायमानेषु जीवा अपि जायमाना इव प्रतिभान्तीति भावः । सर्वभूतानीति कार्यकरणसङ्घाताभिमानिनश्चिदाभासाः, साभासबुद्धय इति वा । मामात्मानं न विजानन्ति, शरीरादिकं तेऽपि विजानन्त्येवेति मामित्युक्तम् ।

उक्तं हि भागवते बादरायणेनैव— 'न यस्य सख्यं पुरुषो वै विसख्युस्सखा वसन् संवसतः पुरेऽस्मिन् । गुणो यथा गुणिनोऽव्यक्तदृष्टेस्तस्मै महेशाय नमस्करोमि' इति कार्यकरणसङ्घाताभिमानिनां जीवानामन्तर्यामी सङ्घातप्रवर्तकत्वात्सखा; तस्य च तादृशं सख्यं जीवो न वेत्ति । यथा शरीरादिकं जीवस्येति श्लोकार्थः ।

तथा च शरीरादिवेत्तृत्वादजडा जीवाः किमिति स्वमात्मानमेवेश्वरं न जानन्तीत्याक्षेपार्थः । इच्छा इष्टविषयेषु रागः; द्वेषोऽनिष्टविषयेष्वप्रीतिः; समुत्तिष्ठति जायते द्वन्द्वनिमित्तो द्वन्द्वजन्यः; द्वन्द्वं निमित्तं यस्य स इति बहुव्रीहिः । इच्छाद्वेषरूपद्वन्द्वनिमित्तमोहेनेत्यर्थः । तावेव पूर्वोक्तावेवेत्यर्थः । इच्छाद्वेषसमुत्थेनेत्यत्रोक्तावेवेति यावत् । प्रीतिरूपस्य रागस्य द्वेषस्य चाप्रीतिरूपस्य परस्परविरोधमाह—परस्परविरुद्धाविति । तत्र दृष्टान्तमाह—शीतोष्णवदिति । सुखे सुखहेतुस्रगन्धादौ चेच्छा जायते, दुःखे दुःखहेतुचोरसर्पादौ च द्वेषो जायते पुंसामिति कृत्वाह—सुखदुःखतद्धेतुविषयाविति ।

**चित्तास्सन्तो यतन्ति प्रयतन्ते ये ते यत् परं ब्रह्म तद्विदुः, कृत्स्नं समस्तमध्यात्मं प्रत्यगात्मविषय वस्तु तद्विदुः, कर्म चाखिल समस्त विदुः ॥२९॥**

---

**यत्पर ब्रह्म तद्विदुरिति ।** ब्रह्मशब्दस्य प्रकृत्यादिपरत्वभ्रमव्युदासायाह भाष्यकार — **पर ब्रह्मेति ।** परं सर्वजगद्विलक्षणं सर्वोत्कृष्ट वा । अध्यात्ममात्मनीति विभक्त्यर्थेऽव्ययीभाव । सप्तम्यास्तु विषयत्वमर्थ इत्याह— **प्रत्यगात्मविषयमिति ।** किं तदात्मविषयं कृत्स्नं यद्विदुरित्युच्यतेऽत आह— **वस्त्विति ।** तत्त्वमित्यर्थ । सच्चिदानन्दरूपं सर्वज्ञत्वसर्वान्तरत्वादिरूपं वा कर्म यज्ञादिलक्षणम् । एकविज्ञानेन सर्वविज्ञान प्रतिज्ञाय श्रुत्या ब्रह्मणि विज्ञाते सर्व विज्ञातं भवतीत्युक्तत्वात् । आत्मनश्च ब्रह्माभिन्नत्वात्सर्वस्य च ब्रह्मकार्यत्वादात्मज्ञानाद्ब्रह्मज्ञान सर्वज्ञानं च सम्भवति । जरामरणमोक्षश्च पुरुषार्थसिद्धयतीत्यर्थ ।

नन्वात्मविदामपि शुकादीनां मरणश्रवणाद्वसिष्ठादीना च जरादर्शनात्कथं जरामरणमोक्ष ? स ह्यमृतपान विष्ण्वादिवरदानप्रयुक्त एव देवाना, विभीषणमार्कण्डेयादीना च जरामरणराहित्यदर्शनात्पुराणेष्विति चेन्मैवम्—देवादीनामपि ब्रह्मदिनप्रलये मरणसद्भावाच्चामृतपानादिना मरणाभाव । पर तु जरामरणधर्मवद्देहतादात्म्याभावादेव । न ह्यात्मनोऽजस्य नित्यस्याविकारस्य जन्मादिसम्भव, येनात्मविदो जराद्यापत्ति । आत्मविद्ध्यात्मा । 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुते, भविष्यतीत्यनुक्त्वा भवतीति वर्तमाननिर्देशाच्च ।

यत्तु शुकादीनां देहत्याग स ह्यज्ञदृष्ट्यैव कल्पित । यद्यात्मन पूर्णस्यासङ्गस्य शरीरसंयोगोस्ति तर्हीदानीं तद्वियोगो भवतु नतु सोस्ति- विरोधात् । तस्माल्लोकदृष्ट्यैव शुकादीनां मुक्तिरपि । उक्तं हि प्रागेव बन्धमुक्त्यादिसर्वव्यवहार आध्यासिक इति । इह त्वात्मविद आत्मज्ञानाज्जरामरणादिविकारवदनात्मतादात्म्याध्यासनिवृत्तिरेवोच्यते, नतु मोक्ष । आत्मनो नित्यमुक्तत्वात् ।

अथ वा ज्ञानिनोऽपि प्रारब्धदेहधर्माणां जरामरणादीनामनुभवस्यावर्जनीयत्वादेतद्देहपरित्यागानन्तरमज्ञस्येव पुनर्देहसम्बन्धाभावान्नास्ति पुनर्जरामरणप्रसक्तिरित्यभिप्रेत्योक्त जरामरणमोक्षार्थमिति । पुनर्जन्मनिवृत्त्यर्थमिति यावत् ।

नच 'तत्त्वविद प्राणा नोत्काम'न्तीति श्रुते प्राणोत्क्रमणस्यैव मरणत्वात्कथं ज्ञानिनो मरणमिति वाच्यं, प्राणोत्क्रमणाभावेऽपि प्राणत्यागोऽस्त्येव तत्त्ववित्प्राणादीना वाय्वादिषु लयश्रवणात् । 'मृङ् प्राणत्याग' इति मरण वा प्राणत्याग । न चैवमज्ञस्य सप्राणस्यैव लोकान्तरगमनात्कथं मरणमिति वाच्यं, शरीरात्माभिमानिनोऽज्ञस्य शरीरप्राणवियोगरूपप्राणत्यागसद्भावात् ।

यद्वा जरेत्युपलक्षण रोगादीना, जरारोगादिमयुक्तस्य प्राणोत्क्रमणलक्षणस्य मरणस्य मोक्षार्थमित्यर्थ । तत्त्वविद एव हि प्राणोत्क्रमणासम्भव । परिपूर्णस्य तस्य लोकान्तरगमनासम्भवात् । तस्मादात्ममननस्य जरामरणमोक्ष परब्रह्मादिज्ञान च फलम् ॥३०॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ।
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥३०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे ज्ञानविज्ञानयोगो-
नाम सप्तमोऽध्यायः ।

साधिभूतेति । साधिभूताधिदैवं अधिभूतं चाधिदैवं च अधिभूताधिदैवं, तेन सहाधिभूताधिदैवेन वर्तत इति साधिभूताधिदैवं च मां ये विदुः, साधियज्ञं च साधियज्ञेन साधियज्ञं ये विदुः प्रयाणकाले मरणकालेऽपि च ते मां विदुर्युक्तचेतसः समाहितचित्ता इति ॥३०॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्य
श्रीमच्छङ्करभगवत्पादकृतौ श्रीमद्भगवद्गीताभाष्ये ज्ञान-
विज्ञानयोगो नाम सप्तमोऽध्यायः ।

---

साधिभूतेति । ये मद्भक्ता अधिभूताधिदैवाधियज्ञसहितं मां विदुः ते युक्तचेतसः प्रयाणकालेऽपि मां विदुश्च । जीवद्दशायां दृढाभ्यासविषयस्यैव वस्तुनो मरणकालेऽपि स्मरणसम्भवात् । तथा च 'यान्ते मतिस्सा गति'रिति न्यायेनान्ते नारायणस्मरणसिद्ध्यर्थं जीवद्दशायां नारायणभजनमवश्यं कर्तव्यं विषयेषु सङ्गं त्यक्त्वा मुमुक्षुभिः । भरतो हि मृगसङ्गेनान्ते मृगं स्मरन् न मुक्तिं ययावपि तु मृगजन्मैव । अतः परब्रह्मसायुज्यायान्ते नारायणस्मरणमावश्यकं पुंसाम् । तच्च नारायणस्मरणं नारायणनामोच्चारणमात्रं न, किं तर्हि प्रत्यगात्मनो नारायणस्य यत्तत्त्वं सच्चिदानन्दलक्षणं तस्य स्मरणं सच्चिदानन्दं ब्रह्माहमस्मीति । तच्च विषयेषु रागद्वेषौ विहाय प्रत्यगात्मनि मनसस्समर्पणं विना न सम्भवतीत्यभिप्रेत्याह—युक्तचेतस इति ।

येषां तु सन्निपातादिना मरणकाले चित्तसमाधानं दुर्लभं ते हि पुनर्जन्म प्रतिपद्य पूर्वाभ्यासवशेन पुनरात्मभजने यतन्ते- सर्वथाप्यन्ते नारायणस्मरणं विना न मुक्तिरिति स्थितम् ।

'काश्यां तु मरणान्मुक्ति'रिति तु काश्यामन्तकाले शङ्करेण तारकमन्त्रे उपदिष्टे सति पुनर्जन्मनि तारकोपासनपूर्वकमात्मज्ञानं लब्ध्वा मुच्यते जन्तुरित्यभिप्रायगर्भं वाक्यम् । न च ज्ञानान्मुक्तिरिति श्रुतिविरोधः, अन्तकालोपलक्षितज्ञानान्मुक्तिरिति तदर्थात् । ज्ञानाज्जीवन्मुक्तिरिति वा ।

वस्तुतस्तु नित्यमुक्तस्यात्मनो न कोऽपि बन्धो मोक्षो वा । ज्ञानी त्वात्मैवेति न तस्यान्तकाले जीवद्दशायां वा किञ्चिदात्मस्मरणादिकं मुक्तये कर्तव्यमस्ति- ज्ञानादेव कृतकृत्यत्वात् । येषां तु नास्ति तादृशं निश्चयज्ञानं तेषामन्तकाले नारायणस्मरणं कर्तव्यमिति बोध्यम् ॥३०॥

इति श्रीवेलंकोण्डोपनामकरामकविकृते श्रीमच्छङ्करभगवद्गीताभाष्यार्कप्रकाशे
ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ।

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## अष्टमोऽध्यायः ।

'ते ब्रह्म तद्विदुः कृत्स्न'मित्यादिना भगवताऽर्जुनस्य प्रश्नबीजान्युपदिष्टानि; अतस्तत्प्रश्नार्थमर्जुन उवाच—

अर्जुन उवाच— किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम !
अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥१॥
अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन !
प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥२॥

किं तद्ब्रह्मेति ॥१॥ अधियज्ञ इति ॥२॥

एषां प्रश्नानां यथाक्रमं निर्णयाय श्रीभगवानुवाच—

श्रीभगवानुवाच— अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ।
भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥३॥

अक्षरमिति । अक्षरं न क्षरतीत्यक्षरं पर आत्मा, 'एतस्य वा अक्षरस्य प्रशासने गार्गि

---

हे पुरुषोत्तम ! यदात्मभक्ता विदुरित्युक्तं तद्ब्रह्म किम् ? तत्कर्म किम् ? अधिभूतं किम् ? प्रोक्तं शास्त्रज्ञैः अधिदैवं च किमुच्यते ? अधिभूतं किम् ? अधिदैवं च किमित्यर्थः । किं किं वस्तु ब्रह्माध्यात्मादिशब्दैरुच्यत इत्यर्थः ॥१॥

अधियज्ञ इति । हे मधुसूदन ! अस्मिन् देहे कोऽधियज्ञः ? कथं चिन्तनीय इति शेषः । प्रयाणकाले च त्वं नियतात्मभिः कथं ज्ञेयोऽसि ॥२॥

अक्षरमिति । परममक्षरं ब्रह्मेत्युच्यते । क्षरति नश्यति । अक्षरशब्दस्य परमात्मवाचित्वे श्रुतिं प्रमाणयति—एतस्येति । यद्वा अक्षरस्य ब्रह्मत्वे श्रुतिं प्रमाणयति—एतस्येति । ईश्वरस्यैव सर्वनियन्तृत्वेन सर्वप्रशासकत्वादीश्वरस्य प्रशासने सूर्यचन्द्रमसौ विधृतौ तिष्ठतः । हेगार्गि इति सम्बोधनम् । विधृतावन्तर्यामिणा तेनैव विशेषेण धृतौ सन्तौ तस्यैव शासने तिष्ठतः । ईश्वराज्ञापरतन्त्रौ सूर्यचन्द्रमसौ दिवारात्री कुरुत इत्यर्थः । 'भीषास्माद्वातः पवते, भीषोदेति सूर्य' इति श्रुतेः ।

सूर्याचन्द्रमसौ विधृतौ तिष्ठत' इति श्रुतेः । ओङ्कारस्य 'ओमित्येकाक्षरं ब्रह्म' इति परेण विशेषणादग्रहणम् । परममिति च निरतिशये ब्रह्मणि अक्षरे उपपन्नतरं विशेषणम् । तस्यैव परस्य ब्रह्मणः प्रतिदेहं प्रत्यगात्मभावः स्वभावः- स्वो भावस्स्वभावः, अध्यात्ममुच्यते आत्मानं देहमधिकृत्य प्रत्यगात्मतया प्रवृत्तं परमार्थब्रह्मावसानं वस्तु स्वभावोऽध्यात्ममुच्यते; अध्यात्मशब्देनाभिधीयते । भूतभावोद्भवकरः भूतानां भावो भूतभावः तस्योद्भवो भूतभावोद्भवः तं

---

ननु ओमित्येकाक्षरं ब्रह्मेति श्रुत्या ओंकारस्याप्यक्षरत्वाद्ब्रह्मत्वाच्च अक्षरं ब्रह्मेत्यस्य ओंकारो ब्रह्मेत्यर्थः किं न स्यादित्यत आह—ओंकारस्येति । ओंकारस्याग्रहणमित्यन्वयः । ओमित्येकाक्षरं ब्रह्मेतिश्रुत्या ओंकारस्येहाक्षरशब्देनाग्रहणमप्रतिपादनम् । तत्र हेतुमाह—परमेण विशेषणादिति । 'अक्षरं ब्रह्म परम'मिति परमत्वविशेषणसत्त्वादक्षरस्यात्र नोंकारग्रहणमित्यर्थः ।

ननु ओंकारस्य वेदादित्वेनोत्कृष्टत्वात्परममक्षरमोंकारोऽपि भवितुमर्हतीत्यत आह—परममिति । पर उत्कृष्टो मा न विद्यते यस्मात्तदिति व्युत्पत्त्या परमशब्दस्य निरतिशयवाचित्वाद्ब्रह्मणोऽन्यस्य सर्वस्यापि सातिशयत्वादोंकारस्य च वर्णात्मकस्य जडस्य कार्यस्य सातिशयत्वात्परमं निरतिशयमक्षरं ब्रह्मैव, न त्वोंकार इति भावः । निरतिशये अक्षरे ब्रह्मणि परममिति विशेषणमुपपन्नतरमित्यन्वयः ।

एवमक्षरं ब्रह्म परममिति प्रथमपादं व्याख्याय 'स्वभावोऽध्यात्ममुच्यत' इति द्वितीयपादं व्याख्यातुमारभते—तस्यैवेति । स्वभावः स्वस्य परब्रह्मणो भावः प्रतिदेहं प्रत्यगात्मरूपेण भवनं स्वभावः । ब्रह्मणः प्रत्यग्रूपेण देहे देहे अवस्थानमिति यावत् । स्वो भावस्स्वभाव इति समासे तु तस्येति ब्रह्मवाचिपदाध्याहारप्रसङ्गः । अध्यात्ममित्युच्यते- आत्मन्यध्यात्ममिति । नात्र विभक्त्यर्थेऽव्ययीभावसमासो ग्राह्यः । तस्य तत्सम्यर्थपर्यवसानादित्यभिप्रेत्याह—आत्मानं देहमिति । अधिकृत्याधिष्ठित्य प्रवृत्तं स्थितं परमार्थब्रह्मावसानं परमार्थं सत्यं यद्ब्रह्म पूर्वोक्तं परं ब्रह्म तदेवावसानं समाप्तिर्यस्य तत्तथोक्तं, परमार्थब्रह्मरूपेण पर्यवसितमित्यर्थः । परमार्थब्रह्मभूतमिति यावत् । एवंविधं वस्तु स्वभावशब्दार्थः ।

निरुपाधिकं चैतन्यं मायोपाधिकं चैतन्यं वा ब्रह्म; प्रतिदेहं प्रत्यग्रूपेण स्थितमन्तःकरणोपाधिकं चैतन्यं स्वभावशब्दवाच्यमध्यात्ममिति यावत् । परमात्मा ब्रह्म, प्रत्यगात्मा त्वध्यात्ममिति फलितार्थः ।

ननु अध्यात्मं प्रत्यगात्मविषयं वस्त्विति पूर्वं भाषितमधुना तु प्रत्यगात्मैवेत्युच्यते, अतः कथं पूर्वोक्तविरोधपरिहार इति चेदुच्यते—पूर्वं कृत्स्नपदानुगुण्येन वस्त्विति पदमध्याहृत्याध्यात्ममित्यस्याव्ययीभावसमास उक्त इदानीं तु समासान्तरमिति । यद्वा प्रत्यगात्मविषये प्रत्यगात्मशब्दप्रयोगविषयमर्थात्प्रत्यगात्मैवेति; इत्यद्धमित्यस्य पूर्णमित्यर्थः ।

अध्यात्ममुच्यत इत्यस्यार्थमाह—अध्यात्मशब्देनाभिधीयत इति । अध्यात्ममित्युच्यत इत्यन्वयादेतदर्थलाभः ।

**करोतीति भूतभावोद्भवकरः; भूतवस्तूत्पत्तिकर इत्यर्थः। विसर्गो विसर्जनं देवतोद्देशेन चरुपुरोडाशादेर्द्रव्यस्य परित्यागः; स एव विसर्गलक्षणो यज्ञः कर्मसंज्ञितः कर्मशब्दित इत्येतत्। एतस्माद्धि बीजभूताद्वृष्ट्यादिक्रमेण स्थावरजङ्गमानि भूतान्युद्भवन्ति ॥३॥**

---

एवं किं तद्ब्रह्म किमध्यात्ममिति प्रश्नद्वयस्य पादद्वयेनोत्तरद्वयं दत्वा, किं कर्मेति प्रश्नस्य पादद्वयेनोत्तरमाह—**भूतेति**। भूतानां प्राणिनां भावस्सत्ता, तस्योद्भव उत्पत्तिर्भूतभावोद्भवः, तस्य करः कर्ता उत्पत्तेः प्रागपि सिद्धानां भूतानामभिव्यक्त्यभावादसत्प्रायाणामुत्पत्तिवशात्सत्ता सिद्ध्यति—जन्माधीनत्वात्सत्तायाः। जन्मानन्तरभावी खलु सत्ताख्यो विकारः। पुत्रो जातः, जातः पुत्रोऽस्तीति व्यवहारात्। फलितमाह—**भूतवस्तूत्पत्तिकर इति**। भूतानां सिद्धानामेव वस्तूनां प्राणिनां देहसङ्घटनद्वारा उत्पत्तिकर इत्यर्थः।

लिङ्गशरीरावच्छिन्ना जीवा अनादिकालमारभ्य स्थिताः प्रलयेऽप्येषां न नाशः। मोक्ष एव लिङ्गभङ्गाख्यो नाशः। अमी हि स्थूलशरीरसंयोगाख्यमुदयं तद्वियोगाख्यं नाशं च कर्मवशात्प्रपद्यन्ते। तत्र स्थूलशरीरसंयोगाख्य उदय इह भूतभावोद्भवशब्देनोच्यत इति भावः।

यद्वा भवन्तीति भूतानीति, भूतशब्दः कार्यमात्रपरः। भूतानां कार्यकरणसङ्घातादिरूपाणां कार्याणां भावस्य सत्ताया उद्भवकरः- कार्यनिष्ठसत्ताया जन्माधीनत्वात्। जन्मनः प्राक्कार्यस्य चाभावात्सत्त्वे च पुनरुदयायोगात्सद्वस्तुनः जन्मनः प्रागभावायोगाच्च जन्माधीनसत्ताकान्येव कार्याणीत्यभिप्रेत्य भूतसत्ताया उत्पत्तिकर इत्यस्य भूतवस्तूत्पत्तिकर इति फलितार्थ उक्तो भाष्यकृद्भिः। भूतवस्तूनि कार्यपदार्थाः कार्यमात्रं सर्वमित्यर्थः। तदुत्पत्तिकरः तत्सत्तासम्पादको जन्मद्वारेति यावत्।

विसर्गो यज्ञः। यज्ञस्य विसर्गलक्षणत्वादित्याह—**स एवेति**। यज्ञो यजनं देवपूजा, सा च हविरर्पणरूपेति यज्ञस्य विसर्ग एव लक्षणं स्वरूपमिति भावः। एवं विसर्गलक्षणस्य यज्ञस्य क्रियात्वात्कर्मशब्दवाच्यत्वमित्याह—**कर्मसंज्ञित इति**। कर्मेति संज्ञा कर्मसंज्ञा सास्य सञ्जातेति कर्मसंज्ञितः। तारकादित्वादितच्। तदर्थमाह—**कर्मशब्दित इति**। कर्मशब्दप्रतिपाद्य इत्यर्थः। **वृष्ट्यादिक्रमेणेति**। 'यज्ञाद्भवति पर्जन्यः पर्जन्यादन्नसम्भवः, अन्नाद्भवन्ति भूता'नीति क्रमः प्रागुक्तः।

ननु 'अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः, यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भव' इति तृतीयाध्याये यज्ञस्य कर्मसमुद्भवत्वमुक्तमिदानीं तु कर्मत्वमेवोच्यत इति पूर्वोत्तरविरोध इति चेत्, मैवम्—यज्ञशब्दस्यापूर्वमिति कर्मेति चार्थद्वयसत्त्वाद्यज्ञोऽपूर्वमिति कर्मेति च मतभेदेन व्यवहारात्, यज्ञोऽपूर्वमिति मते यज्ञोत्पादककर्मणि यज्ञशब्दप्रयोगस्य लाक्षणिकत्वात्, यज्ञः कर्मेति मते कर्मजन्ये अपूर्वे यज्ञशब्दप्रयोगस्य लाक्षणिकत्वात्, यज्ञशब्दस्य मुख्यवृत्त्या प्रागपूर्वत्वमुक्तं, गौणवृत्त्या त्विदानीं कर्मत्वमुक्तम्। यद्वा गौणवृत्त्या प्रागपूर्वत्वमुक्तमिदानीं मुख्यवृत्त्या कर्मत्वमुक्तमिति पूर्वोत्तरविरोधपरिहारात्।

अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥४॥

अधिभूतमिति । अधिभूतं प्राणिजातं अधि भवतीति । कोऽसौ ? क्षरः क्षरतीति क्षरः विनाशी भावो यत्किञ्चिज्जनिमद्वस्त्वित्यर्थः । पुरुषः पूर्णमनेन सर्वमिति, पुरि शयनाद्वा पुरुषः, आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानामनुग्राहकः । सोऽधिदैवतमधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्णवाख्या 'यज्ञो वै विष्णु'रिति श्रुतेः । स हि विष्णुरहमेवात्रास्मिन्देहे यो यज्ञस्तस्याहमधियज्ञः । यज्ञो हि देहनिर्वर्त्यत्वेन देहसमवायीति देहाधिकरणो भवति, देहभृतां वर ! ॥४॥

---

एवं च कर्मरूपाद्यज्ञादपूर्वयज्ञं, तस्माद्वृष्टिः, तस्मादन्नं, तस्मात्प्रजा इत्यपि क्रमः सिद्धः । भाष्ये तु वृष्टेरेवादित्यमुक्तम् । तत्तु कर्मापूर्वयोरेकयज्ञशब्दवाच्यत्वलक्षणैक्यस्याव्यवहारादिति बोध्यम् । एतस्मादिति वाक्ये विसर्गस्य भूतभावोद्भवकरत्वं स्फुटयितुं निरुद्धमिति बोध्यम् ॥३॥

अधिभूतमिति । भूतशब्दार्थमाह—प्राणिजातमिति । प्राणिसमूह, भूतशब्दाद्भूतत्वमहणेन तत्समूहलाभ । अधिशब्दार्थमाह—अधि भवतीति । अधिकृत्य भवतीत्यर्थ । कोऽसौ यो भूतजातमधि भवतीत्युच्यत इति पृच्छति—कोऽसाविति । उत्तरयति—क्षरो भाव इति । क्षरति नश्यतीति क्षर, भवति जायत इति भाव । 'जातस्य हि ध्रुवो मृत्यु'रिति सिद्धान्तादाह—जनिमदिति । जनेरुत्कले विनाश उत्कभाय इति भाव । उत्पत्तिविनाशवदिति यावत् । भूतशब्देन सर्वप्राणिग्रहणात्तदधिकृत्य सम्भवात्प्राणिपदार्थजातमेव क्षरो भाव । स च देहादिरूप शीतोष्णादिरूपश्चेति बोध्यम् ।

पूर्णं व्याप्तम् । पुरि शरीरे शयनादासनात् । पुरं चादित्यशरीरं हिरण्यगर्भस्य तत्र स्थितत्वात्पुरुषशब्दवाच्यस्य । आदित्यान्तर्गतस्सूर्यमण्डलमध्यस्थ हिरण्यगर्भ हिरण्मय हिरण्यश्मश्रुत्वादिगुणक ईश्वर सर्वेषां प्राणिनां करणानामिन्द्रियाणामनुग्राहक शक्तिमद्, देवनैव दैवतमादित्यस्य च देवजातित्वाद्दैवतत्वं तदधिकृत्य स्थित वस्त्वधिदैवतम् ।

यज्ञमधिकृत्य वर्तमानोऽधियज्ञ सर्वेषु यज्ञेष्वभिमानवान् । विष्णोर्यज्ञाभिमानित्वे श्रुतिं प्रमाणयति—यज्ञो वै विष्णुरिति । यज्ञाभिमानित्वादेव यज्ञशब्दवाच्यत्वमिति भाव । कोऽसौ विष्णुरत आह—अहमेवेति । कृष्ण एवेत्यर्थ । विष्णववतारत्वात्कृष्णस्येति भाव । तस्मादहमधियज्ञ तस्य देहाश्रयस्य यज्ञस्याधि यज्ञोऽभिमानी अहम् । देहं समवैति सम्यक् एति इति देहसमवायी देहसङ्ग, देहाधिकरण देह अधिकरणमाधारो यस्य स, देहभृत प्राणिनस्तेषां वर श्रेष्ठ तस्मात्त्वं श्रेष्ठस्तस्मात् इदमुच्यते मयेति भाव ।

अधिदैवतमधियज्ञश्च यद्यपि प्रसङ्गादैव, आदित्यदेहोऽपि च विष्णुदेहोऽपि भिन्नश्च । तथापि तयोरीश्वरशरीरोपाधिकत्वेन पृथङ्निर्देश सत्यगात्मना जीवशरीरात्पृथक्त्वात् ।

एवं ब्रह्माध्यात्माधिदैवाधियज्ञानामेकत्वं सिद्धं- आत्मत्वाच्चतुर्णाम् । अत आत्मज्ञानेन तद्ज्ञानसिद्धिरिति कृत्वा ते ब्रह्म तद्विदुरध्यात्मं विदुः स धिदैवं साधियज्ञं च मां विदुरिति पूर्वोक्त सुसङ्गम् ।

अथ यज्ञस्य कर्मण अधिभूतस्य कार्यजातस्य आत्मकार्यत्वादात्मज्ञानेन तद्ज्ञानसिद्धि मृद्ज्ञानेन मृत्कार्यघटादिज्ञानवदिति कृत्वा ते साधिभूतं मा विदुः कर्म च विदुरिति पूर्वोक्त सुसङ्गम् ।

अत्र रामानुजः—क्षेत्रज्ञसमष्टिरूपं प्रकृतिविनिर्मुक्तमात्मस्वरूपं ब्रह्म; आत्मनि सम्बध्यमानं भूतसूक्ष्मतद्वासनादिकं प्रकृतिस्स्वभाव; मनुष्यादिभावोद्भवकरो योषित्पुरुषसंसर्गजो रेतोविसर्जनं कर्म; शब्दस्पर्शादिम्साश्रयः क्षरो भावोऽधिभूतं; इन्द्रप्रजापतिकृत्स्नदेवनोपरि वर्तमानो विलक्षणशब्दादिभोक्ता पुरुषोऽधिदैवतं; अधियज्ञैराराध्यतया वर्तमान इन्द्रादौ मम शरीरभूते आत्मतयाऽवस्थितोऽहमेवाधियज्ञः; तत्र मुमुक्षुभिः प्राप्यतया ब्रह्म, त्याज्यतयाध्यात्मं, उद्वेजनीयतया परिहरणीयतया च कर्म ज्ञातव्यं; ऐश्वर्यार्थिभि प्राप्यतयाधिभूतमधिदैवतं च ज्ञातव्यं; महायज्ञादिनित्यनैमित्तिकानुष्ठानवेलायां त्रयाणामधिकारिणामधियज्ञोऽनुसन्धेय इति प्राह,

अत्रोच्यते—क्षेत्रज्ञस्यैकत्वेन तावत् क्षेत्रज्ञसमष्टिर्नास्ति 'क्षेत्रज्ञं चापि मां वि'द्धीति वक्ष्यमाणत्वात् । अन्त.करणभेदात्क्षेत्रज्ञभेदोपचारपक्षेऽपि तत्र मते चिदचिच्छरीरकत्वेनेश्वरस्य क्षेत्रज्ञसमष्टिरूपत्वं न सम्भवति- न हि क्षेत्रज्ञसमष्टिरीश्वरः क्षेत्रज्ञशरीरस्स्यात् । नापि क्षेत्रज्ञसमष्टिर्ब्रह्म, ईश्वरस्त्वन्यश्चिदचिच्छरीरक इति वाच्यं, ब्रह्मण ईश्वरशरीरत्वापत्ते ।

ननु ब्रह्मणः परमात्मनोऽन्यैव क्षेत्रज्ञसमष्टिरिह ब्रह्मशब्देनोच्यते गौणवृत्त्येति चेन्नैवम्—मुख्यार्थपरित्यागे कारणाभावात् । अक्षरं ब्रह्म परममिति परमं ब्रह्मेति शब्दद्वयस्य परमात्मनि योगरूढत्वात् । नच परममित्यस्य प्रकृतिविलक्षणमित्यर्थ इति वाच्य, तथात्वेऽपि प्रकृतिविलक्षणस्य परब्रह्मण एव ग्राह्यत्वात् । ब्रह्मणश्च क्षेत्रज्ञादन्यत्वे जडत्वापत्तेः । क्षेत्रक्षेत्रज्ञोभयातिरिक्तस्य वस्तुन एवाभावाच्च क्षेत्रक्षेत्रज्ञविलक्षणब्रह्मसिद्धि । ब्रह्मसधर्मत्वात्क्षेत्रज्ञो ब्रह्मेति वक्तव्ये तथोक्ते चाक्षरं ब्रह्म परममिति तद्विहाय क्षेत्रज्ञसमष्टिपर्यन्तार्थकल्पनस्याप्रमाणत्वात्, अयुक्तत्वाच्च । नहि परमाक्षरसमष्टिर्ब्रह्मेत्युक्तं मूलकर्त्रा- येन क्षेत्रज्ञसमष्टिरुच्येत । नच क्षेत्रज्ञसमष्टिरूपमात्मस्वरूपमित्यपि युक्तं, आत्मन एव क्षेत्रज्ञत्वेन तस्यैव तत्समष्टिरूपत्वकर्णनस्यायुक्तत्वात् । नचात्मना स्वरूपं क्षेत्रज्ञसमष्टिरूपमिति वाच्यं, व्रीहीणामिवात्मनां राश्यभावात् । नच क्षेत्रज्ञसम[illegible]मस्वरूपं परम[illegible]मित्यर्थ इति वाच्यं, परमात्मशरीरत्वे आत्मन. विनाशित्वापत्ते । [illegible] हि शरीर[illegible] शरीरत्वमात्मन इति वाच्यं, अच्छेद्येऽयं आत्मनि नि[illegible] [illegible] ।
व्यवहारकाले त [illegible]

त्मता । सुषुप्तौ चिदाभासत्यसाक्षी आत्मा कथं चिदाभासस्स्यात् । चिदाभासो ह्यनात्मा । आत्मा हि स्वयम् । य प्रमातृत्वरहित प्राज्ञ सुषुप्तिसिद्ध आत्मा स एव हि प्रबोधे स्वानुभूतमज्ञानमानन्दं च स्मरति 'सुखमहमस्वाप्सं, न किञ्चिदवेदिष'मिति । कथमन्यानुभूतार्थस्यान्यस्मरणम् ? अत प्रत्यगात्मैव स्वयं चिदाभासतादात्म्यमापद्य संसारमापद्यत इवेति न प्रत्यगात्मप्रमात्रोर्भेद । चिदाभासस्य वास्तवं रूपं चिदेव, अन्त करणविशिष्टचैतन्यलक्षणप्रमातुर्वास्तव रूप चैतन्यमेवेति प्रकृतिविनिर्मुक्तमात्मस्वरूपं चैतन्यं प्रत्यगात्मैव । ननु चिदाभासत्वप्रमातृत्वविशिष्टचैतन्यस्य प्रकृतिविनिर्मुक्तत्व प्रकृतिपरिणामान्त करणविशिष्टत्वात् ।

तस्मात्प्रकृतिविनिर्मुक्तमात्मस्वरूपं चैतन्यमेव एव क्षेत्रज्ञस्यात्क्षेत्रज्ञमेव, निरुपाधिकत्वादेकमेव, द्वैताभावादद्वितीयमेव । नहि प्रकृतिविनिर्मुक्ते वस्तुनि उपाधिर्द्वैत वा भवितुमर्हति- सर्वस्यापि द्वैतस्य प्रकृतितत्कार्यरूपत्वात् । एवंविधं च चैतन्यं सच्चिदानन्दलक्षण परं ब्रह्मैवेति सिद्धमक्षरं परमं ब्रह्मेत्यस्य भगवत्पादोक्त एवार्थो ब्रह्म, ननु तदतिरिक्त कश्चिज्जीव सर्वे जीवा वा । ब्रह्मानतिरिक्तस्यैव जीवस्यात्मन प्रकृतिविनिर्मुक्तत्व, तदतिरिक्तस्य तु प्रकृतिसंसृष्टत्वमेवेति ।

तथा आत्मनि सम्बध्यमानं भूतसूक्ष्मतद्वासनादिकमित्यप्ययुक्तम्—असङ्गे आत्मनि भूतसूक्ष्मादिसम्बन्धायोगात् । 'असङ्गोऽह्ययं पुरुष' इति हि श्रुति । नच मायया तत्सम्बन्धोपपत्ति, तव मते भूतसूक्ष्मादेस्सत्यत्वेन मायिकत्वाभावात् । एव सत्यया प्रकृत्या आत्मस्वरूपस्य विनिर्मुक्तिरपि न सम्भवति, नहि सत्यं निवर्तमानं क्वापि दृष्ट श्रुतं वा । यदि सत्यापि प्रकृतिरीश्वरसेवया निवर्तते तर्हि कथमीश्वरस्य चिदचिद्विशिष्टत्वम् । नचेश्वरस्य प्रकृत्यनिवृत्तिरिति वाच्यं, ईश्वरस्यैव प्रकृत्यनिवृत्तौ कथं तत्सेविना तन्निवृत्तिरुपपद्यते ? यदि प्रकृतिसङ्गो दोषस्तर्हि कथं स ईश्वरस्य हेयप्रत्यनीकस्य भवितुमर्हति ? यदि तु गुणस्तर्हि कथ मुमुक्षोस्त्याज्य ? न चेश्वरस्य प्रकृतिसङ्गो गुण, जीवस्य तु दोष इति वाच्यं, जीवेश्वरयोरुभयोरपि ज्ञानैकाकारत्वेन समानधर्मत्वाचत्रैकस्मिन् प्रकृतिसङ्गो गुणोऽन्यस्मिन् दोष इति कल्पयितुमनुचितत्वादप्रमाणत्वाच्च ।

नच शुद्धप्रकृतिसङ्ग ईश्वरस्य गुण, अशुद्धप्रकृतिसङ्गो जीवस्य दोष इति वाच्यं, मुक्तस्य जीवस्येश्वरसाधर्म्याङ्गीकारात् । तस्य शुद्धप्रकृतिसङ्गोऽवश्य स्यादिति कथं मुमुक्षुभि प्रकृतिविनिर्मुक्त मात्मस्वरूपं प्राप्य स्यात् ? नचाशुद्धप्रकृतिविनिर्मुक्तं शुद्धप्रकृतिसंसृष्टमात्मस्वरूपं प्राप्यमिति विवक्षितमिति वाच्यं, तथात्वे आत्मस्वरूपस्य नित्यसिद्धत्वेनाप्राप्यत्वाच्छुद्धप्रकृतिरेव प्राप्येति कृत्वा प्राप्यतयात्र ज्ञातव्या प्रकृतिरेव, न त्वात्मस्वरूपम् ।

तथा चाक्षरं ब्रह्म परममित्यस्य परम शुद्धमक्षरं प्रकृतिर्ब्रह्मेत्यर्थो वाच्य, नतु प्रकृतिविनिर्मुक्तमात्मस्वरूपं ब्रह्मेति । नच तथैवोच्यत इति वाच्यं, शुद्धाशुद्धप्रकृतिद्वयसाधारणस्य स्वभावशब्दस्य अशुद्धप्रकृतिपरत्वे प्रयोजकाभावात् । न चाक्षर ब्रह्म परममित्यनेन शुद्धाया उक्तत्वात्स्वभावशब्देन पारिशेष्यन्यायेनाशुद्धोच्यत इति वाच्यं, ईश्वरस्शुद्धप्रकृतिविशिष्ट एवेत्युक्तौ अशुद्धप्रकृतेरीश्वरासम्बन्धित्वप्रसक्ते । नचेष्टापत्ति - सर्वमपीश्वरस्य शरीरभूतमिति त्वयाभ्युपगमात् ।

भूतसूक्ष्मादीनां जीवप्रकृतिकार्यत्वे जीवस्यैव जगत्स्रष्टृत्वापत्ते, ईश्वरप्रकृतिकार्यत्वे जीवस्य तत्सम्बन्धायोगात्। ईश्वरस्यैव तत्सम्बन्धापत्ते, तन्मोक्षार्थमीश्वरस्यापीश्वरान्तरभजनप्रसक्ते, सर्वजगत्सृष्ट्यादिहेतो प्रकृतेरेकत्वेन प्रकृतिद्वयकल्पनस्यायुक्तत्वात्। जीवानामनेकत्वेनाशुद्धप्रकृतीनामनेकानामपि कल्पनीयत्वापत्ते।

किं चेश्वरप्रकृते 'दैवी ह्येषा गुणम'यीति गुणमयत्वेन शुद्धत्वस्याप्यसम्भवात्। शुद्धसत्त्वात्म कत्वं हि प्रकृतेरीश्वरसम्बन्धिन्याश्शुद्धत्वम्। कथं त्रिगुणमयप्रकृतेश्शुद्धसत्त्वात्मकत्वम्? कथं वा शुद्धसत्त्वात्मिकाया ईश्वरप्रकृतेस्सकाशत्तामसपृथिव्यादिभूतोत्पत्ति?

न हि महाभूतस्रष्टृत्वं जीवस्योचितं 'आत्मन आकाशस्सम्भूत' इत्यादिश्रुतिविरोधात्। 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुत्यन्तरसंवादेनात्मशब्दस्येह परमात्मपरत्वावधारणात्। तस्मादेकैव गुणमयी प्रकृति, ययेदं सृष्टं यया मुह्यन्ति भूतानि च।

न चेश्वरस्यैव शुद्धेत्यशुद्धेति च प्रकृतिद्वयमस्ति, तत्राशुद्धप्रकृत्या जगत्सृष्ट्यादिकं करोति; शुद्धा तु ईश्वरस्य दिव्यमङ्गलविग्रहभूतेति वाच्यं, ईश्वरविग्रहस्याप्राकृतत्ववर्णनात्। न च अप्राकृतत्वं नामाशुद्धप्रकृत्यकार्यत्वमिति वाच्यं, तथा कल्पने प्रमाणाभावात्। ईश्वरस्य जीवभूतप्रकृतिरेका, भूम्याद्युपादानभूता प्रकृतिरन्येतीहैवोक्तत्वेन तृतीयप्रकृतिकल्पनस्याप्रमाणत्वात्तद्विरुद्धत्वाच्च। 'अप्राणो ह्यमनाश्शुभ्र' इत्यादिना ईश्वरस्य सशरीरत्वनिषेधेन विग्रहाभावाच्च सच्चिदानन्दमयेश्वरस्वरूपं मुक्त्वा सर्वस्यापि प्राकृतत्वेन तस्यैकस्यैवाप्राकृतत्वादप्राकृतं दिव्यमङ्गलं च स्वरूपमीश्वरस्य सच्चिदानन्दमेव न त्वन्यत्।

यस्तु वैकुण्ठादौ विष्ण्वादिदेहसङ्घस्स मायामय एव दृश्यत्वाज्जडत्वाच्च। तदुपासकानां च सरूपधर्मदेहप्राप्तिर्भवत्येव, न तु मुक्ति। अशरीरस्यैव मुक्तित्वात्। लिङ्गभङ्गो हि मोक्ष। तथा रेतोविसर्जनं कर्म मुमुक्षुभि ज्ञातव्यमिति यदुक्तं तद्विदुषा श्रवणानन्दायते। क्रिमिकीटपक्षिपश्वादिभिरपि स्वत एव ज्ञातस्य मैथुनस्य मुमुक्षुभिरपि ज्ञानं यत्नवचनात्। 'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये। ते ब्रह्म तद्विदु कृत्स्नमध्यात्मं कर्म चाखिल'मिति भगवद्वक्तानामेव ब्रह्मज्ञानवन्मैथुनकर्मज्ञानं नैनरेषामिति श्रीकृष्णाशयं वर्णितवतस्तव पाण्डित्यमहो! वस्तुतस्त्वेषाश एवासि। कथमन्यथा तवेदृशं पाण्डित्यम्? अथ वा मैथुनप्रियाणां भवतां मध्वानां चेदं वचनं युक्तमेव शिष्यस्त्रीबाहुमूलयोरशङ्खचक्राङ्कनवत्।

यच्च रेतोविसर्जनस्यैव भूतभावोद्भवकरत्वं, तदप्ययुक्तम्—जरायुजाण्डजस्वेदजोद्भिज्जाख्यचतुर्विधप्राणिमध्ये जरायुजाण्डजयो रेतोजत्वेपि स्वेदजोद्भिज्जयोस्तदभावात्। तथा अत्र देहे इति प्रत्यक्षदृश्यमानार्जुनादिदेहवाचिनोऽत्रेतिशब्दस्य इन्द्रादिवाचित्वमप्ययुक्तम्—इन्द्रादीनां परोक्षत्वात्। इन्द्रादिदेह इवार्जुनादिदेहेऽप्यात्मतयाऽवस्थितत्वेनेश्वरस्य न परित्यागे कारणमवात्।

अधिदैवतशब्दस्य अधिदैवतशब्दान्देवतोपरीत्यर्थमिद्धिरप्ययुक्ता—अधियज्ञ इत्यस्य च यज्ञाराध्य इत्यर्थोऽप्ययुक्तः—उपर्यर्थे आराध्यार्थे वाधिशब्दप्रयोगाभावात्।

'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ। चतुर्विधा भजन्ते मा'मिति भगवद्भजने चतुर्णामधिकारिणां सत्त्वेन त्रयाणामिति कथनं न्यूनमेवेति प्रागेवोक्तम् ॥४॥

अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम्।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥५॥

अन्तकाल इति। अन्तकाले च मरणकाले मामेव परमेश्वरं विष्णुं स्मरन् मुक्त्वा परित्यज्य कलेवरं शरीरं, यः प्रयाति गच्छति, स मद्भावं वैष्णवं तत्त्वं याति; नस्ति न विद्यतेऽत्रास्मिन्नर्थे संशयो याति वा नवेति ॥५॥

---

अन्तकाल इति। 'प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः' इति भगवतोक्ते 'प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभि'रित्यर्जुनेन पृष्टं, तत्रोत्तरमाह—अन्तकाल इति। परमेश्वरं विष्णुं प्रत्यगभिन्नं ब्रह्म; आत्मन एव व्यापकत्वाद्विष्णुत्वं, निरतिशयेश्वरत्वाच्च परमेश्वरत्वमिति विवेकः।

स्मरन् अहं ब्रह्मास्मीत्यनुसन्दधानस्सन्मनसेत्यर्थः। केवलमात्मस्वरूपं चिन्तयन्निति वा। मनो निर्वृत्तिकं विधाय तूर्ष्णीमात्मानमनुभवन्निति वा। प्रयाति गच्छति म्रियत इति यावत्। स्थूलशरीरत्यागपूर्वकप्रयाणस्यैव मरणत्वात्।

ननु तत्त्वविदः प्राणोत्क्रमणाभावेन गमनाभावात्प्रयातीत्ययुक्तमिति चेदुच्यते—प्रयातीति लोकसिद्धार्थानुवादमात्रम्। तथा च यत्तत्त्वविच्छरीरं मुक्त्वा प्रयातीति लोकैर्मन्यते स क्वापि न प्रयाति, किं तु सर्वतः पूर्णस्य निर्विशेषचिन्मात्रस्य ममात्मनो भावं तत्त्वं सच्चिदानन्दरूपं यातीति।

यद्वा शरीरं मुच्यतीत्यतोऽनतिरिक्तार्थमेव शरीरं मुक्त्वा प्रयातीति वाक्यम्। न च पुनरुक्तिः, वाचं वदति कार्यं करोतीत्यादिवददुष्टत्वात्। तथा च शरीरं मुक्त्वा यः प्रयातीत्यस्य यो म्रियत इत्येतावानेवार्थ इति सिद्धम्।

अथ वा प्रयातीत्यस्य म्रियत इत्यर्थः। प्रयाणकाल इत्यत्रत्यप्रयाणशब्दस्य मरणार्थदर्शनात्। मरणं च प्राणत्यागः। तथा च प्रयाति प्राणांस्त्यजतीति यावत्। लिङ्गशरीरात्मकत्वात्प्राणा उपलक्षणं लिङ्गशरीरस्य। एवं प्राणत्यागो लिङ्गशरीरत्याग इति सिद्धम्। तथा च यः कलेवरं स्थूलं मुक्त्वा प्रयाति लिङ्गं परित्यजति स मद्भावं ब्रह्मसायुज्यं याति निरुपाधिकस्यैवात्मनो ब्रह्मत्वम्। न च कारणशरीरसत्त्वात्कथं निरुपाधिकत्वमिति वाच्यं, कारणशरीरस्याज्ञानस्य नाशं विना लिङ्गनाशाभावाल्लिङ्गनाशेनैव कारणनाशस्य सिद्धत्वात्। नच स्थूलशरीरनाशादेव सूक्ष्मदेहसत्त्वेपि वैष्णवपदप्राप्तिर्भवतीति वाच्यं, 'स्वधर्मनिष्ठश्शतजन्मभिः पुमान्विरिञ्चितामेति ततः परं हि माम्। अव्याकृतं भागवतोऽथ वैष्णवः पदं यथाऽहं विबुधाः कलात्यये' इति भागवते रुद्रवचनात्। कलात्ययो लिङ्गभङ्गः तस्मिन् सत्येव वैष्णवपदप्राप्तिः। किंच सति लिङ्गशरीरे तत्तादात्म्याध्यासः स्यात्तत्तश्च संसारित्वं स्यात्, तस्मात्तन्नाशं विना कथमसंसारिब्रह्मभावप्राप्तिः?

न च सलिङ्गा एव मुक्तिक्षेत्रं वैकुण्ठलोकं गच्छन्तीति वाच्यं, तस्य वैकुण्ठस्य सगुणमुक्तिक्षेत्रत्वात्सत्यलोकत्वात्। नच सगुणमुक्तिरेवेह विवक्षितेति वाच्यं, मद्भावमिति ब्रह्मसायुज्यरूपनिर्गुणमुक्तिवर्णनात्। नच मद्भावो मत्स्वभावो मदाकार इति वाच्यं, निराकारस्येश्वरस्याकाराभावात्। नच

न मद्विषय एवायं नियमः किं तर्हि ?—

यं यं वापि स्मरन् भावं त्यजत्यन्ते कलेवरम् ।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥६॥

यं यमिति । यं यं वापि यं यं भावं देवताविशेषं, स्मरन् चिन्तयन्, त्यजति परित्यजत्यन्ते प्राणवियोगकाले कलेवरं शरीरं तं तमेव स्मृतं भावमेवैति नान्यं; कौन्तेय! सदा सर्वदा, तद्भावभावितस्तस्मिन् भावस्तद्भावः स भावितः स्मर्यमाणतया अभ्यस्तो येन स तद्भावभावितस्सन् ॥६॥

---

निराकारमपीश्वरमात्मानं यदाकारोपहितं स्मरति तदाकारं प्राप्नोतीति वाच्यं, तत्त्वविदा निराकारस्यैवात्मनस्सच्चिदानन्दरूपस्य स्मर्यमाणत्वात् । अतत्त्वविदो हि साकारमीश्वरं कल्पयित्वा ध्यायन्ति स्वारसिद्धे रूपे सति कल्पितरूपध्यायिनामतत्त्ववित्त्वं सर्वसम्प्रतिपन्नम् । नहि रज्जुं सर्पत्वेन ध्यातवान् पुरुषः रज्जुतत्त्वविदिति वक्तुं शक्यते । वास्तवस्वरूपवेत्तृत्वं हि तत्त्ववित्त्वम् । वास्तवं रूपं चात्मनस्सच्चिदानन्दमेव ।

तस्मात्साकारेश्वरध्यायिनां वैकुण्ठादिलोकगमनसम्भवेऽपि निराकारप्रत्यगभिन्नब्रह्मात्मध्यायिनां न वैकुण्ठादिलोकगमनसम्भवः-- श्रुतिस्मृत्यादिविरोधात्तथा च मरणकाले आत्मस्वरूपचिन्तकास्तत्त्वविदो मद्भावं ब्रह्मत्वमेव प्रयान्ति, न तु लोकान्तरम् ।

मद्भावमित्यत्रत्यस्य भावशब्दस्य च रूपार्थवर्णनमयुक्तं- भावशब्दादाकारार्थालाभात्, धर्मवाचित्वाद्भावशब्दस्य । न च निर्धर्मकस्यात्मनः कथं धर्म इति वाच्यं, स्वरूपस्यैव धर्मत्वादत्र । अत एव हि वैष्णवं तत्त्वमित्युक्तं भाष्यकृद्भिः । विष्णोरात्मन इदं वैष्णवं तत्त्वं स्वरूपं सच्चिदानन्दात्मकं याति ब्रह्मैव भवतीत्यर्थः ।

ननु पूर्वमेव ब्रह्मणस्सत आत्मनः कथं पुनर्ब्रह्मभाव इति चेन्नैवम्—पूर्वं नाहं ब्रह्मेति विपरीतज्ञानसत्त्वात्तस्य समूलस्य निवृत्तेरेवेह ब्रह्मभावप्राप्तित्वेन विवक्षितत्वात् ॥५॥

यं यमिति । मद्विषय एव आत्मविषय एव, भावः पदार्थः, देवताविशेष इन्द्ररुद्रादिः । प्रायेणास्तिकानामिन्द्रादित्यादिदेवतोपासकत्वादिदमुक्तम् । वस्तुतस्तु यं यं भावं पदार्थमात्रमित्येवार्थः । अन्ते मृगस्मरणेन भरतस्य मृगजन्मप्राप्तिदर्शनात् । कोऽसावन्तकालोऽत आह—प्राणवियोगकाल इति । प्राणवियोगोपलक्षितकाले इत्यर्थः । वस्तुतः कालस्यानन्तत्वादियमुक्तिः । परमार्थदशायामेव हि कालस्य नाशः । शरीरं स्थूलमित्यर्थः । एवकारार्थमाह—नान्यमिति । कौन्तेयेति सम्बुद्धिरित्याह— हे कौन्तेयेति । स्त्रीभ्यो ढक् । कुन्त्या अपत्यं कौन्तेयः । तस्मिन्निन्द्रादिदेवताविशेषे भावश्चित्तासक्तिः । भावितो वासितः । आहिताग्न्यादित्वाद्भावितशब्दस्य परनिपातः । भावितनद्भाव इत्यर्थः । सदा तद्भावभावितस्सन्नेव अन्ते यं यं भावं वापि स्मरन् कलेवरं त्यजति हेकौन्तेय! तं तमेवैति । सदा तद्भावभावनां विना अन्ते तद्भावस्मरणं न भवतीत्यत उक्तम्—सदा तद्भावभावित इति ।

न तु स्मृतभावप्राप्तौ सदा तद्भावभावनाकारणम् । यदन्ते भावनावशात्सुकृतवशाद्दुष्कृतवशाद्वा इन्द्रादिदेवतास्मरणं स्त्रीपश्वादिस्मरणं वा जायते पुंसस्तर्हीन्द्रादिलोकं प्राप्नोति स्त्र्यादिजन्म वा प्राप्नोतीति निष्कर्षः । न त्विन्द्रादिदेवभावापत्तिः- अनेकेन्द्रादिप्रसङ्गात् । एतेनान्ते विष्णुमूर्तिस्मरणाद्वैकुण्ठलोकप्राप्तिरित्यपि सिद्धम् । एतेन 'आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्ति'मित्यत्र मुक्तिशब्दो वैकुण्ठलोकपर एव, न तु ब्रह्मसायुज्यपर इति च सिद्धम् ।

ननु ब्रह्मसायुज्यमिति काचन मुक्तिर्नास्त्येव; वैकुण्ठलोकप्राप्तिरेव मुक्तिः; तत्र स्थितानामनन्तगरुडादिसूरीणां नित्यमुक्तत्वात्तल्लोकप्राप्तानामेव शुकादीनां मुक्तत्वव्यवहारात् । ब्रह्मसायुज्ये तु ब्रह्मणि जीवानां लयात्स्वनाशस्तस्यापुरुषार्थत्वमेव स्यात्; नापि नित्यानां जीवानां लयो भवितुमर्हति- 'निरञ्जनः परमं साम्यमुपै'तीति श्रुतेर्ब्रह्मसाम्यमेव जीवानां, न तु सायुज्यं; साम्यं च सच्चिदानन्दत्वात्मकं शुद्धसत्त्वात्मकशरीरवत्त्वं सर्वज्ञत्वादिकं चेति द्वैतिनां पूर्वपक्षः ।

अत्रोच्यते—मुक्तिर्नाम मोक्षः; परित्याग इति यावत् । कस्येत्याकांक्षायां न स्थूलशरीरस्य-तथात्वे नीवीमोक्षस्यापि मोक्षत्वापत्तेः । किं तु प्रियाप्रियस्पर्शस्य सुखदुःखादिद्वन्द्वस्येति यावत् । स च सशरीरस्य न सम्भवति- 'अशरीरं वा वसन्तं न प्रियाप्रिये स्पृशत' इति श्रुतेः । न च स्थूलशरीररहितस्य सम्भवतीति वाच्यं, स्वप्ने स्थूलशरीराभावेऽपि द्वन्द्वदर्शनात् । सुषुप्तौ स्थूलसूक्ष्मशरीरद्वयाभावे द्वन्द्वादर्शनाच्च । शरीरद्वयरहितस्यैव तत्सम्भवः । न हि मनःप्राणयोस्सतोः मनोधर्माणां कामसुखदुःखादीनां, प्राणधर्माणां क्षुत्तृडादीनां भवेदननुभवो स्मरणं वा । प्रियाप्रिययोरनुभववत्स्मरणमपि हि सुखदुःखावहम् । यद्यपि वैकुण्ठलोके अप्रियानुभवो नास्ति, तथाऽप्यप्रियस्यानुभूतस्य स्मरणमस्त्येव- मनसस्सत्त्वादिति कथं वैकुण्ठलोकस्य मुक्तिक्षेत्रत्वम्? सगुणमुक्तिक्षेत्रमिति तु सुखातिशयसद्भावादुपचारादुक्तम् । एवं वैकुण्ठलोके स्थूलसूक्ष्मशरीरद्वयसत्त्वेन जीवस्याशरीरत्वाभावात्प्रियाप्रियस्पर्शमोक्षो नास्त्येव । तव मते ब्रह्मसायुज्यं तु नास्त्येव । अथ 'अशरीरं वा वसन्त'मिति श्रुतेर्विषयाभावादप्रामाण्यमेव प्राप्तम् । तद्द्वयमुक्तमास्तिकानां तस्माच्छ्रुतिप्रामाण्यादस्ति तावदशरीरत्वं जीवानां, तदेवाशरीरत्वं ब्रह्मसायुज्यमित्युच्यते- शरीरासंस्पृष्टशुद्धचैतन्यस्यैव ब्रह्मत्वात् ।

नच जीवस्य ब्रह्मणि लयोऽपुरुषार्थ इति वाच्यं, चैतन्यरूपे जीवे अन्तःकरणविशिष्टत्वरूपजीवत्वस्यैव नाशः, नतु जीवस्येति स्वनाशाभावात् । अन्तःकरणराहित्यस्यैव ब्रह्मसायुज्यत्वान्न जीवानित्यत्वदोषप्रसक्तिः । ब्रह्माभिन्नत्वाज्जीवस्य । ब्रह्म हि नित्यमिति सम्प्रतिपन्नम् ।

'निरञ्जनः परमं साम्य'मित्यत्र च परमं निरतिशयं निरुपाधिकं वा साम्यं समत्वमेकत्वमभेदमिति यावत्, उपैतीत्यर्थात् । यत्सर्वदैकरूपं तद्धि समं, यदनेकरूपं तद्विषममिति समत्वस्यैकत्वात् । तस्माद्घटाकाशस्येव घटनाशेन महाकाशसाम्यं जीवस्याप्युपाधिनाशेन ब्रह्मसाम्यमिति सिद्धं ब्रह्मसायुज्यम् । नहि पूर्णस्य चैतन्यस्यावच्छेदकान्तःकरणनाशे जीवेश्वरभेदो भवितुमर्हति, येन जीवस्य ब्रह्मसायुज्यं न सिद्ध्येत् ।

नच कर्मज्ञानयोरेकपुरुषानुष्ठेयत्वासम्भवश्च प्रोक्त इति वाच्यं, कर्तृत्वाभिमानादिपूर्वककर्मनिष्ठाया ज्ञाननिष्ठायाश्चैकपुरुषानुष्ठेयत्वासम्भवस्यास्माभिरुक्तत्वात्, कर्तृत्वाभिमानादिरहितकर्मणामकर्मत्वस्यैव प्रत्युतोक्तत्वात् । तस्मात्तत्त्वविदाऽर्जुनेन जनकादिना वा क्रियमाणं कर्म न कर्म, वासुदेवेन क्रियमाण कर्मैवेति नास्ति कर्मज्ञानसमुच्चय ।

एतावताऽर्जुनं प्रति कृष्णस्यायमुपदेशस्सिद्ध - भो अर्जुन ! त्वं यद्यतत्त्वविर्त्तर्हि कर्मण्येव तवाधिकार इति कुरु स्वधर्मं युद्धम् । यदि तत्त्ववित्तर्हि मत्तत्त्वस्मरणमविहायैव लोकसंग्रहार्थं युद्धं कुरु स्वधर्मं जनकादिवदिति ।

नचार्जुनस्यासन्न्यासिन कथमात्मभजनमिति वाच्यं, क्षत्रियाणा सन्न्यासाश्रमस्वीकारस्यानावश्यकत्वाज्जनकादे सन्न्यासं विनापि ज्ञाननिष्ठत्वदर्शनाच्च ।

नच तत्त्वविदोऽर्जुनस्य ज्ञाननिष्ठायामेवाधिकारात्कर्मण्यनधिकारायुद्धय चेत्युक्तिरयुक्तेति वाच्यं, फलाभिसन्ध्यहङ्काररहितस्य युद्धस्याकर्मत्वेनास्मिन्नर्जुनस्याधिकारसत्त्वात् । नच तूष्णींभाव एवाकर्मेति वाच्यं, तस्यापि कर्मत्वस्य स्थापितत्वात्कर्मण्यकर्म य पश्येदिति श्लोके ।

नचैव ब्राह्मणानामपि गृहस्थानामस्त्यधिकारो ज्ञाननिष्ठायामिति वाच्यं, ब्राह्मणाना ज्ञाननिष्ठाधिकारसिद्धयर्थमेव सन्न्यासस्य श्रुतिभिर्विहितत्वात् ।

नच 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे'त्यर्जुनस्यापि सन्न्यासो विहित इति वाच्यं, सर्वपरिग्रहपरित्यागमात्रस्यैव तेन विधानात् । नच तं विनापि ज्ञाननिष्ठासिद्धौ तस्य विधान व्यर्थमिति वाच्यं, सति राज्यादिपरिग्रहे विषयव्याकुलचित्तस्यात्मनि मनस्समाधानं दुर्लभमित्यभिप्रेत्य तद्विधानात् । नच प्रकृते परिग्रहपरित्याग विनापि ज्ञाननिष्ठोपदिष्टेत्ययुक्तमिति वाच्यं, सत्यपि परिग्रहे जनकादिवच्चित्तविक्षेपाभावे परिग्रहपरित्यागस्यानावश्यकत्वात् । देहभृतावरेत्यादिसम्बोधनैरर्जुनस्य स्वोपदेशमहिम्ना जनकादितौल्यप्राप्तिरासीदिति भगवद्धृदयस्य ज्ञायमानत्वात् ।

भो अर्जुन ! यदि त्वं जनकादिवद्दृढबोधस्तर्हि सर्वधर्मपरित्यागमकृत्वैव मामनुस्मर युद्धय च, यद्यदृढबोधस्तर्हि तावद्युद्धय, पश्चात्सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज- इत्यर्जुनं प्रति कृष्णोपदेशसिद्धे ।

नचार्जुन तत्त्वविद् मत्त्वैव मामनुस्मर युद्धय चेत्युक्तं कृष्णेनेत्युक्तं प्रागिदानीं तु अदृढबोधं मत्वा सर्वधर्मा-परित्यज्येत्युच्यत इत्युच्यते कथमिद विरुद्धमिति वाच्यं, अर्जुनं निमित्तीकृत्य सर्वलोकोपकारार्थमस्य शास्त्रस्य प्रवृत्तत्वात् क्वचिदर्जुनस्य दृढबोधत्वेन क्वचिददृढबोधत्वेन च निर्देशस्सम्भवत्येव । दृढबोधानामदृढबोधाना च पुंसा शास्त्राधिकारिणा सत्त्वात् ।

तस्मात्तत्त्वविज्जनकादिदृष्ट्योक्तमिदं मामनुस्मर युद्धय चेति । यथा भगवता नारायणेन चतुर्मुखाय मामनुस्मरन् सृष्टिं कुरु भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचिदित्युक्त तद्वत् । अनन्तत्त्वविद क्षत्रियस्यार्जुनस्य ज्ञाननिष्ठाया स्थितस्यापि युद्धे प्रवृत्तिसम्भवत्येव जनकादिवद्ब्रह्मादिवच्च ।

यस्मादेवमन्त्या भावना देहान्तरप्राप्तौ कारणम्—

तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ।
मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥७॥

तस्मात्सर्वेषु कालेषु मामनुस्मर यथाशास्त्रं, युध्य च युद्धं च स्वधर्मं कुरु, मयि वासुदेवे अर्पिते मनोबुद्धी यस्य तव स त्वं मय्यर्पितमनोबुद्धिस्सन् मामेव यथास्मृतमेष्यस्यागमिष्यसि, असंशयः न संशयोऽत्र विद्यते ॥७॥

---

द्वैतिना तु नास्त्येव ब्रह्मसायुज्यं प्रत्यगभिन्नं ब्रह्मेति ज्ञानाभावादेषाम् । अत एव ते स्वदृष्ट्या ब्रह्मसायुज्याभावं ब्रुवन्ति यथा नास्तिकाः स्वदृष्ट्या ब्रह्माभावमिति संक्षेपः ॥६॥

तस्मादिति । तस्माच्छब्दार्थमाह—यस्मादित्यादिना । अन्त्यभावना मरणकालिकं स्मरणमित्यर्थः । यं यं वापि स्मरन्निति पूर्वोक्तानुगुण्यात् । अनुभवजन्यः स्मृतिहेतुः संस्कारो भावनेति न्यायशास्त्रम् । भावनाजन्यत्वाच्च स्मरणस्य भावनात्वेन व्यपदेश इह कृतः ।

यद्वा अन्तकाले स्थिता वासना स्मरणद्वारा देहप्राप्तौ कारणमिति बोध्यम् । तस्मादिति । अन्तकालोपलक्षितमत्स्मरणस्य मत्सायुज्यहेतुत्वादित्यर्थः । सर्वेषु कालेष्विति । अहोरात्रादिविभागापेक्षया बहुत्वम् । सर्वदापीत्यर्थः । सर्वदापि मयि भावे सत्येवान्ते मत्स्मरणं लभ्यते, न तु यदा कदापि वेति भावः । एवं मत्स्मरणमपरित्यजन्नेव शास्त्रविहितं स्वधर्मं युद्धं कुर्वित्याह—मय्यर्पितमनोबुद्धिर्युध्य चेति । शास्त्रमनतिक्रम्य यथाशास्त्रं शास्त्रसिद्धमित्यर्थः । शास्त्रं च दर्शितं- 'श्रेयान् स्वधर्मो विगुणः परधर्मा'दिति, क्षत्रियस्य युद्धं स्वधर्म इति च ।

ननु आत्मभजनलक्षणज्ञाननिष्ठाया सन्न्यासिनामेवाधिकाराद्ज्ञानिनां कर्मण्यनधिकाराच्च कथमर्जुनायोभयं कर्तव्यतयोपदिश्यते भगवता कर्म च ज्ञानं च सर्वेषु कालेषु मामनुस्मरेति, युद्ध्येति च । भिन्नपुरुषानुष्ठेयत्वं हि कर्मज्ञाननिष्ठयोर्दर्शितं प्राक् । नचैककालावच्छेदेन न दर्शितं तदिति वाच्यं, सर्वेषु कालेष्विति युद्धकालेऽपि भगवद्भजनस्य प्रोक्तत्वात् । नच युद्धातिरिक्तेषु सर्वकालेष्वित्युच्यत इति वाच्यं, मय्यर्पितमनोबुद्धिस्सन् युद्ध्येत्युक्तत्वात् युद्धकालेऽपि भगवद्भजनस्य कर्तव्यत्वापत्तेः । किंच कुरु कर्मैव तस्मात्त्वमिति पूर्वमुक्त्वा कथमधुना मामनुस्मर युद्ध्य चेति चकारेण कर्मज्ञानसमुच्चय उच्यते भगवता वा ? तस्मात्समुच्चयो भगवदभिमत एवेत्यनेन ज्ञायते मामनुस्मर युद्ध्य चेति विधानेनेति चेत्, नैतम्—अर्जुनमतत्त्वविच्वाद्ज्ञाननिष्ठायामनधिकारिणमभिप्रेत्य 'कुरु कर्मैव तस्मात्त्व'मित्युक्तं प्राक् । इदानीं तु स्वोपदेशमहिम्ना तत्त्वविदग्रेसरमर्जुनं मत्वा जनकादिवत्त्वं लोकसंग्रहार्थं कर्म कुरु, ज्ञाननिष्ठायां च वर्तस्वेत्युच्यते भगवतेति न पूर्वापरविरोधः । भाष्यनेन कर्मज्ञानसमुच्चयसिद्धि- मोक्षाय हि युध्य चेत्यनुक्तत्वात् । कर्मज्ञानसमुच्चय एव मोक्षफलको न तु केवलं ज्ञानमित्याकारकसमुच्चयवादो ऽस्माभिर्निराकृतः ।

नच कर्मज्ञानयोरेकपुरुषानुष्ठेयत्वासम्भवश्च प्रोक्त इति वाच्यं, कर्तृत्वाभिमानादिपूर्वककर्मनिष्ठाया ज्ञाननिष्ठायाश्चैकपुरुषानुष्ठेयत्वासम्भवस्यास्माभिरुक्तत्वात्, कर्तृत्वाभिमानादिरहितकर्मणामकर्मत्वस्यैव प्रत्युतोक्तत्वात् । तस्मात्तत्त्वविदाऽर्जुनेन जनकादिना वा क्रियमाणं कर्म न कर्म, वासुदेवेन क्रियमाणं कर्मैवेति नास्ति कर्मज्ञानसमुच्चयः ।

एतावताऽर्जुनं प्रति कृष्णस्यायमुपदेशस्सिद्धः- भो अर्जुन ! त्वं यद्यतत्त्ववित्तर्हि कर्मण्येव तवाधिकार इति कुरु स्वधर्मं युद्धम् । यदि तत्त्ववित्तर्हि मत्तत्त्वस्मरणमविहायैव लोकसंग्रहार्थं युद्धं कुरु स्वधर्मं जनकादिवदिति ।

नचार्जुनस्यासन्न्यासिनः कथमात्मभजनमिति वाच्यं, क्षत्रियाणां सन्न्यासाश्रमस्वीकारस्यानावश्यकत्वाज्जनकादेः सन्न्यासं विनापि ज्ञाननिष्ठत्वदर्शनाच्च ।

नच तत्त्वविदोऽर्जुनस्य ज्ञाननिष्ठायामेवाधिकारात्कर्मण्यनधिकाराद्युद्धय चेत्युक्तिरयुक्तेति वाच्यं, फलाभिसन्ध्यहङ्काररहितस्य युद्धस्याकर्मत्वेनास्मिन्नर्जुनस्याधिकारसत्त्वात् । नच तूष्णींभाव एवाकर्मेति वाच्यं, तस्यापि कर्मत्वस्य स्थापितत्वात्कर्मण्यकर्म यः पश्येदिति श्लोके ।

नचैवं ब्राह्मणानामपि गृहस्थानामस्त्यधिकारो ज्ञाननिष्ठायामिति वाच्यं, ब्राह्मणानां ज्ञाननिष्ठाधिकारसिद्ध्यर्थमेव सन्न्यासस्य श्रुतिभिर्विहितत्वात् ।

नच 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रजे'त्यर्जुनस्यापि सन्न्यासो विहित इति वाच्यं, सर्वपरिग्रहपरित्यागमात्रस्यैव तेन विधानात् । नच तं विनापि ज्ञाननिष्ठासिद्धौ तस्य विधानं व्यर्थमिति वाच्यं, सति राज्यादिपरिग्रहे विषयव्याकुलचित्तस्यात्मनि मनस्समाधानं दुर्लभमित्यभिप्रेत्य तद्विधानात् । नच प्रकृते परिग्रहपरित्यागं विनापि ज्ञाननिष्ठोपदिष्टेत्ययुक्तमिति वाच्यं, सत्यपि परिग्रहे जनकादिवच्चित्तविक्षेपाभावे परिग्रहपरित्यागस्यानावश्यकत्वात् । देहभृतांवरेत्यादिसम्बोधनैरर्जुनस्य स्वोपदेशमहिम्ना जनकादितौल्यप्राप्तिरासीदिति भगवद्धृदयस्य ज्ञायमानत्वात् ।

भो अर्जुन ! यदि त्वं जनकादिवद्दृढबोधस्तर्हि सर्वधर्मपरित्यागमकृत्वैव मामनुस्मर युद्धय च, यद्यदृढबोधस्तर्हि तावद्युद्धय, पश्चात्सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज- इत्यर्जुनं प्रति कृष्णोपदेशसिद्धेः ।

नचार्जुनं तत्त्वविदं मत्वैव मामनुस्मर युद्धय चेत्युक्तं कृष्णेनेत्युक्तं प्रागिदानीं तु अदृढबोधं मत्वा सर्वधर्मान्परित्यज्येत्युच्यत इत्युच्यते कथमिदं विरुद्धमिति वाच्यं, अर्जुनं निमित्तीकृत्य सर्वलोकोपकारार्थमस्य शास्त्रस्य प्रवृत्तत्वात् कचिदर्जुनस्य दृढबोधत्वेन कचिददृढबोधत्वेन च निर्देशसम्भवत्येव । दृढबोधानामदृढबोधानां च पुंसां शास्त्राधिकारिणां सत्त्वात् ।

तस्मात्तत्त्वविज्जनकादिदृष्टयोक्तमिदं मामनुस्मर युद्धय चेति । यथा भगवता नारायणेन चतुर्मुखाय मामनुस्मरन् सृष्टिं कुरु भवान् कल्पविकल्पेषु न विमुह्यति कर्हिचिदित्युक्तं तद्वत् । अतस्तत्त्वविदः क्षत्रियस्यार्जुनस्य ज्ञाननिष्ठायां स्थितस्यापि युद्धे प्रवृत्तिसम्भवत्येव जनकादिवद्ब्रह्मादिवच्च ।

न चैतावता कर्मज्ञाननिष्ठयोर्युगपदेकपुरुषानुष्ठेयत्वमागतमिति वाच्यं, ज्ञाननिष्ठपुरुषकृतकर्मणां कर्मत्वाभावात्। यथा सन्न्यासिकृतानां भिक्षाटनादिकर्मणां यथा वा वासुदेवकृतानां, दुष्टशिक्षणादिकर्मणामिति।

न चाहङ्कारमीति स्मरत कथं कर्मसु प्रवृत्तिरिति वाच्यं, 'प्रकृते क्रियमाणानि गुणै कर्माणीति पूर्वोक्तत्वेन प्रकृतिगुणैरेव कर्मणा क्रियमाणत्वान्न कर्मसु तत्त्वविद प्रवृत्ति। तत्त्वविद्धि आत्मा, आत्मा हि पूर्णोऽचल प्रवृत्तिनिवृत्त्यविषय। अज्ञो वा तत्त्वविदि तद्देहाद्याश्रयं कर्मारोपयति, यथा आत्मनि स्वदेहाश्रय भोजनादिकर्म। नैतावता कर्तृत्वप्रसक्तिस्तत्त्वविद, न ह्यज्ञजनारोपितनैल्येन गगनस्य नीलत्व प्रसज्यते। य एवंवित् स देहादिभि कर्म कुर्वन्नप्यकर्तैव। 'कुर्वन्नपि न लिप्यत' इतीहैवोक्तं हि। अत एव तत्त्वविदा कृत कर्माप्यकर्मैव- अबन्धकत्वादिति न तत्त्वविद कर्मण्यधिकार इति।

**नतु** अन्तकालोपलक्षितात्मस्मरणस्यैव मुक्तिहेतुत्वात्तस्य च सार्वकालिकात्मभजनलभ्यत्वान्मुमुक्षवे अर्जुनाय सर्वेषु कालेषु मामनुस्मरेत्येतावदेव वक्तव्यं, न तु युध्य चेति युद्धकरणस्यान्तकालिकात्मस्मरणाहेतुत्वादिति चेदुच्यते—नेह युद्धं कर्तव्यतयोपदिश्यते, किं तु युद्धादुपरमं माकार्षीरिति युद्धादुपरमस्याकर्तव्यत्वमुपदिश्यते निवृत्तिलक्षणत्वाद्गीताशास्त्रस्य। तस्माद्युध्यस्व विगतज्वर इत्यत्राचार्यैरेवैतज्ज्ञापितम्।

नन्वेवमपि अन्तकाले आत्मस्मरणलाभार्थं सर्वदा मामनुस्मरेत्येतावदेव वक्तव्य, न तु युद्धादुपरमोऽकर्तव्य इति चेत्सत्यं, आत्मस्मरणलाभार्थं युध्य चेति नोक्त, किं तु सर्वदाप्यात्मानं स्मरतोऽपि तव युद्धादुपरमादनुपरम एव श्रेयानैहिकप्रतिष्ठाहेतुत्वादित्युच्यते- 'शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण' इति हि प्रागेवोक्तम्।

न च मुमुक्षोस्तत्त्वविद किमैहिकप्रतिष्ठयेति वाच्यं, लोकसंग्रहार्थं मुमुक्षुणा तत्त्वविदापि प्रतिष्ठैव सम्पादनीया, न त्वप्रतिष्ठा, अन्यथा अल्पज्ञोऽपि तत्त्वविधोऽयमात्मनि सम्भाव्य विदुराहादिवदभक्ष्यभक्षणादिकं कुर्यात्तेन चाध पतेदेवं च लोकोपद्रवकारिण्येव स्यात्तत्त्वविद प्रवृत्ति। लोकानुग्रह एव कर्तव्यस्तत्त्वविदा वासुदेववत्।

न चैवं तत्त्वविदा ब्राह्मणेन गृहस्थेन लोकसंग्रहार्थं कर्मैव कर्तव्यं, न तु सन्न्यसितव्यमिति वाच्यं, लोकसंग्रहार्थं सन्न्यासस्यैव स्वीकर्तव्यत्वात्। उन्मार्गान्निवर्त्य शास्त्रविहितमार्गे प्रवर्तनं हि लोकस्य लोकसंग्रह। सन्न्यासस्तु नोन्मार्ग, किं तु विहितमार्ग एव- 'ब्राह्मणो निर्वेदमायात्, यदहरेव विरजेत्तदहरेव प्रव्रजे दित्यादिश्रुतिभ्य। स च सन्न्यास ज्ञानार्थमेव मुमुक्षोर्ब्राह्मणस्य विहित इति श्रुत्वा जन्मान्तरीयसन्न्यासाश्रमसामर्थ्यस्वेदान्तश्रवणादिनल्लब्धतत्त्वज्ञानोऽपि वामदेवादिवत्तत्त्वविद्गृहस्थ लोकसंग्रहार्थं सन्न्यासाश्रमं स्वीकृत्य वेदान्तश्रवणं गुरुसन्निधौ कुर्यादेव। यथा वा भगवत्पादश्रीशङ्कराचार्यास्तत एव तत्त्वविदोऽपि सन्न्यस्य श्रीभगवत्पूज्यगोविन्दपादगुरुसन्निधौ वेदान्तश्रवणमकुर्वन् तद्वदिति।

किंच—

अभ्यासयोगयुक्तेन चेतसा नान्यगामिना।
परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन्॥८॥

अभ्यासेति। अभ्यासयोगयुक्तेन मयि चित्तसमर्पणाविषयभूते एकस्मिन् तुल्यप्रत्य-

---

न च क्षत्रियादीनां विनैव सन्न्यासं ज्ञाननिष्ठाप्राप्तिर्ब्राह्मणस्य तु नेति किमपराद्धं ब्राह्मणेनेति वाच्यं, अतीव जन्मान्तरार्जितपुण्यातिशयवल्लभ्यत्वाद्ब्राह्मणत्वस्य महापुण्यो हि ब्राह्मणः। अत एव तस्य सन्न्यासाश्रमस्वीकारयोग्यता। सन्न्यासाश्रमो हि सर्वलोकवन्द्यः- यथा ब्राह्मणस्सर्ववर्णवन्द्यः। तत्त्वज्ञानमसम्पाद्य मृतस्याप्यस्य न यमदर्शनं, किं त्विन्द्रदर्शनमिति स्वर्गप्राप्तिरेव। अथ वा पुनर्ब्राह्मणजन्मप्राप्तिः, तत्त्वज्ञानसम्पादने च सन्न्यासाश्रमस्वीकारोऽन्तरङ्गसाधनं सति परिग्रहे चित्तविक्षेपाद्वेदान्तश्रवणासिद्धेरिति मुमुक्षोः परिग्रहपरित्याग आवश्यक एवेति कृतं ब्राह्मणेन महदेव सुकृतं न त्वपराद्धं- यत्सन्न्यासाश्रमस्वीकारयोग्यता ब्राह्मणस्य।

यस्तु ब्राह्मणस्सन्नपि परिग्रहपरित्यागं नेच्छति वैराग्याभावात्तस्य सन्न्यासाश्रमस्वीकारयोग्यतैव नास्ति। 'यदहरेव विरजेत्तदहरेव प्रव्रजे'दिति वैराग्यस्यैव सन्न्यासं प्रति हेतुत्वम्। एवं वैराग्यहीनत्वादिहामुत्रफलभोगकामपरवशस्य गृहस्थस्य कुतः पुनर्वेदान्तश्रवणप्रसक्तिः? 'अथातो ब्रह्मजिज्ञा'सेति साधनचतुष्टयसम्पन्नस्य हि ब्रह्मविचारेऽधिकार इत्युक्तं बादरायणेन।

य एवं गृहस्थश्शमदमादिसम्पत्त्यभावेऽपि कथञ्चित्कुतूहलितया वेदान्तश्रवणे प्रवर्तते, स हि स्वयमुन्मार्गे प्रवर्तमानः लोकं चोन्मार्गे प्रवर्तयतीति न तस्याचार आस्तिकैर्गृहीतुमुचितः। न च कुतूहलकृतमपि वेदान्तश्रवणमनर्थकमिति वाच्यं, वेदपाठवत्सुकृतहेतुत्वादेतत्संस्कारेण जन्मान्तरेऽपि सन्न्यासाश्रमस्वीकारसम्भवात्। सन्न्यासस्वीकारप्रतिबन्धकपापस्य निष्कामकर्मादिना नाशे सति सन्न्याससम्भवात्।

तस्मान्मुमुक्षोर्गृहस्थस्य ब्राह्मणस्य सन्न्यासाश्रमस्वीकारपूर्वकमेव ज्ञाननिष्ठायामधिकारः, सन्न्यासाभावे तु कर्मनिष्ठायामेव। क्षत्रियादीनां तु तत्त्वविदां विनापि सन्न्यासं ज्ञाननिष्ठायां कर्मनिष्ठायां वा स्वार्थे लोकसंग्रहार्थे वाऽधिकार इति सुस्थम्॥७॥

अथ यथाधिदैवतं पुरुषं चिन्तयति स तं यातीत्युच्यते—श्लोकद्वयेनाभ्यासेनेति, कविमिति च। हेपार्थ! यः अभ्यासयोगयुक्तेन नान्यगामिना चेतसा परम पुराणं कविं दिव्यं सर्वस्यानुशासितारं धातारमणोरणीयांसमादित्यवर्णं तमसः परस्तात्स्थितमिति शेषः। अचिन्त्यरूपं पुरुषमनुस्मरेत्, स तमनुचिन्तयन् याति; यः परमत्वादिविशेषणविशिष्टं पुरुषमनुध्यायति स तमेव पुरुषं यातीत्यर्थः।

अस्य च पुरुषस्येश्वरत्वादाह— मयीति: पुरुषे इत्यर्थः। समर्पणा समर्पणं विलक्षणप्रत्ययैर्विसजातीयज्ञानैरनन्तरितः अव्यवहितः तुल्यप्रत्ययानां सजातीयज्ञानानामावृत्तिरभ्यास एव लक्षणं स्वरूपं यस्य सः विलक्षणप्रत्ययानन्तरिततुल्यप्रत्ययावृत्तिरभ्यास। स च प्रकृते पुरुषविषय इत्यभिप्रेत्योक्तं—मयीति।

यावृत्तिलक्षणो विलक्षणप्रत्ययानन्तरितोऽभ्यासः । स चाभ्यासो योगः तेन युक्तं तत्रैव व्यापृतं योगिनश्चेतः तेन चेतसा नान्यगामिना नान्यत्र विषयान्तरे गन्तु शीलं अस्येति नान्यगामि तेन नान्यगामिना, परम निरतिशय पुरुष दिव्यं दिवि सूर्यमण्डले भवं, याति गच्छति, हेपार्थ ! अनुचिन्तयन् शास्त्राचार्योपदेशमनुध्यायन्नित्येतत् ॥८॥

किं विशिष्टं च पुरुषं यातीत्युच्यते—

कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ।
सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥९॥

कविमिति । कविं क्रान्तदर्शिनं सर्वज्ञ पुराण चिरन्तन अनुशासितारं सर्वस्य जगतः प्रशासितारं, अणोस्सूक्ष्मादप्यणीयांस सूक्ष्मतर, अनुस्मरेदनुचिन्तयेद्यः कश्चित्, स सर्वस्य कर्मफलजातस्य धातार विधातार विचित्रतया प्राणिभ्यो विभक्तार. अचिन्त्यरूपं नास्य रूपं नियतं विद्यमानमपि केनचिच्चिन्तयितु शक्यत इति अचिन्त्यरूपः तं, आदित्यवर्णं आदित्यस्येव

---

योगश्चित्तसमाधानमभ्यासरूपो योगोऽभ्यासयोग । तेन युक्तमभ्यासयोगयुक्तं तेन, अभ्यासयोगे व्यापृतेनेत्यर्थ इत्याह—तत्रैवेति । न अन्यगामि नान्यगामि नञर्थकनशब्देन समास , नञा सह समासे तु अनन्यगामीति स्यात् । अनुचिन्तयन्ननुसृत्य ध्यायन् । किमनुसृत्येत्यत आह—शास्त्राचार्योपदेशमिति । क्रान्तदर्शिनं दूरदर्शिन, फलितमाह—सर्वज्ञमिति । चिरन्तनमनादिमनुशासितारं नियन्तारम् ।

सूक्ष्माद्दुर्ज्ञेयादित्यर्थ । न त्वणुपरिमाणात्सूक्ष्मं परमाणुभूतमित्यर्थः । तथात्वे परमात्मनो विष्णोर्व्यापकत्वभङ्गप्रसङ्गात् । 'अणोरणीयान् महतो महीया'निति श्रुतिविरोधात् । न चाणोर्जीवात्सूक्ष्मतरमणीयासमिति वाच्यं, जीवस्याणुत्वे सावयवत्वप्रसङ्गात्ततश्चानित्यत्वप्रसङ्गात्सर्वगतत्वासम्भवप्रसङ्गाच्च । निराकृत एवायं प्रागेव जीवाणुत्ववाद । ईश्वरस्य परमाणुप्रायत्वे महतो महीयानिति श्रुतिविरोध , सर्वव्यापित्वाद्यनुपपत्तिश्चेत्यनुपदमेवोक्तम् ।

विचित्रतया विलक्षणत्वेन परस्परं भिन्नत्वेनेत्यर्थ । विभक्तारं विभज्य कृतवन्तम् । अयं प्राणी अस्मात्कर्मण इदं फलमनुभवत्विति व्यवस्थापूर्वकं कर्मफलानि निर्मितवन्तमित्यर्थः । अचिन्त्यरूपं चिन्तयितुमशक्यमचिन्त्यं रूपं विग्रहो यस्य तं हिरण्यश्मश्रुत्वादिविलक्षणसंस्थानविग्रहत्वात्केन चिच्चिन्तयितुं न शक्यते रूपमस्येत्यर्थ । प्रत्यक्षदृष्टं वस्तु चिन्तयितुं शक्यते, अदृष्टमपि दृष्टसरूपम् । इदं तु हिरण्यगर्भस्य रूपं शास्त्रैकगम्यत्वाद्दृष्टविलक्षणत्वाच्च चिन्तयितुं न शक्यत इत्यभिप्राय ।

न तु रूपस्याभावादचिन्त्यत्वमित्याह—विद्यमानमपीति । चैतन्यप्रकाश चैतन्यवत्सर्वमादित्यादिकं प्रकाशयतीति चैतन्यप्रकाश । यथा चैतन्यं सर्वं बोधयति तथा पुरुषस्य वर्णो हिरण्मयत्वात्सर्वं भासयति प्रदीपादिवदित्यर्थ । यथा आदित्यस्य वर्णस्सर्वजगदवभासक प्रत्यक्ष तथा पुरुषस्यापीत्यर्थ ।

नित्यचैतन्यप्रकाशो वर्णो यस्य तमादित्यवर्णं, तमसः परस्तादज्ञानलक्षणात् मोहान्धकारात् परं तं, अनुचिन्तयन् यातीति पूर्वेण सम्बन्धः ॥९॥

---

अज्ञानमूढहृदयस्य पुरुषध्यानासम्भवादाह—**तमसः परस्तात् स्थितमिति** । न चेश्वरस्य पुरुषस्य कथं रूपसद्भाव इति वाच्यं, मायया तत्सद्भावात् ।

अथ वा अस्मद्देहस्थित आत्मा यथा प्रत्यगात्मेति व्यवह्रियते, तथा देवस्य सूर्यस्य मण्डले स्थित आत्मा परमात्मेति व्यवह्रियते । अतोऽस्य परमपुरुषत्वं, प्रतीचस्तु पुरुषत्वमेवं सति सूर्यमण्डलान्तरस्थस्य पुरुषस्याधिदैवतस्य यद्वास्तवं रूपं नित्यचैतन्यात्मकं तदेवेह ध्येयत्वेन प्राप्तत्वेन चोच्यते । न तु कल्पितं हिरण्यश्मश्रुत्वादिविशिष्टं रूपम् । न चैवमचिन्त्यरूपमिति विरुद्ध्येदिति वाच्यं, यदस्य पुरुषस्य विद्यमानं पारमार्थिकं रूपं सच्चिदानन्दात्मकं तत्केनापि चिन्तयितुमशक्यमवाङ्मनसगम्यत्वादित्यविरोधात् । अत एवेदं तमसः परस्तात् स्थितम् । अज्ञानपारगमनं विना चैतन्यसाक्षात्कारासम्भवात् । अज्ञानमत्र समुद्रस्थानीयं, तन्नाशस्तु परपारस्थानीयः । यथा अन्धकारावृतचक्षुषो घटादिरप्रत्यक्षः तथा अज्ञानावृतचेतसः पुरुषोऽप्रकाशः । अत उक्तमज्ञानात्परतः स्थितमिति । पुरुषस्य स्वरूपमाह—**आदित्यवर्णमिति** । यथा आदित्यस्य वर्णोऽस्ति तथा पुरुषस्य नित्यचैतन्यप्रकाशोऽस्तीत्यर्थः । यथा आदित्यस्सर्वजगदवभासकत्वेन प्रकाशात्मकवर्णशाली तथा पुरुषस्सर्वजगदवभासकत्वेन प्रकाशात्मकचैतन्यशालीति यावत् । आदित्यस्य प्रकाशो दीप्तिः, पुरुषस्य प्रकाशस्तु चैतन्यं ज्ञानमिति विवेकः । अत एवोक्तं नित्यचैतन्यप्रकाश इति; नित्यचैतन्यात्मकः प्रकाश इत्यर्थः । अस्य परमपुरुषस्य चैतन्यरूपस्य कर्मफलविधातृत्वादिकं तु माययोपपद्यते । सूक्ष्मात्सूक्ष्मतरत्वं चास्मिन्नुपपन्नतरम् । हिरण्यश्मश्रुत्वादिविशिष्टपुरुषे तु नातीवोपपद्यते- साकारस्य दुर्ज्ञेयत्वासम्भवात् । अणोरणीयानिति श्रुतिश्च चैतन्यपरैव- साकारस्य पुरुषस्य महतो महीयस्त्वासम्भवात् । न चैवमध्यात्माधिदैवनयोरेकत्वमेवेति वाच्यं, इष्टापत्तेः । एक एव ह्यात्मा सूर्यमण्डलमध्यस्थः पुरुषोऽधिदैवतमिति, अस्मदादिदेहस्थः प्रत्यगात्माऽध्यात्ममिति चोच्यत इत्यौपाधिक एव ह्यध्यात्माधिदैवतयोर्भेदः ।

न च स्वान्तरस्थमात्मानं विहाय सूर्यान्तरस्थस्यात्मनश्चिन्तनं व्यर्थमिति वाच्यं, न व्यर्थम् । यस्सूर्ये भक्तः तस्य सूर्यभक्तिरूपप्रतिबन्धसद्भावात्प्रत्यगात्मोपासनं न घटते । स्वात्मभक्तस्यैव हि स्वात्मोपासनं घटते । तस्य सूर्यभक्तस्य मुमुक्षोरात्मनि प्रीतिं जनयितुं हितैषिणी श्रुतिः सूर्यबिम्बोपाधिकपुरुषोपासनं विहितवती । यथा महिषीस्नेहप्रतिबद्धस्य भिक्षोर्महिष्युपाधिकं ब्रह्मोपदिश्य गुरुस्तं भिक्षुमात्मनि व्युत्पन्नं चकार तद्वदिति । एतेन मुक्तिकामानां विष्णुरुद्रादिभक्तानामपि विष्णुरुद्रादिशरीरावच्छिन्न आत्मैवोपास्य; न तु शरीरमिति सिद्धम् ।

एवं सूर्यमण्डलस्थे पुरुषे चिन्त्यमाने सति तत्स्वरूपसाक्षात्कारो जायते, ततश्च स एव पुरुषस्सर्वगत इति स्वात्मनस्तत्पुरुषस्य चाभेदनिश्चयो जायते, ततश्च प्रत्यगभिन्नपरमात्मसाक्षात्काराद्ब्रह्मसायुज्यं प्राप्नोतीति भावः ।

किंच—

प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव।
भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥

प्रयाणेति। प्रयाणकाले मरणकाले मनसाऽचलेन चलनवर्जितेन भक्त्या युक्तः भजनं भक्तिः तया युक्तो योगबलेन चैव योगस्य बलं योगबलं समाधिजसंस्कारप्रचयजनितं चित्तस्थैर्यलक्षणं योगबलं तेन च युक्त इत्यर्थः। पूर्वं हृदयपुण्डरीके वशीकृत्य चित्तं तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तस्सन्, स एवं विद्वान् योगी 'कविं पुराण'मित्यादिलक्षणं तं परं परतरं पुरुषमुपैति प्रतिपद्यते दिव्यं द्योतनात्मकम् ॥१०॥

योगमार्गानुगमनेनैव ब्रह्मविद्यामन्तरेणापि ब्रह्माप्यत इत्येवं प्राप्ते, इदमुच्यते—पुनरपि वक्ष्यमाणेनोपायेन प्रतिपित्सितस्य ब्रह्मणो वेदविद्वदनादिविशेषणविशेष्यस्याभिधानं करोति भगवान्—

यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥११॥

यदिति। यदक्षरं न क्षरतीत्यक्षरं अविनाशि वेदविदो वेदार्थज्ञाः, वदन्ति 'तद्वा एत

---

अत्रायं विवेकः—यः परमात्मानं प्रत्यग्रूपेण भजमानस्सदा मरणकाले स्मरति, यश्च सूर्यमण्डलमध्यस्थपुरुषरूपेण स एवाहमिति भजमानोऽन्ते स्मरति तावुभावपि तत्त्वविदौ ब्रह्मभावं प्राप्नुतः यस्तु परमात्मानं हिरण्यश्मश्रुत्वादिविशिष्टसूर्यबिम्बस्थपुरुषरूपेण भजमानोऽन्ते स्मरति स हिरण्यगर्भलोकं प्राप्नोतीति ॥८-९॥

प्रयाणेति। एवं ज्ञानिनोऽन्ते कर्तव्यं प्रदर्श्य योगिनः प्रदर्शयति—प्रयाणेत्यादिना भजनमात्मस्वरूपानुसन्धानं पूर्वमादौ ततः पश्चान्नाड्या सुषुम्नया भूमिजय आसनजयः तत इन्द्रियमा[illegible] मनोजयाः क्रमशब्दार्थः। न केवलयोगिनः परमपुरुषसायुज्यप्राप्तिरित्याह—विद्वान् योगीति दीव्यतेर्द्योतनार्थकत्वादाह—दिव्यं द्योतनात्मकमिति। चैतन्यरूपमित्यर्थः। यद्यपि रोगार्त[illegible] म्रियमाणस्य योगिनो दुर्लभोऽयं योगस्तथापि योगिनो योगाभ्यासेन नीरोगत्वान्मृत्युहेतोः कस्यचिद्रोगस्य [illegible]त्पत्तेः प्राक्स्वयमेव मरणाय यतेत योगीति बोध्यम्। स्वाधीनमरणत्वाद्योगिनो न रोगोत्पत्तिरिति वा ॥१०॥

यदिति। वक्ष्यमाणेति सर्वद्वाराणीति श्लोकद्वये इति भावः। प्रतिपत्तुमिष्टं प्रतिपित्सि[तं] तस्य विशेष्यस्य ब्रह्मणोऽभिधानमिति सम्बन्धः। विशेष्यस्य विशिष्टस्येत्यर्थः। अभिधानं नाम ब्रो[illegible]त्येनदिति भावः। वेदविदां वदनं वचनमादिशब्दाद्यतिविशनब्रह्मचर्यचरणयोर्ग्रहणम्। 'स्थाणुर्भारवाहः किलाभूदधीत्य वेदं न विजानाति योऽर्थ'मिति श्रुतेः। अध्ययनविधेः फलवदर्थावबोधप[र]त्वादाह— वेदार्थज्ञा इति। 'सर्वे वेदा यत्पदमामन'न्तीति श्रुतेर्वेदार्थो ब्रह्म; तद्ज्ञा ब्रह्मविद इ[ति]

दक्षरं गार्गि ब्राह्मणा अभिवदन्ति' इति श्रुतेः, सर्वविशेषनिवर्तकत्वेन अभिवदन्ति 'अस्थूलमनण्वह्रस्वमदीर्घ'मित्यादिश्रुतेः । किंच विशन्ति प्रविशन्ति सम्यग्दर्शनप्राप्तौ सत्यां यद्यतयः यतनशीलाः सन्न्यासिनो वीतरागाः वीतो विगतः रागो येभ्यस्ते वीतरागाः । यच्चाक्षरमिच्छन्तः ज्ञातुमिति वाक्यशेषः । ब्रह्मचर्यं गुरौ चरन्ति आचरन्ति, तत् ते पदं तदक्षराख्यं पदं पदनीयं ते तव, संग्रहेण संग्रहः संक्षेपः तेन संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥११॥

'स यो ह वै तद्भगवन्मनुष्येषु प्रायणान्तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयतीति, तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कार' इत्युपक्रम्य 'यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत' इत्यादिना वचनेन 'अन्यत्र

यावत् । हेगार्गि ! तत्प्रसिद्धमक्षरमेतत्पूर्वोक्तं ब्रह्मैवेति ब्राह्मणाः ब्रह्मवेत्तारोऽभिवदन्ति अभितो वदन्तीति श्रुत्यर्थः । सर्वेभ्यो विशेषेभ्यो निवृत्तं निर्गतं सर्वे विशेषा निवृत्ता यस्मात्तदिति वा सर्वविशेषनिवृत्तं तत्त्वेन निर्विशेषत्वेनेत्यर्थः । निर्विशेषत्वे ब्रह्मणः श्रुतिं प्रमाणयति—अस्थूलमिति । स्थौल्यसौक्ष्म्यह्रस्वत्वदीर्घत्वादिरहितमित्यर्थः । प्रविशन्ति सायुज्यं प्राप्नुवन्तीत्यर्थः । कदेत्यत आह—सम्यग्दर्शनप्राप्ताविति । ब्रह्मात्मसाक्षात्कारे सतीत्यर्थः । मोक्षाय यतनशीलत्वमिहामुत्रार्थफलभोगविरक्तानामेव सम्भवति, न त्वविरक्तानाम् । ते च विरक्तास्सन्न्यासिन एवेत्यभिप्रेत्याह—सन्न्यासिन इति । रागो दृष्टश्रुतविषयासक्तिः । वाक्यशेष इति । यदक्षरमिच्छन्त इति वाक्ये ज्ञातुमिति शेष इत्यर्थः । ब्रह्मचर्यं वेदाध्ययनादिकं गुरौ गुरुसन्निधावित्यर्थः । चरन्ति, अर्थाद्ब्रह्मचारिणः; यद्वा ब्रह्मजिज्ञासव । पदनीयं प्राप्यं ब्रह्मेति यावत् । तस्यैवापुनरावृत्तित्वेन मुमुक्षुभिः प्राप्यत्वात् । प्रवक्ष्ये इत्युत्तमपुरुषनिर्देशादहमित्यस्याक्षेपः । कथयिष्यामीति पर इत्यादिश्लोकद्वयेनेति भाव । वेदविदो यदक्षरं वदन्ति वीतरागा यतयो यद्विशन्ति यदिच्छन्तः कुशला ब्रह्मचर्यं चरन्ति तत्पदं ते संग्रहेण प्रवक्ष्ये इत्यन्वयः ॥११॥

ननु प्रत्यग्रूपेण पुरुषरूपेण च परमात्मनो भजनमुक्तं, प्रयाणकाले च तत्स्मरणात्सायुज्यलाभश्चोक्तः तस्मात्सर्वद्वाराणीत्याद्युत्तरग्रन्थारम्भो व्यर्थ इति शङ्कायां, न व्यर्थः उत्तमाधिकारिणां पूर्वोक्तविधया ब्रह्मप्रतिपत्तिसम्भवेऽपि मन्दमध्यमाधिकारिणां तदसम्भवात्तेषां गतिप्रदर्शनार्थोऽयमुत्तरग्रन्थ इत्याह—स य इत्यादिना ।

'स य इत्यादिरुपनिषत् । अस्या अयमर्थः—हे भगवन् मनुष्येषु मध्ये यः प्रायणान्तं मरणावधि ओंकारमभिध्यायीत स तेन ओंकारध्यानेन कतमं लोकं जयति साधयति ? प्राप्नोतीति यावत् । तस्मै एवं पृष्टवते शिष्याय स गुरुरुवाच- हे सत्यकाम ! ओंकार इति यत्तदेतत्परं ब्रह्म अपरं ब्रह्म च भवतीति शेषः । इत्युपक्रम्य आरभ्य यः पुनरेतं परं पुरुषं त्रिमात्रेण अकारोकारमकाररूपमात्रात्रयवता प्लुतस्वरेणेति ओमित्येकेनाक्षरेण वर्णेन अभिध्यायीत स सामभिः ब्रह्मलोकमुन्नीयते प्राप्यते । अन्यत्र धर्मादधर्मरहितमन्यत्राधर्माद्धर्मरहितम् । आमनन्ति वदन्ति तपोभिः कृच्छ्रचान्द्रायणादिभिश्चित्तशुद्धिद्वारा

-धर्मादन्यत्राधर्मा'दिति चोपक्रम्य 'सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति, यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्' इत्यादिभिश्च वचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्रतिपत्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारस्योपासनं कालान्तरे मुक्तिफलमुक्तं यत्तदेवेहापि 'कविं पुराणमनुशासितारं' 'यदक्षरं वेदविदो वदन्ति' इति चोपन्यस्तस्य च परस्य ब्रह्मणः पूर्वोक्तरूपेण प्रतिपत्त्युपायभूतस्योङ्कारस्य कालान्तरमुक्तिफलमुपासनं योगधारणासहितं वक्तव्यं प्रसक्तानुप्रसक्तं च यत्किञ्चिदित्येवमर्थ उत्तरो ग्रन्थ आरभ्यते—

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥१२॥

सर्वेति । सर्वद्वाराणि सर्वाणि च तानि द्वाराणि च सर्वद्वाराणि उपलब्धौ, तानि सर्वाणि संयम्य संयमनं कृत्वा, मनो हृदि हृदयपुण्डरीके निरुध्य निरोधं कृत्वा- निष्प्रचारमापाद्य, तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्या ऊर्ध्वमारुह्य मूर्ध्न्याधायात्मनः प्राणं आस्थितः प्रवृत्तः योगधारणां धारयितुम् ॥१२॥

---

ब्रह्मज्ञानसम्भवात्तपांसि सर्वाणि च यद्वदन्तीत्युक्तं किं तत्पदमत आह श्रुतिः—ओमित्येतदिति ।

वाचकरूपेणेति । वाचकत्वरूपेणेत्यर्थः । प्रतीकरूपेणेति । प्रतीकमारोपालम्बनं तद्रूपेणेत्यर्थः । यथा प्रतिमा विष्ण्वादिदेवतारोपालम्बनं तद्वदोंकारोऽपि परब्रह्मारोपालम्बनमित्यर्थः । ब्रह्मणो वाचकत्वात्प्रतीकत्वाच्च मन्दमध्यमबुद्धीनां ब्रह्मप्रतिपत्तौ साधनमोंकार इति तस्योपासनं च ब्रह्मलोकप्राप्तिद्वारा क्रममुक्तिफलकमिति च श्रुत्योक्तम् । यत् तदेव इहापि गीताशास्त्रेऽपीत्यर्थः । श्रुत्यर्थविवरणपरत्वाद्गीताशास्त्रस्येति भावः । पूर्वोक्तरूपेण श्रुत्युक्तरूपेणेत्यर्थ । वक्तव्यं भगवतेति शेषः । अयं भावः—ओमित्येतत् शब्दतोऽर्थतश्च परमपरं चेति द्विविधं ब्रह्म; तत्र शब्दतोऽपरं ब्रह्म, अर्थतस्तु परं ब्रह्मेति विवेकः । शब्दस्य ब्रह्मप्रतीकत्वादपरब्रह्मत्वमर्थस्य ब्रह्मत्वात्परब्रह्मत्वम् । तत्र ओमित्येतस्य परब्रह्मणो भजनं सायुज्यलाभश्च पूर्वमुक्तं तच्चोत्तमाधिकारिविषयम् । अथ ओमित्येतस्य अपरब्रह्मणो ब्रह्मवाचकस्य त्रिमात्रस्योंकारस्य शब्दस्य भजनं ब्रह्मलोकप्राप्तिद्वारा क्रममुक्तिश्च वक्ष्यते । तच्च मन्दमध्यमाधिकारिविषयमिति ।

प्रसक्तानुप्रसक्तं प्रसङ्गादागतमित्यर्थ । किञ्चिदिति । ब्रह्मभुवनादयः पुनरावर्तिन इत्यादिकमित्यर्थः ।

सर्वेति । द्वाराणि साधनानि करणानीति यावत् । कुत्र तदाह—उपलब्धाविति । विषयानुभवे इत्यर्थः । रूपशब्दादिविषयानुभवसाधनचक्षुःश्रोत्रादिद्वाराणि नियम्येति यावत् । हृदयपुण्डरीके पुण्डरीकाकारे हृदयकोशे निष्प्रचारमापाद्य निर्वृत्तिक विधाय तत्र हृदि वशीकृतेन स्थिरीकृतेनेत्यर्थः । मनसा महेति शेष । मूर्ध्नि ब्रह्मरन्ध्रे आधाय निधाय आस्थितः धारयितुं प्रवृत्तः ॥१२॥

तत्रैव च धारयन्—

ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्।
यः प्रयाति त्यजन् देहं स याति परमां गतिम्॥१३॥

ओमिति। ओमित्येकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमोङ्कारं व्याहरन् उच्चारयन् तदर्थभूतं मामीश्वरमनुस्मरन् अनुचिन्तयन् यः प्रयाति म्रियते स त्यजन् परित्यजन् देहं शरीरं 'त्यजन् देह'मिति प्रयाणविशेषणार्थं देहत्यागेन प्रयाणमात्मनः, न स्वरूपनाशेनेत्यर्थः। स एवं याति गच्छति परमां प्रकृष्टां गतिम्॥१३॥

किंच—

अनन्यचेताः सततं यो मां स्मरति नित्यशः।
तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः॥१४॥

अनन्येति। अनन्यचेताः नान्यविषये चेतो यस्य सोऽयमनन्यचेताः, योगी सततं सर्वदा यो मां परमेश्वरं स्मरति नित्यशः। सततमिति नैरन्तर्यमुच्यते; नित्यश इति दीर्घ-

---

ओमिति। तत्रैव मूर्ध्न्येव धारयन् प्राणानिति शेषः। ब्रह्मवाचके ओंकारे ब्रह्मशब्दो लाक्षणिक इत्याह—ब्रह्मणोऽभिधानभूतमिति। वस्तुतो ब्रह्मणि वाच्यवाचकभावाभावादाह—अभिधानभूतमिति। अभिधानतुल्यमित्यर्थः। ब्रह्मणो वाचकमिव स्थितमिति यावत्। तदर्थभूतमोंकारवाच्यम्। प्रयाणविशेषणार्थमिति देहत्यागरूपं मरणं प्रपद्यत इत्यर्थः। तदेवाह—देहेति। देहत्यागेनैवात्मनो मरणं, न तु स्वरूपनाशेन- यथा देहस्य स्वरूपनाशेन मरणं तद्वन्नेत्यर्थः। स एवं मृत इति शेषः। गम्यत इति गतिः प्राप्यस्थानं हिरण्यगर्भलोकमिति यावत्। स्वर्गादिलोकापेक्षया तस्य प्रकृष्टत्वं बोध्यम्। अथ वा हिरण्यगर्भलोकप्राप्तिद्वारा प्रकृष्टां गतिं मुक्तिं यातीति- कालान्तरमुक्तिफलत्वादोंकारोपासनस्य। न च ओंकारोपासकस्यापीश्वरस्मरणसत्त्वान्मुक्तिरेव स्यादिति वाच्यं, परोक्षेश्वरस्मरणमेव तस्य, न प्रत्यगभिन्नेश्वरस्मरणमिति कृत्वा भिन्नेश्वरस्मरणस्य मुक्त्यहेतुत्वात्। मामनुस्मरन्निति निर्देशाद्वयं योगी ओंकारं वाचकरूपेणोपास्ते, न तु प्रतीकरूपेणेति ज्ञायते। यः प्रतीकरूपेणोपास्ते ओंकारं तस्य हि ओंकार एव ब्रह्मबुद्धिः। अन्नादौ सालग्रामादौ वा ब्रह्मबुद्धिवद्विष्ण्वादिबुद्धिवच्चेति न तस्यास्त्योंकारातिरिक्तेश्वरस्मरणम्।

सर्वद्वाराणि संयम्य मनः हृदि निरुध्य च आत्मनः प्राणं मूर्ध्न्याधाय योगधारणामास्थितस्सन् मम ओमित्येकाक्षरं व्याहरन् मामनुस्मरन् यः देहं त्यजन् प्रयाति स परमां गतिं यातीति श्लोकद्वयस्यान्वयः। अक्षरशब्दोऽत्र वर्णवाच्येव- प्रणवाभिधायकत्वादिति॥१३॥

अनन्येति। अन्यस्मिन् विषये चेतो यस्य सोऽन्यचेताः स न भवतीत्यनन्यचेताः; विषयानासक्तचित्त इत्यर्थः। नित्यश इत्यनेन षण्मासान् संवत्सरं वेति दीर्घकालत्वं नोच्यत इत्यन्वयः।

कालत्वमुच्यते । न षण्मासं संवत्सरं वा, किं तर्हि ? यावज्जीवं नैरन्तर्येण यो मां स्मरतीत्यर्थः । तस्य योगिनः, अहं सुलभः सुखेन लभ्यः, हे पार्थ ! नित्ययुक्तस्य सदा समाहितचित्तस्य योगिनः । यत एवमतः अनन्यचेतास्सन् मयि सदा समाहितो भवेत् ॥१४॥

यत एवमिति । यस्मादेव नित्यशो मां स्मर्तुमदेकतानचित्तस्य योगिनस्सुलभोऽहमतस्तस्मादित्यर्थः । अनन्यचेता विषयानासक्तचित्तः । समाहितो मदेकतानचित्तः भवेन्मुमुक्षुरिति शेषः ।

एतच्छ्लोकोक्तमीश्वरस्मरणं यद्यहं ब्रह्मास्मीत्याकारकं तर्हि साक्षान्मुक्तिरेव स्मर्तुः, यदि तु परोक्षेश्वरस्मरणं तर्हि क्रममुक्तिरिति बोध्यम् ।

यद्वा मन्दबुद्धीनामोङ्कारोपासनं कालान्तरमुक्तिफलकं सर्वद्वाराणीति श्लोकद्वयेनोक्तम् । मध्यमबुद्धीनां तु अहं ब्रह्मास्मीत्युपासनमिदं विधीयते, यस्य मुमुक्षोर्बहुवारं वेदान्तश्रवणे कृतेऽपि अहं ब्रह्मास्मीति ज्ञानं न जायते प्रतिबन्धादिबाहुल्यात् स सर्वदाप्यहं ब्रह्मास्मीति जपेन्मन्त्रवत् । तेन च सर्वप्रतिबन्धक्षये इहैव जन्मनि मुक्तिर्भवेत्प्रतिबन्धशेषे तु कालान्तरे मुक्तिः । यस्य मुमुक्षोर्बुद्धिमान्द्याद्वेदान्तश्रवणेपि नाधिकारस्स ओङ्कारोपासनं कुर्यादिति भावः ।

एवं मन्दाधिकारिणां मध्यमाधिकारिणां च ब्रह्मप्राप्त्युपायतया ओङ्कारोपासनमहं ब्रह्मास्मीत्युपासनं च यथाप्रतिज्ञमुपदिष्टं भगवता ।

यत्तु रामानुजः—अभ्यासयोगयुक्तेनेत्यादिना ऐश्वर्यार्थिनामुपासनप्रकारोऽन्त्यप्रत्ययप्रकारश्चोक्तः, यदक्षरमित्यादिना कैवल्यार्थिनां, अनन्यचेता इत्यनेन तु ज्ञानिनामिति, तत्तुच्छम्—ऐश्वर्यार्थिनां परमपुरुषप्राप्त्यसम्भवात्, परमं पुरुषं दिव्यं यातीति स तं परं पुरुषमुपैति दिव्यमिति च परमपुरुषप्राप्तेरुक्तत्वात् । नच परमपुरुषप्राप्तिरिह परमपुरुषैश्वर्यप्राप्तिरेवेति वाच्यं, मुख्यार्थपरित्यागस्यान्याय्यत्वाल्लाक्षणिकार्थकल्पनस्यायुक्तत्वात् । अमीषां श्लोकानामैश्वर्यार्थिपरत्वे प्रमाणाभावात् । ऐश्वर्यार्थी भगवद्भक्तः परं पुरुषमुपैतीति मूले सति ऐश्वर्यार्थिनः परमपुरुषप्राप्त्यभावरूपमुख्यार्थबाधेन तादृशलाक्षणिकार्थः कल्प्येत, नतु तथा मूलमस्ति ।

किंच- ऐश्वर्यार्थिनः पुनरावृत्तिं स्वयमेव वक्ष्यति परमपुरुषश्चात्र विष्णुरेव । दिव्यं मामिति वचनादिति त्वयैवोक्तत्वात् । विष्णोरैश्वर्यप्राप्तिश्च विष्णुसारूप्यं मत्समानाकारो भवतीति त्वयैवोक्तत्वात् । इदं च सारूप्यं विष्णुलोकं गतानामेव भवितुमर्हति- तत्र स्थितानामेव पुरुषाणां शङ्खचक्रचतुर्भुजादिमत्त्वश्रवणात् । स च विष्णुलोकोऽपुनरावर्त्यैव तव मत इति कथमैश्वर्यार्थिनां विष्णुभक्तानां विष्णुसारूप्यं गतानां पुनरावृत्तिः ? तव मते सायुज्यस्याभावात् । सालोक्यसारूप्यसामीप्यानामेव मुक्तित्वाद्यदि सारूप्यं प्राप्तस्य पुनरावृत्तिस्तर्हि सालोक्यं सामीप्यं च प्राप्तानां पुनरावृत्तिस्स्यादित्यपुनरावृत्तिपदस्यैवाभावप्रसङ्गः ।

मामुपेत्य तु कौन्तेयेत्यस्य मत्सायुज्यं प्राप्येत्यर्थवादे तव स्वमतभङ्गः, परमतप्रवेशश्च । मल्लोकमुपेत्येत्यर्थवादे विष्णुसारूप्यं प्राप्तानामैश्वर्यार्थिनां पुनरावृत्तिर्न स्यादिति व्याघातः । अत उभयतः पाशा रज्जुरिव तव । विष्णुलोकस्यापि पुनरावर्तित्वे 'आब्रह्मभुवनाल्लोका' इति न सङ्गच्छते । ब्रह्म-

लोकादुपरितनस्यापि विष्णुलोकस्य पुनरावर्तित्वात्। न चैश्वर्यार्थिनश्चतुर्मुखादिलोकान् प्राप्य पुनरावर्तन्त इति वाच्यं, ऐश्वर्यार्थिनामपि विष्णूपासकानां चतुर्मुखादिलोकप्राप्तेरयुक्तत्वात्परमं पुरुषं दिव्यं यातीति विष्णुलोकप्राप्तेरेव युक्तत्वात्, त्वया तथैवोक्तत्वात्।

तस्माद्विष्णुभक्तानामप्यैश्वर्यार्थिनां न विष्णुलोकप्राप्तिः, नापि विष्णुसारूप्यप्राप्तिः, किं तर्हि मनुष्यलोकप्राप्तिरथ वा स्वर्गलोकप्राप्तिः। ततश्च पुनरावर्तितैव तेषाम्।

यदि तु वैकुण्ठैश्वर्यार्थिनस्ते तर्हि तेषां विष्णुलोकप्राप्तिरपुनरावृत्तिश्च। इदमेतेषां वैकुण्ठैश्वर्यार्थित्वं न सकामत्वरूपं मोक्षकामत्ववत्, किं तर्हि निष्कामत्वरूपमेव। एवं निष्कामानां मोक्षकामानां विष्णुलोकप्राप्तिरपुनरावृत्तिश्चोचितैव। एत एव हि कैवल्यार्थिनः। कैवल्यं हि मोक्षः। मोक्षश्च वैकुण्ठप्राप्तिरेव मम मते। ज्ञान्यपि कैवल्यार्थ्येवेति न तयोः पृथक्करणमुचितम्।

नच कैवल्यमात्मस्वरूपं तत्कैवल्यार्थिभिः प्राप्यते, ज्ञानिना तु परमात्मा प्राप्यत इति भेदोऽस्तीति वाच्यं, यत्कैवल्यार्थिना प्राप्यते तदात्मस्वरूपं कैवल्यार्थ्येवेति कथमात्मन एव प्राप्तृत्वप्राप्यत्वे? कथं वा नित्यसिद्धस्यात्मस्वरूपस्य पुरुषार्थत्वम्? कथं वा केवलस्यात्मनः परमात्मभेदः? कथं वा ज्ञानिनः परमात्मप्राप्तिः? सत्यात्मपरमात्मभेदे।

नच क्षीरनीरन्यायेनात्मपरमात्मनोर्संयोग इति वाच्यं, निरवयवत्वादुभयोः। अवयवसंयोगपूर्वको ह्यवयविसंयोगः। नापि क्षीरनीरयोरिवात्मपरमात्मनोर्ज्ञानैकाकारयोरस्ति कश्चिद्विशेषः, येनायमात्माऽयं परमात्मेति व्यवहारः स्यात्। यदि क्षीरे नीरमिव परमात्मन्यात्मा निलीय वर्तेत तर्हि जीवस्यासौ निरयनावस्थानपुरुषार्थः- स्वरूपस्यैव लीनत्वात्।

नच जीवः परमात्मनि प्रविश्यानन्दमनुभवतीति वाच्यं, परिपूर्णेऽनवकाशे चैतन्यघने परमात्मनि जीवस्य प्रवेष्टुमवकाशस्यैवाभावात्। सावकाशत्वे तु परमात्मनोऽपूर्णत्वं चलनं च स्यात्। तदेतदखिलं श्रुतिविरुद्धं गीताशास्त्रविरुद्धं च। 'पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' 'अचलोऽयं सनातन' इत्यादिशास्त्रात्।

तस्माद्ज्ञानिकैवल्यार्थिनोर्नास्ति फलतः कश्चिदपि भेदः। ब्रह्मण एव तदुभयप्राप्यत्वात्। नच नित्याप्तस्य ब्रह्मणः कथं प्राप्यत्वमिति वाच्यं, हिरण्यनिधिदृष्टान्तेन नित्याप्तमपि ब्रह्म माययाऽप्राप्तमिव भाति यस्मात्तस्माद्ज्ञानेन तत्प्राप्तिव्यपदेशः।

किंच- 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन!, मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते' इति भगवत्प्राप्तेरेवापुनरावर्तित्वमुक्तं न स्वात्मप्राप्तेः। यदि भगवद्भिन्न आत्मा तर्हि तत्प्राप्तिः पुनरावर्तिन्येव स्यात्।

न 'चाव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिं, यं प्राप्य न निवर्तन्ते' इत्यात्मप्राप्तेरपुनरावर्तित्वं वक्ष्यत इति वाच्यं, परमात्मवाचित्वादक्षरशब्दस्य- 'एतस्य वा अक्षरस्य प्रशासने गार्गि! सूर्याचन्द्रमसौ

तत्र सौलभ्येन किं स्यादित्युच्यते, शृणु तन्मम सौलभ्येन यद्भवति—

मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ।
नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥१५॥

मामिति । मामीश्वरमुपेत्य मद्भावमापद्य पुनर्जन्म पुनरुत्पत्तिं नाप्नुवन्ति । न प्राप्नु-

---

विधृतौ तिष्ठत' इति श्रुते, 'यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इति वाक्यशेषाच्च विष्णुधाम्न एवापुनरावर्तित्वम् ।

अपि च यथाशत्रुभिरपहृत राज्य राजा पुनर्भगवदनुग्रहादिना प्राप्नोति तथा कामक्रोधादिभिरपहृतमात्मस्वरूपं भगवदनुग्रहादिना जीव पुन प्राप्नोतीति हि तवाशय । [illegible] न सङ्गच्छते- राज्ञ पृथग्राज्यमिव जीवात्पृथगात्मस्वरूप यदि स्यात्तर्ह्ययमुपपद्येत, न त्वेतदस्ति- अपृथक्सिद्ध ह्यात्मन सच्चिदानन्दात्मक स्वरूप सच्चिदानन्दातिरिक्तस्यात्मवस्तुन एवाभावात् । अत एव हि तस्य स्वरूपमिति निर्देश । यथा घटस्य कम्बुग्रीवत्वादिक स्वरूपं तत्स्वरूपव्यतिरेकेण घटाभावश्च । राज्ञो राज्य तु न स्वरूप, किं तु अतिरिक्तमेव । तस्मात्मात्मस्वरूपस्यान्येनापहरणमपहृते तस्मिन्नात्मनाशप्रसङ्गात् । नापि पुनस्तत्प्राप्ति अनित्यत्वप्रसङ्गात । यद्धि प्राप्यते तदुपायसाध्यत्वादनित्यमेव- कार्यानित्यत्वस्य सम्प्रतिपन्नत्वात् ।

न च प्रकृतिसंसृष्टेनात्मना प्रकृतिवियुक्तत्वमाप्यत इति वाच्य, असङ्गस्य प्रकृतिसंसृष्टत्वस्यैवाभावात् । 'असङ्गो ह्यय पुरुष' इति हि श्रुति, 'नित्यस्सर्वगतस्स्थाणुरचलोऽयं सनातन' इति गीता च । न हि संसृष्टस्य सर्वगतत्व, येन संसृष्टस्तद्गतत्वासम्भवात्, नापि बुद्ध्यादिसंसृष्टस्य सर्वगतत्व परिच्छिन्नत्वात् ।

किं च य प्रकृतिवियोग परमात्मनैव दुर्लभ कथं स जीवेनाप्येत ? न च परमात्मा प्रकृतिवियुक्त एवेति वाच्यं, चिदचिद्विशिष्टस्य परमात्मत्वात् । न च विशिष्टोऽपि वियुक्त एवेति वाच्यं, विशिष्टत्ववियुक्तत्वयोर्वैयधिकरण्यात् । एव प्रकृतिविशिष्टे परमात्मनि क्षीरनीरन्यायेन ज्ञानिजीवानां निलीयावस्थानमप्ययुक्त प्रकृतेरैक्यविरोधिन्यास्सत्त्वात् ।

अपि च सगुणमुक्तिर्निर्गुणमुक्तिरिति द्विविधैव मुक्तिश्शारीरकशास्त्रसिद्धा । तत्र निर्गुणमुक्तिर्ब्रह्मसायुज्यं, सगुणमुक्तिस्सत्यलोकप्राप्तिरेवस्थिते त्वया अक्षरप्राप्तिरिति तृतीया मुक्ति कल्प्यते, तद्धि शास्त्रविरुद्धम् ।

अपि च अक्षरं प्राप्ता अमी जीवा प्रकृतिवियुक्तास्सन्त परमात्मानमप्राप्य कथ वर्तेरन् ? पूर्णो हि परमात्मा सर्वेषामाधार । न हि गगनमप्राप्य घटो वर्तेत । यद्यमी परमात्मन्येव स्थितास्तर्हि प्राप्त एव परमात्मेति को भेदो ज्ञानिकैवल्यार्थिनो ? यदि तु ज्ञानिनोऽपि वैकुण्ठलोकप्राप्तिस्तर्हि ऐश्वर्यार्थिकैवल्यार्थिनोरेकत्वमिति मात्राधिकारित्रयकल्पनोचिता रामानुजीया ॥१४॥

मामिति । 'तस्याहं सुलभ पार्थ' इत्यत्राक्षिपति—तवेति । किं फल स्यात् ? मद्भावे

वन्ति । किं विशिष्टं पुनर्जन्म न प्राप्नुवन्तीति, तद्विशेषणमाह—दुःखालयम् । दुःखाना-माध्यात्मिकादीनां आलयमाश्रयं आलीयन्ते यस्मिन् दुःखानीति दुःखालयं जन्म न केवलं दुःखालयं, अशाश्वतं अनवस्थितस्वरूपं च नाप्नुवन्ति ईदृशं पुनर्जन्म, महात्मानो यतयः संसिद्धिं मोक्षाख्यां परमां प्रकृष्टां गताः प्राप्ताः । ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते ॥१५॥

---

मत्सायुज्यमिति यावत् । आदिपदादाधिदैविकाधिभौतिकग्रहणम् । दुःखालयमित्यस्यार्थान्तरमाह—आलयमिति । आलयं लयपर्यन्तं तस्मिन् पुनर्जन्मनि दुःखानि सन्तीत्यर्थः । दुःखान्यालयं यस्मिन् तद्दुःखालयमिति समासः । अनवस्थितं नैकरूपं स्वरूपं यस्य तत् । देवमनुष्याद्यनेकाकारत्वाज्जन्मन इति भावः । एतेन ब्रह्मणोऽदुःखालयत्वं शाश्वतत्वं च सूच्यते । मोक्षाख्यां सिद्धिमिति शेषः । गत-मिति वा । मामुपेत्य न प्राप्नुवन्तीत्यनेन सिद्धमर्थमाह—ये पुनरिति । पुनरावर्तन्ते पुनर्जन्म प्राप्नुवन्तीत्यर्थः । महात्मानः परमां संसिद्धिं गता अत एव मामुपेत्य अशाश्वतं दुःखालयं पुनर्जन्म नाप्नुवन्ति ।

ननु मामुपेत्येत्यनेनैव संसिद्धिं गता इति सिद्धत्वात्तदुक्तिः पुनरुक्तिरेवेति चेन्मैवम्—संसिद्धिं गता इत्यत्र प्रतीयमानस्य सगुणमुक्तिमन्यद्वा चित्तशुद्ध्यादिकं गता इत्यर्थस्य व्यावृत्तये मामुपे-त्येत्युक्तम् । मामुपेत्येत्यस्य मां सेवित्वेत्याद्यर्थस्य प्रतीयमानस्य व्यावृत्तये संसिद्धिं गता इत्युक्तमि-त्यदोषात् । तस्मान्मम सौलभ्ये पुंसामपुनरावृत्तिस्स्यादिति भावः ।

अयं श्लोकः सायुज्याभाववादिनां कण्ठपाशायते-मामुपेत्येति सायुज्यश्रवणात् । न च मामि-त्यस्य मत्सालोक्यं मत्सामीप्यं मत्सारूप्यं वेत्यर्थ इति वाच्यं, मुख्यार्थपरित्यागे लाक्षणिकार्थकल्पने च कारणप्रमाणाभावात् । न च राजानमुपेत्येत्यादाविव मामुपेत्येत्यत्रापि सन्निधिप्राप्तिरेव मुख्यार्थ इति वाच्यं, राजानमुपेत्येत्यादौ साक्षात्प्राप्तेर्बाधितत्वेन सन्निधिप्राप्तिकल्पना, न तु प्रकृते मुख्यार्थस्य बाध इति कथं तत्कल्पना ? तस्मात्सन्निधिप्राप्तिर्न मुख्यार्थः ।

न च कान्तां प्राप्येत्यत्रेव मामुपेत्येत्यत्रापि जीवेश्वरयोस्संयोगोऽर्थ इति वाच्यं, सावयवद्रव्ययो-रवयवसंयोगद्वारा संयोगसम्भवेऽपि निरवयवयोस्संयोगासम्भवात् । जीवेश्वरयोर्निरवयवत्वं च सम्प्रति-पन्नम् । अत एवेश्वरस्य चिद्विशिष्टत्वासम्भवाच्चिदचिद्विशिष्ट ईश्वर इति वादोऽस्यात्यन्तमयुक्तः ।

न च लक्ष्मीवदनन्तवद्वा जीवस्सशरीरस्सशरीरमीश्वरं संश्लिष्यास्ते इति वाच्यं, औपाधिकस्य तादृशसंश्लेषस्यानित्यत्वात् । विश्लेषस्यापि सम्भवात् । मामुपेत्य न पुनरावर्तत इति वक्तुमयुक्तत्वात् । लक्ष्म्या अपि विष्णुं विहाय क्षीरसमुद्रे पुनर्जातत्वात् । सशरीराणामनन्तानां जीवानां मुक्तानां परिच्छिन्न-विष्णुशरीरसंश्लेषस्याप्यसम्भवात् । गरुडविष्वक्सेनादीनां विश्लेषेणैव सत्त्वात् । एवंविधसशरीरेश्वरस्यैव रामकृष्णादिरूपेण पुनरावृत्तौ तद्भक्तानां पुनरावृत्तेः पुनः कैमुतिकन्यायसिद्धत्वात् ।

तस्मादशरीर एवेश्वरः, न तु विशिष्टः । जीवश्चाविद्यया सशरीरोऽपि विद्यया शरीरबन्धान्निर्मुक्त ईश्वरभावमशरीरत्वं मोक्षमापद्यते, न पुनरावर्तत इति स्थितम् ॥१५॥

किं पुनस्त्वत्तोऽन्यत्प्राप्ताः पुनरावर्तन्त इत्युच्यते—

आ ब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ।
मामुपेत्य तु कौन्तेय! पुनर्जन्म न विद्यते ॥१६॥

आ ब्रह्मेति । आ ब्रह्मभुवनात् भवन्त्यस्मिन् भूतानीति भुवनं, ब्रह्मणो भुवनं ब्रह्मभुवनं; ब्रह्मलोक इत्यर्थः । आ ब्रह्मभुवनात्सह ब्रह्मभुवनेन, लोकास्सर्वे पुनरावर्तिनः पुनरावर्तनस्वभावाः;

आ ब्रह्मेति । त्वत्तोऽन्यत्किं वा पदं प्राप्ता पुनरावर्तन्त इति प्रश्ने उच्यते—आ ब्रह्मेति । आ इति छेदः । अभिविध्यर्थकोऽयमाङ् । आ ब्रह्मभुवनाद्ब्रह्मभुवनमभिव्याप्य । फलितमाह—सह-ब्रह्मभुवनेनेति । सर्वेषां लोकानामुपरि वर्तमानः ब्रह्माण्डाद्बहिस्स्थः हिरण्यगर्भस्वामिकः द्विपरार्धाव-सानः सगुणमुक्तिक्षेत्रमर्चिरादिमार्गावधिः सत्यलोको ब्रह्मभुवनम् । 'स एतान् ब्रह्म गमय'तीति, तान् वैद्युतान् पुरुषोऽमानव एत्य ब्रह्मलोकान् गमयति, 'ते तेषु लोकेषु पराः परावतो वसन्ति' इति च श्रुतेः । बहुवचनं तु तदवान्तरकैलासवैकुण्ठलोकसंग्रहार्थम् ।

ननु आ ब्रह्मभुवनादित्यत्राङो मर्यादार्थकत्वमुचितं- ब्रह्मलोकस्यार्चिरादिमार्गावधेरपुनरावर्तित्वात् । 'शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते । एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुन'रितीहैव वक्ष्य-माणत्वात् । 'अनावृत्तिः शब्दात्' इति शारीरकसूत्रेणापि ब्रह्मलोकस्यानावृत्तित्वस्य सिद्धान्तितत्वादिति चेन्नैवम्—यदनित्यं तत्पुनरावर्तीति, यन्नित्यं तदपुनरावर्तीति व्याप्तिद्वयस्य सम्प्रतिपन्नत्वात् पुनराव-र्तिनस्स्वर्गादेरनित्यत्वदर्शनादपुनरावर्तिनः परब्रह्मण नित्यत्वदर्शनाच्च यदि सत्यलोकोऽपुनरावर्ती स्यात्तर्हि नित्यः स्यात् , न चेष्टापत्तिः ब्रह्मभिन्नस्य सर्वस्याप्यनित्यत्वात् । 'ततस्सत्यमतोऽन्यदार्त'मिति श्रुतेः । नित्यत्वे च 'एकमेवाद्वितीयं ब्रह्म' इति श्रुत्युक्तब्रह्माद्वैतस्य बाधात् । अद्वितीयं स्वसमानाधिकवस्तु-रहितमित्यर्थवर्णनस्याप्रमाणत्वादयुक्तत्वाच्च । न हीश्वरसमानाधिकवस्तुसद्भावशङ्का कस्यापि जायते, येन तन्निवृत्त्यर्थं श्रुतिरद्वितीयं ब्रह्मेति ब्रूयात् । एकमेवेति पदद्वयानर्थक्याच्च ।

किं च 'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'-मिति स्मृतेः महाप्रलये ब्रह्मणा हिरण्यगर्भेण सह सर्वेऽपि ज्ञानिनस्सन्तः परं पदं प्रविशन्तीति साधिपस्य सलोकस्य सत्यलोकस्य नाशसम्भवात् ।

पूर्वोत्तरवाक्यविरोधपरिहारस्त्वेवं नेयः- तथा हि, अस्मिन्महाप्रलये ब्रह्मलोकोऽयं नश्यति; प्रल-यावसाने पुनर्ब्रह्मलोको जायते; अतोऽस्ति ब्रह्मलोकस्य पुनर्जन्मेति पुनरावृत्तिस्वभाववानेव ब्रह्मलोकः ।

यद्यपि यो ब्रह्मलोको नष्टस्स एव पुनर्जात इति वक्तुं न शक्यते, तथापि अत्यन्तसादृश्यात्सेयं दीपज्वालेतिवत्सोऽयं ब्रह्मलोक इति प्रत्यभिज्ञया तथोच्यते । यद्वा अत्यन्तासतो जन्मायोगाच्छशशृङ्गादे-र्जन्मादर्शनाद्ब्रह्मलोकः स्वकारणे मायायां निलीय वर्तमानः पुनर्जायत इति । अथ वा स्वकारणभूत-मायाद्वारा सोऽयं ब्रह्मलोक इति निर्देशः- कारणभेदं विना कार्यभेदस्य दुर्वचत्वात् । वस्तुतस्तु नष्टस्य

हे अर्जुन ! मामेकमुपेत्य तु कौन्तेय ! पुनर्जन्म पुनरुत्पत्तिः न विद्यते ॥१६॥

ब्रह्मलोकस्य पुनरागमनं मास्तुनाम, यज्जन्मनाशवत्त्वत्पुनरावर्तीतीह विवक्षितम् । तथा च ब्रह्मलोकस्यापि जन्मनाशवत्त्वात्पुनरावर्तित्वमिति ।

अथ शुक्लयार्चिरादिकया गत्या ब्रह्मलोकं गतानां जीवानामपुनरावृत्तिस्तु ब्रह्मलोके नष्टे तत्र स्थिता जना न पुनस्संसाराय स्वर्गमृत्य्वादिकमायान्ति प्रलयावसानेऽपि, परं तु ब्रह्मणा सहैव मुच्यन्त इत्यभिप्रायेणोक्ता । अत एव 'अनावृत्तिश्शब्दा'दिति 'कार्यात्यये तदध्यक्षेण सहातः परमभिधाना'दिति च सूत्रसाङ्गत्यम् ।

न च ब्रह्मलोकस्यैव पुनरावर्तित्वे तद्गतजनानां कुतः पुनरपुनरावर्तित्वमिति वाच्यं, विद्यावैभवा-दिति । न च लोकनाशे लोकस्थजननाशाल्लोकवल्लोकस्थजनोऽपि पुनरावर्त्यैवेति वाच्यं, नाशमात्रं न पुनरावृत्तिकारणं, किं तु जन्महेतुर्नाशः । तथा च ब्रह्मलोकस्थजनानामुपाधिपरित्यागरूपो नाशः न पुनर्जन्महेतुः । ब्रह्मलोकस्य तु मायानिलयनरूपो नाशः पुनर्जन्महेतुरिति न कश्चिद्दोषः । एतेन ब्रह्म-लोकं प्राप्तानां स्वर्गादिप्राप्तवदवर्जनीयनाशत्वाच्च ब्रह्मलोकस्य पुनरावर्तित्वमिति सिद्धम् ।

यद्यपि स्वर्गादिलोकागता इव ब्रह्मलोकं गता अपि उपाधिपरित्यागरूपं नाशं प्रपद्यन्ते, तथापि उपाध्यन्तरस्वीकाररूपं जन्म न प्रपद्यन्त इति कृत्वा 'अनावृत्तिशब्दा'दित्युक्तं सूत्रकृता । एतेन प्रति-पद्यमाना 'इमं मानवमावर्तं नावर्तन्त' इति श्रुत्या च 'एकया यात्यनावृत्ति'मिति गीतया च ।

तस्माद्ब्रह्मलोकं गतानां पुनर्जन्माभावेऽपि ब्रह्मलोकः पुनरावर्त्यैव । तदिदं सर्वमभिप्रेत्याह भगवान् भाष्यकारः—सहब्रह्मभुवनेनेति, पुनरावर्तनस्वभावा इति च । ब्रह्मलोकस्यापि जन्म-नाशवत्त्वात्पुनरावर्तनस्वभाववत्त्वं तस्मान्नश्वरत्वात्सर्वेऽपि लोकाः पुनरावर्तिन एव ।

किं तदपुनरावर्ति पदमत आह—**मामिति** । तुशब्दो ब्रह्मलोकादिवैलक्षण्यार्थः । तेन च मामे-वेत्यवधारणं फलति । मामुपेत्य मत्सायुज्यं प्राप्य स्थितस्येति शेषः । ब्रह्मभूतस्येत्यर्थः । पुनर्जन्म न विद्यते । ननु ब्रह्मलोकं प्राप्तानामपि पुनर्जन्म न विद्यत एवेति कृत्वा मामेकमुपेत्येति कथमुक्तमत आह—पुनरावर्तिन इति । जन्मनाशावावृत्तिशब्दार्थः । मद्गतानां न जन्मनाशरूपपुनरावृत्तिरित्यर्थः ।

यद्वा ब्रह्मलोकं गतानां जीवानां तत्र दिव्यशरीरपरिग्रहरूपं जन्मास्तीति विद्यत एव पुनर्जन्म, तत्परित्यागप्रयुक्तो नाशश्च । परब्रह्मगतानां तु न शरीरसम्बन्धो नापि तन्नाश इति भगवन्तमाप्तानां तस्यैव न पुनर्जन्म । न च कैवल्यं गतस्यापि शरीरत्यागनाशोऽतीति वाच्यं, शरीरं त्यजत एव भगवत्प्राप्तत्वान्न पुनश्शरीरत्याग इति । तस्मान्निर्गुणं ब्रह्म गतवत एवापुनरावृत्तिः ।

न च 'अनावृत्तिश्शब्दा'दिति सूत्रविरोधः, सगुणमुक्तिक्षेत्रे गतस्याप्यपुनरावृत्तिदर्शनादिति वाच्यं, सगुणमुक्तिं गतस्य तात्कालिकशरीरपरित्यागानन्तरं पुनश्शरीरपरिग्रहाभाव इत्यभिप्रायेण तदपुनरावृत्तेरिति ।

ननु भगवन्तं गतानां पुनर्जन्माभावे को हेतुरिति चेदुक्त एव उपाध्यभावादिति । एतेन ब्रह्मलोकं गतानामपि स्वर्गादिलोकं गतानामिवोपाधिसद्भावात्पुनर्जन्मादित्वमस्तीति सूचितम् ।

नैतावता ब्रह्मलोकं गतानां पुनर्जन्मसद्भावशङ्क्य.- तत्र सम्यग्दर्शनेन तेषामज्ञानस्य समूलस्य नष्टत्वात् । अत एव 'इह चेदवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः' इति श्रुतिः ब्रह्मज्ञानं मनुष्यलोकएव सम्पादनीयं, नतु स्वर्गादिलोकेषु- तेषां मोहातिशयजनकत्वात् , यद्यपि ब्रह्मलोके सुसम्पादं, तथापि तल्लोकप्राप्तिर्दुस्सम्पादेत्यवोचत् । अथ वा पुनरावृत्तिवाचिना पुनर्जन्मशब्देन तद्धेतुभूतस्थानभ्रंशो लक्ष्यते; न हि पत्तनं गतस्य तत्स्थानभ्रंशं विना ग्रामं प्रति पुनरावृत्तिस्सम्भवति । स्थानभ्रंशश्च स्थानत्यागः । एवं स्वर्गादिष्विव ब्रह्मलोकं गतस्यापि स्थानभ्रंशोऽस्ति- ब्रह्मलोकत्यागपूर्वकत्वात्परमपदप्रवेशस्य । ब्रह्म प्राप्तानां तु न स्थानभ्रंश. । अतएव सर्वे लोकाः पुनरावर्तिन', ब्रह्मैकमेवापुनरावर्ति । अनावृत्तिः शब्दादिति सूत्रे तु ब्रह्मलोकं प्राप्तः पुनस्संसारमण्डलं प्रति नावर्तत इत्यभिप्रायेणोक्तं बादरायणेनेति बोध्यम् ।

तस्मात् ये स्वर्गादिलोकान् गतास्ते पुनस्संसारं प्रतिपद्यन्त इति हेतोः पुनरावर्तिन इत्युच्यन्ते । ये ब्रह्मलोकं गतास्ते स्वाश्रयलोकस्य पुनरावर्तित्वात्, स्वेषामुपाधिमत्त्वात्स्वोपाधिनाशस्यावर्जनीयत्वाद्वा पुनरावर्तिन इत्युच्यन्ते । यस्तु परं ब्रह्म प्राप्तस्स यया कयापि विधया पुनरावर्तीति वक्तुं न शक्यत इति कृत्वा ये पुनर्मां न प्राप्नुवन्ति ते पुनरावर्तन्ते, मामेकमुपेत्य तु पुनरावृत्तिर्न विद्यत इति भाषितमाचार्यैः । अर्चरादिकया गत्या ब्रह्मलोकं प्राप्तो न पुनरावर्तत इति तु पुनस्संसारं न प्रतिपद्यत इत्यभिप्रायगर्भं इति न कोऽपि व्याघातः ।

अनित्यत्वात्स्वर्गादिलोकवद्ब्रह्मलोक पुनरावर्ती, ब्रह्मलोकं गताना ब्रह्मकृतमहावाक्योपदेशजन्यब्रह्मात्मैक्यज्ञानवत्तया ब्रह्मभूतत्वान्न पुनरावृत्तिरिह लोकेऽपरोक्षीकृतात्मतत्त्वशुकवामदेवादिवदिति निष्कर्षः ।

तस्मात्- 'आब्रह्मभुवनाल्लोका' पुनरावर्तिनोऽर्जुन !' इति, 'तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना ' इति, 'एकया यात्यनावृत्ति'मिति, 'तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते' इति च सर्ववाक्यानि निर्विरोधानीति संक्षेप' ।

यत्तु रामानुजः—मा सत्यसङ्कल्पं सर्वज्ञमुपेत्येति, तदसत्—जीवेश्वरभेदकमायोपाधिसत्त्वे जीवेश्वरसायुज्यायोगात् , मायाऽभावे सङ्कल्पाद्ययोगात् ।

नच विद्यया जीवोपाधेरविद्याया नाशेऽपीश्वरोपाधेर्मायाया अनाशादस्त्येवोपाधिरीश्वरस्य, सोपाधिकेऽपीश्वरे निरुपाधिकस्य जीवस्य प्रवेशस्सम्भवति लवणोदके शुद्धोदकस्येव, उभयोरप्युपाधिसत्त्व एव प्रवेशासम्भव इति वाच्यं, जीवस्यैव स्वविद्यया स्वाविद्यां नाशयितुं शक्तत्वे किमीश्वरस्य स्वविद्यया स्वमायां नाशयितुं नासीच्छक्तिः । मायाया अनाश्यत्वे तु सोपाधिकादीश्वरान्निरुपाधिको जीव एवाधिकं निरुपाधिकत्वेन जीवस्य ब्रह्मत्वादिति कथं जीवस्येश्वरप्राप्ति' ॥

मायोपाधिकमेव ब्रह्मेत्युक्तौ तु जीव एव सर्वाधिकस्स्यात , सोपाधिकाद्घटाकाशान्निरुपाधिको हि महत् शोऽधिक , उपाधिना ह्युपहित' परिच्छिद्यते । अन्यथा उपाधेरुपाधित्वस्यैवाभावात् ।

नच मायायास्सर्वव्यापित्वात्तदुपाधिकेश्वरस्यापि व्यापित्वमेव, नतु परिच्छिन्नत्वमिति वाच्यं, निरुपाधिकेषु जीवेषु मायाव्याप्तेरभावेन मायायास्सर्वव्यापित्वाभावात् ।

एवमुपाधिपरिच्छिन्ने ईश्वरे निरुपाधिकस्य जीवस्य प्रवेशोऽपि न सम्भवति- उपाधेस्तत्प्रवेशप्रतिबन्धकत्वात् । नहि घटाकाशे महाकाशः प्रविशेत् ।

नच जीवस्याणुत्वात्प्रवेश उचित इति वाच्यं, जीवस्याणुत्वे कृत्स्नशरीरव्यापिवेदनोपलम्भाभावप्रसङ्गात्, परिमाणे द्रव्यस्य घटादेरनित्यत्वदर्शनेन जीवस्याप्यनित्यत्वप्रसङ्गात् । मायाया व्यवहितमीश्वरमणुरपि जीवः प्रवेष्टुं न शक्नुयाच्च ।

नच मायायामेव प्रविशेदिति वाच्यं, प्रलयेऽपि मायाप्रवेशसत्त्वेन ज्ञानयोगाद्यानर्थक्यप्रसङ्गात्, सुषुप्तिवन्मुक्तावपि जीवस्याज्ञानाभिभूतत्वप्रसङ्गाच्च । माया ह्यज्ञानम् । एवं मायां प्रविष्टस्य पुनस्संसारं प्रत्यावृत्तिप्रसङ्गाच्च । मायां गतो हि प्रलये प्रपञ्चदशायां पुनरावर्तते । ततश्च 'मामुपेत्य तु कौन्तेय । पुनर्जन्म न विद्यते' इति वचो व्याहन्येत ।

नच मायां भित्वा तदन्तर्गतमीश्वरचैतन्यं प्रविशेज्जीव इति वाच्यं, मायाया अनवकाशत्वादभेद्यत्वाच्च । भेद्यत्वे कथमीश्वर एनां न भिन्द्यात् ? मायाया बहिरीश्वरस्य सत्त्वे सर्वव्यापित्वभङ्गप्रसङ्गात् । 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित' इति श्रुतेः । मायाया अन्तरपीश्वरचैतन्यस्य व्यापित्वे निरवकाशत्वेन जीवप्रवेशायोगात् । सावकाशत्वे तु व्यापित्वायोगात् । चैतन्याद्बहिरेव मायायास्सत्त्वे मायायामेव कारणभूतायां कार्यप्रपञ्चसत्त्वेन चैतन्ये प्रपञ्चसत्त्वायोगात् । प्रपञ्चस्य चेश्वरे सत्त्वश्रवणात् । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेः ।

नचाद्वैतमतेऽपि चैतन्ये निरवकाशे कथं प्रपञ्चसत्त्वमिति वाच्यं, मायया तदुपपत्तेः । नच मायायाः कथं सत्त्वमिति वाच्यं; मायात्वादेव । नातिशङ्कनीया हि सा माया । अतिशङ्कायां मायास्वरूपस्यैवासिद्धेः । तस्मान्मामित्यस्य प्रत्यगभिन्नं ब्रह्मेत्येवार्थ. ।

नन्वेवं सर्वत्र मामित्येव किमिति वचनं, त्वामिति कुतो न ब्रूयात ? त्वच्छब्दार्थस्यापि प्रत्यगभिन्नब्रह्मत्वादिति चेन्नैवम्—वक्तुर्ब्रह्मात्मसाक्षात्कारेण स्वात्मनि ब्रह्मत्वनिश्चयान्मामित्युक्तिः । श्रोतुश्च तदभावे स्वात्मनि जीवत्वनिश्चयात्त्वामित्यनुक्तिरिति ।

न च वक्तुः कृष्णस्य परमात्मत्वेन मामित्युक्तिरिति वाच्यं, स्कान्दपुराणे माघमाहात्म्ये केनचिद्विप्रेण भार्यां प्रति तत्त्वोपदेशसमये- 'मयि सर्वाणि भूतानि तेषु चाहमवस्थितः । मत्तः परतरं नैव विद्यतेऽस्मनः पर'मित्युक्तम् । कोऽत्र मच्छब्दार्थः ? न च जीव एवेति वाच्यं, जीवस्य सर्वभूताधारत्वसर्वभूतान्तरात्मत्वसर्वपरतरत्वनिरतिशयत्वानामीश्वरधर्माणामसिद्धेः । न ह्येकस्मिन् भूते मनुष्यादिदेहे वर्तमानस्य जीवस्याणोस्सर्वभूताश्रयत्वसर्वान्तरत्वे सम्भवतः । जीवदधिकस्येश्वरस्य सत्त्वेन जीवस्य सर्वाधिकत्वनिरतिशयत्वे वा न सम्भवतः । तस्मान्मच्छब्दोऽत्र परमात्मैव । न हि वक्ता विप्रमात्रः परमात्मा भवितुमर्हति वासुदेववत्, येन त्वदुक्तरीत्या मच्छब्दार्थः परमात्मेति वक्तुं शक्येत । तस्मात्प्रत्यक्सर्वोऽपि तत्त्ववित्परमात्मैव । परमात्मन एवात्मत्वात्तत्त्वविदश्चात्मत्वात् । अतो नात्र गीताशास्त्रे

ब्रह्मलोकसहिता लोका. कस्मात् पुनरावर्तिनः? कालपरिच्छिन्नत्वात्। कथम्?—

सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः।
रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥१७॥

सहस्रेति। सहस्रयुगपर्यन्त सहस्र युगानि पर्यन्तः पर्यवसान यस्याह्नस्तदहः सहस्रयुगपर्यन्त, ब्रह्मणः प्रजापतेः विराजो विदु.। रात्रिमपि युगसहस्रान्ता अह परिमाणमेव। के विदुरित्याह—अहोरात्रविदः कालसङ्ख्याविदो जना इत्यर्थः। यतः एव कालपरिच्छिन्ना स्ते, अत. पुनरावर्तिनो लोकाः ॥१७॥

---

श्रीकृष्णोक्तस्य मच्छब्दस्य क्वापि जीवभिन्नेश्वरपरत्वमर्थ इति भ्रमितव्य, प्रत्युत प्रत्यगभिन्न ब्रह्मैवार्थ इति ज्ञातव्यमित्यलम् ॥१६॥

सहस्रेति। कस्माल्लोका पुनरावर्तिन इति प्रश्न। कालपरिच्छिन्नत्वादित्युत्तरम्। कथं कालपरिच्छिन्ना इति पुन प्रश्न। सहस्रयुगेत्यादिकमुत्तरमिति विवेक।

अस्माचे प्रसिद्धा अहोरात्रविदो जना, ब्रह्मणो हिरण्यगर्भस्याहस्सहस्रयुगपर्यन्त, रात्रिं युगसहस्रान्ता च विदु, तस्मादाब्रह्मभुवनाल्लोका पुनरावर्तिन।

युगशब्दोऽत्र चतुर्युगसमाहारात्मकमहायुगपर 'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते' इति स्मृत्यन्तरसंवादात्। यद्यपि ब्रह्मणो दिनान्ते स्वर्गादिलोकान्तराणामेव नाशो न तु ब्रह्मलोकस्य, तथापि एवंविधब्रह्मदिनाना पञ्चशतोत्तरत्रिशते ब्रह्मणस्संवत्सरो भवति। तादृशसंवत्सराणामर्धशते परार्धं ब्रह्मणो भवति। द्विपरार्धावसान ब्रह्मण परमायु। द्विपरार्धावसाने ब्रह्मलोकस्यापि नाश। अत कालपरिच्छिन्न एव स्वर्गादिलोकवद्ब्रह्मलोकोऽपि। यस्यायु काल क्षपयति स कालपरिच्छिन्न इत्युच्यते।

एवंविधकालपरिच्छेदरहितस्त्वेक एवेश्वर आत्मा जन्मनाशरहितत्वेन नित्यत्वादात्मन। स चात्मा नित्यमशरीर एव शरीरित्वे शरीराधीनजन्मनाशवत्त्वप्रसङ्गात्।

न च ज्ञानात्प्राक्शरीर एवात्मेति वाच्य, तदापि सशरीरत्वस्य मायिकत्वात्। न हि निर्विकारस्यात्मन सदैकरूपस्य कदाचित्सशरीरत्व कदाचिदशरीरत्व च भवितुमर्हति।

एतेन सशरीरा विष्णुरुद्रगणपतिकुमारादयस्तचद्वादिभिरीश्वरत्वेनाभ्युपगता सर्वेऽपि शरीरिणो देवा कालपरिच्छिन्ना नश्वरा जीवा एवेति सिद्धम् अशरीरस्यैवैकस्यैवात्मन ईश्वरत्वात्। यदि तु विष्ण्वादिशब्दैस्तत्तच्छरीरान्तरस्सर्वव्यापी आत्मा विवक्षितस्तर्हि स ईश्वर एवेत्यदोष।

तस्मात् ब्रह्म सत्य जगन्मिथ्येति स्थितम्। ब्रह्मादिजाना सर्वेषा लोकाना लोकस्थाना लोकपालाना च कालावच्छिन्नत्वेन नश्वरत्वाद्ब्रह्मण एकस्यैवाकालावच्छिन्नत्वेन नित्यत्वादनश्वरत्वस्यैव त्रिकालाबाध्यत्वरूपस्य मिथ्यात्वलक्षणत्व त्रिकालाबाध्यत्वरूपनित्यत्वस्यैव सत्यत्वलक्षणत्वाच्च।

अत एव ये नित्यमात्मान प्रपद्यन्ते ते न पुनर्जन्म प्रतिपद्यन्ते, ये त्वनित्यान् ब्रह्मलोकादीन् प्राप्नुवन्ति ते पुनर्जन्म प्रतिपद्यन्त इति सिद्धम् ॥१७॥

प्रजापतेरहनि यद्भवति रात्रौ च तत् उच्यते—

अव्यक्ताद्व्यक्तयस्सर्वाः प्रभवन्त्यहरागमे ।
रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥१८॥

अव्यक्तादिति । अव्यक्तादव्यक्तं प्रजापतेः स्वापावस्था तस्मादव्यक्ताद्व्यक्तयः व्यज्यन्त इति व्यक्तयः स्थावरजङ्गमलक्षणास्सर्वाः प्रजाः प्रभवन्ति अभिव्यज्यन्ते, अह्न आगम अहरागमः, तस्मिन्नहरागमे काले ब्रह्मणः प्रबोधकाले । तथा रात्र्यागमे ब्रह्मणः स्वापकाले प्रलीयन्ते सर्वाः व्यक्तयः तत्रैव पूर्वोक्तेऽव्यक्तसंज्ञके ॥१८॥

---

अव्यक्तादिति । श्लोकस्यार्थं संक्षेपत आह—प्रजापतेरिति । यज्जगदित्यर्थः । स्वपतो निद्राणस्य, स्वापावस्था निद्रावस्था । अज्ञानमिति यावत् । समष्टिरूपमिति भावः । व्यष्टिरूपमज्ञानं तु अस्मन्निद्रारूपम् । इदं च समष्टयज्ञानं नाव्याकृतं तद्धीश्वरोपाधिः ।

अत्रेदं बोध्यम्—यत्रैकमेव लिङ्गं निलीयते तद्व्यष्टयज्ञानं प्राज्ञस्योपाधिः । यत्र सर्वाणि लिङ्गानि निलीयन्ते महाभूतानि तु न लीयन्ते तत्समष्टयज्ञानं हैरण्यगर्भस्वापाख्यं प्राज्ञसमष्टयुपाधिः । प्राज्ञभेदप्रयोजकाभावात्प्राज्ञस्योपाधिरिति वा । यत्र सर्वाणि लिङ्गानि पञ्चभूतैस्समं निलीयन्ते तदव्याकृतमीश्वरोपाधिः । इदं चाव्याकृतं महाप्रलये वर्तते तदानीमेव मूर्तामूर्तसर्वदृश्यलयात् । मोक्षे त्वव्याकृतस्यापि नाश इति ।

एवं सति अव्यक्तशब्दो यद्यप्यव्याकृतपरस्तथापि नेहाव्यक्तशब्देनाव्याकृतं गृहीतमुचितमहरागमे रात्र्यागमे इति लिङ्गात् । प्रजापतेर्हिरण्यगर्भस्य अहोरात्रिसद्भावः । यत्र प्रजापतिर्जागर्ति तदहः, यत्र स्वपिति सा रात्रिरिति, न हीश्वरस्य जाग्रदाद्यवस्थास्सन्तीति ।

नन्वेवमव्याकृतोपाधिकस्यैवेश्वरत्वे तस्य महाप्रलय एव सत्त्वेन कालत्रयव्यापकत्वमीश्वरस्य न स्यादिति चेन्नैवम्—यदेव चैतन्यमव्याकृतेनोपहितं तदेव प्रपञ्चमूर्तामूर्ताभ्यामुपहितं, तदेव चेश्वर इति नेश्वरस्य कालत्रयाव्यापकत्वं, तदुपाध्यव्याकृतमपि मूर्तामूर्तात्मना परिणतं सदवतिष्ठत इति वा नाव्याकृतस्येदानीमभावः ।

यद्वा मृदि घटादिवदव्याकृतोपहिते ईश्वरे मूर्तामूर्तजगदिदं कल्पितमिति कृत्वा घटादौ सत्यपि यथा मृदस्ति तथा जगति सत्यपि अव्याकृतमस्त्येवेति न कश्चिद्दोषः ।

नचाव्याकृतमपि न कालत्रयव्यापकं मुक्तावसत्त्वादिति वाच्यं, मुक्तौ कालस्यैवाभावात् । जगतः प्राक्, जगतः पश्चात्, जगतः स्थितौ च कालत्रयव्यवहारात् । अव्याकृतस्य च तत्र त्रयेपि सत्त्वादिति ।

अत्राव्यक्तशब्दः कारणवाची कार्यस्याव्यक्तं रूपं कारणात्मकमिति श्रीधरः । कार्यं हि सृष्टेः प्रागनभिव्यक्तं सत्कारणात्मना वर्तत इति तस्याशयः । अस्मिन्पक्षे व्यक्तीनां भौतिकीनां कारणमव्यक्तं भूतजातमेवेह ग्राह्यं, ब्रह्मदिनप्रलये भूतजातस्य सत्त्वात् । व्यक्तस्य तु भूतजातस्याव्यक्तमव्याकृतं कारणं तत्तु ब्रह्मप्रलय इति बोध्यम् ।

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं विधिनिषेधबन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थमविद्यादिक्लेशमूलकर्माशयवशाच्च अवशः भूतग्रामो भूत्वाभूत्वा प्रलीयतेत्यतस्संसारे वैराग्यप्रदर्शनार्थं च इदमाह—

भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते ।
रात्र्यागमेऽवशः पार्थ! प्रभवत्यहरागमे ॥१९॥

भूतग्राम इति । भूतग्रामः भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन् कल्पे आसीत्स एवायं नान्यः । भूत्वाभूत्वा अहरागमे, प्रलीयते पुनः पुनः रात्र्यागमे । अह्नः क्षये अवशः अस्वतन्त्र एव, हे पार्थ! प्रभवति जायते अवश एवाहरागमे ॥१९॥

---

ननु अव्यक्ताद्व्यक्तयः प्रभवन्तीत्युक्तं, किमिमा व्यक्तयः प्रभवात्पूर्वं सन्ति? उत न? आद्ये— उत्पत्तिवैयर्थ्यम् । अन्त्ये- असत्कार्यवादापत्तिरिति चेन्नैवम्—आद्यपक्षस्यैव परिग्रहात् । नचोत्पत्ति-वैयर्थ्यं, सूक्ष्मावस्थावस्थितानां व्यक्तीनां स्थूलावस्थाप्राप्तेरेवोत्पत्तित्वात् ।

ननु प्रलये सूक्ष्मावस्थावस्थिता व्यक्तयस्सर्वा हिरण्यगर्भोपाध्यवज्ञाने निलीय वर्तन्ते, प्रपञ्चे तु स्थूलावस्थावत्त्वेन तत आगच्छन्तीत्युक्तं, तत्र व्यक्तीनां सूक्ष्मावस्था किं प्राथमिकी? उत स्थूलावस्थेति चेन्नैवम्—अनादित्वात् ॥१८॥

भूतेति । ननु अव्यक्तात्प्रभूता व्यक्तयः पुनरव्यक्तं प्रविष्टाः प्रलये । प्रलयावसाने तु पुनरन्या एव व्यक्तय प्रभवन्ति । ततश्च पूर्वकल्पस्था व्यक्तयः स्वकृतं कर्म साकल्येनानुपभुज्यैव प्रकृतौ लीना इति कृतहानदोष एक· । प्रलयावसाने पुनरव्यक्तादुद्भूता व्यक्तय अकृतकर्मफलं भुञ्जत इत्यकृताभ्यागमदोषो द्वितीय । न हीमा पूर्वकल्पे कर्मकृतवत्य·, किं तु पूर्वकल्पस्थाभ्यो व्यतिरिक्ता एवैता इति विनैव शास्त्राचार्योपदेशादिकं प्रलये अक्लेशेनैव सर्वे जीवा मुच्यन्त इति सर्वमुक्तिरूपो दोषस्तृतीय·, विहितानुष्ठातारो निषिद्धानुष्ठातारश्च स्वर्गिणो नारकिणश्च सर्वेऽप्यविशेषेण प्रलयेऽव्यक्ते लीयन्त इति विधिनिषेधशास्त्रवैयर्थ्यदोषश्चतुर्थः । एतद्दोषचतुष्टयपरिहारार्थं उत्तरश्लोक इत्याह भाष्यकारः— अकृतेति ।

फलान्तरमाह—अविद्यादीति । आदिपदाद्रागद्वेषादयः । अविद्यादीनां क्लेशानां मूलभूतं कर्म । जीवादृष्टं स्वयुक्त आशयोऽन्तःकरणं तद्वशात् । अविद्यादिक्लेशकर्माशयैरपरामृष्टस्त्वीश्वर एक एवेति भावः ।

भूत्वाभूत्वा कल्पेकल्पे इति भाव । कार्यकरणसङ्घातात्मको भूतग्रामः । स्थावरजङ्गमशरीराभिमानी सामासबुद्धिरूपजीवसमुदाय इत्यर्थः । अयं हि लिङ्गशरीरी जीवसमुदायः कल्पेकल्पे जायते स्थावरजङ्गमात्मकस्थूलशरीरसंयोगात् । तद्वियोगाच्च प्रलये प्रलये म्रियते ।

एतेन न पूर्वकल्पस्थो भूतग्रामस्स एवायं वर्तमानकल्पस्थो न त्वन्य इति न कृतहानाकृताभ्यागमदोषद्वयप्रसङ्ग· । स्थूलशरीरनाशेऽपि लिङ्गशरीरस्य प्रलयेऽप्यज्ञाने निलीय वर्तमानत्वेन न

यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्टः- 'ओमित्येकाक्षरं ब्रह्म' इत्यादिना । अथेदानीमक्षरस्यैव स्वरूपनिर्विवक्षयेदमुच्यते, अनेन योगमार्गेण इदं गन्तव्यमिति—

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

पर इति । परः व्यतिरिक्तो भिन्नः; कुतः? तस्मात्पूर्वोक्तात् । तुशब्दोऽक्षरस्य विवक्षितस्याव्यक्ताद्वैलक्षण्यविशेषणार्थः । भाव अक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थमाह—अन्य इति । अन्यो विलक्षणः स चाव्यक्तः

---

प्रलये जीवानां मुक्तिरिति न सर्वमुक्तिप्रसङ्गः । तत्तज्जीवान्तःकरणेषु तत्तज्जीवकृतसुकृतदुष्कृतकर्मवासनासत्त्वात्, तद्वासनावशेन पुनः प्रपञ्चे तत्तदुचितपुण्यपापशरीरभोगसत्त्वाच्च न विधिनिषेधशास्त्रवैयर्थ्यम् । गुरुशास्त्रोपदेशं विना लिङ्गशरीरस्य कालतो नाशाभावान्न मोक्षशास्त्रवैयर्थ्यमिति सिद्धम् ।

अव्यक्तं चतुर्मुखस्य शरीरमिति रामानुजः, तदयुक्तम्—चतुर्मुखस्य स्थूलशरीरे जीवानां प्रवेशायोगादत एव ततो निर्गमायोगाच्च । न च पितृदेहात्पुत्रदेह इव चतुर्मुखदेहाद्भूतग्राम उदेतीति वाच्यं, चतुर्मुखस्य मनसैव प्रायेण सर्वप्रपञ्चस्य जातत्वात् । सङ्कल्पपूर्विका हि सृष्टिः । सनकादीनां ब्रह्ममानसपुत्रत्वेन ब्रह्मशरीरजत्वाभावाच्च । चतुर्मुखदेहात्प्रजापत्यादिदेहानां जातत्वेऽप्यस्मदादिदेहानामजातत्वाच्च ।

तत्तद्व्यष्टिशरीरे तत्तज्जीव इव ब्रह्मशरीरे सर्वजीवानां सत्त्वमित्यप्ययुक्तम्—तथासति ब्रह्मशरीरे सर्वेषां स्वीयत्वाभिमानस्य भवितव्यत्वात् । निद्रावस्थायामभिमानाभावेऽपि प्रलयावसानोत्तरक्षणे तत्सद्भावात् । न चोत्तरक्षण एव तत आविर्भवन्तीत्यदोष इति वाच्यं, उत्तरक्षण एव सर्वस्थूलशरीरसद्भावाभावेन तत उत्तिष्ठेरन्, प्रजापत्यादिक्रमेण चिरकालाय हि प्रपञ्चसृष्टिः । न च तत्रैवाज्ञाने निलीय वर्तन्त इति वाच्यं, तथासति लाघवादज्ञानमेवाव्यक्तमिति वक्तव्यत्वात्, किंपुनर्ब्रह्मशरीरपरिग्रहेण ॥१९॥

पर इति । वृत्तमनुवदति—यदिति । यदक्षरं वेदविदो वदन्तीति यदक्षरमुपन्यस्तं तस्याक्षरस्य ब्रह्मणः प्राप्तौ उपायसाधनं निर्दिष्टं ओंकारोपासनरूपः विष्णुस्मरणरूपश्च । आदिपदादनन्यचेता इति श्लोकस्य संग्रहः । मामुपेत्येत्यादिकं तु प्रसङ्गादुक्तमिति भावः ।

अथ अक्षरस्य प्राप्त्युपायनिर्देशानन्तरमित्यर्थः । अक्षरस्य उपेयस्य ब्रह्मण इत्यर्थः । एवकारान्त्वन्यस्येति भावः । स्वरूपस्य निर्वक्तुमिच्छा निर्विवक्षा तया । इदं पद्यद्वयं उक्तिप्रकारमेव दर्शयति—अनेनेति । अनेनोक्तेन योगमार्गेण गन्तव्यं ब्रह्मेदमित्युच्यते । पर इति । पृथग्भूत इत्यर्थः । घटात्पटवदिति भावः ।

ननु घटाद्भिन्नोऽपि पटो दृश्यत्वजडत्वादिधर्मैर्घटसलक्षण एवेति तद्वदव्यक्ताद्भिन्नोऽप्यक्षरो न किमव्यक्तसलक्षण इति शङ्कते—व्यतिरिक्तत्वे सत्यपीति । तद्विनिवृत्त्यर्थमव्यक्तसालक्षण्यप्रसङ्गनिरा-

अकृताभ्यागमकृतविप्रणाशदोषपरिहारार्थं विधिनिषेधबन्धमोक्षशास्त्रप्रवृत्तिसाफल्यप्रदर्शनार्थमविद्यादिक्लेशमूलकर्माशयवशाच्च अवशः भूतग्रामो भूत्वाभूत्वा प्रलीयतेत्यतस्संसारे वैराग्यप्रदर्शनार्थं च इदमाह—

भूतग्रामस्स एवायं भूत्वा भूत्वा प्रलीयते ।
राञ्यागमेऽवशः पार्थ! प्रभवत्यहरागमे ॥१९॥

भूतग्राम इति । भूतग्रामः भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन् कल्पे आसीत्स एवायं नान्यः । भूत्वाभूत्वा अहरागमे, प्रलीयते पुनः पुनः राञ्यागमे । अह्नः क्षये अवशः अस्वतन्त्र एव, हे पार्थ! प्रभवति जायते अवश एवाहरागमे ॥१९॥

---

ननु अव्यक्ताद्व्यक्तयः प्रभवन्तीत्युक्तं, किमिमा व्यक्तयः प्रभवात्पूर्वं सन्ति ? उत न ? आद्ये— उत्पत्तिवैयर्थ्यम् । अन्त्ये- असत्कार्यवादापत्तिरिति चेन्मैवम्—आद्यपक्षस्यैव परिग्रहात् । नचोत्पत्तिवैयर्थ्यं, सूक्ष्मावस्थावस्थितानां व्यक्तीनां स्थूलावस्थाप्राप्तेरेवोत्पत्तित्वात् ।

ननु प्रलये सूक्ष्मावस्थावस्थिता व्यक्तयस्सर्वा हिरण्यगर्भोपाधावज्ञाने निलीय वर्तन्ते, प्रपञ्चे तु स्थूलावस्थावत्त्वेन तत आगच्छन्तीत्युक्तं, तत्र व्यक्तीनां सूक्ष्मावस्था किं प्राथमिकी ? उत स्थूलावस्थेति चेन्मैवम्—अनादित्वात् ॥१८॥

भूतेति । ननु अव्यक्तात्समूत्ता व्यक्तयः पुनरव्यक्तं प्रविष्टाः प्रलये । प्रलयावसाने तु पुनरन्या एव व्यक्तयः प्रभवन्ति । ततश्च पूर्वकल्पस्था व्यक्तयः स्वकृतं कर्म साकल्येनानुपभुज्यैव प्रकृतौ लीना इति कृतहानदोष एकः । प्रलयावसाने पुनरव्यक्तादुद्भूता व्यक्तय अकृतकर्मफलं भुञ्जत इत्यकृताभ्यागमदोषो द्वितीय । न हीमा पूर्वकल्पे कर्मकृतवत्यः, किं तु पूर्वकल्पस्थाभ्यो व्यतिरिक्ता एवैता इति विनैव शास्त्राचार्योपदेशादिकं प्रलये अवलेशेनैव सर्वे जीवा मुच्यन्त इति सर्वमुक्तिरूपो दोषस्तृतीयः, विहितानुष्ठातारो निषिद्धानुष्ठातारश्च स्वर्गिणो नारकिणश्च सर्वेऽप्यविशेषेण प्रलयेऽव्यक्ते लीयन्त इति विधिनिषेधशास्त्रवैयर्थ्यदोषश्चतुर्थः । एतद्दोषचतुष्टयपरिहारार्थं उत्तरश्लोक इत्याह भाष्यकारः— अकृतेति ।

फलान्तरमाह—अविद्यादीति । आदिपदाद्रागद्वेषादयः । अविद्यादीनां क्लेशानां मूलभूतं कर्म । जीवादृष्टं तद्युक्त आशयोऽन्तःकरणं तद्वशात् । अविद्यादिक्लेशकर्माशयैरपरामृष्टस्त्वीश्वर एक एवेति भावः ।

भूत्वाभूत्वा कल्पेकल्पे इति भाव. । कार्यकरणसङ्घातात्मको भूतग्रामः । स्थावरजङ्गमशरीराभिमानी सामासबुद्धिरूपजीवसमुदाय इत्यर्थः । अयं हि लिङ्गशरीरी जीवसमुदायः कल्पेकल्पे जायते स्थावरजङ्गमात्मकस्थूलशरीरसंयोगात् । तद्वियोगाच्च प्रलये प्रलये म्रियते ।

एतेन यः पूर्वकल्पस्थो भूतग्रामस्स एवायं वर्तमानकल्पस्थो न त्वन्य इति न कृतहानाकृताभ्यागमदोषद्वयप्रसङ्गः । स्थूलशरीरनाशेऽपि लिङ्गशरीरस्य प्रलयेऽप्यज्ञाने निलीय वर्तमानत्वेन न

यदुपन्यस्तमक्षरं तस्य प्राप्त्युपायो निर्दिष्टः- 'ओमित्येकाक्षरं ब्रह्म' इत्यादिना । अथेदानीमक्षरस्यैव स्वरूपनिर्विवक्षयेदमुच्यते, अनेन योगमार्गेण इदं गन्तव्यमिति—

परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ।
यस्स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥२०॥

पर इति । परः व्यतिरिक्तो भिन्नः; कुतः? तस्मात्पूर्वोक्तात् । तुशब्दोऽक्षरस्य विवक्षितस्याव्यक्ताद्वैलक्षण्यविशेषणार्थः । भाव अक्षराख्यं परं ब्रह्म । व्यतिरिक्तत्वे सत्यपि सालक्षण्यप्रसङ्गोऽस्तीति तद्विनिवृत्त्यर्थमाह—अन्य इति । अन्यो विलक्षणः स चाव्यक्तः

---

प्रलये जीवानां मुक्तिरिति न सर्वमुक्तिप्रसङ्गः । तत्तज्जीवान्तःकरणेषु तत्तज्जीवकृतसुकृतदुष्कृतकर्मवासनासत्त्वात्, तद्वासनावशेन पुनः प्रपञ्चे तत्तदुचितपुण्यपापशरीरभोगसत्त्वाच्च न विधिनिषेधशास्त्रवैयर्थ्यम् । गुरुशास्त्रोपदेशं विना लिङ्गशरीरस्य कालतो नाशाभावान्न मोक्षशास्त्रवैयर्थ्यमिति सिद्धम् ।

अव्यक्तं चतुर्मुखस्य शरीरमिति रामानुजः, तदयुक्तम्—चतुर्मुखस्य स्थूलशरीरे जीवानां प्रवेशायोगादत एव ततो निर्गमायोगाच्च । न च पितृदेहात्पुत्रदेह इव चतुर्मुखदेहाद्भूतग्राम उदेतीति वाच्यं, चतुर्मुखस्य मनसैव प्रायेण सर्वप्रपञ्चस्य जातत्वात् । सङ्कल्पपूर्विका हि सृष्टिः । सनकादीनां ब्रह्ममानसपुत्रत्वेन ब्रह्मशरीरजत्वाभावाच्च । चतुर्मुखदेहात्प्रजापत्यादिदेहानां जातत्वेऽप्यस्मदादिदेहानामजातत्वाच्च ।

तत्तद्व्यष्टिशरीरे तत्तज्जीव इव ब्रह्मशरीरे सर्वजीवानां सत्त्वमित्यप्ययुक्तम्—तथासति ब्रह्मशरीरे सर्वेषां स्वीयत्वाभिमानस्य भवितव्यत्वात् । निद्रावस्थायामभिमानाभावेऽपि प्रलयावसानोत्तरक्षणे तत्सद्भावात् । न चोत्तरक्षण एव तत आविर्भवन्तीत्यदोष इति वाच्यं, उत्तरक्षण एव सर्वस्थूलशरीरसद्भावाधेन तत उत्तिष्ठेरन्, प्रजापत्यादिक्रमेण चिरकालाय हि प्रपञ्चसृष्टिः । न च तत्रैवाज्ञाने निलीय वर्तन्त इति वाच्यं, तथासति लाघवादज्ञानमेवाव्यक्तमिति वक्तव्यत्वात्, किंपुनर्ब्रह्मशरीरपरिग्रहेण ॥१९॥

पर इति । वृत्तमनुवदति—यदिति । यदक्षरं वेदविदो वदन्तीति यदक्षरमुपन्यस्तं तस्याक्षरस्य ब्रह्मणः प्राप्तौ उपायसाधनं निर्दिष्ट ओंकारोपासनरूपः विष्णुस्मरणरूपश्च । आदिपदादनन्यचेता इति श्लोकस्य संग्रहः । मामुपेत्येत्यादिकं तु प्रसङ्गादुक्तमिति भावः ।

अथ अक्षरस्य प्राप्त्युपायनिर्देशानन्तरमित्यर्थः । अक्षरस्य उपेयस्य ब्रह्मण इत्यर्थः । एवकारात्त्वन्यस्येति भावः । स्वरूपस्य निर्वक्तुमिच्छा निर्विवक्षा तया । इदं पद्यद्वयं उक्तिप्रकारमेव दर्शयति—अनेनेति । अनेनोक्तेन योगमार्गेण गन्तव्यं ब्रह्मेदमित्युच्यते । पर इति । पृथग्भूत इत्यर्थः । घटात्पटवदिति भावः ।

नन्वु घटाद्भिन्नोऽपि पटो दृश्यत्वजडत्वादिधर्मैर्घटसलक्षण एवेति तद्वदव्यक्ताद्भिन्नोऽप्यक्षरो न किमव्यक्तसलक्षण इति शङ्कते—व्यतिरिक्तत्वे सत्यपीति । तद्विनिवृत्त्यर्थमव्यक्तसालक्षण्यप्रसङ्गनिवृ-

अनिन्द्रियगोचरः। 'परस्तस्मा'दित्युक्तं; कस्मात् पुनः परः? पूर्वोक्ताद्भूतग्रामबीजभूतादविद्यालक्षणादव्यक्तात् । सनातनः चिरन्तनः यः स भावः सर्वेषु भूतेषु ब्रह्मादिषु नश्यत्सु न विनश्यति ॥२०॥

सार्थम् । विलक्षणः विभिन्नलक्षणः । दृश्यत्वजडत्वमिथ्यात्वप्रमुखलक्षणवदव्यक्तं, द्रष्टृत्वचिदात्मत्वसत्यत्वप्रमुखलक्षणवानक्षर इति भावः ।

नेन्द्रियगोचर इति । एतेन संक्रमनोगोचरत्वं सिद्धम् । मनसोऽनिन्द्रियत्वात् । यद्वा मतभेदेन मनसोऽपीन्द्रियत्वादगोचर इत्येवार्थः । वाङ्मनसाविषयत्वाद्ब्रह्मणः । न च पुनरात्मगोचरत्वे शून्यवादापत्तिरिति वाच्यं, साक्षिचैतन्येन स्वेनैव स्वस्य भास्यत्वाच्छून्यस्यापि साक्षिभास्यत्वादभास्यत्वे शून्यस्यैवाभावप्रसङ्गात् । तस्मादत्यन्तागोचरोऽप्यात्मत्वादेवाक्षरस्सिद्ध्यति- आत्मन एवासिद्धौ सर्वासिद्धिप्रसङ्गात् ।

तस्मात्पूर्वोक्तादित्यर्थः । ननु पूर्वमुक्तो भूतग्राम एवेत्यत आह—भूतग्रामबीजभूतादिति । एतेन भूतग्रामादपि वैलक्षण्यमुक्तप्रायम्, भूतग्रामस्याप्यव्यक्तकार्यत्वं मृत्कार्यस्य घटस्य मृदात्मत्वमिवाव्यक्तात्मत्वात् । जलादेर्मृद्वैलक्षण्ये उक्ते सति अनुक्तस्यापि घटवैलक्षण्यस्य सिद्धत्वात् ।

न च अव्यक्तस्याऽचिद्रूपत्वाद्भूतग्रामस्य चिदचिदात्मकत्वाच्च कथमेकात्मत्वमिति वाच्यं, भूतग्रामस्य चिदचिदात्मकत्वे अव्यक्तप्रभवत्वस्यैवासम्भवप्रसङ्गात् । न ह्यज्ञानाद्ज्ञानं जायते, नापि नित्यं ज्ञानं कथमपि जायते, तस्मादेक एवाक्षरश्चिदात्मक, तस्मादन्यस्सर्वोऽपि भूतग्रामोऽचिदात्मक एव । अविद्यालक्षणादज्ञानस्वरूपात् ब्रह्मादिषु हिरण्यगर्भादिस्तम्बान्तेषु कार्यकरणसङ्घातात्मकेषु भूतेषु प्राणिषु नश्यत्सु सत्सु, यस्तस्मादव्यक्तात्परोऽन्यस्सनातनोऽव्यक्तो भावः स तु सर्वेषु भूतेषु नश्यत्सु न विनश्यति । भवति सर्वत्र सर्वदास्तीति भावः- सद्रूपः; अत एवोक्तमक्षराख्यं परं ब्रह्मेति । ब्रह्मण एकस्यैव सद्रूपत्वादन्यस्य सर्वस्यापि मिथ्यात्वात् ।

स सर्वेषु भूतेषु नश्यत्सु न विनश्यतीत्यनेन 'अविनाशि तु तद्विद्धि येन सर्वमिदं तत'मिति पूर्वोक्तं स्मारितम् । यस्स इत्येकत्वनिर्देशेन चात्मन एकत्वं स्थापितम् । न च सर्वेषु भूतेषु जीवेषु नश्यत्सु परमात्मा नश्यतीति वाच्यं, 'अजो नित्यश्शाश्वत' इति पूर्वोक्तविरोधात् ।

यदि तु जीवास्सचिदाभासा बुद्धय इति विवक्षितं तर्हि संसारिणस्ते ह्यनन्ता नश्वरा एव- तेऽपि मुक्तावेव नश्यन्ति, न तु प्रलये । अन्यथा प्रलये सर्वमुक्तिप्रसङ्गात् । न चैवं सर्वेषु भूतेषु नश्यत्स्विति कथमुक्तमिति वाच्यं, स्थूलदेहनाशाभिप्रायात् । लोके स्थूलदेहनाशादेव हि 'मृतो देवदत्त' इत्यादिप्रतीतिः । सूक्ष्मदेहश्चाविद्याया निलीय संस्कारात्मना वर्तत इति तस्य नाश औपचारिकः । कारणदेहस्त्वविद्यैव । सा चाविद्या विक्षेपशक्तिं संकोच्य केवलामावरणशक्तिमवलम्ब्य जीवान्मोहयन्ती वर्तते प्रलये सुषुप्तौ निद्रेव । एवमव्यक्तस्य प्रलये नाशाभावादेव भूतेषु नश्यत्स्वित्युक्तम् । न त्वव्यक्ते नश्यतीति । न चैवमव्यक्तस्य नित्यत्वप्रसङ्गः, मुक्तौ तन्नाशात् ।

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् ।**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥२१॥**

**अव्यक्त इति । योऽसावव्यक्त अक्षर इत्युक्तः, तमेवाक्षरसंज्ञकमव्यक्तं भावमाहुः परमां प्रकृष्टां गतिम् । यं परं भावं प्राप्य गत्वा न निवर्तन्ते संसाराय, तद्धाम तत् स्थानं परमं प्रकृष्टं मम; विष्णोः परमं पदमित्यर्थः ॥२१॥**

---

ननु अव्यक्तं प्रजापतेः स्वापावस्थेत्युक्तं, कथं तत्र ब्रह्मणोऽपि नाशः ? येन ब्रह्मादिष्विन्त्युच्यते इति चेन्नायं दोषः—यदेवाज्ञानं प्रजापतेर्निशायां वर्तते तदेव प्रजापतेर्मरणेऽपीति । नित्यनैमित्तिक-महाप्रलयेषु त्रिष्वप्यव्यक्तमेकमेव । सत्यप्यवान्तरविशेषे वस्त्वैक्यात् । तस्मात्प्रजापतेः स्वापावस्थैव मरणावस्थाप्यव्यक्तमेवेति ।

एवं महाप्रलये स्थावरजङ्गमात्मकब्रह्मादिस्तम्बपर्यन्तसर्वस्थूलदेहानां स्वरूपतो नाशात् सूक्ष्मदेहाना-मविद्यायां लयरूपनाशादेक एवाक्षर आत्मा तमसः परः तमसस्साक्षी सन्वर्तत इत्यविनाशी । एवं स्थिते कोऽत्र जीवेश्वरभेदस्य जीवभेदस्यावकाशो वा ? न कोऽपि ।

यत्तु रामानुजः—अव्यक्तोऽयमक्षरो जीवः, जात्येकत्वादेकत्वनिर्देश इति, तत्तुच्छम्—प्राण-धारणस्य जीवलिङ्गत्वात्प्राणिनां जीवानामव्यक्तप्रभवत्वेनाव्यक्तात्परान्यत्वाभावात्, नश्वरत्वेन चाविना-शित्वाभावात् । त्वदभिमतानाममीषां जीवानां सर्वभूतशब्दवाच्यत्वेन सर्वेषु भूतेषु नश्यत्स्वित्यनेन परामृष्टत्वादक्षरस्य चामीभ्यो विलक्षणत्वात्, लिङ्गिनां जीवानां प्रमाणव्यक्तत्वेनाव्यक्तत्वायोगात् । सर्वोपाधिविनिर्मुक्तस्याक्षरस्य प्राणाभावेन प्राणधारणप्रयुक्तजीवत्वाभावात्, भेदकाभावेन भेदाभावात्, भेदकसत्त्वे सर्वोपाधिविनिर्मुक्तत्वाभावात्, अक्षरादधिकस्य परमपुरुषस्य सत्त्वे 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गति'रिति श्रुतिविरोधात् । तस्मादव्यक्तोऽयमक्षरः प्रत्यगभिन्नः परमात्मैव ॥२०॥

अव्यक्त इति । तमेवाक्षरसंज्ञकं भावं परमां गतिमाहुरित्यन्वयः । भावः परब्रह्म । गम्यत इति *गतिः प्राप्यस्थानम् । पदमिति यावत् । कस्मादव्यक्तस्य प्रकृष्टगतित्वमत आह—यं प्राप्य* न निवर्तन्त इति । अपुनरावर्तित्वादव्यक्तोऽयमात्मा परमं पदमन्यत्सर्वं पुनरावर्तित्वात्परमं पदं न भवति स्वर्गादिकमिति भावः । संसाराय संसारमनुभवितुमित्यर्थः । तदिति विधेयप्राधान्यात्क्लीबत्वम् । तन्मम विष्णोः परमं धामेत्यन्वयः । धामशब्दार्थमाह— स्थानमिति । यावदर्थमाह—पदमिति । स्वरूपमिति फलितार्थः । नहि सर्वव्यापिनो विष्णोः किञ्चित् स्थानं भवितुमर्हति । न वा विष्णोरक्षरस्य स्थानमक्षर एव भवितुमर्हति । एतेनाक्षरस्य स्वरूपं निरुक्तमव्यक्तात्परत्वं तदन्यत्वं, सनातनत्वमव्य-क्तत्वमविनाशित्वं सर्वभूतविनाशसाक्षित्वं तद्विष्णोः परमं पदमिति श्रुत्युक्तपरमपदत्वमपुनरावर्तित्वं भावत्वं चेत्येवं रूपम् । ततश्च सच्चिदानन्दरूपत्वं सिद्धम् । नचानन्दरूपत्वमसिद्धमिति वाच्यं, अन्यतरस्य दुःखात्मत्वेन तद्विलक्षणत्वेन तत्सिद्धेः ।

तल्लब्धेरुपाय उच्यते—

पुरुषस्स परः पार्थ! भक्त्या लभ्यस्त्वनन्यया ।
यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥२२॥

पुरुष इति । पुरुषः पुरि शयनात् पूर्णत्वाद्वा, स परः पार्थ!, परो निरतिशयः यस्मात्पुरुषान्न परं किंचित् । स भक्त्या लभ्यस्तु ज्ञानलक्षणया अनन्यया आत्मविषयया ।

---

यत्तु रामानुजः—अचेतनप्रकृतिरेकं नियमनस्थानं जीवप्रकृतिर्द्वितीयं मुक्तस्वरूपं तु परं नियमनस्थानमिति, तदल्पम्—मुक्तात्मस्वरूपस्य स्वाभिन्नत्वेन स्वनियाम्यत्वाभावात् । यदि मुक्तस्यापि नियमनं तर्हि मुक्तत्वस्यैवासिद्धिः नियमनस्य दुःखहेतुत्वात् । नहि मुक्तौ लेशतोऽपि दुःखसद्भावः । सत्यप्यनात्मन्यन्तःकरणे तत्तादात्म्याध्यासस्याभावमात्रेण सुषुप्तावेव नास्ति किञ्चिदपि नियमनं जीवस्येति स्थिते कथं पुनस्सर्वोपाधिनाशेऽपि जीवस्य नियमनं भवेत्? तस्माज्जीववास्तवस्वरूपापरिज्ञानमूलकमिदं रामानुजभाष्यम् ।

यत्तु धाम तेज इत्यस्यैव व्याख्यानान्तरं, तद्युक्तमेव, परं तु विष्णुशेषत्वमक्षरस्यायुक्तम्—अक्षरस्यैवात्मत्वेन सर्वशेषित्वादात्मन एव व्यापकत्वेन विष्णुत्वाच्च । प्रकृतिवियुक्तज्ञानैकाकारयोरात्मपरमात्मनोश्शेषशेषिभावकल्पनाऽयोगाच्च । मुक्तस्याप्यपरिच्छिन्नज्ञानरूपत्वेन विष्णोस्तद्वैलक्षण्यायोगाच्च । अपरिच्छिन्नज्ञाने परिच्छेदकाभावेन जीवेश्वरभेदानवकाशाच्च । परिच्छेदकसत्त्वेऽपरिच्छिन्नज्ञानरूपालाभाच्च । ज्ञानबहुत्वे एकस्य ज्ञानस्य ज्ञानान्तरेणैव परिच्छेदलाभेनापरिच्छिन्नत्वासम्भवाच्च॥२१॥

पुरुष इति । भूतानि यस्यान्तस्स्थानि सर्वमिदं येन ततं स परः पुरुषस्तु हे पार्थ! अनन्यया भक्त्या लभ्यः भवतीति शेषः । पुरि देहे शेत इति पुरुषः । पिपर्ति पूरयति सर्वमिति वा पुरुषः । परिपूर्णस्यापि देहान्तरावस्थितिर्घटते पूर्णस्याकाशस्येव घटान्तरवस्थितिः । घटकत्वं तु मायाया एव—नह्यन्यस्यैवंविधशक्तिः । एवं पूर्णत्वादेव परः । नहि परिपूर्णादधिकं वस्तु किञ्चिद्भवितुमर्हति । पूर्णादन्येषां सर्वेषामपूर्णानामल्पत्वात् ।

पुरुषस्य परत्वे श्रुतिं प्रमाणयति—पुरुषादिति । 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः ॥' इति यस्माच्छ्रुत्युक्तं तस्मात्पुरुषः पर इत्यर्थः । महान्महत्तत्त्वमव्यक्तं प्रकृतिर्माया । पुरुष आत्मा, पूर्वोक्तोऽव्यक्तोऽक्षर इति विवेकः ।

भक्तिरत्र ज्ञानमेवेत्याह—ज्ञानलक्षणमिति । अद्वितीये आत्मनि सेवाद्ययोगादिति भावः । अनन्यया अनन्यविषययेत्यर्थः । फलितमाह—आत्मविषययेति । आत्मविषयया भक्त्या आत्मज्ञानेनेति सिद्धम् । 'ज्ञानादेव तु कैवल्य'मित्यादिशास्त्रादिति भावः ।

नच निरवकाशे आत्मनि कथं भूतानि सन्तीति वाच्यं, मायया निरवकाशेऽप्यात्मनि भूतानामवकाशलाभात् । सत्स्वपि भूतेषु आत्मनो निरवकाशत्वाभङ्गाच्च । ननु भूतानां कुतः पुरुष-

यस्य पुरुषस्यान्तरस्थानि मध्यस्थानि भूतानि कार्यभूतानि, कार्यं हि कारणस्यान्तर्वर्ति भवति। येन पुरुषेण सर्वमिदं जगत् ततं व्याप्तं आकाशेनेव घटादि ॥२२॥

स्यान्तरवस्थितिरत आह—कार्यभूतानीति। कार्यत्वाद्भूतानां कारणे पुरुषेऽवस्थितिरुचितेत्यर्थः। औचित्यमेव दर्शयति—कार्यं हीति। हिः प्रसिद्धौ। घटादेर्मृदादौ रजतादेः शुक्तिकादौ च सत्त्वादिति भावः। विवर्तजगदधिष्ठानत्वाज्जगदाकारपरिणतमायाधिष्ठानत्वाद्वा पुरुषस्य भूताधिष्ठानत्वोपपत्तिः।

न केवलं भूतानामन्तरवस्थितत्वेन भूतेभ्यो बहिरेव पुरुषोऽस्ति, किन्त्वन्तरपीत्याह—येन सर्वमिदं ततमिति। 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति श्रुतेरिति भावः। अत एव पूर्णत्वात्पुरुषत्वं पुरुषस्य।

नचैवं पुरुषे भूतसत्त्वे पुरुषस्य सद्वितीयत्वापत्तिरिति वाच्यं, मृदि घटसत्त्वे घटेन मृदस्सद्वितीयत्वादर्शनात्। शुक्तिकायां रजतसत्त्वे रजतेन शुक्तिकायाः सद्वितीयत्वादर्शनाद्गगने नैल्यसत्त्वे नैल्येन गगनस्य सद्वितीयत्वादर्शनाच्च। नहि मायामयैर्वस्तुभिस्सत्यस्य सद्वितीयत्वं- मरीचिकाजलैर्भूमेः पंकिलत्वादर्शनात्। नच मायया सद्वितीयत्वमिति वाच्यं, तस्यापि मिथ्यात्वात्। नहि परमार्थतो मायास्ति।

एतेन भूतानां यत्प्रदेशे सत्त्वं तत्प्रदेशस्यात्मनाऽव्याप्यत्वादपूर्णत्वमात्मन इति शङ्कापि प्रत्युक्ता। वस्तुतः पुरुषे भूतानामसत्त्वात्। मृदि घटाकारस्येव घटनाम्न इव च पुरुषे भूतनामाकारयोः कल्पितत्वात्।

तस्मादेकमेवाद्वितीयं ब्रह्म पुरुषः। सच ज्ञानैकलभ्यः। पुरुषस्वरूपज्ञानपूर्वकत्वात्पुरुषस्वरूपलाभस्य। नच नित्यसिद्धस्वरूपस्य कः पुनरपरो लाभ इति वाच्यं, नित्यसिद्धेऽप्यर्थेऽज्ञातेऽलब्धत्वव्यवहारात्। यो हि घटस्वरूपं न जानाति स पुरः स्थितमपि घटं नैव लभेतेति।

यत्तु रामानुजः—परः पुरुषः परमपुरुषो विष्णुः, नतु प्रत्यगात्मा। तस्य पुरुषत्वेन परमपुरुषत्वाभावात्; स च भक्त्या लभ्य इति, तन्मन्दं— उक्तलक्षणपुरुषाधिकस्य परमपुरुषशब्दवाच्यस्य कस्यचिदभावात्। 'पुरुषान्न परं किञ्चि'दिति श्रुत्या पुरुषाधिकस्य निरस्तत्वाच्च। मत्तः परतरं नान्य'दिति गीतया च मत्तः पुरुषात्परतरं नान्यदस्तीत्येव श्रुत्यनुसारेणोक्तत्वाच्च। 'अविनाशि तु तद्विद्धि येन सर्वमिदं तत'मिति श्लोकस्य भवतापि पुरुषपरत्वेन व्याख्यातत्वात्कुतोऽयं पुरुषः परो न भवेत्? पुरुषस्यैव सर्वव्यापकत्वे परमपुरुषकल्पनं व्यर्थं, यदि तु पुरुषो न सर्वव्यापकस्तर्हि पुरुषत्वमेव पुरुषस्य भज्येत, अविनाशिश्लोकोक्तं 'येन सर्वमिदं तत'मित्येतद्विरुद्ध्येत। नच तत्र सर्वपदस्य देहादिपरत्वेन संकोच इति वाच्यं, मानाभावात्। व्यष्टिदेहव्यापित्वेनैव पुरुषस्य पूर्णत्वे घटोदरव्यापित्वेन जलस्यापि पूर्णत्वप्रसङ्गात्। किं च तव मते पुरुषस्याणुत्वे सुतरां पूर्णत्वानुपपत्तिः। नचात एव पुरुषोऽत्र परमपुरुष इत्युक्तमिति वाच्यं, अविनाशीति श्लोके पुरुषस्यैवोक्तत्वात्। तस्माज्जीवेश्वरयोर्द्वयोस्सर्वव्यापित्वमनुपपन्नम्। उक्तं तु द्वयोरपि सर्वव्यापित्वमविनाशीति। पुरुषस्स इति च श्लोकद्वयेन भगवतैवेत्येतदनुपपत्तिपरिहाराय जीवेश्वरयोरभेदोऽवश्यमभ्युपगन्तव्यो भवता।

प्रकृतानां योगिनां प्रणवावेशितब्रह्मबुद्धीनां कालान्तरमुक्तिभाजां ब्रह्मप्रतिपत्तये उत्तरो मार्गो वक्तव्य इति 'यत्र काले' इत्यादिविवक्षितार्थसमर्पणार्थमुच्यते; आवृत्तिमार्गोपन्यास इतरमार्गस्तुत्यर्थः—

यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः।
प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ! ॥२३॥

यत्रेति। यत्र काले प्रयाता इति व्यवहितेन सम्बन्धः। यत्र यस्मिन् काले त्वनावृत्तिं अपुनर्जन्म आवृत्तिं तद्विपरीतां चैव। योगिन इति। योगिनः कर्मिणश्चोच्यन्ते, कर्मिणस्तु गुणतः- 'कर्मयोगेन योगिना'मिति विशेषणात् योगिनः। यत्र काले प्रयाता योगिनः अनावृत्तिं यान्ति, यत्र काले च प्रयाता आवृत्तिं यान्ति तं कालं प्रवक्ष्यामि भरतर्षभ! ॥२३॥

---

तस्मान्नास्ति पुरुषातिरिक्तः परमपुरुषो यो भक्त्या लभ्यः। परमशब्दसाहचर्यं विनापि पुरुषशब्दस्यैव परमात्मनि प्रयोगदर्शनाच्च। तेनेदं पूर्णं पुरुषेण सर्वं 'सहस्रशीर्षा पुरुषः' इत्यादिश्रुतिषु। न चैव परमात्मैव पुरुषः जीवस्तु पुरुषशब्दवाच्यो नैवेति वाच्यं, जीवस्य पुरुषत्वस्य सर्वसम्मतिपन्नत्वेन तत्र विप्रतिपत्तेरेवाभावात्।

ननु अव्यक्तोऽक्षर इति श्लोकोक्तादस्य पुरुषस्य वैलक्षण्यमक्षरपुरुषयोर्जीवेश्वरत्वरूपे भेदे सत्येव सिद्ध्यति न त्वन्यथेति कृत्वा जीवोऽक्षरः, ईश्वरस्तु परमपुरुष इति चेन्मैवम्—अव्यक्तश्लोकेन पुरुषस्य स्वरूपमुक्तमनेन पुरुषस्य प्राप्त्युपाय उच्यत इत्येतद्वैलक्षण्यार्थकत्वात्तुशब्दस्य। अन्यथा प्रकृतिविविक्तादृज्ञानैकाकाराज्जीवात्तादृशस्यैवेश्वरस्य कीदृशं वैलक्षण्यं स्यात्। न च ज्ञानेश्वरशक्त्याद्याधिक्यमस्यत्वरूपं तस्योपाधिधर्मत्वादुपाधेश्च मुक्तौ नष्टत्वात्। न चेश्वरस्यास्त्युपाधिरिति वाच्यं, जीवो निरुपाधिकः ईश्वरस्तु सोपाधिक इति वाक्यस्य वक्तुर्लज्जावहत्वात्। निरुपाधिकं हि चैतन्यं ब्रह्म। ईश्वरस्तु न ब्रह्म सोपाधिकत्वाज्जीवस्तु ब्रह्मैव निरुपाधिकत्वादिति। यदुपासनया जीवस्यैव ब्रह्मत्वं किं तस्येश्वरस्याब्रह्मत्वं न्याय्यम्? तस्मादव्यक्ताद्विलक्षणोऽक्षरः पुरुषः प्रत्यगभिन्नः परमात्मैव। तल्लाभोपायश्च ज्ञानमेव। न भक्तिः भक्तेर्द्वैतविषयत्वाद्द्वैतस्य च भयहेतुत्वेन मुक्त्यनुपायत्वात् ॥२२॥

यत्रेति। यत्र काले तु प्रयाता योगिनः अनावृत्तिमावृत्तिं चैव यान्ति हे भरतर्षभ! तं कालं वक्ष्यामि—प्रणवावेशितब्रह्मबुद्धीनामिति। प्रणवे ओंकारे आवेशिता आहिता ब्रह्मबुद्धिर्ब्रह्मेति दृष्टिर्यैस्तेषां तथोक्तानां; प्रणवं ब्रह्मदृष्ट्योपासमानानामित्यर्थः। 'ओमित्येकाक्षरं ब्रह्म व्याहरन्' इति श्लोकोक्तरीत्येति भावः। ब्रह्मप्रतिपत्तये हिरण्यगर्भलोकप्राप्तये। ब्रह्मलोकप्राप्तिद्वारा परमात्मप्राप्तय इति वा। उत्तरमार्गोऽर्चिरादिमार्गः। विवक्षितार्थं अपेक्षितार्थं। तत्समर्पणार्थमुत्तरमार्गो वक्तव्य इत्येतदर्थं यत्र काल इत्याद्युच्यत इत्यन्वयः। ननु तर्हि उत्तरमार्ग एवोच्यतामत आह—आवृत्तीति। ज्ञानिस्तुत्यर्थमज्ञानिचरित्रकथनमिति भावः।

यत्र काले यस्मिन्मार्गे इत्यर्थः। कालशब्दस्यात्र लक्षणया कालाभिमानिदेवतोपलक्षितमार्ग-

परत्वम् । 'एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुन'रिति वक्ष्यमाणश्लोकार्थानुगुण्येन सावृत्तित्वानावृत्तित्वयोर्मार्गधर्मत्वेन कालधर्मत्वाभावात् । प्रयाता मृता. स्थूलशरीरवियोगात्मकं मरणं प्राप्य प्रयाणं कृतवन्त इत्यर्थः । तं कालं तं मार्गमित्यर्थः । यत्र मार्गे प्रयाता योगिनोऽनावृत्तिं यान्ति तं दक्षिणमार्गं च तुभ्यं वक्ष्यामीत्यर्थः । श्रोतुरसावधानत्वापादनाय वक्ष्यामीत्युक्तिः ।

नच कालशब्दस्य मार्गार्थकथनं भाष्यविरुद्धमिति वाच्यं, तत्र प्रयाता गच्छन्तीत्यादौ भाष्य एव तत्रेत्यस्य मार्गार्थदर्शनात् । तदनुसारेणात्रापि मार्गार्थकथनस्यैवोचितत्वात् ।

ननु भाष्यमपि मूलविरुद्धमेव, मूले कालशब्दस्यैव दर्शनात् । दक्षिणायने शरतल्पं गतस्य भीष्मस्य स्वच्छन्दमरणस्य उत्तरायणपुण्यकालनिरीक्षणाचेति चेन्मैवम्—'शुक्लकृष्णे गती ह्येते' इति, 'एते सृती पार्थ जान'न्निति च गत्योरेव परामृष्टत्वात् ।

न चोत्तरायणे शुक्लपक्षे अह्नि मृता उत्तरमार्गेण यान्ति; दक्षिणायने कृष्णपक्षे रात्रौ मृता दक्षिणमार्गेण यान्तीत्येतदर्थं कालमार्गावुभावपि वक्तव्याविति वाच्यं, तथासति उत्तरायणे यस्यकस्यापि पापिनो मृतिर्न स्यात्, दक्षिणायने यस्यकस्यापि सुकृतिनो मृतिर्न स्यात् । न त्वेवं व्यवस्था दृश्यते; क्रिमिकीटपशुपक्ष्यादीनां स्थावराणां च उत्तरायणेऽपि मरणदर्शनात् । ब्रह्मविदादीनां दक्षिणायनेऽपि मरणदर्शनाच्च ।

किं च उत्तरायणे कृष्णपक्षेऽह्नि मृतानां तत्रैव शुक्लपक्षे रात्रौ मृतानां वा नोत्तरमार्गगतिस्स्यात्; तथा दक्षिणायने शुक्लपक्षे रात्रौ मृतानां तत्रैव कृष्णपक्षेऽह्नि मृतानां वा न दक्षिणमार्गगतिस्स्यात् । न चैवंविधानां प्रयाणार्थः कश्चिद्दक्षिणोत्तरान्तरालमार्गः श्रूयते । न चाधोगतिरिति वाच्यं, पापिनामेव तत्र गतिसद्भावात् । न चामी पापिन एवेति वाच्यं, विहिताचरणानामपि तथा मृतिदर्शनात् ।

अपि च दक्षिणायने कृष्णपक्षे निशायामेव मृतानां चन्द्रलोकप्राप्तौ किंपुनरुत्तरायणे कृष्णपक्षे निशायां मृतानां किं वा पुनर्दक्षिणायने शुक्लपक्षेऽह्नि मृतानामित्यर्थापत्तेश्च स्यादेव चन्द्रलोकप्राप्तिः । न चेष्टापत्तिः, 'धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायन'मिति तत्रैव मृतानां चन्द्रलोकप्राप्तिवर्णनात् ।

किं च अहोरात्रिशुक्लकृष्णपक्षोत्तरायणदक्षिणायनव्यतिरिक्तकालस्यैवाभावात्, तेषां च कालानां सुकृतिमृतिविषयत्वान्नारकिणां मृतिकाल एव नास्ति यत्र मृताः पापिनो नरकं गच्छेयुः ।

अपि चास्तु अहरादीनां कालपरत्वं कथंपुनरग्निर्ज्योतिर्धूमानाम् ? न ह्यग्निरिति ज्योतिरिति धूम इति च कश्चन कालविशेषोऽस्ति । एवमकालवाच्यग्न्यादिशब्दसाहचर्यादहरादिशब्दानामप्यकालवाचित्वमेवोचितं, न तु कालवाचित्वम् । तस्मादग्न्यादिशब्दा देवतावाचका एव । देवताश्चेमा अर्चिरादिमार्गे यथाक्रमं सन्ति । योगिनस्तैर्विनाहर्यन्तुं सम्पिण्डितकरणग्रामत्वेन स्वतो गन्तुमशक्यम् ।

ननु अहरादय कालवाचिन एव न चोक्तदोषापत्तिः । यत्र प्रयाता योगिन एव ब्रह्मलोकादिकं गच्छन्ति, न त्वन्ये इति चेन्मैवम्—ब्रह्मोपासकानां योगिनां दक्षिणायने मृतानां चन्द्रलोकप्राप्ते र्निषिद्धत्वात् । अयोगिनां सोमयाजिनामुत्तरायणे दक्षिणायने वा मृतानां चन्द्रलोकप्राप्तिसम्भवात् ।

न च कर्मयोगिनोऽपि योगिन एवेति वाच्यं, तथासति उत्तरायणे मृतानां कर्मयोगिनां तेषां चन्द्रलोकप्राप्त्यसम्भवात् । न चैव भीष्मस्योत्तरायणकालावेक्षणं व्यर्थमिति वाच्यं, न व्यर्थं लोकसंग्रहार्थत्वात् । 'सम्पद्यमानमाज्ञाय भीष्मं ब्रह्मणि निष्कले' इति भागवताद्भीष्मस्य ब्रह्मसायुज्यं प्राप्तस्य उत्तरमार्गेणापि गमनासम्भवात् । न हि परिपूर्णब्रह्मभावापन्नस्य गत्यागती स्त ।

ननु कोऽसौ लोकसंग्रह इति चेदुच्यते—योगिनां स्वाधीनमरणत्वात्सर्वैरास्तिकैर्योगित्वेन भवितव्यं, ते च योगिन उत्तरायणपुण्यकाले एव म्रियेरन्, उत्तरायणे मृतानां तेषां पुत्रैर्विधीयमानं श्राद्धादिकमप्युत्तरायण एव भवेत्तेन च तच्छ्राद्धादेर्महाफलत्वं तत्कर्तुश्च महाफललाभ इति ।

अथ वा प्रायेण पुण्यकाले मृतानामेव पुण्यलोकावाप्तिरित्येतत्प्रदर्शनार्थं भीष्मस्य तादृशाचरणम् । यद्वा स्वच्छन्दमरणोऽहमिति दर्शयितुं लोकस्येति ।

ननु तत्त्वविदो गत्यागत्यभावात्कालापेक्षाभावेऽपि चन्द्रलोकं ब्रह्मलोकादिकं वा जिगमिषोरस्ति कालापेक्षा· पुण्यकाले मृतानामेव पुण्यलोकावाप्तिरिति चेन्नैवम्—शारीरकशास्त्रविरोधात् ।

तथाहि- (सू· तदोकोऽग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतश्शताधिकया ४ २ १७) तस्य म्रियमाणस्य जीवस्य ओकः आयतनं हृदयं तस्याग्रं नाडीमुखं तस्य ज्वलनं भाविफलस्फुरणं प्रद्योतास्य तेन प्रकाशितद्वारं विद्यासामर्थ्यात्, विद्याशेषगत्यनुस्मृतियोगाच्च, हार्दानुगृहीतः हृदयालयेन सूपासितेन ब्रह्मणा हार्देनानुगृहीतः, शताधिकनाड्या मूर्धस्थानादेव विद्वान्निष्क्रामति, अन्ये तु स्थानान्तरेभ्यः । 'शतं चैका च हृदयस्य नाड्यः, तासां मूर्धानमभिनिस्सृतैका, तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्तीति श्रुतेः । अन्या अन्येषामविदुषामुत्क्रमणे विष्वक् नानाविधा नाड्यो भवन्तीत्यर्थः । सुषुम्नाख्या नाडी हृदयान्निर्गता दक्षिणतालुकण्ठान्तस्तननासिका मध्यभित्तिद्वारा ब्रह्मरन्ध्रं प्राप्ता सूर्यरश्मिभिरेकीकृता । ब्रह्मलोकमार्गस्सगुणब्रह्मोपासकस्य विदुष इति भावः ।

(सू· रश्म्यनुसारी ४ २·१८) तस्माच्छताधिकया सुषुम्नाख्यनाड्या निष्क्रामन् पुरुषो रश्म्यनुसारी निष्क्रामति, सूर्यरश्मिसम्बद्धत्वात्सुषुम्नानाड्या इति तस्माच्छब्दार्थः ।

(सू· निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ४ २·१९) तत्किमविशेषेणैवाह्नि रात्रौ वा म्रियमाणस्य रश्म्यनुसारित्वम्? आहोस्विदहन्येवेति संशयः, अहन्येवेति पूर्वपक्षः, तेन रात्रौ मृतस्य रश्मिप्राप्त्यर्थं सूर्योदयप्रतीक्षास्ति पूर्वपक्षे । इदमेवाह— निशि नेति । निशि मृतस्य सूर्यरश्म्यनुसारित्वं नेति चेन्न, नाडीरश्मिसम्बन्धस्य यावद्देहभावित्वात् । यावद्देहभावी हि नाडीरश्मिसम्बन्धः । दर्शयति चैतमर्थं श्रुतिः - 'अमुष्मादादित्यात्प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते अमुष्मिन्नादित्ये सृप्ताः' इति । अमुष्मादादित्यात्प्रतायन्ते विस्तरेण निर्गच्छन्ति या रश्मयः ता आसु नाडीषु देहस्थासु सृप्तास्सम्बद्धा भवन्ति । आभ्यो नाडीभ्यो याः प्रतायन्ते ताः अमुष्मिन्नादित्ये सृप्ता भवन्तीत्यर्थः । निदाघसमये च निशास्वपि किरणानुवृत्तिरुपलभ्यते—उपादि-

कार्यदर्शनात् । स्तोकानुवृत्तेस्तु दुर्लक्ष्यत्वम् । यदि तु रात्रौ प्रेतो दिनैव रश्म्यनुसारेणोर्ध्वं आक्रमेत रश्म्यनुसारानर्थक्यं स्यात्, न ह्येतद्विशिष्याभिधीयते- यो दिवा प्रैति स रश्मीनपेक्ष्योर्ध्वं आक्रमते, यस्तु रात्रौ सोऽनपेक्ष्यैवेति । अथ तु विद्वानपि रात्रिप्रायणापराधमात्रेण नोर्ध्वं आक्रमेत, तर्हि पाक्षिकफला विद्येति अप्रवृत्तिरेव तस्यां स्यात्, मृत्युकालानियमात् । अथापि रात्रौ प्रेतोऽहरागमं निरीक्षेत, अहरागमेऽप्यस्य कदाचिद्रश्मिसम्बन्धानर्हं शरीरं स्यात्, पावकादिसम्पर्कात् । 'स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छति' इति श्रुतिरनुदीक्षां दर्शयति । क्षिप्येन्म्रियेत । तस्मादविशेषेणैवेदं रात्रिं दिवं रश्म्यनुसारित्वम् ।

(सू अतश्चायनेपि दक्षिणे ४-२-२०) अत एवचो दीक्षानुपपत्तेः । विद्याया अपाक्षिकफलत्वाच्च । दक्षिणायनेऽपि म्रियमाणो विद्वान् प्राप्नोत्येव ब्रह्मलोकं- उत्तरायणमरणप्राशस्त्यप्रसिद्धेः भीष्मस्य च प्रतीक्षादर्शनात् । आपूर्यमाणपक्षाद्यान् षडुदङेति मासानिति च श्रुतेरपेक्षितव्यमुत्तरायणमितीयमाशङ्का सूत्रेणानेन परिहृता । षडुदङ्मासानेतीति श्रुत्यन्वयः । प्राशस्त्यप्रसिद्धिरविद्वद्विषया । भीष्मस्य तु विदुषोऽप्युत्तरायणप्रतीक्षणमज्ञानामुत्तरायणे देहान्मरणं चेत्प्रशस्तमित्यभिज्ञाभिवदनरूपाचारपरिपालनार्थमिति । एतेनाविदुषामेवोत्तरायणमरणं परलोकसुखावहत्वेन प्रशस्तं, विदुषां तु दहराद्युपासकानां दक्षिणायनमरणमपि ब्रह्मलोकप्रापकमेव- अर्चिरादिमार्गस्यायनद्वयेऽप्यनावृतत्वादिति स्थितम् । श्रुतिरपि- 'तेऽर्चिषमभिसम्भवन्ति, अर्चिषोऽहः, अह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्य'मित्यर्चिरहरादीनां प्राप्यत्वेन देवतारूपत्वमेव ब्रूते, न तु कालविशेषात्मकत्वं- न ह्यहि मृतोऽहरशुक्लपक्षं शुक्लपक्षान्मासान्वा प्राप्नुयात् । श्रुत्यन्तरमपि- 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति, स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति, इमे चार्चिरादयो गन्तॄणां नेतार' इति । 'आतिवाहिकास्तल्लिङ्गा'दिति (४-३-४) सूत्रेणापि सिद्धान्तितम् । तस्माद्ब्रह्मलोकादिकं प्रेप्सोर्विदुषो नास्ति कालापेक्षा ।

अथ वा योगिनः प्रति चायमहरादिकालविनियोगोऽनावृत्तये स्मर्यते, स्मार्ते चैते योगसाङ्ख्येन श्रौते- 'सू॰ योगिनः प्रति च स्मर्यते स्मार्ते चैते' (४-२-२१) सूत्रात् । तथा च यः श्रुत्युक्तो दहराद्युपासको विद्वान् तस्य नास्ति कालनियमः । यस्तु स्मृत्युक्तः- 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स सन्न्यासी च योगी च न निरग्निर्न चाक्रिय' इत्युक्तनिष्कामकर्मानुष्ठानलक्षणो योगस्तद्वतः अकर्तृत्वानुभवरूपम् । 'इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्' इति स्मृत्युक्तं यत्साङ्ख्यं तद्वत्साङ्ख्ययोगिनश्च कालापेक्षास्ति । अत एव 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिन' इत्युक्तं, न तु यत्र मार्गे इति । तथा च प्रकृतश्लोकस्थयोगिशब्दस्य निष्कामकर्मानुष्ठातृपरत्वमकर्तृत्वानुसन्धातृपरत्वं च वक्तव्यं, न तु दहराद्युपासकपरत्वमिति सिद्धम् ।

वस्तुतस्तु नायमनुपदोक्तः पक्षस्समीचीनः- श्रुतिस्मृत्योर्भिन्नार्थत्वस्यायुक्तत्वात्- 'अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् । धूमो रात्रिस्तथा कृष्णष्षण्मासा दक्षिणायन'मिति श्रौतयोरेव देवयान-

तं कालमाह—

अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम् ।
तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥२४॥

अग्निर्ज्योतिरिति । अग्निः कालाभिमानिनी देवता, तथा ज्योतिरपि देवतैव कालाभिमानिनी । अथ वा अग्निज्योतिषी यथाश्रुत एव देवते । भूयसां तु निर्देशः

---

पितृयाणयोरल स्मर्यमाणत्वात् । यदा पुन स्मृतावप्यान्याया देवता एवातिवाहिक्यो गृह्यन्ते, तदा न कश्चिद्विरोध इति भाष्याच कालशब्दो मार्गपर एव । न च कालशब्दो देवतापर इति भाष्यस्वरसभार्या दृश्यत इति वाच्यं, मार्गस्यापि देवतामयत्वात् । यत्रार्चिरादिदेवता आतिवाहिकास्त एव हि मार्ग तस्माद्यत्र काल इत्यस्य यस्मिन्मार्गे इत्येवार्थ ।

योगिनस्सर्वद्वाराणि सयम्येत्युक्तलक्षणयोगशालिन, ध्यायिन इति यावत् । अमीषां धूमादि-मार्गपथिकत्वाभावादाह—कर्मिणश्चेति ।

ननु योगिशब्दात्कथ कर्म्यर्थलाभोऽत आह—गुणत इति । गौण्या वृत्त्येत्यर्थ । गौण्या कर्मणि योगशब्दप्रवृत्तौ प्रयोग प्रमाणयति—कर्मयोगेनेति । कर्मैव योग कर्मयोग । न हि कर्म-योगयोस्सादृश्यं विना कर्मणि योगत्वरूपणं सम्भवति । मुख इव करे चन्द्रत्वरूपणाभावादिति भाव ।

चित्तशुद्धिहेतुत्वादिक तु कर्मयोगयोस्सादृश्य तद्द्वारा कर्मयोगिनोरपि सादृश्यात्कर्मिणि योगि-शब्दप्रयोग । यद्वा कर्मिणि योगिशब्दप्रवृत्तौ गीतां प्रमाणयति—'कर्मयोगेन योगिना'मिति । योगिनामिति पदस्य तत्र हि कर्मिणामित्यर्थ । ध्यायिनीव कर्मिण्यपि चित्तसमाधानसत्त्वाद्योगिशब्द-प्रयोग इति भाव ।

एतेन योगिनामेव देवयानेन ब्रह्मलोकप्राप्त्याऽपुनरावृत्ति, कर्मिणां तु पितृयाणेन चन्द्रलोक-प्राप्त्या पुनरावृत्तिरेवेति सिद्धम् ।

यत्र काले प्रयाता योगिनोऽनावृत्तिं यान्ति तं कालं, यत्र काले प्रयाता योगिन आवृत्तिं यान्ति तं कालं च वक्ष्यामि हे भरतर्षभ ! श्रृणु इत्यन्वय । भरतर्षभेति सम्बोधनेन श्रोतुं योग्यत्वमस्त्यर्जुन-स्येति सूच्यते ॥२३॥

अग्निरिति । तत्रेत्यनेन यत्रेत्यस्याक्षेप । यत्र अग्नि ज्योति अह शुक्ल षण्मासा उत्तराय चास्तीति शेष । तत्र प्रयाता ब्रह्मविदो जना ब्रह्म गच्छन्तीत्यन्वय । यथाश्रुते अग्निदेवता ज्योति देवता चेत्यर्थ ।

ननु कालशब्दस्य कालाभिमानिदेवतोपलक्षितमार्गपरत्वमुक्तमिति कृत्वा नास्मिन्मार्गे कालाभि मानिभिन्नदेवतासत्त्वमुचितं, यदि तथा भिन्नदेवतासत्त्वमपीष्यते तर्हि कालशब्दस्य तादृशार्थवर्णन मनुचितमित्यत आह—भूयसामिति । भूयसा बहूना कालाभिमानिदेवाना सत्त्वादिति शेष । य काले तं कालमिति निर्देश ।

'यत्र काले' 'तं कालं' इति आम्रवणवत् । तथा अहर्देवता अहरभिमानिनी; शुक्लः शुक्लपक्ष-देवता; षण्मासा उत्तरायणं; तत्रापि देवतैव । मार्गभूता इति स्थितोऽन्यत्रायं न्यायः । तत्र तस्मिन् मार्गे प्रयाता मृताः गच्छन्ति ब्रह्म ब्रह्मविदः ब्रह्मोपासकाः ब्रह्मोपासनपरा जनाः

---

अस्मिन्मार्गे कालाभिमानिदेवतानां भूयसीनां सत्त्वादस्य मार्गस्य कालशब्देन व्यवहारः । अग्न्यादिरूपा कालाभिमान्यल्पसङ्ख्याकदेवतावत्त्वेऽपि अहरादिरूपकालाभिमानिबहुसङ्ख्याकदेवतासत्त्वादयं मार्गः काल इत्युच्यत इत्यर्थः ।

तत्र दृष्टान्तमाह—आम्रवणवदिति । यथा आमलक्याद्यल्पसङ्ख्याकवृक्षान्तरवदपि वनमाम्रबाहुल्यवत्त्वादाम्रवणमित्युच्यते तद्वदित्यर्थः । प्रनिरन्तरिति सूत्रेणात्र णत्वम् ।

ननु मार्गचिह्नानां भोगभूमीनां वा तत्तच्छब्दैरुपादानसम्भवे किमिति देवताग्रहणमग्न्यादि-शब्दैरित्याशङ्क्याह—मार्गभूता इति, अयं न्याय इति । आतिवाहिककथनात्मको न्याय इत्यर्थः । उक्तं हि सूत्रभाष्ये । तथा च लोकप्रसिद्धेष्वप्यातियात्रिकेष्वेवंजातीयक उपदेशो दृश्यते । गच्छ त्वमितो बलवर्माणं ततो जयसिंहं ततः कृष्णगुप्तमिति ।

ननु प्रकृतश्लोकोक्ता अग्न्यादयः किं मार्गचिह्नानि ? उत भोगभूमयः ? अथ वा नेतारो गन्तृणामिति संशयः । तत्र मार्गचिह्नानीति पूर्वपक्षः । तत्स्वरूपत्वादुपदेशस्य । यदा हि कश्चिल्लोके ग्रामं नगरं वा प्रतिष्ठासमानोऽनुशिष्यते गच्छेतः त्वममुं गिरिं ततो न्यग्रोधं ततो नदीं ततो ग्रामं ततो नगरं वा प्राप्स्यसीति एवमिहाप्यर्चिषोऽहरह्न आपूर्यमाणपक्षमिति । यद्वा भोगभूमय इति पूर्वपक्षः । तथा हि लोकशब्देनाग्न्यादीनुपनिबध्नाति—अग्निलोकमागच्छतीत्यादि । लोकशब्दश्च प्राणिनां भोगायतनेषु भाष्यते- मनुष्यलोकः पितृलोको देवलोक इति च । अहोरात्रेषु ते लोकेषु सज्जन्त इत्यादि । तस्मान्नातिवाहिका अर्चिरादयः । अचेतनत्वादप्येतेषामातिवाहिकत्वानुपपत्तिः । लोके हि चेतना एव पुरुषा राजनियुक्ता दुर्गेषु मार्गेष्वतिवाह्यानतिवाहयन्तीत्येवं प्राप्ते आहाचार्यः (आतिवाहिकास्तल्लिङ्गादिति ४-३-४ सूत्रम्) । अर्चिरादिका आतिवाहिका एव- तल्लिङ्गात् । चन्द्रमसो विद्युतः तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयतीति, अमानवस्यातिवाहिकत्वस्य सिद्धत्वात्तल्लिङ्गेनार्चिरादीनामप्यातिवाहिकत्वसिद्धिः । यद्यर्चिरादिषु पुरुषा गमयितारः प्राप्तास्ते च मानवास्ततो युक्तं तन्निवृत्त्यर्थं पुरुषविशेषणममानव इति ।

ननु लिङ्गमात्रमगमकं न्यायाभावात्, नैष दोषः । (सू- उभयव्यामोहात्तत्सिद्धेः ५) एतावदर्चिरादिमार्गगास्ते देहवियोगात्सम्पिण्डितकरणग्रामा इत्यस्वतन्त्राः, अर्चिरादीनामप्यचेतनत्वादस्वातन्त्र्यमित्यतोऽर्चिराद्यभिमानिनश्चेतना एव देवताविशेषा अतियात्रायां नियुक्ता इति गम्यते । लोके च मत्तमूर्च्छितादयः सम्पिण्डितकरणग्रामाः परप्रयुक्तवर्त्मानो भवन्ति । अनवस्थितत्वादप्यर्चिरादीनां न मार्गलक्षणत्वोपपत्तिः । नहि रात्रौ प्रेतस्याह्नः स्वरूपाभिसम्भव उपपद्यते । नच प्रतिपालनमस्तीत्युक्तं पुरस्तात् ।

'क्रमेण' इति वाक्यशेषः । नहि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिः आगतिर्वा

ध्रुवत्वात्तु देवतात्मनां नायं दोषो भवितुमर्हति । अर्चिरादिशब्दता चैषामर्चिराद्यभिमानादुपपद्यते । सम्पिण्डितकरणग्रामत्वादेव गन्तॄणां न तत्रोपभोगस्सम्भवति । लोकशब्दस्त्वनुपभुञ्जानेष्वपि गन्तृषु गमयितुं शक्यते । अन्येषां तल्लोकवासिनां भोगभूमित्वात् । अतोऽग्निस्वामिकं लोकं प्राप्तोऽग्निनातिवाह्यते, वायुस्वामिकं लोकं प्राप्तो वायुनेत्येवं योजयितव्यमिति ।

अथार्चिरादिमार्गं व्याख्यास्यामः—वशीकृतप्राणा योगिनस्सन्निहितमृत्युं विदित्वा निश्श्रेणिकया प्रासादमिव सुषुम्नया मूर्धानमधिरुह्य तं भित्वा सुषुम्नाग्रसम्बद्धसूर्यरश्मिषु प्रविश्य तदनुसारेण तावदग्निलोकं गच्छन्ति । तत्रैवाग्निलोके ज्योतिर्देवताको ज्योतिर्लोक इति कश्चिदवान्तरलोकोऽस्ति । तं च गच्छन्ति । अग्निर्ज्योतिरिति द्वयोर्निर्देशात् । श्रुतौ तु 'तेऽर्चिषमभिसंभव'न्तीत्यग्निलोक एक एवोक्तः ज्योतिर्लोकस्याग्निलोकेऽन्तर्भावाशयेन । एतेनाग्निरूपं ज्योतिरिति वेदान्तदेशिकोक्तं परास्तम् । तथासत्यग्नेरेव ज्योतिष्ट्वेन ज्योतिःपदवैयर्थ्यात् । तेन चाग्निना ज्योतिषा वा अतिवाहितास्सन्तः अहर्लोकं गच्छन्ति; यस्य चाहरभिमानिदेवताविशेषः प्रभुः । तेन चातिवाहिताश्शुक्ललोकं गच्छन्ति; यस्य शुक्लपक्षदेवताभिमानी प्रभुः । तेन चातिवाहितास्तत उत्तरायणलोकं गच्छन्ति । तेन चातिवाहितास्संवत्सरलोकं गच्छन्ति । तेन चातिवाहिताः पुनर्देवलोकं गच्छन्ति । ततः तेन चातिवाहिता वायुलोकं गच्छन्ति । वायुनातिवाहिता आदित्यलोकं गच्छन्ति । आदित्येनातिवाहिताश्चन्द्रमोलोकं गच्छन्ति । पितृयाणप्राप्यचन्द्रलोकादपरोऽयम् । अत एव ज्योतिश्शास्त्रेषु चन्द्रादुपरि सूर्य इति, भागवतादिषु सूर्यादुपरि चन्द्र इति च द्वेधा निर्देशस्सङ्गच्छते- चन्द्रद्वयसद्भावात् । तेन चन्द्रमसातिवाहिता विद्युल्लोकं, ततस्तु अमानवः पुरुषः कश्चन हिरण्यगर्भनियुक्त एत्य विद्युल्लोकाद्वरुणलोकं वरुणलोकादिन्द्रलोकमिन्द्रलोकात्प्रजापतिलोकं प्रजापतिलोकाद्ब्रह्मलोकं गमयति । इति ब्रह्मलोको व्याख्यातः । अयमर्चिरादिमार्ग उत्तरदिक्स्थत्वादुत्तरमार्गः । देवलोकविषयत्वाद्देवयानमिति चोच्यते ।

अत्रापि मार्गे ये ब्रह्मलोकं गतास्त एवापुनरावर्तिनः । ततोऽर्वाक्तनलोकगतास्तु पुनरावर्तिन एव । न चार्वाक्तनलोकाप्राप्तिरिति वाच्यं, अग्निवाय्वाद्युपासकानामग्न्यादिलोकप्राप्तेः । अत एव हीन्द्रलोकं स्वर्गं गतानामपि पुनरावृत्तिः । तस्मान्नोत्तरमार्गप्राप्तिमात्रेण पुंसामपुनरावृत्तिः, किंतु ब्रह्मलोकप्राप्तिवशादेवेति स्थितम् ।

ननु ब्रह्म ब्रह्मविदो गच्छन्तीत्यत्र यथाश्रुतं ब्रह्मविदस्सायुज्यप्राप्तिरूपमर्थं विहाय ब्रह्मोपासनपराः क्रमेण ब्रह्म गच्छन्तीत्यर्थकल्पनमन्याय्यमित्यत आह—न हीति, सद्योमुक्तिभाजामिति । 'ब्रह्मविद्ब्रह्मैव भव'तीति श्रुतेः । ब्रह्मज्ञानमन्वेव तेषां मुक्तिरित्यर्थः ।

अथ वा 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये, अथ सम्पत्स्ये' इति श्रुतेः ज्ञानिनां देहपातमन्वेव मुक्तिरित्यर्थः ।

कचिदस्ति 'न तस्य प्राणा उत्क्रामन्ति' इति श्रुतेः । ब्रह्मसंलीनप्राणा एव ते ब्रह्ममया ब्रह्मभूता एव ते । क्रमेण तु गच्छन्ति ब्रह्मविदो जनाः ॥२४॥

धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ।
तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥२५॥

धूम इति । धूमो रात्रिः धूमाभिमानिनी रात्र्यभिमानिनी च देवता । तथा कृष्णः कृष्णपक्षदेवता । षण्मासा दक्षिणायनमिति च पूर्ववद्देवतैव । तत्र चन्द्रमसि भवं चान्द्रमसं ज्योतिः फलमिष्टाधिकारी योगी कर्मी प्राप्य भुक्त्वा तत्क्षयादिह पुनः निवर्तते ॥२५॥

---

गतिरागतिर्वा नास्तीति । 'तत्त्वविदः प्राणा नोत्क्रामन्ति, अत्रैव समवलीयन्ते' इति श्रुतेः । न हि परिपूर्णस्य ब्रह्मणः क्वापि गमनं कुतश्चिदागमनं वा सम्भवतीति भावः । न च मुक्तोऽयं ब्रह्मविदेव, न ब्रह्मेति। वाच्यं, 'ब्रह्मविद्ब्रह्मैव भवती'ति श्रुतेः ।

एतेन जीवाणुत्ववादः परास्तो जीवमध्यमपरिमाणत्ववादश्च । अणोर्जीवस्य पूर्णब्रह्मत्वायोगात्, मध्यमपरिमाणस्य जीवस्य नित्यब्रह्मत्वायोगाच्च । न च ब्रह्माप्यपूर्णमेवेति वाच्यं, बृहत्यर्थानुगमात् । अपूर्णस्य न हि निरतिशयवृद्धिः । ब्रह्मशब्दस्य ब्रह्मणि प्रयोगे निरतिशयवृद्धिर्हि प्रवृत्तिनिमित्तम् । वृद्धिमात्रस्य प्रवृत्तिनिमित्तत्वे तु देहादिरपि ब्रह्म भवेदिति ।

अत्र ब्रह्मविदो जना ब्रह्म हिरण्यगर्भं गच्छन्तीत्यप्यर्थः प्रतिभाति, परं तु साक्षाद्धिरण्यगर्भप्राप्त्ययोगात् ब्रह्मपदस्य ब्रह्मलोक इति लाक्षणिकार्थः कल्पनीयः स्यादिति तदुपेक्षितं भाष्यकारैः ।

ओमित्येकाक्षरं ब्रह्मेत्यादिना ब्रह्मोपासकस्य प्रकृतत्वान्मार्गस्य चास्य ब्रह्मोपासकपरत्वाद्ब्रह्मविद इत्यस्य ब्रह्मोपासनपरा इत्युक्तम् । ब्रह्मबुद्ध्या प्रणवादिकं दहरादिकं वोपासमाना इत्यर्थः । एतेन कर्मिणां क्रमेणापि ब्रह्मप्राप्त्यभावः सिद्धः- तेषां मार्गान्तरस्य वक्ष्यमाणत्वात् ॥२४॥

धूम इति । यत्र 'धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायन'मित्येतानि सन्ति तत्र मार्गे योगी गत्वा चान्द्रमसं ज्योतिः प्राप्य निवर्तते, षण्मासा दक्षिणायनमिति षण्मासात्मको यो दक्षिणायनकालस्तदभिमानिदेवतेत्यर्थः । चान्द्रमसं चन्द्रलोकस्थम् । ज्योतिषो भोग्यत्वाभावादाह—फलमिति । इष्टं यागः, तत्राधिकारी इष्टाधिकारी सोमयाजीत्यर्थः । फलितमाह—कर्मीति । अपिशब्दात्पूर्ताधिकारिग्रहणम् । कर्मिशब्देनेष्टाधिकारिग्रहणात् ।

ये शास्त्रसिद्धं स्वस्ववर्णाश्रमविहितं यज्ञादिलक्षणं कर्म सकाममाचरितवन्तः ते, ये वा वापीकूपादिपुण्यकर्माणि कृतवन्तस्ते चैते उभे अपि चन्द्रलोकं पितृयाणेन गत्वा तत्र स्वकृतकर्मफलं भुक्त्वा पुनरिह जन्मने प्रति निवर्तन्त इति परमार्थः ।

'अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसम्भवन्ति' इत्यादिश्रुतिरत्रानुसन्धेया ॥२५॥

शुक्लकृष्णे गती ह्येते जगतश्शाश्वते मते ।
एकया यात्यनावृत्तिमन्ययाऽऽवर्तते पुनः ॥२६॥

शुक्लकृष्णे इति । शुक्लकृष्णे शुक्ला च कृष्णा च शुक्लकृष्णे, ज्ञानप्रकाशकत्वाद् शु तदभावात् कृष्णा; एते शुक्लकृष्णे हि गती जगत इत्यधिकृतानां ज्ञानकर्मणोः, ज सर्वस्यैव एते गती सम्भवतः । शाश्वते नित्ये, संसारस्य नित्यत्वात्, मते अभिप्रे तत्रैकया शुक्लया यात्यनावृत्तिं, अन्यया इतरया आवर्तते पुनः भूयः ॥२६॥

नैते सृती पार्थ! जानन् योगी मुह्यति कश्चन ।
तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन! ॥२७॥

नेति । एते यथोक्ते सृती मार्गौ पार्थ! जानन् संसाराय एका, अन्या मोक्षाय इ योगी न मुह्यति कश्चन कश्चिदपि । तस्मात्सर्वेषु कालेषु योगयुक्तस्समाहितो भव अर्जुन

---

शुक्लेति । देवयानस्य शुक्लत्वे पितृयाणस्य कृष्णत्वे च हेतुमाह—ज्ञानेति । ब्रह्म प्राप्तानां सम्यग्दर्शनसम्भवाद्ब्रह्मलोकप्रापकमार्गस्य ज्ञानप्रकाशकत्वमिति भावः । तदभावाद्ज्ञानप्रकाश भावात् शुक्लस्य चन्द्रादितेजसः घटादिपदार्थप्रकाशकत्वं, नीलस्य तमसस्तदप्रकाशकत्वं च प्रसिद्धमि प्रकाशकत्वगुणयोगाच्छुक्लत्वं देवयानस्य, तदभावात्कृष्णत्वं पितृयाणस्येति तत्त्वम् ।

शुक्लपक्षसम्बन्धात्कृष्णपक्षसम्बन्धाच्च देवयानपितृयाणयोस्तत्तच्छब्दवाच्यत्वमिति केचित् । न्मन्दम्—सरस्वहरादिषु शुक्लकृष्णयोरेव ग्रहणे हेत्वभावात् । आद्यमर्चिषमनयं ब्रह्माणं वाऽवलम्ब वक्तव्यत्वात् । तथैवार्चिरादिमार्गो धूमादिमार्ग इति च प्रसिद्धत्वादिति ।

जगच्छब्दार्थमाह—ज्ञानकर्मणोरधिकृतानामिति । प्रपञ्चस्याग्रहणे हेतुमाह—नेति पापिनां नारकगत्यन्तरसद्भावादिति भावः । कथं गत्योर्नित्यत्वमत आह—संसारस्येति । यावद्ब्र नित्यत्वादित्यर्थः । प्रवाहरूपेणानाद्यनन्तत्वमिति वा । पूर्वपूर्वसंसारादुत्तरोत्तरसंसार इति संसारो ह्य मनादिरनन्तश्च । एतेन परमार्थतः स्वरूपतश्च संसारवद्गत्योरपि तदन्तरस्थयोर्न नित्यत्वमिति सिद्ध तत्र गतिद्वयमध्ये याति पुरुषोऽधिकृत इति शेषः ।

ननु तैत्तिरीयकश्रुतिप्रामाण्यात् धूमादिमार्गेण पितृणामेव महिमानं गत्वा चन्द्रलोकं प्राप्तो दक्षिणायने मृतो विद्वान् सोऽपि ब्रह्मलोकं गत्वा नावर्तत एवेति कृत्वा कथमुक्तमन्ययाऽऽवर्तत चेन्नैष दोषः, अविद्वान् चन्द्रलोकं गत आवर्तत इति तदर्थात् । विदुषश्चन्द्रलोकं गतस्यापि प्रारब्ध वसाने देवयानेन पुनर्ब्रह्मलोकप्राप्तिस्सम्भवत्येवेति ॥२६॥

नेति, न मुह्यतीति । धूमादिमार्गेण चन्द्रलोकं गत्वा तत्र भोगान् भुञ्जीयेति, इन्द्रलोका देवयानेन गत्वा वा तत्र भोगान् भुञ्जीयेति मोहं नाप्यते । अशाश्वतत्वात्तद्भोगानां पुनरावर्तित्व स्तस्य । ततश्च न कर्मस्विष्टापूर्तेषु प्रवर्तते । परं तु मोक्षप्रदं ब्रह्मलोकं प्रणवाद्युपासनद्वारेण देवया

शृणु तस्य योगस्य माहात्म्यम्—

वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ।
अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥२८॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि
श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णा-
र्जुनसंवादे तारक(अक्षर)ब्रह्मयोगोनामाष्टमोऽध्यायः ।

वेदेष्विति । वेदेषु सम्यगधीतेषु, यज्ञेषु च साद्गुण्येनानुष्ठितेषु, तपस्सु च सुतप्तेषु, दानेषु च सम्यग्दत्तेषु एतेषु यत्पुण्यफलं प्रदिष्टं शास्त्रेण, अत्येत्यतीत्य गच्छति तत्सर्वं फलजातं, इदं विदित्वा सप्तप्रश्ननिर्णयद्वारेण उक्तमर्थं सम्यक् अवधार्य अनुष्ठाय योगी परं उत्कृष्टमैश्वरं स्थानमुपैति च प्रतिपद्यते, आद्यं आदौ भवं कारणं ब्रह्म इत्यर्थः ॥२८॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य श्रीम-
च्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये अष्टमोऽध्यायः ।

---

गन्तुमेव प्रवर्तत इत्यर्थः । तस्मादिति । यस्मान्मार्गद्वयज्ञो योगी न मुह्यति तस्मादित्यर्थः । स्वोपदेशेन सविद्वय जानतोऽप्यर्जुनस्य चित्तसमाधानाभावे मोहः स्यादित्यत आह—योगयुक्तो भवार्जुनेति ॥२७॥

वेदेष्विति । साक्षाद्वेदादिषु पुण्याभावादाह—सम्यगन्तेष्वित्यादीनि विशेषणानि । सम्यगन्तास्सम्यक्परिसमाप्ताः तेषु, दानेषु दीयन्त इति दानानि सुवर्णादीनि तेषु, सर्ववेदपारायणात्साद्गुण्येन यज्ञानुष्ठानात्तप करणात्पुण्यक्षेत्रेषु द्रव्यविनियोगाच्च यत्फलं भवति पुंसामिति शास्त्रेणोच्यत इत्यर्थः । योगी इदं विदित्वा तत्सर्वं फलजातमत्येति ततोऽधिकं लभत इत्यर्थः । न केवलं वेदनमात्रात्किं तर्हि एतदनुष्ठानादेवेत्याह—उक्तमर्थमिति । सप्त प्रश्नाः - किं ब्रह्म ? किमध्यात्मम् ? किं कर्म ? किमधिदैवम् ? किमधिभूतम् ? कोऽधियज्ञः ? प्रयाणकाले कथं ज्ञेय ईश्वर इति । ऐश्वरमीश्वरस्येदं वैष्णवमित्यर्थः । स्थानं स्वरूपमित्यर्थः । आदौ सर्वस्य जगत आदौ भवति अस्मिन् प्रकाशत इति वा भवं, 'सदेव सोम्येदमग्र आसी'दिति श्रुतेरिति भावः । कार्यस्य पश्चाद्भवत्वादाह—आद्यं कारणमिति । 'यतो वा इमानि भूतानि जायन्ते'त्यादिना । ब्रह्मण एव परमकारणत्वादाह—ब्रह्मेति । ईश्वरस्वरूपभूतं सच्चिदानन्दं ब्रह्म प्राप्नोतीत्यर्थः; मुक्तो भवतीति यावत् । सति सम्यग्दर्शने साक्षात्तदभावे ब्रह्मलोकप्राप्तिद्वारेण वा सायुज्यं लभत इति भावः ।

यत्तु रामानुजः— परं स्थानं परं पदं वैकुण्ठमिति— तदयुक्तं, वैकुण्ठस्य सत्यलोकावान्तरविशेषस्य सादित्वेनानादित्वाभावादाद्यमनादिमिति तेन व्याख्यातत्वाच्च । नच 'तदक्षरे परमे व्योमन्' इति श्रुतेः परमव्योमरूपवैकुण्ठलोकोऽनादिरिति वाच्यं, ब्रह्मण एवाक्षरपरमव्योमत्वात् । भूताकाशातिरिक्तश्चिदाकाशो हि परमव्योम । स चाविनाशित्वादक्षरं । चित आकाशत्वं च निष्प-

स्वस्वरूप निर्लेपत्वादिरूपं वा। यदि त्वात्मातिरिक्तं परमव्योमेति किञ्चिद्वस्तु स्यात्तर्हि तन्निलयस्तदाधेय आत्मा ब्रह्म तन्न्यून एव स्यात्– आधेयस्य न्यूनत्वादाधारात्। तथायुक्तं निरतिशयत्वाद्ब्रह्मण। नहि गुणत एव निरतिशय आत्मा, किं तु स्वरूपतोऽपि। अन्यथा निरतिशयत्वस्यार्थजरतीयत्वापत्ते। सर्वाधारस्य परस्य ब्रह्मणो व्योमाधेयत्वे सति सर्वाधारत्वभङ्गाच। परमव्योमान्तरस्य तस्य सर्वव्यापित्वाभावप्रसङ्गाच। तस्मात्सर्वव्यापिनस्सर्वाधारस्य सर्वात्मनो विष्णोर्नास्ति किञ्चिन्नियतं स्थानं, यद्योगी प्रयायात्। सति तु तस्मिन् स्थाने विष्णुत्वस्यैव भङ्गप्रसङ्गादित्यलम्।

अक्षरपरब्रह्मयोग इति। अक्षरस्याविनाशिन परब्रह्मण परमात्मान. योगस्सम्बन्धो यस्मिन् स तथोक्त। अक्षरपरब्रह्मस्वरूपतत्प्राप्त्युपायादेरस्मिन्नध्याये प्रोक्तत्वात् ॥२८॥

अमू अर्चिरादिसंग्रहश्लोकौ—

'अग्निर्ज्योतिरहश्शुक्लष्षण्मासा उत्तरायणम्। संवत्सरो देवलोको वायुलोकस्तत पर ॥
आदित्यश्चन्द्रमाविद्युल्लोकश्च वरुणालय। इन्द्र प्रजापतिर्ब्रह्मा विद्युतोऽमानव पुमान् ॥'

अग्न्यादयश्चतुर्दश लोका। अग्न्यादिलोकेषु अग्न्यादय मानवा एव पुरुषा आतिवाहिका, विद्युल्लोकादनन्तरेषु तु अमानव पुरुष आतिवाहिक। अग्निर्ज्योतिरुभावप्येक एवार्चिर्लोक इति बोध्यम्।

'धूमो रात्रि कृष्णपक्षष्षण्मासा दक्षिणायनम्। संवत्सर पितृलोक आकाशश्चन्द्रमण्डलम् ॥'

इत्यय धूमादिमार्गसंग्रहश्लोक।

इति श्रीवेलङ्कोण्डोपनामक रामकविकृते श्रीमच्छङ्करभगवद्गीताभाष्यार्कप्रकाशे
ज्ञानविज्ञानयोगो नाम अष्टमोऽध्याय।

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## नवमोऽध्यायः ।

अष्टमे नाडीद्वारेण धारणायोगः सगुण उक्तः; तस्य च फलमग्न्यर्चिरादिक्रमेण कालान्तरे ब्रह्मप्राप्तिलक्षणमेव अनावृत्तिरूपं निर्दिष्टं; तत्र 'अनेनैव प्रकारेण मोक्षप्राप्तिफलमधिगम्यते, नान्यथा' इति तदाशङ्काव्याविवृत्सया श्रीभगवानुवाच—

श्रीभगवानुवाच— इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ।
ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥१॥

इदमिति । इदं ब्रह्मज्ञानं वक्ष्यमाणमुक्तं च पूर्वेष्वध्यायेषु । तद्बुद्धौ सन्निधीकृत्येदमित्याह । तुशब्दो विशेषनिर्धारणार्थः । इदमेव तु सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं 'वासुदेवस्सर्वमिति', आत्मैवेदग्ँ सर्वं', 'एकमेवाद्वितीय'मित्यादिश्रुतिस्मृतिभ्यः; नान्यत्, 'अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भव'न्तीत्यादिश्रुतिभ्यश्च । ते तुभ्यं गुह्यतमं

---

वृत्तं कीर्तयन् पूर्वाध्यायस्यास्य च सङ्गतिं दर्शयति—अष्टमे इति । नाडी सुषुम्ना । धारणा प्राणानां नियमनम् । अनेनैव सगुणोपासनेनैव । नान्यथा । सम्यग्दर्शनेन न । व्याविवृत्सया व्यावर्तयितुमिच्छया । सन्निहिते वस्तुनीदंशब्दप्रयोगादाह—बुद्धौ सन्निधीकृत्येति । पूर्वेष्वध्यायेषूक्तमुत्तरत्र वक्ष्यमाणं च तत्सर्वं ब्रह्मज्ञानं बुद्धौ सन्निहितं कृत्वा इदमित्याह विशेषार्थः । पूर्वोक्तायोगादन्य ज्ञानस्य वैलक्षण्यं द्योतयितुं तुशब्द इत्यर्थः । तमेव विशेषं दर्शयति इदमेवेत्यादिना—साक्षादिति । योगस्तु क्रमेणेति भावः । किं तत्सम्यग्ज्ञानमत आह—वासुदेवस्सर्वमित्यादि । 'वासुदेवस्सर्वमिति, स महात्मा सुदुर्लभ' इति गीतावाक्यं स्मृतिः । 'आत्मैवेदग्ँ सर्वं, एकमेवाद्वितीयं ब्रह्म, तदिदं सर्वं यदयमात्मा' इत्यादेरादिपदाद्ग्रहणम् । दर्शितश्रुतिस्मृतिसिद्धं सर्वं ब्रह्म । अहं ब्रह्मास्मीत्येवं रूपं ज्ञानं सम्यग्ज्ञानमित्यर्थः । अन्यद्‌ज्ञानान्तरं तु सम्यग्ज्ञानं न भवति । मोक्षप्राप्तिसाधनं न भवतीति वा ।

उक्तार्थे श्रुतिं प्रमाणयति—अथ य इति । अथशब्दः अविद्याप्रकरणोपक्रमार्थः । ये अतोऽस्मादुक्तात्सर्वं ब्रह्मेत्येवं प्रकारादन्यथा प्रकारान्तरेण जीवोऽहमीश्वरोऽन्य इत्यादिरूपेण विदुस्तत्त्वमिति शेषः । अन्यराजानः अन्य इन्द्ररुद्रादिः राजा प्रभुरुपास्य इति यावत् ; येषां तेऽन्यराजानः । भिन्नदेवतोपासका इत्यर्थः । तेऽनित्यांशः क्षय्यलोकाः क्षय्याः क्षयवन्तः स्वर्गादयो लोकाः प्राप्या येषां ते क्षय्यलोका भवन्ति । ज्ञानाभावाद्यज्ञादिकर्मसु प्रवर्त्य तत्फलं क्षयिष्णु स्वर्गादिलोकं गच्छन्तीत्यर्थः ।

गोप्यतम प्रवक्ष्यामि कथयिष्यामि अनसूयवेऽसूयारहिताय । किं तत्? ज्ञानं; किं विशिष्टम्? विज्ञानसहितं अनुभवयुक्तम् । यद्ज्ञानं ज्ञात्वा प्राप्य मोक्ष्यसे अशुभात्संसारबन्धनात् ॥१॥

तच्च स्तौति—

राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् ।
प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥२॥

राजविद्येति । राजविद्या विद्यानां राजा दीप्त्यतिशयवत्त्वात् । दीप्यते हि इयमतिशयेन ब्रह्मविद्या सर्वविद्यानाम् । तथा राजगुह्यं गुह्यानां राजा । पवित्रं पावनमिदमुत्तमं सर्वेषां पावनानां शुद्धिकारणमिदं ब्रह्मज्ञानमुत्कृष्टतमम् । अनेकजन्मसहस्रसञ्चितमपि धर्माधर्मादि समूलं कर्म क्षणमात्रादेव भस्मीकरोति यतोऽतः किं तस्य पावनत्वं वक्तव्यम् । किंच-प्रत्यक्षावगम प्रत्यक्षेण सुखादेरिव अवगमो यस्य तत्प्रत्यक्षावगमम् । अनेकगुणवतोपि धर्मविरुद्धत्वं दृष्ट, न तथा आत्मज्ञानं धर्मविरोधि, किंतु धर्म्यं धर्मादनपेतम् । एवमपि स्या-

---

यद्ज्ञात्वेति वाक्यस्याकाङ्क्षामाह—किं तद्ज्ञानमिति । विज्ञानसहितमित्यस्याकांक्षामाह—किं विशिष्टमिति । केन विशिष्ट किं विशिष्ट मोक्ष्यसे मुक्तो भविष्यसि । किं तदशुभमत आह—संसारबन्धनादिति । पापं पापवत्पुण्यस्यापि बन्धकत्वादिति भाव. ॥१॥

राजेति । 'राजृदीप्तौ' राजते दीप्यत इति राजा, प्रसिद्धो राजापि हि सर्वेषु पुरुषेषूत्कर्षेण भाति; यथा सर्वपुरुषाणा मध्ये दीप्त्यतिशयवत्त्वेन भूपस्य राजत्वं तथा सर्वविद्यानां मध्ये ब्रह्मविद्याया दीप्त्यतिशयवत्त्वेन राजत्वमितीयं ब्रह्मविद्या राजविद्या । गुह्यानां गोप्यानां राजा राजगुह्यं परमगुह्यमित्यर्थः । कथमस्योत्तमपवित्रत्वमत आह—सर्वेषां पावनानामिति । सर्वपावनपावनत्वादुत्तमपवित्रत्वमित्यर्थ । अस्य च सर्वपावनपावनत्वं कैमुतिकन्यायसिद्धमित्याह—अनेकेति । समूलं साज्ञानम् ।

लोके पापपरिहारकस्याग्निजलादे· पावनत्वं प्रसिद्धं, दु खहेतोर्विप्रस्वापहरणादेः पापत्वं च, तथा धर्मस्य यज्ञादिलक्षणस्य स्वर्गादिसुखहेतुत्वेन पावनत्वमधर्मस्य चापावनत्वं दु खहेतुत्वेन प्रसिद्धमेव । अयं च पावनोऽपि धर्म शास्त्रदृष्ट्या संसारहेतुत्वेन पाप एव । ततश्च दु खहेत्वधर्मनिरासकधर्मस्य यथा पावनत्व तथा दु खहेतुधर्माधर्मनिरासकज्ञानस्य पावनत्वम् । संसारैकदेशनरकनिवर्तकधर्माणामेव पावनत्वे स्वर्गनरकाद्यात्मकसर्वसंसारनिवर्तकज्ञानस्य परमपावनत्वमर्थात्सिद्धमिति भाव· । प्रत्यक्षेणावगमो यस्य तत्प्रत्यक्षावगमं, सुखादिवत्प्रत्यक्षानुभवविषयमित्यर्थ ।

धर्म्यमिति । ननु धर्माधर्मादिविध्वंसकस्य ज्ञानस्य कथं धर्माविरोधित्वमिति, चेदुच्यते—धर्मशास्त्रं यथाधर्ममित्यादिप्रयोगात् । 'आत्मा वाऽरे द्रष्टव्यश्श्रोतव्य' इति शास्त्रविहितत्वाद्ज्ञानस्य धर्म्यत्वम् । अनेन भस्मीक्रियमाणो धर्मस्तु पुण्यादृष्टसुकृतादिपर्यायजन्मान्तरकृतसत्कर्मजन्यसद्वासनाविशेष । स हि जन्मप्रदत्वेन बन्धहेतुत्वाद्ज्ञानेन मुक्तिप्रदेन भस्मीक्रियते । नच पुराकृतसुकृतलभ्यस्य

दुःखसम्पाद्यमित्यत आह—सुसुखं कर्तुं यथा रत्नविवेकविज्ञानम् । तत्र अल्पायामानां कर्मणां सुखसम्पाद्यानामल्पफलत्वं दृष्टं, दुष्कराणां च महाफलत्वं दृष्टमितीदं तु सुखसम्पाद्यत्वात् । फलक्षयात् व्येतीति प्राप्तमत आह—अव्ययमिति । न अस्य फलतः कर्मवद्व्ययोऽस्तीत्यव्ययम् । अतः श्रद्धेयमात्मज्ञानम् ॥२॥

ये पुनः—

> अश्रद्दधानाः पुरुषा धर्मस्यास्य परन्तप ।
> अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥३॥

अश्रद्दधाना इति । अश्रद्दधानाः श्रद्धाविरहिता आत्मज्ञानस्य धर्मस्यास्य स्वरूपे तत्फले च नास्तिकाः पापकारिणः, असुराणामुपनिषदं देहमात्रात्मदर्शनमेव प्रतिपन्नाः

---

ज्ञानस्य कथं सुकृतनाशकत्वमिति वाच्यं, प्रारब्धसुकृतविशेषलभ्यस्य ज्ञानस्य सञ्चितसुकृतनाशकत्वे बाधकाभावात् । प्रारब्धस्य भोगं विना ज्ञानेन क्षयाभावाच्च ।

सुसुखं सुष्ठु सुखमनायासमित्यर्थः । तत्र दृष्टान्तमाह—यथेति । इदं रत्नं श्रेष्ठजातीयमिदं क्षुद्रजातीयमित्येवं विधरत्नविवेकज्ञानं यथा सुसुखं तद्वदित्यर्थः । अयमात्मा इदमनात्मेति विवेकज्ञानस्य बुद्धिसाध्यत्वेन शरीरादिसाध्येषु कर्मस्विव श्रमाभावादिति भावः ।

तत्रेति । व्यवहारभूमावित्यर्थः । व्येति विकारं प्राप्नोति नश्यतीति यावत् । इति प्राप्ते पूर्वपक्षे इति शेषः । आह उत्तरम्—अव्ययमिति । न विद्यते व्ययोऽस्येत्यव्ययम् । यथा कर्मणः फलतः क्षयस्तथा नास्येत्यर्थः । कृतं हि कर्म तत्फलं स्वर्गादिकमनुभाव्य क्षीयते, न तथा ज्ञानं नित्यफलत्वाद्ज्ञानस्य । यद्वा कर्मणां स्वरूपतः क्षयः कर्मसमाप्तावेव भवति- यज्ञादिकर्मणां पश्वपादिदिनानन्तरमदर्शनात् । तत्फलं तु किञ्चित्कालमेव तिष्ठति; न सर्वदेति फलतोऽप्यस्ति कर्मणां क्षयः । अहं ब्रह्मेत्यात्मज्ञानस्य तु वृत्तिरूपस्य क्षणिकत्वेऽपि तत्फलस्य ब्रह्मणश्शाश्वतत्वान्न ज्ञानस्य फलतः क्षय इति इत्थमक्षयफलत्वाद्ज्ञानस्याव्ययत्वम् । क्षयफलत्वात्तु कर्मणो नाव्ययत्वमिति भावः । एतेन वृत्तिज्ञानस्य कर्मवत्स्वरूपतः क्षयोऽस्त्येवेति सिद्धम् ।

प्रत्यक्षगम्यात् दुष्करात् क्षयफलाच्च यज्ञादिलक्षणधर्मात्प्रत्यक्षगम्यं सुकरमव्ययफलं नेदं ज्ञानं सर्वस्य विश्वसनीयमित्याह—अत इति । ज्ञानस्य राजविद्यात्वाद्राजगुह्यत्वात्परमपवित्रत्वात्प्रत्यक्षावगम्यत्वाद्धर्म्यत्वात्सुकरत्वादव्ययफलत्वाच्चेत्यतश्शब्दार्थः ।

न च 'अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवती'ति श्रुतेः कर्मफलमप्यक्षय्यमेवेति वाच्यं, कर्मप्रशंसापरत्वात्तच्छ्रुतेः 'दक्षिणे हि तिष्ठता ते दर्शिष्यत' इति वाक्यवत्प्ररोचनमात्रत्वं हि तत । कर्मफलस्य स्वर्गादेरनित्यत्वं हि श्रुतिस्मृतिन्यायसिद्धम् ॥२॥

अश्रद्दधाना इति । अस्य धर्मस्येत्यत्र ज्ञाने धर्मत्वारोपः श्रुतिविहितत्वगुणनिमित्तः । ज्ञानस्य स्वरूपे फले च अश्रद्दधाना दुर्गादौ अश्रद्दधाना इत्यत आह—स्वरूपे तत्फले चेति

असुतृपः पापाः पुरुषाः अश्रद्दधानाः परन्तप ! अप्राप्य मां परमेश्वरं मत्प्राप्तौ नैव आशङ्का इति मत्प्राप्तिमार्गसाधनभेदभक्तिमात्रमपि अप्राप्य इत्यर्थः । निवर्तन्ते निश्चयेन वर्तन्ते; क ? मृत्युसंसारवर्त्मनि मृत्युयुक्तः संसारो मृत्युसंसारः तस्य वर्त्म नरकतिर्यगादिप्राप्तिमार्गः, तस्मिन्नेव वर्तन्त इत्यर्थः ॥३॥

---

इति सम्बन्ध । के ते अत आह—नास्तिका इति । नास्ति दिष्ट मतिर्येषा ते नास्तिका, देवो नास्ति, परलोको नास्ति, धर्मो नास्ति इत्येव प्रतिपन्ना बौद्धा इत्यर्थ । कुत एषा नास्तिकत्वमत आह—पापकारिण इति । जन्मान्तरे पाप कृतवन्त इदानीमपि तत्संस्कारवशात्पापकरणस्वभाववन्तश्चेत्यर्थ ।

नास्तिकाना मतं संक्षेपेणाह—असुराणामिति । देहमात्रात्मदर्शनरूपामसुराणा विरोचनादीनामुपनिषद विद्या प्रतिपन्ना प्राप्ता असुरवद्देह एवात्मेति मन्वाना इत्यर्थ । देह एवात्मेत्यमीषा मतमिति भाव ।

अस्मिन्मते कर्तुर्देहस्यात्मन इहैव नष्टत्वान्न स्वर्गनरकादिभोगप्रसङ्ग । नापि पुनर्जन्मप्रसङ्ग । निर्वाणस्य प्रदीपस्य पुनरुत्पत्त्यदर्शनात् । एवं चैहिकभोगएव भोग । न च जारत्वचोरत्वादिनापि सम्पादनीय जन्मान्तराभावेन विधिनिषेधशास्त्रानर्थक्यात् । अत एवामी असुतृप प्राणतर्पणपरायणा, येन केनाप्युपायेनोदरम्भरय, परदारगमनादिना मनइन्द्रियतर्पणपराश्च । देहपातमेव मोक्ष मन्यन्ते, परदारगमनादिकमेव रम्भासम्भोगादिरूप स्वर्गं मन्यन्ते । ऐहिकमेव दु ख नरकं मन्यन्ते । यत्प्रत्यक्षप्रमाणसिद्ध तदेव वस्तु; अन्यत्सर्वं तु नास्त्येवेति मतमेषाम् । अत एव पापा अमी वेदशास्त्रस्वर्गादिषु विश्वासरहितत्वदात्मज्ञाने तत्फले च विश्वासरहिता ।

न चाद्वैतिनोऽप्येवविधा एव- ब्रह्मान्यस्मिन्नविश्वासादिति वाच्यं, न वय वेदशास्त्रादिकं नास्तीति ब्रूम, किं तर्हि परमार्थतो नास्तीति ब्रूम । ततश्च यावद्व्यवहार पुण्यपापसुखदु खस्वर्गनरकवेदशास्त्रगुरुशिष्यजन्ममरणबन्धमोक्षादिसर्वद्वैतमस्त्येवेति ।

अमीषा नास्तिकाना गतिमाह—अप्राप्येति श्लोकार्धेन । ननु मामप्राप्येत्युक्तिरयुक्ता—बौद्धाना भगवत्प्राप्तिर्भवेद्वा न वेति शङ्काया उदये तत्परिहारार्थं मामप्राप्येति वक्तव्य, प्रकृते तु तच्छङ्काया एवानुदयादित्यक्षिप्य मामप्राप्येत्यस्य मद्भक्तिमप्यप्राप्येत्यर्थमाह भाष्यकार —मत्प्राप्ताविन्यादिना । मत्प्राप्तौ ये मार्गास्तद्भेदस्तद्विशेषरूपाया भक्ते तन्मात्रमपि । मात्रमपीत्यनेन ज्ञानोपासनादिमार्गभेदप्राप्तौ का कथेति सूचितम् । निर्गुणस्य भक्त्यविषयत्वेऽपि सगुणस्य भक्तिविषयत्वमस्तीति भक्तीत्युक्तम् । अथ वा आत्मन उपासनादिकं मास्तां, आत्मनि प्रीतिरपि तेषां नास्ति, सत्यां प्रीतौ आत्मदर्शनसाधनान्वेषणादि स्यादिति प्रीतेरप्यात्मप्राप्त्युपायत्वमुक्तम् ॥३॥

इति ज्ञानस्तुत्या अर्जुनमभिमुखीकृत्याह—

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना।
मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥४॥

मयेति। मया मम यः परो भावः तेन ततं व्याप्तं सर्वमिदं जगत् अव्यक्तमूर्तिना न व्यक्ता मूर्तिः स्वरूपं यस्य मम सोऽहमव्यक्तमूर्तिः तेन मया अव्यक्तमूर्तिना, करणागोचरस्वरूपेणेत्यर्थः। तस्मिन्मय्यव्यक्तमूर्तौ स्थितानि मत्स्थानि सर्वभूतानि ब्रह्मादीनि स्तम्बपर्यन्तानि। नहि निरात्मकं किंचिद्भूतं व्यवहारायावकल्पते। अतो मत्स्थानि मया

---

मयेति। इदं सर्वं जगदव्यक्तमूर्तिना मया ततम्। सर्वभूतानि मत्स्थानि भवन्ति। अहं तेषु नचावस्थितः। भावः स्वरूपम्। ईश्वरस्य परमपरं चेति स्वरूपद्वयमस्ति। तत्र परं स्वरूपं ब्रह्म सच्चिदानन्दं, अपरं तु आध्यासिकमोहारादिरूपं बहुविधम्। तत्र परेण भावेन जगतो व्याप्तिरित्याह—मयेत्यादि। मया प्रत्यगभिन्नेन परमात्मनेति यावत्। ततमिति। परमात्मनस्सच्चिदानन्दरूपत्वात्तेनैव रूपेण व्याप्तं जगदिदं सर्वं- जगदस्ति, जगद्भाति, जगत्प्रियमिति प्रतीतिभिर्जगति सच्चिदानन्दान्वयदर्शनात्। जगति परमात्मनोऽव्याप्तौ तु नैताः प्रतीतय उपपद्येरन्। कार्ये हि घटे कारणमृदंशव्याप्त्यैव हि मृद्घट इति प्रतीतिः। जगतश्च ब्रह्मकार्यत्वं स्पष्टम्। कीदृशस्तव परो भावोऽत आह—अव्यक्तमूर्तिनेति। यदि मनइन्द्रियात्मककरणगोचरस्त्वमीदृश इति वक्तुं शक्येत, नतु तथा करणगोचर इति नास्त्यस्मिन्नीदृक्ता- निर्विशेषचिन्मात्रत्वात्। करणागोचरेण सच्चिदानन्दात्मकेन मम परस्वरूपेण जगदिदं सर्वं व्याप्तमिति निष्कृष्टार्थः। करणागोचरत्वं चास्य 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इत्यादिश्रुतिसिद्धम्।

न चानन्दः मनःकरणगोचर इति वाच्यं, वैषयिकसुखस्यैव तद्गोचरत्वादिति। तस्मिन्पूर्वोक्ते सच्चिदानन्दरूपे ब्रह्मणि मयि ब्रह्मादीनि सर्वाणि भूतानि कार्यकरणसङ्घातात्मकानि स्थितानि रज्जौ सर्पवदित्यर्थः। मय्येव भूतानां मायया कल्पितत्वादिति भावः। कुतस्त्वयि स्थितानीत्यत आह—न हीति। निरधिष्ठानभ्रमायोगाद्भ्रमस्य चाधिष्ठानात्मकत्वान्निरात्मकं किंचिदपि वस्तु न व्यवहारयोग्यं भवति। अन्यथा शशशृङ्गादेरपि व्यवहारार्हत्वापत्तेरिति भावः। निरात्मकं निस्तत्त्वं स्वरूपशून्यमिति यावत्। शशशृङ्गादिरूपमिति भावः। नच रज्जुसर्पादिरूपमिति वाच्यं, रज्जुस्वरूपेणैव रज्जुसर्पस्य स्वरूपवत्त्वेन भ्रमस्य सर्पाधिष्ठानभूतरज्ज्वात्मत्वेन सात्मकत्वात्। भ्रमस्य ह्यधिष्ठानमेव स्वरूपमधिष्ठानातिरिक्तस्वरूपाभावात्। नचाऽयं न्यायो भ्रमस्थल एव, किंतु कार्यमात्रेऽपि- मृत्कार्यस्य घटस्य स्वाधिष्ठानमृद्रूपातिरिक्तरूपाभावेऽपि मृद्रूपेणैव सरूपत्वदर्शनात्। तस्माद्भ्रमरूपं प्रमारूपं वा सर्वमपि कार्यं स्वाधिष्ठानभूतकारणात्मकत्वेन न निरात्मकं, किंतु शशशृङ्गादिकमेव निरात्मकमिति स्थितम्। कार्यस्य च कारणमेवाधिष्ठानं मृद्येव घटदर्शनादिति च स्थितम्। एवं सति सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानां ब्रह्मकार्यत्वाद्ब्रह्मण्येव स्थितिः। ब्रह्माधिष्ठानत्वाच्च ब्रह्मात्मकत्वं, ब्रह्मात्मकत्वादेव व्यवहारयोग्यत्वमिति

आत्मना आत्मवत्त्वेन स्थितानि, अतः मयि स्थितानीत्युच्यन्ते । तेषां भूतानामहमेवात्मा इत्यतः तेषु स्थित इति मूढबुद्धीनामवभासते; अतः ब्रवीमि न चाहं तेषु भूतेषु अवस्थितः मूर्तवत्संश्लेषाभावेन आकाशस्यापि अन्तरतमो ह्यहम् । न ह्यसंसर्गि वस्तु क्वचिदाधेयभावेन अवस्थितं भवति ॥४॥

---

सिद्धम् । तथा च व्यवहारयोग्यानां ब्रह्मकार्याणां ब्रह्मात्मकानां चामीषां भूतानां ब्रह्मणि स्थितिरुचिता·· जलाहरणादियोग्यस्य मृत्कार्यस्य मृदात्मकस्य घटस्य मृदि स्थितिवदिति भावः ।

अत इति । व्यवहारयोग्यस्य जगतस्सात्मकत्वेन मान्यत्वादित्यर्थः । ननु कुण्डे बदराणामिव कारणे मृदादौ कार्यस्य घटादेः स्थित्यदर्शनात्कथं भूतानां त्वत्स्थत्वमत आह—मयेति । आत्मना स्वरूपभूतेन मया भूतानामात्मवत्त्वेन स्वरूपवत्त्वेन हेतुना स्थितान्यासन्नित्यतो हेतोर्मयि स्थितानी- त्युच्यन्ते । यथा मृत्स्वरूपेणैव स्वरूपवत्त्वाद्घटस्य मृदि स्थितत्वं, तथा मत्स्वरूपेणैव स्वरूपवत्त्वा- द्भूतानां मयि स्थितत्वमिति भावः ।

नचानृतजडदुःखात्मकानां भूतानां कथं परमात्मस्वरूपत्वमिति वाच्यं, सर्पस्य रज्जुत्वरूपत्व- दर्शनान्नैल्यस्य गगनस्वरूपत्वदर्शनादुदकस्य किरणस्वरूपत्वदर्शनाच्च सच्चिदानन्दलक्षणपरमात्मस्वरूपस्य भूतेष्वप्यन्वयदर्शनाच्च, मृदंशातिरिक्तघटस्येव सच्चिदानन्दांशातिरिक्तभूतपदवाच्यस्यादर्शनाच्च सच्चिदानन्दा- त्मकान्येव भूतानि । तेषु च भूतेषूपलभ्यमानोऽनृताद्यंशो मायाकार्यं नामाकारौ च मायाकार्यमेव । मृदि कम्बुग्रीवाद्याकारघटनाम्नोरिव ब्रह्मणि मनुष्यत्वाद्याकारमनुष्यादिनाम्नां मायया कल्पितत्वात् । तत्रापि नामाकारयोर्वर्तमानसत्ताद्यंशो ब्रह्मधर्म एवेति नामाकारयोरप्यस्ति ब्रह्मात्मकत्वम् । तस्माद्युक्त मुक्तं सच्चिदानन्दांशातिरिक्तं भूतपदवाच्यं किमपि वस्तु नास्तीति ।

एवं भूतानां सच्चिदानन्दब्रह्मात्मकत्वेन ब्रह्मणि स्थितत्वमुचितम् । एवं सर्वस्य ब्रह्मात्मकत्वादेव 'सर्वं ब्रह्म' इति श्रुत्युपपत्तिः । 'वासुदेवस्सर्व'मिति गीतोपपत्तिश्च । नचैवं 'ब्रह्म सत्यं जगन्मिथ्या' इत्यस्य विरोध इति वाच्यं, जगतः स्वेन रूपेण मिथ्यात्वात्कारणभूतब्रह्मरूपेण सत्यत्वाच्च । यथा घटः स्वेन रूपेणासत्योऽपि कारणमृद्रूपेण सत्यः । उक्तं हि श्रुत्या—'वाचारम्भणं विकारो नामधेयं मृत्तिके- त्येव सत्य'मिति ।

एवं मृदात्मकानां घटानां यथा मृदेव स्वरूपं तथा ब्रह्मात्मकानां भूतानां ब्रह्मैव स्वरूपमिति भूतानामात्मा ब्रह्म; आत्मा हि स्वरूपम् । एवं भूतानामात्मत्वादेव ब्रह्म भूतेषु स्थितम् । यथा घटाना- मात्मा मृदंशो घटेषु स्थित इत्यत आह—तेषामित्यादि । इतीति भूतानामात्मत्वाद्भूतेष्वहं स्थित इतीतिशब्दार्थः । मूढबुद्धीनामल्पज्ञानामवभासते प्रतिभाति । एवंविधभ्रान्तिज्ञानवन्तस्ते इत्यर्थः । अन्यथा मूढानामवभासमानत्वादित्यर्थः । ब्रवीमि तद्भ्रान्तिनिरासार्थमिति भावः । अहं तेषु भूतेषु नैवावस्थित इति ब्रवीमि । तत्र हेतुमाह—मूर्तवत्संश्लेषाभावेनेति । पृथिव्यादीनां मूर्तत्वात्परस्परं

संश्लेषोऽस्तीति पृथिव्यां जलं जले पृथिवी वा वर्तत इति यथा वक्तुं शक्यते तथा नाहं क्वचिद्वर्त इति वक्तुं शक्यः। अमूर्तत्वादिति भावः।

नन्वमूर्तोऽप्याकाशो घटेऽस्ति, घटश्चाकाश इत्यमूर्तस्याप्यस्ति संश्लेषः खलु मूर्तेनेत्यत आह— **आकाशादप्यत्यन्तं विलक्षणतमो ह्यहमिति।** सुतराममूर्तश्चेदाकाशश्चक्षुरिन्द्रियाविषय एव स्यात्, तथा अविषयत्वे 'अयमाकाश' इति प्रतीतिरेव न स्याद्दृश्यते त्वाकाशः। इदं चाकाशस्य चक्षुर्विषयत्वं स्वावसृष्टप्रकाशप्रयुक्तमथ वा स्वावसृष्टतमःप्रयुक्तम्? न हि तमःप्रकाशान्यतरातिरिक्तः कश्चनाकाश इति पदार्थः केनापि दृश्यते। तदेवं वस्तुतोऽमूर्तत्वेऽपि तमःप्रकाशान्यतरसंश्लेषेण मूर्तत्वादाकाशस्य भवेदेव घटेन संश्लेषः। न चामूर्तस्याकाशस्य तमःप्रकाशसंश्लेषो वा कथमिति वाच्यं, तमःप्रकाशाभिव्याप्तत्वस्यैव तमःप्रकाशसंश्लेषत्वात्। सा चाभिव्याप्तिः प्रत्यक्षसिद्धेति न तत्रातिशङ्क्यम्। तस्मादाकाशस्य तमःप्रकान्यतराभिव्याप्तेरपरिहार्यायास्सत्त्वेन मूर्तत्वाद्भवेदेव घटेन संश्लेषः। न तथा मम सुतराममूर्तस्य। एवमाकाशस्यापि घटादिसङ्गसद्भावादेवासङ्गोऽहमकाशादप्यत्यन्तविलक्षणः।

न च तवाप्यस्त्यज्ञानसङ्ग इति वाच्यं, चैतन्यस्याप्यज्ञानावृतत्वे जगदान्ध्यप्रसङ्गात्। 'असङ्गो ह्ययं पुरुष' इति श्रुतिविरोधाच्च। तस्मादज्ञानमप्यसङ्गे मयि असंसृष्टमेव वर्तते· यथा भूतानि। न चात्र विप्रतिपत्तव्यं, मायया सर्वस्याप्युपपत्तेः।

ननु भवतु तवामूर्तत्वात्केनापि संश्लेषाभावः, किं ततोऽत आह—**न हीति।** असंसर्गि वस्तु क्वचिदाधेयाभावेन स्थितं न हि भवति। आधाराधेयभावस्य संसर्गिवस्तुविषयत्वादिति भावः। क्वचित्कुत्र चिदाधारे इत्यर्थः। आधेयभावेन कुत्रचित्सत्त्वे तस्य तेनैव संसर्गसम्भवेनासंसर्गित्वभङ्गप्रसङ्गादिति भावः।

आकाशस्याप्यन्तरतमोह्यहमिति पाठान्तरम्। तत्पक्षे नन्वाकाश एवामूर्तो न त्वमित्यत आह— **आकाशस्याप्यन्तरतम इति।** अव्याकृतकार्यत्वाचावदाकाशस्याव्याकृतमन्तरं कारणं हि कार्यस्यान्तरं भवति। कारणव्याप्तत्वात्कार्यस्य। तच्चाव्याकृतं चैतन्यस्योपाधित्वाच्चैतन्येन व्याप्तमेव, यथा आकाशस्योपाधिर्घट आकाशेन व्याप्तः। व्यापकं हि वस्तु व्याप्यस्यान्तरं भवति। किं च चैतन्येऽध्यस्तत्वादपि चैतन्येन व्याप्तमेवाव्याकृतं, यथा रज्जावध्यस्तसर्पो रज्जुना व्याप्तः। अपि च यः प्रकृतौ तिष्ठन्नित्यन्तर्यामिब्राह्मणमपि चैतन्यस्याव्याकृतान्तरस्थत्वं वदति प्रकृतेरेवाव्याकृतत्वात्। अत एवाव्याकृताच्चैतन्यं परमिति वदति श्रुतिः- 'अव्यक्तात्पुरुषः पर' इति। अव्यक्तमव्याकृतं पुरुषः पूर्णः चैतन्यमेवेति। तस्मादाकाशान्तरस्याप्यव्याकृतस्यान्तरत्वादाकाशस्यान्तरतमः परमात्मा। तथा च आकाशस्यैवामूर्तत्वे तदन्तरतमस्य परमात्मनश्चैतन्यस्यामूर्तत्वं किं वक्तव्यमिति भावः।

न चाव्याकृतस्याप्यन्तर इति कुतो न भाषितमाचार्यैरिति वाच्यं, अव्याकृतस्य सर्वजनविदितत्वात्। अमूर्त आकाश इति सार्वजनीनत्वाच्च आकाशस्याप्यन्तरतम इति भाषितम्। आकाश-

अत एव असंसर्गित्वात् मम—

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ।**

**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥५॥**

**नेति । न च मत्स्थानि भूतानि ब्रह्मादीनि । पश्य मे योगं युक्तिं घटनं, मे मम**

---

स्यैवामूर्तत्वे आकाशस्याप्यतिशयेनान्तरः परमात्मा अमूर्त इति किं वक्तव्यमिति भावं द्योतयितुं येऽव्याकृतपदार्थानभिज्ञास्तेषाम् । न चात्मन आकाशान्तरत्वे विवदितव्यं, आकाशशरीरं ब्रह्म । 'य आकाशे तिष्ठ'न्नित्यादिश्रुतिप्रामाण्यात् । 'आत्मन आकाशस्सम्भूत' इति श्रुतेराकाशस्यात्मकार्यत्वेनात्मन आकाशान्तरत्वाच्च ।

न चाव्याकृतशरीरस्याव्याकृतकार्यस्य चाकाशस्य कथमात्मशरीरत्वमात्मकार्यत्वं चेति वाच्यं, अव्याकृतोपहितस्य ब्रह्मणश्शरीरं कार्यं चाकाश इत्यदोषात् । अव्याकृतद्वारा आत्मनः कार्यं शरीरं चाकाश इति वा । आत्मशरीरभूतस्य कार्यभूतस्य चाव्याकृतस्य शरीरभूतं कार्यभूतं चाकाशमात्मनश्शरीरभूतं कार्यभूतं च भवत्येव परम्परयेति वा इति ।

हिशब्दो हेत्वर्थे । हि यस्मादहमाकाशस्याप्यन्तरतमः तस्मादिति शेषः । यद्वा हिः प्रसिद्धौ । सा चाकाशशरीरं ब्रह्मेत्यादिश्रुतिस्मृतिसिद्धेति भाव इति व्याख्येयम् ॥४॥

**नेति** । अत एवेति तस्यार्थमाह— **असंसर्गित्वान्ममेति** । भूतानि मत्स्थानि न भवन्ति, भूतानामपि नाहमाधारः । असंसर्गिवस्तुन आधारत्वस्याप्ययोगादिति भावः । **एतेन** मत्स्थानि सर्वभूतानीति पूर्वोक्तमपि मूढदृष्ट्यैव न विद्वद्दृष्ट्येति **सिद्धम्** । अन्यथा पूर्वोत्तरविरोधात् न ह्येक एव वक्ता भूतानि मत्स्थानीति, न मत्स्थानीति च ब्रूयादनुन्मत्तः । तस्मान्मयि भूतानि सन्तीति, भूतेष्वहमवस्थित इति च मूढानामेव प्रतिभाति, नतु तत्त्वविदामसङ्गस्य ममाधाराधेयभावायोगादिति स्थितम् ।

**नन्वेवं** 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि, ईक्षते योगयुक्तात्मा' इत्यादिकं पूर्वमुक्तं विरुद्ध्येतेति चेन्नैवम्—विद्यातारतम्येन विद्वत्तारतम्याद्विदुषां ब्रह्मविद्ब्रह्मविद्वरब्रह्मविद्वर्यब्रह्मविद्वरिष्ठत्वरूपभेदस्य प्रसिद्धत्वात् । ये सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि पश्यन्ति ते ब्रह्मविदः, नाहं भूतानामाधारः, भूतानि च न ममेति ये पश्यन्ति ते ब्रह्मविद्वरिष्ठाः, एतद्दृष्ट्या तु पूर्वोक्तब्रह्मविदः मूढा एव । अतो न विरोध इति ।

**ननु** यथान्यायं पूर्वमुपपादितस्य मतस्य कथं प्रतिक्षेप इति **चेदुच्यते**—ब्रह्मण्यसङ्गस्वप्रकाशे कालत्रयेपि कार्यैस्सह माया नास्त्येव- 'एकमेवाद्वितीयं ब्रह्म, नेह नानास्ति किञ्चन' इत्यादिशास्त्रात् । नच ज्ञानकाल एव नास्ति अज्ञानकाले त्वस्त्येव, यथा रज्जुसर्पोऽध्यासकालेऽस्ति, रज्जुयाथात्म्यज्ञानकाल एव नास्तीति वाच्यं, ब्रह्मणो विकारित्वापत्तेः । प्रपञ्चसद्भावाभावाभ्यां हि विकारः प्राप्तो ब्रह्मणः । स हि न युज्यते । सदैकरूपस्याविक्रियस्य ब्रह्मणः विकारित्वे त्वनित्यमेव स्याद्ब्रह्म लोके

विकारिणो घटादेरनित्यत्वदर्शनात् । नित्यं हि ब्रह्म, सजातीयविजातीयस्वगतभेदशून्यमविक्रियं निर्विशेषचिन्मात्रमसङ्गं च । कथं तत्राज्ञानकाले वा प्रपञ्चस्य सद्भावः ?

रज्जुसर्पदृष्टान्तोऽपि न युक्त.- रज्जौ सर्पस्यापि कालत्रयेऽभावात् । न ह्यध्यासात्प्राक्काले पश्चात्काले चासन् सर्पः अध्यासकाले भवितुमर्हति, यस्य रज्जौ सर्पभ्रम आसीत्स एव भ्रमनिवृत्त्यनन्तरं रज्जुरेवायं न सर्पः; केवलमहं भ्रान्तोस्मीति हि प्रत्येति । नच भ्रमकाले रज्जुस्सर्पाकारेण परिणत एवेति वाच्यं, क्षीरस्य दध्यात्मनेव रज्जोस्सर्पाकारेण परिणन्तुं सामर्थ्याभावात् । सति तु तत्सामर्थ्ये भ्रमं विनापि परिणतैव भवेत् । नहि क्षीरं दध्यात्मना भ्रमकाले परिणमते, किंतु प्रमाकाल एव दध्नः प्रमात्वात् । नापि भ्रमकाले रज्जावपूर्वस्सर्प उदेतीति वाच्यं, सर्पोदयस्यैव भ्रमत्वात् ।

न च माध्यमिकवच्छून्यवादापत्तिः, सत्यब्रह्माभ्युपगमात् । न च रज्जावपूर्वस्सर्प उदेतीति स्वसिद्धान्तभङ्गप्रसङ्ग इति वाच्यं, तस्याप्यत्रैव तात्पर्यात् । भ्रान्तदृष्ट्या सर्प उदेतीत्युक्तं, न त्वभ्रान्तदृष्ट्येति सिद्धान्तात् ।

न चैवं प्रपञ्चस्यात्यन्तापलापे विज्ञानवादापत्तिः, क्षणिकविज्ञानवादिनां तेषां सत्यज्ञानवादिनामस्माकं च भेदात् । बुद्धिस्थः प्रपञ्चो बहिस्स्थ इवावभातीति विज्ञानवादिनः; वयं तु प्रपञ्चो न बुद्धिस्थः, नापि बहिस्स्थः, किं तु भ्रान्तदृष्ट्या बहिस्स्थ इव प्रतिभातीति वदामः । तस्मादस्माकं न विज्ञानवादापत्तिः ।

न च 'सर्वं खल्विदं ब्रह्म' इति श्रुतिविरोधः- यद्रजतं सा शुक्तिरितिवद्भ्रान्तदृष्ट्या प्रतीयमानमिदं जगन्न जगत्, किं तु ब्रह्मैव- ब्रह्मण्येव तेषां जगद्भ्रान्त्युदयाद्रज्जौ सर्पभ्रान्त्युदयवदिति श्रुतितात्पर्यात् ।

न चैवं प्रपञ्चस्यात्यन्तासत्त्वे शशशृङ्गवत्प्रपञ्चो व्यवहारयोग्यो न भवेदेवेति वाच्यं, व्यवहारस्यैवासत्त्वेन तद्योग्यत्वस्य का कथा ? भ्रान्तदृष्ट्या तु व्यवहारोऽस्ति, तद्योग्यं जगच्चास्ति, न विद्वद्दृष्ट्या । शशशृङ्गादिकं तु भ्रान्तदृष्ट्यापि नास्तीति कथं तस्य भ्रान्तदृष्टिसिद्धव्यवहारयोग्यत्वम् ? यो यद्दृष्टिसिद्धस्स हि तद्व्यवहारयोग्यः, यथा स्वप्नद्रष्टृदृष्टिसिद्धस्स्वाप्नप्रपञ्चस्स्वप्नद्रष्टृव्यवहारयोग्य इति ।

तस्माद्ब्रह्मणि निष्प्रपञ्चे कालत्रयेऽपि प्रपञ्चो नास्त्येव । एवं प्रपञ्चस्याभावादेव प्रपञ्चे ब्रह्मास्तीति वक्तुं न शक्यते । न हि शशशृङ्गे किमपि वस्तु वर्तेत; शशशृङ्गं वा कस्मिंश्चिद्वस्तुनि । विद्वद्दृष्ट्या खलु शशशृङ्गतुल्यः प्रपञ्चः । भ्रान्तदृष्ट्या तु रज्जुसर्पतुल्यः । 'वन्ध्याकुमारवचने भीतिश्चेदस्ति किञ्चन, शशशृङ्गेण नागेन्द्रो मृतश्चेज्जगदस्ति त'दिति तेजोबिन्दूपनिषत्प्रसिद्धेः । उक्तं चेदं गीतायामेव— 'नासतो विद्यते भावो नाभावो विद्यते सत' इति ।

ततश्च एकस्मिन्काले सतो वस्तुनः कालान्तरेऽभावो न युक्तः- नाभावो विद्यते सत इत्युक्तत्वात् । तथा एकस्मिन्कालेऽसतो वस्तुनः कालान्तरे भावोऽपि न युक्तः- नाऽसतो विद्यते भाव इत्युक्तत्वात् । तदेवं ज्ञानकालेऽसतः प्रपञ्चस्य अज्ञानकाले चासत्त्वमयुक्तम् । न हि सत्यं ब्रह्म ज्ञान-

ऐश्वरं ईश्वरस्य इममैश्वरं, असङ्गतां दर्शयति—'असङ्गो न हि सज्ज'तेति । इदं चाश्चर्यमन्यत् पश्य ! भूतभृदसङ्गोऽपि सन् भूतानि बिभर्ति; न च भूतस्थः यथोक्तेन न्यायेन

---

कालेऽस्ति, अज्ञानकाले नास्तीति वक्तुं शक्यते । अत एव हि ब्रह्मैव सत्, अन्यदसत्, इति 'अविनाशि तु तद्वि'द्धीत्यत्र प्रतिपादितम् । 'ततसत्यमतोऽन्यदार्त'मिति श्रुतिश्च ।

तस्मादज्ञानकालेऽपि नास्त्येव प्रपञ्चः । तत्सत्त्वं तु भ्रान्तिसिद्धमेव- निष्प्रपञ्चे ब्रह्मणि प्रपञ्चायोगादिति स्थितम् । आध्यासिकः कश्चन प्रपञ्चो ब्रह्मण्यस्तीति पूर्वमतसंग्रहार्थः । सोऽपि नास्तीत्युत्तरमतसंग्रहार्थः । ब्रह्मण्याध्यासिकप्रपञ्चसत्त्ववादिनामेव मूढबुद्धित्वे कृष्णशङ्कराभ्युपगते सति वास्तवप्रपञ्चसत्त्ववादिनां द्वैतिनां विशिष्टाद्वैतिनां च मूढबुद्धित्वं किं वक्तव्यम् ?

न चायं वादश्रीमदचलमतगुरुशिवरामदीक्षितीय इति वाच्यं, तन्मते अब्रह्मत्वादात्मनः । स्वरूपनाशस्यैव जीवस्य पुरुषार्थत्वप्रसङ्गाच्च । अहं ब्रह्मास्मीति श्रुतिविरुद्धं हि तत् । किं च परिपूर्णं माया चेति तत्त्वद्वयमभ्युपगतवन्तस्ते । वयं तु परिपूर्णमेकमेवेति भेदात् ।

न च दृग्दृश्यमिति पदार्थद्वयं भवद्भिरप्यभ्युपगतमिति वाच्यं, मूढबुद्धिविषयत्वात्तदभ्युपगमस्य । न हि तत्त्वविद्दृष्ट्या दृश्यं तत्त्वं भवितुमर्हति शशशृङ्गतुल्यम् ।

न च बन्धमोक्षादिव्यवस्थानुपपत्तिः, इष्टापत्तेः । उक्तं हि कैवल्योपनिषदि- 'न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता' इति । बद्धदृष्ट्यैव बन्धमुक्तिव्यवस्था, न तु विद्वद्दृष्ट्या- नित्यमुक्ते निष्प्रपञ्चे ब्रह्मणि तदयोगात् ।

न च गुरुशिष्यादिसम्प्रदायोच्छेदप्रसङ्गश्शास्त्रवैयर्थ्यं वा, अतिगुह्यस्यास्यार्थस्य गुरुशास्त्रे विना दुर्ज्ञेयत्वात् । 'गुरुशास्त्रे विनात्यन्तं गम्भीरं ब्रह्म वेत्ति कः' इत्युक्तं हि विद्यारण्यगुरुभिः ।

न च वेदशास्त्रवैयर्थ्यं तदर्थयज्ञाद्यनुष्ठानाभावादिति वाच्यं, मूढार्थं तस्यावश्यकत्वात् । 'त्रैगुण्यविषया वेदा' इत्युक्तमत्रैव । तस्मादात्मा न भूतस्थः; नापि भूतान्यात्मस्थानि; भूतानामभावादिति स्थितम् ।

कस्मादभावो भूतानामिति चेदसंसर्गित्वादेवात्मनः । सत्सु भूतेषु तैरस्यादात्मनो हि संसर्गः कयापि विधया । असंसर्गित्वे श्रुतिं प्रमाणयति- 'असङ्गो न हि सज्जत' इति । आत्मेति शेषः ।

मे ऐश्वरं योगं पश्य ! ईश्वरस्य मम सम्बन्धिनं योगं पश्येत्यर्थः । योगशब्दस्य फलितार्थमाह—याथात्म्यमिति । 'न च मत्स्थानि भूतानि न चाहं तेष्ववस्थित' इत्युक्तं निष्प्रपञ्चत्वरूपं मत्तत्त्वं पश्येत्यर्थः ।

पश्येति क्रियापदं पुनराकृष्याह—इदं चाश्चर्यमन्यत्पश्येति । वाक्यशेषोऽयम् । अन्यदित्यनेन पूर्वोक्तमेकमाश्चर्यमिति सूचितम् । प्रत्यक्षादिबहुप्रमाणगम्यस्य प्रपञ्चस्य सशास्त्रं सयुक्तिकं सानुभवमभावस्य प्रदर्शितत्वात्तस्याश्चर्यत्वमिति भावः । असङ्गोऽपि सन् भूतभृद् भूतानि बिभर्तीति व्युत्पत्तिः । एवं भूतभृत्सन्नपि न च भूतस्थः । यथोक्तेन पूर्वोक्तेन न्यायेन भूतस्थत्वानुपपत्तेर्दर्शितत्वादित्यन्वयः । असंसर्गिणः कचिदप्याधेयभावेनावस्थितिर्न सम्भवतीति पूर्वोक्तन्यायः ।

दर्शितत्वात् भूतस्थत्वानुपपत्तेः । कथं पुनरुच्यते 'असौ मम आत्मा' इति विभज्य देहादि-सङ्घातं तस्मिन्नहङ्कारमध्यारोप्य लोकबुद्धिमनुसरन् व्यपदिशति- 'मम आत्मा' इति, न पुनरात्मनः आत्मा अन्य इति लोकवदवजानन् । तथा भूतभावनः भूतानि भावयति उत्पादयति वर्धयतीति वा भूतभावनः ॥५॥

---

ननु स्वस्यैवात्मत्वान्ममात्मा भूतभावन इति कथमुच्यत इत्याक्षिपति—कथमिति । समाधत्ते—विभज्येति । देहादिसङ्घातं विभज्यात्मनः पृथक्कृत्य तस्मिन् सङ्घाते अहंकारमध्यारोप्य अहंबुद्ध्यध्यासं कृत्वा लोकबुद्धिमनुसरन् व्यपदिशति- यथा लोकस्सङ्घातेऽहंबुद्ध्या अहं मनुष्य इति व्यवहरति तादृशसङ्घाताद्विलक्षणं चात्मानं ममात्मेति तद्वदित्यर्थः । लोकदृष्ट्या ममात्मेति निर्देश इत्यर्थः ।

ननु लोकबुद्धिमनुसरन्निति कथमुच्यते, स्वबुद्ध्यैवोक्तवानित्यत आह—न पुनरिति । न हि सर्वज्ञः कृष्णः लोकवदजानन्नात्मतत्त्वमविदन् ममात्मेति ब्रूयात् । लोकस्याज्ञानमेवाभिनीय दर्शयति—आत्मन आत्माऽन्य इति । मम पुस्तकमितिवन्ममात्मेति वचनं ह्यात्मनो मच्छब्दवाच्यादन्य आत्मा पुस्तकवदिति भेदज्ञानपूर्वकम् । तस्मान्ममात्मेत्यस्य अहमात्मेत्येवार्थः ।

असङ्गस्यात्मनो युक्तमेवाभूतस्थत्वं, भूतभृत्त्वं तु विरुद्धमिति विरोधादाश्चर्यमिदमिति भावः । यद्वा भूतभृतोऽपि ममाभूतस्थत्वं विरुद्धं भूतान्यन्तःप्रविश्य बिभर्तीति हि भूतभृत् । न चान्तस्थस्य कथं भरणमिति वाच्यं, प्राणस्यान्तस्स्थस्यापि देहभरणदर्शनात् । तस्माद्विरुद्धमिदमाश्चर्यमिति भावः । अथ वा अभूतस्थस्य मम भूतभृत्त्वं विरुद्धं- भूतान्तस्स्थितिप्रयुक्तत्वाद्भूतभरणस्येति ।

अस्य च विरोधस्य परिहारश्चेत्थं-- असङ्गोऽप्ययं मायया भूतभृदिति, मायया भूतभृदप्यहं वस्तुतो न भूतस्थ इति । अभूतस्थोऽप्यहं मायया भूतभृदिति, तत्त्वविद्दृष्ट्या न भूतस्थोऽपि मूढदृष्ट्या भूतस्थत्वाद्भूतभृदहमिति वा ।

तथा असङ्गाक्रियोऽपीत्यर्थः । वस्तुतो भूतानामेवाभावे इदं भूतभावनत्वं चात्मनि मायया प्रतिभाति मूढदृष्टीनाम् । नच विदुषामप्यस्ति प्रपञ्चसाक्षात्कार इति वाच्यं,

'मध्याह्नार्कमरीचिकास्विव पयःपूरो यदज्ञानतः
खं वायुर्ज्वलनो जलं क्षितिरिति त्रैलोक्यमुन्मीलति ।
यत्तत्त्वं विदुषां निमीलति पुनः स्रग्भोगिभोगोपमं
सान्द्रानन्दमुपास्महे हृदि सदा धामार्धजानिं शिवम् ॥'

इति कृष्णमिश्रोक्तेः । 'मालाफणीव च निलीयति यत्प्रबोधा'दित्यन्यत्राप्युक्तेः । नह्यात्मसाक्षात्कारशालिनां नास्ति पुनः प्रपञ्चसाक्षात्कारः- यथा सुषुप्तौ सर्वेषां यथा वा समाधौ योगिनामिति ।

न च यावत्प्रारब्धं विदुषामपि देहादिप्रपञ्चोऽस्त्येवेति वाच्यं, 'यथा रज्जुं परित्यज्य सर्पं गृह्णाति वै भ्रमात् । तद्वत्सत्यमविज्ञाय जगत्पश्यति मूढधीः ॥ रज्जुखण्डे परिज्ञाते सर्परूपं न तिष्ठति । अधिष्ठाने तथा ज्ञाते प्रपञ्चे शून्यतां गते ॥ देहस्यापि प्रपञ्चत्वात्प्रारब्धावस्थितिः कुतः । अज्ञानजनबोधार्थं प्रारब्धमिति चोच्यते ॥' इति नादबिन्दूपनिषदि दर्शनान्नास्ति विदुषः प्रारब्धादिकमिति ॥५॥

यथोक्तेन श्लोकद्वयेन उक्तमर्थं दृष्टान्तेनोपपादयन्नाह—

यथाकाशस्थितो नित्यं वायुस्सर्वत्रगो महान् ।
तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥६॥

यथेति । यथा लोके आकाशस्थितः आकाशे स्थितः नित्यं सदा वायुः सर्वत्र गच्छतीति सर्वत्रगो महान् परिमाणतः, तथा आकाशवत्सर्वगते मयि असंश्लेषेणैव स्थितानीत्येवमुपधारय विजानीहि ॥६॥

यथेति । नन्वसङ्गस्य तव वस्तुतोऽभूतस्थत्वेऽपि मायया वा कथं तदुपपत्तिरित्यमूमाशङ्कां दृष्टान्तेन परिहरतीत्याह—यथेति, उक्तमर्थमिति । असङ्गित्वमभूतस्थत्वादिरूपम् । महानिति । महत्परिमाण इत्यर्थः । न तु निरतिशयमहत्त्वं ब्रह्मनिष्ठत्वात्तस्येति सूचयितुमाह—परिमाणत इति । न तु स्वरूपत इति भावः । आकाशगस्य वायोर्यथा आकाशेन न संश्लेषः तथा मत्स्थानां भूतानां मया न संश्लेषः । तथा च मायया मयि भूतानां सत्त्वेऽपि न ममासङ्गित्वस्य क्षतिः कापीति भावः । मूढदृष्टिमभ्युपेत्येदमुक्तं, वस्तुतस्तु मयि भूतानि मायया वा कालत्रयेऽपि न सन्त्येव अद्वितीयत्वान्ममासङ्गत्वाच्च ।

यत्तु रामानुजः—अन्तर्यामिणा मया सर्वं ततं मदधीनस्थितिकत्वात्सर्वं मयि स्थितं तदधीनस्थितिकत्वाभावादहं न तेषु स्थितः । घटे जलानीव मयि भूतानि न स्थितानि निरालम्बनेऽप्याकाशे मयैव धृतस्सन् वायुर्यथा तिष्ठति तद्वत्सर्वमपीति,

तदसत्—अन्तर्यामी हि सर्वस्य जगतोऽन्तरेव व्याप्तुमीष्टे, न तु बहिः- अन्तर्यामित्वादेव । इयं चान्तरेवेश्वरस्य व्याप्तिश्श्रुतिविरुद्धा 'अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थितः' इति श्रुतेः । सर्वव्यापिन ईश्वरस्यान्तरेव व्याप्तिरिति व्याप्तिसंकोचस्यान्याय्यत्वाच्च । न चान्तर्यामिणोऽन्यः कश्चन बहिर्व्यापी विद्यते, तथासति कश्चिदीश्वरोऽन्तर्यामी कश्चित्तु बहिर्व्यापीतीश्वरद्वित्वप्रसङ्गात् ।

नाप्यन्तर्याम्यधीनस्थितिकानि स्थावरजङ्गमात्मकभूतानि- तेषां जीवाधीनस्थितिकत्वात् । 'जीवापेतं वाव किल शरीरं म्रियते' इत्यादिशास्त्रात् । न चान्तर्याम्यपगमादेव शरीरमरणमिति वाच्यं, अचेतनेष्वप्यन्तर्यामिणस्सत्त्वेन मृतशरीराद्ब्रह्मणो वान्तर्यामिणोऽपगत्यसम्भवात् । 'यः पृथिव्यां तिष्ठन्' इत्याद्यन्तर्यामिब्राह्मणात् ।

न च जीवोऽप्यन्तर्याम्यधीनस्थितिक इति वाच्यं, नित्यस्य जीवस्य पराधीनस्थितिकत्वायोगात् । न च जीवः परतन्त्र इति वाच्यं, जीवगतपारतन्त्र्यस्य बुद्धिधर्मत्वात् । अचेतनं हि चेतनपरतन्त्रं, चेतनस्तु स्वतन्त्र एव- चेतनत्वादेव ।

किं च यदि मूलकर्तुरीदृगर्थविवक्षा तर्हि 'मद्वशानि तु भूतानि न चाहं तद्वशः पुनः' इत्येव ब्रूयात् । घटे जलानीव मयि भूतानि न स्थितानीत्येतदप्ययुक्तं- विश्वरूपे तस्मिन् तथैव भूतानां सत्त्वात् ।

तथा विश्वरूपस्य दर्शयिष्यमाणत्वात् । तव मते चिदचिद्विशिष्टस्य साकारस्यैवेश्वरत्वेन विश्वरूपस्यापीश्वरत्वात् ।

तथा सर्वाधारस्य स्वयमाधारान्तरानपेक्षस्य वायोर्निरालम्बनेऽप्याकाशे स्थितिसम्भवात्किमीश्वरधृतत्ववर्णनेन ? यदि वायुरीश्वरेणाधृतस्स्यात्तर्हि निरालम्बने आकाशे अस्थित्वा क वर्तेत ? तद्ब्रूहि । येन वायोराकाशस्थित्यर्थमीश्वरधृतत्वमुच्येत ।

यथा वायुराकाशस्थितस्तथा भूतानि मत्स्थानीत्येतावत एव मूलस्य स्थिते मयैव धृत इति मूलातिरिक्तांशकल्पनं तव हि निर्मूलमप्रमाणमयुक्तं च- मया धृतो यथा खस्थो वायुरिति मूलस्याभावात् । दार्ष्टान्तिकेऽपि तथा मत्स्थानि भूतानि मद्धृतानीति भावयेति मूलस्याभावात् । आकाशस्थितस्य वायोरीश्वरधृतत्ववदीश्वरस्थितस्य जगत ईश्वरधृतत्वमिति वचनस्याप्ययुक्तत्वात् । न हि दृष्टान्ते ईश्वरधृतो वायुरीश्वरे स्थितः, किं तु ईश्वरादन्यस्मिन्नाकाशे एव । दार्ष्टान्तिके तु ईश्वरधृतानि भूतानीश्वर एवेति कथमनयोरर्थयोर्दृष्टान्तदार्ष्टान्तिकभावः ? अन्तरेणेश्वरेण धृतानां कथं वेश्वरे स्थितिः ? बहिरीश्वरस्यैवाभावात् । उक्तं हि प्राक्त्वया- अन्तर्यामिणा मया ततमिति । यदि तु बहिरप्यस्तीश्वरस्तर्हि स भवेदेव भूतानामाधारो वायोरिवाकाश इति किमीश्वरधृतत्ववर्णनेन ?

किं च ईश्वरेण धृतत्वादेव वायुराकाशे वर्तते इत्युक्तं, चाकाशः केन धृतः ? कुत्र वर्तते ? स एव ह्यज्ञातांशः पुनर्वक्तव्यः सर्वज्ञेन । वायोराकाशसत्त्वं तु सर्वविदितमेव प्रत्यक्षत्वात् । यदि त्वाकाश ईश्वरेण धृत ईश्वरे वर्तत इति मतं, तर्हि स एवार्थ इह दृष्टान्तीकर्तव्यः- दार्ष्टान्तिकानुरोधात् । तत्परित्यागे कारणं नोपलभामहे ।

यद्यप्यनेनोक्तम्—ममात्मा मम सङ्कल्प इति, तदप्यसत्—आत्मशब्दस्य मुख्यार्थपरित्यागे कारणाभावात् । भूतभावनक्रियां प्रति कर्ता ह्यात्मा, सङ्कल्पस्तु हेतुरेवेति कर्तारमात्मानं विहाय सङ्कल्पस्य भूतभावनकर्तृत्ववर्णनं चायुक्तं-- सत्यामेतद्विवक्षायां व्यासो ब्रूयादात्मना भूतभावन इति ।

न च मत्सङ्कल्प एव भूतभावनः, किंपुनरहमित्यर्थापत्तिसूचनाय ममात्मा भूतभावन इत्युक्तमिति वाच्यं, सङ्कल्पातिरेकेणेश्वरस्य भूतभावनत्वासिद्धेः । 'तदैक्षत बहु स्यां प्रजायेयेति' सङ्कल्पपूर्वकत्वश्रवणात्सृष्टेः । न हीश्वरः कुलाल इव दण्डचक्रादिव्यापारेण घटं केन चिद्व्यापारेण जगन्निर्माति, किं तु सङ्कल्पादेव । येन मम सङ्कल्प एव भूतभावनः किंपुनरहमित्युच्येत । सङ्कल्पेनैवाहं भूतभावन इत्युक्तेऽपि तादृशार्थापत्तेस्सुलभत्वाच्च ।

तस्मान्मम वसुदेवसुतस्य दृश्यमानावयवसन्निवेशवतः पुरुषस्य आत्मा स्वरूपं सच्चिदानन्दलक्षणं परमात्मेति शङ्करोक्त एव समीचीनार्थः । नच षष्ठ्यनुपपत्तिः- कृष्णस्यैवात्मत्वादिति वाच्यं, दर्शितविधया तत्परिहारात् । कार्यकरणसङ्घातात्मत्वेन सच्चिदानन्दात्मकत्वेन च विवक्षाभेदेन ममात्मेति षष्ठ्यन्तप्रथमान्तपदद्वयनिर्देशादिति ॥५॥

एवं वायुः आकाश इव मयि स्थितानि सर्वभूतानि स्थितिकाले; तानि—

सर्वभूतानि कौन्तेय! प्रकृतिं यान्ति मामिकाम् ।
कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥७॥

सर्वेति । सर्वभूतानि कौन्तेय! प्रकृतिं त्रिगुणात्मिकां अपरां निकृष्टां यान्ति मामिकां मदीयां; कल्पक्षये प्रलयकाले । पुनर्भूयस्तानि भूतानि उत्पत्तिकाले कल्पादौ विसृजामि उत्पादयाम्यहं पूर्ववत् ॥७॥

एवमविद्यालक्षणम्—

प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥८॥

प्रकृतिमिति । प्रकृतिं स्वां स्वीयामवष्टभ्य वशीकृत्य विसृजामि पुनः पुनः प्रकृतितो जातं भूतग्रामं भूतसमुदायमिमं वर्तमानं, कृत्स्नं समस्तं, अवशं अस्वतन्त्रं अविद्यादिदोषैः

---

सर्वेति । प्रकृतिं यान्ति मायायां निलीयन्त इत्यर्थः । हे कौन्तेय! सर्वभूतानि कल्पक्षये मामिकां प्रकृतिं यान्ति, कल्पादावहं पुनस्तानि विसृजामि ।

ननु यस्य यत्र लयस्तस्य तस्मादेवोदयस्तत्रैव स्थितिरिति निष्कर्षः घटस्य मृदि लयस्थित्यो-र्मृद उदयस्य च दर्शनात् । प्रकृते तु भूतानां प्रकृतौ लयः परमात्मनि स्थितिरिति चोच्यते, कथं पुन-रस्य विरोधस्य परिहार इतिचेत्, उच्यते—भूतानां परमात्मनि स्थितिर्मायाद्वारैव, नतु स्वतः-निष्प्रपञ्चत्वात्तस्य । तथा च परमात्मनि मायास्ति; तस्यां तु भूतानि स्थितानि; तस्यामेव लीयन्ते; तस्या एव जायन्त इत्यविरोधः ।

न च मायायास्सत्त्वे ब्रह्मणस्सद्वितीयत्वापत्तिः अग्निशक्त्याग्नेरिव मायया स्वशक्त्या परमात्मन-स्सद्वितीयत्वायोगात् । यदि ब्रह्मणः पृथङ्निरूपयितुं शक्या स्यान्माया तर्हि तया सद्वितीयत्वं स्याद्ब्रह्मणः नतु तदस्ति ।

नचैवं मायाया एव जगज्जन्मस्थितिलयहेतुत्वे 'यतो वा इमानि भूतानि जायन्ते' इति श्रुति-र्ब्रह्मलक्षणं न स्यादिति वाच्यं, जगदाकारपरिणतमायाधिष्ठानत्वेन ब्रह्मणि लक्षणसमन्वयात् ।

एवं मायाद्वारेणैवेश्वरस्य भूताधारत्वं, नतु स्वत इति कृत्वैव मत्स्थानि भूतानीति, नच मत्स्थानि भूतानीति च प्रोक्तम् ॥७॥

प्रकृतिमिति । अहं स्वां प्रकृतिमवष्टभ्य प्रकृतेर्वशादवशमिमं कृत्स्नं भूतग्रामं पुनः पुनर्विसृजामि । कुतः प्रकृतिमवष्टभ्य विसर्जनं भूतग्रामस्यात आह—प्रकृतितो जातमिमि । इदमुपलक्षणं प्रकृत्यां लीन-स्थितस्य भूतग्रामस्य लयोदययो - प्रकृत्याधारत्वात्प्रकृत्याश्रयणं विना नेश्वरस्य भूतग्रामसर्जनं सम्भवतीति भावः । नचैवमीश्वरस्येश्वरत्वभङ्गः प्रकृतिवशीकरणस्यैवेश्वरत्वात् । जीवो हि प्रकृतिपरतन्त्रः । तस्मादीश्वर

परवशीकृतं, प्रकृतेर्वशात् स्वभाववशात् ॥८॥

तर्हि तस्य ते परमेश्वरस्य, भूतग्राममिमं विषमं विदधतः, तन्निमित्ताभ्यां धर्माधर्माभ्यां सम्बन्धस्स्यादित्यत इदमाह भगवान्—

न च मां तानि कर्माणि निबध्नन्ति धनंजय ।
उदासीनवदासीनमसक्तं तेषु कर्मसु ॥९॥

नेति । नच मामीश्वरं तानि भूतग्रामस्य विषमसर्गनिमित्तानि कर्माणि निबध्नन्ति धनंजय ! । तत्र कर्मणामसम्बन्धित्वे कारणमाह—उदासीनवदासीनं यथा उदासीन उपेक्षकः कश्चित् तद्वदासीनं, आत्मनोऽविक्रियत्वादसक्तं फलसङ्गरहितं, अभिमानवर्जितं, 'अहं करोमि'

---

स्वमायया सर्वं जगत्प्रतिकल्पं पुनःपुनरुत्पादयति प्रतिप्रलयं च पुनःपुनर्मायायां विलापयति । एवमपि विचित्रप्राणिसर्गप्रयुक्तवैषम्यनैर्घृण्ये नेश्वरस्येत्याह—प्रकृतेर्वशादवशमिति । प्रकृतिः स्वभावो धर्माधर्मसंस्कारः प्राक्तनजन्मार्जित आत्मनिष्ठः कर्मपर्यायः । स्वस्वकर्मानुगुणं सृजत ईश्वरस्य न वैषम्यादिदोषप्रसक्तिरिति भावः ॥८॥

नेति । ननु चौर्यसेवादिकर्मानुगुणचोरभृत्यादिशिक्षणरक्षणादिवशाद्राज्ञ इव कर्मानुगुणविषमभूतसृष्टिवशादीश्वरस्य धर्माधर्मादिसम्बन्धः स्यादिति शङ्कते—तर्हीति । विषममिति क्रियाविशेषणम् । तन्निमित्ताभ्यां विषमभूतसर्गनिमित्ताभ्याम् । हे धनञ्जय ! उदासीनवदासीनं तेषु कर्मस्वसक्तं मां तानि कर्माणि नच निबध्नन्ति; नच नैवेत्यर्थः । तानि कानीत्यत आह—भूतेति । विषमसर्गस्य निमित्तानि भूतग्रामस्य सम्बन्धीनि कर्माणि पूर्वप्रपञ्चार्जितानि अदृष्टानि पुण्यापुण्यरूपाणि मां परमेश्वरं न निबध्नन्ति, किंतु भूतग्राममेव निबध्नन्ति । सुखदुःखादिसंसारसम्पादनद्वारेति भावः ।

यद्यप्यन्यदीयकर्मभिरन्यस्य बन्धश्शंकितुमयुक्तः, तथापि अन्यदीयकर्मानुगुणस्वव्यापारैस्स्वस्य बन्ध स्यादिति शङ्कयेदमुक्तम् । ततश्च भूतग्रामसम्बन्धिकर्माणि तदनुगुणविषमसृष्टिद्वारा नेश्वरस्य बन्धकानीति सिद्धम् । पूर्वप्रपञ्चार्जितभूतग्रामकर्मानुगुणानि विषमाणि भूतग्रामसृष्ट्यादीनि कर्माणि नेश्वरं निबध्नन्तीति परमार्थः ।

तत्र एवंसति कर्मणां सृष्ट्यादिकर्मणां सृष्ट्यादिव्यापारहेतुभूतग्रामादृष्टाख्यकर्मणामिति वा । अबन्धकत्वे धर्माधर्मादिसंसारासम्पादकत्वे । उदासीनवदासीनमित्यनेन न तूष्णीं स्थितिर्विवक्षिता—निष्क्रिये आत्मनि तूष्णीमासनरूपक्रियाया अप्ययोगात् । किं तु यथा द्वयोर्विवदमानयोश्चित्तक्षोभादिकं विकारं भजमानयोस्सतोरुदासीनोऽन्यस्तत्र न कञ्चिद्विकारं भजते तद्वदीश्वरोऽपीत्ययमर्थोऽत्र विवक्षित इत्याह—आत्मनोऽविक्रियत्वादिति । अविक्रियात्मस्वरूपाभिज्ञत्वादविक्रियमित्यर्थः । अनेन च ईश्वरस्येव जीवस्यापि यद्यप्यात्माऽविक्रियस्तथापि जीवस्तदनभिज्ञत्वाद्विक्रियत इवेति सूचितम् ।

असक्तमिति । कर्मस्वासङ्गो हि द्विविधः- फलाऽऽसङ्गरूपः, कर्तृत्वाभिमानरूपश्च । तदुभयरहितमित्याह—फलेति । अभिमानस्याकारं दर्शयति—अहं करोमीति । तेषु कर्मस्वहं करोमी-

इति तेषु कर्मसु; अतोऽन्यस्यापि कर्तृत्वाभिमानाभावः फलासङ्गाभावश्चासम्बन्धकारणम्। अन्यथा कर्मभिर्बध्यते मूढः कोशकारवदित्यभिप्रायः ॥९॥

तत्र 'भूतग्राममिमं विसृजामि' 'उदासीनवदासीन'मिति च विरुद्धमुच्यते, इति तत्परिहारार्थमाह—

मयाध्यक्षेण प्रकृतिस्सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते ॥१०॥

मयेति। मयाऽध्यक्षेण सर्वतो दृशिमात्रस्वरूपेण अविक्रियात्मना अध्यक्षेण मया मम माया त्रिगुणात्मिका अविद्यालक्षणा प्रकृतिः सूयते उत्पादयति सचराचरं जगत्। तथ च मन्त्रवर्णः—'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा, कर्माध्यक्षस्सर्वभूताधि

ह्यभिमानवर्जितमित्यन्वय.। कर्मस्विति। सृष्ट्यादिव्यापारेषु। अत इति। कर्मस्वसक्तत्वेनेश्वरस्य कर्मबन्धाभावादित्यर्थः। असम्बन्ध धर्माधर्मादिसंसारासम्बन्धः।

अन्यथेति। कर्मस्वसङ्गाभाव इत्यर्थः। कर्मसु सङ्गसत्त्वे इति वा। बध्यते संसारं प्राप्यः इत्यर्थ। मूढ आत्मस्वरूपानभिज्ञ·। अनात्मन्यात्माभिमानशालीति वा। कोशकारवदिति। कोशकारः कीटविशेषः (आन्ध्रे गव्वपुरुगु) स हि स्वबन्धकं कोशं तनोति, रन्ध्राभावाच्चत्रैव कोशे म्रियते तद्वज्जीव कर्मसु सङ्गं कुरुते संसारमापद्यते च ॥९॥

मयेति। ननु भूतग्रामस्य विषमोऽपि सर्ग आत्मनोऽविक्रियत्वज्ञमीश्वरं न निबध्नातीत्युक्तं न युक्तं, आत्मनस्सत्यविक्रियत्वे ईश्वरो भवत्वात्मनोऽविक्रियत्वज्ञः। तदेव न सम्भवति- भूतग्राममिमं कृत्स्नं विसृजामीति भूतसर्जनरूपविकारस्यात्मनि प्रोक्तत्वात्। न हि क्रियावानात्मा विकाररहित स्यात्। उदासीनेऽपि विवादादिक्रियाराहित्यं हि विकाराभावे हेतु·। तस्मादविक्रियत्वं भूतसर्गादिकर्तृत्वं चेति विरुद्धधर्मद्वयस्यात्मनि सामानाधिकरण्यं न सङ्गच्छत इत्याक्षिपति—तत्रेति। तत्र पूर्वोक्तार्थे।

मया अध्यक्षेण सता प्रकृतिस्सचराचरं सूयते। हे कौन्तेय! अनेन हेतुना जगद्विपरिवर्तते। दृशिमात्रं चैतन्यमेव स्वरूपं यस्य तेन दृशिमात्रस्वरूपेण। अध्यक्ष प्रमुस्साक्षीति यावत्।

यथा देहे गच्छति सति देहधर्मं गमनं देहिन्यारोप्य देही गच्छतीति मत्येति लोकस्तथा प्रकृत्यां सृष्टिं कुर्वाणायां प्रकृतिधर्मं सर्गं प्रकृतिमति मायिनीश्वरे आरोप्य सृजति जगदीश्वर इति वदति शास्त्रविज्जन। तथा च प्रकृत्यामेव क्रिया न त्वात्मनीति क्रियाभावादात्मा भवत्यविक्रिय। एवमविक्रियमात्मानं वेत्तीतीश्वरो भवत्युदासीनवदासीन। स्रष्टृप्रकृतिसाक्षित्वादीश्वरस्य स्रष्टृत्वव्यपदेशश्चेति न कश्चिद्विरोध इति समाधानार्थ·। सूयते—उपलक्षणमिद रक्षतिहरत्योः। चराणि जङ्गमानि मनुष्यादीनि अचराणि स्थावराणि तर्वादीनि तत्सहितं सचराचरं सृष्ट्यादिषु ईश्वरः साक्ष्येव न कर्ता। प्रकृतिरेव कर्त्रीत्युक्तार्थे श्रुतिं प्रमाणयति—एक इति। गूढ दुर्विज्ञेयत्वेन स्थितः कर्माध्यक्षः अकर्म-

वासस्साक्षी चेता केवलो निर्गुणश्च' इति हेतुना निमित्तेनानेन अध्यक्षत्वेन कौन्तेय! जग-

वश्यः। अधिवास आधारः चेता चेतनः। चकाराच्चिक्रियः। अनेन मन्त्रवर्णेन साक्षित्वे सिद्धे परमेश्वरस्य अगतिकत्वात्कर्तृत्वं पतितं प्रकृत्यामिति बोध्यम्। 'अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीगूँ सरूपा'मित्यादयस्तु साक्षात्कर्तृत्वं बोधयन्ति प्रकृत्या इति वेद्यम्।

ननु यद्येवं जगज्जन्मादिहेतुत्वं प्रकृतेः स्यात्तर्हि 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतेः प्रकृतेरेव लक्षणं स्यात्, न चेष्टापत्तिः- 'ईक्षतेर्नाशब्द'मिति प्रकृतेस्तन्निरासात्। 'मूलप्रकृतिरविकृति'-रिति साङ्ख्यशास्त्रस्यैव सिद्धान्तत्वप्रसङ्गाच्च। उक्तं हि तत्र प्रकृतेर्जगत्कर्तृत्वं पुरुषस्यौदासीन्यं चेति चेत्, मैवम्—ईश्वराधिष्ठितप्रकृतेः प्रकृतिसंसृष्टेश्वरस्य वा जगज्जन्मादिहेतुत्वं भवितुमर्हति, न तु केवलप्रकृतेः, केवलेश्वरस्य वा- तस्या जडत्वात्तस्य चिन्मात्रत्वाच्च। न हि जडायास्सङ्कल्परूपं ज्ञानं सम्भवति; नापि चिन्मात्रस्य मायावृत्तिरूपस्सङ्कल्पस्सम्भवति।

तत्र साङ्ख्याः केवलप्रकृतेरेव जगद्धेतुत्वं वदन्तीति नास्माकं साङ्ख्यमतप्रवेशदोषः; केव-लेश्वरस्य सृष्ट्यादिहेतुत्वं वयं निषेधाम इति न श्रुतिविरोधश्च। यतो वेति श्रुतिर्हि मायिनमीश्वरं जगद्धेतुं ब्रूते। न च मायाद्वारा ब्रह्मापि जगत्कारणं ब्रूते श्रुतिरिति वाच्यं, तस्यास्माकमिष्टत्वात्। ब्रह्मणि केवले सृष्ट्यादिक्रियाऽयोगादेव हि मायाया द्वारकारणत्वमभ्युपेयते।

तस्मादीश्वरप्रकृत्योरविवेके एव ईश्वरस्य जगत्कर्तृत्वं, यथा देहदेहिनोरविवेके एव देहिनो गन्तृत्वम्। सति तु विवेके ईश्वरो नैव कर्ता, यथा देही नैव गन्ता। प्रकृतिरेव कर्त्री, यथा देह एव गन्ता इति स्थितम्।

न च मायावच्छिन्नचैतन्यस्येश्वरत्वात्प्रकृतिविवेकेन सिद्ध्येदीश्वर एवेति वाच्यं, मायाव-च्छिन्नस्वरूपेश्वरत्वस्यासिद्धावपि चैतन्यरूप ईश्वरस्सिद्ध एवेति, ईश्वरस्य स्वस्वरूपं हि चैतन्यमात्रमेव। मायावच्छिन्नत्वं स्वाध्यासिकरूपमेव- मायायाश्चैतन्ये अध्यस्तत्वात्। जीवस्यापि चैतन्यमेव स्वस्व-रूपम्। अन्तःकरणावच्छिन्नत्वं त्वाध्यासिकमेव- अन्तःकरणस्य चैतन्येऽध्यस्तत्वात्।

एवं चैतन्यमात्ररूपत्वादेव जीवेश्वरयोरैक्यं ब्रुवन्ति श्रुतयः तत्त्वमस्यादयः। अत एवेहापि एको देव इत्युक्तम्। एक एव हि जीवेश्वरयोरात्मा चैतन्यलक्षण आत्मा हि स्वरूपम्।

तस्माच्चैतन्यलक्षणस्यात्मनोऽकर्तृत्वेनाविक्रियत्वादुदासीनवदासीन एवेश्वरः। जगत्कर्तृत्वं तु प्रकृतिगतं प्रकृतिसङ्गादात्मनीश्वरेऽध्यस्तमेवेति स्थितमीश्वरस्याविक्रियत्वमात्मनः।

श्लोकस्योत्तरार्धं व्याख्याति—हेतुनेति, अध्यक्षत्वेनेति। ईश्वरस्याध्यक्षत्वेनेत्यर्थः। इदानीं जगद्व्यक्तात्मकं स्फुटस्वरूपं, प्रलये त्वस्फुटत्वादव्यक्तात्मकम्। अनेन च प्रलयेऽपि न नाशः सम्भवति भूतग्रामस्येति सूचितं- सूक्ष्मरूपेण तदानीमपि सत्त्वादिति।

विपरिवर्तते विशेषेण परिवृत्तिं परिभ्रमणं प्रतिपद्यते। व्यक्तावस्थं जगदव्यक्तावस्थं भवति; तच्च पुनर्व्यक्तावस्थं भवतीत्येवं कुलालचक्रवज्जगत्परिभ्रमतीत्यर्थः।

रसचराचरं व्यक्ताव्यक्तात्मकं विपरिवर्तते सर्वावस्थासु । दृशिकर्मत्वापत्तिनिमित्ता हि जगतस्सर्वा प्रवृत्तिः 'अहमिदं भोक्ष्ये, पश्यामीदं, शृणोमीदं, सुखमनुभवामि, दुःखमनुभवामि, तदर्थमिदं करिष्ये, इदं ज्ञास्यामि' इत्याद्या अवगतिनिष्ठा अवगत्यवसानैव । 'यो

केवलाया प्रकृतेर्जडत्वेन जगद्विपरिवर्तनासम्भवात्साक्षिण्यध्यक्षे मयि प्रकृतिमधितिष्ठति सति प्रकृतिर्जगद्विपरिवर्तयतीति परमार्थः ।

चित्प्रतिबिम्बसहिता बुद्धिर्यथा जडापि चेतनीभूय पश्यामि शृणोमीत्येवं व्यवहरति तद्वच्चित्प्रतिबिम्बसहिता प्रकृतिर्जडापि चेतनीभूय सृष्ट्यादिव्यवहारं करोतीति भावः । समष्ट्यज्ञानं प्रकृतिः, व्यष्ट्यज्ञानं तु बुद्धिः । अत एव सर्वव्यापिनी प्रकृतिः, परिच्छिन्ना तु बुद्धिरिति विवेकः ।

एतेनेश्वरस्याध्यक्षत्वं नाम प्रकृतौ प्रतिफलनमिति सिद्धम् । ईश्वरे प्रकृत्या प्रतिफलस्यैव प्रकृतेस्सृष्ट्यादिसामर्थ्यसम्भवस्योक्तत्वात् ।

यद्वा अध्यक्षत्वं प्रेरकत्वं, तच्च लोहायस्कान्तन्यायेनेति नेश्वरस्य विकारप्रसङ्गः । इदं च प्रेरणमन्तःप्रवेशपूर्वकमेव 'यः प्रकृतौ तिष्ठन्नि'त्याद्यन्तर्यामिब्राह्मणात् । इदं चेश्वरस्य प्रकृत्यामन्तःप्रवेशनं प्रतिबिम्बरूपेणैव स्वस्वरूपेण तु प्रवेशात्प्रागेव सिद्धत्वात् । परिपूर्णं हि चैतन्यं सर्वव्यापि । एवं च ईश्वरः प्रतिबिम्बरूपेण प्रकृत्या प्रविश्य तां सृष्ट्यादिषु नियमयतीत्यध्यक्षस्तस्या इति फलितम् ।

अथ वा अध्यक्षत्वं प्रभुत्वं; प्रकृतिं सर्वेश्वरीं स्ववशीकृत्य राज्यश्रियमिव राजा तया सृष्ट्यादिलीलां निर्वर्तयतीति प्रकृत्यध्यक्ष ईश्वरः ।

यद्वा अध्यक्षयति प्रत्यक्षीकरोति सर्वं स्वत एवेत्यध्यक्षस्साक्षी, ईश्वरो हि मायया सर्वं साक्षात्करोति, मायां तु स्वरूपभूतचैतन्येनैव । अज्ञानस्य साक्षिप्रत्यक्षसिद्धत्वात् । सुषुप्तावज्ञानस्य साक्षिणानुभूयमानत्वादिति सिद्धमीश्वरस्य मायासाक्षित्वम् ।

एवमीश्वरे साक्षित्वेन तिष्ठति सत्येव माया जगद्व्यापारं विधत्ते, यथा राजनि साक्षित्वेन तिष्ठति सति सेना युद्धव्यापारं विधत्ते तद्वत् । जडत्वेन स्वतोऽसमर्थाया मायाया ईश्वरसाक्षात्कारवशाच्चैतन्यप्रवेशेन सृष्ट्यादिसामर्थ्यसिद्धिरिति भावः ।

अथ वा अध्यक्षत्वमधिष्ठातृत्वं; जडापि प्रकृतिरीश्वराधिष्ठानवशाज्जगद्विधत्ते; यथा जडोऽपि देहो जीवाधिष्ठानवशाद्गमनादिकं कर्म, यथा वा जडोऽपि खड्गो भटाधिष्ठानवशात् छेदनमिति ।

ननु प्रकृतेर्जगद्व्यापारं प्रतीश्वरस्याध्यक्षत्वं निमित्तमस्तु नाम, जगतो विपरिवर्तनं प्रति कथं तन्निमित्तमत आह—सर्वेति । सर्वासु बाल्यादिषु जन्मादिषु सुखित्वादिषु चावस्थासु । दृशिर्दर्शनक्रिया तन्निरूपितकर्मत्वं दृशिकर्मत्वं दृश्यत्वं तस्यापत्तिः प्राप्तिः सा निमित्तं यस्यास्सा दृशिकर्मत्वापत्तिनिमित्ता; हि प्रसिद्धौ । जगतस्सर्वावस्थासु सर्वा प्रवृत्तिर्दृशिकर्मत्वापत्तिनिमित्ता हीत्यन्वयः । प्रवृत्तिमेवाभिनीय दर्शयति—अहमिदं भोक्ष्य इत्यादिना । इत्याद्येत्याद्यपदाद्गमनादानविसर्गादिक्रियान्तरसंग्रहः । अस्याश्च जगत्प्रवृत्तेरात्मैव निष्ठा पर्यवसानं चेत्याह—अवगतिनिष्ठा अवगत्यवसानेति ।

अस्याध्यक्षः परमे व्योमन्' इत्यादयश्च मन्त्रा एतमर्थं दर्शयन्ति। ततश्च एकस्य देवस्य अवगतिः ज्ञानमात्मा- तस्यैव सर्वाधारत्वात्सर्वशेषित्वाच्चेति भावः। तदेवमवगतिनिष्ठत्वादवगत्यवसानत्वाच्च जगत्प्रवृत्तेरवगतिकर्मत्वापत्तिनिमित्तकत्वमित्यवगतेरेव जगद्विपरिवर्तनं प्रति हेतुत्वादीश्वरस्याध्यक्षत्वं जगद्विपरिवर्तनं प्रति निमित्तमेव। अवगतेरेवेश्वरत्वादध्यक्षत्वाच्चेति सिद्धम्।

अयमाशयः—ब्रह्मादिस्तम्बपर्यन्तचराचरात्मकजगत्पदवाच्यभूतग्रामस्य सर्वापि प्रवृत्तिश्चेतनपरतन्त्रैव- जडस्य तस्य स्वतः प्रवृत्त्ययोगात्। जडस्य चेतनपारतन्त्र्यं च चेतनकटाक्षाधीनशक्तिमत्त्वं- स्वत एव शक्तिमत्त्वे पारतन्त्र्यायोगात्। तथा च चेतनेनात्मना दृश्यमानस्सन्नेव भूतग्रामोऽहमिदं भोक्ष्य इत्यादिकं व्यवहारं करोति, न तु स्वतस्तस्याचेतनत्वात्। तस्मादचेतनानां देहेन्द्रियान्तःकरणानां भोजनदर्शनमननादिप्रवृत्तीः प्रति चेतनात्मदृश्यमानत्वमेव निमित्तम्। इदमेव चेतनकर्तृकमचेतनकर्मकं दर्शनं नियमनमिति प्रेरणमिति च वदन्ति। यस्मादेवमचेतनस्य जगतस्सर्वासु प्रवृत्तिषु चेतनकर्तृकं दर्शनं निमित्तं तस्माज्जगद्विपरिवर्तनं प्रत्यपि तदेव निमित्तं साक्षित्वं च साक्षाद्दर्शनमेव। यद्वा विपरिवर्तत इत्यस्य विविधं प्रवर्तत इत्यर्थः। अन्यत्तुल्यम्। एवं जगत्प्रवृत्तेश्चेतनकर्तृकदर्शनहेतुकत्वाचेतनस्येश्वरस्याध्यक्षत्वं जगत्प्रवृत्तिषु निमित्तं भवति, यथा प्रकृतिप्रवृत्तिष्विति स्थितम्।

एवमीश्वरस्य जगत्प्रकृत्योरध्यक्षत्वे श्रुतिं प्रमाणयति—यो अस्याध्यक्ष इति। अस्य जगतस्सकारणस्येत्यर्थः। अध्यक्षस्साक्षी। परमे व्योमन् परमाकाशे स्थित इति शेषः। व्योमन्नित्यत्र 'सुपां सुलुक्' इति सप्तम्यालुक्। स्वे महिम्नि व्यवस्थित इतिवत्परमव्योमरूपस्यापि परमात्मनः परमव्योमस्थितिरुक्ता। न तु परमेश्वरस्सर्वाधारो निराधारश्च कुत्रचित्त्वेतराधारे स्थातुमुचितः। यद्वा अव्याकृतं परमं व्योम- 'एतस्मिन् खल्वक्षरे गार्ग्याकाश' इति श्रुतेः।

अथ वा हृदयाकाश एव परमव्योम- 'यो वै स बहिर्धा पुरुषादाकाशो यो वै सोऽन्तः पुरुष आकाशो योऽयमन्तर्हृदय आकाश' इति श्रुते.। ईश्वरस्य प्रकृतिबुद्ध्यन्तस्स्थत्वं चान्तर्यामिब्राह्मणप्रसिद्धम्। मायावच्छिन्नचैतन्यलक्षणो हीश्वर ईश्वरत्वेन रूपेण प्रकृतौ, प्रत्यक्त्वेन रूपेण बुद्धौ च वर्तत इति सिद्धान्तात्।

ननु यो बुद्धौ स्थितः प्रत्यगात्मा स न जगतोऽध्यक्षः, किं तु स्वोपाधिबुद्धीन्द्रियादीनामेव— अपरिपूर्णत्वात्, पूर्णो हि परमात्मा; परिच्छिन्नस्तु प्रत्यगात्मा; किं चास्ति प्रत्यक्परयोर्महान् भेदः— प्रत्यक्त्वाप्रत्यक्त्वरूपस्सद्वितीयत्वाद्वितीयत्वरूपश्च- तदुक्तं वाक्यवृत्तौ- 'आलम्बनतया भाति योऽस्मत्प्रत्ययशब्दयोः। अन्तःकरणसम्भिन्नबोधस्स त्वंपदाभिध. ॥ मायोपाधिर्जगद्योनिस्सर्वज्ञत्वादिलक्षणः। पारोक्ष्यशबलस्सत्याद्यात्मकस्तत्पदाभिधः ॥ प्रत्यक्परोक्षतैकस्य सद्वितीयत्वपूर्णते। विरुद्ध्येते यतस्तस्माल्लक्षणा सम्प्रवर्तते ॥' इति। एवं विरोधादेव हि तत्त्वमस्यादिस्थले लक्षणास्वीकारः। तथोक्तं तत्रैव 'मानान्तरविरोधे तु मुख्यार्थस्य परिग्रहे। मुख्यार्थेनाविनाभूते प्रतीतिर्लक्षणोच्यते ॥ तत्त्व-

सर्वाध्यक्षभूतचैतन्यमात्रस्य परामार्थतः सर्वभोगानभिसम्बन्धिनोऽन्यस्य चेतनान्तरस्याभावे

मस्यादिवाक्येषु लक्षणा भागलक्षणा । सोऽयमित्यादिवाक्यस्थपदयोरिव ना परा' इति । तस्मान्न प्रत्यगात्मन परमात्मधर्मो जगदध्यक्षत्वं, नापि परमात्मनो बुद्धिस्थत्वमिति चेत् , मैवम्—यस्साक्षादपरोक्षाद्ब्रह्मेत्यपरोक्ष एव परमात्मा । 'येन सर्वमिदं तत'मिति गीतावचनात्परिपूर्ण एव प्रत्यगात्मा; बुद्धौ चैतन्यस्याभिव्यक्तत्वा दुबुद्ध्यवच्छिन्नमित्युच्यते चैतन्यं न तु बुद्धिपरिच्छिन्नत्वादन्यथा परिच्छिन्नत्वे जडत्वानित्यत्वाद्यापत्ते. घटादिवदिति ।

तस्मादेक एवात्मा जगद्धेतुत्वादिधर्मवैशिष्ट्येन परमात्मेति, बुद्ध्यभिव्यक्तत्वादिधर्मवैशिष्ट्येन प्रत्यगात्मेति चोच्यत इति कृत्वा य परमात्मा स एव बुद्धिस्थिन , यो बुद्धिस्थिनः प्रत्यगात्मा स एव जगदध्यक्ष परमात्मा चेति स्थितम् ।

न च वाक्यश्रुतिविरोध- अज्ञा हि प्रत्यगात्मानं परिच्छिन्नं परमात्मानं परोक्षं च मन्यन्त इति तद्दृष्ट्या तद्वाक्यप्रणयनात् । कथमन्यथा तैरेवाचार्यैरुपनिषद्भाष्यारम्भे याथात्म्यं चात्मनश्शुद्धत्वापापविद्धत्वैकत्वनित्यत्वाशरीरत्वसर्वगतत्वादीन्युच्येत ।

नच परमार्थतोऽभेदेऽपि यावद्व्यवहारमस्त्येवौपाधिको भेदो जीवेश्वरयोरिति वाच्यं, औपाधिकभेदस्योपाधिगतत्वेनात्मगतत्वासम्भवात । कथमन्यथा 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठ'तीति ब्रूयात् ' ईश्वरो हि व्यवहारदशाया प्रत्यग्रूपेण भूतानां हृद्देशे तिष्ठतीति हि तदर्थः । परमार्थदशाया भूतादेरेवाभावात् । तस्माद्यावद्व्यवहारमपि न प्रत्यगात्मपरमात्मभेद. । ईश्वरस्यैव प्रत्यगात्मत्वात् ।

न च निरीश्वरसाङ्ख्यमतप्रवेशापत्तिर्व इति वाच्यं, जगद्धेतोरीश्वरस्याभ्युपगतत्वादस्माभि. । न हि बुद्धिसृष्टेः प्राग्बुद्ध्यभिव्यक्तत्वलक्षणं प्रत्यक्त्वमस्ति परमात्मनः, येन प्रत्यगात्मैक एवास्ति, न परमात्मेत्युच्येत साङ्ख्यैरिवास्माभिः ।

नापि द्वैतमतप्रवेश —परमात्मनोऽन्य. प्रत्यगात्मेत्यनभ्युपगमात् । अत एव 'एकमेवाद्वितीयं ब्रह्म, स आत्मा' इत्यादिश्रुतिभिरात्मभेदो निषिद्ध । न केवलं श्रुतिभिर्युक्तिभिश्चात्मभेदो न स्यात्यति ।

तथाहि- किमात्मभेद केनापि ज्ञायते ? उत न ? आद्ये- किमात्मना ? उतानात्मना ? नात्मना—आत्मद्वयस्यात्मभेदस्य श्वेतपीतादेरिवात्मधर्मत्वायोगात् , नानात्मना- तस्य जडत्वात् । यदि न ज्ञायते तर्हि शशशृङ्गवन्नैवास्ति । किंच किमात्मभेद आत्मनो भिन्न उताभिन्न ? आद्ये- अनात्मधर्म एव सः । द्वितीये- आत्मव्यतिरेकेण निरूपणासम्भवाद्भेदस्यात्मन एकत्वमेव स्यात् । न च आत्मानो बहव , तथा च एकात्मभेद अन्यात्मना न गृह्यत इति वाच्यं, 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुते । आत्मभेदं विना आत्मबहुत्वस्यासिद्धेश्च । तदिदं सर्वमभिप्रेत्याह—एकस्येति ।

सर्वाध्यक्षभूतेति । साक्षित्वस्यापि परमार्थत आत्मन्यसम्भवादुक्तं भूतेति । साक्षिवत् स्थितमित्यर्थ. । चैतन्यमेव चैतन्यमात्रम् । सर्वभोगानभिसम्बन्धिन सर्वभोगसम्बन्धरहितस्य । असङ्गत्वाद्वितीयत्वाचेति भाव ।

भोक्तुरन्यस्याभावात् किं निमित्ता इयं सृष्टिरित्यत्र प्रश्नप्रतिवचने अनुपपन्ने, 'को अद्धा वेद क इह प्रवोचत्, कुत आजाता कुत इयं विसृष्टिः' इत्यादिमन्त्रवर्णेभ्यः। दर्शितं च भगवता—'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव' इति ॥१०॥

एवं मां नित्यशुद्धबुद्धमुक्तस्वभावं सर्वज्ञं सर्वजन्तूनामात्मानमपि सन्तम्—

अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम् ॥११॥

अवजानन्तीति। अवजानन्ति अवज्ञां परिभवं कुर्वन्ति मां मूढा अविवेकिनः मानुषीं मनुष्यसम्बन्धिनीं तनुं देहमाश्रितं, मनुष्यदेहेन व्यवहरन्तमित्येतत्। परं प्रकृष्टं भावं परमात्मतत्त्वमाकाशकल्पमाकाशादप्यन्तरतममजानन्तो मम भूतमहेश्वरं सर्वभूतानां महान्तमीश्वरं स्वात्मानम् ॥११॥

---

नन्वेवंविधस्येश्वरस्य सृष्टिर्न स्वार्था- स्वस्यासङ्गत्वादविक्रियत्वाच्च, नापि परार्था- अन्यस्याभावादित्याक्षिपति—ततश्चेत्यादिना। भोक्तृत्वस्य चेतनधर्मत्वेनाचेतनस्य भोक्तृत्वायोगात्। चेतनस्य चैकत्वेन चेतनान्तराभावात्तस्य च चेतनस्याविक्रियत्वेन भोक्तृत्वायोगात्कथेयं सृष्टिरिति मन्दुराशयः। इत्यत्र- इत्यस्मिन्नाक्षेपे।

परिहरति—प्रश्नप्रतिवचनेऽनुपपन्ने इति। तत्र श्रुतिमेव प्रमाणयति—को अद्धेति। अद्धा साक्षात्को वेद, न कोऽपीत्यर्थः। इहास्मिन्नर्थे कः प्रवोचत् को वदेन्न कोऽपीत्यर्थः। आ इत्याश्चर्ये। इयं विसृष्टिर्विसर्गः कुतो जाता कस्माद्धेतोर्जाता, कुतः कस्मादुपादानादिति। यद्वा कुतः कुत इति सम्भ्रमादौ द्विरुक्तिः। ईश्वरस्य परिपूर्णकामस्याविक्रियस्य प्रपञ्चसृष्टौ निमित्तं कोपि न वेदेति श्रुत्यर्थः।

नच लीलैव प्रयोजनमिति वाच्यं, चिन्मात्रे लीलाया अप्ययोगात्। एवं कर्तुरीश्वरस्य प्रपञ्चसृष्टौ प्रयोजनाभावादपि मायामय्येव सृष्टिरेष्टव्या। सर्वमप्यसङ्गतं मायया हि सङ्गतमिव भवति।

उक्तार्थे गीतां प्रमाणयति—अज्ञानेनेति। कृत्स्नजगदाकारपरिणतमायया आत्मानात्मविवेकज्ञानमावृतं, तेन हेतुना आत्मस्वरूपविज्ञानाभावाज्जन्तवो मुह्यन्ति। आत्मानात्मतादात्म्याध्यासं प्रतिपद्यानात्मगतं कर्तृत्वादिकमात्मन्यारोप्य आत्मा कर्तेति मोहं प्रपद्यन्ते। वस्तुतस्त्वकर्ताऽविक्रिय एवात्मेश्वरः। सृष्ट्यादिव्यापारस्तु प्रकृत्या एव। दर्शनश्रवणादिव्यापारस्तु जगत एव। जगतः प्रकृतेश्चेयं प्रवृत्तिस्सर्वापीश्वरकटाक्षलब्धैवेत्यनवद्यम् ॥१०॥

अवजानन्तीति। नित्यमविनाशिनं भूतग्रामस्तु निराशीति भावः। शुद्धं निर्मलं बुद्धं ज्ञातारम्। मूढाः मम भूतमहेश्वरं परं भावमजानन्तस्सन्तः मानुषीं तनुमाश्रितं मामवजानन्ति। आकाशकल्पमाकाशतुल्यं तद्वन्निर्लेपमित्यर्थः। आकाश एव किं न स्यादत आह—आकाशादपीति। आकाशमभिव्याप्य वर्तमानमित्यर्थः। सर्वभूतानामीश्वर आत्मा परमपुरुषः परमार्थसत्यः श्रीनारायण एवार्थ

वासुदेव , न तु मनुष्यमात्र इत्येव रूप मत्तत्त्वमविद्वासो मूढा मां मनुष्यं मत्वा तिरस्कुर्वन्तीति पर्यवसन्नोऽर्थे । मनुष्योऽयं गोपोऽयं यादवोऽयमित्येवमवज्ञा कुर्वन्तीति यावत् ।

अत्र मानुषीं तनुमित्युपलक्षणं- तेन क्रिमिकीटपक्षिपश्वादिषु सर्वेषु देहेषु सन्तमात्मानमीश्वर श्रीकृष्णं पर ब्रह्माविदित्वा जीव मत्वा तत्रापि क्रिम्यादिरूप मत्वा क्रिम्यादिदेहानामात्मनश्च तादात्म्याध्यासेन क्रिमिरयमात्मा कीटोयमात्मा- इत्यादिविधया स्वात्मानमेव तिरस्कुर्वन्ति आत्मानात्मविवेकशून्या मूढा इति सिद्धम् ।

ततश्च विवेकिभिरात्मानमनात्मभ्यो विविच्य सच्चिदानन्देश्वररूपतया प्रतिपत्तव्यमित्युपदिष्टप्रायम् ।

यत्तु रामानुजः—असक्तं तेषु कर्मस्वित्यत्र तत्र वैषम्ये प्रयोजकत्वरूपसम्बन्धरहितमिति, मयाध्यक्षेणेत्यत्र सत्यसङ्कल्पेन मयाध्यक्षेणेक्षितेति, पश्य मे योगमैश्वरमित्यत्र मम वसुदेवसूनोस्सत्यसङ्कल्पत्वं नैर्घृण्यादिदोषरहितत्वमित्यादिकं योग पश्येति, प्रकृतश्लोके च भूतमहेश्वर मा मनुष्यतन्वाश्रयणमात्रेण ममापारकारुण्यौदार्यसौशील्यवात्सल्यादिनिबन्धनं मनुष्यत्वसमाश्रयणलक्षणमिम पर भाव मजानन्तो मूढास्तिरस्कुर्वन्तीति चोचत् ।

तदेतत्सर्वं मन्दम्— तेषु कर्मस्विति शब्दद्वयात्तत्र वैषम्य इत्यर्थावगमो न सम्भवतीति सर्व विदितम् । नच तेषु कर्मसु यद्वैषम्य तत्रासक्तमित्यर्थ इति वाच्य, वैषम्यपदाध्याहारगौरवात्तस्याप्रमाणत्वाच्च । सर्वान्तर्यामिण ईश्वरस्य विषमकर्मगतवैषम्यप्रयोजकत्वस्यापि सम्भवात्कथं तत्सम्बन्धराहित्यसिद्धि ।

तथा सत्यसङ्कल्पेनेक्षिता प्रकृतिरित्यप्ययुक्त प्रकृतिं विना ईश्वरस्य सङ्कल्पायोगात् । मायावृत्तिर्खलु सङ्कल्प - यथा मनोवृत्ति ।

तथा वसुदेवसूनोर्ममेत्यप्ययुक्तं देहस्यैव वसुदेवसूनुत्वादात्मनश्च तद्विलक्षणत्वादीश्वरस्यात्मत्वात्कृष्णस्य विवेकेन आत्मनि वसुदेवसूनुदेहतादात्म्याभिमानस्यायुक्तत्वात्प्रकृतानुपयोगाच्च ।

तथा मामित्यस्य व्यवहितेन भूतमहेश्वरमित्यनेन सम्बन्धकल्पनमन्याय्यं- परं भावमित्यस्य मनुष्यत्वसमाश्रयणलक्षण भावमित्यर्थवर्णनमप्ययुक्त मनुष्यत्वसमाश्रयणस्य परमावत्वायोगात् । अप्राकृत दिव्यविग्रहसमाश्रयणं हि परो भाव । अन्यथा अस्मदादीनामपि मनुष्यत्वसमाश्रयणस्य परमावत्वापत्ते । नचेश्वरीयमनुष्यत्वसमाश्रयणस्य वात्सल्यादिनिबन्धनत्वात्परमावत्वमिति वाच्यं, अशरीरस्येश्वरस्य वात्सल्यादिनापि मनुष्यत्वाश्रयणायोगात् । मनुष्यत्व हि देहाश्रयम् । ईश्वरस्य मनुष्यदेहाश्रयणमपि न परमाव , किंतु मायिकमाव एव । सच्चिदानन्दरूपत्वमेव हीश्वरस्य परो भाव । अन्यत्सर्वमपरो भाव एव अनुत्कृष्टत्वात् ।

नचेश्वरस्य मायया मनुष्यदेहाश्रयणं परो भाव इति वाच्यं, परमव्योमनिलयेश्वरीयाप्राकृतदेहस्यापरभावत्वापत्ते । मायया सर्वचराचरदेहजालाश्रयस्येश्वरस्य मनुष्यदेहाश्रयणमात्र कथ वा परो भावो भवितुमर्हति । मानुषीं तनुमाश्रितमिति कण्ठोक्तस्य मनुष्यतन्वाश्रयणस्य पर भावमिति शब्दाभ्यां पुनर्वचनस्य व्यर्थत्वात्क्लिष्टत्वाच्च पूर्वोक्तार्थपरामर्शकस्य तदिदमाद्यन्यतमशब्दस्याभावाच्च मूले इति ॥११॥

ततश्च तस्य ममावज्ञाभावनेन हताः ते वराकाः। कथम्?—

मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः।
राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥१२॥

मोघेति। मोघाः वृथा आशा आशिषः येषां ते मोघाशाः, तथा मोघकर्माणः यानि चाग्निहोत्रादीनि तैरनुष्ठीयमानानि कर्माणि तानि च, तेषां भगवत्परिभवात्, स्वात्मभूतस्य अवज्ञानात्, मोघान्येव निष्फलानि कर्माणि भवन्तीति मोघकर्माणः। तथा मोघज्ञानाः मोघं निष्फलं ज्ञानं येषां ते मोघज्ञानाः. ज्ञानमपि तेषां निष्फलमेव स्यात्। विचेतसः विगतविवेकाश्च ते भवन्तीत्यभिप्रायः। किञ्च ते भवन्ति राक्षसीं रक्षसां प्रकृतिं स्वभावं आसुरीं असुराणां च प्रकृतिं मोहिनीं मोहकरीं देहात्मवादिनीं श्रिता आश्रिताः। 'छिन्धि, भिन्धि, पिब, खाद, परस्वमपहर' इत्येवं वदनशीलाः क्रूरकर्माणो भवन्तीत्यर्थः। 'असुर्या नाम ते लोका' इति श्रुतेः॥१२॥

ये पुनः श्रद्धाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्तास्ते—

महात्मानस्तु मां पार्थ! दैवीं प्रकृतिमाश्रिताः।
भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्॥१३॥

महात्मान इति महात्मानोऽक्षुद्रचित्ता मामीश्वरं पार्थ! दैवीं देवानां प्रकृतिं शमदमदयाश्रद्धादिलक्षणां आश्रितास्सन्तो भजन्ति सेवन्तेऽनन्यमनसोऽनन्यचित्ताः, ज्ञात्वा भूतादिं भूतानां वियदादीनां प्राणिनां चादिं कारणमव्ययम्॥१३॥

---

मोघाशा इति। अवज्ञाभावनं तिरस्कारकरणम्। वराका नीचाः। भगवदनुग्रहाभावे जन्तूनामाशीःप्राप्तिरेव तावन्न भवेत्, कथंचित्तत्प्राप्तावपि वैयर्थ्यमेव तासां स्यादित्याह—मोघाशा इति। भगवत्परिभवादिति पदं स्वयमेव व्याख्याति—स्वात्मभूतस्य चावज्ञानादिति। भगवतः स्वात्मभूतस्येश्वरस्य परिभवादवज्ञानादिति। ज्ञानं शास्त्रार्थपाण्डित्यम्। न स्वात्मानात्मविवेकः। विचेतस इति विवेकाभावस्य वक्ष्यमाणत्वात्। राजसतामसभेदेन राक्षसासुरप्रकृत्योर्भेदः। यद्वा एकैव प्रकृती राक्षसानसुरांश्चाश्रित्य वर्तत इति तदर्थमुभयग्रहणम्। प्रकृतिमेव दर्शयति—छिन्धीत्यादिना। छिन्धि-भिन्धि प्राणिनश्छेदय भेदय पिब मदिरामिति रक्तमिति वा शेषः। खाद भक्षय मांसमिति शेषः। परस्वं परकीयं धनम्। वदनं भाषणं शीलं स्वभावः येषां ते वदनशीलाः। क्रूराणि लोकद्रोहकारीणि कर्माणि येषां ते क्रूरकर्माणः। एतेन राक्षसासुरप्रकृतिसम्मूढानामेव जन्तूनां भगवत्परिभव इति सिद्धम्। भगवदवज्ञाकराः प्राणिनः। मोघाशाः मोघकर्माणः मोघज्ञाना विचेतसश्च भवन्ति राक्षसीमासुरीं च प्रकृतिं श्रिता भवन्त्येवेत्यन्वयः॥१२॥

महात्मान इति। हे पार्थ! महात्मानस्तु दैवीं प्रकृतिमाश्रितास्सन्तोऽनन्यमनसो भूत्वा भूतादिमव्ययं मां ज्ञात्वा भजन्ति। मामीश्वरं स्वात्मभूतमिति भावः। 'आत्मन आकाशस्सम्भूत'

कथम् ?—

सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥१४॥

सततमिति । सततं सर्वदा भगवन्तं ब्रह्मस्वरूपं मां कीर्तयन्तः, यतन्तश्च इन्द्रियोपसंहारशमदमदयाहिंसादिलक्षणैर्धर्मैः प्रयतन्तश्च, दृढव्रता दृढं स्थिरमचाल्यं व्रतं येषां ते दृढव्रता नमस्यन्तश्च मां हृदयेशयमात्मानं भक्त्या नित्ययुक्तास्सन्त उपासते सेवन्ते ॥१४॥

केन केन प्रकारेण उपासत इत्युच्यते—

ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ।
एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥१५॥

ज्ञानेति । ज्ञानयज्ञेन ज्ञानमेव भगवद्विषयं यज्ञः तेन ज्ञानयज्ञेन, यजन्तः पूजयन्तो मामीश्वरं चाप्यन्ये अन्यामुपासनां परित्यज्योपासते । तच्च ज्ञानं- 'एकत्वेनैकमेव परं ब्रह्म' इति परमार्थदर्शनेन यजन्त उपासते; केचिच्च पृथक्त्वेन- आदित्यचन्द्रादिभेदेन स एव भगवान् विष्णुरवस्थित इत्युपासते, केचित्- 'बहुधा अवस्थितः स एव भगवान् सर्वतोमुखः विश्वतोमुख'मिति तं विश्वरूपं सर्वतोमुखं बहुधा बहुप्रकारेणोपासते ॥१५॥

---

इत्यादिश्रुतिभ्य आत्मनो भूतादित्वम् । न व्येति विक्रियत इत्यव्ययः, तम् । आत्मैवेश्वरो भूतादिरव्ययश्चेति ज्ञात्वा स्वात्मानं महात्मानो भजन्तीत्यर्थः ॥१३॥

सततमिति, नमस्यन्त इति । नमस्कुर्वन्तः । नन्वादित्यचन्द्रादिरूपस्येश्वरस्य नमस्कार्यत्वमस्तु नाम, कथं पुनरात्मन इति चेदुच्यते—परोक्षमीश्वरं यथा द्वैतिनो नमस्कुर्वन्ति तद्वदद्वैतिन आत्मानमिति । भक्त्या नित्ययुक्तास्सर्वदा सहिताः सदा भक्तियुक्ता इत्यर्थः । यद्वा नित्ययुक्ता अनवरतसमाहिताः । भक्तिः प्रीतिः । आत्मन उपासनं नाम- आत्मस्वरूपानुसन्धानमेवेति बोध्यम् ॥१४॥

ज्ञानेति । अन्ये मोघाशेति श्लोकोक्तेभ्य इतरे । महात्मान इत्यर्थः । मां ज्ञानयज्ञेन यजन्तस्सन्त उपासतेऽपि च अपिचेत्यस्य एवेत्यर्थः । तत्र केचिदेकत्वेन मामुपासते, परे पृथक्त्वेन मामुपासते, इतरे विश्वतोमुखं मामुपासते । एवं महात्मानो मां बहुधोपासते- इत्यन्वयः । ईश्वरं चापीत्यनेनान्योपासनायाः भावत्वादाह—अन्यामुपासनां परित्यज्येति । ईश्वरमेवेत्यर्थः । नन्वीश्वरमन्यं चेति । अन्योपासना चेह यक्षरक्ष पिशाचाद्युपासनेति बोध्यम् । क्षुद्रकामार्थं हि ते तैरुपास्यन्ते क्षुद्रैः । तथेश्वरविषयं ज्ञानं बहुविधमिति शेषः । एवं ज्ञानस्य बहुविधत्वाद्ज्ञानयज्ञेन यजनं च बहुविधमिति भावः ।

तत्र एकमेव परं ब्रह्मेति परमार्थदर्शनलक्षणः प्रधानः कश्चिद्ज्ञानयज्ञः । तत्रोत्तमानां ज्ञानिनामधिकारः, एकमेव ब्रह्म चन्द्रादित्यादिदेवतारूपेण पृथक्त्वेन स्थितमिति यद्ज्ञानं तल्लक्षणोऽन्यो ज्ञान-

यज्ञः। तत्र मध्यमानामधिकारः। एकमेव ब्रह्म विश्वरूपेण स्थितमिति यद्ज्ञानं तल्लक्षणोऽपरो ज्ञानयज्ञः। तत्र मन्दानामधिकारः। विश्वरूपध्यानस्य मन्दाधिकारिविषयत्वात्।

यत्तु रामानुजः—महात्मानस्ते भूतादिमव्ययं वाङ्मनसागोचरनामकर्मस्वरूपं परमकारुणिकतया साधुपरित्राणाय मनुष्यत्वेनावतीर्णं मां ज्ञात्वेति, आत्मानं महात्मव्यवसायिनो मामुपासत इति, बहुधा पृथक्त्वेन विश्वतोमुखं जगदाकारेण विश्वप्रकारमवस्थितं मामेकत्वेनोपासत इति च, तदसर्वं मन्दम्—महात्मानः कृष्णावतारमुपासत इत्युक्तौ रामावतारोपासकानां क्षुद्रात्मत्वं स्यात्। यदि महात्मानो रामकृष्णादिमनुष्यावतारमुपासत इत्युच्यते तर्हि मत्स्याद्यवतारोपासकानां क्षुद्रात्मत्वं स्यात्। अथ यदि महात्मानोऽवतारमुपासत इत्युच्यते तर्हि पर–व्यूह–विभव–अन्तर्यामि–अर्चात्मकतया पञ्चधावस्थितस्येश्वरस्य विभवोपासका एव महात्मानः, अन्ये तु पराद्युपासकाः क्षुद्रा इत्येवोक्तं स्यात्। परो नित्यविभूतिर्नारायणः, व्यूहः वासुदेवसङ्कर्षणप्रद्युम्नानिरुद्धाः, विभवा रामकृष्णाद्यवताराः, अन्तर्यामी हृद्देशस्थ ईश्वरः, अर्चा वेङ्कटेश्वरश्रीरङ्गभद्राद्रिरामप्रभृतय इति विवेकः।

ननु महात्मानः कृष्णावतारमेवोपासत इति नास्माभिरुच्यते, किं तर्हि महात्मान एव कृष्णावतारमुपासत इति चेन्नैवम्—क्षुद्राणामपि कृष्णोपास्तिदर्शनात्। न च महतामेव कृष्णे ईश्वरबुद्धिरिति वाच्यं, क्षुद्राणामपि तद्दर्शनात्।

ननु ये कृष्णमवजानन्ति त एव क्षुद्राः, येषां कृष्णे ईश्वरत्वबुद्धिः ते महान्त एवेति चेन्नैतदपि युज्यते—श्रीरामनरसिंहगणपतिकुमारशङ्करपार्वत्यादीन् येऽवजानन्ति ते न क्षुद्राः, येषां तेषु नेश्वरत्वबुद्धिस्ते महान्त इत्यस्यापत्तेः। न चेष्टापत्तिः- पाषण्डिनस्तत्वेष्टापत्तावपि वैदिकानामस्माकं तस्यानिष्टत्वात्। शिवविष्णुगणपतिकुमारादीनां सर्वेषामीश्वरावतारत्वाविशेषात्।

तस्मादवतारिणमीश्वरं विहायावतारस्य कृष्णस्य भजनवर्णनमिहायुक्तमेव। न चावतार एवेह प्रकृत इति वाच्यं, सर्वभूतानीत्यादिना ईश्वरस्यैव प्रकृतत्वात्।

मां भूतादिमव्ययं ज्ञात्वेत्यस्य वाङ्मनसेत्याद्यर्थवर्णनं सुतरामयुक्तं, तच्छब्दाभ्यां तदर्थानागमात्। न च लक्षणया तदर्थागम इति वाच्यं, अभिधेयपरित्यागे कारणाभावात्।

किं च यो मनुष्यत्वेनावतीर्णस्स देह एव नेश्वर इति मनुष्यदेहे ईश्वरबुद्धिशालिनस्ते न महात्मानः, किं तु क्षुद्रात्मान एव। क्षुद्राणामेव चार्वाकादीनां देहात्मबुद्धिदर्शनात्।

न च यः कृष्णदेहमहमित्यभिमन्यते तस्मिन्नीश्वरबुद्धिर्महतामिति वाच्यं, देहात्मभ्रमवतस्सर्वेश्वरत्वायोगात्। अनीश्वरे तस्मिन्नीश्वरबुद्धिमतां महत्त्वायोगाच्च। नापि महतां कृष्णदेहे ईश्वरदेहबुद्धिरिति वाच्यं, सर्वेष्वपि देहेष्वीश्वरस्यान्तर्यामित्वेन सर्वदेहानामीश्वरदेहत्वात्। न च कृष्णदेहे ईश्वरावतारबुद्धिर्महतामिति वाच्यं, ईश्वरस्य चिद्रूपस्य देहत्वेनावतारायोगात्। न च कृष्णदेहावच्छिन्नचैतन्ये महतामीश्वरांशत्वेनेश्वरावतारबुद्धिरिति वाच्यं, ब्रह्मादिस्तम्बपर्यन्तनिखिलचराचरदेहावच्छिन्न-

यदि बहुभिः प्रकारैरुपासते, कथं त्वामेवोपासत इत्यत आह—

अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् ।
मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥१६॥

अहमिति । अहं क्रतुः श्रौतकर्मभेदोऽहमेव, अहं यज्ञः स्मार्तः । किं च स्वधाऽन्नमहं

---

चैतन्यस्य- 'ममैवांशो जीवलोके जीवभूतस्सनातन' इतीश्वरांशत्वस्य वक्ष्यमाणत्वात् । न च कृष्ण-देहान्तरचैतन्ये महतामीश्वरबुद्धिरिति वाच्यं, सर्वदेहान्तरचैतन्यस्यापीश्वरत्वात् ।

तस्माच्चिन्मयस्येश्वरस्य न मनुष्यत्वेनावतार, नापि कृष्णशरीरावच्छिन्नस्यैव चैतन्यस्येश्वरत्वम् । न च कृष्णशरीरस्य मायामयत्वात्तदवच्छिन्न चैतन्यं सर्वेश्वर इति वाच्यं, सर्वस्यापि मायामयत्वात् । अवच्छेदकाना भेदेऽपि चैतन्यस्यैकत्वात्परिपूर्णत्वाच्च ।

तस्मात्सर्वत्रावस्थितं परिपूर्णं चिन्मयमीश्वरमात्मानं मा ज्ञात्वेत्येवार्थस्समीचीनः । तथा सत्येव भूताद्यव्ययपदार्थानुगुण्यलाभात् ।

तथा आत्मानं दासमित्यप्ययुक्त—आत्मन एवेश्वरत्वेन सर्वशेषित्वात्कथमात्मनोऽन्यशेषत्व-सम्भव इति ।

तथा पृथक्त्वेनावस्थितस्य विश्वतोमुखस्यैकत्वेनोपासनमित्यप्ययुक्तं-- तादृशोपासनस्य भ्रान्ति-रूपत्वात् ।

न च घटशरावादिपृथक्त्वेनावस्थिताया मृद एकत्वेन मृत्त्वेनोपासनवदिदं न भ्रान्तिरूपमिति वाच्यं, अविकारस्येश्वरस्य मृद इव परिणामायोगात् । न च सूक्ष्मचिदचिद्विशिष्टस्येश्वरस्य स्थूलजगदाकारपरिणामोऽस्तीति वाच्य, तत्रापि विशेषणांशस्यैव सूक्ष्मस्य स्थौल्यप्राप्तिरूपपरिणामो न तु विशेष्यांशस्येश्वरस्येति कृत्वा ईश्वरस्य स्थूलजगदाकारपरिणामाभावात् । न च स्थूलजगच्छरीरकत्वमीश्वरस्य पृथक्त्वमिति वाच्यं, शरीराणां पृथक्त्वेऽपीश्वरस्य शरीरिण पृथक्त्वायोगात् । अन्यथा सूक्ष्मशरीराणामपि पृथक्त्वेन तद्विशिष्टेश्वरस्यापि पृथक्त्वप्रसङ्गात् । न चेष्टापत्ति - एकत्वेनेश्वरस्योपासनासम्भवात् ।

तस्मात् स्थूलजगदाकारेण सूक्ष्मजगदाकारेण वा बहुधा पृथक्त्वेन परिणामः प्रकृत्या एव नेश्वरस्येति नेश्वरः पृथक्त्वेन स्थित ।

अस्मन्मते तु माययेश्वरस्य विश्वरूपत्वं घटते- मायायां सर्वसम्भवात् । न च सर्वेष्वपि शरीरेषु एक एवेश्वर पृथक्त्वेन स्थित इति वाच्यं, एकस्य पृथक्त्वस्थितेर्भ्रान्तिरूपत्वाद्घटपृथक्त्वस्याकाशाभेदकत्ववच्छरीरपृथक्त्वस्येश्वराभेदकत्वात् । अत एव हीश्वरस्यात्मन एकत्वमेको देव इत्यादिश्रुतिसिद्धम् ।

यदि तु सर्वशरीरावस्थितमीश्वरमेकत्वेनोपासन इत्युच्यते तत्सम्मतमेव- मूलात्तु नैतादृशार्थलाभ । न च पृथक्त्वेनेत्यस्य सर्वशरीरावस्थितत्वेनेति लाक्षणिकार्थ इति वाच्यं, लाक्षणिकार्थकल्पनस्यान्याय्यत्वात् । न हि मुख्यार्थस्य बाध, येन लक्षणाश्रयणम् ॥१५॥

अहमिति । ननु तव परब्रह्मत्वादेकत्वेनोपासकाना त्वदुपासकत्वमस्तुनाम, कथं पुनरादित्य-चन्द्रादिदेवतान्तरोपाकानां विश्वरूपोपासकाना च त्वदुपासकत्वमित्याक्षेपसङ्गतिं पूर्वोत्तरश्लोकयोर्दर्शि-

पितृभ्यो यद्दीयते । अहमौषधं सर्वप्राणिभिर्यदद्यते तदौषधशब्दशब्दितं व्रीहियवादिसाधारणम् । अथ वा स्वधेति सर्वप्राणिसाधारणमन्नं, औषधमिति व्याध्युपशमनार्थं भेषजम् । मन्त्रोऽहं, येन पितृभ्यो देवताभ्यश्च हविर्दीयते । अहमेवाज्यं, हविश्च । अहमग्निः, यस्मिन् हूयते हविः सोऽग्निरहम् । अहं हुतं हवनकर्म च ॥१६॥

किंच—

पिताऽहमस्य जगतो माता धाता पितामहः ।
वेद्यं पवित्रमोङ्कार ऋक्सामयजुरेव च ॥१७॥

पितेति । पिता जनयिताऽहमस्य जगतः, माता जनयित्री, धाता कर्मफलस्य प्राणिभ्यो विधाता, पितामहः पितुः पिता, वेद्यं वेदितव्यं, पवित्रं पावनमोङ्कारः, ऋक्साम-यजुरेव च ॥१७॥

---

यति—यदिति । सर्वस्यापि जगतो मयि कल्पितत्वात्कल्पितस्याधिष्ठानानतिरेकात्सर्वं खल्विदं ब्रह्मेति श्रुतेश्च सर्वमप्यहमेव । यत्त्वादित्यादिदेवताशरीरावच्छिन्नं चैतन्यं तस्य मद्रूपत्वादादित्यादयोऽप्यहमेव । ततश्चेश्वरबुद्ध्याऽऽदित्याद्युपासने विश्वोपासने वेश्वरोपासनमेव कृतं भवतीति भावस्समाधानस्य । अहं क्रतुर्भवामीति शेषः । एवमुत्तरत्रापि । ओषध्यः फलपाकान्ता व्रीह्यादयः तासामिदमौषधमन्नं हुतं हवनाख्यं कर्म क्रिया ॥१६॥

पितेति । "मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यह"मिति, अहं बीजप्रदः, पितेति च वचनाज्जगतः पितृत्वमीश्वरस्य । जगन्मातुः प्रकृत्या ईश्वरेऽध्यस्तत्वादीश्वरस्य प्रकृतिरूपत्वेन जगन्मातृत्वम् । पितामहो हिरण्यगर्भस्तस्यापीश्वरे कल्पितत्वादीश्वरस्य पितामहत्वम् । यद्वा पितेव हिरण्यगर्भः, पितामहस्त्वीश्वर इति । अथ वा पुत्रं प्रति पिता यथा निमित्तकारणं, माता तूपादानकारणं तद्वज्जगत्प्रतीश्वरस्य निमित्तत्वादुपादानत्वाच्च पितृत्वं मातृत्वं च । (मातुरुदरात्पुत्रोत्पत्तिदर्शनात् 'जनिकर्तुः प्रकृति'रिति मातुरुपादानत्वं, तत्र पितुर्निमित्तत्वान्निमित्तकारणत्वमिति विवेकः ।) यद्येवमीश्वरो जगतः पिता तर्हि, कः पुनरीश्वरस्य पितेत्यत आह—पितामह इति । ईश्वरस्य पितेश्वर एव न त्वन्यः कश्चिदस्ति- अजत्वात्तस्येति भावः ।

रामानुजस्तु—जगति तत्र तत्र देवदत्तादीन् पुत्रान् प्रति पितृत्वेन ये विष्णुमित्रादयस्सन्ति मातृत्वेन च याः कलावत्यादयः पितामहत्वेन च ये यज्ञदत्तादयः धातृत्वेन च ये उपपतयदशम्भुदत्तादयः ते सर्वेऽपीश्वर एव- ईश्वरशरीरत्वात्तेषामीश्वरस्य च तदन्तर्यामित्वादित्याह, तन्मन्दम्—जगतः पितेति कृत्स्नजगतोऽपत्यस्थानीयत्वेन तत्प्रति विष्णुमित्रादीनां पितृत्वासम्भवात्, सत्यां मूलकर्तुरिदं विवक्षायां पिताऽहमत्र जगतीत्येव ब्रूयात्र तु पिताऽहमस्य जगत इति ।

वेद्यं ज्ञेयं वस्त्वहमेव, पवित्रं पावनं वस्त्वहमेव । यद्वा वेद्यं यत्पवित्रं तद्वस्त्वहमेव, ओङ्कारोऽहमेव, ऋक्सामयजुरात्मको वेदोऽहमेव । ऋगहमेव, सामाहमेव, यजुरहमेवेति प्रत्येकान्वयो वा ॥१७॥

किंच—

गतिर्भर्ता प्रभुस्साक्षी निवासश्शरणं सुहृत् ।
प्रभवः प्रलयस्स्थानं निधानं बीजमव्ययम् ॥१८॥

गतिरिति । गतिः कर्मफलं, भर्ता पोष्टा, प्रभुः स्वामी, साक्षी प्राणिनां कृताकृतस्य, निवासः यस्मिन्प्राणिनो निवसन्ति शरणमार्तानां प्रपन्नानामार्तिहरः । सुहृत् प्रत्युपकारानपेक्षस्सन्नुपकारी, प्रभव उत्पत्तिर्जगतः, प्रलयः प्रलीयतेऽस्मिन्निति, तथा स्थानं तिष्ठत्यस्मिन्निति निधानं निक्षेपः कालान्तरोपभोग्यं प्राणिनां बीजं, प्ररोहकारणं प्ररोहधर्मिणां, अव्ययं यावत्संसारभावित्वादव्ययं, न ह्यबीजं किंचित्प्ररोहति, नित्यं च प्ररोहदर्शनाद्बीजसन्ततिः न व्येतीति गम्यते ॥१८॥

किंच—

तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ।
अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥१९॥

तपामीति । तपाम्यहमादित्यो भूत्वा, अहं वर्षं कैश्चिद्रश्मिभिरुत्सृजामि चतुरो मासान् । उत्सृज्य पुनर्निगृह्णामि कैश्चिद्रश्मिभिरष्टभिर्मासैः पुनरुत्सृजामि प्रावृषि । अमृतं

---

गतिरिति । अत्र जगत इति पूर्वश्लोकस्थस्य पदस्यानुवृत्ति । जगतो गतिरहं जगतो भर्ताहमित्याद्यूह्यम् । साक्षी साक्षाद्द्रष्टा । कृतं सत्कर्म, अकृतं दुष्कर्म । यद्वा कृतं विहितमकृतमविहितम् । कृतं चाकृतं च कृताकृते तयोस्समाहार कृताकृतं तस्य । कृताकृतयोरित्यर्थ । निवासो निलय । निवसन्त्यस्मिन्निति निवास । प्रभवत्यस्मादिति प्रभव उपादानम् । प्रभवस्थानप्रलयशब्दै सृष्टिस्थितिलयहेतुत्वमुच्यते । अव्ययं यावत्संसारमविनाशीत्यर्थ । अबीजं बीजरहितं किञ्चित्सस्यादि न हि प्ररोहति । प्ररोहदर्शनादिति । संसाररूपाङ्कुरस्येति भाव । बीजसन्तति पुण्यपापादिलक्षणकर्मसन्ततिरिति भाव । न व्येति व्यय नैति ।

अत्रापि जगति या यास्स्वर्गादिगतय धारयितारश्शाशितार साक्षिणो वेश्मानि शरण्यपुरुषाः हितैषिण । प्रभवप्रलयस्थानं घटादे कार्यस्योत्पत्तिप्रलययोर्यत् स्थानं मृदादि तत् निधानमुत्पाद्यमुपसंहार्यं च घटादि । अव्ययानि कारणानि च तत्सर्वमहमेवेति रामानुजः—इदं च भाष्ये पूर्वोक्तदोषादेवोपेक्ष्यम् ॥१८॥

तपामीति । अहं तपामि, अहं वर्षं निगृह्णामि; अहं वर्षमुत्सृजामि च । केन रूपेण तपसीत्यत आह—आदित्यो भूत्वेति । वर्षोत्सर्जननिग्रहणेऽप्यादित्यरूपेणैवेत्यभिप्रेत्याह—कैश्चिद्रश्मिभिरिति । 'याभिरादित्यस्तपति रश्मिभि'रित्यादिश्रुतेरिति भाव । सूर्यरश्मीनामेव कार्त्स्न्येन पर्जन्यरूपत्वाद्वर्षोत्सर्जनं रश्मीनाम् । चतुरो मासानिति । आषाढादिमासचतुष्कमित्यर्थ । अत्यन्तसंयोगे द्वितीया । अष्टभिर्मासैरिति । अष्टमासानित्यर्थ । पुनरिति । अनेन वर्षोत्सर्जननिग्रहणयो

चैव देवानां, मृत्युश्च मर्त्यानां सदसद्यस्य यत्सम्बन्धितया विद्यमानं तत्सत्, तद्विपरीतमसदे-वाहमर्जुन! । न पुनरत्यन्तमेवासद्भगवान्, स्वयं कार्यकारणे वा सदसती ये पूर्वोक्तैर्विश्वत्ति-प्रकारैरेकत्वपृथक्त्वादिविज्ञानैर्यज्ञैर्मां पूजयन्त उपासते ज्ञानविदः, ते यथाविज्ञानं मामेव प्राप्नुवन्ति ॥१९॥

ये पुनरज्ञाः कामकामाः—

त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ।
ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥२०॥

त्रैविद्या इति । त्रैविद्याः ऋग्यजुस्सामविदः मां वस्वादिदेवरूपिणं सोमपाः सोमं पिबन्तीति सोमपाः, तेनैव सोमपानेन पूतपापाः शुद्धकिल्बिषाः, यज्ञैरग्निष्टोमादिभिरिष्ट्वा पूजयित्वा, स्वर्गतिं स्वर्गमनं स्वरेव गतिः स्वर्गतिः तां प्रार्थयन्ते । ते च पुण्यं पुण्यफल-मासाद्य सम्प्राप्य सुरेन्द्रलोकं शतक्रतोः स्थानमश्नन्ति भुंजते दिव्यान् दिवि भवानप्राकृतान् देवभोगान् देवानां भोगा देवभोगास्तान् ॥२०॥

---

प्रवाहानादित्वं द्योत्यते बीजांकुरवत् । अमृतं मृत्यभावस्तस्य देवधर्मत्वादाह—देवानामिति । यद्वा मरणाभावहेतुस्सुधाऽमृतम् । मृत्युर्मरणं मरणहेतुर्देवताविशेषो वा । मृत्युदेवता हि प्रसिद्धा । यस्य पुत्रादेदेः यत्सम्बन्धितया विद्यमानं पित्रादिरूपं वस्तु तदहमेव । तद्विपरीतमिति सम्बन्धितया अविद्य-मानमित्यर्थः । असम्बन्धितया विद्यमानमिति यावत् । विद्यमानं वस्तु सत् । अविद्यमानं तु असत् । इत्युक्तौ शशशृङ्गादेरपि भगवद्रूपत्वं स्यात् । तच्चानिष्टं सद्रूपस्य भगवतश्शशृङ्गादिरूपत्वासम्भवादि-त्याह—न पुनरिति । यद्वा सत् व्यक्तत्वात् स्फुटं कार्यम् । असदव्यक्तत्वादस्फुटं कारणमित्याह—कार्येति ।

यत्तु रामानुजः—सद्वर्तमानमसदतीतमनागतं चेति, तन्मन्दम्—येन केनापि रूपेण सर्वस्य सर्वदापि वर्तमानत्वेनातीतानागतयोरपि वर्तमानत्वात् ॥१९॥

त्रैविद्या इति । तिस्रो विद्या अधीयते विदन्ति वा त्रैविद्याः । शुद्धं निरस्तं किल्बिषं येषां ते शुद्धपापा निष्पापा इत्यर्थः । स्वरित्यव्ययं स्वर्गे वर्तते । तस्य गतिस्स्वर्गतिः स्वर्गं प्रति गमनमि-त्येकोऽर्थः । अर्थान्तरमाह—स्वरेव गतिरिति । गम्यत इति गतिः प्राप्यस्थानम् । त्रैविद्यास्सोमपाः पूतपापा मां यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते याचन्ते । ते पुण्यं सुरेन्द्रलोकमासाद्य दिवि दिव्यान् देव-भोगानश्नन्ति । सुरेन्द्रलोकस्य साक्षात्पुण्यत्वाभावादाह—पुण्यफलमिति । पुण्यशब्दोऽत्र लक्षणया पुण्यफलपरः । पुण्यं ज्योतिष्टोमादिजन्यमदृष्टाख्यं सत्कर्म । इदमेवापूर्वमित्युच्यते । जीवनिष्ठं चेदम् । ज्योतिष्टोमादिलक्षणः कर्मविशेषो धर्माख्यो वा पुण्यम् । शतक्रतोरिन्द्रस्य स्थानं स्वर्गं यदर्चिरादिमार्ग-पर्वभूतम् । दिव्यानिति पदं व्याख्याति—दिवि भवानिति । भवार्थे यत्प्रत्ययः । दिवि स्वर्गे । अप्राकृतानिति । अभौमानित्यर्थः । ननु प्रकृत्यजन्यानिति सर्वस्यापि जगतः प्राकृतत्वात् । भोगा इति । भुज्यन्त इति भोगाः; ये भोगास्सुधापानादयो देवैर्भुज्यन्ते तानेवैते भुञ्जत इत्यर्थः ॥२०॥

ते तं भुंक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ।
एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥२१॥

ते इति । ते तं भुंक्त्वा स्वर्गलोकं विशालं विस्तीर्णं क्षीणे पुण्ये मर्त्यलोकमिमं लोकं विशन्त्याविशन्ति । एवं यथोक्तेन प्रकारेण । त्रयीधर्मं केवलं वैदिकं कर्माऽनुप्रपन्ना गतागतं गतं चागतं च गतागतं गमनागमनं, कामकामाः कामान् कामयन्त इति कामकामा लभन्ते गतागतमेव, न तु स्वातन्त्र्यं क्वचिल्लभन्त इत्यर्थः ॥२१॥

ये पुनर्निष्कामास्सम्यग्दर्शिनः—

अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ।
तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥२२॥

अनन्या इति । अनन्या अपृथग्भूताः परं देवं नारायणं मामात्मत्वेन गतास्सन्त-

---

त इति । ते स्वर्गं गताः पुरुषाः स्वर्गलोकं भुंक्त्वा तल्लोकस्थान् भोगाननुभूयेत्यर्थः । पुण्ये स्वर्लोकभोगप्रदमारब्धकर्मविशेषे क्षीणे भोगवशान्नष्टे सति मर्त्यलोकं विशन्ति- मुद्गरमुसलमहारादिभिरिन्द्रचोदितैराजानिकैर्देवैर्निहतास्सन्तो देवदेहं विहाय पुनर्मनुष्यदेहं प्रपद्यन्त इत्यर्थः । त्रयीधर्ममनुप्रपन्नाः कामकामा एवं गतागतं लभन्ते । त्रयी वेदत्रयं तत्प्रतिपादितो धर्मः ज्योतिष्टोमादिकर्मरूपः, तं त्रयीधर्ममेवानुप्रपन्ना नतु निवृत्तिधर्मम् । शमदमादियुक्तसन्न्यासमित्याह—केवलमिति । वैदिकं वेदोक्तं कर्म- प्रवृत्तिमार्गमिति भावः । अनुप्रपन्नाऽनुसृत्य प्राप्ताः प्रवृत्तिमार्गनिरतान् पूर्वान्मरीच्यादीननुसृत्य स्वयमपि तत्र प्रवृत्ता इत्यर्थः । पूर्वपूर्वजन्मकृतकर्मवासनामनुसृत्य तत्रैव प्रवृत्ता इति वा । गतं गमनं स्वर्गप्रतीति भावः । आगतमागमनं मर्त्यलोकंप्रतीति भावः । गतागतयोस्समाहारो गतागतं गतागत इत्यर्थः । जन्ममरणलक्षणस्संसारस्तेषामवर्जनीय इति भावः । एवकारार्थमाह—न त्विति । क्वचिदपि लोके स्वातन्त्र्यं स्वतन्त्रेणावस्थानं नैव लभन्ते । अहो ! कामकामानां कर्मिणां दुरवस्थेति भावः ॥२१॥

नन्वन्येषामपि भक्तानां योगक्षेमं वहत्येव भगवान् । सत्यं वहत्येव; किं त्वयं विशेषः—अन्ये ये भक्तास्ते आत्मार्थं स्वयमपि योगक्षेममीहन्ते; अनन्यदर्शिनस्तु नात्मार्थं योगक्षेममीहन्ते; न हि ते जीविते मरणे वा आत्मनो गर्धिं कुर्वन्ति; केवलमेव भगवच्छरणास्ते; अतो भगवानेव तेषां योगक्षेमं वहतीति—

अनन्या इति । मत्तोऽन्यो न भवन्तीत्यनन्या मदभिन्ना इत्यर्थः । कथमभेदो जीवेश्वरयोरत्यन्तविलक्षणयोरत आह—आत्मत्वेनेति । यदेव जीवस्य स्वरूपभूतं चैतन्यं तदेवेश्वर इति जीव-

श्चिन्तयन्तो मां ये जनाः सन्न्यासिनः पर्युपासते, तेषां परमार्थदर्शिनां नित्याभियुक्तानां सतताभियोगिनां योगक्षेमं योगोऽप्राप्तस्य प्रापणं, क्षेमस्तद्रक्षणं, तदुभयं वहामि प्रापयाम्यहं 'ज्ञानी त्वात्मैव मे मतम्', 'स च मे प्रियः' यस्मात्तस्मात्ते ममात्मभूताः प्रियाश्चेति ॥२२॥

स्यात्मैवेश्वरः । स्वात्मा हि स्वस्मादपृथग्भूतः- स्वस्यैवात्मत्वात् । तथा चेश्वरस्य जीवात्मत्वाज्जीवेश्वरयोरपृथग्भाव इति भावः ।

गताः प्राप्ताः । नारायण ईश्वरोऽहमेवेति प्रत्ययं प्रतिपन्ना इत्यर्थः । सन्न्यासिन इति । त्यक्तसर्वकर्माण इत्यर्थः । कर्मिणामात्मस्वरूपचिन्तनानधिकारात्तेषां तदसम्भवाच्चेति भावः । पर्युपासते परितस्सर्वतस्सर्वावस्थास्वित्यर्थः । उपासते भजन्ते; आत्मारामा भवन्तीत्यर्थः । अभियोग आत्मनि चित्तसमाधानम् । तद्रक्षणं प्राप्तस्य परिरक्षणम् । यदणिमाद्यैश्वर्यं ज्ञानिभिर्ज्ञानान्न प्राप्तं तदीश्वरस्स्वयमेव ज्ञानिनः प्रापयति; यत्तु ज्ञानं तैः प्राप्तं तच्च परिरक्षति विस्मरणाद्यजननद्वारेति भावः ।

कुत ईश्वरो ज्ञानिनां योगक्षेमं वहतीत्यत आह—ज्ञानी त्विति । ज्ञानिनामीश्वरात्मत्वेनेश्वरस्य प्रियत्वादित्यर्थः । आत्मनः प्रियत्वं च प्रसिद्धम् । न च जीवस्यैवेश्वर आत्मेति कथमीश्वरस्य जीव आत्मा स्यादिति वाच्यं, एकमेव चैतन्यं जीवस्येश्वरस्य च स्वरूपमितीश्वरस्याप्यात्मा जीव एव । आत्मा हि स्वरूपम् । तस्माच्चैतन्यरूपा ज्ञानिन ईश्वरस्यात्मभूता एव । चैतन्यरूप ईश्वरश्च ज्ञानिनामात्मभूत एव । अत एव 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्युक्तमत्रैव । आत्मा हि प्रिय इति । न चाऽज्ञा अपि चैतन्यरूपत्वात्प्रिया एवेश्वरस्येति वाच्यं, अज्ञानां देहादेरेवात्मत्वेनाभिमतत्वेन तस्याचैतन्यरूपत्वान्नेश्वरप्रियत्वमिति ।

नन्वीश्वरो ज्ञानिनामेव योगक्षेमं वहतीति कथमुच्यते ? भक्तानामपि तं वहत्येवेत्याक्षिपति—नन्विति । अन्येषामिति ज्ञानिभिन्नानामित्यर्थः । आत्मार्थं स्वार्थम् । ईहन्ते वाञ्छन्ति । गर्धि कांक्षाम् । 'गृधु अभिकांक्षाया'मिति धातुः । भावार्थे क्तिन् । हिशब्दः 'नाभिनन्देत मरणं नाभिनन्देत जीवितम् । कालमेव प्रतीक्षेत निर्देशं भृतको यथा' इति नारदपरिव्राजकोपनिषत्प्रसिद्धिं दर्शयति । भगवान् शरणमाश्रयो येषां ते भगवच्छरणाः । आत्मैकनिरता इत्यर्थः । न तु भक्तवद्योगक्षेमादिनिरता इति भावः । ज्ञानिभिरकांक्षितमपि योगक्षेमं भगवान् स्वयमेव वहति; भक्तैस्तु कांक्षितमेव वहति भगवानित्ययं विशेष इति फलितार्थः ।

तथा च भक्ता भगवता स्वयोगक्षेमं वाहयन्ति, न तु भगवान् स्वयमेव भक्तानां योगक्षेमं वहति । ज्ञानिनस्तु न भगवता तं वाहयन्ति, किं तु भगवानेव ज्ञानिनां तं वहतीति सिद्धम् ।

यत्तु रामानुजः—मद्प्राप्तिकानां मत्प्राप्तिरूपं योगमपुनरावृत्तिलक्षणं क्षेमं च वहामीति, तन्मन्दम्—ईश्वरस्य परिपूर्णचैतन्यरूपस्यात्मनः नित्याप्तत्वेनाप्राप्तत्वाभावात् । ईश्वरं प्राप्तानां पुनरावृत्तिशङ्काया एवाभावेनापुनरावृत्तिं वहामीति वचनस्य व्यर्थत्वेनायुक्तत्वात् ॥२२॥

नन्वन्या अपि देवताः त्वमेव चेत्, तद्भक्ताश्च त्वामेव भजन्ते, सत्यमेवम्—

येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ।
तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकम् ॥२३॥

य इति । येऽप्यन्यदेवताभक्ता अन्यासु देवतासु भक्ता अन्यदेवताभक्तास्सन्तः यजन्ते पूजयन्ति श्रद्धयाऽऽस्तिक्यबुद्ध्याऽन्विता अनुगताः, तेऽपि मामेव कौन्तेय! यजन्त्यविधिपूर्वकं, अविधिरज्ञानं तत्पूर्वकं यजन्त इत्यर्थः ॥२३॥

कस्मात्तेऽविधिपूर्वकं यजन्त इत्युच्यते: यस्मात्—

अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ।
न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥२४॥

अहमिति । अहं हि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानां देवतात्वेन भोक्ता च प्रभुरेव च । मत्स्वामिको हि यज्ञः- 'अधियज्ञोऽहमेवात्र' इति ह्युक्तम् । तथा न तु मामभिजानन्ति तत्त्वेन यथावत् । अतश्चाविधिपूर्वकमिष्ट्वा यागफलाच्च्यवन्ति प्रच्यवन्ते ते ॥२४॥

येऽप्यन्यदेवताभक्तास्तत्त्वेनाविधिपूर्वकं यजन्ते, तेषामपि यागफलमवश्यम्भावि । कथम् ?—

यान्ति देवव्रता देवान् पितॄन् यान्ति पितृव्रताः ।
भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥

यान्तीति । यान्ति गच्छन्ति देवव्रता देवेषु व्रतं नियमो भक्तिश्च येषां ते देवव्रता

---

य इति । नन्वादित्यादीनां त्वद्रूपत्वस्योक्तत्वादादित्यादिचिन्तकानामपि योगक्षेमं त्वयैव वहनीयमादित्यादिभक्तानामपि त्वद्भक्तत्वाविशेषादित्याक्षिपति—नन्विति । येऽप्यन्यदेवताभक्ताश्श्रद्धयान्वितास्सन्तोऽन्यदेवता यजन्ते तेऽपि मामेव यजन्ते ममैवान्यदेवतारूपत्वात् । किं त्वविधिपूर्वकं यजन्ते । नहि तेषामादित्यादिभक्तानामादित्यादिदेवता ईश्वरात्मिका इति ज्ञानमस्तीति भाव ॥२३॥

अहमिति, देवतात्वेनेति । इन्द्रादिदेवतारूपत्वेनेत्यर्थः । यज्ञेषु हविर्भागभोक्तारो ये इन्द्रादित्यशङ्करादयो देवास्ते सर्वे मयीश्वरे स्वात्मनि कल्पिता इति मदात्मका एव । इन्द्रादिदेवताशरीरावच्छिन्नचैतन्यस्येश्वरत्वादिन्द्रादीनामीश्वरात्मकत्वमिति वा । अहं स्वामी प्रभुर्यस्य स मत्स्वामिकः । मम विष्णोरधियज्ञत्वाद्यज्ञस्याहं प्रभुरित्याह—अधियज्ञ इति, यथापदिंवि । एक एवेश्वर इन्द्रादिसर्वदेवतात्मकस्सर्वयज्ञात्मकस्सर्वयज्ञप्रभुरित्यादिरूपेणेत्यर्थ । च्यवन्ति भ्रश्यन्ति । कस्मादपादानादित्यत आह—यागफलादिति । ज्ञानादिलक्षणादिति भाव । न तु स्वर्गादिलक्षणात्- तस्य तेषामवश्यम्भावित्वस्य वक्ष्यमाणत्वात् । ये तु ज्ञानिनस्सर्वात्मकमीश्वरं ज्ञात्वा यत्किञ्चिदपि फलमनभिसन्धाय केवलं यज्ञादिकर्म कुर्वन्ति ते ज्ञानप्राप्तिद्वारा मोक्षं लभन्ते, न त्वज्ञा इति भाव ॥२४॥

यान्तीति । देवान् यान्ति देवलोकं गच्छन्तीत्यर्थ । एवमुत्तरत्रापि । वैष्णवा विष्णोरीश्वर-

देवान् यान्ति । पितॄनग्निष्वात्तादीन्यान्ति पितृव्रताः श्राद्धादिक्रियापराः पितृभक्ताः । भूतानि विनायकमातृगणचतुर्भगिन्यादीनि यान्ति भूतेज्या भूतानां पूजकाः । यान्ति मद्याजिनो मद्यजनशीला वैष्णवा मामेव यान्ति, एवं समानेऽप्यायासे मामेव भजन्तेऽज्ञानात्, तेन तेऽल्पफलभाजो भवन्तीत्यर्थः ॥२५॥

न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलं, सुखाराधनश्चाहम् । कथम् ?—

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥२६॥

पत्रमिति । पत्रं पुष्पं फलं तोयमुदकं यो मे मह्यं भक्त्या प्रयच्छति, तदहं पत्रादि भक्त्योपहृतं भक्तिपूर्वकं प्रापितं भक्त्युपहृतमश्नामि गृह्णामि, प्रयतात्मनः शुद्धबुद्धेः ॥२६॥

यत एवमतः—

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय! तत्कुरुष्व मदर्पणम् ॥२७॥

यदिति । यत्करोषि स्वतः प्राप्तं यदश्नासि यच्च जुहोषि हवनं निर्वर्तयसि श्रौतं स्मार्तं वा, यद्ददासि प्रयच्छसि ब्राह्मणादिभ्यो हिरण्यान्नाज्यादि, यत्तपस्यसि तपः चरसि

स्यात्मनो भक्ताः । मां यान्ति; ईश्वरसायुज्यं लभन्त इत्यर्थः । ते देवादिभक्ता अल्पफलं क्षुद्रफलं स्वर्गादिकं नश्वरत्वात्तस्य । अनेन विष्णुभक्तानां विष्णुसायुज्यरूपमहाफलप्राप्तिरिति द्योतितम् ।

यत्तु रामानुजः—देवव्रता देवान् यजामह इति सङ्कल्पशालिनः देवान् यान्त्यातीदि, तन्मन्दम्—सङ्कल्पमात्रेण क्रियाकरणं विना फलसिद्ध्ययोगात् । अन्यथा 'अहं काशीं गमिष्या'मीति सङ्कल्पवशादेव काशीगमनं विनापि गङ्गास्नानविश्वेश्वरदर्शनादिजन्यफलसिद्धिप्रसङ्गात् ॥२५॥

पत्रमिति । न केवलमित्यस्यानन्तफलमित्यनेन सम्बद्धः, किंतु मदाराधने सुखमनायासोऽप्यस्तीत्याह—सुखाराधन इति । सुखेनाराधनं यस्य स सुखाराधनः; सुखेनाराध्य इत्यर्थः । कथं तव सुखाराधनत्वमित्याक्षिपति—कथमिति । यो मे भक्त्या पत्रं पुष्पं फलं तोयं प्रयच्छति प्रयतात्मनो भक्त्युपहृतं तदहमश्नामि-- शुद्धबुद्धेस्सम्बन्धीति शेषः । मे मह्यं हृदयेशयात्मने सर्वव्यापिने परमात्मन इति वा । आदित्यमण्डलस्थाय पुरुषायेति वा । ईश्वराय पत्राद्युपहरणं च मानसिकमिति बोध्यम् ।

ननु अभोक्तुरीश्वरस्य कथं पत्राद्यशनमिति चेदत एव गृह्णामीति व्याख्यातमश्नामीतिपदं भाष्यकारैः । ईश्वरस्य सर्वव्यापित्वेन सर्वसंसृष्टत्वात्सर्वं तेन स्वीकृतमेवेति भावः ।

काल्यादिदेवताराधने तु रक्तमांसादिवस्तुसम्पादनप्रयासः, ईश्वराराधने तु पत्रपुष्पादीनां सर्वसुलभत्वान्न तत्सम्पादनप्रयास इति सुखाराधन ईश्वर इति श्लोकस्यान्वयः ॥२६॥

यदिति । यत एवं भक्तकर्तृकपत्राद्युपहरणेनापीश्वरस्तुष्टस्तस्मै भक्ताय महाफलं प्रदत्ते तस्मादित्यर्थः । यद्युद्धादिकं गमनादिकं वा कर्म करोषि स्वतो यदृच्छया प्राप्तं यदन्नं व्रीह्यादिकमश्नासि यदाज्यादिकं जुहोषि अग्नौ प्रक्षिपसि । इदमेवाह—श्रौतं स्मार्तं वा हवनं निर्वर्तयसीति । श्रुति-

कौन्तेय! तत्कुरुष्व मदर्पणं मत्समर्पणम् ॥२७॥

एवं कुर्वतस्तव यद्भवति तच्छृणु—

शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः।
सन्न्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥२८॥

शुभेति। शुभाशुभफलैः शुभाशुभे इष्टानिष्टे फले येषां तानि कर्माणि शुभाशुभफलानि तैः शुभाशुभफलैः कर्मबन्धनैः कर्माण्येव बन्धनानि कर्मबन्धनानि तैः कर्मबन्धनैः, एवं मदर्पणं कुर्वन् मोक्ष्यसे। सोऽयं सन्न्यासयोगोनाम सन्न्यासश्चासौ मत्समर्पणतया कर्मत्वाद्योगश्चासाविति तेन सन्न्यासयोगेन युक्त आत्मान्तःकरणं यस्य तव स त्वं सन्न्यासयोगयुक्तात्मासन्, विमुक्तो कर्मबन्धनैः जीवन्नेव पतिते चास्मिन् शरीरे मामुपैष्यस्यागमिष्यसि॥

रागद्वेषवान् तर्हि भगवान्, यतो भक्ताननुगृह्णाति, नेतरानिति, तन्न—

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥२९॥

सम इति। समः तुल्योऽहं सर्वभूतेषु। न मे द्वेष्योस्ति न प्रियः। अग्निवदहं-दूरस्थानां यथाग्निः शीतं नापनयति, समीपमुपसर्पतामपनयति; तथाहं भक्ताननुगृह्णामि,

---

स्मृतिसिद्धां होमक्रियां निष्पादयसीत्यर्थः। मदर्पणमिति। ईश्वरार्पणमस्त्विति मनश्शुद्धिपूर्वकं मह्यं समर्पयेत्यर्थः। एवं सति फलसङ्गत्यागो भवतीति भावः ॥२७॥

तमेव भावं स्फुटयति—शुभाशुभेति, एवं कुर्वत इति। सर्वमपीश्वरार्पणं कुर्वत इत्यर्थः। फलसङ्गे सति कर्माणि शुभाशुभफलैर्बध्नन्ति पुरुषं, तत्त्यागे तु नास्त्यस्य कर्मबन्धः। तत्त्यागश्च तस्येश्वरार्पणाद्भवतीति सर्वमीश्वरायार्पयितव्यमिति भावः। मोक्ष्यसि त्यक्ष्यसे निर्मुक्तकर्मबन्धनो भविष्यसि मुक्तो भविष्यसीति यावत्। सोऽयं पूर्वोक्त ईश्वरार्पणबुद्ध्या कर्मकरणात्मकः सन्न्यासयोगः। ईश्वरार्पणतया फलसङ्गत्यागात्सन्न्यासः। सन्न्यासशब्दस्य त्यागार्थकत्वात्। कर्मानुष्ठानरूपत्वाद्योग इत्याह—कर्मत्वादिति। जीवन्नेव बन्धनैः कर्मभिर्विमुक्तस्सन् जीवन्मुक्तिं प्राप्तस्सन्नित्यर्थः। सति कर्मसु कर्तृत्वाभिमाने फलसङ्गे च तत्सिद्ध्यसिद्धिभ्यां हर्षशोकादिविकारस्स्यात्, तदभावे तु विकाराभावाज्जीवन्मुक्तिरिति भावः। निर्विकारतयावस्थानस्यैव जीवन्मुक्तिरूपत्वात्। पतिते मृते सति-मामुपैष्यसि मत्सायुज्यं प्राप्स्यसि; ब्रह्मैव भविष्यसीत्यर्थः ॥२८॥

सम इति, रागद्वेषवानिति। भक्तेषु रागः, अभक्तेषु द्वेषः। तावस्य स्त इति रागद्वेषवान्। प्राकृतराजादिवदिति भावः। तन्न भगवतो रागद्वेषवत्त्वं न। सम इति। सर्वभूतेष्वात्मन एकरूपत्वेन; सर्वघटेष्वाकाशस्येव स्थितत्वादिति भावः। एवं सर्वत्रैकरूपत्वादविक्रियत्वाच्चात्मनो न कश्चिद्द्वेष्यः, न कश्चित्प्रियश्चास्ति। प्रीतिद्वेषयोर्निर्धर्मके आत्मन्ययोगादिति भावः। अस्य सर्वसमत्वे दृष्टान्तमाह—अग्निवदिति। दृष्टान्तं विवृणोति—यथेति।

**नेतरान् । ये भजन्ति तु मामेश्वरं भक्त्या मयि ते- स्वभावत एव, न मम रागनिमित्तं-वर्तन्ते । तेषु चाप्यहं स्वभावत एव वर्ते, नेतरेषु । नैतावता तेषु द्वेषो मम ॥२९॥**

---

अग्नेश्शीतापनयनं स्वभावः, स चाग्निः स्वसमीपं प्राप्तानां सर्वेषामप्यविशेषेणैव शीतमपनयति; स्वसमीपमगतानां तु न; नैतावताग्ने रागद्वेषरूपः पक्षपातः; किं त्वग्निसमीपाप्राप्तिः पुरुषस्यैवापराधः । यदि समीपं प्राप्तानां मध्ये केषांचिच्छीतमपनीय केषांचिन्नापनयेत्तर्हि स दोषः स्यादग्नेः । न त्वेतदस्ति । तस्मादग्निर्यथा सर्वसमः तथा परमेश्वरोऽपि स्वमाश्रितानुगृह्णाति, नेतरानिति कृत्वा भगवदनाश्रयणं पुरुषस्यैव दोषः, न तु भगवत इति ।

ननु अग्नेः परिच्छिन्नत्वाद्दूरस्थानामग्निसेवा न स्यादात्मनस्तु सर्वव्यापिनः कथं कैश्चिदसेव्यत्वमिति चेन्नैष **दोषः**—सेवाया ज्ञानपूर्वकत्वात्सर्वव्यापिनमप्यात्मानं ये न विदन्ति त आत्मना नित्यसङ्गा अप्यात्मानं नैव सेवन्ते; यथा स्वगृहस्थमपि निधिं ये न विदन्ति ते तं न भजन्त एव । यथा वा स्वकण्ठगतमपि चामीकरं ये विस्मृतवन्तस्ते तं न भजन्त एव- तद्वदिति ।

भक्तानामीश्वरे वर्तनमीश्वरस्य भक्तेषु वर्तनं च अग्नेरौष्ण्यवत्स्वभाव एवेत्याह—**ये भजन्तीति** । स्वभावत एवेत्येवकारार्थमाह—**न मम रागनिमित्तमिति** । भक्तानां मयि वर्तने मम भक्तेषु वर्तने वा मम भक्तानां वा रागो न निमित्तं, किंतु स्वभाव एवेत्यर्थः ।

तथाऽभक्तानां मय्यवर्तने ममाभक्तेष्ववर्तने मम भक्तानां वा द्वेषो न निमित्तं, किंतु स्वभाव एवेत्याह—**नैतावतेति** । भक्तानामीश्वरे वर्तनं नाम ईश्वरपरायणत्वं; तस्य च भक्तेषु वर्तनं भक्तपरायणत्वमिति बोध्यम् ।

न च ज्ञानिनां स्वात्मपरायणत्वेन भवितव्यत्वात्कथमीश्वरपरायणत्वमीश्वरस्य वा आत्मारामस्य कथं भक्तपरायणत्वमिति वाच्यं, ज्ञानिनामात्मन एवेश्वरत्वादीश्वरस्य च भक्तानामेवात्मत्वात् । भक्तोऽत्र ज्ञानी प्रकरणादात्मभक्तेश्च ज्ञानसाध्यत्वात् ।

तथा च ज्ञानिनाऽऽत्मत्वेनाभिमतं यच्चैतन्यं तस्येश्वरत्वात् ज्ञानिनि वर्तमान ईश्वर आत्मनि वर्तमान एव । ईश्वरे वर्तमानो ज्ञानी च स्वात्मनि वर्तमान एवेति ज्ञानीश्वरावुभावप्यात्मनि वर्तनादात्मपरायणावेवेति नात्र जीवेश्वरभेदः प्रसञ्जनीयः । मयीश्वरे स्वात्मभूते ते वर्तन्ते, तेषु च स्वात्मभूतेषु ज्ञानिष्वहं वर्ते इत्यर्थात् । न च ज्ञानिनामीश्वरात्मत्वे विवदितव्यं, 'ज्ञानी त्वात्मैव मे मत'-मित्यत्रैवोक्तत्वात् ।

ननु मयि ते तेषु चाहमिति अस्मत्तच्छब्दाभ्यां जीवेश्वरयोर्भेदेन निर्देशाज्जीवानां च बहुत्वेन निर्देशात्कथं जीवानामेकेश्वराभेद इति चेदुच्यते—सप्तम्यन्तयोरस्मत्तच्छब्दयोर्लक्षणया चैतन्यमात्रवाचित्वात्प्रथमान्तयोरभिधया प्रमातृवाचित्वात्प्रमातॄणां च बहुत्वाज्जीववदीश्वरस्यापि प्रमातृत्वस्याध्यासिकत्वात्प्रमातुरीश्वरात्सर्वज्ञात्प्रमातारो जीवाः किञ्चिद्ज्ञा भिन्ना एव, बहव एव च । पारमार्थिकं तु जीवानामीश्वरस्य च स्वरूपं चैतन्यमेवेति सिद्धो जीवेश्वराभेदश्चेति ।

शृणु मद्भक्तेर्माहात्म्यम्—

अपि चेत्सुदुराचारो भजते मामनन्यभाक् ।
साधुरेव स मन्तव्यस्सम्यग्व्यवसितो हि सः ॥३०॥

अपि चेदिति । अपिचेद्यपि सुदुराचारः सुष्ठु दुराचारः अतीव कुत्सिताचारोऽपि भजते मामनन्यभगनन्यभक्तिस्सन्, साधुरेव सम्यग्वृत्त एव स मन्तव्यः; सम्यग्यथावत् व्यवसितो हि सः; यस्मात्साधुनिश्चयस्सः ॥३०॥

उत्सृज्य बाह्यां दुराचारतामन्तस्सम्यग्व्यवसायसामर्थ्यात्—

क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ।
कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति ॥३१॥

क्षिप्रमिति । क्षिप्रं शीघ्रं भवति धर्मात्मा धर्मचित्त एव । शश्वन्नित्यं शान्तिमुपशमं निगच्छति प्राप्नोति । शृणु परमार्थं वचः; हे कौन्तेय! प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु; न मे मम भक्तो मयि समर्पितान्तरात्मा मद्भक्तः न प्रणश्यतीति ॥३१॥

किंच—

मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।
स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥३२॥

मामिति । मां हि यस्मात् पार्थ! व्यपाश्रित्य मामाश्रयत्वेन गृहीत्वा येऽपि स्युः

---

यत्तु वेदान्तदेशिकः—अह च ते चान्योन्यं पित्रादिष्विव न्यस्तभरा इति पिण्डितार्थं इति, तत्तुच्छम्—ईश्वरे जीवानां न्यस्तभरत्वेऽपि जीवेष्वीश्वरस्य न्यस्तभरत्वानुपपत्तेः । ईश्वरो हि स्वतन्त्रः सर्वरक्षकश्चेति नान्येतरकर्तृकरक्षापेक्षा, ययेश्वरः स्वरक्षाभरं जीवे न्यसेत् । जीवस्तु परतन्त्र आत्मानं रक्षितुमक्षमश्चेति स्वरक्षाभरमीश्वरे विन्यसेत् । अत एव हि जीवानामीश्वरशरणागतिर्न तु जीवशरणागतिरीश्वरस्य । अन्यथा ईश्वरस्येश्वरत्वमेव नश्येदिति ॥२९॥

अपि चेदिति । सुदुराचारोऽप्यनन्यभावस्सन्मां भजते चेत् स साधुरेवेति मन्तव्यः, हि स सम्यग्व्यवसितः । सुष्ठु दुष्ट आचारो यस्य स सुदुराचारः । अन्यं न भजन इत्यनन्यभाक् । व्यवसितो निश्चितो निश्चयवानिति यावत्, सम्यक्साधु व्यवसितं निश्चयो यस्य स सम्यग्व्यवसित इत्येकं पदं वा ।

ब्रह्मैवाहमिति यस्य निश्चयज्ञानं तत्सामर्थ्यात्स पुरुषो दुराचारोऽपि साधुरेव- देहाद्यनात्मधर्मत्वादाचारस्य, न तेनात्मज्ञानिनः कापि क्षतिरात्मनो नित्यशुद्धबुद्धमुक्तस्वरूपत्वात्, ज्ञानिनश्चात्मत्वादिति भावः ॥३०॥

क्षिप्रमिति । दुराचारोऽपि सम्यग्व्यवसायसामर्थ्यात्साधुरेवेत्युक्तं यत्प्रौढ्योक्तमेव । वस्तुतस्तु सम्यग्व्यवसायसामर्थ्यात्स दुराचारमुत्सृज्य सदाचार एव भवतीत्याह—उत्सृज्येति । धर्मे आत्मा चित्तं यस्य स धर्मात्मा; निगच्छति प्राप्नोति ॥३१॥

मामिति । ये पापयोनयः स्युः ते स्त्रियो वैश्याश्शूद्रा अपि हे पार्थ! मां व्यपाश्रित्य परां गतिं यान्ति । हि यस्मादेवं तस्मादीश्वरभक्तो न प्रणश्यतीति त्वमेव प्रतिजानीहि । शूद्राणां वेदेषु

भवेयुः पापयोनयः पापा योनिर्येषां ते पापयोनयः पापजन्मानः । के ते इति, आह— स्त्रियो वैश्यास्तथा शूद्राः तेऽपि यान्ति गच्छन्ति परां प्रकृष्टां गतिम् ॥३२॥

किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ।
अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥३३॥

किं पुनरिति । किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयो भक्ता राजर्षयः, तथा राजनश्च ते ऋषयश्च राजर्षयः । यत एवमतः । अनित्यं क्षणभंगुरमसुखं च सुखवर्जितमिमं लोकं मनुष्यलोकं प्राप्य पुरुपार्थसाधनं दुर्लभं मनुष्यत्वं लब्ध्वा भजस्व सेवस्व माम् ॥३३॥

कथम् ?—

मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ।
मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥३४॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीता-सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे राजविद्या-राजगुह्ययोगो नाम नवमोऽध्यायः ।

मन्मना इति । मन्मना मयि वासुदेवे मनो यस्य तव स त्वं मन्मना भव । तथा

---

वैदिकेपु कर्मसु चानधिकारत्वात्पापजन्मत्वम् । वैश्यानां द्विजत्वेन तत्राधिकारेऽपि धान्यादिक्रयविक्रय-वृत्त्या पापित्वं तेषाम् । कलौ वैश्यानां शूद्रप्रायत्वादिति वा ॥३२॥

किं पुनरिति । पापयोनय. स्त्रीवैश्यशूद्रा अपि भगवद्भक्ताश्चेत्परां गतिं यान्ति; किंपुन; पुण्ययोनयो ब्राह्मणा राजर्षयश्च भगवद्भक्ताः परां गतिं यान्तीति वक्तव्यमित्यर्थः । अर्थापत्तिरितिरियं कैमुत्येनार्थसाधनात् ।

यत एवमिति । भगवद्भजनान्मनुष्याणां परमपदप्राप्तिर्यस्माद्भवति तस्मादित्यर्थः । क्षणभंगुरं क्षणादेव भङ्गशीलं नित्यं मृत्योस्सन्निहितत्वादिति भाव । एतेन भगवन्तं श्वो भजिष्यामीत्येवं कालयापना न कर्तव्येति सिद्धम् । असुखमिति । रोगादिभूयिष्ठत्वान्मनुष्यदेहस्येति भाव । एतेन विषयेषु न सक्तव्यमिति सूचितम्- तत्र सुखलेशस्याप्यभावात् । इदंशब्दस्य सन्निहितवाचित्वादाह— मनुष्यलोकमिति । मनुष्यदेहं प्राप्येत्यर्थः । लोक्यते ज्ञायत इति लोको देह इति व्युत्पत्ते. । नच किमनित्येन मानवदेहेनेत्युपेक्षितव्यमित्याह—पुरुपार्थसाधनमिति । न हि पशुपश्यादय पुरुपार्थं मोक्षं साधयितुमर्हन्ति तेषां विवेकाभावादिति भाव । ननु पतत्वयं मनुष्यदेह- पुनर्मनुष्यदेहान्तरप्राप्तौ पुरुपार्थाय यतिष्य इत्यत आह—दुर्लभमिति । अतीतानेकजन्मार्जितसुकृतपरिपाकवशादेतन्मनुष्य-देहलाभ, अस्य नाशे पुनरेतादृशदेहप्राप्तिर्दुष्प्रापैवेत्यर्थः । अत एव भागवते प्रह्लाद.—'कौमार आचरेत्प्राज्ञो धर्मान् भागवतानिह । दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थद'मित्युक्तवान् । मनुष्यत्वं लब्ध्वा मनुष्यजन्म प्राप्येत्यर्थः । वर्तमान इति शेप । राजर्षित्वमिति च । मामीश्वरमात्मानं भजस्व ॥३३॥

मन्मना इति । मन्मना भव मद्भक्तो भव । मद्याजी भव । मां नमस्कुरु । एवं युक्त्वा

मद्भक्तो भव। मद्याजी मद्यजनशीलो भव। मामेव च नमस्कुरु। मामेवेश्वरमेष्यस्यागमिष्यसि युक्त्वा समाधाय चित्तम्। एवमात्मानं; अहं हि सर्वेषां भूतानामात्मा, परा च गतिः परमयनं तं मामेवम्भूतमेष्यसीत्यतीतेन सम्बन्धः। मत्परायणस्सन्नित्यर्थः ॥३४॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पादपूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
नवमोऽध्यायः।

---

मत्परायणस्सन्नात्मानं मामेवैष्यसि। युक्त्वेत्यस्यार्थमाह—**चित्तं समाधायेति**। कुतस्तवात्मत्वम आह—**अहं हीति**। सर्वभूतात्मत्वान्ममात्मत्वमित्यर्थः। मत्परायण- अहं परमयनं परा गतिर्यस्य स तथोक्तः। इदमेवाह—**अहं परा च गतिरिति**। गतिः प्राप्यः। परायणशब्दगतपरपदार्थमाह- **अनन्तमिति**। अयनविशेषणत्वात्क्लीबत्वम्। परमनन्तमयनं गतिः परायणं, अहमेव परायणं यस्य स मत्परायण। **एवम्भूतमिति**। सर्वभूतानामात्मानं परायणं चेत्यर्थः। **अतीतेनेति**। युक्त्वैष्यसीत्यस्यातीतत्वम्। एष्यसि प्राप्स्यसि।

यद्वा मत्परायण इत्यस्य मामेवैष्यसीत्यतीतेन सम्बन्धः- मत्परायणस्त्वं मामेवैष्यसीति। तदेवाह—**मत्परायणस्सन्नित्यर्थ इति**। एवं युक्त्वाऽऽत्मानं मामेवैष्यसि मत्परायणश्च भविष्यसीति वाक्यद्वयान्वयभ्रमव्युदासायोक्तमतीतेन सम्बन्ध इति।

वाक्यद्वयान्वये तु ईश्वरसायुज्यप्राप्त्यनन्तरमपि मुक्तस्येश्वरपरायणत्वरूपकर्तव्यशेषसम्भव इत्येष दोषः। मुक्तस्य कृतकृत्यत्वप्रसिद्धेः।

नच मामेवैष्यसि युक्त्वैवमात्मानमिति समाप्तस्य वाक्यार्थस्य मत्परायण इति पुनरादानात्समाप्तपुनरादानदोषापत्तिरिति वाच्यं, एवं मत्परायण एव मामेवैष्यसि, नोचेन्नेतीश्वरसायुज्यप्राप्तिं प्रतीश्वरपरायणत्वस्याकाङ्क्षितत्वेन तद्दोषाप्रसक्तेः।

ईश्वरपरायणत्वं नामानवरतमीश्वरस्वरूपानुसन्धानरूपतदेकनिष्ठत्वमिति बोध्यम्। तस्मात्त्वमीश्वरार्पणबुद्ध्या स्वधर्ममिमं संग्रामं निरभिमानस्सन् तावत्कृत्वा पश्चात्सर्वकर्माणि सन्न्यस्य सम्यग्दर्शनं सम्पाद्य स्वात्मस्वरूपानुसन्धानपरो भव। तथा सति तव ब्रह्मभावो भविष्यतीति पर्यवसन्नार्थः ॥३४॥

राजविद्या च तद्राजगुह्यं च राजविद्याराजगुह्यं, तस्य योगोऽत्रेति राजविद्याराजगुह्ययोगः।

इति श्री वेल्लङ्कोण्डोपनामक रामकविकृते श्रीमच्छाङ्करभगवद्गीताभाष्यार्कप्रकाशे नवमोऽध्यायः।

श्रीहयग्रीवार्पणमस्तु।

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## दशमोऽध्यायः ।

सप्तमेऽध्याये भगवतस्तत्त्वं विभूतयश्च प्रकाशिता नवमे च । अथेदानीं येषु येषु भावेषु चिन्त्यो भगवान् ते ते भावा वक्तव्याः, तत्त्वं च भागवतो वक्तव्यमुक्तमपि दुर्विज्ञेयत्वादित्यतः श्रीभगवानुवाच—

श्रीभगवानुवाच—भूय एव महाबाहो! शृणु मे परमं वचः ।
यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥१॥

भूय इति । भूय एव भूयः पुनः हे महाबाहो! शृणु मे मदीयं परमं प्रकृष्टं निरतिशयवस्तुनः प्रकाशकं वचः वाक्यं, यत्परमं ते तुभ्यं प्रीयमाणाय मद्वचनात् प्रीयसे त्वमतीवामृतमिव पिबन्, ततो वक्ष्यामि हितकाम्यया हितेच्छया ॥१॥

किमर्थमहं वक्ष्यामीत्यत आह—

न मे विदुस्सुरगणाः प्रभवं न महर्षयः ।
अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥२॥

नेति । न मे विदुराजानन्ति सुरगणा ब्रह्मादयः किं ते न विदुर्मम प्रभवं प्रभावं प्रभुशक्त्यतिशयं, अथ वा प्रभवं प्रभवनमुत्पत्तिम् । नापि महर्षयो भृग्वादयो विदुः ।

---

वृत्तं कीर्तयति—सप्तम इति । सप्तमेऽष्टमे नवमे चाध्याये भगवतस्तत्त्वं प्रकाशितं, विभूतयश्च प्रकाशिताः । भावाः पदार्थाः । ननु तत्त्वस्योक्तत्वात्कुतः पुनर्वचनमत आह—उक्तमपीति । दुःखेन विज्ञातुं शक्यं दुर्विज्ञेयं ज्ञातुमशक्यमित्यर्थः । महान्तौ दीर्घावाजानुलम्बिनौ बाहू यस्य तत्सम्बुद्धिर्महाबाहो! अनेन भगवदंशसम्भूतत्वात्त्वं भगवद्वाक्यश्रवणार्ह इति सूच्यते । वचसः परमत्वं कथमत आह—निरतिशयवस्तुनः प्रकाशकमिति । निरतिशयं वस्तु ब्रह्म तस्य परमत्वात्प्रकाशकस्य वाक्यस्यापि परमत्वमिति भावः । प्रतिपाद्यमहिम्नैव वाक्यस्य गौरवादिति तत्त्वम् । प्रीयसे प्रीतिं गच्छसि—प्रीयमाणाय प्रीतिं गच्छते । यथा सुधां पिबन् पुरुषः प्रीयते तथा मद्वचः शृण्वन् त्वं प्रीयसे । त्वं एवं प्रीयमाणत्वात्तव; हितं संसारनिवर्तनात्मकं; तवेति शेषः । तवैव हिताय मया वक्ष्यते न तु मदर्थं—मम पूर्णकामत्वादिति भावः ॥१॥

नेति । नन्विन्द्रादयो देवाः कश्यपादयो ऋषयो वा मह्यं भवत्तत्त्वं ब्रूयुरेवेत्यत्राह—किमर्थमहमिति । मे प्रभवं सुरगणा न विदुर्महर्षयश्च न विदुः । अतो न ते तुभ्यं तत्त्वं वक्तुं

कस्मात्ते न विदुरित्युच्यते—अहमादिः कारणं हि यस्माद्देवानां महर्षीणां च, सर्वशः सर्वप्रकारैः ॥२॥

शक्नुयुः । ततश्चाहमेव ते वक्ष्यामि । एतेनेश्वरस्यैकस्यैव सर्वज्ञत्वमन्येषां सर्वेषां किञ्चिद्ज्ञत्वमेवेति सिद्धम् ।

नन्वहं सर्वज्ञत्वात्सर्वं वक्ष्यामीति येन प्रतिज्ञातं स किमात्मा ? उत प्रमाता ? नाद्यः- अविक्रियस्यात्मनो वक्तृत्वादिविकारायोगात् । नान्त्यः- प्रमातुर्जीवत्वेनाऽसर्वज्ञत्वादिति चेत्, मैवम्—यथा जीवस्य वास्तवमाध्यासिकं चेति रूपद्वयमस्ति, तथा ईश्वरस्याप्यस्ति । तत्र जीवेश्वरयोर्वास्तवं रूपं चैतन्यलक्षण आत्मैव । तदेकरूपमेव । आध्यासिकं रूपं तु प्रमातृत्वं, तज्जीवेश्वरयोर्भिन्नमेव । जीवानां च परस्परं भिन्नमेव । तथासति यथा जीवो व्यवहारतः प्रमाता तथा ईश्वरोऽपि प्रमातैव । यथा जीवेषु परस्परं ज्ञानतारतम्यमस्ति तथा जीवेश्वरयोरस्त्येव । तत्र प्रमाता जीवः किञ्चिद्ज्ञः- तदुपाध्यज्ञानस्य परिच्छिन्नत्वात् । प्रमाता ईश्वरस्तु सर्वज्ञः- तदुपाध्यज्ञानस्यापरिच्छिन्नत्वात् । बुद्धिर्जीवोपाधिर्माया त्वीश्वरोपाधिरिति प्रागेवोक्तम् । बुद्धेः परिच्छिन्नत्वं मायाया अपरिच्छिन्नत्वं च शास्त्रादिसिद्धम् । एवंसति यः कृष्णशरीरावच्छिन्नः प्रमाता स मायोपिक ईश्वर इति सिद्धम् । तस्य सर्वज्ञत्वमिन्द्रादिशरीरावच्छिन्ना. प्रमातारस्तु बुद्ध्युपाधिका जीवा इति सिद्धं- तेषां किञ्चिद्ज्ञत्वम् । एवं जीवेश्वरयोः प्रमातृत्वांशे किञ्चिद्ज्ञत्वसर्वज्ञत्वरूपभेदसद्भावेनैक्यायोगादेव तत्त्वमसीत्यादौ लक्षणा चैतन्यमात्रविषया स्वीकृता । नच श्रीकृष्णशरीरे मायावच्छिन्नचैतन्यमस्ति, अस्मदादिशरीरेष्वविद्यावच्छिन्नचैतन्यमस्तीत्यत्र किं नियामकमिति वाच्यं, सर्वज्ञत्वकिञ्चिद्ज्ञत्वादेरेव नियामकत्वात् । ततश्च यावद्व्यवहारं प्रमात्रोर्जीवेश्वरयोः प्रमातॄणां जीवानां वा नैक्यमिति कृष्ण ईश्वर एव, इन्द्रादयस्तु जीवा एवेति स्थितम् । परमार्थतस्तु सर्वः प्रमातृवर्गो जीवगण एव । आत्मैक एवेश्वर इति बोध्यम् । एवं प्रमातुरपीश्वरस्य सर्वज्ञत्वसिद्धेरुचितैव प्रतिज्ञा तस्य ।

आदिरिति । यथा पुत्रस्य प्रभवं पिता वेत्ति, पितुः प्रभवं तु न पुत्रः तद्वत्सर्वकारणत्वात्सर्वमीश्वरो वेत्ति, तं तु न सर्वे- सर्वस्य तत्कार्यत्वादिति भावः । ईश्वरस्य सर्वादित्वं च 'यतो वा इमानि भूतानि जायन्ते' इति श्रुतिसिद्धम् ।

ननु यदीश्वराज्जीवा जायेरन् तर्हि जीवादित्वमीश्वरस्य स्यात्तदेव नास्ति- जीवानामजत्वेनानादित्वात् । उक्तं हि पूर्वमेव- 'अजो नित्यश्शाश्वतोऽयं पुराणः', 'अजो ह्येको जुषमाणोऽनुशेते' इति श्रुतेश्च । भूतोत्पत्तिश्रुतिस्तु भूतशब्दस्य देहाद्यर्थपरत्ववर्णनेन नेयेति चेत्, सत्यम्—इन्द्रादयो हि जीवा देहादिसङ्घातमेवात्मत्वेनाभिमन्यमाना देवोऽहं मनुष्योऽहं ब्राह्मणोऽहमित्येवं प्रतियन्ति,- देहे जाते सत्यात्मानं जातं देहे नष्टे सत्यात्मानं नष्टं च मन्यन्त इति तद्दृष्ट्योक्त'महमादिर्हि देवाना'मिति ।

देहेन्द्रियादिसङ्घातस्य कार्यत्वेन तत्तादात्म्याध्यासादिन्द्रादिजीवानां कार्यत्वेन सादित्वमीश्वरस्य तु तदभावादनादित्वम् । वस्तुतस्तु जीवोऽपीश्वरवदनादिरेवेति भावः ।

किंच—

योमामजमनादिं च वेत्ति लोकमहेश्वरम् ।
असम्मूढस्स मर्त्येषु सर्वपापैः प्रमुच्यते ॥३॥

य इति । यो मामजमनादिं च, यस्मादहमादिर्देवानां महर्षीणां च, न ममान्यो आदिर्विद्यते, अतोऽहमजोऽनादिश्च, अनादित्वमजत्वे हेतुः, तं मामजमनादिं च यो वेत्ति विजानाति लोकमहेश्वरं लोकानां महान्तमीश्वरं तुरीयमज्ञानतत्कार्यवर्जितमसम्मूढस्सम्मोहवर्जितः स मर्त्येषु मनुष्येषु सर्वपापैः सर्वैः पापैर्मतिपूर्वामतिपूर्वकृतैः प्रमुच्यते प्रमोक्ष्यते ॥३॥

---

इमे च देवत्वमनुष्यत्वादिजातिविशिष्टदेहा ईश्वरादेव जायन्त इति यतो वेति श्रुत्युपपत्तिः, अहमादिर्हि देवानामिति गीतोपपत्तिश्च ।

किं चायमीश्वरः स्वयं देहरहितस्सन्नेवाकाशादिभूतोत्पादनद्वारा भौतिकान्युत्पादयति सङ्कल्पवशादेव । यद्वा भूतानि भौतिकानि च युगपदेवोत्पादयति । अथ वा हिरण्यगर्भमादावुत्पाद्य तद्द्वारा भूतभौतिकोत्पत्तिं निर्वर्तयति । यद्वा स्वयमपि मायया कंचिद्देहमधिष्ठाय वर्तमानस्सन्नेव तन्नाभीकमलाद्ब्रह्माणमुत्पाद्य तेन सर्वं जगदुत्पादयतीति वा । एवमादयो बहवस्सृष्टिप्रकाराः श्रुतिसूत्रपुराणादिषु दृश्यन्ते ।

सर्वथा चेश्वर एव देवादिजगत्कर्तेत्याह—सर्वप्रकारैरिति । एवं देवा महर्षयश्च कार्यभूतदेवत्वमनुष्यत्वादिविशिष्टदेहादिसङ्घाताभिमानित्वात्साद्य एवेति तेषामहमेवादिर्मत्कार्यत्वाद्देहादिसङ्घातानाम् ॥२॥

य इति । ननु देवानां महर्षीणां च त्वमादिर्भवसि, तव पुनः क आदिरत आह—य इति । अहमेव सर्वस्य जगत आदिः, न मम कोऽप्यादिः । अन्यथा तस्याप्यन्य आदिरित्यनवस्थादोषापत्तेः । एवमनादित्वादेवाहमजः जन्मरहितः- उत्पादकाभावेनोत्पत्त्यभावात् । एवमजत्वेनाकार्यत्वादेवानन्याधीनस्थितिकोऽहं, कार्यं हि कारणाधीनस्थितिकम् । ततस्स्वतन्त्रत्वादहं सर्वलोकमहेश्वरो यस्यान्य ईश्वरो नास्ति स महेश्वरः यथा महाराजः । य एवंभूतं मामसंमोह ईश्वरो मत्तोऽन्य इत्याकारकमोहरहितस्सन् वेत्ति स्वात्मत्वेन जानाति मर्त्येषु मध्ये स एव विद्वान् सर्वपापैः प्रमुच्यते । ज्ञानान्तरभावित्वात्पापप्रहाणस्याह—प्रमोक्ष्यत इति । पापपदमुपलक्षणं पुण्यानामपि- तेषामपि बन्धकत्वेन पापत्वात्पापशब्दवाच्यत्वमिति वा । ततश्च संसारान्मोक्ष्यत इत्यर्थः । 'तद्विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपै'तीति श्रुतेः ।

---

१ न चात्र भिन्नेश्वरज्ञानादेव पुंसां पापक्षयो भविष्यतीति कथमभिन्नेश्वरज्ञानमवधारितं त्वयेति वाच्यं, ईश्वरतत्त्वज्ञानादेव पापक्षयः, न त्वीश्वरभ्रान्तिज्ञानादिति सिद्धान्तात् । ईश्वरतत्त्वस्य च जीवाभिन्नत्वेन भिन्नेश्वरज्ञानस्य भ्रान्तिज्ञानत्वेन पापनिवर्तनाक्षमत्वात् । प्रत्युत पापस्यैव वर्धकत्वात् । जीवरूपेण वर्तमानस्येश्वरस्य नित्यस्याजस्य जन्ममृत्युप्रमुखविकारसम्पादनस्य दोषावहत्वात् ।

नच कथमीश्वरस्य जीवरूपत्वमिति वाच्यं, 'तत्सृष्ट्वा तदेवानुप्राविशत्' 'ईश्वरो जीव प्रविष्टो भगवा'निति, 'ममैवांशो जीवलोको जीवभूतस्सनातन' इति, 'भगवानेक एवैष सर्वे ष्ववस्थितः। अमुष्य दुर्भगत्वं वा क्लेशो वा कर्मभिः कुत' इति- एवमादिश्रुतिस्मृतिपुराणप्रामाण

नच मायावच्छिन्नस्येश्वरस्य कथं बुद्ध्यवच्छिन्नजीवत्वमिति वाच्यं, यदेव चैतन्यं मायाव तदेव बुद्ध्यवच्छिन्नम्। चैतन्यस्यैकत्वादितीश्वरस्यैव जीवत्वोपपत्तेः। यथा महाकाशस्यैव घटा त्वोपपत्तिः। एवमीश्वरस्यैव जीवत्वा'दजो नित्यश्शाश्वत' इतीश्वरधर्मेणाजत्वनित्यत्वादीनां प्रसञ्जनं प्रावक्तमिहैव ग्रन्थे। न चाजत्वादीनामीश्वरधर्मत्वे विवदितव्यं, 'यो मामजमनादि' इतीहैवोक्तत्वात्।

न चेश्वरवज्जीवोऽजो नित्यश्चेत्येतावन्मात्रेण कथं जीवेश्वराभेदः? किञ्चिद्ज्ञत्वसर्वज्ञत्व बहुवैलक्षण्यसत्त्वादिति वाच्यं, किञ्चिद्ज्ञत्वादीनामाध्यासिकधर्मत्वात्। अविक्रिये निर्धर्मके बो आत्मनि किञ्चिद्ज्ञत्वादिविक्रियाऽयोगाज्जीवस्याप्यविक्रियात्मत्वस्य प्रागेवोक्तत्वात्। तस्माज्जीव भेश्वरज्ञानमेव यथार्थज्ञानत्वेन पापनिवर्तनक्षमं पुंसामिति स्थितम्।

अत एवोक्तं श्रुत्या- 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद पशु'रिति, 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चोरेणात्मापहारि' इति भारतेन च।

तस्माद्भिन्नेश्वरज्ञानिन आत्मानं यथावन्नैव विदन्ति। प्रत्युतान्यथैव विदन्तीति पापका एव ते- नतु निष्पापाः। तथा च पापैः प्रमुच्यत इति लिङ्गाच्च जीवाभिन्नेश्वरज्ञानमेवेह विव मिति ज्ञायते।

ननु इन्द्रादयो जीवास्सादय इति पूर्वश्लोकेनोक्त्वा इहाहमेवानादिरितीश्वरस्याना चोक्त्वा कथं जीवेश्वराभेदः प्रतिपाद्यतेऽनुन्मत्तेन व्यासेनेति चेत्, मैवं वादीः—देहादिसङ्घात देवादीनां सादित्वं पूर्वमुक्तं, तद्विलक्षणस्यात्मनस्त्वीश्वराभेद इहोच्यत इत्यदोषात्। देहादिस विलक्षणस्सच्चिदानन्द आत्मैव हीश्वरो नित्योऽजश्च। न ह्यात्मनोऽन्यः कश्चिदीश्वरो नामास्ति।

यत्तु रामानुजः—चेतनान्तरसजातीयो भगवानित्याकारकमोहरहितस्सन् यो मां चि द्विलक्षणतया निखिलहेयप्रत्यनीकानन्तकल्याणगुणनिलयं कर्मकृताचित्संसर्गरूपजन्मरहितत्वेन जीवविलक्षणमादिमदजत्ववतो मुक्तात्मनश्च विलक्षणमजमनादिमीश्वरं जानाति स सर्वपापैः प्रमुच्यत तत्तुच्छम्—चिद्रूपस्येश्वरस्य चिद्विलक्षणत्वायोगात्। 'केवलो निर्गुण'श्चेति श्रुत्युक्तनिर्गुणस्य निलयत्वायोगात्। जायमानदेहसंसर्गस्यैव जन्मरूपत्वेन कर्मकृताचित्संसर्गो जन्मेति वक्तुमयुक्तत्वा च गौरवत्वात्। ईश्वरस्याप्येतादृशजन्मसद्भावेनाजत्वाभावात्। बद्धजीववैलक्षण्यासिद्धेः। अ मत्त्वाजत्वयोर्विरुद्धधर्मयोरेकत्र सामानाधिकरण्यायोगेन मुक्तात्मनानादिमदजत्वसिद्धेः। यज्जायते द्व्यादिमत्, यथा घटः। यत्तु न जायते कथं तस्यादिमत्त्वम्। किंच मुक्तस्येश्वरसायुज्यमाप कथमीश्वराद्भेदः? येन मुक्तवैलक्षण्यमीश्वरस्य स्यात्। न चेश्वरसायुज्ये विवदितव्यं- 'ब्रह्मवि

इतश्चाहं महेश्वरो लोकानाम्—

बुद्धिर्ज्ञानमसम्मोहः क्षमा सत्यं दमश्शमः ।
सुखं दुःखं भवोऽभावो भयं चाभयमेव च ॥४॥

बुद्धिरिति । बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यं, तद्वन्तं बुद्धिमानिति हि वदन्ति । ज्ञानमात्मादिपदार्थानामवबोधः । असम्मोहः- प्रत्युत्पन्नेषु बोद्धव्येषु विवेकपूर्विका प्रवृत्तिः । क्षमा आक्रुष्टस्य ताडितस्य वा अविकृतचित्तता । सत्यं- यथादृष्टस्य यथाश्रुतस्य च आत्मानुभवस्य परबुद्धिसंक्रान्तये तथैवोच्चार्यमाणा वाक् सत्यमित्युच्यते । दमः- बाह्येन्द्रियोपशमः । शमः- अन्तःकरणस्योपशमः । सुखमाह्लादः । दुःखं सन्तापः । भव उद्भवः । अभावस्तद्विपर्ययः, भयं च त्रासः, अभयमेव च तद्विपरीतम् ॥४॥

अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।
भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ॥५॥

अहिंसेति । अहिंसा अपीडा प्राणिनाम् । समता समचित्तता । तुष्टिः सन्तोषः पर्याप्तबुद्धिर्लाभेषु । तप इन्द्रियसंयमपूर्वकं शरीरपीडनम् । दानं यथाशक्ति संविभागः ।

---

भव'तीति श्रुतेः । अपि च 'साक्षी चेता' इति श्रुत्युक्तस्य चेतनस्यैकस्येश्वरस्य, कथं चेतनान्तरविसजातीयत्वम् । नहि चेतनान्तरमस्ति येन तद्विसजातीयत्वं स्यादीश्वरस्य । 'नान्योऽतोऽस्ति द्रष्टा' इति श्रुत्या हि चेतनान्तरं निषिध्यते- इति । उक्तमपीदं पुन.पुनरुच्यते मन्दमत्यनुमहार्थम् ॥३॥

बुद्धिरिति, इतश्चेति । मम सर्वादित्वेन अनादित्वेन, सुरगणमहर्ष्याद्यविदितप्रभावत्वेन च केवलं न महेश्वरत्वं, किंतु हेत्वन्तरादपीत्यर्थः । बुद्धिर्नान्तःकरणं तस्य द्रव्यत्वेन ज्ञानादिगुणसहपाठायोगादित्यभिप्रेत्याह— अन्तःकरणस्येति । बुद्धिशब्दस्य तत्र प्रयोगे लोकप्रसिद्धिं दर्शयति— तद्वन्तमिति । तच्छब्दस्यान्त.करणस्य सूक्ष्माद्यर्थावबोधनसामर्थ्यमर्थः । बुद्धिमानिति । अन्यथा सर्वस्याप्यन्त.करणवत्त्वाविशेषादेकस्मिन् पुरुषे बुद्धिमत्त्वप्रसिद्धिर्न सङ्गच्छेतेति भावः । वदन्ति लोका इति शेषः । बोद्धुं शक्येषु बोद्धव्येषु बोद्धुं योग्येष्विति वा; विज्ञेयेष्वित्यर्थः । प्रत्युत्पन्नेषूत्पन्नोत्पन्नेषु सर्वेषु कार्येष्वित्यर्थः । प्रतेर्वीप्सार्थकत्वात् । 'सप्तम्या बहुलमभाव' इति बहुलग्रहणात्तदभावः । देहेन्द्रियादिसर्वपदार्थेष्विति यावत् । विवेकपूर्विका आत्मानात्मविवेकपूर्विकेत्यर्थः । उत्पन्नानीमानि सर्वाण्यपि कार्याणि देहादीन्यनात्मान एवेत्याकारको विवेकः । स पूर्वः प्रथमो यस्यास्सा विवेकपूर्विका विवेकपुरस्सरेत्यर्थः । मतिप्रवृत्तिः बुद्धिप्रवृत्तिः । असम्मोह इत्युच्यते । अनात्मस्वात्मेति मोहाभाव इति यावत् । आत्मानुभवस्य स्वानुभवसिद्धार्थस्येत्यर्थः । बाह्येन्द्रियाणि चक्षुरादीनि । अन्तःकरणमन्तरिन्द्रियं मनः । उपशमो निर्व्यापारता । तद्विपर्यय उत्पत्तिविपर्ययो नाश इति यावत् । तदभावो भयाभावः ॥४॥

अहिंसेति । सन्तोषमेव विवृणोति—पर्याप्तेति । लभ्यन्त इति लाभास्तेषु पर्याप्तबुद्धि-

यशो धर्मनिमित्ता कीर्तिः। अयशस्त्वधर्मनिमित्ताऽकीर्तिः। भवन्ति भावा यथोक्ता बुद्ध्या दयो भूतानां प्राणिनां मत्त एवेश्वरात् पृथग्विधा नानाविधाः स्वकर्मानुरूपेण ॥५॥

किं च—

महर्षयस्सप्त पूर्वे चत्वारो मनवस्तथा।
मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥६॥

महर्षय इति। महर्षयस्सप्त भृग्वादयः पूर्वेऽतीतकालसम्बन्धिनः, चत्वारो मनवः तथा सावर्णा इति प्रसिद्धाः, ते च मद्भावा मद्गतभावना वैष्णवेन सामर्थ्येनोपेताः, मानसा मनसैवोत्पादिता मया जाता उत्पन्नाः, येषां मनूनां महर्षीणां च सृष्टिर्लोके इमाः स्थावरजङ्गमलक्षणाः प्रजाः ॥६॥

एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः।
सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥७॥

एतामिति। एतां यथोक्तां विभूतिं विस्तारं योगं च युक्तिं चात्मनो घटनं, अथ वा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजं योग उच्यते, मम मदीयं योगं यो वेत्ति तत्त्वतः तत्त्वेन यथावदित्येतत्। सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्दर्शनस्थैर्यलक्षणेन युज्यते सम्बध्यते। नात्र संशयो नाऽस्मिन्नर्थे संशयोऽस्ति ॥७॥

---

स्वल्पबुद्धि। तृप्तिरिति यावत्। संयमो नियमनम्। शरीरपीडनमुपवासादिनेति भावः। शक्तिमनतिक्रम्य यथाशक्ति। संविभागो धनधान्यादेरर्थिभ्यो विभजनम्। अधर्मो निमित्तं यस्यास्साऽधर्मनिमित्ता अकीर्तिर्दुष्कीर्तिः। भूतानां पृथग्विधा भावा मत्त एव भवन्ति। नन्वेकस्य क्षमादिसद्गुणसर्जनादन्यस्याकीर्त्यादिदुर्गुणसर्जनाच्चेश्वरस्य वैषम्यदोषप्रसक्तिरत आह—स्वकर्मानुरूपेणेति। स्वेषां भूतानां यानि कर्माणि पुण्यपापादिलक्षणान्यदृष्टानि तदनुरूपेण ॥५॥

महर्षय इति। एवं लोकमहेश्वरत्वे हेत्वन्तरमुक्त्वा स्वप्रभावमेव दर्शयति पुनरित्याह—किंचेति। मद्भावाः पूर्वे सप्त महर्षयः। तथा चत्वारो मनवो मानसास्सन्तो जाताः। मद्भावा मानसाश्च सन्तो जाता इति वा। यद्यपि मनवश्चतुर्दश, तथापि तत्रैकस्मिन् मन्वन्तरे चतुर्णामेव प्रजासृष्टिहेतुत्वादुक्तं चत्वार इति। ब्रह्मसावर्णो रुद्रसावर्णो धर्मसावर्णो दक्षसावर्ण इति तेषां नामानि। मयि भावना येषां ते मद्भावा मच्चित्ता इत्यर्थः। मम विष्णोर्भावस्सामर्थ्यं येषां त इति वा मद्भावाः। लोके जगति इमा दृश्यमानाः प्रजा भूतानि ॥६॥

एतामिति। विस्तरं जगद्रूपमिति भावः। आत्मनो मम घटनं सङ्घटनं पितृपितामहादिरूपेण प्रजानां जगति कल्पनमिति यावत्। किं तत्सामर्थ्यमत आह—सर्वज्ञत्वमिति। ननु योगसामर्थ्ये कथं योगशब्दप्रवृत्तिरत आह—योगजमिति। उच्यते लक्षणयेति शेषः। कोऽसौ योगोऽत आह—सम्यगिति। सम्यग्दर्शनमहं ब्रह्मेति ज्ञानं तस्य स्थैर्यं दृढता तदेव लक्षणं स्वरूपं यस्य तेन तथोक्तेन। • अहंब्रह्मेत्याकारकदृढज्ञानमेव योगः, तेन युज्यते युक्तो भवति।

कीदृशेनाविकम्पेन योगेन युज्यत इत्युच्यते—

अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते ।
इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥८॥

अहमिति । अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिः । मत्त एव स्थितिनाशक्रियाफलोपभोगलक्षणं विक्रियारूपं सर्वं जगत् प्रवर्तते, इत्येवं मत्वा भजन्ते सेवन्ते मां बुधा अवगतपरमार्थतत्त्वाः, भावसमन्विता भावो भावना परमार्थतत्त्वाभिनिवेशः तेन समन्विताः संयुक्ता इत्यर्थः ॥८॥

---

ननु ईश्वरविभूत्यादिज्ञानाद्विदुषः कथमहंब्रह्मेतिज्ञानमिति चेदुच्यते—परब्रह्मण ईश्वरस्यैव स्वात्मत्वादिति ।

अस्मिन्नर्थे ईश्वरतत्त्वज्ञानाद्ब्रह्माहमिति सम्यग्दर्शनस्थैर्यं भवतीत्युक्तार्थे संशयो नास्ति- ईश्वरेण मयैव साक्षादुक्तत्वादिति भावः ।

यत्तु रामानुजः—विभूतिमैश्वर्यं, योगं कल्याणगुणगणं, योगेन भक्तियोगेनेति, तन्मन्दम्—ईश्वरे तदैश्वर्याद्यनभिज्ञस्यापि भक्तियोगदर्शनात् । तदभिज्ञस्य तस्मिन् भक्तियोगोत्पत्तेर्लोकत एव सिद्धत्वेन वचनस्य व्यर्थत्वाच्च । राजगतैश्वर्यादिगुणाभिज्ञा हि राजानं भजन्ते । योगशब्दस्य कल्याणगुणार्थप्रतिपादनमपि लोकशास्त्रविरुद्धम् ॥७॥

विदुषां सम्यग्दर्शनमेव दर्शयतीत्याह—कीदृशेनेति, अहमिति । अस्मच्छब्दोऽत्र लक्षणया चिन्मात्रपर इत्याह—परं ब्रह्मेति । वासुदेवशब्दो वसन्ति जगन्त्यस्मिन्निति व्युत्पत्त्या परमात्मपरः । वसति जगतीति व्युत्पत्त्या प्रत्यगात्मपरश्च । तथा च प्रत्यगभिन्नः परमात्मा वासुदेव इति वासुदेवाख्यः । प्रभव उपादानमुत्पत्तिहेतुरिति यावत् । मत्त एवेति वासुदेवाख्यात्परब्रह्मण एवेत्यर्थः । जगतः स्थितिनाशादयोऽपि मत्त एव भवन्तीत्यर्थः । मामात्मानम् ।

अयमाशयः—ईश्वराज्जगज्जन्मस्थितिलया भवन्तीति श्रूयते, स चेश्वरः सर्वेषु क्षेत्रेषु प्रत्यग्रूपेण वर्तत इति च श्रूयते, ततश्चाहमेवेश्वरः, मत्त एव सर्वं जगज्जायते वर्धते लीयते च, एवमीश्वरमात्मत्वेन मत्वा बुधास्स्वात्मानमेवेश्वरं भजन्त इति । यद्वा परब्रह्मणस्सकाशाज्जगज्जन्मादयो भवन्तीति ज्ञात्वा तमेव परमात्मानं स्वात्मभूतं बुधा भजन्त इति ।

परमार्थतत्त्वाभिनिवेश इति । परमार्थतत्त्वं ब्रह्म तस्मिन्नभिनिवेशोऽहमिति निश्चयः । अहं ब्रह्मेति दृढज्ञानमिति यावत् ।

यत्तु रामानुजः—ईश्वरः श्रीकृष्णो जगत्सृष्ट्यादिहेतुरिति ज्ञात्वा श्रीकृष्णाख्यं मां बुधा भक्तियुक्ता भजन्त इति, तन्मन्दम्—श्रीकृष्णावतारात्पूर्वोत्तरकालस्थानां कृष्णावतारेऽपि दूरस्थानां श्रीकृष्णभजनाऽसम्भवात्, सन्निहितानामपि विदुषां श्रीकृष्णदेहे ईश्वरबुद्ध्ययोगात्, आत्मनश्च सर्वव्यापित्वादिति ॥८॥

किंच—

मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ।
कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥९॥

मच्चित्ता इति । मच्चित्ता मयि चित्तं येषां ते मच्चित्ताः, मद्गतप्राणा मां गताः प्राप्ताः चक्षुरादयः प्राणा येषां ते मद्गतप्राणाः, मयि उपसंहृतकरणा इत्यर्थः । अथ वा मद्गतप्राणा मद्गतजीवना इत्येतत् । बोधयन्तोऽवगमयन्तः परस्परमन्योन्यं, कथयन्तश्च ज्ञानबलवीर्यादिधर्मैर्विशिष्टं मां, तुष्यन्ति च परितोषमुपयान्ति च, रमन्ति च रतिं च प्राप्नुवन्ति प्रियसङ्गत्येव ॥९॥

ये यथोक्तैः प्रकारैर्भजन्ते मां भक्ताः सन्तः—

तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ।
ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥१०॥

तेषामिति । तेषां सततयुक्तानां नित्याभियुक्तानां निवृत्तसर्वबाह्यैषणानां भजतां सेवमानानाम् । किमर्थित्वादिना कारणेन ? नेत्याह— प्रीतिपूर्वकं प्रीतिः स्नेहः तत्पूर्वकं मां

मच्चित्ता इति । देहगतानां प्राणानां चित्प्रतिबिम्बग्रहणासमर्थानामात्मगतत्वासम्भवादाह— चक्षुरादय इति । प्राणिति चेष्टते देह एभिरिति प्राणा इति व्युत्पत्त्या प्राणशब्दश्चक्षुरादिकरणपर इति भावः । चक्षुरादिविषयव्यापाराविषयत्वादात्मनः कथं तेषामात्मगतत्वमत आह—मय्युपसंहृतेति । आत्मनि चक्षुरादीनामुपसंहारो नाम निर्व्यापारत्वमेवेति बोध्यम् । मद्गतजीवना इति । आत्मस्वरूपानन्दानुभवसुखेनैव जीवन्त इत्यर्थः । आत्मस्वरूपानुसन्धानं विना क्षणमपि प्राणधारणामलभमाना इति यावत् । बोधयन्तो ज्ञापयन्तः । किं तदत आह— तत्त्वमिति । आत्मानमिति यावत् । रमन्ति रमन्ते परस्मैपदमार्षम् । दृष्टान्तमाह— प्रियसङ्गत्येवेति । इष्टवस्तुसङ्गमादविद्वांसो यथा रमन्ते तद्वदिति । यद्वा, प्रियस्य सङ्गत्या कामिन्यो यथा रमन्ते तद्वदिति । अनेन श्लोकेन ब्रह्माभ्यास उक्तः- 'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः' इति तल्लक्षणात् ।

तुष्यन्तीति । कृतकृत्यतोच्यते- अकृतकृत्यस्य कर्तव्यशेषवत्त्वेन तुष्ट्ययोगात् । इयं च कृतकृत्यता गृहस्थस्य दुर्लभा- तस्य कृत्यशेषसद्भावात् । अतस्सन्न्यासिविषयमेवैतत् । तत्रापि परमहंसविषयमेव- अन्येषां सन्न्यासिनां दण्डतर्पणादिकृत्यसद्भावात् । एवं कृतकृत्यत्वादेवैते आत्मारामा भवन्ति- तेषां विषये प्रयोजनाभावात् । विषयसुखस्य क्षुद्रत्वादात्मानन्दस्य शाश्वतत्वाच्चेति ॥९॥

तेषामिति । सततयुक्तानां नित्यमात्मनि चित्तसमाधानशालिनाम् । किमिदमात्मभजनं सोपाधिकमित्याक्षिपति— किमिति । अर्थित्वमर्थादिकामित्वम् । आदिशब्दादार्तिपरिहारादिकं ग्राह्यम् । प्रीतिपूर्वकमिति आत्मनि निरतिशयप्रीतेरस्वतस्सिद्धत्वात्तत्प्रीतिर्बलात्कारेण सम्पाद्यतेति बोध्यम् ।

भजतामित्यर्थः । ददामि प्रयच्छामि बुद्धियोगं बुद्धिः सम्यग्दर्शनं मत्तत्त्वविषयं तेन योगो बुद्धियोगः तं बुद्धियोगं, येन बुद्धियोगेन सम्यग्दर्शनलक्षणेन मां परमेश्वरमात्मभूतमात्मत्वेनोपयान्ति प्रतिपद्यन्ते, के ते? ये मच्चित्तत्वादिप्रकारैर्मां भजन्ते ॥१०॥

किमर्थं, कस्य वा, त्वत्प्राप्तिप्रतिबन्धहेतोर्नाशकं बुद्धियोगं तेषां त्वद्भक्तानां ददासीत्यपेक्षायामाह—

तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।
नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥११॥

तेषामिति । तेषामेव कथं नु नाम श्रेयः स्यादित्यनुकम्पार्थं दयाहेतोरहमज्ञानजमविवेकतो जातं मिथ्याप्रत्ययलक्षणं मोहान्धकारं तमो नाशयामि, आत्मभावस्थः—

---

भजतामिति । प्रमातॄणामिति भावः । ददामीति । अहमात्मेति शेषः । 'मत्तः स्मृतिः ज्ञानमपोहनं' चेति वक्ष्यमाणत्वादिति भावः । नच निर्विक्रियस्यात्मनः कथं दातृत्वविकार इति वाच्यं, आत्मस्वरूपानुसन्धानवशात्पुंसामात्मैवाहंपरब्रह्मेति सम्यग्दर्शनं जायत इत्यभिप्रायेणात्मज्ञानं ददातीत्युक्तत्वात् । न हि मुख्यमत्र दानं विवक्षितं, येनोक्तदोषः स्यात् । योगस्संयोगः । प्रतिपद्यन्ते निश्चयेन जानन्तीति यावत् । अथ वा प्राप्नुवन्तीत्येव । ब्रह्मैव भवन्तीति यावत् । ज्ञानिनस्सम्यग्दर्शनेन स्वस्मिन् प्रमातृत्वबुद्धिं विहायात्मत्वनिश्चयं प्रतिपद्य ब्रह्मस्वरूपेणैव तिष्ठन्तीति परमार्थः ॥१०॥

तेषामिति । ननु किं बुद्धियोगदानेन? साक्षात्सायुज्यमेव भक्तानां देहीति शङ्कायां बुद्धियोगं विना मत्प्राप्तिप्रतिबन्धस्याज्ञानस्य नाशो न स्यादिति भगवत्प्राप्तिप्रतिबन्धकाज्ञाननाशनार्थं बुद्धियोगदानमावश्यकमित्युत्तरमुच्यते । किंच भक्तानां बुद्धियोगदानेन तव किं वा फलमिति शङ्कायां कृपैव फलमित्युत्तरं चोच्यते श्लोकेनानेनेत्याह—किमर्थमिति । अनुकम्पाया आकारं दर्शयति—कथन्विति । ननु निर्विकारस्यात्मनः कथं भक्तश्रेयोऽभिलाषित्वमिति चेन्नैषदोषः—मायया तदुपपत्तेः ।

अयं भावः—यावज्जीवानामस्त्यज्ञानं तावत्परोक्ष एवात्मापीश्वरः । स च मायावच्छिन्न एव । जीवाज्ञानस्यैव मायायाः तदवच्छेदकत्वात् । अस्य च मायावच्छिन्नस्येश्वरस्य मायया कृपालुत्वादिकमुचितमेव । यदा पुनर्ज्ञानेन तदज्ञानं नाशितं तदा त्वपरोक्ष एवेश्वर आत्मा । स चानवच्छिन्न एव । मायाया अभावात् । तस्य तु निर्विकारत्वेन कृपालुत्वादिकमयुक्तमिति यावदज्ञानमात्मनोऽपीश्वरस्य भक्तश्रेयोऽभिलाषित्वमुपपद्यत एवेति ।

ननु यो बुद्धियोगेन भक्तानामज्ञानं नाशयत्यनुकम्पार्थं स किं मायावच्छिन्न उतान्तःकरणावच्छिन्नः? नाद्यः- तस्यात्मभावस्थत्वाभावात् । नान्त्यः- तस्य परिच्छिन्नत्वेन सामर्थ्याभावादिति चेत्, मैवम्—मायावच्छिन्नस्सर्वव्यापी य एवेश्वरः तस्यैवान्तःकरणावच्छिन्नत्वेन आत्मभावस्थत्वसम्भवात् । अन्यथा ईश्वरस्य सर्वव्यापित्वस्यैव नाशप्रसङ्गात् । अत एव 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन! तिष्ठति' इति वक्ष्यते भगवतैव । नचेश्वरस्यान्तःकरणत्वावच्छिन्नत्वे सति परिच्छिन्नत्वेनासर्वज्ञत्वादिकं

आत्मनो भावोऽन्तःकरणाशयः तस्मिन्नेव स्थितः सन् ज्ञानदीपेन विवेकप्रत्ययरूपेण भक्तिप्रसादस्नेहाभिषिक्तेन मद्भावनाभिनिवेशवातेरितेन ब्रह्मचर्यादिसाधनसंस्कारवत्प्रज्ञावर्तिना विरक्तान्तःकरणाधारेण विषयव्यावृत्तचित्तरागद्वेषाकलुषीकृतनिवातापवरकस्थेन नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ज्ञानदीपेनेत्यर्थः ॥११॥

सम्भवेदिति वाच्यं, अन्तःकरणावच्छिन्नस्यापि सिद्धान्तेऽपरिच्छिन्नत्वाभ्युपगमात् । परिच्छिन्नत्वे तु जीवस्य घटवदनित्यत्वादिप्रसङ्गात् । नचान्तःकरणावच्छिन्ने आत्मनीश्वरे सार्वज्ञ्यं नोपलभ्यत इति वाच्यं, उपलभ्यत एव तदीश्वरेण । न त्वज्ञेन त्वया, अज्ञत्वादेव तव । नचान्तःकरणावच्छिन्नादन्य एव मायावच्छिन्नः कश्चिदीश्वरो हृद्देशे तिष्ठतीति वाच्यं, प्रमाणाभावादनुभवाभावात् । ईश्वरस्यैव जीवरूपेण क्षेत्रेष्वनुप्रवेशश्रवणात् । नच 'द्वा सुपर्णा'विति श्रुतिः प्रमाणमिति वाच्यं, चिदाभासप्रत्यगात्मपरत्वात्तच्छ्रुतेः, अथ वा बुद्धिचिदात्मपरत्वात् । नच चिदाभास एव जीवः, प्रत्यगात्मा त्वीश्वर इति वाच्यं, सुषुप्तौ चिदाभासलयस्य त्वयैवानुभाव्यमानत्वेन तव प्रत्यगात्मत्वात् । चिदाभासो हि संसारी । न हि सुषुप्तौ स दृश्यते- 'अन्धोऽप्यनन्धो भवति' इत्यादिश्रुतेश्च ।

तस्मात्प्रत्यग्रूपेण हृद्देशस्थित ईश्वर एव यावदज्ञानं परोक्षस्सन् भक्तानां बुद्धियोगं ददाति माययेति सर्वमनवद्यम् ।

अविवेक आत्मानात्मविवेकाभावः । मिथ्याप्रत्ययोऽनात्मनि देहादावहंबुद्धिः । मोह एवान्धकारः तं मोहान्धकारं तमोमोह एव तमोऽन्धकार इति श्लिष्टरूपकमिति भावः । आत्मभाव आत्मनोऽन्तःकरणस्य भाव आशय आत्माकारवृत्तिविशेष इत्यर्थः । यद्वा आत्मनस्स्वस्य भावोऽन्तःकरणाशयः । बुद्धिवृत्तिरित्यर्थः । तस्मिन् स्थितस्सन् प्रतिफलनरूपेणेति भावः । विषयत्वेन रूपेणेति वा । ज्ञानमात्मानात्मविवेकबुद्धिः, तदेव दीपः तेन ज्ञानदीपेन मोहेऽन्धकारत्वरूपणाद्ज्ञाने दीपत्वरूपणम् । एवं ज्ञानदीप इति रूपणादेव तम इत्यत्र श्लिष्टरूपकमुक्तम् । मूले ज्ञानदीप इत्येकदेशविवर्तिरूपकमुक्तं तदेव सावयवरूपकतया निर्दिशति भाष्यकारः—भक्तिस्नेहेत्यादिना ।

भक्तिरात्मप्रीतिरेव स्नेहस्तैलं तेन सिक्तेन । मद्भावनाभिनिवेशो मद्भावाग्रह एव वातः स्वल्पवायुः तेनेरितेन । अत्यन्तं वाताभावेऽधिकवातसत्त्वे वा दीपस्थित्ययोगादिति भावः । ब्रह्मचर्यादिसाधनसंस्कारवती या प्रज्ञा सैव वर्तिर्यस्य तेन । विरक्तं यदन्तःकरणं तदेवाधारः पात्रं यस्य तेन, विषयेभ्यो व्यावृत्तमत एव रागद्वेषादिभिरकलुषीकृतं चित्तं तदेव निवातापवरकं वातरहितं निकेतनं तत्र तिष्ठतीति तत्स्थं तेन, चित्तान्तःकरणयोरेकात्मकत्वेऽपि व्यापारभेदात्पृथङ्निर्देशः । अन्तःकरणं मनः, चित्तं बुद्धिरिति विवेक इति रूपणम् ।

अथ भास्वतेति विशेषणं व्याकरोति— नित्येति । नित्यं सदा प्रवृत्तं यदेकाग्रं ध्यानं तस्माज्जनितमुदितं यत्सम्यग्दर्शनं ब्रह्मात्मसाक्षात्कारस्तदेव भाः दीप्तिस्तद्वता नित्यप्रवृत्तैकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता । भा अस्यास्तीति भास्वानिति 'तदस्यास्त्यस्मि'न्निति मतुप् ।

यथोक्तां भगवतो विभूतिं योगं च श्रुत्वाऽर्जुन उवाच—

अर्जुन उवाच— परं ब्रह्म परं धाम पवित्रं परमं भवान् ।
पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥१२॥

परमिति । परं ब्रह्म परमात्मा परं धाम परं तेजः पवित्रं पावनं, परमं प्रकृष्टं भवान्। पुरुषं शाश्वतं नित्यं दिव्यं दिवि भवं आदिदेवं सर्वदेवानामादौ भवमादिदेवमजं विभुं विभवनशीलम् ॥१२॥

ईदृशम्—

आहुस्त्वामृषयस्सर्वे देवर्षिर्नारदस्तथा ।
असितो देवलो व्यासस्स्वयं चैव ब्रवीषि मे ॥१३॥

आहुरिति । आहुः कथयन्ति त्वां ऋषयः वसिष्ठादयः, सर्वे देवर्षिर्नारदस्तथा । असितो देवलोऽपि एवमेवाह, व्यासश्च, स्वयं चैव त्वं च ब्रवीषि मे ॥१३॥

सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।
न हि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥१४॥

सर्वमिति । सर्वमेतद्यथोक्तं ऋषिभिस्त्वया च एतदृतं सत्यमेव मन्ये, यन्मां प्रति वदसि भाषसे हे केशव ! न हि ते तव भगवन् व्यक्तिं प्रभवं विदुः न देवाः, न दानवाः ॥१४॥

---

अहं तेषामेवानुकम्पार्थमात्मभावस्थस्सन् भास्वता ज्ञानदीपेनाज्ञानजं तमो नाशयामि । अहमनुकम्पार्थं तेषामेवेति वा । तस्मादीश्वरदत्तबुद्धियोगस्य भगवत्प्राप्तिप्रतिबन्धकाज्ञाननाशनमेव कृत्यमिति सिद्धम् ॥११॥

परमिति । भवान् परमं पवित्रं परं धाम परं ब्रह्म भवति । देवर्षिर्नारदः । असितः, देवलः, व्यासः, एवमाद्यास्सर्वे ऋषयः त्वां शाश्वतं दिव्यमादिदेवमजं विभुं पुरुषमाहुः । स्वयं चैव मे ब्रवीषीति श्लोकद्वयान्वयः। ब्रह्मशब्दस्य प्रकृत्यादिपरत्वात्तद्व्युदासाय परत्वविशेषणम् । धामशब्दस्य दीपादिपरत्वात्तद्व्युदासाय परत्वविशेषणम् । धाम चात्र ज्ञानम् । चिन्मयस्येश्वरस्य अग्न्यादितेजोरूपत्वाभावात् । गङ्गादीनामपि पवित्रत्वात्तद्व्युदासाय परमत्वविशेषणम् । दिवि हृदयाकाशे भवतीति दिव्यः, देवानामादिरादिदेवः; आदिश्चासौ देवः आदिदेव इति वा समासः । अर्थस्त्वेक एव । विभवनं व्यापनं नियमनं वा शीलं यस्य तं विभवनशीलम् ।

अत्र सर्वे ऋषयः त्वां शाश्वतत्वादिविशेषणविशिष्टमाहुः । देवर्षिर्नारदस्तथाऽऽह । असितो देवलोऽप्येवमाह । व्यासश्चैवमाहेत्यप्यन्वयो भाष्याभिमत इति बोध्यम् ।

भवानित्यस्य त्वामित्यस्य च श्रीकृष्णशरीरावच्छिन्नं चैतन्यमर्थः । तस्यैव परब्रह्मत्वादिविशेषणविशिष्टत्वात् । यद्यप्यर्जुनशरीरावच्छिन्नं चैतन्यमप्येवंविधमेव । तथापि नार्जुनस्यैतावताप्यात्मनीश्वरप्रत्यय आसीदिति बोध्यम्। अथ वा भवानित्यस्य त्वामित्यस्य च चिन्मय आत्मेत्येवार्थः ॥१२-१३॥

सर्वमिति । हे केशव ! त्वं मां प्रति यद्वदसि तदेतत्सर्वमृतं मन्ये । हे भगवन् ! देवा

यतः त्वं देवादीनामादिः, अतः—

स्वयमेवात्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम !
भूतभावन ! भूतेश ! देवदेव ! जगत्पते ! ॥१५॥

स्वयमिति । स्वयमेवात्मनाऽऽत्मानं वेत्थ जानासि, त्वं निरतिशयज्ञानैश्वर्यबलादि-शक्तिमन्तमीश्वरं पुरुषोत्तम । भूतानि भावयतीति भूतभावनः, तस्य सम्बुद्धिः हे भूतभावन! भूतेश भूतानामीशो भूतेशः, तस्य सम्बुद्धिः हे भूतेश ! हे देवदेव ! जगत्पते ! ॥१५॥

वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ।
याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥१६॥

वक्तुमिति । वक्तुं कथयितुमर्हस्यशेषेण । दिव्या हि आत्मविभूतयः, आत्मनो विभूतयो याः ताः वक्तुमर्हसि । याभिर्विभूतिभिरात्मनो माहात्म्यविस्तरैरिमान् लोकान् त्वं व्याप्य तिष्ठसि ॥१६॥

---

दानवाश्च ते व्यक्तिं न विदुर्हि । हिः प्रसिद्धौ । प्रभवमादिं न विदुः । तवाऽनादित्वेनादेरभावा-दिति भावः ॥१४॥

स्वयमिति । हे पुरुषोत्तम ! हे भूतभावन ! हेभूतेश ! हे देवदेव ! हे जगत्पते ! त्वं स्वयमेवात्म-नात्मानं वेत्थ । आत्मस्वरूपज्ञानेनैवेत्यर्थः । पुरुषोत्तमशब्दं भगवान् स्वयमेव व्याख्यास्यति-- 'यस्मा-त्क्षरमतीतोऽहमक्षरादपि चोत्तमः । अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तम' इति । अतो नात्र व्याख्यात आचार्यैः ।

सर्वाणि भूतानि प्रकृतिश्च पुरुषशब्दवाच्याः, तेभ्यः पुरुषेभ्य उत्तमः पुरुषोत्तमः । यद्वा पुरुष-श्चासावुत्तमश्च पुरुषोत्तमः; क्षराक्षराभ्यामुत्तमः पुरुषोऽयमित्यर्थः । पूर्णत्वात्पुरि शयनाद्वा पुरुष इति निरुक्तिः पुरुषशब्दस्य पुरैव दर्शिता । पुरुषेभ्यो जीवेभ्यस्संसारिभ्यश्चिदाभासेभ्य उत्तमः । असंसा-रित्वादात्मनः पुरुषोत्तम इति वा ।

भावयत्युत्पादयति ईशित. नियामक प्रभो इति यावत् । देवानामपि देवः प्रभुर्देवदेवस्तत्स-म्बुद्धिः । जगतः पतिः प्रभुः पालकः जगत्पतिः तत्सम्बुद्धिः ।

यस्मात्त्वमुत्तमः पुरुषः, यस्माच्च जगत्सृष्ट्यादिहेतुः, यस्माच्च जगन्नियामकः, यस्माच्च देवाना-मधिपतिस्तस्मात्त्वमेव त्वां वेत्सि, न त्वन्यः कोऽपि प्राणी त्वां वेद । त्वज्जन्यत्वात्त्वत्परतन्त्रत्वाच्च सर्वस्येति भावः ॥१५॥

वक्तुमिति । यत एवं ततः । या दिव्या आत्मविभूतयस्ता अशेषेण वक्तुमर्हसि हि । त्व-मिमान् लोकान् याभिर्विभूतिभिर्व्याप्य तिष्ठसि । यद्वा याभिर्विभूतिभिस्त्वमिमान् लोकान् व्याप्य तिष्ठसि ! याश्च दिव्या आत्मविभूतयस्ता अशेषेण वक्तुमर्हसि हि ॥१६॥

कथं विद्यामहं योगिन् त्वां सदा परिचिन्तयन् ।
केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥१७॥

कथमिति । कथं विद्यां विजानीयामहं हे योगिन् त्वां सदा परिचिन्तयन् केषु केषु च भावेषु वस्तुषु चिन्त्योऽसि ध्येयोऽसि भगवन् मया ॥१७॥

विस्तरेणात्मनो योगं विभूतिं च जनार्दन ।
भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥१८॥

विस्तरेणेति । विस्तरेणात्मनो योगं योगैश्वर्यशक्तिविशेषं विभूतिं च विस्तरं ध्येयपदार्थानां हे जनार्दन ! अर्दतेः गतिकर्मणो रूपमसुराणां देवप्रतिपक्षभूतानां जनानां नरकादिगमयितृत्वात् जनार्दनः, अभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैः याच्यत इति वा । भूयः पूर्वमुक्तमपि कथय, तृप्तिः परितोषः हि यस्मान्नास्ति मे मम शृण्वतः त्वन्मुखनिःसृतं वाक्यामृतम् ॥१८॥

श्रीभगवानुवाच—हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ।
प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥१९॥

हन्तेति । हन्त ! इदानीं ते तव दिव्या दिवि भवा आत्मविभूतयो आत्मनो मम

---

कथमिति । हे योगिन् ! त्वां सदा कथं परिचिन्तयन्नहं विद्याम् ? हे भगवन् ! त्वं मया केषु केषु च भावेषु चिन्त्योऽसि । योगः सम्यग्दर्शनमणिमाद्यैश्वर्ययोगो वाऽस्यास्तीति योगी तत्सम्बुद्धिः ॥१७॥

विस्तरेणेति । हे जनार्दन ! आत्मनो योगं विभूतिं च विस्तरेण भूयः कथय । हि अमृतं शृण्वतो मे तृप्तिर्नास्ति । ननूक्त एव मम योगो विस्तरश्चेत्यत आह—विस्तरेणेति । संक्षेपेणोक्तावस्मान्नास्ति मम तृप्तिरिति भावः । कोऽसौ योगोऽत आह—ऐश्वर्यशक्तिविशेषमिति । विस्तरं समृद्धिम् । केषां विस्तरोऽत आह—ध्येयेति । ध्येयाश्चिन्त्याः । पदार्था आदित्यादयः । येषु भावेषु भगवांश्चिन्त्यस्तेऽपि भावा भगवदाश्रयत्वेन चिन्त्या एवेति भावः ।

गतिकर्मण इति । गतिर्गमनं कर्म क्रिया धात्वर्थ इति यावत् । यस्य तस्य तथोक्तस्य, अर्दतेः 'अर्द गतियाचनयोः' रिति धातोः रूपमर्दनमिति । अर्दयति गमयतीत्यर्दनः । जनानामर्दनो जनार्दनः । कान् किं गमयतीत्यत आह—असुराणां नरकादिगमयितृत्वादिति । आदिपदात्पाताशादिग्रहणम् । असुराणामिति कर्मणि षष्ठी । देवप्रतिपक्षत्वादसुरान्नरकादि गमयतीत्याह—देवेति । भगवतो देवपक्षपातित्वाद्राक्षसान्तकत्वाच्चेति भावः । शमदमदयादिसद्गुणसम्पत्तिमत्सु भगवतः प्रीतिस्तादृशाश्च देवा एवेति बोध्यम् । अर्दतेर्याञ्चार्थत्वाद्व्युत्पत्त्यन्तरमाह—अभ्युदयेति । जनैर्भक्तैरर्द्यते याच्यते अभ्युदयरूपं निःश्रेयसरूपं वा पुरुषार्थनामकं प्रयोजनमिति जनार्दनः । याचतेर्द्विकर्मकत्वादभ्युदयेत्यादिकमुक्तम् । जना अभ्युदयादिकमेनं भगवन्तं याचन्त इत्यर्थः । किं तदमृतमत आह—वाक्यामृतमिति । वाक्यरूपममृतमित्यर्थः ॥१८॥

हन्तेति । हन्तेत्याश्चर्ये । दिव्या इति । दिवि आकाशतुल्ये ब्रह्मणि भवन्तीति भवाः

विभूतयो याः ताः कथयिष्यामीत्येतत् । प्राधान्यतो यत्र यत्र प्रधाना या या विभूतिः तां तां प्रधानां प्राधान्यतः कथयिष्याम्यहं कुरुश्रेष्ठ ! अशेषतस्तु वर्षशतेनापि न शक्या वक्तुं, यतो नास्त्यन्तो विस्तरस्य मे मम विभूतीनामित्यर्थः ॥१९॥

तत्र प्रथममेव तावच्छृणु—

अहमात्मा गुडाकेश ! सर्वभूताशयस्थितः ।
अहमादिश्च मध्यं च भूतानामन्त एव च ॥२०॥

अहमिति । अहमात्मा प्रत्यगात्मा गुडाकेश ! गुडाका निद्रा तस्याः ईशो गुडाकेशः, जितनिद्र इत्यर्थः । घनकेश इति वा । सर्वभूताशयस्थितः सर्वेषां भूतानामाशयेऽन्तर्हृदि स्थितोऽहमात्मा प्रत्यगात्मा नित्यं ध्येयः । तदशक्तेन चोत्तरेषु भावेषु चिन्त्योऽहं, चिन्तयितुं शक्यो यस्मादहमेवादिर्भूतानां कारणं तथा मध्यं च स्थित्यन्तः प्रलयश्च ॥२०॥

ब्रह्माख्याधिष्ठाने मायया कल्पिता इति भावः । यत्रयत्र जातौ या या व्यक्तिः प्रधाना तां तामात्मविभूतिं कथयिष्यामीत्यर्थः । विभूतीनामिति । भगवत्यात्मनि ब्रह्मणि कल्पिता मायया चराचरात्मकाः सर्वे पदार्था विभूतिशब्देनोच्यन्ते । विशेषेण भूतिर्भवनं विभूतिरिति व्युत्पत्तेः । एकरूपेण स्थितो ह्यात्मा मायया बहुरूपो भवति । अन्तोऽवधिः, नतु नाशः- विभूतीनां नश्वरत्वात् ॥१९॥

अहमिति । केषु केषु भावेषु कथं वा तव चिन्तनमित्यर्जुनस्य यः प्रश्नस्तत्रोत्तरं तावद्वक्ती-त्याह—तत्रेति । हेगुडाकेश ! सर्वभूताशयस्थित आत्माऽहमेव । भूतानामादिर्मध्यमन्तश्चाहमेव ।

'निद्रालस्ये गुडाके स्या'दित्यभिधानादाह—गुडाका निद्रेति, जितनिद्र इति । परिभूत-तमोगुण इत्यर्थः । अतएव जितालस्योऽपि गुडाकेश इत्युच्यते । निद्रालस्ययोस्तमोगुणकार्यत्वात् । अर्थान्तरमाह—घनेति । वनवासादिषु तपश्चर्यया जटीभूतत्वेन गुडवद्घनाः केशा यस्य स गुडाकेशः । गुडकेश इति भवितव्ये पृषोदरादित्वादाकारः ।

हृदि पदार्थे प्रत्यग्रूपेणेश्वरो नित्यं ध्येय इत्ययं प्रथमः पक्षः । अत एव लीलाशुकः—'उपासता-मात्मविदः पुराणाः परं पुमांसं निहितं गुहायाम् । वयं यशोदाशिशुबाललीलाकथासुधासिन्धुषु लील-यामः' इत्यवोचत् ।

तदशक्तेनेति । तस्मिन् प्रत्यगात्मध्यानेऽशक्तेनासमर्थेन तूत्तरेषु वक्ष्यमाणेष्वादित्यादिष्वित्यर्थः । ननु कुतस्त्वमेव चिन्त्य इत्यत आह—अहमिति । मत्त एव भूतानि जायन्ते, मय्येव लीयन्ते, भूतानामन्तश्चाहमेव स्थित इत्यहमेव ध्येयः । कश्चिद्ध्येयः कारणं तु ध्येय इति श्रुतेः । मम कार-णत्वान्मद्भिन्नस्य सर्वस्य मदात्मकत्वाच्चेति भावः ।

रामानुजस्तु—अहमात्मतया सर्वभूताशयस्थित इति वदन् प्रत्यगात्मनोऽप्यन्तःस्थितोऽयं पर-मात्मेति बभाषे । यस्सर्वेषु भूतेषु तिष्ठन् य आत्मनि तिष्ठन्नित्यन्तर्यामिब्राह्मणमत्र प्रमाणत्वेनोप-

एवं च ध्येयोऽहम्—

आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान्।
मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥२१॥

आदित्यानामिति। आदित्यानां द्वादशादित्यानां विष्णुर्नामाऽऽदित्योऽहं, ज्योतिषां रविः प्रकाशयितॄणामंशुमान्रश्मिमान्। मरीचिर्नाम मरुतां मरुद्देवताभेदानामस्मि। नक्षत्राणामहं शशी चन्द्रमाः ॥२१॥

वेदानां सामवेदोऽस्मि देवानामस्मि वासवः।
इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥२२॥

वेदानामिति। वेदानां मध्ये सामवेदोऽस्मि। देवानां रुद्रादित्यादीनां वासव

---

न्यन्तत्वाच्च, तदेतन्मन्दम्—प्रत्यगात्मनोऽन्यस्य परमात्मनो हृद्देशेऽनुपलम्भात्। मनआदिसर्वप्रपञ्चाभावसाक्षित्वेन स्वस्य प्रत्यगात्मन एव स्फुरणात्समाधौ। निरन्तरप्रज्ञानघने आत्मन्यन्यस्य वस्तुमनवकाशाच्च। ब्राह्मणे तु भूतशब्दः प्राणिपरः, आत्मशब्दस्तु बुद्धिपर इति न तस्योक्तार्थे प्रामाण्यम् ॥२०॥

आदित्यानामिति। अनेन च विष्ण्वादयो मद्विभूतय इति कथनेन विष्ण्वादिभावेष्वीश्वरस्य ध्येयत्वं तेषां भावानां चेश्वरात्मकतया ध्येयत्वं सूच्यते। आदित्यानां विष्णुरहं भवामीति शेषः। तथा च विष्ण्वाद्यादित्ये ध्येय ईश्वरो हिरण्मयपुरुषरूपेणेति द्योत्यते। 'ध्येयस्सदा सवितृमण्डलमध्यवर्ती नारायणस्सरसिजासनसन्निविष्टः' इति स्मृतेः। ज्योतिषां नक्षत्रादीनां मध्ये अंशुमान् रविरहम्। अनेन च रवेस्तन्मण्डलस्थपुरुषस्य च ध्येयत्वं सूच्यते। मरुतां मरुन्नामकदेवताविशेषाणां मध्ये मरीचिरहम्। अनेन च मरीचेस्तदन्तरपुरुषस्य च ध्येयत्वं सूच्यते। नक्षत्राणां मध्ये शश्यहम्। अनेन चन्द्रस्य तन्मण्डलस्थहयग्रीवस्य च ध्येयत्वं सूच्यते। एवमुत्तरत्राप्यूह्यम्।

ननु चन्द्रस्य नक्षत्रजातीयत्वाभावात्कथं निर्धारणे षष्ठीति चेत्, उच्यते—भगोलगतानां निशि भासमानानां ज्योतिःपिण्डानां नक्षत्रपदवाच्यत्वाच्चन्द्रोऽपि तादृश एवेति नक्षत्रत्वमस्ति चन्द्रस्य। परं तु स्थूलस्य ज्योतिःपिण्डस्य चन्द्रपदवाच्यत्वं, सूक्ष्माणां तु तेषां नक्षत्रपदवाच्यत्वं च लोकप्रसिद्धमिति। यद्वा नक्षत्राणामित्यस्य निशि भगोले भासमानानां ज्योतिःपिण्डानामित्येवार्थो वाच्यः।

वस्तुतस्तु 'यो वा इह यजमानोऽमुं लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्व'मिति श्रुतेर्यजनानेन पुण्यफलभोगार्थं देहान्ते गन्तव्या लोका नक्षत्राणीत्युच्यन्ते। श्रुतौ नक्षत इत्यस्य गच्छतीत्यर्थः। नक्षते गच्छति यजमान एतदिति नक्षत्रमिति व्युत्पत्तिः। तथा च शशी च नक्षत्रमेव- इष्टाधिकारिगन्तव्यलोकत्वाच्छशिन इति।

न च नक्षत्राणामधिपतिः शश्यहमिति व्याख्येयमिति वाच्यं, प्रकरणविरोधात्। आदित्यानामहं विष्णुरित्यादिषु निर्धारणषष्ठ्या एव प्रकृतत्वात् ॥२१॥

वेदानामिति। यद्यपि मन इन्द्रियं नेति वेदान्तिनामभ्युपगमः तदेकदेशिभिर्मनस इन्द्रियत्व-

इन्द्रोऽस्मि । इन्द्रियाणामेकादशानां चक्षुरादीनां मनश्चास्मि, सङ्कल्पविकल्पात्मकं मनश्चास्मि । भूतानामस्मि चेतनाः कार्यकरणसङ्घाते नित्याभिव्यक्ता बुद्धेर्वृत्तिः चेतना ॥२२॥

रुद्राणां शङ्करश्चास्मि वित्तेशो यक्षरक्षसाम् ।
वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥२३॥

रुद्राणामिति । रुद्राणामेकादशानां शङ्करश्चास्मि, वित्तेशः कुबेरो यक्षरक्षसां यक्षाणां रक्षसां च । वसूनामष्टानां पावकश्चास्म्यग्निः । मेरुः शिखरिणां शिखरवतामहम् ॥२३॥

पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम् ।
सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥२४॥

पुरोधसामिति । पुरोधसां राजपुरोहितानां च मुख्यं प्रधानं मां विद्धि जानीहि हे पार्थ ! बृहस्पतिम् । सहि इन्द्रस्येति मुख्यस्स्यात्पुरोधाः । सेनानीनां सेनापतीनामहं

---

स्याभ्युपगतत्वादेकादशेन्द्रियाणीत्युक्तम् । मनस इन्द्रियत्वे च प्रमाणमिदमेव गीतावचनं भाष्यवचनं च । न्यायादिमतानुरोधेन त्वा मनस इन्द्रियत्वमत्रोक्तमिति मनसोऽनिन्द्रियत्ववादिन आहुः ।

मनःपूर्वकत्वाच्चक्षुरादिव्यापारस्य मनस उत्कृष्टत्वमिन्द्रियाणाम् । भूतानां सर्वप्राणिसम्बन्धि परिणामानां मध्ये चेतना बुद्धेस्स्पष्टा वृत्तिरहमस्मि । भूतानां कार्यकरणानां देहादीनां मध्ये चेतना स्पष्टवृत्तिमती बुद्धिरहमस्मीति च वक्तुं शक्यम् । 'प्रेक्षोपलब्धिश्चित् संवित्प्रतिपद् ज्ञप्तिचेतना' इति बुद्धिपर्यायत्वाच्चेतनाशब्दस्य । अत एव बुद्धिश्चेतनेति भाष्ये पाठान्तरम् । उपलब्धिचित्संविदादिशब्दानामपि ज्ञानमात्रे प्रसिद्धप्रयोगसत्त्वात्तत्साहचर्येण चेतनाशब्दस्यापि तत्रैव प्रयोग उचितः । अमरस्तु लक्षणया बुद्धेः ज्ञानवत्त्वाच्चेतनादिशब्दानां बुद्धिपर्यायत्वमूचे । तथा च चेतनाशब्दस्य स्पष्टबुद्धिवृत्तिरेवाभिधया सिद्धोऽर्थ इति श्रीशङ्कराचार्यहृदयम् ।

सङ्घात इति । तन्मध्ये इत्यर्थः । व्यक्तेति । जाग्रदादाविति भावः । सुषुप्तौ अस्पष्टबुद्धिवृत्तिरस्ति, तामेवाविद्यावृत्तिमाहुः । तस्यास्तु ज्ञानत्वेन व्यवहाराभावादुक्तं व्यक्तत्वविशेषणम् । भूतानां चेतनावतां सम्बन्धिनी चेतनाऽहमस्मीति रामानुजभाष्यं प्रकरणविरोधादुपेक्ष्यम् । निर्धारणे षष्ठी हि प्रकृता ॥२२॥

रुद्राणामिति । वित्तेशस्य यक्षत्वाद्राक्षसत्वयक्षत्वयोरवान्तरभेदे सत्यप्येकजातित्वाद्यक्षरक्षसां वित्तेश इत्युक्तम् । यद्वा एकस्मादेव सन्ध्यारूपात्पितामहशरीराद्यक्षरक्षसां जातत्वादुभयोरेकत्वेन निर्देशः । सशिखरा अशिखराश्चेति द्विविधाः पर्वताः । तत्र सशिखराणां पर्वतानां मध्ये मेरुरहं, अशिखराणां मध्ये उत्कृष्टस्तु हिमालयः । स च स्थावराणां हिमालय इतीश्वरत्वेन वक्ष्यते ॥२३॥

पुरोधसामिति । पुरोऽग्रे हितं दधत इति पुरोधसः पुरोहिताश्शतानन्दादयः । कुतो बृहस्पतेः प्राधान्यमत आह— स हीति । इन्द्रस्य त्रिलोकाधिपतित्वेन महाराजत्वात्तत्पुरोहितस्योत्कृष्टत्व

स्कन्दः देवसेनापतिः । सरसां यानि देवखातानि सरांसि तेषां सरसां सागरोऽस्मि भवामि ॥

महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ।
यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥२५॥

महर्षीणामिति । महर्षीणां भृगुरहम् । गिरां वाचां पदलक्षणानामेकमक्षरमोङ्कारोऽस्मि । यज्ञानां जपयज्ञोऽस्मि । स्थावराणां स्थितिमतां हिमालयः ॥२५॥

अश्वत्थस्सर्ववृक्षाणां देवर्षीणां च नारदः ।
गन्धर्वाणां चित्ररथस्सिद्धानां कपिलो मुनिः ॥२६॥

अश्वत्थ इति । अश्वत्थः सर्ववृक्षाणाम् । देवर्षीणां च नारदः देवा एव सन्तः ऋषित्वं प्राप्ता मन्त्रदर्शिनो देवर्षयः, तेषां नारदोऽस्मि । गन्धर्वाणां चित्ररथोनाम गन्धर्वोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानां कपिलो मुनिः ॥२६॥

---

राजपुरोहितानां मध्ये इति भावः । पृथग्जनपुरोहितापेक्षया राजपुरोहितस्योत्कृष्टत्वादुक्तम् । राजपुरोहितानामिति । सेनां नयन्ति स्ववशमापादयन्तीति सेनानयः । स्कन्दस्य देवसेनापतित्वात्प्राधान्यमिति सूचनायामाह—देवसेनापतिरिति । वापीकूपतटाकादयो मनुष्यैः खाताः तेभ्यो देवखातानि सरांस्युत्कृष्टानि, 'तेषां च सरसां मध्ये सगरैः खातस्सागर उत्कृष्टः । यद्यपि मनुष्यखातस्सागरस्तथापि गङ्गाजलभरितत्वेन, अपारजलवत्त्वेन, सगराणां देवाधिकप्रभावयुक्तत्वेन वा सागरस्योत्कृष्टत्वमिति बोध्यम् । अथ वा सगरैः खातादन्य एव ब्रह्मसृष्टस्समुद्र इह सागरशब्देन प्रतिपाद्यत इति देवाधिकत्वाद्ब्रह्मणस्तदीयस्सागर उत्कृष्ट इति बोध्यम् ॥२४॥

महर्षीणामिति । महर्षयो मरीच्यादयः, तन्मध्ये भृगोरुत्कर्षः, पादे शिवफालनेत्रनयनापहारिनेत्रवत्त्वात् , त्रिलोकजनन्या लक्ष्म्या एतस्मादाविर्भावाद्वा । ओंकारस्य पदत्वेन वाक्यत्वाभावाद्वाचां निर्धारणमस्य न सम्भवतीत्यभिप्रेत्याह—पदलक्षणानामिति । पदस्वरूपाणां गिरां पदानामित्यर्थः । गीर्यन्ते उच्यन्त इति गिर इति व्युत्पत्त्या गीश्शब्दस्यापि पदवाचकत्वादिति भावः । 'ओमित्येकाक्षरं ब्रह्मे'ति श्रुतेरेकमक्षरं प्रणव एवेत्याह—ओंकार इति । ओंकारस्य शब्दत्वाच्छब्दानां मध्ये निर्धारणमस्येति बोध्यम् । ब्रह्मप्रतीकत्वाद्ब्रह्मवाचकत्वाच्च माहात्म्यमोंकारस्येति भावः । यज्ञा द्रव्ययज्ञादयः; जपयज्ञः प्रणवजपादिलक्षणयज्ञः । तस्य चित्तशुद्धि प्रत्यन्तरङ्गत्वेन हिंसारहितत्वेन द्रव्यार्जनादिकायक्लेशानावहत्वेन च माहात्म्यम् । स्थावराश्शिखररहिताः पर्वताः ॥२५॥

अश्वत्थ इति । 'मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे । अग्रतश्शिवरूपाय वृक्षराजाय ते नम' इति प्रशंसनीयत्वादश्वत्थस्योत्कृष्टत्वम् ॥२६॥

उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ।
ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥२७॥

उच्चैःश्रवसमिति उच्चैःश्रवसमश्वानामुच्चैःश्रवा नामाश्वराजः तं मां विद्धि विजानीह्यमृतोद्भवममृतनिमित्तमथनोद्भवम् । ऐरावतं इरावत्या अपत्यं गजेन्द्राणां हस्तीश्वराणां, 'तं मां वि'द्धीत्यनुवर्तते । नराणां च मनुष्याणां नराधिपं राजानं मां विद्धि जानीहि ॥२७॥

आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ।
प्रजनश्चास्मि कन्दर्पस्सर्पाणामस्मि वासुकिः ॥२८॥

आयुधानामिति । आयुधानामहं वज्रं दधीच्यस्थिसम्भवम् । धेनूनां दोग्ध्रीणामस्मि कामधुक् वसिष्ठस्य सर्वकामानां दोग्ध्री, सामान्या वा कामधुक् । प्रजनः प्रजनयिताऽस्मि कन्दर्पः कामः । सर्पाणां सर्पभेदानामस्मि वासुकिः सर्पराजः ॥२८॥

---

उच्चैःश्रवसमिति । क्षीरसमुद्रजातत्वेन्द्रवाहनत्वादिभिरुच्चैःश्रवस उत्कर्षः । अमृतोद्भवमितिपदं काकाक्षिन्यायेन उच्चैःश्रवऐरावतयोरन्वेति । तच्च प्राशस्त्यहेतुगर्भं विशेषणम् । अत्रामृतपदममृतनिमित्तमथनलक्षकमित्याह—अमृतनिमित्तमथनोद्भवमिति । अमृतं सुधा तदुपादानं समुद्रोऽपि लक्षणयाऽमृतमित्युच्यते । अमृतोद्भवं क्षीरसमुद्रजातमित्यर्थः । अमृतं मथ्यमानावस्था सुधा तदुद्भवमिति वा वक्तुं शक्यते । इरा आपः ता अस्यास्सन्तीतीरावती गजीरूपिणी मेघमाला ॥२७॥

आयुधानामिति । आयुधानां खड्गादीनां मध्ये । किं तद्वज्रमत आह—दधीचीति । तथा च तपस्सारभूतत्वाद्वज्रस्योत्कर्षः । दुहन्तीप्सितानि दिशन्तीति दोग्ध्र्यः, कामदायिन्यो धेनवः । तासां मध्ये वसिष्ठसम्बन्धिनी समुद्रमथनोद्भवा कामधेनुरहमस्मि । विश्वामित्रसैन्यनिषूदनसमये म्लेच्छाद्युत्पादनरूपस्य वसिष्ठधेनुसामर्थ्यस्य प्रसिद्धत्वादिति भावः । सामान्येति । क्षीराब्धेरजातेति भावः । अस्मिन्पक्षे धेनवः पयोदोग्ध्र्यः गावः तन्मध्ये कामदोग्ध्रृत्वात्कामधुग्धेनुरुत्कृष्टा । जनयितॄणामिति शेषः । प्रजनः कन्दर्पोऽहमस्मि । तपआदिद्वारा प्रजासर्जकेभ्यो दक्षादिप्रजापतिभ्यः मैथुनद्वारा प्रजासर्जकः कन्दर्प उत्कृष्टः । मैथुनेनैव प्रजावृद्धेर्जातत्वात् मैथुनस्य च कन्दर्पाधीनत्वात् । नहि निष्कामस्य मैथुनप्रवृत्तिः । इदमेव प्रजनयितेति शब्देन सूचितवान् भाष्यकारः । प्रकर्षेण विस्तरेण जनयिता प्रजनयितेति व्युत्पत्तेः । सृष्टिहेतूनामपिअविद्याकालकर्मादीनां मध्ये कन्दर्पश्श्रेष्ठः । ईश्वरसङ्कल्पस्यैव कामत्वात्, तस्यैव सृष्टौ प्रधानहेतुत्वाच्च । 'तदैक्षत बहुस्या'मिति श्रुतेः । सृष्टेस्सङ्कल्पपूर्वकत्वात् । एवं कन्दर्पस्य सृष्टिं प्रति प्रकृष्टहेतुत्वादेव प्रकर्ष इति सूचयितुं प्रजन इति विशेषणम् । प्रकर्षेण जनयतीति प्रजन इति वा । कामानां मध्ये प्रजनः प्रजनयिता पुत्रोत्पत्त्यर्थः कन्दर्पः कामोऽहमस्मीति वा । यद्वा सुन्दराणामिति शेषः । जयन्तवसन्तनलकूबरादीनां मध्ये कन्दर्पस्य श्रेष्ठत्वं प्रजनयितृत्वात् । कन्दर्पो हि स्त्रीपुरुषयोर्मोहको घटयिता च । सर्पभेदानामिति । एकशिरसामित्यर्थः । सविषाणामिति श्रीधरः । वासुकेरेकशिरस्कत्वात्सर्पजातीयत्वम् ॥२८॥

अनन्तश्चास्मि नागानां वरुणो यादसामहम् ।
पितृणामर्यमा चास्मि यमस्संयमतामहम् ॥२९॥

अनन्त इति । अनन्तश्चास्मि नागानां नागविशेषाणां नागराजश्चास्मि । वरुणो यादसामहमब्देवतानां राजा; अहं पितृणामर्यमा नाम पितृराजश्चास्मि । यमः संयमतां संयमनं कुर्वतामहम् ॥२९॥

प्रह्लादश्चास्मि दैत्यानां कालः कालयतामहम् ।
मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥३०॥

प्रह्लाद इति । प्रह्लादो नाम चास्मि दैत्यानां दितिवंश्यानाम् । कालः कलयतां कलनं गणनं कुर्वतामहम् । मृगाणां च मृगेन्द्रः सिंहो व्याघ्रो वाऽहम् । वैनतेयश्च गरुत्मान् विनतासुतः पक्षिणां पतत्रिणाम् ॥३०॥

पवनः पवतामस्मि रामश्शस्त्रभृतामहम् ।
झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥३१॥

पवन इति । पवनो वायुः पवतां पावयितृणामस्मि; रामो शस्त्रभृतामहं शस्त्राणां

---

अनन्त इति । नागभेदानां बहुशिरसामित्यर्थः । निर्विषाणामिति श्रीधरः । शेषस्य सहस्रशिरस्कत्वात्तज्जातीयत्वं तत्र उत्कर्षश्च । यादसां जलजन्तूनां वरुणस्यापि जलस्थित्या· जलजन्तुत्वात्तत्र उत्कर्षस्तस्य कृतः । कोऽसौ वरुणोऽत आह—अब्देवतानां राजेति । अबभिमानिन्यो देवता अब्देवता गङ्गाकृष्णादयः, तासां राजा प्रभुः । समुद्रस्य नदीपतित्वात्समुद्रस्यापि पतिरयं वरुणो गङ्गादिदेवताप्रभुरेवेति भावः । यद्यपि यादश्शब्दोऽभिधया मत्स्यादिजलजन्तुवाची, वरुणश्च देवजातीयः । तथापि यादश्शब्दो लक्षणया जलवासिप्राणिवाचीति बोध्यम् । पितृणामग्निष्वात्तादीनां मध्ये अर्यमा तन्नामकः पितृराजोऽहमस्मि । संयमनं दण्डशिक्षेति यावत् । यमो यमधर्मराजः । अप्रतिहतदण्डो हि स उत्कृष्टः ॥२९॥

प्रह्लाद इति । प्रह्लादस्य भगवद्भक्त्यादिगुणयोगित्वादुत्कर्षः । कालो हि संवत्सराद्यात्मकः । सुखेन सर्वप्राणिनां ब्रह्मादिस्तम्बपर्यन्तानामायुष्यं गणयतीति द्रव्यादिगणनाकारिभ्यस्सांख्यगणकादिभ्य उत्कृष्टत्वं कालस्य । मृगा अरण्यचारिणः पशवः । हरिणगजवराहशरभादयः । सिंहव्याघ्रयोरप्यरण्यचारिपशुत्वाविशेषान्मृगजातीयत्वम् ॥३०॥

पवन इति । पवतां जगत्परिशुद्धिहेतूनां जलाग्न्यादीनां मध्ये वायुरुत्कृष्टः । तस्य निखिलगगनभागचारित्वेन सर्वव्यापित्वात्सर्वपावनत्वमिति । राम इति परशुरामबलरामयोर्व्युदासायाह—दाशरथिरिति । नच दाशरथेरेव कथमुत्कृष्टत्वमिति वाच्यं, रामबाणस्य सप्ततालपर्वतभूमीनां युगपत् क्षणादेव भेदकत्वेन, अमोघत्वेन च रामस्यापि सर्वक्षत्रियहन्तृपरशुरामजेतृत्वेन च राम उत्कृष्टशस्त्रधारित्विति । यद्यपि परशुरामोऽप्युत्कृष्टस्तथापि तस्मादपि राम उत्कृष्ट इति·दाशरथिरिह निर्दिष्टः ।

**धारयितॄणां दाशरथी रामोऽहम् । झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहम् । स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥३१॥**

---

शस्त्रभृतश्शस्त्रादिभिर्युद्धकारिणो वीरपुरुषा भीष्मद्रोणाश्वत्थामकर्णार्जुनरावणकुम्भकर्णादयः । रामस्यापि शस्त्रभृत्त्वात्तदन्तःप्रवेशः । शस्त्रभृत्त्वमत्र जातिः । रामस्तु व्यक्तिरिति विवेकः । अतो राम एवात्र विभूतिः; नतु शस्त्रभृतः । शस्त्रभृतां वृक्षादिस्थानीयत्वाद्रामस्य चाश्वत्थस्थानीयत्वात्तज्जातीयोत्कृष्टपदार्थस्यैव विभूतित्वात् ।

नच रामस्य साक्षाद्भगवत्त्वात्कथं विभूतित्वमिति वाच्यं, योऽत्र दशरथादुत्पन्ने कार्यकरणसङ्घातात्मके देहे स्फुरति तस्य चिन्मयस्यात्मनो रामस्य साक्षाद्भगवत्त्वेऽपि सङ्घातस्य जडस्यानित्यस्य कार्यस्य सविकारस्य भगवत्त्वाभावात् । भगवति परमात्मनि मायया देवादिसङ्घातानामिव तत्सङ्घातस्यापि कल्पितत्वात् । तस्यैव सङ्घातस्य भृतशब्दवाच्यस्य प्राणिन इह दाशरथिरामत्वेन विवक्षितत्वात् । तस्य च भगवति कल्पितत्वेन भगवद्विभूतित्वात् । नच चिन्मय एव विवक्षित इति वाच्यं, चिन्मयस्य शस्त्रभृज्जातीयत्वायोगात् । शस्त्रभृतो हि प्राणिनः । प्राणिहस्तधार्यत्वाच्छस्त्राणाम् ।

एतेन रामानुजोक्तं शस्त्रभृत्त्वं विभूतिरर्थान्तराभावादिति भाष्यं, अचिद्विशेषस्य चेतनान्तरस्य वा शस्त्रभृच्छब्दवाच्यस्यात्रासम्भवादिति वेदान्तदेशिकव्याख्यानं च प्रत्याख्यातम् ।

शस्त्रभृच्छब्दवाच्यस्य दाशरथिशरीरेऽहमित्यभिमन्यमानस्य कार्यकरणसङ्घातात्मकस्य प्राणिनश्चिन्मयादात्मनोऽन्यस्य प्रमातुरीश्वरस्य सत्त्वात् । अचिद्विशेषस्य रामदेहस्यैव साक्षाच्छस्त्रसम्बन्धसत्त्वात् , चेतनस्य चिदाभासस्य च देहद्वारा शस्त्रसम्बन्धसत्त्वादस्त्येव शस्त्रभृत्, देहरूपश्चिदाभासरूपो वा । अस्मदादिशरीरेषु वर्तमानश्चिदाभासो जीवः, रामकृष्णादिशरीरेषु वर्तमानस्तु ईश्वर इति व्यवहारविवेकः ।

नचेश्वरस्य चिदाभासत्वमयुक्तं- चिदाभासस्य संसारित्वादिति वाच्यं, जीवेशावाभासेन करोतीति श्रुत्यैव जीववदीश्वरस्यापि चिदाभासत्वस्योक्तत्वात् । मायायां चित्प्रतिबिम्बो हीश्वरः । आभासश्च प्रतिबिम्ब एवेति चिदाभासस्यापीश्वरस्य सर्वज्ञत्वादात्मस्वरूपज्ञत्वाच्च न संसारित्वं, यथा वा जीवस्यापि ज्ञानिन इति । तस्मान्मायिकत्वाद्रामावतारो विभूतिरेव, न तु भगवान् ।

नच रामः परमात्मेति व्यवहारविरोध इति वाच्यं, तत्र रामशब्देन चिन्मयस्यैव विवक्षितत्वात् । न चात्रापि सैव विवक्षेति वाच्यं, शस्त्रभृत्त्वस्य तद्विवक्षाऽभावगमकत्वादित्युक्तत्वात् ।

किंच आदित्यादयः क्षेत्रज्ञा ईश्वरशरीरत्वाच्छस्त्रभृत्स्थानीयाः रामस्त्वीश्वरस्स्वयमेवेति यदुक्तं रामानुजेन तदासत्—शस्त्रभृतां जीवानां मध्ये शस्त्रभृतो जीवस्यैवोत्कृष्टस्य भगवद्विभूतित्वेन वक्तव्यत्वात् प्राकरणिकमर्थं विहाय जीवेभ्य ईश्वर उत्कृष्ट इति शस्त्रभृद्भ्योऽशस्त्रभृत ईश्वरस्योत्कृष्टीकरणमिहानुचितमिति ।

मकर इति । तस्य जलजन्तुषु मत्स्येषूत्कृष्टत्वं बलशौर्यादिमत्त्वेन । अत एव तस्य मत्स्यराजत्वव्यपदेशः । स्रवन्त्यो नद्यः । विष्णुपादोद्भवत्वादिना गङ्गायाः प्राशस्त्यम् ॥३१॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन !
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥

सर्गाणामिति । सर्गाणां सृष्टीनामादिरन्तश्च मध्यं चैवाहमुत्पत्तिस्थितिलया अहं

---

सर्गाणामिति । सृष्टयः क्रिया इति यावत् । तसां मध्ये उत्पत्त्यादिक्रियात्रयमीश्वरविभूतिः । गमनभाषणादयः क्रियान्तराणि । ताभ्य उत्कृष्टास्सर्जनरक्षणहरणक्रियाः । नच 'उद्भवश्च भविष्यता'मित्यनेन पौनरुक्त्यं, तत्रोद्भवशब्दस्याभ्युदयार्थकत्वात् ।

यत्तु सृज्यन्त इति सर्गास्तेषां सृष्टिस्थितिलयहेतुभूतास्तत्र तत्र स्रष्टारः पालयितारस्संहर्तारश्चाहमेवेति रामानुजः, तन्मन्दम्—निर्धारणालाभात् । नच प्राणिनां मध्ये स्रष्टारः पालयितारस्संहर्तारश्चाहमेवेति निर्धारणसिद्धिरिति वाच्यं, स्रष्टृत्वादिधर्मत्रयान्यतमरहितप्राणिमात्रस्यैवाभावात् । तृणादीनामपि कीटकादिस्रष्टृत्वपश्वादिपालकत्वसंहर्तृत्वदर्शनात् । आदिरन्तो मध्यमित्येकवचनशब्दप्रयोगाच्च । पालननाशवाचिनोर्मध्यान्तशब्दयोः पालकहारकेषु लक्षणयास्स्वीकरणीयत्वात्सम्भवति मुख्यार्थे लक्षणास्वीकारस्यान्याय्यत्वाच्च ।

ननु सर्गाणां प्राणिनां सृष्टिस्थितिलयानामहमेव हेतुरिति श्लोकार्थ इति चेन्नैवम्—निर्धारणालाभात् । अहमादिश्च मध्यं चेति पूर्वमेवास्यार्थस्योक्तत्वाच्च ।

ननु इममेव पुनरुक्तिदोषं भूतानां जीवाभिधानामेवादिरन्तश्चेत्युक्तमुपक्रमे, इह तु सर्वस्य सर्गमात्रस्यैवेति विशेष इति परिहरतो भाष्यकारस्य सर्गाणां सर्वेषां गगनादिपदार्थानां सृष्टिस्थितिलयहेतुरहमेवेत्यर्थ इत्याशय इति निश्चीयत इति चेत्तर्हि निर्धारणमत्राविवक्षितुमिति स्रष्टृत्वरक्षकत्वसंहर्तृत्वान्येव विभूतिरिति च वक्तव्यं स्यात्, एतच्छ्लोकमारभ्यैव तत्रतत्र 'तेजस्तेजस्विनामह'मित्यादौ निर्धारणस्यादर्शनादित आरभ्य निर्धारणस्य प्रकरणसिद्धस्यापि भङ्ग इति बोध्यम् ।

नचैवं नक्षत्राणां शशीत्यत्रापि निर्धारणभङ्ग इति वाच्यं, तत्र निर्धारणस्य सम्भवात् । अगतिकस्थलेष्वेव तद्भङ्गाभ्युपगमात् । नच प्रकरणभङ्गो वक्तुर्दोषावह इति वाच्यं, भगवतस्सर्वज्ञस्य प्रकरणभङ्गादिदोषदूरत्वात् । न हि वेदेष्वार्षेषु वा ग्रन्थेषु छन्दोभङ्गादयो दोषत्वेन गृह्यन्ते विद्वद्भिः । तस्मात्प्रकरणभङ्गोऽयमार्षत्वादुपेक्ष्यः ।

अथ वा आदित्यानामित्यारभ्य जाह्नवीत्येतदन्तमेव निर्धारणषष्ठीप्रकरणम् । सर्गाणामित्यारभ्य तु शेषषष्ठ्यपि प्रवृत्तैवेति निर्धारणषष्ठीवत् शेषषष्ठीप्रयोगेऽपि न प्रकरणभङ्गो दोषः ।

यद्वा विष्ण्वादयो मद्विभूतय इत्येतावदेव भगवता विवक्षितं न त्वादित्यादिमध्ये विष्ण्वादय इति । विष्ण्वादीनामादित्यादिषूत्कृष्टत्ववर्णनस्य स्वरूपकथनमात्रपरत्वात् । नचैवं नक्षत्राणां पतिरिति व्याख्यानं युक्तमिति वाच्यं, नक्षत्रेषूत्कृष्टत्ववर्णनस्याप्यसिद्धेस्तदेति ।

धारयितॄणां दाशरथी रामोऽहम्। झषाणां मत्स्यादीनां मकरो नाम जातिविशेषोऽहम्। स्रोतसां स्रवन्तीनामस्मि जाह्नवी गङ्गा ॥३१॥

---

शस्त्रभृतश्शस्त्रादिभिर्युद्धकारिणो वीरपुरुषा भीष्मद्रोणाश्वत्थामकर्णार्जुनरावणकुम्भकर्णादयः। रामस्यापि शस्त्रभृत्त्वात्तदन्तःप्रवेशः। शस्त्रभृत्त्वमत्र जातिः। रामस्तु व्यक्तिरिति विवेकः। अतो राम एवात्र विभूतिः, नतु शस्त्रभृत्। शस्त्रभृतां वृक्षादिस्थानीयत्वाद्रामस्य चाश्वत्थस्थानीयत्वात्तज्जातीयोत्कृष्टपदार्थस्यैव विभूतित्वात्।

नच रामस्य साक्षाद्भगवत्त्वात्कथं विभूतित्वमिति वाच्यं, योऽत्र दशरथादुत्पन्ने कार्यकरणसङ्घातात्मके देहे स्फुरति तस्य चिन्मयस्यात्मनो रामस्य साक्षाद्भगवत्त्वेऽपि सङ्घातस्य जडस्यानित्यस्य कार्यस्य सविकारस्य भगवत्त्वाभावात्। भगवति परमात्मनि मायया देवादिसङ्घातानामिव तत्सङ्घातस्यापि कल्पितत्वात्। तस्यैव सङ्घातस्य भूतशब्दवाच्यस्य प्राणिन इह दाशरथिरामत्वेन विवक्षितत्वात्। तस्य च भगवति कल्पितत्वेन भगवद्विभूतित्वात्। नच चिन्मय एव विवक्षित इति वाच्यं, चिन्मयस्य शस्त्रभृज्जातीयत्वायोगात्। शस्त्रभृतो हि प्राणिनः। प्राणिहस्तधार्यत्वाच्छस्त्राणाम्।

एतेन रामानुजोक्तं शस्त्रभृत्त्वं विभूतिरर्थान्तराभावादिति भाष्यं, अचिद्विशेषस्य चेतनान्तरस्य वा शस्त्रभृच्छब्दवाच्यस्यासम्भवादिति वेदान्तदेशिकव्याख्यानं च प्रत्याख्यातम्।

शस्त्रभृच्छब्दवाच्यस्य दाशरथिशरीरेऽहमित्यभिमन्यमानस्य कार्यकरणसङ्घातात्मकस्य प्राणिनश्चिन्मयादात्मनोऽन्यस्य प्रमातुरीश्वरस्य सत्त्वात्। अचिद्विशेषस्य रामदेहस्यैव साक्षाच्छस्त्रसम्बन्धसत्त्वात्, चेतनस्य चिदाभासस्य च देहद्वारा शस्त्रसम्बन्धसत्त्वादस्येव शस्त्रभृत्, देहरूपश्चिदाभासरूपो वा। अस्मदादिशरीरेषु वर्तमानश्चिदाभासो जीवः, रामकृष्णादिशरीरेषु वर्तमानस्तु ईश्वर इति व्यवहारविवेकः।

नचेश्वरस्य चिदाभासत्वमयुक्तं चिदाभासस्य संसारित्वादिति वाच्यं, जीवेश्वरावाभासेन करोतीति श्रुत्यैव जीववदीश्वरस्यापि चिदाभासत्वस्योक्तत्वात्। मायाख्या चित्प्रतिबिम्बो हीश्वरः। आभासश्च प्रतिबिम्ब एवेति चिदाभासस्यापीश्वरस्य सर्वज्ञत्वादात्मस्वरूपज्ञत्वाच्च न संसारित्वं, यथा वा जीवस्यापि ज्ञानिन इति। तस्मान्मायिकत्वाद्रामावतारो विभूतिरेव, न तु भगवान्।

नच रामः परमात्मेति व्यवहारविरोध इति वाच्यं, तत्र रामशब्देन चिन्मयस्यैव विवक्षितत्वात्। न चात्रापि सैव विवक्षेति वाच्यं, शस्त्रभृत्त्वस्य तद्विवक्षाऽभावगमकत्वादित्युक्तत्वात्।

किंच आदित्यादयः क्षेत्रज्ञा ईश्वरशरीरत्वाच्छस्त्रभृत्स्थानीया रामस्त्वीश्वरस्स्वयमेवेति यदुक्तं रामानुजेन तदसत्—शस्त्रभृतां जीवानां मध्ये शस्त्रभृतो जीवस्यैवोत्कृष्टस्य भगवद्विभूतित्वेन वक्तव्यत्वाच्च प्राकरणिकमर्थं विहाय जीवेभ्य ईश्वर उत्कृष्ट इति शस्त्रभृद्भ्योऽशस्त्रभृत ईश्वरस्योत्कृष्टीकरणमिहानुचितमिति।

मकर इति। तस्य जलजन्तुषु मत्स्येषूत्कृष्टत्वं बलशौर्यादिमत्त्वेन। अत एव तस्य मत्स्यराजत्वव्यपदेशः। स्रवन्त्यो नद्यः। विष्णुपादोद्भवत्वादिना गङ्गाया प्राशस्त्यम् ॥३१॥

सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन।
अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥३२॥

सर्गाणामिति। सर्गाणां सृष्टीनामादिरन्तश्च मध्यं चैवाहमुत्पत्तिस्थितिलया अहं

---

सर्गाणामिति। सृष्टयः क्रिया इति यावत्। तसां मध्ये उत्पत्त्यादिक्रियात्रयमीश्वरविभूतिः। गमनभाषणादयः क्रियान्तराणि। ताभ्य उत्कृष्टास्सर्जनरक्षणहरणक्रियाः। नच 'उद्भवश्च भविष्यता'मित्यनेन पौनरुक्त्यं, तत्रोद्भवशब्दस्याभ्युदयार्थकत्वात्।

यत्तु सृज्यन्त इति सर्गास्तेषां सृष्टिस्थितिलयहेतुभूतास्तत्र तत्र स्रष्टारः पालयितारस्संहर्तारश्चाहमेवेति रामानुजः, तन्मन्दम्—निर्धारणालाभात्। नच प्राणिनां मध्ये स्रष्टारः पालयितारस्संहर्तारश्चाहमेवेति निर्धारणसिद्धिरिति वाच्यं, स्रष्टृत्वादिधर्मत्रयान्यतमरहितप्राणिमात्रस्यैवाभावात्। तृणादीनामपि कीटकादिस्रष्टृत्वपश्वादिपालकत्वसंहर्तृत्वदर्शनात्। आदिरन्तो मध्यमित्येकवचनशब्दप्रयोगाच्च। पालननाशव।चिनोर्मध्यान्तशब्दयोः पालकहारकेषु लक्षणयास्स्वीकरणीयत्वात्सम्भवति मुख्यार्थे लक्षणास्वीकारस्यान्याय्यत्वाच्च।

ननु सर्गाणां प्राणिनां सृष्टिस्थितिलयानामहमेव हेतुरिति श्लोकार्थ इति चेन्नैवम्—निर्धारणालाभात्। अहमादिश्च मध्यं चेति पूर्वमेवास्यार्थस्योक्तत्वाच्च।

ननु इममेव पुनरुक्तिदोषं भूतानां जीवानित्याभामेवादिरन्तश्चेत्युक्तमुपक्रमे, इह तु सर्वस्य सर्गमात्रस्यैवेति विशेष इति परिहरतो भाष्यकारस्य सर्गाणां सर्वेषां गगनादिपदार्थानां सृष्टिस्थितिलयहेतुरहमेवेत्यर्थ इत्याशय इति निश्चीयत इति चेत्तर्हि निर्धारणमत्राविवक्षितमिति स्रष्टृत्वरक्षकत्वसंहर्तृत्वाभ्येव विभूतिरिति न वक्तव्यं'स्यात्, एतच्छ्लोकमात्रस्यैव तत्रतत्र 'तेजस्तेजस्विनामह'मित्यादौ निर्धारणस्यादर्शनादित आरभ्य निर्धारणस्य प्रकरणसिद्धस्यापि भङ्ग इति बोध्यम्।

नचैवं नक्षत्राणां शशीत्यत्रापि निर्धारणभङ्ग इति वाच्यं, तत्र निर्धारणस्य सम्भवात्। अगत्तिस्थलेष्वेव तद्भङ्गाभ्युपगमात्। नच प्रकरणभङ्गो वक्तुर्दोषावह इति वाच्यं, भगवतस्सर्वज्ञस्य प्रकरणभङ्गादिदोषदूरत्वात्। न हि वेदेष्वार्षेषु वा ग्रन्थेषु छन्दोभङ्गादयो दोषत्वेन गृह्यन्ते विद्वद्भिः। तस्मात्प्रकरणभङ्गोऽप्यार्षत्वादुपेक्ष्यः।

अथ वा आदित्यानामित्यारभ्य जाह्नवीत्येतदन्तमेव निर्धारणषष्ठीप्रकरणम्। सर्गाणामित्यारभ्य तु शेषषष्ठ्यपि प्रकृतैवेति निर्धारणषष्ठीवत् शेषषष्ठीप्रयोगेऽपि न प्रकरणभङ्गो दोषः।

यद्वा विष्ण्वादयो मद्विभूतय इत्येतावदेव भगवता विवक्षितं न त्वादित्यादिमध्ये विष्ण्वादय इति। विष्ण्वादीनामादित्यादिषूत्कृष्टत्ववर्णनस्य स्वरूपकथनमात्रपरत्वात्। नचैवं नक्षत्राणां पतिरिति व्याख्यानं युक्तमिति वाच्यं, नक्षत्रेषूत्कृष्टत्ववर्णनस्याप्यसिद्धेस्तदेति।

हे अर्जुन! भूतानां जीवाधिष्ठितानामेवादिरन्तश्चेत्युक्तमुपक्रमे, इह तु सर्वस्यैव सर्गमात्रस्येति

नचैवं सर्गाणामिति- श्लोके क्वापि न विभूतिरुक्तेति वाच्यं, सृष्टिस्थितिलयहेतोरीश्वरस्यैव विभूतेरुक्तत्वात्। न चेश्वरो भगवानेवेति कथं तस्य विभूतित्वमिति वाच्यं, जीववदीश्वरस्यापि मायया परमात्मनि कल्पितत्वेन ईश्वरस्यात्मविभूतित्वादिति।

प्रकृतत्वान्निर्धारणषष्ठी नैव त्याज्येति मते, सर्गाणां भूतानां मध्ये सृष्टिस्थितिलयहेतुरीश्वराख्यः प्राण्यहमित्यप्यर्थ आपतति, 'अहमादिश्च मध्यं च भूतानामन्त एव च' इति श्लोकस्यापि निर्धारण-षष्ठीप्रकरणान्तर्भावेऽभिप्रेते तु, पुनरुक्तिस्स्यात। अतस्तत्परिहारायाह—भूतानामिति।

भूतशब्देन सजीवा विवक्षितास्सर्गशब्देन तु सजीवनिर्जीवरूपं कार्यमात्रमिति। तनश्च प्राणिनां मध्ये ईश्वराख्यः प्राण्यहं, कार्याणां मध्ये चेश्वराख्यं कार्यमहमिति। न चेश्वरस्य कार्यत्वे विवदितव्यं, 'जीवेशावाभासेन करो'तीति श्रुतेः।

न चेश्वरस्य पुनरपि निर्धारणात्पुनरुक्तिरिति वाच्यं, निर्धार्यमाणस्येश्वरस्याभेदेऽपि निर्धार-णाश्रयाणां भूतानां सर्गाणां च भेदात्।

यद्वा प्राणिनां मध्ये हिरण्यगर्भाख्य ईश्वर उत्कृष्टः, सर्गाणां मध्ये तु मायाप्रतिबिम्ब, ईश्वर इति निर्धार्यमाणभेदोऽपीति।

वस्तुतस्तु भगवद्विभूतेर्भगवन्माहात्म्यरूपयोगस्य च जिज्ञासितत्वादर्जुनेन श्रीकृष्णेनापि विभूति-कथनमध्येऽपि योग उक्तः प्रकृतत्वात्तस्य चेति बोध्यम्।

तथा च अहमादिश्चेतिश्लोकवत्सर्गाणामित्येषोऽपि भगवन्माहात्म्यप्रदर्शनपर एव। विभूति-श्लोकेषु तु निर्धारणषष्ठी प्रकृता, नतु योगे। अतो नात्र सर्गाणामिति निर्धारणषष्ठी, नापि नक्ष-त्राणामित्यत्र शेषषष्ठी।

नन्वेवमहमादिरित्यनेनास्य पुनरुक्तमत आह—भूतानां जीवाधिष्ठितानामेवेति। एवकारात् निर्जीवानाम्। सृज्यत इति सर्गः कार्यं तन्मात्रम्। नचैवं सर्गाणामित्यस्य सृष्टीनामिति प्रतिपद-मयुक्तमिति वाच्यं, सृष्टीनामित्यस्य सृष्टिविषयाणामित्यर्थात्। उत्पत्तिस्थितिलयात्मकहेतुरित्यर्थः। अथ वा जन्मस्थितिभङ्गाः क्रिया एवार्थः।

अहमादिश्चेतिश्लोकेन तु भूतानामुत्पत्तिस्थितिलयहेतुरीश्वरोऽहमित्युक्तमिह तु सर्गाणामुत्पत्ति-स्थितिलया एवाहमित्युच्यते। अतो न पुनरुक्तिदोषावकाशः।

नन्वेवं पुनरुक्तिशङ्काया एवानवकाशो इह तु सर्गमात्रस्येति विशेष इति कुत उक्तमाचार्यैरिति चेदुच्यते—इति विशेष इत्यस्या इत्यपि विशेष इत्यर्थः।

अयमाशयः—आदिरन्तो मध्यमिति शब्दत्रयस्य द्विः श्रवणाच्छ्रोतॄणां पुनरुक्तिदोषशङ्का स्यात्तन्निरासे च हेतुद्वयमस्ति, तत्रैक- आदिमध्यान्तशब्दानां दर्शितार्थभेदरूपः, द्वितीयस्तु भूतसर्ग-शब्दयोरर्थभेदरूपश्चेति।

एवमेव सृष्ट्य क्रिया इत्यस्मिन्मतेऽपि पुनरुक्तिदोषप्रसङ्गस्तत्परिहारश्चाचार्याशयानुगुण्येन प्रसञ्जनीयः। परिहारस्य भाष्ये स्पष्टत एवोक्तत्वादिति।

विशेषः । अध्यात्मविद्या विद्यानां मोक्षार्थत्वात्प्रधानमस्मि । वादोऽर्थनिर्णयहेतुत्वात्प्रवदतां प्रधानम् । अतः सोऽहमस्मि । प्रवक्तृद्वारेण वदनभेदानामेव वादजल्पवितण्डानामिह ग्रहणं प्रवदतामिति ॥३२॥

अक्षराणामकारोऽस्मि द्वन्द्वस्सामासिकस्य च ।
अहमेवाक्षयः कालो धाताऽहं विश्वतोमुखः ॥३३॥

अक्षराणामिति । अक्षराणां वर्णानामकारो वर्णोऽस्मि । द्वन्द्वः समासोऽस्मि सामासिकस्य समाससमूहस्य । किंचाऽहमेवाक्षयोऽक्षीणः कालः प्रसिद्धः क्षणाद्याख्यः, अथ वा परमेश्वरः कालस्यापि कालोऽस्मि । धाताऽहं कर्मफलस्य विधाता सर्वजगतो विश्वतोमुखः सर्वतोमुखः ॥३३॥

---

विद्यानां वेदवेदाङ्गादीनाम् । मोक्षार्थत्वादिति । अन्यास्तु धर्मकामादिफलिका इति भावः । प्रवदतां प्रवक्तॄणां यः प्रधानभूतो वादस्सोऽहमस्मीति तेजस्तेजस्विनामितिवत्प्रधानमात्रनिर्देशः ।

ननु वादस्य विभूतित्वाद्विभूतिषु निर्धारणषष्ठ्या एव प्रकृतत्वात्कथं शेषषष्ठीग्रहणमत आह— प्रवक्त्रिति ।

तर्हि निर्धारणषष्ठ्येवाश्रयतां, तथा च प्रवदतामित्यस्य लक्षणया प्रवक्तृधर्माणां वादजल्पवितण्डानामित्यर्थः । तन्मध्ये वादस्योत्कर्षे हेतुमाह—अर्थनिर्णयहेतुत्वादिति । वदनभेदानां वचनविशेषाणाम् ।

प्रमाणफलतत्त्वबुभुत्सोः कथा वादः; उभयसाधनवती विजिगीषुकथा जल्पः; स्वपक्षस्थापनाहीना परपक्षविदलनमात्रावसाना वितण्डा । इहोपात्तानां त्रयाणां वचनभेदानां भेदान्तरोपलक्षणत्वात् छलजात्यादिग्रहणम् । अभिप्रायान्तरेण प्रयुक्तस्याभिप्रायान्तरेण दूषणं छलं; असदुत्तरं जातिः; इत्याद्यन्यतो ग्राह्यम् ॥३२॥

अक्षराणामिति । अक्षराण्यचो हलश्च, तेषां मध्ये आद्यक्षरमकारोऽहम् । अकारो हि सर्ववर्णादित्वात्प्रणवाद्यवयवत्वात्सर्ववर्णप्रकृतित्वाच्चोत्कृष्टः । अकारस्य सर्ववर्णप्रकृतित्वं च- 'अकारो वै सर्वा वा'गिति श्रुतिसिद्धम् । द्वन्द्वस्य स्वघटकोभयपदार्थप्रधानत्वात्प्राधान्यम् । पूर्वपदार्थप्रधानोऽव्ययीभाव ; उत्तरपदार्थप्रधानस्तत्पुरुष ; अन्यपदार्थप्रधानो बहुव्रीहिरुभयपदार्थप्रधानो द्वन्द्व इति मायो वादः ।

अक्षीण इति । प्रवाहनित्य इत्यर्थः । अहमेवेत्यादिपादत्रयेण कालादय ईश्वरविभूतय इत्येतावदेवेह विवक्षितं, नतु निर्धारणं षष्ठ्यन्तपदादर्शनात् । नच विभूतिषु निर्धारणषष्ठी प्रकृतेति वाच्यं, सत्यां षष्ठ्यां निर्धारणं प्रकृतं तदभावे तु कथमिति ।

अथ वा नित्यानित्यलक्षणकालद्वयमध्येऽक्षयः कालोऽहम् । अनित्यः कालः क्षणादिरूपः, नित्यस्त्वीश्वर एवेति सिद्धान्तात् । तदेवाह—परमेश्वरो वेति ।

कुतस्तस्य कालत्वमत आह—कालस्यापीति । कलयति परिच्छिनत्ति क्षणादिरूपेण जन्यं कालमिति कालः परमेश्वरः । परमेश्वरेण हि सूर्यगमनादिद्वारा काल. परिच्छिद्यते ।

मृत्युस्सर्वहरश्चाहमुद्भवश्च भविष्यताम् ।
कीर्तिश्श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥३४॥

मृत्युरिति । मृत्युर्द्विविधः धनादिहरः प्राणहरश्च, तत्र यः प्राणहरः स सर्वहः इत्युच्यते, सोऽहमित्यर्थः । अथ वा पर ईश्वरः प्रलये सर्वहरणात्सर्वहरः सोऽहम् । उद्भः

---

यद्वा माहात्म्यपरमिदं वाक्यत्रयम् । तथा च कालस्यापि कालोऽहं धाताऽहं मृत्युरहमिति भगवन्माहात्म्यकथनम् । सर्वतोमुखत्वं सर्वव्यापित्वं सर्वद्रष्टृत्वं वा । विश्वतोमुखेन मयैव सर्वस्य जगत कर्मफलं विधीयत इति भगवन्माहात्म्यकथनमिदम् । सर्वेषां तत्तत्कर्मानुगुण्येन फलविधानसामर्थ्यमीश्वर स्यास्तीति द्योतनाय विश्वतोमुख इत्युक्तम् ।

अत्रापि—'धाता धातॄणां भुवनस्य गोप्ता' इति श्रुते धातॄणां मध्ये विश्वतोमुखो धाताऽहमिति निर्धारणं सुवचम् । रथादिनिर्मातारो धातार, तदपेक्षया कर्मफलविधातुरीश्वरस्योत्कृष्टत्वम् । नचेश्वर एव कथमीश्वरस्य विभूतिरिति वाच्यं, धातृस्वरूपेण विभूतित्वादेवं कालत्वादिना चेति बोध्यम् ।

विश्वतोमुखश्चतुर्मुखो धाता हिरण्यगर्भोऽहमेवेति वा । विश्वामित्रादिभ्यस्तस्योत्कृष्टत्वादीश्वर-विभूतित्वमिति बोध्यम् ॥३३॥

मृत्युरिति । मृत्युद्वयस्य मध्ये सर्वहरो मृत्युरहम् । मृत्युद्वयं दर्शयति—धनादिहरः प्राण-हरश्चेति । तत्र कस्सर्वहरोऽत आह—य इति । प्राणहर एव सर्वहर इत्युच्यत इत्यर्थ ।

यद्वा मृत्युर्द्विविध प्रपञ्चे सर्वप्राणिजीवितहर एको यमनामको मृत्युदेवतेति वा । प्रलये सर्वजगन्नाशक ईश्वरोऽन्य । तयोर्मध्ये यस्सर्वहर ईश्वरस्सोऽहमित्याह—अथ वेति । अयं चेश्वरो मायातमोगुणावच्छिन्नो रुद्रनामक इति बोध्यम् । तथा च रुद्र ईश्वरविभूतिरिति सिद्धम् । ब्रह्मविष्णु-रुद्राणां त्रयाणामीश्वरे ब्रह्मणि कल्पितत्वेन विभूतित्वात् ।

अथ वा एकस्यैवेश्वरस्य मायावच्छिन्नचैतन्यलक्षणस्य स्रष्टृत्वरक्षकत्वसंहर्तृत्वगुणयोगाद्ब्रह्म-विष्णुरुद्रशब्दवाच्यत्वम् । तत्र संहर्तृत्वगुणयोगी य परमेश्वर सोऽहम् । अस्य च सगुणेश्वरस्य निर्गुणब्रह्मत्वायोगात्तद्विभूतित्वमेव ।

यत्तु वेदान्तदेशिकः—यमादेशकारिप्राणहरणाधिकृत पुरुषविशेषो मृत्युरिति, तन्मन्दम्—वाहशस्याप्रमाणत्वात् । यमदूतानां च बहुत्वात् । नच मृत्युदेवतैवेति वाच्यं, तस्या भगवदाज्ञा-परतन्त्रत्वेन यमादेशकारित्वाभावात् ।

ननु भूतानामन्त एव चेत्यनेन लयहेतोरीश्वरस्योक्तत्वादत्र मृत्युरीश्वर इति व्याख्यानं पुन-रुक्तमिति चेन्नैवम्—तत्र लयस्थानमात्रस्यैवोक्तत्वात् । अहमादिरिति श्लोकस्य भगवन्माहात्म्यकथन-परत्वेन विभूतिपरत्वाभावाच ।

नच सर्गाणामिति श्लोकार्धेन पुनरुक्तमिति वाच्यं, सृष्टिस्थितिलयत्रितयहेतुत्वेन तत्रेश्वरो निर्धारित । अत्र तु केवललयहेतुत्वेनेति भेदात्, सर्गेषु तत्रेश्वरो निर्धारित मृत्युद्वये त्वत्रेति भेदादिति वा।

बद्धो वेदभागो ऋगित्युच्यते। गायत्रीऋक् गायत्रीछन्दोविशिष्टा ऋक्। गायत्रीछन्दस्तु षडक्षरपादबद्धम्। यथा 'मारायुधभूता बाला शफराक्षी कान्तं हरिमागाल्लक्ष्मीस्तनुमध्या' इति श्लोकः। एवं षट्क्षरैश्चतुर्भिः पादैः बद्धा ऋक् गायत्रीछन्दोविशिष्टः।

ननु यद्येवं लोकवद्वेदेऽपि षडक्षरपादचतुष्टयवत एव छन्दसो गायत्रीसंज्ञत्वं तर्हि तत्सवितुरिति मन्त्रस्य गायत्रीछन्दस्कत्वं न स्यात्, तत्सवितुरित्यस्य मन्त्रस्य विश्वामित्रऋषिस्सवितादेवता गायत्री छन्द इति तु मन्त्रशास्त्रे प्रसिद्धम्। तथा 'उदुत्यं जातवेदस'मित्यादिमन्त्राणां च गायत्रीछन्द इति प्रसिद्धम्। एवं गायत्री त्रिपदेत्यपि प्रसिद्धं- गायत्री चतुर्विंशत्यक्षरा त्रिपदा षट्कुक्षिरिति मन्त्रप्रयोगे दर्शनात्। तस्माद्वेदेऽष्टाक्षरपदत्रयैव गायत्री। एवंभूतगायत्रीछन्दोविशिष्टत्वादपि तत्सवितुरित्यस्य गायत्रीमन्त्रत्वव्यवहारः।

न तत्सवितुर्वरेण्यमिति सप्ताक्षरमेव प्रथमपाद इति वाच्यं, णियमित्यक्षरद्वयपाठात्। नच परोरजसि सावदोमिति चतुर्थपादोऽप्यस्तीति वाच्यं, तस्य मन्त्रान्तरत्वात्। त्रिपदाया एव गायत्र्यास्सर्वत्रोपदेशादिषु प्रसिद्धत्वात्।

एवमुदुत्यं जातवेदसमित्यादिऋक्ष्वपि त्रिपदैवैकैका ऋक्, 'उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्य'मित्यस्या एकऋक्त्वात्। नचापत्ये तायवो यथेत्येतदप्यस्या एव पादभूतमिति वाच्यं, नवाद्या गायत्री छन्द इति वचनानुरोधेन उदुत्यं जातवेदसमिति मन्त्रे नव गायत्री ऋचां भवितव्यत्वात्। सप्तविंशतिपादानां दृश्यमानत्वाच्च। एकैकस्या ऋचः पादत्रयात्मकत्वेन भवितव्यत्वात्। तस्मादष्टाक्षरत्रिपदैव गायत्री।

लोके तु चतुर्विंशत्यक्षरा गायत्री षडक्षरपादचतुष्टयवत्त्वेन पिङ्गलमुनिना कल्पिता, चतुष्पात्त्वेपि चतुर्विंशत्यक्षरसङ्ख्यायास्सत्त्वाद्गायत्रीत्वम्। नच लोकवद्वेदेऽपि चतुर्विंशत्यक्षरामृचं चतुर्धा विभज्य षड्भिरक्षरैरेकः पाद इति कल्प्यतामिति वाच्यं, उदुत्यं जातवेदसमित्यत्र उदुत्यं जातवे इति पादविभागस्य कर्तुमशक्यत्वात्। न ह्येकस्मिन्पदे यतिविच्छेदः स्यात्। तर्हि लोक एवाष्टाक्षरं पादत्रयं गायत्रीछन्दसः कल्प्यतामिति वाच्यं, लोके श्लोकानां चतुष्पात्त्वनियमेन भाव्यत्वात्। तस्मादष्टाक्षरमेव गायत्रीपादः।

नच गायत्र्यनुष्टुप्छन्दसोस्साङ्कर्यमिति वाच्यं, गायत्र्यास्त्रिपदत्वादनुष्टुभश्चतुष्पदत्वाच्च। गायत्र्याश्चतुर्विंशत्यक्षरत्वादनुष्टुभो द्वात्रिंशदक्षरत्वाच्च वैलक्षण्यात्।

तथा च त्रिष्टुभादिच्छन्दोबद्धानामृचाम्मध्ये गायत्रीछन्दोबद्धैव ऋगुत्कृष्टा। सा च ऋग्दर्शिता। 'तत्सवितुर्वरेण्यं, भर्गो देवस्य धीमहि, धियो यो नः प्रचोदया'दिति।

अयं च मन्त्रस्य गायत्रीदेवताकत्वाद्गायत्रीछन्दोबद्धत्वाच्च गायत्रीति व्यपदेशः। उदुत्यं जातवेदसमित्यादीनां तु गायत्रीछन्दस्कत्वेऽपि गायत्रीदेवताकत्वं नास्तीति नास्ति तेषां गायत्रीमन्त्रव्यवहारः।

एवं गायत्रीछन्दोविशिष्टऋचामपि गायत्रीमन्त्र एवोत्कृष्ट इति त्रिष्टुभादिच्छन्दोविशिष्टानामृचां मध्येऽपि गायत्रीमन्त्र एवोत्तमोत्तम इति गायत्रीशब्देनात्र गायत्रीमन्त्र एव गृहीतुमर्हः 'न गायत्र्याः परो मन्त्र' इत्यनेन गायत्रीमन्त्रस्य प्राशस्त्यं स्फुटमुच्यते ।

ननु काऽसौ गायत्रीदेवतेति चेत्सवितुर्वरेण्यं यत्तेजस्तदेव । किं ज्योतिः न, चैतन्यमेव । सूर्यमण्डलावच्छिन्नं चैतन्यं गायत्रीत्युच्यते । सूर्यस्य तावत्सर्वसाक्षित्वेनेश्वरत्वप्रसिद्धेस्तस्यापि सूर्यस्य यदन्तरं चैतन्यं तदेवेश्वरो गायत्रीत्युच्यते । नैनावताऽस्मदादिशरीरावच्छिन्नस्यानवच्छिन्नस्य वा चैतन्यस्य गायत्रीत्वव्यवहाराभावः चिच्छक्तेरेव गायत्रीत्वात् । तस्माच्चैतन्यं परं ब्रह्मैव गायत्री । न च स्त्रीलिङ्गप्रयोगात्कालीसरस्वत्यादिशक्तिर्गायत्रीति वाच्यं, चैतन्ये निर्विशेषे आत्मेति ब्रह्मेति पुंनपुंसकशब्दयोरिव गायत्रीति स्त्रीलिङ्गस्यापि प्रयोगसम्भवात् । एवं ब्रह्मत्वाज्जीवब्रह्माभेदरूपतत्त्वार्थबोधकत्वाच्च गायत्रीमन्त्रस्सर्वमन्त्रोत्कृष्टः ।

अयं गायत्रीमन्त्रार्थः—य ईश्वरो नः जीवानां धियः प्रचोदयात्प्रेरयति- 'ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति । भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया' इति वचनात्, 'यो भूतेषु तिष्ठ'-न्नित्याद्यन्तर्यामिब्राह्मणाच्च । यच्छब्दात्तच्छब्दाध्याहारः । तस्य सवितुः मायया जगत्सृष्टिस्थितिलयहेतुभूतस्य देवस्य क्रीडत ईश्वरस्य सम्बन्धि, तत्स्वरूपभूतं, वस्तुत ईश्वरस्यैव ब्रह्मत्वादिति भावः । बिम्बभूतमिति वा । जीवेश्वरयोर्मायाविद्योपाधिद्वयप्रतिफलितब्रह्मचैतन्यप्रतिबिम्बरूपत्वादिति भावः । तत् नित्यापरोक्षतया सच्चिदानन्दरूपतया प्रसिद्धमिति वा । वरेण्यमुत्कृष्टं तेजः ज्ञानं; चैतन्यमिति यावत् । ब्रह्मेति भावः । धीमहि सोऽहमिति प्रत्यगभिन्नत्वेन पश्याम इति ।

गायत्रीछन्दसामहं मन्त्राणां मध्ये गायत्रीमन्त्रोऽहमित्यर्थः । ऋचां मन्त्रत्वात् । एवंसति गायत्रीत्येकवचनमपि स्वरसतस्सङ्गच्छते- गायत्रीमन्त्रस्यैकत्वात् ।'

यद्वा गायत्रीछन्दोविशिष्टाया ऋचः उदुत्यं जातवेदसमित्यादयः तास्सर्वा अप्यहमेव । जात्यभिप्रायाद्गायत्रीत्येकवचनम् । गायत्रीछन्दस एकत्वादिति वा । छन्दोवाचिना हि गायत्रीशब्देन तद्विशिष्टा ऋग्लक्षिता ।

तदेवं गायत्रीमन्त्रस्य गायत्रीछन्दोविशिष्टमन्त्राणां वा भगवद्विभूतित्वमिति सिद्धम् । नच गायत्रीछन्दोबद्धमन्त्राणां कुत उत्कृष्टत्वमिति वाच्यं, तज्जातौ गायत्रीमन्त्रस्य पठितत्वादिति ।

यद्वा 'अग्रं वै छन्दसां गायत्री' इति श्रुतेर्गायत्र्याश्छन्दसामग्रत्वादुत्कृष्टत्वम् । न च 'उक्तात्युक्ता तथा मध्येति पिङ्गलवचनादुक्तैव छन्दः प्रथममिति वाच्यं, 'अग्निमीळे पुरोहित'मिति ऋच एव सर्ववेदानामादित्वात्तस्याश्च ऋचो गायत्रीछन्दोबद्धत्वात् । अग्निमीळ इति मन्त्रस्य अग्निर्देवता, गायत्री छन्द इति मन्त्रपाठे दर्शनात् ।

ननु गायत्रीछन्दोबद्धमन्त्राणामितरछन्दोबद्धमन्त्रेभ्य उत्कृष्टत्वे यदि गायत्रीछन्दोबद्धत्वमेव हेतुस्तर्हि छन्दसां मध्ये गायत्रीछन्दस उत्कृष्टत्वं सिद्धमेवेति गायत्रीछन्दसामहमित्यस्याभिधासिद्ध

द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ।
जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥३६॥

द्यूतमिति । द्यूतमक्षदेवनादिलक्षणं छलयतां छलस्य कर्तॄणामस्मि । तेजस्विनां तेजोऽहम् । जयोऽस्मि जेतॄणां, व्यवसायोऽस्मि व्यवसायिनां, सत्त्वं सत्त्ववतां सात्त्विकानामहम् ॥३६॥

---

एवार्थो वाच्यः । त्रिष्टुभादिच्छन्दसां मध्ये गायत्रीछन्दोऽहमिति । यथा च भाषितं रामानुजेन । तद्विहाय किमिति लाक्षणिकार्थकल्पनाक्लेश आचार्याणामिति चेत्, उच्यते—पादाक्षरसङ्ख्याविशेषनियमस्य छन्दश्शब्दार्थत्वात्तन्मात्रस्य नोत्कृष्टत्वं, किंतु तद्विशिष्टस्य शब्दसमूहस्यैवेति । न च श्रुतिविरोधः, तत्रापि छन्दोविशिष्टानां मध्ये गायत्रीछन्दोविशिष्टैवोत्कृष्टेति विवक्षयाऽविरोधात् । तादृशस्यैव मन्त्रस्य 'अग्निमीळे' इत्यस्य वेदादौ स्थितत्वेनाम्नातत्वाच्च ।

ननु अग्निमीळे इति मन्त्रस्य वेदादौ स्थितस्य गायत्रीछन्दोविशिष्टत्वेन गायत्रीछन्दोविशिष्टा ऋच उत्कृष्टा इति यथोच्यते तथा वेदादावग्निमीळे इति मन्त्रे गायत्रीछन्दसो वर्तमानत्वाद्गायत्रीछन्दोऽपि छन्दसामुत्कृष्टमिति वक्तुं शक्यमेवेति चेत्, सत्यम्—उक्तन्यायेन वेदादावग्नेस्सत्त्वादग्निरेव देवोत्कृष्ट इति वक्तुमपि शक्यत्वात् । नचेष्टापत्तिः- 'देवानामस्मि वासव' इति गीताविरोधात् । 'अग्निर्वै देवानामवमो विष्णुः परम इति श्रुतिविरोधाच्च ।

ननु श्रुतिस्मृतिविरोधादग्नेर्वेदादिस्थितिप्रयुक्तमुत्कृष्टत्वं मास्तुनाम, तदविरोधाद्गायत्रीछन्दसो वेदाद्यमन्त्रस्थितिप्रयुक्त उत्कर्षस्स्यादिति चेत्, मैवम्—अग्निशब्दोत्तरद्वितीयाविभक्तेरग्निशब्दस्य वा वेदादिगतत्वेनोत्कृष्टत्वमिति वक्तव्यत्वात् ।

अथ वा भवतु छन्दोमात्रस्यापि तस्योत्कर्षः, तथापि यन्मन्त्राधीनश्छन्दोमात्रस्योत्कर्षः स एव मन्त्र इहोत्कृष्टत्वेन ग्राह्यो लाघवात् । तज्जातीयत्वादन्ये च तादृशा इति बोध्यम् ।

वस्तुतस्तु ऋगतिरेकेण छन्दसोऽभावादृचस्तस्यैव छन्दसस्सत्त्ववत्त्वं, नतु छन्दसः स्वातन्त्र्येण सत्त्वेति कृत्वा छन्दश्शब्देनेह स्वन्त्वसत्ताशालिनी ऋगेव ग्राह्येति बोध्यम् । तस्मादत्र गायत्रीछन्दस ईश्वरविभूतित्वं प्रतिपादितम् ।

मार्गशीर्षस्य सस्यादिसम्पत्तिहेतुत्वात्, मतानुचितकारत्वाद्वा उत्कृष्टत्वम् । वसन्तस्य तु 'वसन्ते वसन्ते ज्योतिषा यजे'तेति ज्योतिष्टोमकालत्वात्पुष्पसमृद्धिमत्त्वेन प्राणिसुखकरत्वादिति वा उत्कृष्टत्वम् ॥

द्यूतमिति । छलं कुर्वन्तीति छलयन्तः तेषां छलयता लक्षणया छलानां मध्ये द्यूतमस्मि । द्यूतलक्षणमाह—अक्षदेवनादिलक्षणमिति । क्रयविक्रयऋणदायसंविस्सङ्गरादयश्छलानि- वञ्चनास्पदत्वादेषाम् । द्यूतस्य सर्वाधिकत्वं च क्षणादेव धर्मराजादीनां द्यूते पराजयेन निस्स्वभवनाद्दुर्योधनादीनां च राजराजीभवनाज्जयेनेति बोध्यम् । एवं धनापहरणफलकेषु वञ्चनाविषयेषु क्रयविक्रयादिसर्वच्छलेषु द्यूतस्य महत्त्वादेव- 'अक्षैर्मा दीव्य' इति श्रुतिर्द्यूतं निषेधति । तेजस्विनां

वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनंजयः ।
मुनीनामप्यहं व्यासः कवीनामुशना कविः ॥३७॥

वृष्णीनामिति । वृष्णीनां यादवानां वासुदेवोऽस्मि, अयमेवाहं त्वत्सखा । पाण्डवानां धनंजयः त्वमेव । मुनीनां मननशीलानां सर्वपदार्थज्ञानिनामप्यहं व्यासः; कवीनां क्रान्तदर्शिनां उशना कविरस्मि ॥३७॥

---

यत्प्रधानं तेजः जेतॄणां य प्रधानो व्यवसाय सत्त्ववतां यत्प्रधानं सत्त्वं तत्सर्वमहमस्मि । नात्र निर्धारणं, किंतु विभूतिमात्रकथनमेव ।

यद्वा तेज औदार्यवैभवादिगुणानां मध्ये तेजोऽहं, जयापजययोर्मध्ये जयोऽहं, सन्धिविग्रहयानयुद्धजयादिषु जेतृधर्मेषु जयोऽहमिति वा । व्यवसाय उद्योगः । उद्योगानुद्योगयोरुद्योगोऽहं; 'उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी'रित्युद्योगस्य प्रशंसितत्वात् । सङ्कल्पविकल्पनिश्चयादीनां मध्ये उद्योग उत्कृष्ट इति वा । अहमेवं करिष्यामीत्यादिसङ्कल्पादिभ्यः कर्मसु प्रवृत्तिरूपस्योद्योगस्य फलहेतुत्वेन प्रकृष्टत्वमिति बोध्यम् ।

सत्त्ववतां सत्त्वं सामर्थ्यं, तच्च वाक्कायेन्द्रियमनोविषयत्वभेदेन चतुर्विधम् । ततश्च वाक्पाटवकायपाटवेन्द्रियपाटवमनःपाटवानां मध्ये सत्त्वं मनःपाटवमहमस्मि । मनःपाटवस्यैव विद्यामोक्षादिहेतुत्वेनोत्कृष्टत्वात् ।

यद्वा सात्त्विकानां धर्मेषु सत्यादिषु सत्त्वमहं, सत्त्वं शमदमादिलक्षणम् । आदिपदायज्ञादिधर्मा ग्राह्याः ।

अथ वा सत्त्वरजस्तमसां मध्ये सात्त्विकानां गुणो यस्सत्त्वं सोऽहमेवेत्यर्थः । सत्त्वस्य च शमदमज्ञानादिहेतुत्वादुत्कृष्टत्वम् ॥३६॥

वृष्णीनामिति । वृष्णयो यादवाः । कोऽसौ वासुदेवोऽत आह—अयमेवेति । तव यस्मिन् सखेति बुद्धिस्स वसुदेवसूनुरित्यर्थः । रामावतारवत्कृष्णावतारस्यापीश्वरे कल्पितत्वादीश्वरविभूतित्वम् । धनं जयतीति धनञ्जय इति व्युत्पत्त्या निखिलराजविजयित्वरूपोत्कर्षप्रसिद्धोऽर्जुनस्येति द्योत्यते । कृष्णार्जुनयोर्नरनारायणावतारत्वेन कृष्णस्येवार्जुनस्यापि विष्ण्ववतारत्वाद्वोत्कर्षः । नरनारायणौ हि विष्ण्वंशसम्भूतावृषी ।

अत्र वृष्णीनामहमिति पाण्डवानां त्वमिति चोक्तेऽस्मत्त्वच्छब्दाभ्यां ग्रहणमात्मनस्स्यात्, वासुदेवो धनञ्जय इत्युक्ते तु यो वसुदेवाज्जातस्स कार्यकरणसङ्घात एव वासुदेवशब्देन, येन शत्रूणां धनं जितं स सङ्घात एवार्जुनशब्देन च ग्राह्यः स्यात्, तयोश्च सङ्घातयोरीश्वरविभूतित्वं युक्तमीश्वरे कल्पितत्वादात्मनस्तु न युक्तमात्मन एवेश्वरत्वादिति बोध्यम् ।

मुनयो मननशीलाः सर्वपदार्थज्ञा वा । तेषां मध्ये व्यास उत्कृष्टः । आत्मस्वरूपमननशीलत्वात्सूत्रपुराणादिप्रबन्धकर्तृत्वेन वेदविभाजनेन च सर्वज्ञत्वाच्च । वेदान्व्यस्यति विभजतीति हि व्यास इति

दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ।
मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥३८॥

दण्ड इति । दण्डो दमयतां दमयितॄणामस्म्यदान्तानां दमनकारणम् । नीतिरस्मि जिगीषतां जेतुमिच्छताम् । मौनं चैवास्मि गुह्यानां गोप्यानाम् । ज्ञान ज्ञानवतामहम् ॥३८॥

यच्चापि सर्वभूतानां बीजं तदहमर्जुन ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥३९॥

यदिति । यच्चापि सर्वभूतानां बीजं प्ररोहकारणं तदहमर्जुन । प्रकरणोपसंहारार्थं विभूतिसंक्षेपमाह—न तदस्ति भूतं चराचरं चरमचरं वा । मया विना यत्स्याद्भवेत्, मयाऽप्रविष्टं परित्यक्तं निरात्मकं शून्यं हि तत्स्यात् । अतो मदात्मकं सर्वमित्यर्थः ॥३९॥

---

व्युत्पत्ति । 'व्यासो नारायणो हरि'रिति नारयणांशत्वाद्वा व्यासस्योत्कर्षः । क्रान्तदर्शिनो दूरदृष्टय । भूतभविष्यद्वृत्तान्तवेदनशीला इति यावत् । उशना शुक्रः कविरिति पर्यायाः । उशनाभिध कवि श्शुक्रोऽहमित्यर्थ । शुक्रस्य विपश्चित्त्वाथर्म्यं तु 'न कश्चिन्नोपनयते पुमानन्यत्र भार्गवात् । शेषसम्पति पतिस्तु बुद्धिमत्स्ववतिष्ठत' इति प्रसिद्धम् । नीतिशास्त्रादिकर्तृत्वाच्च ॥३७॥

दण्ड इति । दमयता धर्मेषु वादिप्रतिवादिवाक्यश्रवणसाक्षिविचारणादिषु शिक्षणरूपो यो दण्डस्सोऽहमस्मि । कुतस्तस्य श्रेष्ठत्वमत आह—अदान्तानामिति । अदान्तानामपि दमेन दान्तत्वं भवतीति दमस्योत्कृष्टत्वम् । यद्वा दमयतां राजगुर्वादीनां दमयितव्येषु भृत्यशिष्यादिषु कर्तव्या ये भावा नयभयदयादय, तेषा मध्ये दम एवोत्कृष्ट । दमादेव भृत्यादीना दान्तीभूतत्वादिति । निर्धारणानाग्रहे तु दमयतां यः प्रधानो दण्डस्सोऽहमस्मीति बोध्यम् । एवमुत्तरत्रापि । जिगीषता ये शौर्यधैर्यादयो गुणास्तेषां मध्ये नीतिरस्मि । नीतिपूर्वकत्वाज्जयलाभस्य । गुह्यानां गोप्याना धनकनकौषधादीना गोपना ये वस्त्रपेटिकादयः तेषा मध्ये मौनमुत्कृष्टमहमस्मि । तथा च गुह्यशब्दोऽत्र लक्षणया गुह्यगोपनपर । वस्त्रादिभिर्गोपितमपि वस्तु सुवर्णादिकं मौनाभावे विवृतमेव स्यात् । मद्गुह्यमन्थौ रूपिकारतीति वाचैव गोप्यवस्तुन स्फुटीकृतत्वसम्भवात । तथा पेटिकादिभिर्गोपयितुमशक्यमपि रहस्यं वाङ्मौनेन गोपयितुं शक्यत एव । तस्मान्मौनस्य गोपनेषूत्कृष्टत्वम् । ज्ञानवतां ये ज्ञानशमदमसुखादयो गुणास्तेषां मध्ये ज्ञानमहमस्मि । ज्ञानवतां यत्प्रधानं ज्ञानं तदहमस्मीति वा ॥३८॥

यदिति । बीजाना मध्ये यत्सर्वभूतानां बीजं तदहमस्मि । सर्वभूतबीजं तु प्रकृतिरिति बोध्यम् । एतेन प्रकृतेरपीश्वरविभूतित्वं सिद्धम् । प्रकृतेस्सूक्ष्मावस्थापन्नायाः स्थूलावस्थजगद्रूपं प्रति बीजत्वं यथा बीजस्य वृक्षादिप्रतीतीति बोध्यम् । विस्तरेणोक्तां विभूतिं संक्षेपेण वदति—नेति । य चराचरं भूतं मया विना स्यात्तन्नास्ति । चरमचरं वा किमपि भूतं मया विना नास्त्येवेत्यर्थ. । मया विनेत्यस्यार्थमाह—मयाऽप्रविष्टमिति । सच्चिदानन्दरूपेण सर्वव्यापिना सर्वस्यात्मभूतेन मयाऽव्याप्तमित्यर्थ ।

नान्तोऽस्ति मम दिव्यानां विभूतीनां परन्तप !
एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

नेति। नान्तोऽस्ति मम दिव्यानां विभूतीनां विस्तराणां परन्तप! । न हीश्वरस्य सर्वात्मनो दिव्यानां विभूतीनामियत्ता शक्या वक्तुं ज्ञातुं वा केनचित्। एष तूद्देशतः एकदेशेन प्रोक्तो विभूतेर्विस्तरो मया ॥४०॥

यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा।
तत्तदेवावगच्छ त्वं मम तेजोंशसम्भवम् ॥४१॥

यद्यदिति। यद्यल्लोके विभूतिमद्विभूतियुक्तं सत्त्वं वस्तुजातं श्रीमदूर्जितमेव वा श्रीर्लक्ष्मीः तया सहितमुत्साहोपेतं वा, तत्तदेवावगच्छ त्वं जानीहि ममेश्वरस्य तेजोंश-

---

कल्पितत्वाच्चिद्रूपात्मकत्वात्कार्यस्य च कारणात्मकत्वात्सर्वं जगदीश्वरात्मकमेवेति जगतस्स्वरूपमीश्वर एव। यथा घटस्य मृत्। यथा वा सर्पस्य रज्जुः। ईश्वरस्य जगत्यप्रवेशे तु जगतः स्वरूपस्यैवाभावाच्छून्यत्वम्। किंच सच्चिदानन्देश्वरस्याप्रवेशे जगदस्ति जगद्भाति जगत्प्रियमिति व्यवहारो न सिद्ध्येत, सच्चिदानन्दानामीश्वरधर्मत्वेन जगति तत्संक्रमणं विना तादृशव्यवहारासम्भवात्। तथा च शशशृङ्गादिवज्जगन्नास्ति, न भाति, न प्रियमित्येव प्रतीयेतेति शून्यमेव स्याज्जगदिति।

ननु सर्वव्यापीश्वरस्य कथं जगत्यप्रवेश स्सम्भाव्येतेति चेदुच्यते—ईश्वरस्य जगतश्च पृथक्करणमेव जगतीश्वरस्याप्रवेशत्वेन विवक्षितम्। पृथक्करणं च जगति दृश्यमानानां सत्ताजाड्यादिधर्माणां विवेचनम्। अयमीश्वरधर्मः, अयं जगद्धर्म इति बुद्ध्या जगतस्सकाशादीश्वरधर्माणां विवेचने कृते सति अनृतमेव जगत्सिद्ध्यति; अनृतस्य च शशशृङ्गादिवच्छून्यत्वमेवेति। एतेन सर्वस्यापि जगत ईश्वरे कल्पितत्वादीश्वरविभूतित्वमिति सिद्धम् ॥३९॥

नेति। अन्तोऽवधिः इयत्तेति यावत्। घटोऽहं पटोऽहमश्माहं मृत्तिकाऽहमित्येवं मम विभूतीस्सर्वा वक्तुमहमपि न शक्नोमि। अनन्तत्वाद्विभूतीनाम्। परं तु सर्वा अहं जानामि सर्वज्ञत्वात्। अन्ये तु ज्ञातुमपि न शक्नुवन्ति किंचिज्ज्ञत्वादिति भावः। एकदेशेनेति। कासांचित्प्रधानविभूतीनां ग्रहणेनेति भावः। विभूतेरिति जात्येकवचनम्। विभूतीनामित्यर्थः ॥४०॥

यदिति। लोके यद्यत्सत्त्वं विभूतिमत् श्रीमत्, ऊर्जितमेव वा भवति तत्तत्सत्त्वं त्वं मम तेजोंशसम्भवमेवावगच्छ। विभूतिरैश्वर्यं सामर्थ्यमिति यावत्। श्रीस्सम्पत्। तेजोंशः ज्ञानैकदेशः। यद्यपि 'ममैवांशो जीवलोके जीवभूतस्सनातनः' इति वचनात्सर्वेऽपीश्वरांशसम्भवा एव। तथापि साधारणप्राणिषु ईश्वरीयसर्वज्ञत्वरूपज्ञानधर्मैकदेशो नास्ति, विभूतिभूतेषु तु तदस्तीति विभूतीनामीश्वरतेजोंशसम्भवत्वम्। तेजश्चात्रोपलक्षणं बलक्रिययोः। ईश्वरस्य स्वाभाविकी या ज्ञानबलक्रियास्तदंशसम्भवमित्यर्थः। अत एवेश्वरविभूतिषु रामकृष्णमहेन्द्रादिषु ज्ञानबलक्रियाधिक्यदर्शनम्।

म्भवं तेजसोंश एकदेशः सम्भवो यस्य तत्तेजोंशसम्भवमित्यवगच्छ त्वम् ॥४१॥

अथ वा बहुनैतेन किं ज्ञातेन तवार्जुन !

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥४२॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूति-
योगोनाम दशमोऽध्यायः ।

अथ वेति । अथ वा बहुना एतेनैवमादिना किं ज्ञातेन तवाऽर्जुन स्यात्सावशेषेण । अशेषतस्त्वमिममुच्यमानमर्थं शृणु । विष्टभ्य विशेषतः स्तम्भनं दृढं कृत्वा इदं कृत्स्नं

---

यद्वा तेजश्शब्दोऽत्र भगस्योपलक्षणम् । ऐश्वर्यवीर्ययशश्श्रीज्ञानवैराग्याणि भग इत्युच्यन्ते । तदेकदेशसम्भवमिति । जीवा ईश्वरचैतन्यांशभूता, विभूतयस्तु ईश्वरचैतन्यांशभूताः षड्गुणांशयुक्ताश्चेति भावः । अतो नात्र तेजश्शब्दस्स्वरूपचैतन्यपर इति बोध्यम् ।

यद्वा जीवा. प्रत्यगात्मान परब्रह्मणश्चैतन्यस्यांशभूताः । महाकाशस्येव घटाकाशाः । रामकृष्णादिविभूतयस्तु सर्वज्ञत्वादिगुणविशिष्टस्य मायिन ईश्वरस्यांशभूता· । अत एव विभूतिर्वीश्वरगुणैकदेशोपलम्भ । अस्मिन्पक्षे ममेश्वरस्य यत्तेजस्सर्वज्ञत्वादिगुणयोगिचैतन्यं तदंशसम्भवमित्यर्थः ।

नच ममैवांश इतीश्वरांशत्वमुच्यते जीवानामिति वाच्यं, तत्र ममेत्यस्य परब्रह्मण इत्यर्थात् । ईश्वरेण प्रयुक्तो ह्यस्मच्छब्दो लक्षणया परमात्मानं वक्ति, जीवेन प्रयुक्त इवास्मच्छब्दो लक्षणया प्रत्यगात्मानम् ।

यत्तुरामानुजः—मम तेजस्सामर्थ्यं नियमनशक्तिरिति, तन्मन्दम्—ईश्वरांशेषु मनुष्यु नियमनशक्तिदर्शनेऽपि ज्ञानिविरक्तादिषु तददर्शनात् ।

अथ तेजस्सर्वज्ञत्वसर्वकर्तृत्वसर्वेश्वरत्वादिरूपं सामर्थ्यमित्युच्यते, तर्हि तत्तेजो भगरूपमेव । एवं च तेजश्शब्दस्य उपलक्षणत्वं विनैव भगवाचकत्वं सम्भवतीति समीचीनमेवेदं व्याख्यानम् । अवगच्छ विद्धि ॥४१॥

अथ वेति । ननु न तदस्ति विनेत्यनेन सर्वस्य जगत ईश्वरविभूतित्वस्योक्तत्वात् विभूतिमन्तश्श्रीमन्त ऊर्जिता एव मत्तेजोंशसम्भवत्वान्मद्विभूतय· । अनीश्वरा दरिद्रा निरुत्साहास्तु मत्तेजोंशासम्भवत्वान्न मद्विभूतय इति वचनं विरुद्धमिति शङ्कायां मत्तेजोंशसम्भवं विभूत्यादिगुणयुक्तं भूतं मद्विभूतिरिति प्राधान्येनोक्तं ध्येयत्वार्थम् । वस्तुतस्तु सर्वं जगन्मद्विभूतिरेव मत्तो जातत्वान्मय्येव कल्पितत्वात्सर्वस्य मदात्मकत्वादित्याह—अथ वेति । अथ वेति पक्षान्तरे ।

बहुनेति । आदित्योऽहमश्वत्थोऽहमिन्द्रोऽहं चन्द्रोऽहमित्येवमादिभिर्बहुभिर्ज्ञातैः किं फलं तव- न किमपीत्यर्थः । तत्र हेतुमाह—सावशेषेणेति । अशेषतो विभूतीनां वक्तुमशक्यत्वात्प्रत्येकविषयेति भाव । अहमिदं कृत्स्नं जगदेकपादेन विष्टभ्य स्थितः । स्तम्भनं कृत्वेति । अभिव्याप्ये-

जगदेकांशेन एकावयवेनैकपादेन सर्वभूतस्वरूपेणेत्येतत् । तथा च मन्त्रवर्णः 'पादोऽस्य विश्वा भूतानि' इति स्थितोऽहमिति ॥४२

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीगोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये विभूति-
योगोनाम दशमोऽध्यायः ।

---

स्यर्थ । आक्रम्येति वा नियम्येति वा । सर्वथापि सर्वं जगत्स्वस्यैकस्मिन्नेव पादे यथास्यात्पादान्तरे यथा न स्यात्तथा कृत्वेत्यर्थ ।

एतेन इदं सर्वं जगदात्मगर्भे धर्तुं भगवानीश्वर कथं शक्नुयादिति शङ्का परास्ता । भगवन् पादमात्रमेव स्वान्तस्सर्वं जगदिनमति किं पुनश्चतुष्पाद्ब्रह्मेत्यर्थापत्ते ।

तथा सर्वस्मिन् ब्रह्मणि जगत्सत्त्वे मुक्तप्राप्यब्रह्माभावप्रसङ्ग इति शङ्का च प्रत्युक्ता—मुक्तप्राप्यस्य त्रिपाद्ब्रह्मणस्सत्त्वात् ।

ननु निरंशस्येश्वरस्य कुतोंऽशित्वमत आह—तथा चेति । श्रुतिप्रामाण्यान्निरंशस्यापि सांशत्वमभ्युपेयमिति भाव । अस्येश्वरस्य विश्वा सर्वाणि भूतानि पाद एकोंश । अस्यैक पादो जगति वर्तत इत्यर्थ । अस्यैकपादे जगद्वर्तत इति वा । अस्यैक पादो जगद्रूपेण वर्तते इति वा । अस्यैक पादो जगद्रूपेण दृश्यत इति वा । अत एवोक्तं सर्वभूतस्वरूपेणेत्येतदिति भाष्यकारै ।

ननु श्रुत्युक्तस्यापि विरुद्धार्थस्य कथं ग्राह्यत्वमिति चेन्मैवम्—निरंशस्यापि मायया सांशत्वसम्भवात् । माया हि ब्रह्मण एकदेशे स्थिता यथा घटशक्तिर्मृद एकदेशे स्निग्धमृदि । नच मायापि कथं ब्रह्मण एकदेशं विभज्य तत्र स्थितवतीति वाच्यं, मायाकृत्यस्यानिर्वचनीयत्वेन तत्रातिशङ्कानवकाशात् । अयमेव सर्वभूतात्मको ब्रह्मण एक पादो मायीनीश्वर इतिचोच्यते । मायाशबलितस्य मायावच्छिन्नस्य ब्रह्मण एवेश्वरत्वात् । निर्माय तु शुद्धचैतन्य परब्रह्मैव । तदेव तत्त्व मायाया अनात्त्विकत्वेन समायस्याप्यतात्त्विकत्वात् । तथा मायामयानि भूतान्यप्यतात्त्विकान्येव । तदेव तत्त्व प्रत्यगात्मेति सिद्धं जीवेश्वरैक्यम् ।

यत्तु रामानुजः—मम महिम्नोऽयुतायुतांशेन विष्टभ्येति, तन्मन्दम्—एकांशेनेति पदादयुतायुतांशेनेत्यर्थालाभान्महिम्न इति पदस्यासत्त्वाच । सर्वस्य जगतो भगवद्विभूतित्वे वक्तव्ये जानियमनस्य वस्तुमनुचितत्वाच ।

तस्मादुक्तरीत्यैवार्थस्साधुर- इति । विभूतीना योगस्सम्बन्धो यस्मिन् स विभूतियोगो नामाध्याय ॥४२॥

इति श्रीवेल्लङ्कोण्डोपनामक रामकविकृते श्रीभगवद्गीताशाङ्करभाष्यार्कप्रकाशे
विभूतियोगो नाम दशमोऽध्याय ।
श्रीकृष्णार्पणमस्तु ।

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## एकादशोऽध्यायः ।

भगवतो विभूतय उक्ताः, तत्र च 'विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग'दिति भगवताऽभिहितं श्रुत्वा यज्जगदात्मरूपमाद्यमैश्वरं तत्साक्षात्कर्तुमिच्छन्नर्जुन उवाच—

अर्जुन उवाच—मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ।
यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥१॥

मदिति । मदनुग्रहाय मदनुग्रहार्थं परमं निरतिशयं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकविषयं यत्त्वयोक्तं वचो वाक्यं, तेन ते वचसा मोहोऽयं विगतो मम । अविवेकबुद्धिरपगतेत्यर्थः ॥१॥

---

पूर्वाध्यायान्ते विष्टभ्याहमित्यनेन भगवता जगदात्मको मदेकांश इत्युक्तं, तस्य जगदात्मकत्वं तदेव प्रधानमीश्वरस्यैश्वर्यं तद्दिदृक्षया पृच्छत्यर्जुन इत्याह—भगवतेति ।

ननु भगवति ब्रह्मणि सर्वं जगत्कल्पितमिति भगवतो जगदात्मत्वमुक्तं, तच्च दृश्यत एव, आकाशादिजगतो दर्शनादिति चेन्मैवम्—केवलं जगद्दृश्यते न त्विदं जगद्ब्रह्मणि वर्तमानत्वेन दृश्यत इति ।

ननु जगतो ब्रह्मणि वर्तमानत्वं द्रष्टुमशक्यं ब्रह्मदर्शनं विना तदयोगात्, ब्रह्म च दुरूपत्वाद दृश्यं, ततश्च जगतो ब्रह्मणि वर्तमानत्वं शास्त्रैकवेद्यमेवेति चेत्, सत्यम्—ब्रह्मणि वर्तमानत्वेन जगतो दुर्दर्शत्वेऽपीश्वरे वर्तमानत्वेन सुदर्शमेव । ईश्वरस्य मायावच्छिन्नचैतन्यलक्षणस्य माययैव जगन्मयशरीरोपपत्तेः ।

अयं भावः—ईश्वरस्य बहूनि रूपाणि सन्ति, तत्र प्रधानं रूपं चैतन्यं ब्रह्म- तत्त्वस्वाच्यस्य । द्वितीयं तु मायावच्छिन्नचैतन्यं, तृतीयमन्तःकरणावच्छिन्नं, चतुर्थं विराड्रूपम् । तत पद्मनाभराम- कृष्णादीनि; तत्र ब्रह्मरूपेणेश्वरस्य जगदात्मत्वं शास्त्रैकवेद्यं मायावच्छिन्नचैतन्यरूपेण च । अनुमानम- प्यत्र प्रमाणमेव । अन्तःकरणावच्छिन्नमात्मत्वान्नित्यापरोक्षमेव । विराड्रूपेण जगदात्मत्वं तु प्रत्यक्ष- प्रमाणवेद्यमेवेतीश्वरस्य विराड्रूपदिदृक्षया पृच्छत्यर्जुन इति ।

ननु विश्वरूप ईश्वरोऽपि नित्यापरोक्ष एव; विश्वस्य चक्षुरादिप्रमाणवेद्यत्वादिति चेत्, सत्यम्—विश्वरूपस्येश्वरस्य विश्वमेव रूपं; तत्तु सर्वं न कस्य चित्प्रत्यक्षं किं त्वणुमात्रमेव । अतस्साकल्येन विश्वस्य दिदृक्षया पृच्छत्यर्जुन इति ।

किंच—

भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ।
त्वत्तः कमलपत्राक्ष! माहात्म्यमपि चाव्ययम् ॥२॥

भवेति । भव उद्भव उत्पत्तिरप्ययः प्रलयस्तौ भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया न संक्षेपतः त्वत्तो त्वत्सकाशात्कमलपत्राक्ष! कमलस्य पत्रं कमलपत्रं तद्वदक्षिणी यस्य तव स त्वं कमलपत्राक्षः, हे कमलपत्राक्ष! महात्मनो भावो माहात्म्यमपि चाव्ययमक्षयं श्रुतमित्यनुवर्तते ॥२॥

एवमेतद्यथात्थ त्वमात्मानं परमेश्वर!
द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम! ॥३॥

एवमिति । एवमेतन्नान्यथा यथा येन प्रकारेणात्थ कथयसि त्वमात्मानं परमेश्वरं, तथापि द्रष्टुमिच्छामि ते तव ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिस्सम्पन्नमैश्वरं वैष्णवं रूपं पुरुषोत्तम! ॥३॥

---

अथ वा विश्वं प्रत्यक्षं भवतु नाम, विश्वेन रचितावयवसन्निवेश ईश्वरविग्रहस्त्वप्रत्यक्ष इति तद्दर्शनाय पृच्छत्यर्जुनः ।

न चेश्वरेण तादृशं रूपं ममास्तीत्युक्तं येनार्जुनस्य प्रश्नावकाशः स्यादिति वाच्यं, विष्टभ्याहमित्यनेनोक्तत्वात् । नच ब्रह्मण्येकदेशे जगदस्तीति हि तच्छ्लोकार्थ इति वाच्यं, यत्र जगदस्ति तस्यैव ब्रह्मपादस्येश्वरमूतत्वात् ।

अथ वा यदि त्वमेव जगदात्मकस्त्वय्येव जगदस्ति तर्हि तादृशं तव रूपं दर्शय, तव च तादृग्रूपमस्तीति यशोदादिभिरुच्यत इति पृच्छत्यर्जुन इति ।

मदनुग्रहायेति । प्रथमपादेऽक्षराधिक्यमार्षम् । आत्मानमधिकृत्य वर्तमानमध्यात्मं तदिति संज्ञाऽस्य सञ्जातमित्यध्यात्मसंज्ञितम् । आत्मानात्मविवेको विषयः प्रतिपाद्यं यस्य तदात्मानात्मविवेकविषयम् । त्वया मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितं यद्वच उक्तं तेन ममायं मोहो विगतः ॥१॥

भवेति । हे कमलपत्राक्ष! मया त्वत्तो भूतानां भवाप्ययौ विस्तरशः श्रुतौ, अव्ययं माहात्म्यं च श्रुतम् ॥२॥

एवमिति । हे परमेश्वर! त्वं यथाऽऽत्मानं कथयस्येतदेवमेव । हे पुरुषोत्तम! ते ऐश्वरं रूपं द्रष्टुमिच्छामि । ते ऐश्वरमीश्वरस्य विष्णोस्तव सम्बन्धि रूपं विश्वरूपमित्यर्थः । ईश्वरेण मायया कल्पितमिति भावः ॥३॥

मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो !
योगेश्वर! ततो मे त्वं दर्शयात्मानमव्ययम् ॥४॥

मन्यस इति । मन्यसे चिन्तयसि यदि मयाऽर्जुनेन तच्छक्यं द्रष्टुमिति प्रभो स्वामिन् योगेश्वर योगिनो योगास्तेषामीश्वरो योगेश्वरः, हे योगेश्वर! यस्मादहमतीवार्थी द्रष्टुं ततस्तस्मान्मे मदर्थं दर्शय त्वमात्मानमव्ययम् ॥४॥

एवं चोदितोऽर्जुनेन भगवानुवाच—

श्रीभगवानुवाच— पश्य मे पार्थ! रूपाणि शतशोऽथ सहस्रशः ।
नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥५॥

पश्येति । पश्य मे मम पार्थ! रूपाणि शतशोऽथ सहस्रशः, अनेकश इत्यर्थः । तानि च नानाविधान्यनेकप्रकाराणि दिवि भवानि दिव्यान्यप्राकृतानि नानावर्णाकृतीनि च नानाविधलक्षणा नीलपीतादिप्रकारा वर्णास्तथाऽऽकृतयश्चावयवसंस्थानविशेषा येषां रूपाणां तानि नानावर्णाकृतीनि च ॥५॥

पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ।
बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत! ॥६॥

पश्येति । पश्यादित्यान्द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतस्सप्त सप्तगणा ये तान् । तथा च बहून्यन्यान्यप्यदृष्टपूर्वाणि मनुष्यलोके त्वया, त्वत्तोऽन्येन वा केनचित्, पश्याश्चर्याण्यद्भुतानि भारत! ॥६॥

---

मन्यस इति । हे प्रभो ! तद्रूपं मया द्रष्टुं शक्यमिति मन्यसे यदि ततस्तर्हि हे योगेश्वर ! अव्ययमात्मानं मे त्वं दर्शय । योगिन इति जात्येकवचनम् । योगिनामित्यर्थः । योगा इति चित्तसमाधानविशेषा अणिमादयो वा । तेषामीश्वरः प्रभुर्नियन्ता । एतेन सर्वा अपि योगशक्तय ईश्वरपरतन्त्रा इति सूचितम् । योगिनो योगा इति पाठान्तरे योगशब्दस्य योगिपरत्वमर्श आद्यजन्तत्वादिति बोध्यम् ।

तत इत्यस्य तर्हीत्यर्थमनाश्रित्य तस्मादिति कारणार्थत्वमाश्रित्य यत्तदोर्नित्यसम्बन्धाद्यत इतिपदमध्याहृत्य पदान्तराध्याहारेण वाक्यं सृजति—यस्मादहमतीवार्थी द्रष्टुमिति । अर्थी कांक्षावान् । मदर्थमिति मद्वाञ्छापरिपूरणार्थमेव, नतु नटस्य रामादिवेषपरिदर्शनमिव तत्र विश्वरूपसन्दर्शनं स्वप्रयोजनार्थमिति भावः । अव्ययमवधिरहितमित्यर्थः । आत्मानं जगन्मयं स्वामित्यर्थः ॥४॥

पश्येति । भगवतो विश्वरूपत्वे विश्वगतानां सर्वेषामपि भगवद्रूपत्वस्यागतत्वात्सर्वाण्यपि तानि भगवद्रूपाण्येवेति कृत्वा प्राह—भगवान्मे रूपाणि शतशस्सहस्रशः पश्येति । शतसहस्रशब्दौ सङ्ख्यावाचिनौ न । किं त्वमितवाचिनावित्याह— अनेकश इति । असङ्ख्येयानीत्यर्थः । दिव्यानि परमाकाशे भवान्यप्राकृतानि मायामयानि ॥५॥

पश्येति । तत्र कानिचिद्रूपाणि नामभिर्निर्दिशति—पश्यादित्यानिति ॥६॥

न केवलमेतावदेव—

इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम्।
मम देहे गुडाकेश! यच्चान्यद्द्रष्टुमिच्छसि ॥७॥

इहेति। इहैकस्थमेकस्मिन्नेव स्थितं जगत्कृत्स्नं समस्तं पश्य। अद्येदानीं सचराचरं सह चरेणाचरेण च वर्तते मम देहे गुडाकेश! यच्चान्यज्जयपराजयादि, यत् शङ्कसे- 'यद्वा जयेम यदि वा नो जयेयु'रिति यदवोचः तदपि द्रष्टुं यदिच्छसि ॥७॥

किंतु—

न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा।
दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥८॥

नेति। न तु मां विश्वरूपधरं शक्यसे द्रष्टुमनेनैव प्राकृतेन स्वचक्षुषा स्वकीयेन चक्षुषा येन तु शक्यसे द्रष्टुं दिव्येन, तद्दिव्यं ददामि ते तुभ्यं चक्षुः। तेन पश्य मे मम योगमैश्वरमीश्वरस्य ममैश्वरं योगं योगशक्त्यतिशयमित्यर्थः ॥८॥

संजय उवाच—एवमुक्त्वा ततो राजन्! महायोगेश्वरो हरिः।
दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥९॥

एवमिति। एवं त यथोक्तेन प्रकारेणोक्त्वा ततोऽनन्तरं राजन् हे धृतराष्ट्र! महायोगेश्वरो महांश्चासौ योगेश्वरश्च हरिर्नारायणो दर्शयामास दर्शितवान् पार्थाय पृथासुताय परमं रूप विश्वरूपमैश्वरम् ॥९॥

अनेकवक्त्रनयनमनेकाद्भुतदर्शनम्।
अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥१०॥

अनेकेति। अनेकवक्त्रनयनमनेकानि वक्त्राणि नयनानि च यस्मिन् रूपे तदनेकवक्त्रनयनं, अनेकाद्भुतदर्शनमनेकान्यद्भुतानि विस्मापकानि दर्शनानि यस्मिन् रूपे तदनेकाद्भुतदर्शनं रूपं, तथाऽनेकदिव्याभरणमनेकानि दिव्यान्याभरणानि यस्मिन् तदनेकदिव्याभरणं, तथा दिव्यानेकोद्यतायुधं दिव्यान्यनेकान्यस्यादीन्युद्यतान्यायुधानि यस्मिन् तद्दिव्यानेकोद्यतायुधं, 'दर्शयामास' इति पूर्वेण सम्बन्धः ॥१०॥

---

इहेति। अद्य सचराचरं सर्वं जगदिहास्मद्देहे एकस्थमेकदेशस्थं पश्य। एकस्थं जगत्पश्येति वा। हे गुडाकेश! यच्चान्यद्द्रष्टुमिच्छसि तत्सर्वमपि मम देहे पश्य ॥७॥

नेति। प्राकृतेन मांसमयेनेत्यर्थः। स्वस्य तव चक्षुस्स्वचक्षुस्तेन। दिव्यमप्राकृतं मन्मायया कल्पितं तेजोमयमित्यर्थः ॥८॥

एवमिति। हरत्यार्थिनानां संसारमिति हरिः परमात्मा। परमं परमधिकं मा नास्ति यस्मात्परमं सर्वाधिकं विश्वमयमिति यावत् ॥९॥

अनेकेति। विश्वरूपमेव विशिनष्टि— अनेकेति। दृश्यन्त इति दर्शनानि, दृश्यानि विषया

किंच—

दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ।
सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥११॥

दिव्येति । दिव्यमाल्याम्बरधरं दिव्यानि माल्यानि पुष्पाण्यम्बराणि वस्त्राणि च ध्रियन्ते येनेश्वरेण तं दिव्यमाल्याम्बरधरं, दिव्यगन्धानुलेपनं दिव्यं गन्धानुलेपनं यस्य तं दिव्यगन्धानुलेपनं, सर्वाश्चर्यमयं सर्वाश्चर्यप्रायं, देवमनन्तं नास्यान्तोऽस्तीत्यनन्तः तमनन्तं, विश्वतोमुखं सर्वतोमुखं सर्वभूतात्मभूतत्वात्, तं दर्शयामास 'अर्जुनः ददर्श' इति वा अध्याह्रियते ॥११॥

या पुनर्भगवतो विश्वरूपस्य भाः, तस्या उपमोच्यते—

दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ।
यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥१२॥

दिवीति । दिव्यन्तरिक्षे तृतीयस्यां वा दिवि सूर्याणां सहस्रं सूर्यसहस्रं तस्य युगपदुत्थितस्य सूर्यसहस्रस्य या युगपदुत्थिता भाः, सा यदि सदृशी स्यात्तस्य महात्मनो विश्वरूपस्यैव भासः । यदि वा न स्यात्ततो विश्वरूपस्यैव भाः अतिरिच्यत इत्यभिप्रायः॥१२॥

---

इति यावत् । अनेकानामद्भुतानां दर्शनं यस्मिन् तदिति वा । उद्यतान्युद्धृतानि । शत्रुमारणे उद्युक्तानीति वा । दिव्यत्वमप्राकृतत्वं मायामयत्वमिति यावत् ॥१०॥

दिव्येति । धरतीति धरः, दिव्यमाल्याम्बराणां धरो दिव्यमाल्याम्बरधर इति समासः । गन्धानुलेपनं गन्धचर्चा । सर्वाण्याश्चर्याणि प्रकृतमुच्यन्ते यस्मिन् तं सर्वाश्चर्यमयं सर्वाश्चर्यप्रचुरमित्यर्थः । सर्वतोमुखमिति । अनेकमुखमित्यर्थः । तत्र हेतुमाह—सर्वभूतेति । एकैकभूतस्यैकैकं मुखमिति सर्वभूतानामनन्तमुखानि सन्ति, तानि सर्वाण्यपि मुखानीश्वरमुखान्येव । ईश्वरस्य सर्वभूतरूपत्वादिति भावः ॥११॥

दिवीति । उपमीयतेऽनयेत्युपमा उपमानम् । दिवि सूर्यसहस्रस्य भा युगपदुत्थिता स्याच्चेत्सा तस्य महात्मनो भासस्सदृशी स्यात् । सम्भावितोपमालङ्कारः । दिव्येक एव सूर्योऽधुनास्ति, न तस्य भगवद्विश्वरूपसमानकान्तिः, किं तर्हि तादृशास्सूर्यास्सहस्रं दिवि स्युः, ते च सहता भवेयुः, न तु व्यस्ताः व्यस्तत्वे कान्त्युत्कर्षालाभात् । तथा च परस्परसश्लिष्टसहस्रसूर्यसदृशकान्तिः भगवद्विश्वरूपमिति सिद्धम् । तृतीयस्यामिति । मर्त्यपातालापेक्षया स्वर्गस्य तृतीयत्वादिति भावः । सूर्यसहस्रस्य युगपदुत्थानं विना तद्भाया युगपदुत्थानं न सम्भवतीत्यभिप्रेत्याह—युगपदुत्थितस्येति, महात्मन इति । महत्परिमाणदेहस्येत्यर्थः । यावदर्थमाह—विश्वरूपस्येति । पक्षान्तरमाह—यदि वा न स्यादिति । यद्वा सा सदृशी न स्यादित्यर्थः । फलितमाह—तत इति । सूर्यसहस्रभास इत्यर्थः । अतिरिच्यत इति । उत्कृष्टा भवतीत्यर्थः ॥१२॥

किंच—

तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ।
अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥१३॥

तत्रेति । तत्र तस्मिन् विश्वरूपे एकस्मिन् स्थितमेकस्थं जगत्कृत्स्नं, प्रविभक्तमनेकधा देवपितृमनुष्यादिभेदैरपश्यद्दृष्टवान् देवदेवस्य हरेश्शरीरे पाण्डवोऽर्जुनः तदा ॥१३॥

ततस्स विस्मयाविष्टो हृष्टरोमा धनंजयः ।
प्रणम्य शिरसा देवं कृतांजलिरभाषत ॥१४॥

तत इति । ततः तं दृष्ट्वा स विस्मयेनाविष्टो विस्मयाविष्टः हृष्टानि रोमाणि यस्य सोऽय हृष्टरोमा चाभवत् । धनंजयः प्रणम्य प्रकर्षेण नमनं कृत्वा प्रह्वीभूतः सन् शिरसा देवं विश्वरूपधरं कृतांजलिः नमस्कारार्थं संपुटीकृतहस्तस्सन्नभाषतोक्तवान् ॥१४॥

कथम् ? यत्त्वया दर्शितं विश्वरूपं तदहं पश्यामीति स्वानुभवमाविष्कुर्वन्नर्जुन उवाच—

अर्जुन उवाच—पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसङ्घान् ।
ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥

पश्यामीति । पश्याम्युपलभे हे देव ! तव देहे देवान् सर्वान्, तथा भूतविशेषसङ्घान् भूतविशेषाणां स्थावरजङ्गमानां नानासंस्थानविशेषाणां सङ्घा भूतविशेषसङ्घाः तान्, किंच—ब्रह्माणं चतुर्मुखमीशमीशितारं प्रजानां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थमित्यर्थः । ऋषींश्च वसिष्ठादीन् सर्वानुरगांश्च वासुकिप्रभृतीन् दिव्यान् दिवि भवान् ॥१५॥

---

तत्रेति । तदा पाण्डवो देवदेवस्य तत्र शरीरे एकस्थमनेकधा प्रविभक्तं कृत्स्नं जगदपश्यत् । एकस्थमेकदेशस्थम् ॥१३॥

तत इति । ततस्स धनञ्जयः विस्मयाविष्टो हृष्टरोमा चाभवत् । भूत्वेति वा शेषः । शिरसा देवं प्रणम्य कृताञ्जलिपुरस्सन्निदमभाषत ॥१४॥

पश्यामीति । हे देव ! तव देहे सर्वान्देवान्पश्यामि; तथा भूतविशेषसङ्घान्पश्यामि, ईशं कमलासनस्थं ब्रह्माणं पश्यामि, सर्वान् ऋषींश्च पश्यामि; दिव्यानुरगांश्च पश्यामि । यद्वा पश्यामीत्येकक्रिययैव सर्वद्वितीयान्तपदानामन्वयः । भूतविशेषसङ्घानिति । नानाविधसंस्थानविशेषविशिष्टचराचरात्मकभूतसमूहानित्यर्थः । संस्थानमवयवसन्निवेशः, ईशिता प्रभुर्नियन्तेति यावत् । तत्तत्कर्मानुगुणं तं तं प्राणिनं नियमयतीति भावः ।

ननु ब्रह्मणो महात्मनः कथं पद्ममध्यस्थितिर्भृङ्गस्येव क्षुद्रस्येत्यत आह—पृथिवीति । पृथिव्येव पद्मं, तन्मध्यस्थमेरुरेव कर्णिका; मेरुशिखरे सत्यलोके वर्तनाद्ब्रह्मणः कमलासनस्थत्वमिति भावः । अत एव 'धाताब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः' इति कमलासनशब्दस्य ब्रह्मदेववाचित्वमुक्तममरादिभिः कोशकारैः । अत श्रीविष्णुमूर्तिनाभीपद्मप्रभवत्वादस्य कमलासनत्वमिति वाच्यं, विष्णोर्जगन्मयविग्रहस्य

किंच—

अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ।
नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूप ॥१६॥

अनेकेति । अनेकबाहूदरवक्त्रनेत्रं- अनेके बाहव उदराणि वक्त्राणि नेत्राणि च यस्य तव स त्वमनेकबाहूदरवक्त्रनेत्रः तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्राऽनन्तरूपमनन्तानि रूपाण्यस्येत्यनन्तरूपः तमनन्तरूपम् । नान्तं, अन्त अवसानं, न मध्यं, मध्यं नाम द्वयोः कोटयोरन्तरं, न पुनः तवादिं तव देवस्य नान्तं पश्यामि, न मध्यं पश्यामि, न पुनरादिं पश्यामि, हे विश्वेश्वर ! विश्वरूप ! ॥१६॥

किंच—

किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।
पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ॥१७॥

किरीटिनमिति । किरीटिन किरीटं नाम शिरोभूषणविशेषः । तदस्यास्तीति स

---

पादस्थानीयं पातालं नाभिस्थानीयं भूतलं शिरस्स्थानीयं तु सत्यतलमिति प्रसिद्ध्या भूपद्मस्यैव विष्णुनाभीपद्मत्वात् । यद्वा ब्रह्मणश्चतुर्मुखस्य विष्णुनाभीपद्मे विलक्षणे स्थितिः प्रलयकाल एव न त्वधुनेति कृत्वा अधुना ब्रह्मणः कमलासनं मेरुशिखररूपमेवेति बोध्यम् । नच पद्माकार आसनविशेषः पद्मासनमित्युच्यते भद्रासनस्वस्तिकासनाद्यन्तर्गतः, तस्मिन्नासने स्थितत्वात्कमलासनस्थ इति सुवचमिति वाच्य, विश्वरूपदर्शनक्षुभिताशयस्य चतुर्मुखस्य तदानीं नैश्चल्येन पद्मासने स्थित्ययोगात् ।

यत्तु रामानुजः—ब्रह्माणमण्डाधिपति चतुर्मुखं, तथा कमलासने ब्रह्मणि स्थितमीशं चेति, तदसत्—ब्रह्मणि स्थितस्य चिन्मात्रस्य चक्षुरविषयत्वात् । नीरूपो ह्यन्तर्यामी । नच ब्रह्मणो गते स्थितमीशं रुद्रमित्यर्थ इति वाच्यं, कमलासनस्थशब्देन कमलासनगतस्थमित्यर्थस्यापतिगाद्यमानत्वात् ।

ननु ब्रह्मविष्णुरुद्राणां त्रिमूर्तित्वेऽपि विष्णोस्साक्षान्नारायणत्वात्तद्देहे ब्रह्मेव शिवोऽप्यस्तीति कमलासनस्थं ब्रह्माणं, तथा ईशं शिवं च पश्यामीति व्याख्येयमिति चेत् , नैवम्—सर्वान्देवानित्यनेन रुद्रादित्यादिसर्वदेवानां प्रतिपादितत्वादीश्वरस्य शम्भोश्च रुद्रगणान्तःपातित्वाच्च पृथक्कथनावसर इति ।

कमलासनस्थं कैलासगिरौ पद्मासनसमासीनमीशं शिवं चापश्यदिति व्याख्यानेऽपि नास्माकं कापि क्षतिः । विष्णुशिवयोश्चैतन्यात्मनाऽभेदेऽपि सङ्घातात्मना भेदसद्भावात् । विष्णोरेवावतारविशेषत्वाद्विष्णुशिवविग्रहयोर्दिवि पातालस्वर्गे भवा दिव्याम्तान् ॥१५॥

अनेकेति । अनेकबाहूदरवक्त्रनेत्रमनन्तरूपं त्वा सर्वतः पश्यामि । हे विश्वेश्वर ! विश्वरूप ! तव पुनरन्तं न पश्यामि; मध्यं न पश्यामि; आदिं च न पश्यामि; त्वामेव सर्वत्र पश्यामि, न तु तवादिमध्यावसानानीति परमार्थः । द्वयोः कोटयोराद्यन्तयोरित्यर्थः ॥१६॥

किरीटिनमिति । किरीटमिति जात्येकवचनमनेककिरीटयुक्तमित्यर्थः । अनेकशिरस्कत्वा-

किरीटी तं किरीटिनं, तथा गदिनं गदाऽस्य विद्यत इति गदी तं गदिनं, तथा चक्रिणं च चक्रमस्यास्तीति चक्री त चक्रिणं च, तेजोराशिं तेजःपुंजं सर्वतोदीप्तिमन्तं सर्वतोदीप्तिर्यस्यास्तीति स सर्वतोदीप्तिमान् तं सर्वतोदीप्तिमन्तं, पश्यामि त्वां दुर्निरीक्ष्यं दुःखेन निरीक्ष्यो दुर्निरीक्ष्यः तं दुर्निरीक्ष्यं, समन्तात्समन्ततः सर्वत्र दीप्तानलार्कद्युतिमनलश्चार्कश्चानलार्कौ दीप्तावनलार्कौ तयोर्दीप्तानलार्कयोः द्युतिरिव द्युतिः तेजो यस्य तव स त्वं दीप्तानलार्कद्युतिः तं त्वां दीप्तानलार्कद्युतिमप्रमेयं न प्रमेयमप्रमेयम् । अशक्यपरिच्छेदमित्येतत् ॥१७॥

इत एव ते योगशक्तिदर्शनादनुमिनोमि—

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ।
त्वमव्ययश्शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥१८॥

त्वमिति । त्वमक्षरं न क्षरतीत्यक्षरं परमं ब्रह्म वेदितव्यं ज्ञातव्यं मुमुक्षुभिः । त्वमस्य विश्वस्य समस्तस्य जगतः परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं पर आश्रय इत्यर्थः । किंच त्वमव्ययः न तव व्ययो विद्यत इत्यव्ययः, शाश्वतधर्मगोप्ता शश्वद्भवः शाश्वतो नित्यो धर्मो तस्य गोप्ता शाश्वतधर्मगोप्ता । सनातनो चिरन्तनः त्वं पुरुषः परमो मतोऽभिप्रेतो मे मम ॥१८॥

किंच—

अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ।
पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥

अनादीति । अनादिमध्यान्तमादिश्च मध्यं चान्तश्च न विद्यते यस्य सोऽयमनादिमध्यान्तः तं त्वामनादिमध्यान्तमनन्तवीर्यं न तव वीर्यस्यान्तो विद्यत इत्यनन्तवीर्यः तं त्वामनन्तवीर्यं, तथाऽनन्तबाहुमनन्ता बाहवो यस्य तव स त्वमनन्तबाहुः तं त्वामनन्तबाहुं, शशिसूर्यनेत्रं शशिसूर्यौ नेत्रे यस्य तव स त्वं शशिसूर्यनेत्रस्तं त्वां शशिसूर्यनेत्रं चन्द्रादित्य-

द्विराट्पुरुषस्य । गदाचक्रयोस्तु प्राधान्येन निर्देशः । गदाचक्रशङ्खासिधनुराद्यनन्तायुधविशिष्टमित्यर्थः । तेजसां राशिः पुञ्जो यस्य तं तेजोराशिमनन्तमित्यर्थः । यद्वा तेजोराशिमिति तेजोराशिस्वरूपं 'स राशिरासीन्महसां महोज्ज्वल' इतिवत् । सर्वतो दीप्तिमन्तं यस्य दीप्तिस्सर्वतः सर्वत्रास्ति तं, तेजः प्रभापिण्ड', दीप्तिस्तु प्रभेति विवेकः । अग्नितत्प्रभावत् । दुर्निरीक्ष्यं दुःखेन निरीक्षितुं शक्यं निरीक्षितुमशक्यमित्यर्थः । प्रमातुं परिच्छेत्तुमशक्यमप्रमेयम् ॥१७॥

त्वमिति । त्वं वेदितव्यमक्षरं परममसि । त्वमस्य विश्वस्य परं निधानमसि । त्वं शाश्वतधर्मगोप्ताऽव्ययोऽसि । त्वं सनातनः पुरुष इति मे मतोऽसि । अक्षरमविनाशि परमं निरतिशयम् । फलितमाह—ब्रह्मेति । तस्यैव सर्वातिशयत्वेन निरतिशयत्वात् । कैर्वेदितव्यमत आह—मुमुक्षुभिरिति । तेषामेव मुक्त्यर्थं ब्रह्मजिज्ञासुत्वादिति भावः । सनातनः पुराणः ॥१८॥

नयनं पश्यामि त्वां दीप्तहुताशवक्त्रं दीप्तश्चासौ हुताशश्च तद्वद्वक्त्रं यस्य तत्र स त्वं दीप्तहुताशवक्त्रस्तं त्वां दीप्तहुताशवक्त्र, स्वतेजसा विश्वमिदं समस्तं तपन्तं सन्तापयन्तम् ॥१९॥

द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ।
दृष्ट्वाऽद्भुतं रूपमिदं तवोग्रं लोकत्रयं प्रव्यथितं महात्मन्! ॥२०॥

द्यावापृथिव्योरिति । द्यावापृथिव्योरिदमन्तरं हि अन्तरिक्षं व्याप्तं त्वयैकेन विश्वरूपधरेण दिशश्च सर्वा व्याप्ताः । दृष्ट्वोपलभ्याद्भुतं विस्मापकं रूपमिदं तवोग्रं क्रूरं लोकानां त्रयं लोकत्रयं प्रव्यथितं भीतं प्रचलितं वा हे महात्मन्! अक्षुद्रस्वभाव! ॥२०॥

अथेदानीं पुरा 'यद्वा जयेम यदि वा नो जयेयु'रित्यर्जुनस्य यो संशय आसीत्तन्निर्णयाय पाण्डवजयमैकान्तिकं दर्शयामीति प्रवृत्तो भगवान् तं पश्यन्नाह- किंच—

अमी हि त्वा सुरसङ्घा विशन्ति केचिद्भीताः प्रांजलयो गृणन्ति ।
स्वस्तीत्युक्त्वा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥

अमीति । अमी हि युध्यमाना योद्धारः त्वा त्वां सुरसङ्घा येऽत्र भूभारावतरणायावतीर्णाः वस्वादिदेवसङ्घा मनुष्यसंस्थानाः त्वां विशन्ति प्रविशन्तो दृश्यन्ते । तत्र केचिद्भीताः प्रांजलयः सन्तो गृणन्ति स्तुवन्ति, त्वामन्ये पलायनेऽप्यशक्ताः सन्तः, युद्धे प्रत्युपस्थिते उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा महर्षिसिद्धसङ्घा महर्षीणां सिद्धानां च सङ्घा महर्षिसिद्धसङ्घाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः सम्पूर्णाभिः ॥२१॥

---

अनादीति । अनादित्वादिविशेषणविशिष्टं त्वा पश्यामीत्यन्वयः ॥१९॥

द्यावापृथिव्योरिति । एकेन त्वया इदं द्यावापृथिव्योरन्तरं व्याप्तं, सर्वा दिशश्च व्याप्ता., हे महात्मन्! इमं तवेदं रूपं दृष्ट्वा लोकत्रयं लक्षणया तद्वर्तिनो जनाः । न च प्रतिकूलानुकूलमध्यस्थरूपजनत्रयमित्यभिधासिद्ध एवार्थो ग्राह्य इति वाच्यं, लोकशब्दस्य लक्षणयैव जनार्थे प्रवृत्तिर्न त्वभिधयेति तदर्थस्यापि लाक्षणिकत्वात् । प्रतिकूलत्वादिविशेषणकल्पने प्रमाणाभावाच्च । प्रव्यथितं भवतीति शेषः ॥२०॥

अमीति । अमी सुरसङ्घास्त्वा विशन्ति हि । केचिद्भीता अतएव प्राञ्जलयस्सन्तो गृणन्ति । महर्षिसिद्धसङ्घास्त्वां स्वस्तीत्युक्त्वा पुष्कलाभिस्स्तुतिभिस्स्तुवन्ति । अमी इत्यस्यार्थमाह—युध्यमाना इति । प्रत्यक्षेण दृश्यमाना युद्धं कुर्वन्तो भीष्मादयो योद्धार. । ननु कथमेषां सुरसङ्घत्वमत आह—ये ऽत्रेति । मनुष्याणामिव संस्थानमाकारोऽवयवसन्निवेशो येषां ते मनुष्यसंस्थाना । मनुष्यजात्यवतीर्णा इत्यर्थ. । विशन्तीति । अनेन भगवतैव भीष्मादयसंह्रियन्त इति सूच्यते । इदमेवामी च त्वेति श्लोकेन स्फुटं वक्ष्यते ॥२१॥

किं चान्यत्—

रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ।
गन्धर्वयक्षासुरसिद्धसङ्घा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥२२॥

रुद्रेति । रुद्रादित्या वसवो ये च साध्या रुद्रादयो गणा विश्वेऽश्विनौ विश्वे देवा अश्विनौ च द्वौ देवौ मरुतश्च वायव उष्मपाश्च पितरः, गन्धर्वयक्षासुरसिद्धसङ्घा गन्धर्वा हाहाहूहूप्रभृतयो, यक्षाः कुबेरप्रभृतयः, असुरा विरोचनप्रभृतयः, सिद्धाः कपिलादयस्तेषां सङ्घा गन्धर्वयक्षासुरसिद्धसङ्घाः, ते वीक्षन्ते पश्यन्ति त्वां विस्मिता विस्मयमापन्नाः सन्तः ते एव सर्वे ॥२२॥

यस्मात्—

रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ।
बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाऽहम् ॥२३॥

रूपमिति । रूपं महदतिप्रमाणं, ते तव, बहुवक्त्रनेत्रं बहूनि वक्त्राणि मुखानि नेत्राणि चक्षूंषि च यस्मिन् तद्रूपं बहुवक्त्रनेत्र, हे महाबाहो! बहुबाहूरुपादं बहवो बाहव ऊरवः पादाश्च यस्मिन् रूपे तद्बहुबाहूरुपादं, किंच बहूदरं बहून्युदराणि यस्मिन्निति बहूदरं, बहुदंष्ट्राकरालं बह्वीभिः दंष्ट्राभिः करालं विकृतं तद्बहुदंष्ट्राकरालं, दृष्ट्वा रूपमीदृशं लोका लौकिकाः प्राणिनः, प्रव्यथिताः प्रचलिता भयेन, तथाऽहमपि ॥२३॥

तत्रेदं कारणम्—

नभःस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ।
दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो! ॥२४॥

नभःस्पृशमिति । नभःस्पृशं द्युःस्पृशमित्यर्थः । दीप्तं प्रज्ज्वलितं, अनेकवर्णमनेकवर्णा

---

रुद्रेति । ये च रुद्रादित्याः, ये च वसवः, ये च साध्याः, ये विश्वेदेवाः, यौ चाश्विनौ, ये च मरुतः, ये चोष्मपाः, ये च गन्धर्वयक्षासुरसिद्धसङ्घाः, ते ते सर्वे लोका विस्मितास्सन्तः त्वां वीक्षन्त एव । रुद्राश्चादित्याश्च रुद्रादित्याः ॥२२॥

रूपमिति । हे महाबाहो! बहुवक्त्रनेत्रं बहुबाहूरुपादं बहूदरं बहुदंष्ट्राकरालं महत् ते रूपं दृष्ट्वा लोकाः प्रव्यथिताः । तथाऽहमपि प्रव्यथितः । लोकशब्दो लक्षणया लोकस्थपर इत्याह—लौकिकाः प्राणिन इति । नच 'लोकस्तु भुवने जने' इति कोशादभिधयैव तदर्थागम इति वाच्यं, शब्दस्यानेकार्थत्वस्यान्याय्यत्वात् । एक एवाभिधेयोऽर्थः, अन्ये तु लाक्षणिका एव, लाक्षणिका अर्था अपि कोशेऽभिधेयैस्सह संगृहीताः नानार्थत्वरामायेति । 'व्यथभयचलनयो'रिति धातुः । तत्र चलनार्थमाश्रित्याह—प्रचलिता इति । तत्र हेतुमाह—भयेनेति । भयार्थाश्रयणे तु भीता इत्येव सिद्ध्यति, नतु भीत्या चलिता इति । अत आश्रितश्चलनार्थ इति बोध्यम् । तथा लोकवदित्यर्थः ॥२३॥

नभस्स्पृशमिति । हे विष्णो! नभस्स्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रं त्वां दृष्ट्वा

भयङ्करा नानासंस्थाना यस्मिन् त्वयि तं त्वामनेकवर्णं व्याचाननं व्यात्तानि निवृतान्यान-
नानि मुखानि यस्मिन् त्वयि तं त्वां व्यात्ताननं, दीप्तविशालनेत्रं दीप्तानि प्रज्वलितानि
विशालानि विस्तीर्णानि नेत्राणि यस्मिन् त्वयि तं त्वां दीप्तविशालनेत्रं, दृष्ट्वा हि त्वां
प्रव्यथितान्तरात्मा प्रव्यथितः प्रभीतोऽन्तरात्मा मनो यस्य मम सोऽहं प्रव्यथितान्तरात्मासन्
धृतिं धैर्यं न विन्दामि न लभे, शमं चोपशमनं मनस्तुष्टिं हे विष्णो! ॥२४॥

कस्मात्—

दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसन्निभानि ।
दिशो न जाने न लभे च शर्म प्रसीद देवेश! जगन्निवास! ॥२५॥

दंष्ट्रेति । दंष्ट्राकरालानि दंष्ट्राभिः करालानि विकृतानि ते तव मुखानि दृष्ट्वैवोपलभ्य कालानलसन्निभानि प्रलयकाले लोकानां दाहकोऽग्निः कालानलः तत्सदृशानि कालानल-सन्निभानि मुखानि दृष्ट्वेत्येतत् । दिशः पूर्वापरविवेकेन न जाने दिङ्मूढो जातोऽस्मि । अतो न लभे च नोपलभे च शर्म सुखम् । अतः प्रसीद प्रसन्नो भव हे देवेश जगन्निवास! ॥

येभ्यो मम पराजयाशङ्का प्रागेवासीत्सा चापगता यतः—

अमी च त्वां धृतराष्ट्रस्य पुत्रास्सर्वे सहैवावनिपालसङ्घैः ।
भीष्मो द्रोणस्सूतपुत्रस्तथासौ सहास्मदीयैरपि योधमुख्यैः ॥२६॥

अमीति । अमी च त्वां धृतराष्ट्रस्य पुत्राः दुर्योधनप्रभृतयः- 'त्वरमाणाः विशन्ति' इति व्यवहितेन सम्बन्धः । सर्वे सहैव सहिताः अवनिपालसङ्घैरवनिं पृथिवीं पालयन्ती-

---

प्रव्यथितान्तरात्मा सन् धृतिं शमं च न विन्दामि हि । ननु नभसः सर्वसंस्पृष्टत्वाद्व्यर्थं नभस्स्पृशमिति विशेषणम् । क्षुद्राणामपि तथात्वादत आह—द्युःस्पृशमिति । अन्तरिक्षलोकस्पृशमित्यर्थः । स्वर्ग-लोकस्पृशमिति वा । व्याप्तमहाकाशमिति यावत् । त्वद्रूपगता नभोव्यापित्वव्यात्ताननत्वदीप्तविशाल-नेत्रत्वदीप्तत्वानेकवर्णत्वरूपा धर्मा लोकत्रयस्य मम च प्रव्यथितत्वे कारणम् । एवं सर्वलोकभीति-करत्वादेवैवंविधत्वद्दर्शनात्प्रव्यथितं मनो मे । भीते च मनसि कथं धैर्यशमयोरवस्थानम् ? न कथ-मपीत्यर्थः ॥२४॥

दंष्ट्रेति । ननु कस्मात्तव धृतिशमयोरप्राप्तिरिति शङ्कार्थं तव रूपस्य भीषणत्वादेवेत्याह— दंष्ट्रेति । यद्यपि पूर्वश्लोके स्वेनैवोक्तमिदं तथाऽप्यर्जुनोऽव्यवस्थितचित्तत्वात्सम्भ्रमेणोक्तमेव पुनरपि वदतीति बोध्यम् । हे देवेश! जगन्निवास! दंष्ट्राकरालानि कालानलसन्निभानि ते मुखानि दृष्ट्वैव दिशोऽहं न जाने । शर्म च न लभे । तस्मात्प्रसीद । पूर्वापरविवेकेनेति । इयं दिक्पूर्वा, इयं तु पश्चिमेत्येवं विवेकेनेत्यर्थः । दिग्ज्ञानाभावे दिशो न जाने इति वक्तुमेवासङ्गतत्वादिति भावः । दिङ्मूढः दिङ्मोहमापन्नः ॥२५॥

अमी चेति । अमी सर्वे च धृतराष्ट्रस्य पुत्रा अवनिपालसङ्घैस्सहैव । दंष्ट्राकरालानि भयान-

स्त्यवनिपालाः तेषां सङ्घैः, किंच भीष्मो द्रोणः सूतपुत्रः कर्णः तथाऽसौ सहास्मदीयैरपि धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैर्योधानां मुख्यैः प्रधानैः सह ॥२६॥

किंच—

वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि।
केचिद्विलग्ना दशनान्तरेषु सन्दृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥२७॥

वक्त्राणीति। वक्त्राणि मुखानि ते तत्र त्वरमणास्त्वरायुक्तास्सन्तो विशन्ति, किंविशिष्टानि मुखानि? दंष्ट्राकरालानि भयानकानि भयङ्कराणि; किंच केचिन्मुखानि प्रविष्टानां मध्ये विलग्नानां दशनान्तरेषु मांसमिव भक्षितं सन्दृश्यन्ते उपलभ्यन्ते चूर्णितैः चूर्णीकृतैः, उत्तमाङ्गैः शिरोभिः ॥२७॥

कथं प्रविशन्ति मुखानीत्याह—

यथा नदीनां बहवोऽम्बुवेगास्समुद्रमेवाभिमुखा द्रवन्ति।
तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥२८॥

यथेति। यथा नदीनां स्रवन्तीनां बहवोऽनेकेऽम्बूनां वेगा अम्बुवेगास्त्वराविशेषा समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति प्रविशन्ति तथा तद्वत् तवामी भीष्मादयो नरलोकवीरा मनुष्यलोके शूरा विशन्ति वक्त्राण्यभिविज्वलन्ति प्रकाशमानानि ॥२८॥

ते किमर्थं प्रविशन्ति. कथं चेत्याह—

यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः।
तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

यथेति। यथा प्रदीप्तं ज्वलनमग्निं पतङ्गाः पक्षिणो विशन्ति नाशाय विनाशाय समृद्धः उद्भूतो वेगो गतिर्येषां ते समृद्धवेगाः, तथैव नाशाय विशन्ति लोकाः प्राणिनः तवापि वक्त्राणि समृद्धवेगाः ॥२९॥

---

कानि ते वक्त्राणि त्वरमाणास्सन्त एव विशन्ति। तथाऽसौ भीष्मो द्रोणस्सूतपुत्रश्चैते। अस्मदीयैरपि योधमुख्यैस्सह दंष्ट्राकरालानि भयानकानि ते वक्त्राणि त्वरमाणा विशन्ति ॥२६॥

वक्त्राणीति। केचिच्चूर्णितैरुत्तमाङ्गैरुपलक्षिता दशनान्तरेषु विलग्नास्सन्तो मया संदृश्यन्ते। ननु दशनान्तरेषु केचित्किमिव विलग्ना अत आह—भक्षितं मांसमिवेति। यथा भक्षितमांसविशेषो दन्तान्तरे लगति तद्वदित्यर्थः ॥२७॥

यथेति। कथं विशन्तीति धार्तराष्ट्रादय इति कर्तृश्शेषः। यथा नदीनां बहवोऽम्बुवेगास्समुद्रमभिमुखा एव द्रवन्ति तथाऽमी नरलोकवीरा अभिविज्वलन्ति तव वक्त्राणि विशन्ति। समुद्रे नदीनामम्बुवेगा इव तव वक्त्रेषु धार्तराष्ट्रादयो विशन्तीत्यर्थः। समुद्रस्थानीयं विराड्रूपं, नदीसङ्गमस्थलस्थानीयानि मुखानि, नदीजलस्थानीयास्तु धार्तराष्ट्रादय इति विवेकः ॥२८॥

यथेति। प्रवेशमात्रे दृष्टान्तः पूर्वश्लोकेनोक्तः, अनेन तु नाशाय प्रवेशे दृष्टान्त इति

त्वं पुनः—

लेलिह्यसे ग्रसमानस्समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिः।
तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो॥३०॥

लेलिह्यस इति। लेलिह्यसे आस्वादयसि ग्रसमानोऽन्तःप्रवेशयन् समन्तात् समन्ततो लोकान् समग्रान् समस्तान् वदनैर्वक्त्रैर्ज्वलद्भिर्दीप्यमानैस्तेजोभिरापूर्य संव्याप्य जगत्समग्रं सहाग्रेण समस्तमित्येतत्। किंच भासो दीप्तयो तवोग्राः क्रूराः प्रतपन्ति प्रतापं कुर्वन्ति हे विष्णो व्यापनशील॥३०॥

यत एवमुग्रस्वभावोऽतः—

आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद।
विज्ञातुमिच्छामि भवन्तमाद्यं न हि प्रजानामि तव प्रवृत्तिम्॥३१॥

आख्याहीति। आख्याहि कथय मे मह्यं को भवानुग्ररूपः अतिक्रूराकारः। नमोऽस्तु ते तुभ्यं हे देववर देवानां प्रधान प्रसीद प्रसादं कुरु। विज्ञातुं विशेषेण ज्ञातुमिच्छामि

---

विशेषसद्भावान्न पुनरुक्तिः। यद्वा अबुद्धिपूर्वकप्रवेशे नदीवेगो दृष्टान्त उक्तः, बुद्धिपूर्वकप्रवेशे तु पतङ्ग इति विवेकः। यथा पतङ्गास्समृद्धवेगास्सन्तो नाशाय प्रदीप्तं ज्वलनं विशन्ति तथैव लोकास्समृद्धवेगास्सन्तो नाशायैव तवापि वक्त्राणि विशन्ति। ज्वलनं दीपज्वालादिरूपमग्निम्॥२९॥

लेलिह्यस इति। त्वं तु समन्ताज्ज्वलद्भिर्वदनैस्समग्रान् लोकान् ग्रसमानस्सन् लेलिह्यसे। हे विष्णो! तवोग्रा भासः तेजोभिस्समग्रं जगदापूर्य प्रतपन्ति। भासो दीपादिस्थानीयास्तान्द्रास्तेजांसि प्रभास्थानीया विरला इति विवेकः।

भाष्यकाराभिमतान्वयस्तु—त्वं समग्रं जगत्तेजोभिरापूर्य समन्ताज्ज्वलद्भिर्वदनैस्समग्रान्लोकान् ग्रसमानो लेलिह्यसे। हे विष्णो! तवोग्रा भासस्तु प्रतपन्तीति। अस्मिन्नन्वये तु भासां तेजसां चैकार्थ्येऽप्यनन्वयदोषो नास्तीति बोध्यम्।

नच तेजोभिरापूर्य जगत्समग्रमित्यस्य पूर्ववाक्यान्वये समाप्तपुनरादानदोष इति वाच्यं, अनाकांक्षितविशेषणस्यैव बहिर्भूतत्वे स दोषः, न त्वकांक्षितविशेषणस्येति सिद्धान्तात्। न चेदं तेजोभिर्जगत आपूर्णं विश्वरूपस्य नाकांक्षितमेव विशेषणमिति वाच्यं, तेजोभिर्जगत आपूर्णं विना लोकग्रसनाद्यसम्भवेन तस्याकांक्षितत्वात्। व्याघ्रादयोऽपि स्वतेजसा मृगादीन् परिभूय हि ग्रसन्ते, आस्वादयन्ति च। तद्वदीश्वरोऽपि स्वतेजसा जगत्परिभूयैव ग्रसते आस्वादयति च। तेजसा जगद्व्याप्तिर्हि जगत्परिभवः। येन जगदाक्रान्तं तस्य तेजस उत्कर्षः। तेजो यज्जगदाचक्राम तस्य जगतोऽपकर्षश्चेति। प्रतपन्तीत्यत्र कर्मादर्शनात्किमत्र कर्मेति सन्दिहानंप्रति धात्वर्थसंगृहीतकर्मत्वादकर्मकोऽयं धातुरिति बोधयितुमाह—प्रेत्युपसर्गयुक्तस्य तपतेरर्थं सन्तापमिति॥३०॥

आख्याहीति। उग्ररूपो भवान् कः? मे आख्याहि हे देववर! ते नमोऽस्तु प्रसीद आद्यं

भवन्तमाद्यमादौ भवमाद्यं, न हि यस्मात्प्रजानामि तव त्वदीयां प्रवृत्तिं चेष्टाम् ॥३१॥

श्रीभगवानुवाच—कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः।
ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः ॥३२॥

काल इति। कालोऽस्मि लोकक्षयकृल्लोकानां क्षयं करोतीति लोकक्षयकृत् प्रवृद्धो वृद्धिं गतो यदर्थं प्रवृद्धः तच्छृणु—लोकान् समाहर्तुं संहर्तुमिहास्मिन् काले प्रवृत्तः। ऋतेऽपि विनापि त्वा त्वां न भविष्यन्ति भीष्मद्रोणकर्णप्रभृतयस्सर्वे येभ्यस्तवाशङ्का येऽवस्थिताः प्रत्यनीकेष्वनीकमनीकं प्रत्यनीकेषु प्रतिपक्षभूतेष्वनीकेषु योधा एव योद्धारः ॥३२॥

---

भवन्तं विज्ञातुमिच्छामि। हि तव प्रवृत्तिं न प्रजानामि मया तव विश्वरूपं जिज्ञासितं प्रार्थितं च। त्वया तु व्यात्ताननत्वादिभिरतिघोरं रूपं दर्शितं, तत्र पृच्छामि कस्त्वमिति। किं विश्वरूपस्स एवायं त्वं, यद्वा तवेदं विश्वरूपादन्यद्रूपमथ वा त्वत्तोऽयमन्यः पुरुषः कश्चिद्घोराकृतिः। तव सौम्यपुरुषत्वादिति। चेष्टामिति। एवं घोरं रूपं धृत्वा त्वया किं वा चिकीर्षितं तदहं न जान इत्यर्थः ॥३१॥

काल इति। लोकान् समाहर्तुमिह प्रवृत्तो लोकक्षयकृत्प्रवृद्धः कालोऽहमस्मि। प्रत्यनीकेषु ये योधा अवस्थितास्ते सर्वे त्वा ऋतेऽपि न भविष्यन्त्येव। मया त्वत्प्रार्थनामनुसृत्य विश्वरूपमेव दर्शितम्। तद्धि विश्वरूपमनेकवक्त्रनयनत्वादिना स्वत एव घोरम्। तत्र च भूभारसजिहीर्षयेश्वरस्य ममाधुना रयव्यग्रत्वान्मम चेदं रूपमतिघोरं व्यात्ताननत्वदशनान्तरविलग्नयोधत्वदंष्ट्राकरालत्वादिभिः। तस्मादेवं घोररूपोऽहमीश्वरः काल एव।

किं कालो यमस्त्वम्? नेत्याह—लोकक्षयकृदिति। सर्वेषां लोकपाललोकस्थजनसहितानां भूरादिलोकानां क्षयकृत्- नाशकारी। यमस्यापि यमोऽहमीश्वर एव, ननु यम इति भावः।

यद्वा कालस्संवत्सराद्यात्मकः किम्? नेत्याह—लोकक्षयकृदिति। संवत्सरचक्रप्रवर्तकस्य सूर्यस्यापि क्षयकृत्त्वान्नाहं जन्यकाल, किंतु नित्यकाल ईश्वर एवेति भावः।

कीदृशः कालोऽत आह—प्रवृद्ध इति। विश्वरूप ईश्वरोऽहमित्यर्थः। किमर्थं विश्वरूपधारणमिदमत आह—लोकानिति। अस्मिल्लोकेऽस्मिन्काले, एनाल्लोकान्भीष्मद्रोणादीन्जनान् समाहर्तुं गिलितुं नाशयितुमिति यावत्। प्रवृत्तो विश्वरूपधारणे प्रवृत्त, यद्वा लोकसमाहरणे प्रवृत्तः। एवमस्त प्रवृत्तोऽहमिति ते दर्शयितुं प्रवृद्धः। अथ वा प्रवृद्धो प्रवनोन्मुखत्वमर्थः।

प्रत्यनीकेषु प्रतिसैन्यमुभयसैन्योरित्यर्थः। यद्वा सेनां सेना प्रत्यवस्थिता। उभयसेनयोरवस्थिता इत्येव यावत्। प्रतिपक्षभूतेष्विति। परस्परमिति शेषः। अन्योन्यं प्रतिपक्षभूतयोर्द्वयोरसेनयोरिति प्रत्यनीकेष्वित्यस्यार्थः। यद्वा प्रत्यनीकेषु शात्रवसैन्येषु तेषामेव प्रतिकूलसैन्यत्वेन प्रत्यनीकत्वादिदमेवाह—प्रतिपक्षभूतेष्विति। नन्वेवं प्रतिकूलान्यनीकानि प्रत्यनीकानीति न भाविनमावार्थमिति देवदि, भीष्मादामेव प्रतिरात् सर्वसैन्येष्वित्यर्थः। इमानि च सर्वसैन्यानि शात्रवाण्येवेत्याह—प्रतिपक्षभूतेष्विति ॥३२॥

यस्मादेवम्---

तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून् भुंक्ष्व राज्यं समृद्धम् ।
मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ! ॥३३॥

तस्मादिति । तस्मात्त्वमुत्तिष्ठ । 'भीष्मप्रभृतयोऽतिरथा अजेया देवैरपि, अर्जुनेन जिता' इति यशो लभस्व । केवलं पुण्यैर्हि तत्प्राप्यते जित्वा शत्रून् दुर्योधनप्रभृतीन् भुंक्ष्व राज्यं समृद्धमसपत्नमकण्टकम् । मयैव एते निहता निश्चयेन हताः प्राणैर्वियोजिताः पूर्वमेव । निमित्तमात्रं भव त्वं हे सव्यसाचिन् ! सव्येन वामेन हस्तेन शराणां क्षेप्ता सव्यसाचीत्युच्यतेऽर्जुनः ॥३३॥

द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ।
मया हतांस्त्वं जहि मा व्यथिष्ठा युध्यस्व जेतासि रणे सपत्नान् ॥३४॥

द्रोणमिति । द्रोणं च येषु येषु योधेष्वर्जुनस्याशङ्का तांस्तान्व्यपदिशति भगवान्, मया हतानिति । तत्र द्रोणभीष्मयोस्तावत्प्रसिद्धमाशङ्काकारणम् । द्रोणस्तु धनुर्वेदाचार्यो दिव्यास्त्रसम्पन्नः, आत्मनश्च विशेषतो गुरुर्गरिष्ठः; भीष्मश्च स्वच्छन्दमृत्युर्दिव्यास्त्रसम्पन्नश्च परशुरामेण द्वन्द्वयुद्धमगमत्, नच पराजितः । तथा जयद्रथः, यस्य पिता तपश्चरति 'मम पुत्रस्य शिरो भूमौ निपातयिष्यति यस्तस्यापि शिरः पतिष्यति' इति । कर्णोऽपि वासवदत्तयाऽमोघया शक्त्या सम्पन्नस्सूर्यपुत्रोऽयं कानीनः, अतस्तन्नाम्नैव निर्देशः । मया हतान् त्वं जहि निमित्तमात्रेण । मा व्यथिष्ठाः तेभ्यो भयं माकार्षीः । युध्यस्व जेतासि दुर्योधनप्रभृतीन् रणे युद्धे सपत्नान् शत्रून् ॥३४॥

---

यस्मादेवं मयैव कालेनैते हनिष्यन्ते तस्मादित्यर्थः । तस्मात्त्वं युद्धायोत्तिष्ठ; यशो लभस्व; शत्रून् जित्वाऽकण्टकं राज्यं भुंक्ष्व, शत्रून् जित्वा यशो लभस्वेति वा काकाक्षिन्यायेन द्वयोस्सम्बन्धत इति वा । एते धार्तराष्ट्रादय मयैव पूर्वमेव त्वद्धननात्प्रागेवेत्यर्थः । निहताः । तच दर्शितं तवेति भाव. । हे सव्यसाचिन् ! त्वं निमित्तमात्रं भव दैवं तवानुकूलं, तेषां तु प्रतिकूलमतस्तवैव जयस्स्यात् । तथापि न त्वयोदासितव्यं, पौरुषं विना केवलदैवालम्बनस्य क्षुद्रजनविषयत्वाद्व्यर्थत्वाच्चेति भावः । तस्मादुत्तिष्ठ सव्यसाचिनस्तवापि न दुष्करमिदं युद्धं, किंतु सुकरमेवेति भावः ॥३३॥

द्रोणमिति । त्वं मया हतं द्रोणं भीष्मं जयद्रथं कर्णं च जहि । तथा मया हतानन्यानपि योधवीरान् जहि । माव्यथिष्ठाः । युद्ध्यस्व । रणे सपत्नान् जेतासि । आशङ्का मयैते न हनिष्यन्ते एतएव मां हनिष्यन्तीत्येवमाकारिका । जयद्रथ सैन्धव । यस्येति । यो मम पुत्रस्य शिरो भूमौ निपातयिष्यति तस्यापि शिरो भूमौ पतत्वित्यभिसन्धिमतस्य यस्य पिता चरति चराचरेत्यर्थः । एवं च जीवतास्य दुर्जयत्वं सिद्धम् । सूर्यपुत्र इति । सूर्यस्य प्रसिद्धतेज आदिगुणवत्त्वात्तत्पुत्रस्य कर्णस्यापि पितृसमानगुणवत्त्वेन दुर्जयत्वमिति भाव । कथमयं सूर्यपुत्रोऽत आह---कानीन इति । कन्याया

संजय उवाच—एतच्छ्रुत्वा वचनं केशवस्य कृतांजलिर्वेपमानः किरीटी ।
नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥

एतदिति । एतच्छ्रुत्वा वचनं केशवस्य पूर्वोक्तं कृतांजलिस्सन् वेपमानः कम्पमानः किरीटी नमस्कृत्वा भूयः पुनरेवाह उक्तवान् कृष्णं सगद्गदं भयाविष्टस्य दुःखाभिघातात्स्नेहाविष्टस्य च हर्षोद्भवादश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधः । ततश्च वाचोऽपाटवान्मन्दशब्दत्वं यत्सद्गद्गदस्तेन सह वर्तत इति सगद्गदं वचनमाहेति वचनक्रियाविशेषणमेतत् । भीतभीतः पुनःपुनर्भयाविष्टचेतास्सन् प्रणम्य प्रह्वीभूत्वा 'आह' इति व्यवहितेन सम्बन्धः ।

अत्रावसरे संजयवचनं साभिप्रायम् । कथम् ? द्रोणादिष्वर्जुनेन निहतेषु चतुर्षु तथा अन्येषु च निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रो जयंप्रति निराशस्सन् सन्धिं करिष्यति; ततश्शान्तिरुभयेषां भविष्यतीति । तदपि नाश्रौषीद्धृतराष्ट्रो भवितव्यवशात् ॥

अर्जुन उवाच—स्थाने हृषीकेश! तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ।
रक्षांसि भीतानि दिशो द्रवन्ति सर्वे नमस्यन्ति च सिद्धसङ्घाः ॥३६॥

स्थान इति । स्थाने युक्तं; किं तत् ? तव प्रकीर्त्या त्वन्माहात्म्यकीर्तनेन श्रुतेन

---

अपत्यं कानीनः । 'कन्यायाः कनीन च' इति कनीनादेशः । सूर्यात्कन्यायां कुन्त्यां जात इत्यर्थः । अनेन च कुन्त्याः प्रथमं प्रसूतोऽयं महासत्त्व इति सूच्यते । जेतासीति लुट्प्रयोगः । जेष्यसीत्यर्थः ॥

एतदिति । केशवस्यैतद्वचनं श्रुत्वा वेपमानः किरीटी कृताञ्जलिस्सन् नमस्कृत्य भीतभीतस्सन् प्रणम्य कृष्णंप्रति सगद्गदं भूय एवाह ।

ननु सञ्जय उवाचेति वचनमत्र व्यर्थं, कृष्णार्जुनप्रश्नोत्तरिकाया असमाप्तत्वादित्यत्राह—अत्रेति, संजयवचनमिति । एतच्छ्रुत्वेत्यादिश्लोकरूपमित्यर्थः ।

अयं भावः—श्रीभगवानुवाच जेतासि रणे सपत्नानित्यन्तं वाक्यजातं, ततस्त्वर्जुन उवाचेत्यर्जुनवचनमेव निबद्धव्यं नत्वनवसरं सञ्जयवचनमिति । ततश्च कृष्णार्जुनप्रश्नोत्तरिकाया मध्ये सञ्जयवचननिबन्धनं कालोऽस्मीत्यारभ्य जेतासि रणे सपत्नानित्यन्तं श्रीकृष्णवाक्यं श्रुत्वा सन्धिं करिष्यति धृतराष्ट्र इत्याशया धृतराष्ट्रं प्रति सञ्जयो जेतासि रणे सपत्नानित्यन्तं ग्रन्थमुक्त्वा तूष्णीं बभूव क्षणकालं, तथापि धृतराष्ट्रे सन्ध्यावप्रवृत्तेसति पुनस्सञ्जयो वक्तुं प्रवृत्त इत्येतद्वृत्तान्तसूचनाय सञ्जय उवाचेति सञ्जयवचनमिह निबद्धं भगवता बादरायणेनेति ।

नाश्रौषीदिति । त्वदुक्तविषया सन्धिमहं करिष्यामीति नाङ्गीचकारेत्यर्थः । नन्विदमश्रवणं कस्य दोषोऽत्र आह—भवितव्येति । 'यद्भावि तद्भवत्येव यदभावि न तद्भवे'दिति न्यायात् भवितव्ये कुरुपाण्डवयुद्धमवश्यं भवत्येव, न त्वमवितुं शक्नोतीति भावः ॥३५॥

स्थान इति हे हृषीकेश! तव प्रकीर्त्या जगत्प्रहृष्यति, अनुरज्यते च । तदेतत्स्थाने ।

हे हृषीकेश! यज्जगत्प्रहृष्यति प्रहर्षमुपैति तत्स्थाने युक्तमित्यर्थः। अथ वा विषयविशेषणं स्थाने इति। युक्तो हर्षादिविषयो भगवान् यत ईश्वरः सर्वात्मा सर्वभूतसुहृच्चेति। तथाऽनुरज्यतेऽनुरागं चोपैति; तच्च विषये इति व्याख्येयम्। किं च रक्षांसि भीतानि भयाविष्टानि दिशो द्रवन्ति गच्छन्ति तच्च स्थाने विषय इति; सर्वे नमस्यन्ति नमस्कारं कुर्वन्ति च, सिद्धसङ्घाः सिद्धानां सङ्घाः समुदायाः कपिलादीनां तच्च स्थान इति ॥३६॥

अतश्च भगवतो हर्षादिविषयत्वे हेतुं दर्शयति—

कस्माच्च ते न नमेरन्महात्मन्! गरीयसे ब्रह्मणोऽप्यादिकर्त्रे।
अनन्त! देवेश! जगन्निवास! त्वमक्षरं सदसत्तत्परं यत् ॥३७॥

कस्मादिति। कस्माच्च हेतोस्ते तुभ्यं न नमेरन् न नमस्कुर्युः हे महात्मन्! गरीयसे गुरुतराय, यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्ता कारणम्। अतस्तस्मादादिकर्त्रे कथमेते न नमस्कुर्युः? अतो हर्षादीनां नमस्कारस्य च स्थाने त्वमर्हो विषय इत्यर्थः। हे अनन्त! देवेश! हे जगन्निवास! त्वमक्षरं तत्परं, यद्वेदान्तेषु श्रूयते। किं तत्? सदसदिति। तत्सद-

रक्षांसि भीतानि सन्ति दिशो द्रवन्ति। सर्वे सिद्धसङ्घाश्च नमस्यन्ति तच्च स्थाने। यद्वा विषय इति शेषः। तद्भगवान् स्थाने विषयः। एवमुत्तरत्रापि।

अत्र चत्वारि वाक्यानि चतुर्ष्वपि स्थानेपदस्यानुवृत्तिः। तत्पदस्य विषयपदस्य च चतुर्ष्वपि शेष इति च बोध्यम्। तत् जगतः प्रहर्षणं स्थाने युक्तम्। तज्जगतोऽनुरञ्जनं च स्थाने युक्तम्। तद्रक्षसां पलायनं स्थाने। तत्सिद्धसङ्घनमस्करणं स्थाने। एवं तत्तस्माद्भगवान् स्थाने युक्तो विषय इति। कस्य भगवान्युक्तो विषयोऽत आह—हर्षादीति। आदिपदादनुरागपलायननमस्कारग्रहणम्। हर्षादीनां विषयो हर्षादिविषयः भगवतो हर्षादिविषयत्वं युक्तमित्यर्थः।

नन्वीश्वरस्य परस्य कीर्तौ श्रुतायां कुतो जगतः प्रहर्षोऽत आह—सर्वभूतसुहृदिति। यतो भगवानीश्वरस्सर्वभूतसुहृत्, तस्मात्स्वसुहृद ईश्वरस्य कीर्तिश्रवणाज्जगतः प्रहर्षमुचितमेवेति भावः।

इदं च सर्वभूतसुहृत्त्वमुपलक्षणं सर्वभूतात्मत्वस्य। स्वसुहृदः स्वात्मभूतस्य चेश्वरस्य कीर्तिश्रवणाज्जगतः प्रहर्षणमनुरञ्जनं च युक्तमेवेति भावः। के ते सिद्धा अत आह—कपिलादीनामिति ॥३६॥

कस्मादिति। हर्षादीनां विषयो हर्षादिविषयः। तत्त्वे भगवत्कीर्तिश्रवणादिना जगतो हर्षादिलाभाद्भगवान् हर्षादिविषय इत्युच्यते। कथमेते न नमस्कुर्युः? अपि तु सर्वथापि नमस्कुर्युरेवेत्यर्थ। अत इति। यस्मादेवं सर्वे त्वामेव नमस्कुर्युस्तस्मादित्यर्थः। त्वमेव हर्षादीनां नमस्कारस्य च स्थाने विषयः। स्थानेपदार्थमाह—अर्ह इति। प्रजापतिद्वारा सर्वजगत्स्रष्टुर्ब्रह्मणोऽपि प्रधानजीवस्य उत्पादकस्त्वं हि सर्वाधिक इति हर्षादेर्युक्तविषय इत्यर्थः। एतेन क्षुद्रदेवतादीनां हर्षाद्यनर्हविषयत्वं प्रचितम्।

द्विद्यमानमसच्च यत्र नास्तीति बुद्धिस्ते उपधानभूते सदसती यस्याक्षरस्य यद्द्वारेण सदसदित्युपचर्यते । परमार्थतस्तु सदसतोः परं तदक्षरं, यदक्षरं वेदविदो वदन्ति तत्त्वमेव, नान्यदित्यभिप्रायः ॥३७॥

पुनरपि स्तौति—

त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ।
वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥३८॥

त्वमिति । त्वमादिदेवः- जगतः स्रष्टृत्वात् । पुरुषः पुरि शयनात्पुराणश्चिरन्तनः

---

यत्सदसत्, यच्च तत्परं तदक्षरं त्वमेवेत्यन्वयः । वर्तमानकालोपलक्षितं जगत्सत्, भूतं भविष्यच्चासत् । वर्तमान एव पुत्रादावस्तीति प्रत्येति लोकः; नतु नष्टे, नाप्युत्पत्स्यमाने । यद्वा व्यावहारिकं जगत्सत् प्रातिभासिकं त्वसत्- रज्ज्वादौ सद्बुद्धिदर्शनात्, रज्जुसर्पादौ स्वाप्निकरथादौ चासद्बुद्धिदर्शनात् । अथ वा स्थूलावस्थं कार्यं सत्, सूक्ष्मावस्थं कारणं त्वसत् । प्रपञ्चे जगदस्तीति प्रलये सूक्ष्मतया विद्यमानेऽपि जगति नास्तीतिबुद्धिरस्त्येव प्राणिनाम् । तथा च प्रपञ्चदशापन्नप्रकृतिस्सत्, प्रलयदशापन्नप्रकृतिरसदिति सिद्धम् ।

अनयोश्च सदसतोरक्षरोपाधिभूतत्वादक्षरमपि सदसदित्युपचर्यत इत्याह—ते इति । ते सदसती उपधानभूते उपाधिभूते । वस्तुतोऽक्षरस्य निरुपाधिकत्वाद्भूतेत्युक्तम् । यद्द्वारेणेति । सदसदुपाधिद्वारेत्यर्थः । उपचर्यते लक्षणयोच्यते ।

ननु अक्षरं लक्षणया सदसदित्युच्यत इत्युक्तं मुख्यवृत्त्या किमित्युच्यतेऽत आह—परमार्थतस्त्विति । उपचारं विनेत्यर्थः । परं विलक्षणं सदसतोर्जडत्वाद्दृश्यत्वाद्विकारित्वादनित्यत्वादसत्यत्वाच्च, अक्षरस्य चिन्मात्रत्वाद्द्रष्टृत्वादविकारित्वान्नित्यत्वात्सत्यत्वाच्च सदसद्वैलक्षण्यमक्षरस्य । यदक्षरमिति । ब्रह्मविद्भिर्यद्वस्त्वक्षरत्वेन निर्णीयोच्यते तद्वस्तु ब्रह्मेति यावत् । त्वमेवान्यत्तु त्वन्न भवतीत्यर्थः ।

यत्तु रामानुजः— अक्षरं जीवस्स त्वमेव, सत्कार्यावस्थप्रकृतिस्त्वमेव, असत्कारणावस्थप्रकृतिस्त्वमेव, ताभ्यां प्रकृतिपुरुषाभ्यां परं मुक्तजीवस्वरूपं यत्तदपि त्वमेवेति, तन्मन्दम्—अनेकवाक्यकल्पनाया गौरवादप्रमाणत्वाच्च, वायुर्यम इति श्लोकार्थेन विभूतिनिर्देशोऽप्यन्यत्र तदभावेनात्रापि विभूतिनिर्देशकल्पनायाऽनुचितत्वात्, स्वरूपकथनपरत्वादस्योत्तरश्लोकस्य च, बद्धात्ममुक्तात्मनोः स्वरूपैकत्वेन तद्भेदकल्पनस्यान्याय्यत्वाच्च ॥३७॥

त्वमिति । त्वमादिदेवः पुराणः पुरुषोऽसि । त्वमस्य विश्वस्य परं निधानमसि । त्वं वेत्तासि । त्वं वेद्यं च । त्वं परं धामासि । हे अनन्तरूप ! त्वया विश्वं ततम् ।

देवानामादिरादिदेवः, आदिश्चासौ देवश्चादिदेव इति वा । यो हि ब्रह्मादिस्तम्बपर्यन्तदेवमनुष्यादिभेदभिन्नचराचराणि भूतानि सृजति, तस्य च जगतस्स्रष्टा स आदिदेव ईश्वरः परमात्मा ।

त्वमेवास्य विश्वस्य परं प्रकृष्ट निधान निधीयतेऽस्मिन् जगत्सर्वं महाप्रलयादाविति । किंच वेत्तासि वेदितासि सर्वस्यैव वेद्यजातस्य । यच्च वेद्यं वेदनार्हं तदपि त्वं परं च धाम परम पदं वैष्णवम् । त्वया ततं व्याप्तं विश्वम् । हे अनन्तरूप ! अन्तो न विद्यते तव रूपाणाम् ॥

किंच—

वायुर्यमोऽग्निर्वरुणश्शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ।
नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥३९॥

वायुरिति । वायुस्त्वं यमश्चाग्निश्च वरुणोऽपांपतिः, शशाङ्कश्चन्द्रमाः, प्रजापति त्वं कश्यपादिः, प्रपितामहश्च पितामहस्यापि पिता प्रपितामहः, ब्रह्मणोऽपि पितेत्यर्थः । नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते । बहुशो नमस्कारक्रियाभ्या- साद्यावृत्तिगणन कृत्वसिचोच्यते । 'पुनश्च भूयोऽपि' इति श्रद्धाभक्त्यतिशयादपरितोषम त्मनो दर्शयति ॥३९॥

---

अयमेव प्रत्यगात्माऽपीत्याह—पुराणः पुरुष इति । प्रत्यगात्माऽप्यनादिरेवेति सूचयितुमाह— चिरन्तन इति । नच परमात्मैक एवानादिरिति वाच्यं, परमात्मन एव सर्वव्यापिनश्शरीरेषु प्रत्यग्रूपेण स्थितत्वादिति । नन्वस्य जगत्स्रष्टृत्वे जगन्नाशक क इत्यत आह—त्वमस्येति । आदि पदादन्तर प्रलयसंग्रह । सर्वं जगत्प्रलये स्वात्मन्युपसंहरतीति लयहेतुरयमेवेत्यर्थ । अत्र जगत आ त्मनि स्थिति कथनान्मध्येऽपि जगदात्मन्येव वर्तत इति स्थितिहेतुरप्ययमेवेति सिद्धम् ।

ननु प्रपञ्चप्रलययोर्द्वयोरपि यदि जगदात्मन्येव वर्तते तर्हि को भेद प्रपञ्चप्रलययोरिति चेत् उच्यते—प्रपञ्चदशायामात्मनि जगत्प्रविभक्तनामरूप स्फुट वर्तते । प्रलये तु नामरूपविभागान सूक्ष्मत्वादस्फुटं निलीय सुषुप्तावात्मन्यन्त करणवदिति ।

वेत्तेति । सर्वसाक्षित्वेन सर्वज्ञत्वादिति भाव । वेद्यमिति । ननु घट द्यो वेत्तुं शक्यत्व द्वेद्या, अयं तु वेत्तुं योग्यत्वाद्वेद्य । संसारनिवर्तकत्वादस्य वेदनं योग्यमत एव श्रुतिरपि 'तमेवै जानथ आत्मान'मिति वदति । तस्मादयमेक एव मुमुक्षुभि ज्ञेयस्संसारनाशायेत्या ह—तदपीति । ब्रह्म पीत्यर्थ । तस्यैव वेदनार्हत्वात् । नचैकस्यैव ज्ञानक्रियाया कर्मकर्तृविरोध , वेत्तेति वेद्यमिति चेति वाच्यं, जगतो वेत्ता प्रमातृभिर्वेद्यश्चेत्यदोषात् ।

वैष्णव विष्णो परमात्मन स्वरूपभूतं धाम तेज स्थानमिति वा । पद्यते गम्यत इति प स्वरूपं स्थानं वा । मुक्तजीवाना प्रवेशभूमित्वाद्ब्रह्मण स्थानत्वव्यपदेश ॥ ३८॥

वायुरिति । वाय्वादय प्रजापत्यन्ता विभूतय । प्रपितामह इति माहात्म्यकथनम् । त पितामहस्तु विभूतिरेव । यदि तु ब्रह्मायं नाभिकमलात्प्रसूतस्स पद्मन भो विग्रहविशेष इह विवक्षि इत्युच्येत तर्हि प्रपितामह पद्मनाभोऽपि विभूतिरेव । ब्रह्मणि तस्यापि कल्पितत्वात् ।

ननु सङ्ख्याया क्रियाभ्यावृत्तिगणने कृत्वसुच्प्रत्ययस्य विहितत्वात्सहस्रकृत्व इत्यनेनैव बहु नमस्कारक्रियाभ्यावृत्तेरुक्तत्वात्पुनश्च भूयोऽपीत्यादिर्व्यर्थ इत्याशङ्क्य स माधत्ते—बहुश इति । यथा

तथा—

नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ।
अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥

नम इति । नमः पुरस्तात्पूर्वस्यां दिशि तुभ्यम् । अथ पृष्ठतस्ते पृष्ठतोऽपि ते नमोऽस्तु । ते सर्वत एव सर्वासु दिक्षु सर्वत्र स्थिताय हे सर्व ! अनन्तवीर्यामितविक्रमोऽनन्तं वीर्यमस्यामितो विक्रमोऽस्य । वीर्यं सामर्थ्यं विक्रमः पराक्रमः । वीर्यवानपि कश्चिच्छत्रुवधादिविषये न पराक्रमते, मन्दपराक्रमो वा । त्वं त्वनन्तवीर्योऽमितविक्रमश्चेत्यनन्तवीर्यामितविक्रमः । सर्वं समस्तं जगत्समाप्नोषि सम्यगेकेनात्मना व्याप्नोषि यतः । ततस्तस्मादसि भवसि सर्वः त्वं, त्वया विना भूतं न किंचिदस्तीत्यभिप्रायः ॥४०॥

यतोऽहं त्वन्माहात्म्यापरिज्ञानादपराद्धोऽतः—

सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण ! हे यादव ! हे सखेति ।
अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वापि ॥४१॥

सखेति । सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभमभिभूय प्रसह्य यदुक्तं 'हे कृष्ण ! हे यादव ! हे स'खेति च अजानता अज्ञानिना मूढेन । किमजानतेत्याह—महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपम् । 'तवेदं महिमानं तमजानता' इति

तथाप्योश्शेष । यद्यपि बहुशो नमस्कारक्रियाभ्यावृत्तिगणनं कृत्वसुचा उच्यते, तथापि पुनश्च भूयोऽपीति श्रद्धाभक्त्यतिशयादात्मनोऽपरितोषं दर्शयति । यद्वा श्रद्धाभक्त्यतिशयादुच्यत इति शेष । तेन चात्मनोऽपरितोषं दर्शयतीति । अपरितोषं नमस्कारक्रियायामसन्तुष्टिम् । तृप्त्यभावमिति यावत् । बहुवारं नमस्कुर्वतोऽप्यर्जुनस्य पुन पुनस्त्वं नमस्कुर्यामित्येव बुद्धिरास तृप्त्यभावाद्यथा वा बहुवारं प्रेक्षमाणस्यापि कामिनीं कामुकस्य पुन पुनस्तां पश्येयमित्येव बुद्धिस्तद्वदिति भाव ॥३९॥

नम इति । पृष्ठत पश्चिमदिशीत्यर्थ । हे सर्व ! ते सर्वत एव नमोऽस्तु । पूर्वपश्चिमातिरिक्तदिक्षट्कग्रहणं सर्वतश्शब्दादिह । हे सर्व ! सर्वात्मकेत्यर्थ । सर्वतस्स्थितायेति शेष । ते नम इति वाऽन्वय । ननु कुतोऽहं सर्वोऽस्मि आह—अनन्तेति । यत इति शेष । अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततस्सर्वोऽसि । अनन्तं वीर्यं यस्य सोऽनन्तवीर्य । अमितो विक्रमो यस्य सोऽमितविक्रम । द्वयो कर्मधारय । अमितविक्रमपदवैयर्थ्यं वारयति—वीर्यवानपीति । मन्दपराक्रमो वा भवेदिति शेष । एकेनात्मनेति स्वस्वरूपेणेत्यर्थ । चैतन्यरूपेणेति यावत् । व्याप्नोषीति । चैतन्यस्य सर्वव्यापित्वादिति भाव । आत्मभूतेन त्वया सर्वस्य व्याप्तत्वेन सर्वात्मा त्वं सर्वशब्दवाच्योऽसीत्यर्थ । अत इति । सर्वव्यापित्वात्तवेत्यर्थ ॥४०॥

सखेति, अपराद्ध इति । अपराधं कृतवानस्मि । इदमित्यस्य महिमानमित्यस्य च क्लीब

वैयधिकरण्येन सम्बन्धः। 'तवेम'मिति पाठो यद्यस्ति तदा सामानाधिकरण्यमेव। मया प्रमादाद्विक्षिप्तचित्ततया प्रणयो नाम स्नेहनिमित्तो विस्रम्भः। तेनापि कारणेन यदुक्तवानस्मि ॥४१॥

यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु।
एकोऽथ वाऽप्यच्युत तत्समक्षं तत्क्षामये त्वामहमप्रमेयम् ॥४२॥

यदिति। यच्चावहासार्थं परिहासप्रयोजनायासत्कृतः परिभूतोऽसि भवसि त्वं, क्व? विहारशय्यासनभोजनेषु विहरणं विहारः पादव्यायामः, शयनं शय्या, आसनमास्थायिका भोजनमदनमित्येतेषु विहारशय्यासनभोजनेषु एकः परोक्षस्सन्नसत्कृतोऽसि परिभूतोऽसि अथ वाऽपि हे अच्युत! तत्समक्षं तच्छब्दः क्रियाविशेषणार्थः। प्रत्यक्षं वा असत्कृतोऽसि तत्सर्वमपराधजातं क्षामये क्षमां कारये त्वामहमप्रमेयं प्रमाणातीतम् ॥४२॥

यतस्त्वम्—

पितासि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान्।
न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥४३॥

पितेति। पिताऽसि जनयिताऽसि लोकस्य प्राणिजातस्य चराचरस्य स्थावरजङ्गमस्य।

---

पुंस्त्वभेदेन भिन्नलिङ्गत्वादाह—वैयधिकरण्येनेति। इदं विश्वरूपं तव त्वदीयं भवति। तं विश्वरूपं त्वाख्यं महिमानमजानतेतीदंमहिमपदयोर्वैयधिकरण्येन सम्बन्धः। तवेदं विश्वरूपं तदेव महिमानमिति व्यस्तरूपके तु सामानाधिकरण्यमपि सिद्ध्येदेवेति बोध्यम्। तवेदं महिमानमजानता मया सखेति मत्वा प्रमादात्प्रणयेन वापि प्रसभं हे कृष्ण! हे यादव! हे सखे! इति यदुक्तं, हे सखे! इतीत्यत्र हे सख इति भवितव्ये हे सखेति वचनमार्षम्। सामानाधिकरण्यमिति। इदमहिमशब्दयोरेकाश्रयवृत्तित्वम्। इमं महिमानमिति पदयोर्विशेषणविशेष्यभावेनान्वय इति यावत्। प्रमादोऽनवधानता। चित्तैकाग्र्याभाव इत्याह—विक्षिप्तचित्ततेति। प्रविलम्भो वञ्चना। मया यदुक्तमिति कर्मणिप्रयोगं कर्तरिप्रयोगेण विवृणोति यदुक्तवानस्मीति। अहमिति शेषः ॥४१॥

यच्चेति। मयैकस्सन् त्वमपहासार्थं विहारशय्यासनभोजनेष्वसत्कृतोऽसीति यच्च, अथ वा हे अच्युत! तत्समक्षमसत्कृतोऽसीति यत्, तत्समस्तमप्रमेय त्वामहं क्षामये। आस्थायिका उपवेशनम्।

समक्षमिति। वक्ष्यमाणत्वादेकशब्दं परोक्षवाचीत्याह—एकः परोक्ष इति। एकत्वस्यैव परोक्षत्वप्रयोजकत्वादिति भावः। गृहे स एको वर्तत इत्यनेन गृहवर्तिपुरुषस्य पुरुषान्तरप्रत्यक्षत्वाभावो एकत्वेन सूच्यते। द्वयोस्सत्त्वे तु परस्परं प्रत्यक्षत्वं स्यादित्येकत्वमेव परोक्षत्वप्रयोजकम्।

तदित्यस्य तथेत्यर्थ इत्याह—क्रियाविशेषणेति। अप्रमेयमपरिच्छिन्नम्। यन्मया प्रणयादिना राघवादे यादवेत्यादिकमुक्तं, यच्च मया विहारादिषु तव पारोक्ष्ये परिहासार्थमसत्कृतं, यच्च तव समक्षमसत्कृतं तत्सर्वं क्षमस्वेति त्वां प्रार्थये इत्यर्थः ॥४२॥

पितेति। ननु त्वादृश एवाहमपीति किं मत्क्षमाप्रार्थनया तवेत्यत आह—पितेति। त्व

न केवलं त्वमस्य जगतः पिता, पूज्यश्च पूजार्हः । यतो गुरुर्गरीयान् गुरुतरः कस्माद् गुरुतरस्त्वमित्याह—न त्वत्समः त्वत्तुल्यो नास्ति । नहीश्वरद्वयं सम्भवति । अनेकेश्वरत्वे व्यवहारानुपपत्तेः । त्वत्सम एव तावदन्यो न सम्भवति कुत एवान्योऽभ्यधिकस्स्याल्लोकत्रयेऽपि सर्वस्मिन् ? अप्रतिमप्रभाव! प्रतिमीयते यया सा प्रतिमा, न विद्यते प्रतिमा यस्य तव प्रभावस्य स त्वमप्रतिमप्रभावः, हे अप्रतिमप्रभाव! निरतिशयप्रभावेत्यर्थः ॥४३॥

यत एवम्—

तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ।
पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव! सोढुम् ॥४४॥

तस्मादिति । तस्मात्प्रणम्य नमस्कृत्य प्रणिधाय प्रकर्षेण नीचैः धृत्वा कायं शरीरं

---

चराचरस्यास्य लोकस्य पितासि पूज्यश्चासि गरीयान् गुरुश्चासि । हे अप्रतिमप्रभाव! लोकत्रयेऽपि त्वत्समो न ह्यस्ति । अभ्यधिकोऽन्यः कुतः ?

अतिशयेन गुर्गरीयान् गुरूणामपि गुरुरित्यर्थः । गुरुर्गरीयानित्यस्य गुरूणामपि ये गुरवो ब्रह्मादयस्तेषामपि गुरुः परमगुरुः । यस्येतरो गुरुर्नास्ति स इत्यर्थः । चतुर्मुखस्यापि वेदोपदेष्टृत्वादिति भावः । यद्वा अतिशयेन महत्तरः 'महतो महीया'निति श्रुतेः ।

न त्वत्सम इति । ननु कुतो मत्समो नास्ति ब्रह्मविष्णुरुद्राणां त्रयाणां परस्परं समत्वादत आह—न हीति । ईश्वरस्य किमीश्वरान्तरं समः ? यद्वा जीवः ? नाद्यः- ईश्वरद्वयाभावात ; नान्त्यः- जीवस्यासर्वज्ञत्वादसर्वकर्तृत्वादिभ्यश्च । तस्मादसम एवेश्वरः । ब्रह्मविष्णुरुद्रनामभिस्तु स एक एवेश्वरो व्यवह्रियते, चतुर्मुखरुद्रौ तु जीवावेव । एक एव विष्णुर्मायी मायावच्छिन्नचैतन्यलक्षण ईश्वरः । अतो नास्य समं वस्त्वस्ति ।

ननु ब्रह्मविष्णुरुद्रगणपतिकुमारवाय्वादित्यमहेन्द्रादयोऽनेके ईश्वरास्सन्तु, को दोषस्तत्राह—अनेकेति । यदि बहव ईश्वरास्तर्हि, एकस्य यदा सृष्टीच्छा तदैवान्यस्य संहारेच्छा स्यात्, न चेष्टापत्तिः । प्रपञ्चस्यैवासम्भवप्रसङ्गात । तथा च प्रपञ्चसृष्ट्यादिसर्वव्यवहाराणामनुपपत्तिस्स्यात् ।

न चैवमेकेश्वरत्वे कथं चतुर्मुखादीनां बहूनामीश्वरत्वव्यवहार इति चेदुच्यते । तत्तच्चतुर्मुखादिशरीरावच्छिन्नसर्वज्ञचैतन्यदृष्ट्येति ।

ये तु चतुर्मुखादिसङ्घातेऽहमभिमानिनस्ते जीवा एव, यस्तेषामान्तरः कूटस्थस्स त्वीश्वरः स चैक एवेति चतुर्मुखादीनां कूटस्थदृष्ट्या ईश्वरत्वं सङ्घाताभिमानिप्रमातृदृष्ट्या तु जीवत्वमिति भावः ।

न चैवं सर्वेऽपि चैतन्यदृष्ट्या ईश्वरा एवेति वाच्यमिष्टापत्तेः । चैतन्यमेव हि सर्वत्रापीश्वर इति साक्षीति कूटस्थ इति आत्मेति चोच्यते । अत एव हि सर्वात्मत्वमीश्वरस्य ।

प्रतिमीयत इति । सदृशीक्रियत इत्यर्थः । प्रतिमा उपमेत्यर्थः । उपमानमिति यावत् । एवमप्रतिमप्रभावत्वादेवेश्वरस्य निरतिशयत्वं सर्वातिशयत्वं च ॥४३॥

तस्मादिति । यस्मादेवं सर्वोत्कृष्टत्वं तस्मादित्यर्थः । तस्मात्प्रणम्य कायं प्रणिधाय ईश-

प्रसादये प्रसादं कारये त्वामहमीशमीशितारं ईड्यं स्तुत्यम् । त्वं पुनः पुत्रस्यापराधं पिता यथा क्षमते सर्वं सखेव सख्युरपराधं यथा वा प्रियः प्रियायाः अपराधं क्षमत एवमर्हसि हे देव! सोढुं प्रसहितुं क्षन्तुमित्यर्थः ॥४४॥

अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ।
तदेव मे दर्शय देव! रूपं प्रसीद देवेश! जगन्निवास! ॥४५॥

अदृष्टेति । अदृष्टपूर्वं न कदाचिदपि दृष्टपूर्वमिदं विश्वरूपं तव मयाऽन्यैर्वा तदहं दृष्ट्वा हृषितोस्मि । भयेन च प्रव्यथितं मनो मे । अतः तदेव मे दर्शय हे देव! रूपं यन्मत्सखम् । प्रसीद देवेश! जगन्निवास! जगतो निवासः जगन्निवासः हे जगन्निवास! ॥४५॥

किंच—

किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ।
तेनैव रूपेण चतुर्भुजेन सहस्रबाहो! भव विश्वमूर्ते! ॥४६॥

किरीटिनमिति । किरीटिनं किरीटवन्तं तथा गदिनं गदावन्तं चक्रहस्तमिच्छामि त्वां प्रार्थये त्वां द्रष्टुमहं तथैव पूर्ववदित्यर्थः । यत एवं तस्मात्तेनैव रूपेण वसुदेवपुत्ररूपेण चतुर्भुजेन, सहस्रबाहो! वार्तमानिकेन विश्वरूपेण, भव विश्वमूर्ते! उपसंहृत्य विश्वरूपं, तेनैव रूपेण वसुदेवपुत्ररूपेण भवेत्यर्थः ॥४६॥

---

मीड्यं त्वामहं प्रसादये । हे देव! पुत्रस्यापराधं पितेव सख्युरपराधं सखेव प्रियाया अपराधं प्रिय इव ममापराधं सोढुमर्हसि ।

प्रियाया अर्हसीति पठितव्ये प्रियायार्हसीत्यकारलोपपाठ आर्षः । त्वा प्रसादये स्वत्प्रसादं प्रार्थयामीत्यर्थः । प्रसादः प्रसन्नता । पितेत्यादिदृष्टान्तत्रयं साभिप्रायम् ।

अयमभिप्रायश्च—जगतःस्रष्टृत्वात्पालकत्वाच्चेश्वरस्य पितृत्वं, कार्यत्वात्पाल्यत्वाच्चार्जुनस्य पुत्रत्वम् । तथा करणप्रेरकत्वादिना ईश्वरस्य सर्वभूतसखत्वात्सखित्वमर्जुनस्य च तत्प्रीतिकारित्वात्सखित्वम् । निरतिशयप्रेमास्पदत्वादानन्दमयेश्वरस्य प्रियत्वं, तत्परतन्त्रत्वादर्जुनस्य प्रियात्वमिति । एवं च पितृत्वात्सखित्वात्प्रियत्वाच्च त्वं ममापराधं क्षन्तुमर्हसीति ।

अत्र प्रियस्त्वं प्रियाय मे इति रामानुजव्याख्या न युक्ता सा—पितेव पुत्रस्येति दृष्टान्तानुरोधेन प्रियस्य ममेति वक्तव्यत्वात् । नच मे प्रियाय मम प्रीत्यर्थमित्यर्थ इति वाच्यं, तथापि दृष्टान्ताननुरोधात् । नच दृष्टान्तेऽपि पुत्रस्य प्रियाय पितेवेति वाच्यं, पुत्रस्य प्रियाय पुत्रस्यापराधं पितेवेति पुत्रशब्दस्यावृत्तिप्रसङ्गात् । स्वप्रीत्यर्थमेव पिता पुत्रापराधं सहते, न तु पुत्रप्रीत्यर्थमिति सिद्धान्तात् । 'आत्मनस्तु कामाय सर्वं प्रियं भव'तीति श्रुतेः ॥४४॥

अदृष्टेति । हृषितो हृष्टः ॥४५॥

किरीटिनमिति । अहं तथैव किरीटिनं गदिनं चक्रहस्तं त्वा द्रष्टुमिच्छामि । हे सहस्रबाहो!

अर्जुनं भीतमुपलभ्य, उपसंहृत्य विश्वरूपं, प्रियवचनेनाश्वासयन् श्रीभगवानुवाच—

श्रीभगवानुवाच- मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ।
तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥

मयेति । मया प्रसन्नेन प्रसादो नाम त्वय्यनुग्रहबुद्धिः, तद्वता प्रसन्नेन मया तव हे अर्जुन! इदं परं रूपं विश्वरूपं दर्शितमात्मयोगादात्मन ऐश्वर्यस्य सामर्थ्यात् । तेजोमयं तेजःप्रायं विश्वं समस्तमनन्तमन्तरहितमादौ भवमाद्यं यद्रूपं मे मम त्वदन्येन त्वत्तोऽन्येन केनचिन्न दृष्टपूर्वम् ॥४७॥

आत्मनो मम रूपदर्शनेन कृतार्थ एव त्वं संवृत्त इति, तत् स्तौति—

न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ।
एवं रूपश्शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर! ॥४८॥

नेति । न वेदयज्ञाध्ययनैश्चतुर्णामपि वेदानामध्ययनैर्यथावद्यज्ञाध्ययनैश्च- वेदाध्ययनैरेव यज्ञाध्ययनस्य सिद्धत्वात् पृथग्यज्ञाध्ययनग्रहणं यज्ञविज्ञानोपलक्षणार्थम् । तथा न दानैः तुलापुरुषादिभिः, नच क्रियाभिरग्निहोत्रादिभिश्श्रौतादिभिः, नापि तपोभिरुग्रैश्चान्द्रायणादिभिर्घोरैः । एवंरूप एवंप्रकारेण दर्शितं विश्वरूपं यस्य सोऽहमेवंरूपः न शक्योऽहं नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन त्वत्तोऽन्येन कुरुप्रवीर! ॥४८॥

मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ।
व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥४९॥

मेति । मा ते व्यथा माभूत्ते भयं, मा च विमूढभावः विमूढचित्तता, दृष्ट्वोपलभ्य रूपं घोरमीदृग्यथा दर्शितं ममेदं, व्यपेतभीर्विगतभयः प्रीतमनाश्च सन् पुनर्भूयस्त्वं तदेव

---

विश्वमूर्ते! तेनैव चतुर्भुजेन रूपेणोपलक्षित इति शेषः । भव । यद्यपि वसुदेवपुत्ररूपं द्विभुजमेव, तथापि चतुर्भुजत्वस्य कादाचित्कत्वात्तत्रापि तथोक्तमिति बोध्यम् ॥४६॥

मयेति । हे अर्जुन! प्रसन्नेन मया आत्मयोगात्तवेदं तेजोमयं विश्वमनन्तमाद्यं परं तद्रूपं दर्शितम् । मे यद्रूप त्वदन्येन न दृष्टपूर्वम् । आत्मयोग ईश्वरसामर्थ्यं, तस्मात् ॥४७॥

नेति । हे कुरुप्रवीर! नृलोके एवंरूपोऽहं त्वदन्येन द्रष्टुं वेदयज्ञाध्ययनैर्न शक्यः । दानैर्न शक्यः, क्रियाभिश्च न शक्यः, उग्रैस्तपोभिर्न शक्यः, मनुष्याणां तपआदिभिर्मद्विश्वरूपसाक्षात्कारो न स्याद्येकस्यैव मदनुग्रहाज्जात एवं यतस्ततस्त्वं कृतार्थ एव जात इति भावः ।

ननु वेदाध्ययनादेव वेदगतयज्ञभागाध्ययनमपि सिद्धमिति किमर्थं पृथग्यज्ञाध्ययनमुक्तमित्याशङ्क्य यज्ञविज्ञानोपलक्षणार्थं तदिति परिहरति—वेदाध्ययनैरेवेति । यज्ञानां विशेषेण ज्ञानं विज्ञानं तस्योपलक्षणार्थमिति । वेदाध्ययनैर्यज्ञविज्ञानैश्चेत्यर्थः । यज्ञविज्ञानं नाम यथायथा यज्ञाः कर्तव्यास्तथा-तथा तद्विशेषज्ञानम् । नृशब्दग्रहणाद्देवानां ब्रह्मादीनामेवेदं विश्वरूपं द्रष्टुं शक्यमिति ज्ञायते ॥४८॥

चतुर्भुजं रूपं शङ्खचक्रगदाधरं तवेष्टं रूपमिदं प्रपश्य ॥४९॥

संजय उवाच—इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ।

आश्वासयामास च भीतमेनं भूत्वा पुनस्सौम्यवपुर्महात्मा ॥५०॥

इतीति । इत्येवमर्जुनं प्रति वासुदेवस्तथाभूतं वचनमुक्त्वा स्वकं वसुदेवगृहे जातं रूपं दर्शयामास दर्शितवान् । भूयः पुनः । आश्वासयामास चाश्वासितवांश्च भीतमेनम् । भूत्वा पुनस्सौम्यवपुः प्रसन्नदेहो महात्मा ॥५०॥

अर्जुन उवाच—दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ।

इदानीमस्मि संवृत्तस्सचेताः प्रकृतिं गतः ॥५१॥

दृष्ट्वेति । दृष्ट्वेदं मानुषं रूपं मत्सखं प्रसन्नं तव सौम्यं जनार्दन । इदानीमधुनाऽस्मि संवृत्तः संजातः । किं सचेताः प्रसन्नचित्तः प्रकृतिं स्वभावं गतश्चास्मि ॥५१॥

श्रीभगवानुवाच—सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ।

देवा अप्यस्य रूपस्य नित्यं दर्शनकांक्षिणः ॥५२॥

सुदुर्दर्शमिति । सुदुर्दर्शं सुष्ठु दुःखेन दर्शनमस्येति सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम, देवा अप्यस्य मम रूपस्य नित्यं सर्वदा दर्शनकांक्षिणः; दर्शनेप्सवोऽपि न त्वमिव दृष्टवन्तः, न द्रक्ष्यन्ति चेत्यभिप्रायः ॥५२॥

कस्मात् ?—

नाहं वेदैर्न तपसा न दानेन न चेज्यया ।

शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥५३॥

नेति । नाहं वेदैः ऋग्यजुस्सामाथर्ववेदैश्चतुर्भिरपि, न तपसा उग्रेण चान्द्रायणादिना, न दानेन गोभूहिरण्यादिना, न चेज्यया यज्ञेन पूजया वा शक्य एवंविधो यथादर्शितप्रकारो द्रष्टुं दृष्टवानसि मां यथा त्वम् ॥५३॥

---

मेति । ईदृग्घोरं ममेदं रूपं दृष्ट्वा ते व्यथा मास्तु । विमूढभावश्च मास्तु । त्वं व्यपेतभीः प्रीतमनाश्च सन् तदेवेदं मे रूपं प्रपश्य प्रकर्षेण पश्य ॥४९॥

इतीति । वासुदेव इति तथाऽर्जुनं प्रत्युक्त्वा भूयः स्वकं रूपं दर्शयामास । महात्मा पुनस्सौम्यवपुर्भूत्वा भीतमेनमाश्वासयामास च । महात्मा वासुदेव इति वा ॥५०॥

दृष्ट्वेति । हे जनार्दन । इदानीं तव सौम्यं मानुषमिदं रूपं दृष्ट्वा सचेताः प्रकृतिं गतः संवृत्तोऽस्मि ॥५१॥

सुदुर्दर्शमिति । त्वं यन्मम रूपं तदिदं रूपं नृणामिति शेषः । सुदुर्दर्शम् । यतो देवा अपि नित्यमस्य रूपस्य दर्शनकांक्षिण ॥५२॥

नेति । त्वं मां यथा दृष्टवानसि तथा द्रष्टुमेवंविधोऽहं वेदैर्न शक्यः । तथा एवंविधोऽहं वेदैर्द्रष्टुं न शक्य इति वा । तपसा न शक्य, दानेन न शक्य, इज्यया च न शक्य. ॥५३॥

कथं पुनश्शक्य इत्युच्यते—

भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!
ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप॥५४॥

भक्त्येति। भक्त्या तु किंविशिष्टयेत्याह—अनन्ययाऽपृथग्भूतया, भगवतोऽन्यत्र पृथक् न कदाचिदपि या भवति सा त्वनन्या भक्तिः। सर्वैरपि करणैर्वासुदेवादन्यन्नोपलभ्यते यया सा अनन्या भक्तिः, तयाऽनन्यया भक्त्या शक्योऽहमेवंविधो विश्वरूपप्रकारः हे अर्जुन! ज्ञातुं शास्त्रतः। न केवलं ज्ञातुं शास्त्रतः, द्रष्टुं च साक्षात्कर्तुं तत्त्वेन तत्त्वतः, प्रवेष्टुं च मोक्षं च गन्तुं परन्तप! ॥५४॥

अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थोऽनुष्ठेयत्वेन समुच्चित्योच्यते—

मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः।
निर्वैरस्सर्वभूतेषु यस्समामेति पाण्डव॥५५॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विश्वरूप-
सन्दर्शनयोगो नामैकादशोऽध्यायः।

मत्कर्मकृदिति। मत्कर्मकृत् मदर्थं कर्म मत्कर्म, तत् करोतीति मत्कर्मकृत्। मत्परमः करोति भृत्यः स्वामिनः कर्म, न त्वात्मनः परमा प्रेत्य गन्तव्या गतिरिति स्वामिनं प्रतिपद्यते; अयं तु मत्कर्मकृत् मामेव परमां गतिं प्रतिपद्यत इति मत्परमोऽहंपरमः, परमा गतिर्यस्य सोऽयं मत्परमः। तथा मद्भक्तो मामेव सर्वप्रकारैः सर्वात्मना सर्वोत्साहेन च भजत इति मद्भक्तः। सङ्गवर्जितो धनपुत्रमित्रकलत्रबन्धुवर्गेषु सङ्गवर्जितः सङ्गः प्रीतिः स्नेह;

---

भक्त्येति। हे परन्तप! अर्जुन! एवंविधोऽहं ज्ञातुं द्रष्टुं तत्त्वेन प्रवेष्टुं च ज्ञातुं तत्त्वेन द्रष्टुं प्रवेष्टुं चेति वा। तत्त्वेन ज्ञातुं द्रष्टुं प्रवेष्टुं चेति वा। अनन्यया भगवदेकपरयेत्यर्थः। भगवद्भक्तानां भगवदनुग्रहाद्भगवद्विश्वरूपपरिज्ञानदर्शने मोक्षश्चेत्येते भवन्ति। ननु वैदिकास्तपस्विनो दातारस्सोमयाजिनो वा मद्रूपज्ञानादौ प्रभवन्तीति परमार्थः। तत्त्वेनेति। यथावदित्यर्थः।

ननु केऽमी भक्ताः कीदृशममीभिर्दृश्यं विश्वरूपमिति चेत्, उच्यते—ईश्वरं परोक्षत्वेन ये प्रपद्यन्ते, आत्मत्वेन प्रपद्यन्ते ये ते द्विविधा अपि भक्ता इहोच्यन्ते। तत्रात्मतत्त्वविदो मायिकमिदं विश्वरूपमिति विलासार्थं तत्पश्यन्ति। परोक्षेश्वरज्ञास्तु विश्वरूपमत्यद्भुतं भगवत इति साभिलाषमत्यादरेण पश्यन्तीति विवेकः ॥५४॥

मत्कर्मेति। निःश्रेयसार्थो मोक्षफलकः। समुच्चित्य निश्चित्य। मत्कर्मकृदीश्वरप्रीत्यर्थं नित्यनैमित्तिकादिविहितकर्मकारी। आसन्न्यासं कर्मणामत्यक्तव्यत्वादिति भावः।

ननु भृत्योऽपि स्वाम्यर्थं कर्म युद्धादिकं करोति, न स्वात्मार्थमत आह—मत्परम इति। या प्रेत्य

तद्वर्जितः । निर्वैरो निर्गतवैरः, सर्वभूतेषु शत्रुभावरहितः, आत्मनोऽत्यन्तापकारप्रवृत्तेष्वपि । य ईदृशः स मद्भक्तो मामेति । अहमेव तस्य परा गतिः, नान्या गतिः काचिद्भवति । अयं तवोपदेश इष्टो मयोपदिष्टः हे पाण्डवेति ॥५५॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
एकादशोऽध्यायः ।

---

गन्तव्या सा परमा गतिः । भृत्यस्तु प्रेत्य न स्वामिनं प्रतिपद्यत इति भृत्यस्य न स्वामी परमा गति. । भक्तस्तु प्रेत्य भगवन्तमेतीति भगवान् भक्तस्य परमा गतिः । एवं यतोऽहं भक्तस्य परमा गतिरतो भक्तो मत्परम इत्युच्यते ।

अनेन च श्लोकेन त्वमपि मद्भक्त्यादिविशिष्टस्सन्मदर्थं युद्धाख्यं नित्यं कर्म कुरु । मत्परमो भविष्यसि, मामेवैष्यसि ज्ञानोत्पत्तिद्वारा मोक्ष्यस इति यावत् । इत्युपदेशोऽर्जुनस्य सूच्यते ॥५५॥

इति श्रीवेलङ्कोण्डोपनामक रामकविकृतौ श्रीमद्भगवद्गीताशाङ्करभाष्यार्कप्रकाशे
विश्वरूपसन्दर्शनयोगो नाम एकादशोऽध्यायः ।
श्रीहयग्रीवार्पणमस्तु ।

श्रीहयग्रीवाय नमः ।

भाष्यार्कप्रकाशविलसित श्रीशाङ्करभाष्योपेतासु

# श्रीभगवद्गीतासु

## द्वादशोऽध्यायः ।

द्वितीयाध्यायप्रभृतिषु विभूत्यन्तेष्वध्यायेषु परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वोपाधिविशेषस्योपासनमुक्तं; सर्वयोगैश्वर्यज्ञानशक्तिमत्सत्त्वोपाधेरीश्वरस्य तव चोपासनं तत्रतत्रोक्तं; विश्वरूपाध्याये तु ऐश्वरमाद्यं समस्तजगदात्मस्वरूपं विश्वरूपं त्वदीयं दर्शितमुपासनार्थमेव त्वया । तच्च दर्शयित्वोक्तवानसि 'मत्कर्मकृ'दित्यादि । अतोऽहमनयोरुभयोः पक्षयोर्विशिष्टतरबुभुत्सया त्वां पृच्छामीत्यर्जुन उवाच--

---

एवं कीर्तयित्वा तत्र प्रश्नसङ्गतिमर्जुनस्य दर्शयति—विभूत्यन्तेष्विति । विभूत्यध्यायान्तेष्वित्यर्थः । दशमाध्यायावसानेष्विति यावत् । अध्यायेष्विति नवस्विति भावः । विध्वस्ता निरस्तास्सर्वे उपाधिविशेषा यस्य तस्य विध्वस्तसर्वोपाधिविशेषस्य निरुपाधिकस्य शुद्धस्येति यावत् । तव चेति । मायाशबलितब्रह्मण इत्यर्थः । उभयोरिति । निर्गुणसगुणब्रह्मोपासनयोरित्यर्थः । नच निर्गुणसगुणोपासनयोः फलभेदादन्यतरस्योत्कृष्टत्वं सुबोधमिति वाच्यं, फले भेदाभावादुभयस्यापि सायुज्यफलश्रवणात् । नच निर्गुणोपासनस्यैव सायुज्यं फलमिति वाच्यं, मत्कर्मकृदित्यादिना सगुणोपासनस्यापि सायुज्यफलकथनादित्यभिप्रेत्याह—मत्कर्मकृदित्याद्युक्तवानसीति, अत इति । फलैकत्वादित्यर्थः । ये भक्ता एवं सततयुक्तास्सन्तः त्वां पर्युपासते, ये चाप्यव्यक्तमक्षरं पर्युपासते तेषां मध्ये के योगवित्तमा. । अयमाशयः—सर्वत्र लोके आस्तिकानां प्रवृत्तिर्निवृत्तिश्चेति मार्गद्वयमेवास्ति । तथा च दर्शितं भाष्यारम्भे भाष्यकृद्भिः । तदेव मार्गद्वयम्-- 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ । ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति श्रीकृष्णेनाप्युक्तम् । निवृत्तिर्ज्ञानयोगः, प्रवृत्तिस्तु कर्मयोग इति विवेकः । इयमेव प्रवृत्तिः फर्मफलासङ्गादित्यागद्वारा कर्मयोगीभूय मुमुक्षून् संसारात्तारयति । तदत्यागात्तु संसारिणस्संसारयतीति बोध्यम् । इदं च मार्गद्वयं भिन्नाधिकारिविषयं- एकस्य युगपन्मार्गद्वयप्रवृत्त्यसम्भवात । तत्र ज्ञानिनां निवृत्तिर्विषयः- 'ज्ञानयोगेन साङ्ख्याना'मित्युक्तत्वात् । 'वेदाविनाशिनं नित्यं य एनमजमव्ययम् । कथं स पुरुषः पार्थ कं घातयति हन्ति क'मिति ज्ञानिनस्सर्वकर्माभावस्योक्तत्वाच्च । अमी च ज्ञानिनस्सन्न्यासिन एव- तेषामेव कर्मपरित्यागसम्भवात । अग्निहोत्रादिकं सर्वं कर्म परित्यज्य प्रजति हि परिव्राट् । कर्मिणस्तु परिशेषाद्ब्रह्मचारिगृहस्थवानप्रस्था कर्मीणां प्रवृत्तिरेव विषयः । एवंस्थिते ये निर्गुणं मत्स्वरूपभिन्नं परमात्मानमुपासते तेषां

ज्ञानिनां सन्न्यासिनां विश्वरूपोपासनमिदं विधीयते किम्? यद्वा कर्मिणाम्? नाद्यः- निर्गुणोपासकानां सगुणोपासनाया असम्भवात्। मत्कर्मकृदित्यादिना विश्वरूपोपासकानां भक्तानां कर्मविधानाच्च। न हि सन्न्यासिनां कर्म सम्भवति। तस्मात्कर्मिणामेव विश्वरूपोपासनम्। एवं कर्मयोगिनां विश्वरूपादिसगुणोपासकानामिह भक्तशब्देन व्यवहारः। अन्येषां तु ज्ञानिशब्देनेति विवेकः। नच कर्मिभ्यो ज्ञानिभ्यश्चान्य एव भक्ता इति वाच्यं, 'ये वर्णाश्रमधर्मस्थास्ते भक्ताः केशवं प्रति' इति स्मरणात्। लोकेऽस्मिन् द्विविधा निष्ठेति निष्ठाद्वैविध्यस्यैवेहाप्युक्तत्वेन निष्ठात्रैविध्यकल्पनस्याप्रमाणत्वात्। तस्मात्स्ववर्णाश्रमधर्माचरणमेव भक्तिः। नच पूज्येषु प्रीतिर्भक्तिरिति वाच्यं, पूज्यप्रीतिकारित्वस्यापि धर्म एवान्तर्भावात्। नच सगुणस्य साकारस्य भगवत उपासनं भक्तिरिति वाच्यं, तस्या अपि कर्मस्वेवान्तर्भावात्। ब्राह्मणानां विहितेषु षट्कर्मसु देवार्चनं ह्येकं कर्म। तस्मान्न कर्मयोगाद्भिन्नो भक्तियोग। नच बहि प्रतिमादौ देवार्चनस्य कर्मत्वेऽपि मनसि भगवद्विग्रहार्चनस्याकर्मत्वमिति वाच्यं, तस्यापि मानसिकक्रियात्वेन कर्मत्वात्। अहमिदानीं भगवतः स्नानं कल्पयामि, प्रागन्तधावनं कल्पितमथ वस्त्रबन्धं कल्पयिष्यामीत्येवं हि बहिरिव मनस्यप्यनुसन्धत्ते भक्त। एवं मानसिकैरप्यनेकैर्वस्त्राभरणाद्युपकरणैस्साध्यस्य भगवन्मानसिकार्चनस्य कथमकर्मत्वम्? कारकव्यापारतन्त्रं हि कर्म। तस्माद्भक्तियोग· कर्मयोगादनन्य इति स्थितम्। अनयोश्च योगयोः [redacted] उत्तम इति पृच्छत्यर्जुनः।

ननु कर्मयोगाद्ज्ञानयोग उत्तम इति कृष्णेनोक्तमर्जुनेनावधारितं च, 'ज्यायसीचेत्कर्मणस्ते मता बुद्धिर्जनार्दन' इत्युक्तत्वादर्जुनेन। ज्ञानयोगिनां साक्षान्मोक्षः कर्मयोगिनां तु ज्ञानद्वारेति फलभेदोऽप्युक्तः, चित्तशुद्धेरेव कर्मफलत्वात्। ततश्च योगद्वारा योगिनश्चोत्कर्षसिद्धेर्ज्ञानयोगिन उत्कर्ष इति ज्ञात एवांशे नास्त्यर्जुनस्य प्रश्नावकाश.। नच कर्मिभ्यो ज्ञानिनामुत्कृष्टत्वेऽर्जुनेन ज्ञातेऽपि भक्तेभ्यो ज्ञानिनामुत्कृष्टत्वं न ज्ञातमिति वाच्यं, कर्मिणामेव भक्तत्वात् इति चेदुच्यते—कर्मयोगाद्भक्तियोगोऽनतिरिक्त इति नार्जुनो वेत्ति- ज्यायसी चेदिति प्रश्नात्प्राग्भक्तियोगस्तु नोक्त·, ततश्च सगुणब्रह्मोपासनं विना ये फलाभिसन्धिं त्यक्त्वा यज्ञादिकर्माणि कुर्वन्ति तेभ्यः कर्मिभ्य उत्तमा भवन्तु ज्ञानिन.। ये सगुणब्रह्मोपासनं कुर्वन्त एव कर्मयोगे स्थितास्तेभ्यः किं ज्ञानिन उत्तमा उत नेति संशयादर्जुनस्य प्रश्न उपपद्यत इति। नच सगुणब्रह्मोपासन एव स्थिताः कर्मयोगे त्वस्थिता एते कर्मिभ्योऽन्ये भक्ता इति वाच्यं, मत्कर्मकृदिति कर्मकरण एव भक्तिमार्गस्योपसंहृतत्वात्। एवं सततयुक्ता इत्येवंशब्देनातीतानन्तरश्लोकेन मत्कर्मकृदित्यादिना प्रोक्तस्यैवार्थस्य परामर्शनात्। न हीश्वराभक्त ईश्वरार्थं कर्म करोति, स्वामिभक्तस्यैव भृत्यस्य स्वामिकार्यकरणदर्शनात्। नापि ज्ञानी कर्म करोति त्यक्तसर्वक्रियत्वात्सन्न्यासिनस्तस्य। तस्मात्कर्मयोग्येव भक्त। एतदज्ञानात्त्वर्जुनस्य प्रश्न। यद्वा कर्मयोगाद्ज्ञानयोग उत्तम इति श्रीकृष्णेनादावुक्तमर्थं श्रीविश्वरूपसन्दर्शनसंक्षुब्धान्तरङ्गतया विस्मृत्यार्जुनः पृच्छति-- ये विश्वरूपोपासकास्त्वत्कर्मकृतो भक्तास्तेऽपि त्वामेव यान्ति, मत्कर्मकृदिति यस्स मामेतीति प्रोक्तत्वात्। ये च शुद्धं प्रत्यगभिन्नं ब्रह्मोपासते तेऽपि त्वामेव यान्ति, 'अनन्यचेतास्सततं

अर्जुन उवाच—एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ।
ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥१॥

एवमिति । एवमित्यतीतानन्तरश्लोकेनोक्तमर्थं परामृशति 'मत्कर्मकृ'दित्यादिना ।

---

यो मां स्मरति नित्यशः । तस्याहं सुलभः पार्थ!' इत्यादिदर्शनात् । अतो नानयोः फलतो वैलक्षण्यं ज्ञातुं शक्यते । तस्मादहं पृच्छामि भक्तज्ञानिनोर्मध्ये क उत्तम इति ।

ननु भगवतापि कथमुक्तं कर्मणस्साक्षात्कैवल्यं यस्स मामेतीति चेन्नैवम्—यस्स ज्ञानद्वारा मामेतीति भगवदाशयात् । तदाशयापरिज्ञानात्त्वर्जुनस्य प्रश्नः ।

यत्तु रामानुजः—विश्वरूपेश्वरोपासका भक्ताः, प्रत्यगात्मोपासकास्तु ज्ञानिनस्तदुभयतारतम्य-जिज्ञासया प्रश्नोऽर्जुनस्येति, तन्मन्दम्—किमयं प्रत्यगात्मा जीव उतेश्वरः ? आद्ये- जीवादीश्वर-स्योत्कृष्टत्वेन जीवोपासकादीश्वरोपासकस्योत्कृष्टत्वसिद्धेः प्रश्नस्यैवानवकाशः । द्वितीये- स्वमतत्यागः परमतप्रवेशश्च । किंच अन्योपासकानां तदन्यप्राप्तिर्विरुद्धा । जीवोपासकानां त्वीश्वरप्राप्तिर्वक्ष्यते । ये त्वक्षरं पर्युपासते तेऽपि मामेव प्राप्नुवन्तीति वक्ष्यमाणत्वात् । नच मां प्राप्नुवन्तीत्यस्य मत्समा-नाकारमसंसारिणमात्मानं प्राप्नुवन्तीत्यर्थ इति वाच्यं, मुख्यार्थपरित्यागे कारणाभावात् । लक्षणाश्रयण-स्याप्रमाणत्वात् । न हि मामितिशब्दो मत्समानाकारमित्यमुमर्थं शक्त्या बोधयितुमीष्टे । तस्माद्ब्रह्म-प्राप्तिश्रवणाद्ब्रह्मोपासकानामेव ब्रह्मप्राप्तिसम्भवादक्षरोपासका एते ब्रह्मोपासका एव। तच्च प्रत्यगभिन्नमेव।

किंच ईश्वरस्य सोपाधिकं निरुपाधिकं चेति रूपद्वयमस्ति, तत्र सच्चिदानन्दलक्षणं चैतन्यं निरुपाधिकं रूपं, विश्वरूपादिकं तु सोपाधिकमित्यस्यार्थस्य सम्प्रतिपन्नत्वात्सोपाधिकेश्वरोपासकानां चोभयेषामपीश्वरोपासकत्वेन साम्यादमीषां के योगवित्तमा इत्यर्जुनस्य जिज्ञासया प्रश्न उपपद्यते । न त्वन्यथेत्येवं प्रश्नोपपत्तेश्चाक्षरमिह ब्रह्मैव- नतु तद्भिन्नः प्रत्यगात्मा । नच सोपाधिकोपासकानां न साक्षान्मोक्ष इति सिद्धत्वेदेव विवेकोऽर्जुनस्य प्रश्नं विनापीति वाच्यं, यस्स मामेतीति, सोपाधिकोपास-कस्यापि साक्षान्मोक्षस्योक्तत्वात् । नच विरुद्धार्थः कथमुक्तो भगवतेति वाच्यं, स कर्मी मां ज्ञान-द्वारेतीति श्रीकृष्णाशय इति पूर्वमेवोक्तत्वात् ।

ननु यदि विश्वरूपोपासकानां न साक्षान्मोक्षस्तर्हि, भगवता कृष्णेनार्जुनप्रश्नानन्तरमपि न भक्तानामस्ति साक्षान्मोक्षः, परं तु ज्ञानिनामेवेति कुतो नोक्तमिति चेदुच्यते—उक्तमेव भगवता व्यङ्ग्यमर्यादया । कथं मय्यावेश्येति भक्तानां युक्ततमत्वमित्येवोक्तं, नतु मां प्राप्नुवन्तीति मत्प्र-प्राप्तिः । अक्षरोपासकानां तु ते प्राप्नुवन्ति मामेवेति भगवत्प्राप्तिरेवोक्ता, नतु युक्ततमत्वादिकम् । अनेन च ज्ञानिनामेव साक्षान्मोक्ष, भक्तानां तु ज्ञानद्वारेति भगवदाशय इति ज्ञायते ।

रामानुजभाष्यरीत्या त्वीश्वरोपासकानां- युक्ततमत्वं जीवोपासकानामीश्वरप्राप्तिरिति महाननयं विरोध इति ।

तस्मात्सगुणनिर्गुणब्रह्मोपासकयोर्योगिसाङ्ख्ययोरन्यतरमार्गावलम्बनेच्छया पृच्छत्यर्जुनः— एवं सततेति ।

एवं सततयुक्ताः, नैरन्तर्येण भगवत्कर्मादौ यथोक्तेऽर्थे समाहितास्सन्तः प्रवृत्ता इत्यर्थः। ये भक्ता अनन्यशरणास्सन्तः त्वां यथादर्शितं विश्वरूपं पर्युपासते ध्यायन्ति, ये चान्येऽपि त्यक्तसर्वैषणास्सन्न्यस्तसर्वकर्माणो यथाविशेषितं ब्रह्माक्षरं निरस्तसर्वोपाधित्वादव्यक्तमकरणगोचरं- यद्धि लोके करणगोचरं तद्व्यक्तमुच्यते, अंजेर्धातोस्तत्कर्मकत्वादिदं त्वक्षरं तद्विपरीतं; शिष्टैश्चोच्यमानैर्विशेषणैर्विशिष्टं तद्ये चापि पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः? के अतिशयेन योगविद इत्यर्थः॥१॥

सततं नैरन्तर्येण युक्तास्समाहितास्सततयुक्ताः। कामीषां योगोऽत आह—भगवत्कर्मादाविति। भगवदर्थानि कर्माणि भगवत्कर्माणि यज्ञादीनि नित्यनैमित्तिकानि। आदिपदाद्विश्वरूपध्यानादिकं गृह्यते। भक्तेः परां काष्ठामाह—अनन्यशरणा इति। न विद्यते ईश्वरादन्यच्छरणं रक्षिता येषां ये तथोक्ताः। ईश्वरमेव सर्वात्मना शरणं गता इत्यर्थः। एतेनानन्यशरणत्वं भक्तेर्लक्षणमिति सिद्धम्।

यथेति। दर्शितं विश्वरूपमनतिक्रम्य यथादर्शितविश्वरूपम्। त्वां पर्युपासते तव विश्वरूपं ध्यायन्तीत्यर्थः। एषणा दारधनपुत्रविषयाः। त्रयोऽभिलाषाः। यथा विशेषितमिति। यथोक्तविशेषणविशिष्टमित्यर्थः। अक्षरस्य विशेषणानि तु 'एको देवस्सर्वभूतेषु गूढस्सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षस्सर्वभूताधिवासस्साक्षी चेता केवलो निर्गुणश्च' इत्यादिश्रुतिप्रसिद्धानि इहापि तत्रतत्रोक्तानि बोध्यानि। यद्वा अव्यक्तत्वरूपविशेषणविशिष्टमित्यर्थः। अव्यक्तत्वे हेतुमाह—निरस्तेति। उपाधीनां करणविषयत्वान्निरुपाधिकचैतन्यस्य तदविषयत्वाच्चेति भावः। करणानि मनआदीन्द्रियाणि। तत्कर्मकत्वादिति। तत्करणगोचरं वस्तु कर्म यस्य तत्त्वात्। सकर्मकोऽयं व्यजिधातुः प्रकटनार्थकः। गोपी भावं व्यञ्जयतीत्यादिप्रयोगात्। कर्म चास्य प्रकटीकरणयोग्यमेव भवति- अप्रकटीकरणीयस्य प्रकटीकरणासम्भवात्। करणमात्रमेव प्रकटीकरणीयमकरणमात्रस्य प्रकटनायोगात्। व्यङ्ग्यं हि घटादिकं व्यञ्जकैश्चक्षुरादिभिर्व्यज्यते। तस्माद्व्यजिधातोः्थञ्चकर्मकत्वात्तस्याकर्मभूतत्वादस्याऽव्यक्त.। अथ वा तत्कर्मकत्वात्तत्करणगोचरीकरणमेव कर्मक्रिया अर्थ इति यावत्। यस्य तत्त्वात्।

करणगोचरीकरणं प्रकटीकरणं प्रकटनमिति यावत्। यथाविशेषितमित्येतस्यार्थमाह—विशिष्टैरिति। विशिष्टैरसाधारणैः। चकारादुक्तैरित्यर्थः। वक्ष्यमाणैरिति च। उभयेषां विश्वरूपोपासकानामक्षरोपासकानां चेत्यर्थ.। योगवित्तमा योगं कर्मयोगं ज्ञानयोगं च विदन्ति भजन्त इति योगविदः- योगिनो ज्ञानिनश्च। तमप्प्रत्ययार्थमाह—अतिशयेनेति। तेषां के योगवित्तमाः। तेषां योगविदामुभयेषां मध्ये के उत्तमा इत्यर्थः। यद्यपि तमप्प्रत्ययो विच्छब्दान्वयी, तथापीह योगशब्देनान्वेतव्य.। ततश्च तेषां मध्येऽतिशयितं योगं के भजन्तीति फलितार्थः। यदाश्रितो योगोऽतिशयितस्तेऽतिशययोगवत्त्वाद्योगवित्तमा इत्युच्यन्ते। यद्वा योगमतिशयेन विदन्तीति योगवित्तमा

श्रीभगवानुवाच—ये त्वक्षरोपासकास्सम्यग्दर्शिनो निवृत्तैषणास्ते तावत्तिष्ठन्तु, तान् प्रति यद्वक्तव्यं तदुपरिष्टाद्वक्ष्यामः । ये त्वितरे—

श्रीभगवानुवाच—मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ।
श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥२॥

मयीति । मयि विश्वरूपे परमेश्वरे आवेश्य समाधाय मनः, ये भक्तास्सन्तो मां सर्वयोगेश्वराणामधीश्वरं सर्वज्ञं विमुक्तरागादिक्लेशतिमिरदृष्टिं नित्ययुक्ता अतीतानन्तराध्यायान्ते उक्तश्लोकार्थन्यायेन सततयुक्तास्सन्त उपासते श्रद्धया परया प्रकृष्टयोपेता ये ते मे मम मता अभिप्रेता युक्ततमा इति । नैरन्तर्येण हि ते मच्चित्ततया अहोरात्रमतिवाहयन्त्यतो युक्तं तान् प्रति युक्ततमा इति वक्तुम् ॥२॥

---

योगस्य परां काष्ठां गतवन्त इत्यर्थः । कर्मयोगज्ञानयोगयोरुभयोरपि योगत्वात्तत्र कर्मिणां ज्ञानिनां वा योगपरा काष्ठा सिद्ध्यतीति प्रश्नः । किं विश्वरूपोपासनं योगस्य परा काष्ठा ? उत परब्रह्मोपासनमिति यावत् । नच विदन्तीत्यस्य भजन्तीति व्याख्यानमयुक्तमिति वाच्यं, धातूनामनेकार्थकत्वात्कर्मयोगादीनामनुष्ठानं विना ज्ञानमात्रात्फलाभावाच्च ॥१॥

मयीति । ये परया श्रद्धयोपेता मयि मन आवेश्य नित्ययुक्तास्सन्तो मामुपासते ते युक्ततमा मे मताः । उक्तश्लोकेति । 'मत्कर्मकृन्मत्परमो मद्भक्तस्सङ्गवर्जितः । निर्वैरस्सर्वभूतेषु' इति न्यायेनेत्यर्थः । अतिशयेन युक्ता युक्ततमाः । युक्तास्समाहिताः । कुतोऽमीषां भक्तानां युक्ततमत्वमत आह—नैरन्तर्येणेति । अतिवाहयन्ति गमयन्ति ।

अयं भावः—ये तु विश्वरूपोपासनशून्याः केवलं कर्मयोगिनस्ते युक्ताः, ये तु विश्वरूपोपासकाः कर्मयोगिनस्ते युक्ततमा इति । न चाक्षरोपासकेभ्योऽपि कर्मयोगिन उक्तलक्षणा उत्कृष्टा इति युक्ता ज्ञानिनः, युक्ततमास्तु भक्ता इति वाच्यं, कर्मज्ञानयोगयोः ज्ञानयोगस्य प्रशस्ततरत्वस्य प्रागेव बहुश. प्रपञ्चितत्वात् । मोक्षं प्रत्यव्यवहितो हि ज्ञानयोगः । इहाप्ययमर्थो वक्ष्यते- 'ते प्राप्नुवन्ति मामे'वेति ।

ननु सगुणोपासकानां निर्गुणोपासकानां च मध्ये के युक्ततमा इत्यर्जुनप्रश्नस्य केवलकर्मिणां सगुणोपासकानां च मध्ये सगुणोपासका युक्ततमा इति श्रीकृष्णोत्तरमननुरूपमिति चेन्नैवम्—किं सगुणोपासका युक्ततमाः ? उत निर्गुणोपासका इत्यर्जुनप्रश्नस्यानुरूपमेव श्रीकृष्णोत्तरं सगुणोपासका एव युक्ततमा इति ।

तर्हि निर्गुणोपासकाः किं युक्ता अतो वक्ष्यति- 'ते प्राप्नुवन्ति मामे'वेति । निर्गुणोपासका न युक्ता नापि युक्ततमा., किंतु साक्षादहमेव ते । 'ज्ञानी त्वात्मैव मे मत'मित्युक्तत्वादिति तदाशय ।

ननु यद्येवं तर्हि तेषांमध्ये के अतिशयेन योगविद इति प्रश्नोऽनुपपन्न इति चेन्नैवम्—तथाप्यत्रैव तात्पर्यात् । यद्यपि तेषां मध्ये के युक्ततमा इति प्रश्नेन के पुनर्युक्ता इति प्रश्नान्तरं

गम्यते, तथापि न तदिहानुसंहितम् । यद्वा भवतु प्रश्नान्तरमिहानुसंहितं, तथापि नानुपपत्तिः- तेषां मध्ये न केऽपि युक्ताः, किंतु भक्ता युक्ततमा एव, ज्ञानी त्वहमेव, युक्तास्तु केवलं कर्मिण एवेत्युत्तरकल्पनोपपत्तेः ।

ननु उभयेषां योगिनां मध्ये के पुनरुत्तमा इति प्रश्नार्थो वर्णितः पूर्वमिदानीमुत्तरं त्वन्यथाऽवतारितमितिचेत्, मैवम्—ते प्राप्नुवन्ति मामेवेत्यनेन ज्ञानिनामेवोत्तमत्वमिति सिद्धत्वादुत्तरस्य । नच ते मे युक्ततमा मता इति साक्षादुत्तमत्वं भक्तानमेवोक्तमिति वाच्यं, युक्ततमा इत्यस्योत्तमा इत्यर्थालाभात् । नच योगवित्तमा इत्यनेनाभिन्नार्थक एव युक्ततमा इत्ययंशब्द इति वाच्यं, वक्तृविवक्षयाऽर्थभेदसम्भवाच्छब्दद्वयस्य ।

तथाहि सगुणोपासकानामक्षरोपासकानां च मध्ये के पुनरुत्तमा इति विवक्षया के योगवित्तमा इत्युक्तमर्जुनेन, उत्तमानामेव योगवित्तमत्वादित्याशयात् । भगवांस्तु तद्विवक्षां ज्ञात्वापि तेषां मध्ये के पुनर्युक्ततमा इत्यमुमेव यथाश्रुतार्थं गृहीत्वा उत्तरयामास- भक्ता एव युक्ततमा इति । एतावता श्रीकृष्णोत्तरवाक्येनाऽर्जुनस्य स्वविवक्षानुसारेण भक्ता एवोत्तमा इति कृष्णेनोत्तरमुक्तमिति प्रत्यय स्यात्, तन्निरासाय च वक्ष्यति ज्ञानिनो मामेव प्राप्नुवन्ति, ममैव ज्ञानित्वादतो न युक्तो नापि युक्तमो ज्ञानी, किं त्वहमेवेति ।

ततश्चार्जुनविवक्षितप्रश्नस्यापि दत्तमुत्तरं भवति । तदेवमर्जुनहृद्गतार्थस्य भक्तज्ञानिनोः क उत्तम इत्यस्यार्जुनप्रश्नवाक्यलभ्यस्य के युक्ततमा इत्यस्य च भगवता दत्तमुत्तरद्वयमिति बोध्यम् ।

वस्तुतस्तु तेषां के योगवित्तमा इत्यस्य यथाश्रुत एवार्थः । भक्तानां ज्ञानिनां चोभयेषां मध्ये के युक्ततमा इति । युक्ततमज्ञाने सति परिशेषाद्युक्तज्ञानं भवेदिति के वा युक्ता इति न पृष्टमर्जुनेन । आवां रामलक्ष्मणावित्युक्ते कोऽन्यो राम इति प्रश्नवत् । भगवांश्च प्रश्नानुरूपं प्रतिवचनं ददौ—भक्ता युक्ततमा इति । ततः परिशेषन्यायेन ज्ञानिनां युक्तत्वे सिद्धे मत्वाह भगवान्—'ते प्राप्नुवन्ति मामे'वेति । ज्ञानिनो न युक्ता नापि युक्ततमाः किं त्वहमेवेति । तथा च ते मे युक्ततमा मता इति भगवदुत्तरश्रवणाज्जातोऽर्जुनस्य भक्ता युक्ततमत्वाद्ज्ञानिभ्यो युक्तेभ्य उत्तमा इत्याकारक प्रत्यय ते प्राप्नुवन्ति मामेवेति वचनश्रवणान्निर्मूलं नष्ट आसीत् । परं तु ज्ञानिनो भगवदात्मत्वादुत्तमाः । भक्तास्तु भगवदभिमतत्वात्तेभ्योऽपकृष्टा इति प्रत्यय आसीत् । तस्मात्केवलकर्मयोगिनो युक्ता, भक्तियोगसहितकर्मयोगिनस्तु युक्ततमाः, सम्यग्दर्शिनस्तु भगवानेवेति कृत्वा नात्र युक्ततमा इत्यनेन ज्ञान्यपेक्षया भक्तानामुत्तमत्वमर्थ इति अमितव्यम् । ज्ञानस्य मोक्षंप्रति साक्षात्साधनत्वाद्भक्तेर्ज्ञानद्वारेति परंपरासाधनत्वाच । भक्तियोगो हि कर्मयोगादनतिरिक्तः । कर्मणश्च ज्ञानादपकृष्टत्वं बहुश प्रपञ्चितं प्रागेव ।

तस्मादत्र ज्ञान्यपेक्षया भक्ता युक्ततमत्वादुत्तमा इति, भक्ता मोक्षं शीघ्रं गच्छन्तीति च रामानुजव्याख्यानं नादर्तव्यम् । भक्तानां परम्परया मोक्ष इति, ज्ञानिनां साक्षान्मोक्ष इति च सिद्धान्ति-

किमितरे युक्ततमा न भवन्ति? न; किंतु तान्प्रति यद्वक्तव्यं तच्छृणु—

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते।
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥३॥

ये त्विति। ये त्वक्षरमनिर्देश्यमव्यक्तत्वादशब्दगोचरमिति न निर्देष्टुं शक्यते, अतोऽनिर्देश्यमव्यक्तं न केनापि प्रमाणेन व्यज्यत इत्यव्यक्तं पर्युपासते परि समन्तादुपासते। उपासनं नाम यथाशास्त्रमुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्य तैलधारावत्समानप्रत्ययप्रवाहेण दीर्घकालं यदासनं तदुपासनमाचक्षते। अक्षरस्य विशेषणमाहो-

---

त्वेन ज्ञानिनामेव शीघ्रं मोक्षलाभात्। 'ब्रह्मविद्ब्रह्मैव भवति, तस्य तावदेव चिरं यावन्न विमोक्ष्ये' इत्यादिश्रुतिभ्यः।

तस्माद्भक्ता भगवतो युक्ततमत्वेनाभिमताः। ज्ञानिनस्तु साक्षादात्मत्वेनाभिमता इति ज्ञानिन एवोत्तमाः ॥२॥

य इति। ये त्विन्द्रियग्रामं सन्नियम्य सर्वत्र समबुद्धयस्सर्वभूतहिते रताश्च सन्तोऽनिर्देश्यमव्यक्तं सर्वत्रगमचिन्त्यं कूटस्थमचलं ध्रुवमक्षरं पर्युपासते ते मामेव प्राप्नुवन्तीति श्लोकद्वयान्वयः।

निर्देष्टुं प्रतिपादयितुम्। यदि शब्देन प्रतिपाद्येत, तर्हि शब्दगोचरत्वाद्व्यक्तमेव भवेत्। ननु यदि शब्दागोचरं ब्रह्म तर्हि प्रत्यक्षाद्यविषयत्वाद्धर्मादिवच्छास्त्रप्रमाणाविषयत्वाच्चासदेव भवेदिति चेत्, मैवम्—अनुभवैकवेद्यत्वादात्मत्वेन सर्वप्रत्यक्षत्वात्तद्विषयत्वेनैव सर्वस्य सत्तालाभाच्च।

नन्वत्यन्तं शब्दागोचरत्वे कथं ब्रह्मणो व्यवहार्यत्वम्? कथं वा शास्त्रसम्प्रदायप्रवृत्तिः? कथं वा शास्त्रयोनित्वाधिकरणसङ्गतिः? कथं वा श्रुतिगीतोपपत्तिरिति चेत्, उच्यते—सुखतापादिवदनुभवैकवेद्यमेव ब्रह्म। न हि मम सुखमीदृशं ताप ईदृश इति कोऽपि वक्तुं क्षमते। तद्वद्ब्रह्मेदृशमिति कोऽपि वक्तुं नेष्टे। एवं दुर्वचत्वादेव तस्य शब्दागोचरत्वं, न तु ब्रह्मादिशब्दानां तद्वाचकत्वाभावात्। यद्वा ब्रह्मादिशब्दा अभिधया न ब्रह्म बोधयन्ति, किंतु लक्षणया। एवमभिधाऽविषयत्वादेव ब्रह्मणः शब्दागोचरत्वमिति।

वस्तुतस्तु अद्वितीये ब्रह्मणि शब्दाद्यभावात्कथं शब्दगोचरत्वं ब्रह्मणः? व्यवहारस्तु माययोपपद्यते। माया हि शब्दागोचरे ब्रह्मणि शब्दादीन् कल्पयित्वा तद्गोचरत्वमपि कल्पयति। तस्माच्छब्दागोचरस्यापि ब्रह्मणो मायया भवति व्यवहार्यत्वमिति।

उपासत इति। अहं ब्रह्मास्मीत्याकारेणेति भावः। यथाशास्त्रं शास्त्रोक्तविधयेत्यर्थः। उपास्यस्यार्थस्य प्रकृते परमात्मनः। अन्यत्र तु विश्वरूपरामकृष्णादिरूपादिकमुपास्यार्थ इति बोध्यम्।

विषयीकरणं गोचरीकरणं साक्षात्कार इति यावत्। उपगम्येति। मनस इति कर्तृदोषः। समानोऽभिन्नः प्रत्ययानां प्रवाहस्तेन तैलधारावदविच्छिन्नेनेत्यर्थः। आसनं स्थितिः। मनस इत्यस्याध्याहृतस्यानेनान्वयः। यन्मनस आसनमिति। ब्रह्माद्युपास्यविषयकमानसिकदीर्घकालावच्छिन्न-

पास्यस्य—सर्वत्रगं व्योमवद्व्याप्यचिन्त्यं च अव्यक्तत्वादचिन्त्यम् । यद्धि करणगोचरं तन्मनसापि चिन्त्यं, तद्विपरीतत्वादचिन्त्यमक्षरं कूटस्थं दृश्यमानगुणमन्तर्दोषं वस्तु कूटं कूटरूपम् । 'कूटसाक्ष्य'मित्यादौ कूटशब्दः प्रसिद्धो लोके । तथा चाविद्याद्यनेकसंसारबीज-

---

प्रत्ययप्रवाह उपासनमित्युच्यत इत्यर्थः । उपास्यविषयकनिरन्तरप्रत्ययप्रवाहोपलक्षिततया मनस उपास्यसमीपे आसनमुपासनमिति निरुक्तेरिति भावः । मनस उपास्यसमीपे स्थितिस्सुषुप्तावपि सम्भवति, मनसस्तदा ब्रह्मण्येव लयादत आह—प्रत्ययप्रवाहेणेति । सत्यप्यहंब्रह्मास्मीति वाचिकप्रत्ययप्रवाहे विषयान्तरसङ्गेन मनसो ब्रह्मणो दूरत स्थितावुपासनं न सम्भवतीत्यत आह—सामीप्यमुपगम्येति । निर्विकल्पकसमाधौ ब्रह्मणस्समीपे स्थितस्यापि मनसः प्रत्ययाभावान्नोपासनमित्यत आह—प्रत्ययप्रवाहेणेति । कथं मनस उपास्यसामीप्योपगतिरत आह—विषयीकरणेनेति । वृत्तिद्वारा मनो विषयसमीपं गच्छतीति भावः । उपास्यस्याक्षरस्य विशेषणम् । जात्येकत्वाद्विशेषणान्याह—सर्वत्रगमित्यादीनि ।

इमान्येव विशेषणानि विशिष्टैर्विशेषणैरुच्यमानैरित्यनेन संगृहीतानि प्राग्भाष्ये । 'एको देव' इत्यादिश्रुतिसिद्धानि चेमान्येव । सर्वत्र गच्छतीति सर्वत्रगं सर्वव्यापीत्यर्थः । तत्र दृष्टान्तमाह—व्योमवदिति । तद्विपरीतत्वात्करणागोचरत्वादित्यर्थः । अनिर्देश्यं वाचा वक्तुमशक्यमचिन्त्यं मनसा चिन्तयितुमशक्यमिति न पौनरुक्त्यम् । नच मनसाप्यचिन्त्यत्वे 'मनसैवाऽऽनुद्रष्टव्य'मिति श्रुतिविरोध इति वाच्यं, मनसा इदमीदृशमिति चिन्तयितुमशक्यमित्यर्थाद्ब्रह्मणि चेदवभाया अभावान्निर्विशेषचिन्मात्रे । दृश्यमाना बहिरुपलभ्यमाना गुणा यस्य तद्दृश्यमानगुणम् । अन्तर्गर्भे दोषा यस्य तदन्तर्दोषं वस्तु कृत्रिममैन्द्रजालादिकं मिथ्यावस्त्वित्यर्थः । कूटरूपकमिति । रूपकं रूप्यं रजतमिति यावत् । रजतवद्बहिरवभासमानं वस्तुतो रजतगुणरहितं च रङ्गादिकं वस्तु रजतत्वेन व्यवह्रियमाणं सत्कूटरूपकमित्युच्यते । नेदं यथार्थरूपकं रजतगुणराहित्यात् । नापि शुक्तिरजतवत्प्रातिभासिकं कटकाद्युपयोगित्वात् । किंतु विलक्षणं कृत्रिमं कूटरूपकमेव । इदमधुना द्दुपद्रूपकमिति व्यवह्रियते । कूटसाक्ष्यमिति । कूटं च तत्साक्ष्यं च कूटसाक्ष्यम् । साक्षिणो भावो धर्मो वा साक्ष्यम् । कौटसाक्ष्यमिति पाठे तु कूटसाक्षिणो भावो धर्मो वा कौटसाक्ष्यम् । यथार्थवाक्यवदवभासमानं वस्तुतोऽयथार्थ वाक्यं कूटसाक्ष्यमयथार्थं वाक्यमित्यर्थः ।

प्रसिद्ध इति । अनृतार्थवाचित्वेन प्रसिद्ध इत्यर्थ । ननु लोके बहिस्सत्यवस्तुवदवभासमाना वस्तुतस्त्वसत्याः कूटरूपककूटसाक्ष्यादिपदार्थाः कूटशब्दवाच्या भवन्तु नाम, प्रकृते कूटशब्दवाच्यं वस्तु किमत आह—तथा चेति । अविद्या तूलाज्ञानमादिपदादस्मितारागद्वेषादिग्रहणम् । अविद्यादीन्यनेकानि संसारबीजानि यत्र तत्तथोक्तम् । अत एवान्तर्दोषं मायाव्याकृतकूटस्थत्वादिपदाच्छक्तिप्रकृत्यज्ञानादिपरिग्रहः । एवमाद्यनेकशब्दवाच्यतया प्रसिद्धम् ।

मन्तदोषवन्मायाऽव्याकृतादिशब्दवाच्यतया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्', 'मम माया दुरत्यया' इत्यादौ प्रसिद्धं यत्तत्कूटं, तस्मिन्कूटे स्थितं कूटस्थं तदध्यक्षतया ।

---

क्व प्रसिद्धमत आह—मायां त्वित्यादि । यद्वस्तु तत्कूटमित्युच्यते । ननु दृश्यमानगुणत्वं नोक्तमिति चेत्सुग्रहत्वधिया नोक्तं भाष्यकारैः । सत्यत्वप्रियत्वादयो दृश्यमानगुणाः । तदेवं वस्तुतो दोषवदापाततो गुणवच्चाज्ञानं कूटमित्युच्यत इति सिद्धम् ।

इदं हि स्वकार्यैरसहानृतजडदुःखात्मकमपि सच्चिदानन्दमिव प्रतिभाति, तथा व्यवह्रियते च । यथा कूटरूपकं यथार्थरूपकवत् । नच कूटरूपकं यथार्थरूपकवत्कूटमज्ञानं यथार्थज्ञानवत्प्रतिभातीति वक्तव्यं, न चेष्टापत्तिः- यथार्थज्ञानस्याभावात्सत्त्वेऽद्वैतहानेश्च । तथा यथार्थज्ञानस्याभावे तु इदमज्ञानं कूटाज्ञानं भवितुं नार्हतीति वाच्यं, अनृतजडदुःखात्मकतया सच्चिदानन्दमिदमज्ञानं सच्चिदानन्दब्रह्मवदस्ति भाति प्रियमिति सच्चिदानन्दत्वेन व्यवह्रियत इत्यस्याज्ञानस्य कूटवस्तुत्वसिद्धेः ।

वस्तुतोऽरजतमपि रजतत्वेन प्रतिभासमानं कटकाद्युपयोगि हि वस्तु कूटरजतमिति । एतेन अज्ञानस्यानृतत्वे कथमर्थक्रियाकारित्वं, तज्जन्यप्रपञ्चस्य वा कथं तदिति शङ्का प्रत्युक्ता । अनृतस्यापि कूटरूपकस्य अर्थक्रियाकारित्वदर्शनात् । तस्मात्सत्यवदवभासमानं वस्तुतस्त्वसत्यमज्ञानं कूटमेव ।

ननु कूटरूपकपदवाच्यं द्रुपदादिरूपं किञ्चिद्वस्त्वस्त्येव, परं तु तद्वस्तु स्वस्वरूपेणाव्यवह्रियमाणमन्यरूपेण व्यवह्रियमाणं च सत्कूटशब्दवाच्यं भवति, तद्वदिहाप्यज्ञानमिति किञ्चिद्वस्त्वस्ति वा, न वा ? आद्ये- अद्वैतहानिः, द्वितीये- कस्य कूटत्वमज्ञानस्यैवाभावादिति चेत्, मैवम्—ब्रह्मण्यध्यस्तत्वात्सप्रपञ्चमिदमज्ञानं ब्रह्मैव । आरोप्यस्याधिष्ठानात्मकत्वात् । तथा-च वस्तुतोऽज्ञानपदवाच्यं वस्तु ब्रह्मैव । तद्ब्रह्मैकमेवास्ति । कालत्रयेऽपि नान्यदिति नाद्वैतहानिः । तदेव सच्चिदानन्दं ब्रह्म- अनृतजडदुःखात्मकाज्ञानस्वरूपेण गृह्यमाणं सत्कूटमित्युच्यते । तथा च सच्चिदानन्दात्मकस्वरूपेणागृह्यमाणमनृतजडदुःखरूपेण च गृह्यमाणं कूटशब्दवाच्यमज्ञानशब्दवाच्यं च वस्त्वस्त्येव ब्रह्मेति न कश्चिद्दोषः ।

न चैवं कूटरूपकसत्यरूपकवत्कूटाज्ञानसत्याज्ञानयोरभावेऽपि कूटब्रह्मसत्यब्रह्मणोस्तद्भावः सिद्ध्यति, तथाविधं क्वापि ब्रह्मणः कूटत्वाश्रवणादिति वाच्यं, कार्यब्रह्मकारणब्रह्मशब्दाभ्यां कूटब्रह्मसत्यब्रह्मणोरेवाभिधीयमानत्वात् । *अकार्यं ब्रह्मणं कार्यब्रह्मेति हि व्यवह्रियते- अकार्यत्वाद्ब्रह्मणः ।*

न चाज्ञानप्रतिफलितश्चिदाभास ईश्वरः कार्यब्रह्मेति वाच्यं, तस्यापि चिदाभासस्य मिथ्यात्वेन कूटत्वात् । अज्ञानप्रतिफलितचिदाभासवत्साभासाज्ञानस्यापीश्वरत्वाच्च । तस्मात्कार्यब्रह्म कूटब्रह्मैव । कार्यस्य सर्वस्यापि मिथ्यात्वेन कूटत्वात् । तच्च कूटब्रह्म अज्ञानं, तस्यैव परिणामो जगदिति जगदप्यज्ञानमेव । नच ब्रह्मद्वयमप्रसिद्धमिति वाच्यं, बाढं- द्वे ब्रह्मणीति भाष्यकारैरुक्तत्वात् । 'एतद्वै सत्यकाम परं चापरं' चेति श्रुत्यापि परापरब्रह्मद्वयस्योक्तत्वात् । एतत्कार्यापरब्रह्मण्याश्रय एव परं ब्रह्मेति ब्रह्मणः परत्वविशेषणदानाच्च तत्र तत्र ।

एवमज्ञानस्य कूटब्रह्मत्वादेव ब्रह्मशब्दवाच्यत्वमपि । मम योनिर्महद्ब्रह्मेत्यादिप्रयोगदर्शनात् । तस्मात्कूटरूपकसत्यरूपकवत्कूटब्रह्मसत्यब्रह्मणी द्वे स्तः । तत्र कूटब्रह्म दृश्यमज्ञानादिकं, सत्यब्रह्म तु

अथ वा राशिरिव स्थितं कूटस्थम्। अत एवाचलं, यस्मादचलं तस्माद्ध्रुवं नित्यमित्यर्थः॥३॥

दृगात्मेति विवेकः। तस्मिन्नित्यज्ञाने इत्यर्थः। किमज्ञानेऽस्य स्थितिः कुण्डे बदरवदत आह—तद्ध्यक्षतयेति। अज्ञानस्य साक्षित्वेन स्थितमित्यर्थः। अज्ञानसाक्षिणमिति कूटस्थशब्दस्य यावदर्थः। नच साक्षित्वेनापि कथमज्ञाने ज्ञानस्य स्थितिरिति वाच्यं, चैतन्यरूपज्ञानस्याज्ञानाविरोधित्वात्। अज्ञानमस्ति, अज्ञानं भाति, अज्ञानं प्रियमिति प्रतीतनामज्ञाने ज्ञानस्थितिं विनाऽसम्भवात्। अत एव ब्रह्मणस्सर्वान्तरात्मत्वं- सच्चिदानन्दरूपेण सर्वत्र व्याप्य स्थितत्वात्।

कूटस्थशब्दस्यार्थान्तरमाह—अथ वेति। कूटो राशिस्स इव तिष्ठतीति कूटस्थं यथा व्रीह्यादिराशिः स्वोचितं देशमवष्टभ्य निरन्तरमवतिष्ठते तद्वन्महतो महानयमात्मा सर्वं जगदवष्टभ्य निरन्तरं तिष्ठतीत्यर्थः। अत एवेति। राशिवत्स्थितत्वादेवेत्यर्थः। नहि राशिश्चलति। यद्वा अत एव मायाध्यक्षत्वादेवेत्यर्थः। मायायास्सर्वव्यापित्वेन तदध्यक्षस्यापि सर्वव्यापित्वात्परिपूर्णत्वेन तस्याचलत्वं युक्तमिति भावः। अचलं न चलतीत्यचलः तं चलनरहितमित्यर्थः। अपरिपूर्णस्य परिच्छिन्नस्य चलनसम्भवात्तादृशस्य चानित्यत्वादचलोऽयं नित्य इत्याह—ध्रुवं नित्यमिति। नहि परिपूर्णं वस्तु क्वापि चलितुमर्हति, येन तस्यानित्यत्वं स्यात्। अस्माद्देशात्क्वापि गतं हि वस्तु नष्टमित्युच्यते। यथा देवदत्तादिः स्वर्गादिकम्।

अत्र रामानुजः—अक्षरं प्रत्यगात्मस्वरूपं, अनिर्देश्यं देहादन्यतया देवादिशब्दानिर्देश्यं, सर्वत्रगं देवादिदेहेषु वर्तमानं कूटस्थं सर्वसाधारणमचलमप्रच्युताकारमिति।

तत्तुच्छम्—यदि देवादिशब्दैरनिर्देश्यतया स्यादक्षरमनिर्देश्यं तर्हि ब्रह्मानन्दादिशब्दैरनिर्देश्यतया स्याद्देहोऽप्यनिर्देश्यः। 'यत्तदद्रेश्यमग्राह्यं, यतो वाचो निवर्तन्ते' इत्यादिश्रुतयस्त्वात्मन एवानिर्देश्यत्वं ब्रुवन्ति, नतु देहस्येति। कथमयं श्रुतिविरुद्धार्थः परिगृह्येत? तथा तव मते अण्वात्मनां कथं देवाद्यनेकदेहवृत्तिः? न चैकस्मिन् देहे एक आत्मेत्येव सर्वदेहस्थमिति वाच्यं, तथासति एकदेहस्थ एक एवात्मेति स्यादात्मन एकदेहस्थत्वादेकदेशस्थमेव, नतु सर्वत्रगत्वम्। सर्वशब्दस्य देवादिदेहपरतया सङ्कोचोऽप्ययुक्तः- पाषाणादिसर्वपरिग्रहस्य युक्तत्वात्। पाषाणादिपरिग्रहे तु पाषाणादावचेतने चेतनस्याक्षरस्याभावात्र स्यात्सर्वत्रगत्वमक्षरस्य।

ननु एक एवात्मा कालभेदेन देवादिशरीरपरिग्रहाद्देवादिशरीरेषु सर्वत्रास्तीति सर्वत्रग इत्युच्यत इति चेन्नैवम्—वर्तमानमित्यनेन कालविशेषस्योक्तत्वात्। वर्तमानकाले एकस्य देहिनो देहान्तरेषु स्थित्ययोगात्। कायव्यूहविद्या तु मायामयी नेहोदाहरणमर्हति। अस्मिन्मतेऽपि सर्वशब्दसङ्कोचदोषस्तदवस्थ एव, तथा सर्वसाधारणः कूटस्थ इत्यप्ययुक्तं-- सर्वसाधारणत्वस्य कूटस्थत्वे पृथिव्यादिपदार्था अपि कूटस्थाः स्युः। तेऽपि हि पशुपक्षिमनुष्यादिसर्वसाधारणा भवन्ति। जलं हि पानार्थं सर्वसाधारणं पृथिवी च निवासार्थं वायुश्च प्राणनार्थं गगनं चावकाशार्थं तेजश्च शीतापनयनाद्यर्थम्।

तेषां फलमाह—

सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ।
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥४॥

सन्नियम्येति । सन्नियम्य सम्यङ्नियम्योपसंहृत्य, इन्द्रियग्राममिन्द्रियसमुदायं, सर्वत्र सर्वस्मिन्काले, समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः । ते ये एवं-विधास्ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः । ननु तेषां वक्तव्यं किंचित् 'मां ते प्राप्नुव'-

---

किं चात्मनो भोगायतनत्वाद्देहोऽपि सर्वात्मसाधारण इति सोऽपि कूटस्थ एव स्यात् । नच सर्वसाधारणत्वं नाम तत्तद्देवाद्यसाधारणाकारासम्बद्धमित्यर्थ इति वाच्यं, एवंविधमप्यसाधारणत्वं जलादीनामस्त्येव । नहि जलादयो देवाद्यसाधारणाकारसम्बद्धाः । नच जलादिषु रसत्वाद्यसाधारणाकारसम्बन्धोऽस्तीति वाच्यं, जीवेऽपि चेतनत्वाद्यसाधारणाकारसम्बन्धसद्भावात् । नच निराकारस्यैव सर्वसाधारणत्वं, नतु साकारस्येति वाच्यं, वाय्वाकाशयोरपि कूटस्थत्वप्रसङ्गात्, मनइन्द्रियादीनां च निराकाराणाम् ।

एवं कूटस्थशब्दस्याभिधेयमर्थं विहाय लाक्षणिकस्य सर्वसाधारणत्वरूपार्थस्य कल्पनमयुक्तमप्रमाणं च । तथा अचलमित्यस्य अप्रच्युताकारमित्यर्थवर्णनमप्ययुक्तं- आकारान्न चलतीत्यचल इत्याकारस्यापादानस्य कल्पनस्यायुक्तत्वात् । न चलतीत्यचल इत्यपादानं विनैव निरुक्तिसिद्धेः । अपादानस्य स्वकपोलकल्प्यत्वात् । घटोऽपि मृत्स्वरूपान्न चलतीत्यचलत्वं स्याद्घटस्यापि । नचोत्क्रान्तिमतो जीवस्य स्पन्दनिषेधादेरनुपपन्नत्वाच्चलनरहित इति त्वदुक्तार्थोऽप्ययुक्त एवेति वाच्यं, सर्वव्यापकस्याचलस्याप्यात्मनः बुद्धितादात्म्याध्यासेनोत्क्रान्त्यादिसिद्धेः 'ध्यायतीव लेलायती'वेति श्रुतेः । बुद्धौ चलन्त्यामात्मा चलतीव, तस्यामुत्क्रामन्त्यामात्मोत्क्रामतीव । नतु स्वत इति युक्तमचलत्वं चलनरहितत्वादात्मनः ॥३॥

सन्नियम्येति । समेति हर्षोद्वेगादिरहिता एकरूपेत्यर्थः । सर्वेषां भूतानां हिते हितकरणे तत्त्वोपदेशादिद्वारेति भावः । हिते आत्मनीति वा । रता आसक्ताः । मां परमात्मानमेव प्राप्नुवन्ति, न त्वन्यमित्येवकारार्थः । मां प्राप्नुवन्त्येवेत्यप्यन्वयः । एवकारान्नाप्राप्तिशङ्केति भावः । सर्वं वाक्यं सावधारणमिति न्यायात् । त एव मामेव प्राप्नुवन्त्येवेति वान्वयः । त एवेत्येवकारान्न तु कर्मयोगिन इत्यर्थः । यद्वा न तु भक्ता इत्यर्थः । भक्तानां साक्षान्मोक्षाभावादिति भावः ।

ननु मां ते प्राप्नुवन्तीति यदुक्तं तन्नोपपद्यते, तथाहि- किमप्राप्तस्य तव प्राप्तिरिति विवक्षितं? यद्वा नित्यप्राप्तस्येति? नाद्यः- अप्राप्तत्वेन प्राप्यत्वे परमात्मनः कार्यत्वादनित्यत्वं स्यात्, सर्वव्यापकत्वं च न स्यात्, सर्वेण सर्वदा सम्बद्धं हि वस्तु सर्वव्याप्युच्यते । न द्वितीयः- नित्याप्तस्य पुनः प्राप्त्ययोगादिति शङ्कामभ्युपेत्य समाधत्ते—न त्विति । यत्त्वया आशङ्कितं तत्सत्यमेव, अत एव ते मां प्राप्नुवन्तीति तेषां पुरतो नैव वक्तव्यम् । किंतु ते अहमेवेति वक्तव्यं, तर्हि कृष्णेन कुतस्तथा

न्तीति। 'ज्ञानी त्वात्मैव मे मत'मिति ह्युक्तम्। न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम् ॥४॥

किंतु—

क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥५॥

क्लेश इति। क्लेशोऽधिकतरः; यद्यपि मत्कर्मादिपराणां क्लेशोऽधिकतरस्त्वक्षरात्मनां परमात्मदर्शिनां देहाभिमानपरित्यागनिमित्तः। अव्यक्तासक्तचेतसामव्यक्ते आसक्तं चेतो

---

नोक्तमत आह—ज्ञानी त्विति। तथा च 'ज्ञानी त्वात्मैव मे मत'मिति पूर्वोक्तवाक्यानुसारादिहापि तथैव वक्तव्यं, ननु ते मां प्राप्नुवन्तीति वक्तव्यम्। तर्हि कृष्णेन कुत उक्तं ते मां प्राप्नुवन्तीति चेत्, उच्यते—हिरण्यनिधिदृष्टान्ताद्विस्मृतकण्ठचामीकरन्यायाच्च नित्याप्तोऽप्यात्मा अज्ञानादनाप्त इव प्रतीतः, ज्ञानात्तदज्ञाननाशे तु प्राप्त इवेति नित्याप्तस्यापि प्राप्तिरुपपद्यत इति।

ननु तेषां के योगवित्तमा इति भगवतोऽर्जुनेन पृष्टस्य ज्ञानिनो मामेव प्राप्नुवन्तीत्युत्तरमयुक्तं, किं तर्हि ज्ञानिनो युक्ता इत्येव वक्तव्यं, भक्तानां युक्ततमत्वस्योक्तत्वादत आह—न हीति। भगवानेव स्वरूपं येषां तेषां भगवत्स्वरूपाणां निर्विशेषचिन्मात्रस्सदाशिवोऽहमिति भगवति चैतन्यरूपे आत्मबुद्धिशालिनामित्यर्थः। सतां विदुषां युक्ततमत्वं युक्तत्वं वा न हि वाच्यं, अक्षरोपासकाः कर्मयोगिन इव न युक्ताः, विश्वरूपोपासका इव न युक्ततमाः, किं तर्हि साक्षाद्भगवानेव ते। प्रत्यगभिन्नत्वात्परमात्मनः 'ज्ञानी त्वात्मैव मे मत'मिति भगवद्वचनाच्चेति भावः ॥४॥

क्लेश इति। अव्यक्तासक्तचेतसां तेषामधिकतरः क्लेशो भवतीति शेषः। हि अव्यक्ता गतिर्देहवद्भिर्दुःखमवाप्यते। दुःखं कृच्छ्रेणेति क्रियाविशेषणम्। अधिकतर इति द्वयोर्निर्धारणे तरप्। कस्मात्पुनरधिकादयमधिकतर इत्यत आह—मत्कर्मादिपराणामिति। भक्तानां क्लेशोऽधिकः ज्ञानिनां तु तस्मादधिकतर इत्यर्थः। 'अक्षरात्मनामित्यव्यक्तासक्तचेतसामित्यस्य प्रतिपदम्। तस्यार्थमाह—परमात्मदर्शिनामिति। परमात्मानं प्रत्यगभिन्नं द्रष्टुं शीलं येषां तेषां तथोक्तानाम्। कस्मान्निमित्तादेषामधिकतरः क्लेशोऽत आह—देहेति। देहाभिमानपरित्याग एव ज्ञानिक्लेशस्य भक्तक्लेशादधिकतरत्वे निमित्तम्।

एतेन भक्तानां देहाभिमानोऽस्तीति सिद्धम्। पुंसामनादिकालादारभ्य देहाभिमानोऽस्ति, तस्य परित्यागस्त्वधिकक्लेशावहः। परित्यागस्य दुष्करत्वात्। देहाभिमानेऽपरित्यक्ते तु परमात्मन्यात्मबुद्धिर्न स्यादतो निर्गुणोपासकैर्देहाभिमानस्तावत् कृच्छ्रेण त्याज्यः। भक्तास्तु विश्वरूपे देहे ईश्वरबुद्धिं, स्वमनुष्यादिदेहे च जीवबुद्धिं कुर्वन्तीति न तेषां देहाभिमानत्यागप्रयुक्तक्लेशोऽस्तीति भावः। अव्यक्ते आत्मनीत्यर्थः आ समन्तात्सक्तमासक्तम्। गम्यत इति गतिः। प्राप्यं वस्त्व-

येषां ते अव्यक्तासक्तचेतसः तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि यस्मात् या गतिरक्षरात्मिका दुःखं सा देहवद्भिर्देहाभिमानवद्भिरवाप्यते, अतः क्लेशोऽधिकतरः ॥५॥

अक्षरोपासकानां यद्वर्तनं तदुपरिष्टाद्वक्ष्यामः—

ये तु सर्वाणि कर्माणि मयि सन्न्यस्य मत्पराः ।
अनन्येनैव योगेन मां ध्यायन्त उपासते ॥६॥

ये त्विति । ये तु सर्वाणि कर्माणि मयीश्वरे सन्न्यस्य मत्परा अहं परो येषां ते मत्परास्सन्तोऽनन्येनैवाविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यः तेनानन्येनैव केन योगेन समाधिना मां ध्यायन्तः चिन्तयन्त उपासते ॥६॥

---

त्यर्थः । काऽसौ गतिरत आह—अव्यक्तेति । तदर्थमाह—अक्षरात्मिकेति । आत्मस्वरूपेत्यर्थः । आत्मैव गतिरिति यावत् । आत्मान्यस्य स्वर्गादेस्सर्वस्यापि प्राप्यस्य व्यक्तत्वेनाव्यक्तत्वाभावात् । आत्मरूपैव गतिरव्यक्ता । आत्मनोऽव्यक्तत्वं तु प्रागेव दर्शितम् । अव्यक्तेत्यस्य करणागोचरेति यथाश्रुतार्थः; अक्षरात्मिकेति तु फलितार्थः ।

ननु सर्वेषां देहोऽस्त्येवात आह—देहाभिमानवद्भिरिति । अनादिकालादारभ्यानेकजन्मस्वभ्यस्तस्य देहाभिमानस्य परित्यागो दुष्करः, तत्परित्यागं विना आत्मा दुर्लभः, तस्मादक्षरोपास्तौ क्लेशोऽधिकतर इति भावः । अत इति । देहाभिमानिभिरात्मनो दुरवापत्वाद्देहाभिमानस्य च दुस्त्यजत्वादित्यर्थः । यस्मादात्मा देहाभिमानिभिर्दुर्लभः, यस्माच्च देहाभिमानो दुस्त्यजः, तस्मादात्मलाभार्थमक्षरोपासकानामधिकतरः क्लेश इति परमार्थः ।

ननु आत्मप्राप्तेर्दुर्लभत्वे देहाभिमानिनामात्मोपासनं सुलभमेवेति चेन्मैवम्—अहं ब्रह्मेत्यक्षरोपासनस्यापि नाहं देह इति देहाभिमानत्यागपूर्वकत्वात् ।

नच ज्ञानादेव कैवल्यसिद्धेः किमक्षरोपासनेनेति वाच्यं, ये तु श्रवणादिनैवात्मानं ब्रह्मेति विदितवन्तस्तेषां ज्ञानादेव कैवल्यमिति नोपासनेन फलं, ये तु प्रतिबन्धबाहुल्याद्बहुशश्श्रवणादिनापि नात्मानं विदुस्तेषामक्षरोपासनमिदं विहितम् । ततश्चोपासनावेषामात्मनि ब्रह्मबुद्धिर्भवति । उपासनमहिम्ना प्रतिबन्धक्षयात् । इदं च यावदात्मसाक्षात्कारं कर्तव्यं, नतु पश्चात्फलाभावात् । नीरलाभानन्तरं खनित्रपरित्यागवदिति बोध्यम् ॥५॥

ये त्विति । अयं श्लोको भक्तविषय इत्याह—अक्षरेति । वर्तनं प्रवृत्तिर्व्यवहरणमिति यावत् । स्थितिरिति वा । उपरिष्टादिति । 'अद्वेष्टा सर्वभूताना'मिति श्लोकमारभ्येति भावः । इदानीं तु भक्तानां वर्तनं वच्मीति भावः । अहं पर उत्कृष्ट ईश्वर इति वा येषां ते मत्पराः । मयि परमेश्वरत्वबुद्धिमन्त इत्यर्थः । योऽयं विश्वरूपस्स एव परमेश्वर इति कृतनिश्चया इत्यर्थः । अनन्येनेति । अन्यालम्बनरहितेनेत्यर्थः । विश्वरूपैकालम्बनेनेति यावत् । आलम्बनमिति । मनस इति भावः ॥६॥

तेषां किम्—

तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ।
भवामि न चिरात्पार्थ मय्यावेशितचेतसाम् ॥७॥

तेषामिति । तेषां मदुपासनैकपराणामहमीश्वरः समुद्धर्ता । कुत इत्याह—मृत्युसंसार-

---

तेषामिति । हे पार्थ ! अहं मय्यावेशितचेतसा तेषा मृत्युसंसारसागरान्न चिरात्समुद्धर्ता भवामि । मय्यावेशितचेतसस्तान् भक्तानहं मृत्युसंसारसागराच्च चिरादेवोद्धारयिष्यामीत्यर्थः । न चिरान्न चिरादिति नशब्देन समास । अतो न नलोप । मदुपासनेति । मम विश्वरूपस्योपासन मदुपासनं तदेवैकं परं प्रधानं येषा तेषा तथोक्ताना मदुपासने एकस्मिन्नेव पराणामासक्तानामिति वा । भक्तानामिति यावत् । समुद्धर्ता उद्धारक । ज्ञानप्रदानद्वारेति भाव । न हि ज्ञानं विना मोक्ष सम्भवति ।

न चेश्वरस्स्वयमेव भक्ताना स्वस्वरूपं मोक्ष दिशतीति वाच्य, मोक्षस्य नित्यसिद्धत्वेनादेयत्वात् । देयत्वे च धर्मादिवदनित्यत्वप्रसङ्गात् , नित्यो हि मोक्ष । न चेश्वरानुग्रहाज्जीवस्येश्वरसायुज्य भवतीति वाच्यं, ईश्वरसायुज्यस्यापि नित्यसिद्धत्वादीश्वर परमात्मैव हि जीव प्रत्यगात्मा ।

न चेश्वरानुग्रहाद्दु खध्वसलक्षणो मोक्ष स्याज्जीवानामिति वाच्य, असङ्गस्यानन्दस्य जीवस्य दु खसम्बन्धासम्भवात् । सुखदु खादीना मनोधर्मत्वाच्च । 'कामस्सङ्कल्पे'ति श्रुते । नच निरतिशयब्रह्मानन्दप्राप्तिरिति वाच्य, तस्यापि स्वतस्सिद्धत्वेन ब्रह्मानन्दस्यानागन्तुकत्वात् । नच स्वस्वरूपेण तिष्ठतीति वाच्यं, प्रागपि जीवस्य स्वस्वरूपाच्च्युत्यभावात् । अविक्रियो हि जीव प्रत्यगात्मा । 'अजो नित्य' इत्यादिमन्त्रात् । कथ तर्हीश्वरस्य ससारसागराज्जीवोद्धारणम् ? उच्यते—ज्ञानप्रदानद्वारेति । अज्ञानाज्जीव आत्मानं देहादिरूपं मत्वा ससारसागरे पतितस्स एवेश्वरानुग्रहादात्मानं देहादिविलक्षण सच्चिदानन्दं ज्ञात्वा संसारसागरादुत्तीर्णो भवति । 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति स्मरणादीश्वरानुग्रहो ज्ञानप्रयोजक एव, नतु मोक्षप्रयोजक - मोक्षस्याप्रयोज्यत्वात् । अज्ञानमूलो हि सर्परज्जुभ्रमो रज्जुतत्त्वज्ञानादेव निवर्तते, न त्वन्यस्माद्यथा तथा अज्ञानमूलो जीवस्यात्मनि संसारित्वभ्रमो जीवतत्त्वज्ञानादेव निवर्तते नान्यथा । तथा चेश्वरमाययापहृतविवेकाननात्मतादात्म्याध्यासमापद्य ससरतो जीवान् भगवान् भक्त्या तोषितश्चेत् विवेकिन कृत्वाऽनात्मतादात्म्याध्यास नाशयित्वा आत्मसाक्षात्कार तेभ्यो दिशति, ततश्च ते मुच्यन्ते अत उक्तमीश्वरो भक्तान् संसारसागरात्तारयतीति ।

एवमीश्वराधीनस्थितिकत्वादेव भक्तानां मार्जारकिशोरन्यायोऽमीषु सञ्चरित पूर्वं । मार्जारो हि स्वशिशु स्वयमेव वक्त्रेण गृहीत्वा स्थलान्तरं नयति, तद्वदीश्वरोऽपि भक्तान् स्वयमेव ज्ञानप्रदानद्वारा संसारात्तारयतीति । ज्ञानिनन्तु नेश्वरस्तारयति, किं तर्हि त एव तरन्ति स्वयम् । अहं ब्रह्मास्मीति ब्रह्मापरोक्षज्ञानादेव भास्करालोकात्तिमिरस्येव सर्वसंसारस्याज्ञानमयस्य समूलस्य निवृत्ते । अत एवामीषु

मर्कटकिशोरन्यायस्सञ्चारितः पूर्वैः- मर्कटकिशोरो हि स्वयमेव मर्कटोदरं परिरभ्य वृक्षान्तरं गच्छति । तथा ज्ञान्यपि स्वयमेवेश्वरमात्मानं साक्षात्कृत्य ब्रह्मसायुज्यं प्रतिपद्यत इति ।

अनेन स्वतस्संसारसागरोत्तरणक्षमा ज्ञानिनः तदक्षमेभ्यो भक्तेभ्य उत्कृष्टा इति सूचितम् । यस्मादहमेव भक्तानां संसारसागरादुद्धर्ता ततस्संसारसागरतरणे भक्तानां न कश्चित्क्लेशः । ज्ञानिनस्तु स्वयमेव संसारसागरं तरन्तीति तेषामस्ति संसारसागरतरणे क्लेशोऽधिक इति भावोऽत्र गम्यते ।

यद्यपि भक्ता अपीश्वरानुग्रहाद्ज्ञानं लब्ध्वा तेनैव ज्ञानप्लवेन संसारसागरं स्वयमेव तरन्ति, पूर्वं भक्तानामेवेदानीं ज्ञानित्वात् । ततश्च भक्तानामीश्वरः संसारसागरात्समुद्धर्तेति वक्तुं न शक्यं, तथापि भक्तानां समुद्धर्तेश्वर इत्यस्य भक्तानामीश्वरस्संसारसागरोत्तारकं ज्ञानं दिशतीत्येतावत् एवार्थस्येह विवक्षितत्वात् । ज्ञानिनां तु न कश्चित्संसार, नापि तदुद्धारक, ज्ञानिन एवेश्वरत्वादिति ।

अथ वा ये सगुणब्रह्मोपासकास्तानहं संसाराद्ज्ञानप्रदानद्वारा उद्धारयामि, ये तु निर्गुणोपासकास्ते स्वयमेवात्मानं साक्षात्कृत्य संसारं तरन्तीति । नहि सगुणोपासका निर्गुणोपासकीभूय मुक्ता भविष्यन्तीति स्थितं, येन पूर्वं भक्तानामेवेदानीं ज्ञानित्वादितिवद्वक्तुमत्र शक्येत । नहि निर्गुणोपासनं ज्ञानं, किं तर्हि निर्गुणब्रह्मसाक्षात्कार एव । तदेवं सगुणोपासकान्मार्जारकिशोरन्यायेनाहं संसारात्तारयामि, निर्गुणोपासकास्तु मर्कटकिशोरन्यायेन स्वयमेव तरन्ति, ज्ञानिनां तु न कश्चित्संसारः, नापि तत्तरणमिति विवेकस्सिद्धः ।

न चैवमव्यक्तोपासका ज्ञानित्वेनेतःप्राग्व्यवहृता इति तद्विरोध इति वाच्यं, आत्मानात्मविवेकरूपज्ञानवत्त्वेन तेषां ज्ञानित्वव्यवहारात् ।

नन्वेवं सगुणोपासका अपीश्वरानुग्रहादात्मसाक्षात्कारं लब्ध्वाऽऽत्मानमेव प्रतिपद्यन्ते, अव्यक्तोपासकाश्चात्मसाक्षात्कारं लब्ध्वात्मानं प्रतिपद्यन्ते । ततश्च 'ते प्राप्नुवन्ति मामे'वेति ज्ञानिनः प्रति, 'ते मे युक्ततमा मता' इति भक्तान्प्रति च यदुक्तमीश्वरेण तत्रासङ्गच्छत इतिचेत्, मैवम्— अक्षरोपासकानां तत्त्वसाक्षात्कारात्प्रागपि तत्त्वस्य परोक्षं ज्ञानमस्ति, ततश्च ज्ञानिनोऽमी सच्चिदानन्दमीश्वरमेवात्मत्वेन प्रतिपद्यन्ते, भक्तानां तु तदपि नास्ति आत्मानात्मविवेकस्यैवाभावात् । तदेवं परोक्षज्ञानिनोऽक्षरोपासनवशादपरोक्षमीश्वरं प्राप्नुवन्तीति 'ते प्राप्नुवन्ति मामे'वेत्युक्तम् । तत्त्वसाक्षात्कारलक्षणेश्वरप्राप्तिरूपफलादन्यस्य अक्षरोपासनजन्यस्य फलस्याभावात् । भक्तास्तु ईश्वरोपासनवशात्तावद्विवेकं प्रतिपद्य पश्चात्परोक्षज्ञानं प्रतिपद्य ततस्तत्त्वसाक्षात्कारं प्रतिपद्यन्त इति कृत्वा भक्तानामीश्वरप्राप्तिरूपफलादन्यफलयोः प्राप्तव्ययोर्विवेकज्ञानयोस्सत्त्वाद्भक्ता मां प्राप्नुवन्तीति नोक्तं, भक्तानां विवेकादिप्राप्तेरपि सद्भावात् । किंतु युक्ततमा इत्युक्तं- विवेकादिप्राप्तिद्वारा तेषामपि क्रमेण मोक्षसद्भावात् । तथा च विवेकविज्ञानशून्येभ्यो भक्तेभ्यः तद्युक्ता ज्ञानिन उत्तमा इति सिद्धम् ।

तदेवं सगुणोपासकान् विवेकविज्ञानहीनान् भगवान् स्वयं तत्प्रदानद्वारा संसारात्तारयति, विवेकविज्ञानवन्तस्त्वक्षरोपासकास्स्वयमेव विवेकादिसाधनैस्तरन्तीति नाक्षरोपासकानामीश्वरानुग्रहापेक्षा ।

यत एव तस्मात्—

मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ।
निवसिष्यसि मय्येव अत ऊर्ध्वं न संशयः ॥८॥

मयीति । मय्येव विश्वरूपे ईश्वरे मनः सङ्कल्पविकल्पात्मकं आधत्स्व स्थापय । मय्येवाध्यवसायं कुर्वतीं बुद्धिमाधत्स्व निवेशय । ततस्ते किं स्यादिति शृणु—निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि निवासं करिष्यस्येवातश्शरीरपातादूर्ध्वम् । न संशयः संशयोऽत्र न कर्तव्यः ॥८॥

---

भक्तानां तु ज्ञानद्वारा क्रमेणेति भवतानामेव चिरेण मोक्षलाभ इति सिद्धान्तात् । न चैवं नचिरादित्यपार्थमिति वाच्यं, केवलकर्मयोग्यपेक्षया नचिरादित्युक्तत्वात् । यज्ञयागादिकर्मानुष्ठात्रपेक्षया विश्वरूपोपासकानां द्रुतं चित्तशुद्धिर्भवति, ततो ज्ञानप्राप्तिरिति भाव ॥७॥

मयीति । यत एवं मय्यावेशितचेतसा तेषामहं मृत्युसंसारसागरात्समुद्धर्ता तस्मादित्यर्थः । मनोबुद्ध्योरपौनरुक्त्यायाह—सङ्कल्पेति । एकमेवान्तःकरणं संशयनिश्चयगर्वस्मरणात्मकचतुर्विधवृत्तिभेदात्क्रमेण मनोबुद्ध्यहङ्कारचित्तशब्दैरुच्यते, तत्र सङ्कल्पविकल्पौ संशय, बुद्धिमिति निश्चयात्मिकामित्यर्थः । इदमेवाह—अध्यवसायं कुर्वतीमिति । अध्यवसायो निश्चय । तत इति । मयि मनोबुद्ध्योर्निवेशनादित्यर्थः । अत ऊर्ध्वं मय्येव निवसिष्यसि ।

ननु कथमाधाराधेयभाव एकस्यैवात्मन इत्यत आह—मदात्मनेति । मत्स्वरूपेण तव स्थितिरेव मयि वासस्तवेति विवक्षितेति भाव । यद्यपि देहपातात्प्रागपीश्वरस्वरूपेणैव जीव स्थित जीवेश्वरयोश्चैतन्यरूपत्वात्तथापि जीवन्मुक्तिदशायां कदाचिद्देहादितादात्म्याध्यास स्यादिति न सर्वदा जीवस्येश्वरात्मना स्थिति, विदेहकैवल्ये तु देहाद्यभावात्, अज्ञानस्य च नष्टत्वान्न देहाद्यभिमान इति तदा सर्वदापि जीवस्येश्वररूपेण स्थिति स्यात् । अत एव विदेहकैवल्यस्यापुनरावर्तित्वम् । अयं चार्थ एवकारेण ज्ञाप्यते । अत ऊर्ध्वं मयि निवसिष्यस्येव, नतु पुनरागमिष्यसीत्यर्थात् । यद्वा मय्येव निवसिष्यसि, नतु देहादिससार इत्यर्थात् । तथा चात ऊर्ध्वं सर्वदापि मय्येव निवसिष्यस्येवेति फलितार्थ ।

संशय इति । निवसिष्यसि वा न वेत्याकारक इति भाव । निवसिष्यामि नवेत्याकारक इति वा । विश्वरूपे ईश्वरे मनोबुद्ध्योराधानाच्चित्तशुद्धिज्ञानप्राप्तिद्वारा परमात्मसायुज्यं स्यादिति परमार्थ ।

नच विश्वरूपोपासनमात्रादेव परमपदप्राप्तिरत्राभिधीयत इति वाच्यं, ज्ञानादेव मुक्तिरित्येतदर्थप्रतिपादकश्रुतिस्मृत्यादिविरोधात् । अज्ञानकृतस्य ससारस्य ज्ञानं विना नाशायोगात् । ईश्वरोपासनस्य च क्रियात्वेनाज्ञानाविरोधित्वाद्विश्वरूपेश्वरोपासकानां नाहं ब्रह्मेत्यहमज्ञ इत्यहंमनुष्यस्ससारीति चाज्ञानदर्शनात् । विश्वरूपे च देहे तेषामीश्वरभ्रान्तिदर्शनाद् । तस्माद्विश्वरूपोपासकानामपि ज्ञानद्वारैव मोक्ष ॥८॥

अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ।
अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय! ॥९॥

अथेति । अथ त्वं यथाऽवोचं तथा मयि चित्तं समाधातुं स्थापयितुं स्थिरमचलं कर्तुं न शक्नोषिचेत्ततः पश्चादभ्यासयोगेन चित्तस्यैकस्मिन्नालम्बने सर्वतस्समाहृत्य पुनःपुनः स्थापनमभ्यासः, तत्पूर्वको योगस्समाधानलक्षणस्तेनाभ्यासयोगेन मां विश्वरूपमिच्छ प्रार्थयस्व आप्तुं प्राप्तुं हे धनंजय! ॥९॥

अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ।
मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ॥१०॥

अभ्यास इति । अभ्यासेऽप्यसमर्थोस्यशक्तोऽसि तर्हि मत्कर्मपरमो भव मदर्थं कर्म

---

अथेति । अथ त्वं मयि चित्तं स्थिरं यथातथा समाधातुं न शक्नोषि चेत् हे धनञ्जय ! ततो मामभ्यासयोगेनाप्तुमिच्छ । यथाऽवोचमिति । यथाहमुक्तवानस्मि तथा मदुक्तप्रकारेण मयि विश्वरूपे । अभ्यासपदार्थमाह—चित्तस्येति । स्वाभिमते सुन्दरे कस्मिंश्चित्पद्मादिवस्तुनि विषयान्तराच्चित्तमानीय स्थापयेत् । तच्चेच्चित्तं सहजचापल्याद्विषयान्तरं गच्छति तर्हि पुनरपि तदानीय पद्मादिवस्तुनि स्थापयेत् । एवं प्रत्यहं बलादपि चित्तमेकस्मिन्वस्तुनि स्थापयेच्चिरम् । एवंकरणमभ्यासः । अनेन चाभ्यासेन चित्तसमाधाने पुरुषश्शक्तो भवति । चित्तसमाधानं नाम चित्तस्य स्वाभिमतेऽर्थे चिरं स्थापनम् । ततश्च पद्मादाविव विश्वरूपेऽपीश्वरे चित्तसमाधानं स्यादिति भवेत्तस्य विश्वरूपप्राप्तिरिति । मां विश्वरूपं प्राप्तुमिति । विश्वरूपं मां साक्षात्कर्तुमित्यर्थः । विश्वरूपे मनः स्थापयितुमिति यावत् । विश्वरूपात्मना मनः परिणमयितुमिति फलितार्थः । ध्यानेन हि ध्यातुर्ध्येयात्मता स्यादिति ।

यद्वा अभ्यासयोगेन निमित्तेन मनसा करणेन मामाप्तुमिति । मां ध्यातुमित्यर्थः । विषयीकर्तुमिति यावत् । मनसो मद्रूपत्वमापादयितुमिति फलितार्थः । मनो हि वृत्त्या बहिर्घटादिरूपं प्राप्नोति यथा तथाऽन्तरपि वृत्त्या विश्वरूपभगवद्रूपं प्राप्नुयात् । एवं विश्वरूपात्मना मनसोऽवस्थानं यदि त्वं प्रार्थयसि तर्हि पद्माद्यात्मना मनसोऽवस्थापनं तावदभ्यसेः । यथा स्थूलप्रस्तरमुद्धरिष्यन् पुरुषस्तावत्सूक्ष्मप्रस्तरोद्धारणमभ्यस्यति तद्वत् ॥९॥

अभ्यास इति । मत्कर्म परमं प्रधानं यस्य स मत्कर्मपरम ईश्वरार्पणबुद्ध्या यज्ञादिविहितकर्मकारीत्यर्थः । सहजचपलस्य चित्तस्यैकत्रावस्थानरूपाभ्यासस्यापि दुष्करत्वाच्चित्तसमाधानं विनैव यज्ञादिकर्मणां सुकरत्वादभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भवेत्युक्तम् । कर्मणां बन्धकत्वादुक्तं मत्कर्मेति । कर्माणि हि फलद्वारा बध्नन्ति पुरुषं, यदि कर्मणां फलमीश्वरे समर्पितं तर्हि कर्माणि नैव बध्नन्ति तम् ।

ननु विश्वरूपोपासनादभ्याससाध्याद्भवति पुंसां 'सिद्धिः,' किंपुनस्त्वत्कर्मकरणादत आह—मदर्थमिति । मदर्थं कर्माणि कुर्वन्नपि सिद्धिमवाप्स्यसि । अपिशब्दात्किंपुनर्मद्विश्वरूपोपासक इति

मत्कर्म तत्परमो मत्कर्मपरमो भव मत्कर्मप्रधान इत्यर्थः। अभ्यासेन विना मदर्थमपि कर्माणि केवलं कुर्वन् सिद्धिं सत्त्वशुद्धिं योगज्ञानप्राप्तिद्वारेणावाप्स्यसि ॥१०॥

अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ।
सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥११॥

अथेति। अथ पुनरेतदपि यदुक्तं मत्कर्मपरमत्वं तत्कर्तुमशक्तोऽसि यदि मद्योगमाश्रितः मयि क्रियमाणानि कर्माणि सन्न्यस्य यत्करणं तेषामनुष्ठानं स मद्योगः, तमाश्रितस्सन् सर्वकर्मफलत्यागं सर्वेषां कर्मणां फलसन्न्यासं सर्वकर्मफलत्यागं ततोऽनन्तरं कुरु यतात्मवान् संयतचित्तस्सन्नित्यर्थः ॥११॥

---

बोध्यते। अभ्याससापेक्षत्वाद्विश्वरूपोपासनं दुष्करं, तन्निरपेक्षत्वात्कर्म सुकरमिति सूचनायाह—अभ्यासेन विनेति। केवलमिति फलसङ्गादिराहित्येनेत्यर्थः।

यद्वा केवलं भक्तियोगासंस्पृष्टत्वेनेत्यर्थः। अथ वा विवेकादिराहित्येनेत्यर्थः। काऽसौ सिद्धिरत आह—सत्त्वेति। चित्तशुद्धिमित्यर्थः। अर्थान्तरमाह—मुक्तिमिति। कथं कर्मकरणान्मुक्तिरत आह—योगेति। चित्तसमाधानं योग. ॥१०॥

अथेति। अथ एतदपि कर्तुमशक्तोऽसि यदि तर्हि यतात्मवान् मद्योगमाश्रितश्च सन् सर्वकर्मफलत्यागं कुरु। एतच्छब्दार्थमाह—मत्कर्मपरमत्वमिति। ईश्वरार्थं कर्मानुष्ठानमित्यर्थः। मद्योगशब्दार्थमाह—मयीति। क्रियमाणानि कर्माणि मयि सन्न्यस्य तेषां यत्करणं स मद्योग इत्यन्वयः। मयि योगो मद्योगो मदाधारको मद्विषयो वा कर्मयोगः। ईश्वरे कर्मणां सन्न्यासो नाम तत्फलपरित्यागः। सर्वकर्मफलत्यागं कुर्विति वक्ष्यमाणत्वात्। नच पुनरुक्तिः, ईश्वरे सर्वकर्मफलसमर्पणात्मकं मद्योगमाश्रितत्वादेव त्वं सर्वकर्मफलत्यागं कुर्विति हेतुहेतुमद्भावात्।

ननु मदर्थं कर्माणि कुर्विति पूर्वोक्तस्य मयि सन्न्यस्य कर्माणि कुर्वित्यधुनोक्तस्य चार्थस्य को भेद इति चेदुच्यते—ईश्वरार्थं यः कर्म करोति तेन कर्मणि कर्तृत्वाभिमानोऽपि न कर्तव्यः, ईश्वरयोगाश्रितो यः कर्म करोति तेन फलत्यागमात्रमेव कर्तव्यमिति। तत्र कर्तृत्वाभिमानपरित्यागस्य दुष्करत्वात्तदपेक्षया सुकरोऽयं मार्ग उपन्यस्तः फलपरित्यागरूपो भगवता दयालुना श्रीकृष्णेनेति बोध्यम्।

यद्वा ईश्वरेण यज्ञादिकर्मणां विहितत्वात्तानि केवलं मया कर्तव्यानि राज्ञा विहितानि कर्माणि भृत्येनेव, अकरणे नरकपातादिलक्षणप्रत्यवायादिति मत्वा यः कर्म करोति स ईश्वरार्थं कर्म कर्तेत्युच्यते। ईश्वराज्ञानिर्वर्तितया ईश्वरप्रीत्यर्थतया च तत्कर्मण ईश्वरार्थत्वात्। नच निष्कामस्य पूर्णकामस्य चेश्वरस्य राज्ञ इव सकामस्य भृत्यकर्मणा जीवकर्मणा कोऽर्थः? येनेश्वरस्य प्रीतिः स्यादिति वाच्यं, फलाभावेऽपि स्वाज्ञानुसारेण कर्माणि कृतानीति तत्कर्तरि प्रीयते महेश्वरः, यथा विद्यां सम्पादयेति स्वाज्ञया गुरुकुलं प्रविश्य विद्यामधीयाने पुत्रे प्रीयते पिता तद्वत्।

अथ वा मद्योगकर्मकरणद्वारा चित्तशुद्धिप्राप्त्यादिक्रमेण जीवा एते मुच्यन्त इति तेषु प्रीतिर्भगवतः । यथा तत्त्वविदो गुरोर्दिदान्ये । एवमेते ईश्वरार्थं कर्म केवलं कुर्वन्ति, अन्ये तु कृतकर्मफलमीश्वरे समर्पयन्तीति भेदः ।

अथ वा यज्ञादिकर्मभिरीश्वर एवाराध्य इतीश्वराराधनबुद्ध्या कृतानि कर्माणीश्वरार्थकर्माणि, इन्द्रचन्द्रादिरयमनप्यादयो देवता मया कर्मभिराराध्यन्ते, यत्त्वमीशमाराधनजन्यं फलं तन्न मम, किं त्वीश्वरस्यैवेति बुद्ध्या यानि कृतानि कर्माणि तानि तु नेश्वरार्थानि, किं तर्हि तत्फलमेवेश्वरार्पितानि मत्कर्मकृतां फलत्यागिनां च भेदः । सर्वाणि कर्माणि विधाय ब्रह्मार्पणमस्त्विति तत्फलपरित्यागस्सुकरः । इमानि सर्वकर्माण्यपीश्वराराधनार्थानीत्यनुमन्य,नं तु दुष्करमिति पक्षत्रयमुपन्यस्तम् ।

यत्तु रामानुजः—मदर्थं कर्माणि मदीयानि । आलयनिर्माणोद्यानकरणदीपारोपणमार्जनाभ्युक्षणोपलेपनपुष्पाहरणपूजाप्रवर्तननामसङ्कीर्तनप्रदक्षिणस्तुतिनमस्कारादीनि; सर्वकर्मफलत्यागस्तु यज्ञादिकर्मफलस्वर्गादिपरित्याग इति, तत्तुच्छम्—यज्ञादिकर्मणामपीश्वराराधनरूपत्वेनालयनिर्माणादिवदीश्वरार्थकर्मत्वात् । अन्यथा आलयनिर्माणादिकर्मण्येव विदध्याच्छ्रुतिरपि न तु यज्ञादीन् । 'त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते' इत्यादिनेहापि यज्ञादीनामीश्वराराधनरूपत्वस्योक्तत्वात् । किंच यज्ञाद्यपेक्षया पुष्पाहरणादिकर्मणां सुकरत्वेन यज्ञाद्यशक्तस्यैव पुष्पाहरणादिकर्मविधानात् । 'अथैतदप्यशक्तोऽसी'ति पुष्पाहरणादिकर्माशक्तस्य यज्ञादिकर्मफलत्यागविधानमयुक्तम् । अपि च आलयनिर्माणादीनां पूर्तकर्मत्वेन पूर्तकर्मणश्च चन्द्रलोकभोगफलकत्वेन फलत्यागस्य चाहितत्वेन न तेषां सत्त्वशुद्धिरपि सिद्ध्येत्, किं पुनर्मोक्षः ?

अपि च 'अहरहस्सन्ध्यामुपासीत, वसन्ते वसन्ते ज्योतिषा यजे'तेत्यादिश्रुतिसिद्धसन्ध्यायज्ञादिकर्मपरित्यागे आलयनिर्माणादिकर्मस्वीकारे च परित्यक्तभर्तृकायास्स्वीकृतजाराया जारिण्या इव तवापि दुर्गतिरेव स्यात् ।

नच सन्ध्यायज्ञादिकर्मसु स्थित्वैवालयनिर्माणादीनि कुर्यादिति वाच्यं, एकत्र कर्मणि व्यापृतस्य कर्मान्तरे प्रवृत्त्यसम्भवात् । यज्ञादिकर्मानधिकारिणामद्विजानां परलोकभोगायैव पूर्ताख्यकर्मणामीश्वरेण निर्मितत्वात् । 'यो मां सर्वेषु भूतेषु सन्तमात्मानमीश्वरम् । हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः' इति प्रतिमायां भगवदाराधनस्य निन्दितत्वात् । प्रतिमार्चनस्य स्त्रीशूद्रादिसर्वसुकरत्वेन महानुभावं पार्थं प्रति 'अथैतदप्यशक्तोऽसी'ति वक्तुमयुक्तत्वात् । प्रतिमार्चनापेक्षया यज्ञादिकर्मफलत्यागस्य सुकरत्वं विदुषामपहासास्पदमेवेति हेतोश्च ।

यच्च मद्योगं मद्भक्तियोगमाश्रितस्सन्नेतत्कर्तुमशक्तोऽसीत्यन्वयस्तेन दर्शित', तदप्यसत्—मद्योगमाश्रित इत्यस्य पूर्ववाक्यान्वये समासपुनरादानदोषात् । यद्यर्पेषु ग्रन्थेषु तादृशा दोषा नाश्रयन्ते तर्हि मद्योगमित्यस्य मद्भक्तियोगमित्यर्थश्च लाक्षणिकत्वादुपेक्ष्य । मयि योगश्चित्तसमाधानमर्थाद्भक्तिरेवेति न लक्षणा दोष इत्यभ्युपगमेऽपि भगवति चित्तं समाधातुमशक्तस्यैव मदर्थं कर्माणि कुर्वित्युप-

इदानीं सर्वकर्मफलत्यागं स्तौति ।

श्रेयो हि ज्ञानमभ्यासात् ज्ञानाद्ध्यानं विशिष्यते ।
ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥१२॥

श्रेय इति । श्रेयो हि प्रशस्यतरं ज्ञानम् । कस्मात्? अविवेकपूर्वकादभ्यासात् ।

---

*दिष्टत्वेनेश्वरकर्मपरस्येश्वरे चित्तसमाधानाभावान्मद्योगमाश्रितो मदर्थं कर्माणि कर्तुमशक्तोऽसीति वर्णन-*
मयुक्तमेवेति ।

अत्र मद्योगमाश्रितस्सन्नेतदपीत्यन्वयोऽपि गम्यते । मद्योगशब्दस्य तु शङ्करोक्त एवार्थः । तथा चेश्वरे कर्तृत्वादिसन्न्यासपूर्वकमीश्वरार्थं कर्म कर्तुं यो न शक्नोति तेन कर्मफलपरित्याग कर्तव्यो नियतात्मनेति सिद्ध्यति निरवद्य. पन्था. । मास्तु ममैतत्कर्मफलमित्यनुसन्धानमात्रमेवास्य फलत्यागिन. कर्तव्य. । ईश्वरार्थं कर्मकृतस्तु ईश्वराराधनायैतत्कर्म मया क्रियत इति, अनेन कर्मणा मयेश्वर एक एवाराध्यत इति वा, ईश्वरप्रीतये एतत्कर्म क्रियत इति वा, न मया कर्म क्रियते, किं त्वीश्वरेणै-वेति वा, न मया कर्म क्रियते किंतु मद्भक्त्यैवेति वा । एवमाद्यनुसन्धानं कर्तव्यमिति दुष्करमीश्वर-कर्मप्रधानत्वं कर्मफलत्यागापेक्षयेति भाव ॥११॥

श्रेय इति । अभ्यासादनुष्ठानात्कर्मणा मत्कर्मपरमो भवेत्युक्तलक्षणाद्ज्ञानं शास्त्रार्थपाण्डित्य-मात्मानात्मपदार्थज्ञानमिति यावत् । श्रेय. प्रशस्यतरं हि, हिः प्रसिद्धौ । ज्ञानाच्च तस्माद्ध्यानं विश्व रूपोपासनं विशिष्यते, ध्यानात्तस्मात्सर्वकर्मफलत्यागो विशिष्यते, यद्यपीश्वरार्थकर्मकरणाशक्तस्यैव फलत्यागो विहितस्तथापि फलत्यागस्सर्वोत्कृष्ट एव । कुत. ? त्यागाच्छान्तिरनन्तरं त्यागादनन्तरमेव यस्माच्छान्ति स्यात्तस्मात्त्यागो विशिष्यते ज्ञानविशिष्टादपि ध्यानादिति ।

यद्यपि पूर्वं विश्वरूपोपासन-अभ्यास-मत्कर्मपरमत्व फलत्यागरूपाश्चत्वार उपाया उक्तास्त एवेहापि वक्तव्या. तेषा मध्ये कर्मफलत्याग उत्कृष्ट इति तस्य स्तवनीयत्वात्तथापि चित्तस्यैकत्रावस्थापनलक्षणा-भ्यासो नेह गृहीत - अभ्यासस्य विश्वरूपोपासनहेतुत्वेन साक्षान्मोक्षमार्गत्वाभावात् । विश्वरूपध्यान सामर्थ्याय ह्यभ्यासो विहित· । ज्ञानं तु पूर्वमनुक्तमप्युक्तमिह तस्यापि मोक्षमार्गत्वेन तदपेक्षयापि फल-त्यागस्य प्राशस्त्यस्य वक्तव्यत्वात् ।

न चैवं ज्ञानयोगादप्यस्य प्राशस्त्यं वक्तव्यमेवेति तस्यापीह ग्रहण भवेदिति वाच्यं, अज्ञविष-यत्वादस्य श्लोकस्य । अज्ञस्य ज्ञानयोगानधिकारेण ज्ञानयोगो हि न तस्य मोक्षमार्गः । न चाज्ञस्य कथं शास्त्रार्थपरिज्ञानमिति वाच्यं, सुतरामज्ञस्यावैदिकस्य नास्तिकस्य कर्मण्यप्यनधिकारेणात्मयाथार्थ्य-ज्ञानशून्यस्यैवेहाज्ञत्वेन विवक्षितत्वात् । शास्त्रार्थविदोऽपि सम्यग्दर्शनशून्या ह्यज्ञा इति ।

यद्वा अभ्यासाच्चित्तस्यैकत्र स्थापनलक्षणात् ज्ञानं शास्त्रार्थपरिज्ञानं श्रेय, अभ्यासस्तु ईश्वर-कर्मपरमत्वाच्छ्रेयानिति बोध्यम् । अन्यत्सर्वं पूर्ववत् । मत्कर्मपरमत्व अभ्यास-शास्त्रार्थज्ञान-ध्यान-फल-त्यागाना मध्ये फलत्याग उत्कृष्ट इति ।

अथ वा अभ्यासाच्चित्तस्यैकत्र स्थापनलक्षणाद्ज्ञानं शास्त्रार्थयज्ञादिकर्मपरिज्ञानं लक्षणया तत्प्रयुक्तमीश्वरार्थकर्मपरत्वं श्रेयः, अन्यत्पूर्ववत्। यद्यप्यभ्यासेऽप्यसमर्थस्येश्वरार्थकर्मपरत्वं विहितं, तथापि 'अभ्यासादविवेकपूर्वकात् श्रेय एव ज्ञानपूर्वकमीश्वरकर्मपरत्वम्। विश्वरूपोपासनं प्रति त्वन्तरङ्गहेतुत्वाद्विश्वरूपोपासनानन्तरमभ्यास उक्त इति बोध्यम्। विश्वरूपोपासनाभ्यास, मत्कर्मपरमत्व, फलत्यागानां मध्ये फलत्याग एवोत्कृष्ट इति भावः।

अत्र अभ्यासाद्विश्वरूपोपासनात्मकाद्ज्ञानं ज्ञानयोग आत्मानात्मविवेचनरूप इति भावः। श्रेयस्तस्माच्च ज्ञानात्परोक्षात् श्रवणादिलक्षणाद्ध्यानं तादृशज्ञानपूर्वकमात्मोपासनं विशिष्यते। ध्यानात्सर्वकर्मफलत्यागः सर्वकामप्रहाणं भवतीति शेषः। आत्मोपासकानामात्मैककामत्वेन कामान्तराभावादिति भावः। त्यागाच्छान्तिरनन्तरं भवतीत्यर्थोऽप्यापपतति- स त्वप्रकृतत्वादुपेक्ष्यः, अनात्मविदां कर्मफलत्यागस्यात्र स्तूयमानत्वात्, तस्यैव प्रकृतत्वात्, अथैतदप्यशक्तोऽसीति, कुरु कर्मफलत्यागमिति च पूर्वमुक्तत्वात्।

यत्तु रामानुजः—अभ्यासाद्भगवति स्मृत्यभ्यासाद्ज्ञानमात्मापरोक्ष्यज्ञानं श्रेयः आत्मविहितत्वे विशिष्यते, ज्ञानाद्ध्यानं विशिष्यते, ध्यानात्फलत्यागेनानुष्ठितं कर्मैव विशिष्यते, तदनन्तरं निरस्तपापतया मनसश्शान्तिर्भविष्यति, शान्ते मनस्यात्मध्यानं सम्पत्स्यते, ध्यानाच्चात्मापरोक्ष्यं, तदापरोक्ष्यात्परा भक्तिरिति भक्तियोगाभ्यासाशक्तस्यात्मनिष्ठैव श्रेयसी, आत्मनिष्ठस्याप्यशान्तमनसो निष्ठाप्राप्तयेऽन्तर्गतात्मज्ञानानभिसंहितफलकर्मनिष्ठैव श्रेयसीत्यर्थ इति, तत्तुच्छम्—'क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसा'मित्यात्मनिष्ठाया एव भक्तियोगाद्विश्वरूपोपासनात्मकादधिकक्लेशावहत्वस्योक्तत्वात्, ज्ञानयोग एव भक्तियोगाद्दुष्कर इति ज्ञानयोगाशक्तस्यैव भक्तियोगेऽधिकारः। युक्तं चेदम्—ज्ञानयोगिनो ह्यात्मानात्मविवेकः, अनात्मस्वात्माभिमानत्याग उन्मेषनिमेषादिसर्वकर्मसु देहादेः कर्तृत्वं न ममेति स्वस्याकर्तृत्वानुसन्धानं दृश्यमानसर्वप्रपञ्चमिथ्यात्वनिश्चय एवमादयो बहवो गुणा आवश्यकाः। तदभावे ज्ञानयोगासिद्धेः। तस्माद्दुष्करोऽज्ञस्य ज्ञानयोगः। भक्तियोगस्तु ब्राह्मणोऽहं विष्णुशर्मा मोक्षाय भगवन्तं रामचन्द्रं भजामीत्यनुसन्धानसाध्य इति न तत्र देहाभिमानत्यागः, नाप्यात्मानात्मविवेकः, नापि कर्तृत्वाभिमानत्यागः। तस्मात्सुकरो भक्तियोगः।

नच पत्रपुष्पाद्युपकरणसम्पादनक्लेशाद्दुष्करो भक्तियोग इति वाच्यं, तथासति बहूपकरणसाध्यः कर्मयोग एव दुष्कर इति कर्मयोगाशक्तस्यैव भक्तियोगाधिकार इति वक्तव्यत्वात्। तस्मान्मनःक्लेश एव क्लेशः, नतु कायक्लेशः क्लेशः। अन्यथा कर्मयोगापेक्षया कृषेरेव दुष्करत्वमापतेः।

एवं ज्ञानयोगस्य दुष्करत्वादेव ज्ञानिनां स विहितः। 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति। भक्तियोगो हि कर्मयोगान्तर्गत एवेत्युक्तं प्राक्। निष्ठाद्वयस्यैव भगवता प्रोक्तत्वेन तृतीयनिष्ठाकल्पनस्यायुक्तत्वात्। तस्मात्कर्मयोगस्तदन्तर्गतभक्तियोगो वा ज्ञानयोगाशक्तस्याज्ञस्यैव श्रेयःप्राप्तिहेतुत्वेन विहित इति भक्तियोगाशक्तस्य ज्ञानयोगः,

ज्ञानयोगाशक्तस्य तु कर्मयोग इति न वक्तुं शक्यते। भक्तियोगकर्मयोगयोरेकत्वेन ज्ञानयोगं प्रत्युत्कर्षापकर्षयोरेकस्यैव दुर्वचत्वात्।

तथा आत्मापरोक्ष्यात्परा भक्तिस्यादित्यप्ययुक्तम्—अपरोक्षीकृतात्मस्वरूपस्य विदुष आत्मन एवेश्वरत्वेनात्मभिन्नेश्वरस्यैवाभावात्कुतो भक्तिमार्गावकाशः? सद्वि सेव्यसेवकद्वयाश्रयः। प्रकृते तु आत्मेश्वरभेदाभावात्कथं सेव्यसेवकभावः? नच भिन्न एवात्मन ईश्वर इति वाच्यं, 'ज्ञानी त्वात्मैव मे मत'मित्युक्तत्वादीश्वरस्य च सर्वात्मत्वात्सर्वभूतानां हृद्देशे आत्मन एवावस्थानादीश्वरस्य च सर्वान्तरत्वेनात्मत्वात्। 'अथ योऽन्यां देवतामुपास्ते, अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'रिति भिन्नात्मज्ञानस्य श्रुत्यैव निन्दितत्वात्। तस्मादज्ञविषय एवायं भिन्नात्मज्ञानप्रयुक्तो भक्तियोगः। 'तरति शोकमात्मवि'दित्यात्मापरोक्ष्यज्ञानादेव सर्वसंसारनिवृत्तिश्रवणात्कथं भक्तेर्ज्ञानात्परत्वम्? किन्त्ववरत्वमेव। ज्ञानं विना भक्त्या संसारस्यानिवृत्तेः। संसारो ह्यज्ञानकृतत्वाद्ज्ञानैकनाश्यः। नचात्मज्ञानादात्मानन्दलाभ एव, भक्त्या तु ब्रह्मानन्दलाभ इति वाच्यं, आत्मानन्दस्यैव ब्रह्मानन्दत्वात्। भक्तस्य ब्रह्मानन्दालाभाच्च। स्वकल्पितविश्वरूपानुभवजन्यानन्द एव हि भक्तस्य भक्तिदशायां स्फुरति। स च मायिक एव। तस्मादनित्य एव च। नित्यो हि ब्रह्मानन्दः। ब्रह्मणस्तस्य नित्यत्वात्। एवं फलतोऽधिकत्वादेव दुष्करेऽपि ज्ञानयोगे ज्ञानिनः प्रवर्तन्ते, दुष्करत्वादेव च ज्ञानिविषयोऽयम्। अज्ञा हि न दुष्करं कर्तुमर्हन्ति, किंतु प्राज्ञा एव। ततश्च ज्ञानिविषयात् ज्ञानयोगादज्ञविषयस्य भक्तियोगस्य कथमपि नास्त्युत्कर्षः, किन्त्वपकर्ष एवेति ज्ञानयोगाशक्तस्य अज्ञस्यैव भक्तियोग इति स्थितम्।

अथ आत्मनिष्ठस्यापि कर्मनिष्ठैव श्रेयसीति यदुक्तं तदयुक्तम्—आत्मनिष्ठाकर्मनिष्ठयोरेकत्रावस्थानायोगात्। त्यक्तसर्वकर्मण एवात्मनिष्ठायामधिकारात्सन्न्यासिनः पुनः कर्मनिष्ठाप्राप्त्ययोगात्। आत्मनिष्ठाप्राप्त्यनर्हस्यैव विक्षिप्तचित्तस्याज्ञस्य चित्तशुद्ध्यर्थं कर्मनिष्ठाया विहितत्वात्। आत्मनिष्ठस्यात्मनिष्ठयैव कृतकृत्यत्वात्। ज्ञानिन एवात्मनिष्ठत्वेन तस्य कर्मानधिकारस्य पूर्वमेव स्थापितत्वाद्वेदाविनाशिनमिति श्लोकभाष्यादौ। तस्मादज्ञस्यात्मनिष्ठाप्राप्त्यनर्हस्यैव कर्मनिष्ठा श्रेयसीति स्थितम्।

यच्चानेनोक्तं—फलत्यागान्मनश्शान्तिर्मनश्शान्तेरात्मध्यानमात्मध्यानादात्मापरोक्ष्यमात्मापरोक्ष्याद्भक्तिश्च भविष्यतीति, तत्रात्मापरोक्ष्याद्भक्तिरिति निरस्तम्। आत्मापरोक्ष्यानन्तरं कृतकृत्यत्वेन प्राप्तप्राप्यत्वेन च कर्तव्यस्य प्राप्यस्य वा अभावात्। आत्मसाक्षात्कार एव हि सर्वावधिः। आत्मध्यानादेवात्मापरोक्ष्यमिति तु नियन्तुं न शक्यते। आत्मोपासनं विनापि श्रवणादिना आत्मसाक्षात्कारसम्भवात्। श्रवणाद्यशक्तस्य अनुसमयैवात्मध्यानस्य विहितत्वादुत्तमाधिकारिणां श्रवणादेरेव विहितत्वात्। मूले त्यागाच्छान्तिरनन्तरमितिवच्छान्तेरनन्तरं ध्यानं ध्यानादनन्तरं ज्ञानमिति क्रमस्यादर्शनात्। किंच त्यागशान्त्योरिव ज्ञानध्यानयोरुपायोपेयभावः कार्यकारणभावो वा विवक्षितः स्याद्यदि तर्हि उपेयात् ज्ञानादुपायस्य ध्यानस्य शान्तिद्वारा उपायस्य त्यागस्य ध्यानादुपेयाच्च श्रेष्ठत्ववचनमयुक्तं स्यात्। उपायादुपेयं हि प्रशस्यतरम्। उपेयस्य प्रशस्तत्वादेवोपेयप्राप्त्यनन्तरमुपायपरित्यागः।

तस्मादपि ज्ञानात् ज्ञानपूर्वकं ध्यानं विशिष्यते, ज्ञानवतो ध्यानादपि कर्मफलत्यागो विशिष्यत इत्यनुपज्यते । एवं कर्मफलत्यागात् पूर्वोक्तविशेषणवतः शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमेव स्यात् , न तु कालान्तरमपेक्षते ।

अज्ञस्य कर्मणि प्रवृत्तस्य पूर्वोपदिष्टोपायानुष्ठानाशक्तौ सर्वकर्मणां फलत्यागः श्रेयस्साधनमित्युपदिष्टं- न प्रथममेव, अतश्च 'श्रेयो हि ज्ञानमभ्यासात्' इत्युत्तरोत्तरविशिष्टत्वोपदेशेन सर्वकर्मफलत्यागः स्तूयते सम्पन्नसाधनानुष्ठानाशक्तावनुष्ठेयत्वेन श्रुतत्वात् । केन

उपायस्यैव प्रशस्तत्वे तु उपेयप्राप्तिकामो नैव स्याज्जनानाम् । नाप्यभ्यासं प्रति ज्ञानस्योपायत्वं सङ्गच्छते- अविवेकपूर्वकत्वादभ्यासस्य ज्ञानस्य चाविवेकनाशकत्वात् ।

नहि भक्तिमार्गे विश्वरूपं दृश्यमानमेवेश्वरम्मन्यमानानां तद्विविक्तस्य द्रष्टुरीश्वरस्यात्मनो ज्ञानं भवितुमर्हति । सति स्वनात्मविविक्तद्रष्टृात्मज्ञाने । नह्यनात्मनि देहे विश्वात्मके रज्येरन् ते । किंतु सच्चिदानन्दे स्वात्मन्येवेश्वरे । तस्मान्नास्त्यभ्यासे आत्मानात्मविवेक इति । तस्मादज्ञस्य कर्मणि प्रवृत्तस्य ज्ञानमार्गेऽनधिकाराद्विश्वरूपोपासनाभ्यासेश्वरकर्मपरत्वरूपोपायानुष्ठानाशक्तेश्च कर्मफलत्याग एव सुकरत्वाच्छान्तिहेतुत्वाच्च श्रेयानिति यथोक्त एवार्थः ।

अथ भाष्यं व्याख्यायते—'प्रशस्यस्य श्र' इति श्रादेशः । तदर्थे ईयसुन् प्रत्ययश्चेत्यभिप्रेत्याह—प्रशस्यतरमिति । अभ्यासाद्ज्ञानस्योत्कृष्टत्वे हेतुमाह—अविवेकपूर्वकादिति । ज्ञाने तु विवेकोऽस्तीति भावः । ज्ञानवत इति । ज्ञानयुक्तादित्यर्थः । पूर्वोक्तविशेषणवत इति । ध्यानोत्कृष्टत्वरूपविशेषणयुक्तादित्यर्थः । उपशमो निवृत्तिः । सहेतुकस्याज्ञानस्य- संसारं प्रत्यज्ञानस्यैव हेतुत्वात् । अनन्तरमेवेति । यदा फलत्यागस्तदैवेत्यर्थः । एवकारार्थमाह—नतु कालान्तरमिति । प्रकृतश्लोकोपदिष्टार्थमाह—अज्ञस्येति । अज्ञोऽपि सन्न्यस्य यमनियमाद्यनुतिष्ठेदित्यत आह—कर्मणि प्रवृत्तस्येति । गृहस्थस्येत्यर्थः । पूर्वोपदिष्टोपायानां विश्वरूपोपासनाभ्यासेश्वरकर्मपरत्वानामनुष्ठानस्याशक्तौ सामर्थ्याभावे—न प्रथममेवेति । शक्त्यशक्त्यपेक्षणं विनैव कर्मफलत्यागश्श्रेयस्साधनमज्ञस्येति न वक्तव्यमित्यर्थः ।

एतेनाशक्तस्यैवाज्ञस्य कर्मणि प्रवृत्तस्य कर्मफलत्यागश्श्रेयस्साधनं, नतु शक्तस्याज्ञस्य, नापि कर्मण्यप्रवृत्तस्याज्ञस्येति किंपुनः प्राज्ञस्य सन्न्यासिन इत्यर्थादुच्यते । अतश्चेति । अशक्तस्य कर्मिणः कर्मफलत्यागस्यैव श्रेयस्साधनत्वादित्यर्थः । उत्तरोत्तरविशिष्टत्वोपदेशेनेति । उत्तरस्योत्तरस्य ज्ञानध्यानादेः पूर्वस्मात्पूर्वस्मादभ्यासज्ञानादेर्विशिष्टत्वस्योत्कृष्टत्वस्योपदेशेन कथनेन सर्वकर्मफलत्यागः सर्वोत्कृष्ट इति स्तूयते । अभ्यासात् ज्ञानस्य ज्ञानाद्ध्यानस्य च विशिष्टत्वं वस्तुस्वभावसिद्धमेव, न तद्वचनं स्तुतिः । किंतर्हि सर्वकर्मफलत्यागस्य अभ्यासज्ञानध्यानासमर्थाज्ञकर्मिविषयस्य अभ्यासज्ञानध्यानेभ्य उत्कृष्टत्वकथनमेव स्तुतिः, अयथार्थवर्णनस्य स्तुतित्वात् । यथा राजानं प्रति त्वमिन्द्रस्त्वं चन्द्र इति वचनस्य स्तुतित्वम् ।

साधर्म्येण स्तुतित्वम् ? 'यदा सर्वे प्रमुच्यन्ते' इति सर्वकामप्रहाणादमृतत्वमुक्तं, तत्प्रसिद्धं कामाश्च सर्वे श्रौतस्मार्तसर्वकर्मणां फलानि, तत्त्यागेन च विदुषो ध्याननिष्ठस्यानन्तरमेव शान्तिरिति सर्वकामत्यागसामान्यमन्यकर्मफलत्यागस्याप्यस्तीति तत्सामान्यात् सर्वकर्मफलत्यागस्तुतिरियं प्ररोचनार्था। यथा चागस्त्येन ब्राह्मणेन समुद्रः पीत इति इदानींतना

नन्वेवं शक्ताज्ञविषयेभ्योऽभ्यासादिभ्यः परमशक्ताज्ञविषयत्वेन निकृष्टस्य फलत्यागस्य कुत उत्कृष्टत्वप्रतिपादनमत आह—सम्पन्नेति। सम्पन्नानामुत्तमानां साधनानां विश्वरूपोपासनादीनामुपायानामनुष्ठानाशक्तौ। तेन धर्मेणेति। अशक्तानुष्ठेयस्वरूपधर्मेणेत्यर्थः। स्तुतित्वं कर्मफलत्यागो विशिष्यत इति। वचनस्येति शेषः। यद्वा स्तूयत इति स्तुतिः स्तुत्यं वस्तु तद्भावः स्तुतित्वं स्तुतिरिति यावत्। कर्मफलत्यागस्येति भावः। अशक्ताज्ञकर्मिविषयत्वेनासुलभत्वात्कर्मफलत्यागस्सर्वोत्कृष्ट इति कथ्यते, नतु वस्तुतो ज्ञानादिभ्य उत्कृष्टत्वादिति भावः।

नन्वेवमज्ञाशक्तकर्मिजनसुलभत्वादेव कर्मफलत्यागो विशिष्ट इति स्तूयतां, त्यागाच्छान्तिरनन्तरमिति शान्तिहेतुत्वात्कर्मफलत्यागस्योत्कृष्टत्वमिति तु न युक्तं वक्तुं, कर्मफलत्यागसंसारोपरमयोः कार्यकारणभावाभावेन यदनन्तरन्यायाभावात्। कर्मफलत्यागाच्चित्तशुद्धिः, ततो ज्ञानं, ततस्संसारोपरम इति क्रमात्। तस्मात्कथमज्ञकर्मिविषयात्कर्मफलत्यागात्संसारनाशोऽत आह—यदेति। 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिता' इत्यनेन सर्वकामत्यागादमृतत्वं मोक्षः स्यादित्युक्तं, तत्सर्वकामप्रहाणादमृतत्वं प्रसिद्धं च शास्त्रे। चकारादनुभवाच्च। निष्कामस्य सुखदर्शनादिति भावः।

काम्यन्त इति कामा इति व्युत्पत्त्या आह—फलानीति। स्वर्गादीनीत्यर्थः। ज्ञाननिष्ठस्येति। सन्न्यासिन आत्मनिष्ठस्येत्यर्थः। अनन्तरमेवेति। कामत्यागानन्तरक्षण एवेत्यर्थः। शान्तिरिति। तत्प्रसिद्धं चेत्यन्वयः। ननु भवतु विदुषां सर्वकामत्यागादनन्तरमेव शान्तिः, प्रकृते अज्ञानां कथं कर्मफलत्यागादनन्तरमेव शान्तिरित्युक्तमत आह—सर्वकामेति। विदुषां सर्वकामत्याग इवाविदुषां कर्मफलत्यागोऽपि त्यागात्मक एवेति भवति त्यागांशे सादृश्यमुभयोः।

यद्वा विदुषां सर्वकामत्यागे इवाविदुषां कर्मफलत्यागेऽपि सर्वकामत्यागस्वरूपं सर्वकामत्यागसामान्यमस्ति। कर्मफलानामेव कामत्वात्त्यागस्य चोभयत्रैकत्वात्। भवतु किं तत आह—तत्सामान्यादिति। विद्वत्सर्वकामत्यागसादृश्यादित्यर्थः। सर्वकामत्यागत्वरूपजातिवशादिति वा। इयं त्यागाच्छान्तिरनन्तरमित्येषेत्यर्थः। स्तुतेः फलमाह—प्ररोचनार्थमिति। कर्मफलत्यागे रुच्युत्पादनार्थमज्ञस्य कर्मिण इति भावः। अज्ञा उपासनाद्यशक्ता मुमुक्षवः। हा! धिगस्मान् कास्माकं गतिरिति खिद्यमाना भगवतैवं कृपालुना समुपलाल्यन्ते- 'मास्तु वः खेदः, कर्मफलत्यागो युष्माकं दुष्करः, स च न निकृष्टः पन्थाः, किं तूत्कृष्ट एव। कर्मफलत्यागादनन्तरमेव युष्माकं मोक्षलाभः' इति। एवं भगवद्वचनमधिगत्य क्षिप्रमेवास्माकं फलत्यागान्मोक्षो भवेदन्येषां तु चिरादेवेति मन्यमाना उत्साहात्कर्मफलत्यागे प्रवर्तन्ते ते, ततश्च चित्तशुद्धिज्ञानप्राप्तिद्वारा क्रमेणैव मुच्यन्त इति भावः। प्ररोचनार्थत्वे दृष्टान्तमाह—यथेति। शूद्रादीनां ब्राह्मणेषु भक्त्यादिप्रजननार्थं ब्राह्मणाः स्तूयन्ते

अपि ब्राह्मणाः ब्राह्मणत्वसामान्यात् स्तूयन्ते, एवं कर्मफलत्यागात् कर्मयोगस्य श्रेयस्साधनत्वमभिमतम् ॥१२॥

शास्त्रकृद्भिः- किमिति ? 'अहो ! ब्राह्मणानां महिमा ! यैः पीतस्समुद्रः, शायितो विन्ध्याद्रिः, ध्रियते च दक्षिणभूमण्डल'मित्येवम् '। इदं हि स्तुतिवचनमेव, न यथार्थवचनमाधुनिकब्राह्मणानां समुद्रपानाद्यभावात् । किं तर्ह्येकेनैवागस्त्येन समुद्रपानादिकं कृतं, अगस्त्यस्येवेदानींतनानामपि विष्णुशर्मादीनां ब्राह्मणत्वात्तेन ब्राह्मणत्वसामान्येन स्तूयन्ते आधुनिकाः । अगस्त्यब्राह्मणस्थानीयः विद्वत्सर्वकामत्यागः, आधुनिकब्राह्मणस्थानीयः सर्वकर्मफलत्यागः । ब्राह्मणत्वस्थानीयं तु त्यागसामान्यम् । विद्वत्कामत्यागस्य शान्तिहेतुत्वादविद्वत्कर्मफलत्यागोऽपि शान्तिहेतुत्वादविद्वत्कर्मफलत्यागोऽपि शान्तिहेतुरिति स्तूयते कर्मफलत्यागेऽज्ञजनप्रवर्तनार्थं, यथा पीतार्णवागस्त्यब्राह्मणस्य महानुभावत्वादतादृशा अपि ब्राह्मणा महानुभावा इति कीर्त्यन्ते ब्राह्मणपूजादौ शूद्रादीनां प्रवर्तनार्थं तद्वदिति भावः ।

**एतेन** ब्राह्मणजातेरगस्त्याश्रयेणेव त्यागस्य विद्वदाश्रयेणोत्कृष्टत्वं प्राप्तं, तच्च ब्राह्मणजातेरुत्कृष्टत्वमाधुनिकविष्णुशर्माद्याश्रयेऽपि न नष्टम् । आधुनिकब्राह्मणानामप्युत्कृष्टत्वेन कीर्त्यमानत्वात् । यथा तथा त्यागस्य विद्वदाश्रयलब्धमुत्कृष्टत्वमविद्वदाश्रयादपि न नष्टमिति त्यागस्स्तूयते—त्यागाच्छान्तिरनन्तरमिति । **एवमिति** । त्यागस्योत्कृष्टत्वादेवेत्यर्थः । कर्मफलत्यागाद्धेतोः कर्मयोगस्य श्रेयस्साधनत्वमज्ञानामिति शेषः ।

**ननु** शान्तिशब्दस्य संसारोपरमार्थमुक्त्वा कर्मफलत्यागस्य शान्तिहेतुत्वासम्भवं मत्वा विद्वत्त्यागस्य शान्तिहेतुत्वात्तत्साम्येनाविद्वत्त्यागोऽपि शान्तिहेतुरिति स्तूयत इति किमनया कल्पनया फलम् ? शान्तिश्चित्तशुद्धिरित्यर्थो वर्ण्यतां, तथासति अविद्वत्कर्मफलत्यागस्य चित्तशुद्धिहेतुत्वसम्भवात्सर्वं वाक्यं यथार्थमेव स्याद्युक्तमेवेदं यथार्थवादिन ईश्वरस्येतिचेत्, **मैवम्**— चित्तशुद्धिहेतोः फलत्यागस्य चित्तशुद्धिसाध्यध्यानादुत्कृष्टत्ववर्णनायोगात् । नच सुलभत्वमेवोत्कृष्टत्वमिति वाच्यं, तर्हि 'सुलभं ज्ञानमभ्यासात् ज्ञानाद्ध्यानं न भारत ! ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तर'मित्येवं ब्रूयाद्वेदव्यासः । नच ध्यानात्फलत्याग एव सुलभः, अभ्यासात् ज्ञानं तु विशिष्टमेव, तथा ज्ञानाद्ध्यानमपि विशिष्टमेवेति वाच्यं, ज्ञानध्यानयोः प्रकृतस्य विशिष्टत्वस्य त्यागे भङ्गायोगात् ।

नन्वेवं ध्यानादुत्कृष्टो यो विद्वत्कर्तृकस्सर्वकामत्यागस्स एवेहोच्यतां, तथ सति त्यागादनन्तरं संसारोपरमलक्षणशान्तिर्भवितुमर्हतीति चेत्, **मैवम्**—अप्रकृतत्वात्तस्य । 'अथ चित्तं न शक्नोषि समाधातुं मयि स्थिर'मित्यादिना कष्टतरागतिप्रदर्शनस्य प्रकृतत्वात् । अद्वेष्टेत्यादिना विद्वद्गतेः प्रदर्शयिष्यमाणत्वाच्चाज्ञपरत्वादस्य श्लोकस्य । तस्मात्सर्वकामत्यागस्य शान्तिहेतुत्वात्सर्वकर्मफलत्यागोऽपीह शान्तिहेतुत्वेन स्तुत इत्येवार्थमिति युक्तमुक्तम्—शान्तिश्च संसारोपरम इति ।

वस्तुतश्चित्तशुद्धिहेतोरपि कर्मफलत्यागस्य त्यागसामान्येन सर्वकामत्यागाभेदात् संसारोपरमहेतुत्वेन ध्यानादुत्कृष्टत्वं, ध्यानज्ञानयोस्तु ज्ञानाभ्यासाभ्यां स्वत एव मुख्यमुत्कृष्टत्वमिति वस्तुगतिः । एवं कर्म-

अत्र चात्मेश्वरभेदमाश्रित्य विश्वरूपे ईश्वरे चेतस्समाधानलक्षणो योग उक्तः, ईश्वरार्थं कर्मानुष्ठानादि च । 'अथैतदप्यशक्तो'सीत्यज्ञानकार्यस्य सूचनात् नाभेददर्शिनो

फलत्यागे सर्वकामत्यागाभेदारोपपूर्वकं संसारोपरमहेतुत्वकथनं तु कर्मफलत्यागप्ररोचनार्थम् । सुलभोऽयं कर्मफलत्यागो निष्फल इति न तत्र प्रवृत्तिस्स्यादज्ञानामिति कृत्वा तत्र तेषां प्रवर्तनार्थं नायं सुलभोऽपि निष्फलः, किंतर्हि सर्वोत्कृष्टफलमेव संसारोपरमस्याऽनन्तरमेव हेतुत्वादित्युक्तं भगवता ।

ननु य एव सर्वकामत्यागस्स एव कर्मफलत्याग इति को भेदो विद्वदविद्वदाश्रययोस्तयोः ? उच्यते—क्रियमाणकर्मणां फलत्यागः कर्मफलत्यागस्स विदुषां न सम्भवति, तेषां कर्मण्यनधिकारात् । ऐहिकामुष्मिकसर्ववस्तुविषयकामनापरित्यागस्सर्वकामत्याग. । सचाविदुषां न सम्भवति- तेषां जीवित-हेतौ जलान्नादौ कर्मनिर्वर्तकेषु समित्कुशादिषु च कामसत्त्वादिति ।

नन्वेवमपि विज्ञानादनन्तरमेव संसारोपरम इति वक्तव्ये कथं त्यागादित्युक्तं, नहि सर्वकाम-त्यागादप्यनन्तरमेव स्यात्संसारोपरम इति चेत् , मैवम्—आत्मस्वरूपसाक्षात्कारं विना विदुषामपि सर्व-कामत्यागो न सम्भवति, उत्कृष्टं वस्तु लब्ध्वैव हि अपकृष्टे वस्तुनि कामनां त्यजति लोकः । परमा-नन्दमये आत्मस्वरूपे अधिगते सत्येव क्षुद्रसुखहेतुष्वन्नादिषु कामनात्यागः ।

नन्वेवं 'तरति शोकमात्मवि'दिति ज्ञानसंसारयोर्यदनन्तरन्याय उक्तस्स न सिद्ध्येत् , मध्ये कामत्यागेन व्यवधानादितिचेत् , मैवमपि—यदैवात्मसाक्षात्कारस्तदैव सर्वकामत्यागस्संसारोपरमश्च भवतीति ज्ञानानन्तरं न सर्वकामत्यागात्मकं किंचित्कृत्यं कर्तव्यमस्ति, येन तद्व्यवधानं स्यात् ।

यद्वा ज्ञानयोगे प्रवृत्तस्य विदुषः यदा सर्वकामत्यागस्तदा ज्ञाननिष्ठापरिपाक इति ज्ञायते । अपरिपक्वज्ञानस्य सर्वकामत्यागासम्भवात् । ज्ञानस्य परिपाक आत्मतत्त्वसाक्षात्कार एव । तथा च त्यागादनन्तरं जातायाश्शान्तेर्न त्याग एव हेतुः, किं तर्हि त्यागसहकृतं ज्ञानमेवेति न तरति शोक-मात्मविदिति श्रुतिविरोधः, नापि ज्ञानशान्त्योर्मध्ये त्यागाख्यस्य किंचित्कृत्यस्य कर्तव्यतेति ।

अथ वा त्यागादनन्तरमेव शान्तिर्भवेदिति न त्यागशान्त्योः कार्यकारणभावः । किं तर्हि लक्ष्मणादनन्तरमेव शत्रुघ्नो जात इतिवद्ज्ञानादादौ त्यागो जातोऽनन्तरमेव शान्तिरिति ज्ञानत्यागयो-रिव ज्ञानशान्त्योरपि कार्यकारणभाव इति । नचैवमपि ज्ञानशान्त्योर्मध्ये त्यागाख्यं किंचित्कर्तव्य-मस्तीति वाच्यं, त्यागेनैव ज्ञानं परिपक्वमित्यनुमीयमानत्वात् । यथा ज्ञानादनन्तरं संसारोपरमस्याकर्त-व्यत्वं, तथैव त्यागस्यापीति बोध्यम् । तस्माद्विदुषां यदैवात्मसाक्षात्कारस्तदैव सर्वकामप्रहाणं तदैव सर्वसंसारोपरमः- कामपूर्वत्वात्संसारस्येति स्थितम् ॥१२॥

ननु अविदुषामेव कर्मयोग कर्मफलत्यागाच्छ्रेयस्साधनमिति कथमुच्यते, विदुषामपि स एवे-त्यत आह—अत्र चेति । अत्र प्रकरणे । आत्मेश्वरभेदमात्मनस्सकाशादीश्वरस्य भेदमज्ञानकार्यमिदं भेददर्शनमिति भाव । कर्मानुष्ठानादि चेति । उक्तमिति शेष. । आदिपदात्फलत्यागस्य ग्रहणम् ।

अक्षरोपासकस्य कर्मयोग उपपद्यत इति दर्शयति, तथा कर्मयोगिन अक्षरोपासनानुपपत्तिं दर्शयति भगवान्—'ते प्राप्नुवन्ति मामे'वेत्यक्षरोपासकानां कैवल्यप्राप्तौ स्वातन्त्र्यमुक्त्वा इतरेषां पारतन्त्र्यादीश्वराधीनतां दर्शितवान् 'तेषामहं समुद्ध'र्तेति । यदि हि ईश्वरस्यात्म-

नच भेदमाश्रित्योक्तमिति कथं वक्तुं शक्यत इति वाच्यं, उपास्यस्य विश्वरूपस्य उपासकस्य स्वस्य च भेदं विना उपासनायोगात्। विश्वरूपे देवे ईश्वरभ्रमं, मनुष्यदेहे जीवभ्रमं च विधाय हि विश्वरूपं भक्तो ध्यायति, यज्ञादिकं कर्मापीन्द्रादिराराध्यदेवता मत्तोऽन्यः, आराधको ब्राह्मणोऽहमन्य इति भेदबुद्धिना हि क्रियते। तस्माज्जीवेश्वरभेदमाश्रित्यैव विश्वरूपध्यानादिकमत्रोक्तम्। सच भेदोऽज्ञविषय इति प्रकृतवचनान्यप्यज्ञविषयाण्येव। किमत्र लिङ्गमत आह—अथैतदिति। अशक्तिर्ह्यज्ञानकार्यम्। किमनेनाशक्तिवचनेन सूचितमत आह—नेति। अज्ञस्याक्षरोपासनं विज्ञस्य कर्मयोगश्च नोपपद्यत इति सूचितं भगवतेत्यर्थः। अशक्तस्याज्ञस्यैव योगादिविधानात्। शक्तस्य विज्ञस्य तन्न विहितमिति गम्यत इति भावः।

युक्तमेवेदं कर्मयोगस्य भक्तियोगस्य वा जीवेश्वरभेदबुद्धिसाध्यत्वाद्ज्ञानयोगस्य चाभेदबुद्धिसाध्यत्वादज्ञानामभेदबुद्धययोगाद्ज्ञानिनां च भेदबुद्धययोगादिति। न चात्मेश्वरभेदवादिनोऽपि ज्ञानिन एवेति वाच्यं, 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'रिति भेदवादिनां पशुत्वस्य श्रुत्यैवोक्तत्वात्। 'य उदरमन्तरं कुरुते अथ तस्य भयं भवति, द्वितीयाद्वै भयं भव'तीत्यादिश्रुतिभ्यः भिन्नात्मज्ञानस्य निन्दितत्वाच्च। तस्मादज्ञविषयमेवेदं प्रकरणमिति।

ननु कर्मयोगस्याज्ञविषयत्वेऽपि तदन्तर्गतो भक्तियोगो नाज्ञविषयः, किंतर्हि प्राज्ञविषय एव। एवं प्राज्ञत्वादेव भक्तानामपि मोक्षलाभो ज्ञानिवदिति शङ्कायामाह—त इत्यादिना। यद्यक्षरोपासका इव विश्वरूपोपासका अपि ज्ञानिनस्स्युः, तर्हि अक्षरोपासकानामिव भक्तानामपि स्वतन्त्र एव मोक्षः स्यात्, नचेष्टापत्तिः- ते प्राप्नुवन्ति मामेवेति, तेषामहं समुद्धर्तेति च भगवतैवाक्षरोपासकानां मोक्षे स्वातन्त्र्यं, भक्तानां मोक्षे पारतन्त्र्यं चोक्तमिति भगवद्वचनविरोधात्। तस्मात्करतलामलकवत् स्वतन्त्रं कैवल्यमक्षरोपासकानाम्। भक्तानां तु ईश्वरायत्तमिति न भक्ता ज्ञानिनः।

ननु ईश्वराधीनकैवल्यत्वमात्रेण कथं भक्तानामज्ञत्वं, स्वाधीनकैवल्यत्वमात्रेण कथं वा अक्षरोपासकानां विज्ञत्वमत आह—यदि हीति। यदि हीत्यस्य यस्माच्चेत्यर्थः। ते ज्ञानिन ईश्वरस्यात्मभूता मताः। 'ज्ञानी त्वात्मैव मे मत'मित्युक्तत्वात्। तस्मादात्मेश्वरयोरभेददर्शित्वादीश्वरस्वरूपा एव ते ज्ञानिनः। अतस्तान्प्रति समुद्धरणकर्मविषयवचनं समुद्धरणमिति कर्मक्रिया तद्विषयं वचनं ज्ञानिन ईश्वरस्समुद्धरतीत्याकारकं वचनमित्यर्थः। अपेशलमसुन्दरमयुक्तमिति यावत्। एव स्यान्न तु पेशलम्। ज्ञानिन एवेश्वरस्यात्मत्वादिति भावः। समुद्धरणक्रिया हि समुद्धर्तृसमुद्धार्यवस्तुद्वयकर्तृका। उद्धर्तुरभावे उद्धार्यस्याभावे चोद्धारणासम्भवात्। प्रकृते तु वस्तुद्वयं नास्ति- उद्धर्तुरीश्वरस्यैवोद्धार्यात्मत्वात्। न हीश्वरस्यैवोद्धर्तृत्वमुद्धार्यत्वं च सम्भवति- कर्मकर्तृन्यायविरोधात्। तथा च समुद्धरणक्रियानिरूपित-

भूताः ते मता अभेददर्शित्वादक्षरस्वरूपा एव ते इति समुद्धरणकर्मविषयवचनमेव तान् प्रति अपेशलं स्यात्, यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवान् तस्य सम्यग्दर्शनानागन्धितं कर्मयोगं भेददृष्टिमन्तमेवोपदिशति। न चात्मानमीश्वरं प्रमाणतो बुध्वा कस्यचिद्गुणभावं

कर्मत्वं ज्ञानिनां, ज्ञानिकर्मकसमुद्धरणक्रियानिरूपितं कर्तृत्वमीश्वरस्य च नोपपद्यते। ज्ञानीश्वरयोरैकात्म्यात्। य एवमात्मानमेवेश्वरं मन्यन्ते ते कथमीश्वरेण वयमुद्धरिष्यामह इति भ्रमं प्रतिपद्येरन्? कथं वेश्वरोऽपि ज्ञानिनमात्मत्वेन मन्यमानो ज्ञानिनमहं मृत्युसंसारसागरादुद्धरिष्यामीति ब्रूयात्? न कथमपि। अत एव भक्तानामहं समुद्धर्तेत्युक्तमीश्वरेण, नतु ज्ञानिनां समुद्धर्तेति। ज्ञानिनस्तु स्वात्मानं मां स्वयमेव प्राप्नुवन्तीत्युक्तमीश्वरेण- 'ते प्राप्नुवन्ति मामे'वेति। तस्मादात्मनस्सकाशाद्भिन्न ईश्वर इति ये मन्यन्ते तेषामीश्वराधीनकैवल्यानामज्ञानामज्ञत्वं सुप्रसिद्धमेव। भिन्नेश्वरज्ञानस्याज्ञानकार्यत्वात्। भिन्नेश्वरज्ञानं विनास्माकं कैवल्यमीश्वराधीनमिति भ्रमायोगात्।

ये त्वात्मानमेवेश्वरं मन्यन्ते ते मुक्ता एव नित्यमिति स्वतन्त्रमेव कैवल्यं तेषामिति न तेषामीश्वराधीनं कैवल्यमिति भ्रमः। ततश्च तेषामहं समुद्धर्तेति यान्प्रत्युक्तं ते भक्ता अज्ञा एव। अज्ञानामेवेश्वराधीनं कैवल्यमिति भ्रमात्। ते प्राप्नुवन्ति मामेवेति यान्प्रत्युक्तं ते तु प्राज्ञा एवाक्षरोपासकाः। प्राज्ञानामेवेश्वरात्मैक्यज्ञानेन नित्यसिद्धो मोक्ष इति मोक्षस्वातन्त्र्यज्ञानात्।

तस्मादज्ञानामेव भक्तिमार्गोदावधिकारः। ज्ञानिनां त्वक्षरोपासन एवेति भक्तियोगस्याज्ञविषयत्वं स्थितम्। युक्तं चेदं कर्मयोगान्तर्गतत्वेनास्यापि भक्तियोगस्य कर्मयोगवदज्ञविषयत्वम्। कर्मयोगो ह्यज्ञविषयः। 'ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मित्युक्तत्वात्। आत्मानात्मविवेकज्ञानवन्तः साङ्ख्या इति साङ्ख्यशब्दार्थो ग्रन्थारम्भे भाष्ये एव दर्शित आचार्यैः। तद्विपरीतत्वाद्योगिन अज्ञा एव।

अथ अद्वेष्टेत्याद्युत्तरग्रन्थस्य भूमिकामारचयति—यस्मादिति। ननु अर्जुनस्यात्यन्तहितैषिणा भगवता य एवोत्तमः पन्थास्स एवोपदेष्टव्यः, न त्वन्यः, प्रकृते च कर्मयोग एवोपदिष्ट इत्युक्तम एव कर्मयोगो ज्ञानयोगात्। मय्येव मन आधत्स्व, अभ्यासेन मामाप्तुमिच्छ, मत्कर्मपरमो भव, सर्वकर्मफलत्यागं कुर्विति ह्युपदिष्टमिति शङ्कायां भेददृष्टिमतोऽज्ञस्यैव मया कर्मयोगो हिततम इत्युक्तं, प्राज्ञस्याभेददर्शिनस्तु ज्ञानयोग एव हिततमः, स एव कर्मयोगादुत्तमः, एवमुत्तमत्वादेव ज्ञानयोगस्य 'ज्ञानिनो मम प्रिया इति वक्तुमारभते भगवानद्वेष्टेत्यादिनोत्तरग्रन्थेन यावदध्यायपरिसमाप्तीतीममर्थमाह भाष्यकारः—यस्माच्चेत्यादिना। यस्माच्चार्जुनस्यात्यन्तमेव हितैषी भगवान् तस्मादक्षरोपासकानां साक्षादमृतत्वकारणं धर्मपूगं वक्ष्यामीति प्रवर्तत इत्यन्वयः।

तर्हि कर्मयोगोपदेशः किमर्थोऽस्त आह—तस्येति। सम्यग्दर्शनानागन्धितं सम्यग्दर्शनगन्धशून्यं कर्मयोगं भेददृष्टिमन्तमेवोद्दिश्य तस्योपदिशति।

नन्वभेददृष्टिमन्तमुद्दिश्य नोपदिशतीति कथं ज्ञायतेऽत्र आह—नचेति। कश्चित्प्राज्ञ आत्मान

जिगमिषति कश्चिद्विरोधात् । तस्मादक्षरोपासकानां सम्यग्दर्शननिष्ठानां सन्न्यासिनां त्यक्तसर्वैषणाना'मद्वेष्टा सर्वभूताना'मित्यादिधर्मपूगं साक्षादमृतत्वकारणं वक्ष्यामीति प्रवर्तते—

मीश्वरं प्रमाणतः तत्त्वतो बुद्ध्वा ज्ञात्वा कस्यचिदन्यस्य गुणभावं शेषत्वं जिगमिषति प्राप्तुमिच्छति । नच जिगमिषतीत्यन्वयश्चकार एवार्थकः, कुतो नैवेच्छतीत्यत आह—विरोधादिति । ईश्वरोन्यस्सर्वज्ञत्वादिगुणयुक्तः, अहमीश्वरादन्यः किञ्चिद्ज्ञत्वादिगुणयुक्त इति यो मन्यते स एवेश्वरं भक्त्या भजते राजानमिव भृत्यः । शेषिणस्तस्येश्वरस्य स्वयं शेषभूतश्च भवति, शेषी स्वतन्त्रः, शेषस्त्वस्वतन्त्र इति विवेकः ।

यः पुनरीश्वरोऽहमित्यात्मानमेवेश्वरं मन्यते स हि नेश्वरं भक्त्या भजते- स्वस्यैवेश्वरत्वात् । सेव्यसेवकभावो हि द्विनिष्ठः । अतो ज्ञानी आत्मानं शेषिणमेव मन्यते, नतु शेषभूतं कस्यचित् । तस्मान्नाभेददृष्टिमतो विश्वरूपोपासनादिकर्मयोगसम्भवः । अभेदज्ञानस्य शेषशेषिभावस्य च विरोधात् । तस्मादिति । भेददृष्टिमन्तंप्रति कर्मयोगस्यैवार्जुनायोपदिष्टत्वादर्जुनहितैषिणा भगवतेत्यर्थः ।

इत्यादीति । इत्यादिश्लोकोक्तमित्यर्थः । सर्वभूताद्वेषादिरूपमिति यावत् । आदिशब्दान्मैत्रकरणादिसंग्रहः । साक्षादिति । भक्तानां धर्मपूगस्तु क्रमेण मोक्षकारणं, नतु साक्षादिति भावः । मोक्षंप्रति ज्ञानस्यैवान्तरङ्गत्वात् । न हि ज्ञानोदयानन्तरं मुमुक्षुणा मोक्षंप्रति किञ्चित्कर्तव्यमस्ति । कर्मयोगस्तु भक्त्यादिलक्षणो बहिरङ्गः, कर्मयोगस्य चित्तशुद्धिज्ञानप्राप्तिद्वारा मोक्षहेतुत्वेन भक्तानां ज्ञानार्थं श्रवणादेः कर्तव्यत्वादिति ।

एवमर्जुनस्यात्यन्तं हितैषिणा भगवताऽर्जुनायाज्ञविषयः कर्मयोगः प्राज्ञविषयो ज्ञानयोगश्चेति द्वयमुपदिष्टम् । यद्यर्जुनः प्राज्ञस्तर्हि ज्ञानयोगमभ्यसेत्, यदि त्वज्ञस्तर्हि कर्मयोगमभ्यसेदिति दृष्टया । अत एव मय्येव मन आधत्स्वेति भक्तियोगमुपदिश्य तावत्पश्चादथैतदप्यशक्तोसीत्यशक्तत्वमर्जुने सम्भाव्य अभ्यासयोग उक्तः । ततोऽभ्यासेऽप्यर्जुनस्याशक्तत्वं सम्भाव्य ईश्वरकर्मपरमत्वमुक्तं 'अभ्यासेऽप्यसमर्थोऽसी'त्यादिना । ततश्च तत्राप्यशक्तं सम्भाव्य कर्मफलत्याग उक्तः, अनेन च किं ज्ञायते ? अक्षरोपासनाशक्तिमर्जुने सम्भाव्यैव विश्वरूपोपासनमादावुक्तमिति । अक्षरोपासनस्य दुष्करत्वं च क्लेशोऽधिकतर इत्यनेन सूचितम् ।

वस्तुतस्तु न ह्येकस्यैवार्जुनस्य विश्वरूपोपासनाभ्यासादौ शक्तत्वमशक्तत्वं च भवितुमर्हति न वार्जुनस्य शक्तिविषयमिदमिति सर्वज्ञो भगवान्न वेदेति वक्तुमुचितं, येन तत्राप्यशक्तोऽसीति पक्षान्तरमुपदिश्येत भगवता ।

तस्मादर्जुनं निमित्तीकृत्य भगवता सर्वलोकहिताय शास्त्रमिदमुच्यते । तत्र यः प्राज्ञस्सोऽक्षरोपासनं कुर्यात्, यस्त्वज्ञस्स विश्वरूपोपासनं, यस्तत्राप्यशक्तस्सोऽभ्यासं, य पुनस्तत्राप्यशक्तस्स

अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ।
निर्ममो निरहङ्कारः समदुःखसुखः क्षमी ॥१३॥

अद्वेष्टेति । अद्वेष्टा सर्वभूतानां सर्वेषां भूतानां न द्वेष्टा, आत्मनो दुःखहेतुमपि न

---

मत्कर्मपरमत्वं, यस्तत्राप्यशक्तस्स फलत्यागं कुर्यात् । मतो नार्जुनस्यैतेषु सर्वेष्वधिकारप्रसङ्गः । तस्मादर्जुनस्य हितैषिणापि भगवता सर्वलोकहितार्थं भेददृष्टिमन्तमुद्दिश्य कर्मयोगमुपदिश्याभेददृष्टिमन्तमुद्दिश्य ज्ञानयोगोऽप्युपदिश्यत इति ज्ञानयोग एवोत्तमः- प्राज्ञविषयत्वात् । उत्तमो हि मार्गः प्राज्ञैराश्रियते, उत्तममार्गाश्रयणं प्राज्ञत्वलक्षणमिति ।

यद्वा यदर्जुनेन पृष्टं तदुत्तरितं भगवता- 'ते मे युक्ततमा मता' इति, 'ते प्राप्नुवन्ति मामे'-वेति च । तत्र कर्मयोगे स्वल्पः क्लेश, ज्ञानयोगे त्वधिक इति कर्मयोगस्य सौकर्यमुक्तम् । भक्तिमार्गेऽप्यशक्तानां गत्यन्तराणि च दर्शितानि । अतस्समाप्तो ग्रन्थ । ततश्चाद्वेष्टेत्याद्युत्तरग्रन्थारम्भानवकाश इति शङ्कायामाह—यस्माच्चेति । लोके हितैषिणो हि पुरुषा यस्य हितमिच्छन्ति तेन पृष्टं सर्वमप्युत्तरयन्ति, अत्यन्तहितैषिणस्तु पृष्टादन्यदपि ब्रुवन्ति । प्रष्टुर्हितकरत्वात्स्वोक्तार्थस्य । तथा भगवानप्यर्जुनस्यात्यन्तहितैषित्वादपृष्टमप्यर्थं हितायार्जुनस्योपदिशतीत्याह—यस्माच्चेति । श्रुते स्वक्षेपासकानां धर्मपूगे क्लेशाधिक्ये सत्यप्यमीषां मार्ग एव सर्वाधिक इति ज्ञानमर्जुनस्य स्यात्, ततश्च क्लेशाधिक्यमभ्युपगम्याप्यर्जुन प्रविशेदेव ज्ञानमार्गे । ततश्च स्वाधीन एव स्यादर्जुनस्यापि मोक्ष इति भगवत आशय । अत एवात्यन्तमर्जुनस्य हितैषी भगवान् अर्जुनं ज्ञानमार्गे प्रवर्त्य स्वाधीनमोक्षं तं कर्तुमिच्छुत्वात् ।

अथ वा अर्जुनस्य ज्ञानमार्गे प्रवेशो माभून्नाम, ज्ञानिना धर्मपूगश्रवणादर्जुनस्य ज्ञानिष्वीश्वरबुद्धिर्भवेत्ततश्च ज्ञानिनां सर्वा सत्कारादिषु प्रवर्तेत । सत्सङ्गो हि ज्ञानलाभहेतु । तत्प्रवृत्तिवशाद्ज्ञानी भूत्वा मुच्येतेति भगवदाशय । एवमर्जुनस्यात्यन्तहितैषित्वादेव भगवानर्जुनस्याज्ञविषयं कर्मयोगमुपदिश्य प्राज्ञाना धर्मपूगं वक्ष्यामीति प्रवर्तते । अन्यत्तुल्यमिति ।

एतेनाद्वेष्टेत्यारभ्य ज्ञानयोगप्रकरणमिति प्रकरणभेद फलितः—अतो न कर्मिणा ज्ञानिना वक्ष्यमाणधर्मसाहश्यम् ।

अद्वेष्टेत्यादि । य कोऽपि सर्वभूतान्यद्वेष्टैव, केषाचिद्द्वेष्टुमशक्यत्वात्केषाचिद्योग्यत्वा बेस्यत आह—आत्मन इति । आत्मनस्सुखहेतुं प्राणिनमज्ञोऽपि न द्वेष्टि, दु खहेतुं तु द्वेष्टि सर्पादिकं, प्राज्ञस्तु दु खहेतुमपि न द्वेष्टि, किंपुनस्सुखहेतुमित्युच्यते—अद्वेष्टा सर्वभूतानामिति । कुतो न द्वेष्टीत्यत आह—सर्वभूतानीति । 'मयि सत्यसुखाम्भोधौ बहुधा विश्ववीचय । उत्पद्यन्ते विलीयन्ते मायामारुतसम्भ्रमा'दिति साक्षादात्मन्येव सर्वभूतानां मायया कल्पितत्वात्सर्वेषु भूतेषु चात्मन एव

किञ्चिद्द्वेष्टि सर्वभूतान्यात्मत्वेन हि पश्यति । मैत्रः मित्रो मित्रतया वा वर्तत इति स मैत्रः । करुण एव च, करुणा कृपा दुःखितेषु दया तद्वान् करुणः। सर्वभूताभयप्रदः सन्न्यासीत्यर्थः । निर्ममो ममप्रत्ययवर्जितः । निरहङ्कारो निर्गताहंप्रत्ययः । समदुःखसुखः समे

सर्वत्रानुगतत्वाच्च सर्वभूतान् स्वात्मेत्येव पश्यति प्राज्ञ. 'ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतिभ्यः । आत्मनश्च परमप्रेमास्पदत्वं प्रसिद्धमिति नोचित आत्मनि द्वेषो मूर्खस्यापि । न हि मूर्खोऽप्यात्मत्वेनाभिमतं स्वदेहमग्न्यादिना तापयति । तथा प्राज्ञोऽप्यात्मत्वेनाभिमतं दुःखहेतुमपि सर्पादिभूतं न द्वेष्टि । नच प्राज्ञस्सर्पादिदेहमात्मत्वेन कथं प्रत्येति । यस्स्वदेहमेवात्मत्वेन न पश्यति । देहादिभिन्नं आत्मानमीश्वरं मन्यत इति वाच्यं, भूतानामात्मनि कल्पितत्वेन कल्पितस्याधिष्ठानात्मकत्वाद्भूतान्यात्मत्वेन गृह्णाति प्राज्ञः ।

यद्वा आत्मनो भूतान्तरत्वादिति । नतु मूर्खवद्देहमात्मत्वेन गृह्णातीति । एवं सर्वात्मदर्शिनः प्राज्ञस्य सर्वस्याप्यात्मत्वान्न कस्मिंश्चिदपि द्वेष । अयं हि सर्वभूतद्वेषस्सर्वात्मज्ञानप्रयुक्तत्वान्नाज्ञेषु कर्मिषु भक्तेषु वा स्वप्नेऽपि सम्भवेत् , अतः प्राज्ञधर्म एवायम् ।

मैत्र इति । मित्रस्य भावो मैत्री, मैत्री अस्यास्तीति मैत्रः 'अर्श आद्यजन्तः' मित्रतया मैत्र्या वर्तत इति मैत्र इति तु फलितार्थकथनम् । इयं च सर्वभूतमैत्री प्राज्ञधर्म एव । यस्य सर्वात्मभावस्तस्यैव सर्वत्र मैत्री नेतरस्य । एवं करुणापि । विशेषणत्रयस्य फलितार्थमाह—सर्वभूतेति । सर्वेषामपि भूतानामभयप्रदोऽभयमेव प्रदत्ते, नतु भयम् । द्वेषाभावान्मैत्रीकरुणयोस्सत्त्वाच्चेति भावः । क एवंविधोऽत आह—सन्न्यासीति । सन्न्यासिनामेव रागद्वेषयोस्समूलनाशादिति भावः । नच मैत्रीकरुणाभ्यां भूतेषु तस्य रागस्स्यादिति वाच्यं, रागंविनापि दुःखितेषु शुनकादिषु करुणादिदर्शनान्महताम् । करुणाभावे तु दुःखितशिष्यदुःखापनोदनार्थं गुरुर्न प्रयतेत, शास्त्रसम्प्रदायश्च विच्छिद्येत, नैर्घृण्यदोषश्च गुरोस्स्यात् । अतएवहीश्वरोऽपि दयासमुद्र इति गीयते । मैत्री तु स्नेहः सर्वभूतेष्वात्मत्वेन प्रीतिः । तेषां हितैषित्वं वा । असन्न्यासिनं कर्मिणमश्वं दृष्ट्वा भूतानि बिभ्यति- छेत्स्यत्यस्मानिति सोमलतापश्वादयः, निरसिष्यत्यस्मानिति भूतप्रेतराक्षसादयः, अर्थं याचिष्यत्यस्मानिति राजादय इन्द्रादयश्च, कृत्येष्वारोप्य पीडयिष्यन्त्यस्मानिति दारापत्यसोदरादयः । सन्न्यासिनं दृष्ट्वा तु न कोऽपि प्राणी बिभेत्यत उक्तम्—सर्वभूताभयप्रद इति । एतेन सर्वभूतभयप्रदस्य सर्वात्मज्ञानशून्यस्याजस्य कर्मिणो भक्तस्य वा अद्वेषमैत्रीकरुणा भूतेषु न भवन्तीति सिद्धम् । सत्सु तेषामेतेषु धर्मेषु पशुलतापुष्पफलादिच्छेदनाद्ययोगात् । तस्मादद्वेषमैत्रीकरुणावान् सन्न्यास्येव न कर्मी ।

ममप्रत्यय इति । देहादौ ममायमिति ज्ञानम् । अहंप्रत्यय इति । देहादावहमित्यभिमानः । इदं द्रव्यं ब्राह्मणानामस्ति, ब्राह्मणोऽहं ज्योतिष्टोमं करोमीति, मम हस्ते कृष्णमृगश्रृङ्गोऽस्तीति च

दुःखसुखे द्वेषरागयोरप्रवर्तके यस्य स समदुःखसुखः। क्षमी क्षमावान् आक्रुष्ट अभिहतो वा अविक्रिय एवास्ते ॥१३॥

सन्तुष्टस्सततं योगी यतात्मा दृढनिश्चयः ।
मय्यर्पितमनोबुद्धिर्यो मद्भक्तस्स मे प्रियः ॥१४॥

सन्तुष्ट इति । सन्तुष्टस्सततं नित्यं देहस्थितिकारणस्य लाभे अलाभे च उत्पन्नालम्प्रत्ययः, तथा गुणवल्लाभे तद्विपर्यये च सन्तुष्टः, सततं योगी समाहितचित्तः, यतात्मा संयतस्वभावः, दृढनिश्चयः दृढः स्थिरः निश्चयोऽध्यवसायो यस्य आत्मतत्त्वविषये स दृढ-

तेषां प्रत्ययात् । सन्न्यासी तु नाहं देहादिः, न मम देहादिना कोऽपि सङ्गोऽसङ्गस्येति च प्रत्येतीति तद्द्वयरहितः । समेति । द्वेषजनकं दु खं, रागजनकं सुखं- दु खजनके द्वेषाभावः, सुखजनके रागाभावश्च यस्य स उच्यते समदु.खसुख इति । द्वेषप्रवर्तकं दु खं रागप्रवर्तकं सुखं च स्वनिष्ठद्वेषप्रवर्तकत्वरागप्रवर्तकत्वरूपविरुद्धधर्मप्रहाणेन परस्परं समं भवति । द्वेषजनकत्वरहिते दु खे रागजनकत्वरहिते सुखे च गुणत्वरूपस्य वस्तुत्वरूपस्य वा समानस्यैव धर्मस्य सत्त्वादव उक्तम्—समदुःखसुख इति । समे तुल्ये द्वेषप्रवर्तकत्वरागप्रवर्तकत्वरूपधर्माभावात्पदार्थत्वरूपेण परस्परं समाने सुखदु खे यस्य स समदु खसुखः । इदं चोक्तं प्राक् 'दु खेष्वनुद्विग्नमनास्सुखेषु विगतस्पृह' इति । इदं च समदु.खसुखत्वं सर्वं मिथ्येति, निर्विशेषचिन्मात्रोऽहमिति च ज्ञानाभावे न सिद्ध्येदेवेति ज्ञानिन एवायं धर्मः ।

आक्रुष्टोऽधिक्षिप्तः अभिहतस्ताडितो वा योऽविक्रिय आस्ते स क्षमीत्युच्यते । अयं च देहाद्यहङ्कारममकारशून्यस्य ज्ञानिन एव धर्मः । सति त्वभिमाने ताडनादिजन्यदु.खादिविकारः स्यादेव । अभिमानाभावे तु वल्मीकत्यक्तसर्पनिर्मोकताडनादिना यथा सर्पस्य न कोपादिविकारः तथाऽस्याऽपि । सर्पस्य निर्मोक इव ज्ञानिनो देहेऽपि अहम्ममाभिमानाभावस्य तुल्यत्वात् । कर्मिणस्तु अभिमानसत्त्वान्न क्षमा ॥१३॥

सन्तुष्ट इति । सततशब्दः काकाक्षिन्यायेनोभयान्वयी सततं सन्तुष्टस्सततं योगीति । देहस्थितिकारणस्यान्नादेर्लाभे जीविताशाभावादिति भाव । देहादावभिमानाभावादिति वा । यो हि देहमात्मानमात्मीयं वा मन्यते स देहस्थित्यर्थमन्नादिलाभे तुष्यति, तदलाभे च खिद्यते । यस्तु देहाद्विलक्षणमसङ्गमात्मानं वेत्ति किं तस्यान्नादिना देहस्थितिहेतुना ? अतस्तस्य तत्रालम्बुद्धिरुचितेति भावः ।

एतेन सन्तोषोऽयं कर्मिणो न सम्भवतीति सूचितम् । तथा सततं समाहितचित्त, चित्तविक्षेपहेत्वभावात् । देहाद्यभिमानो हि चित्तविक्षेपहेतुः- तत्पूर्वकत्वात्सर्वव्यवहारस्य । सुषुप्तौ ह्यभिमाना-

निश्चयः, मय्यर्पितमनोबुद्धिः सङ्कल्पविकल्पात्मकं मन अध्यवसायलक्षणा बुद्धिः, ते मय्येवार्पिते स्थापिते यस्य सन्न्यासिनः स मय्यर्पितमनोबुद्धिः। य ईदृशो मद्भक्तस्स मे प्रियः 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इति सप्तमेऽध्याये सूचितं, तदिह प्रपंच्यते ॥१४॥

---

भावाद्व्यवहाराभावो दृश्यते। यद्यपि कर्मी कदाचिच्चित्तसमाधानं कुर्यात्तथापि न सर्वदा कर्तुं क्षमते। अत उक्तं सततं योगीति।

यद्वा फलत्यागात्कर्मणश्चित्तसमाधानलाभो यद्यपि भवेत्तथापि देहाद्यभिमानात्यागाच्चित्तसमाधानं नावतिष्ठते। देहाद्यभिमानपूर्वकं समित्कुशादिबहूपकरणसम्पादनस्य कर्तव्यत्वात्कथं कर्मिणश्चित्तसमाधानगन्धः? फलत्यागप्रयुक्तं चित्तसमाधानं तु फलसिद्ध्यसिद्ध्यादिसम्भावनाप्रयुक्तविकारराहित्यमात्रमेवेति बोध्यम्।

संयतो नियतः स्वभावः प्रकृतिर्येन स संयतस्वभावः। बलात्कारेण धर्माधर्मादिलक्षणं स्वस्वभावमपि नियमितवानित्यर्थः। इदं च स्वभावनियमनमीश्वरस्यासाधारणो गुणो वशीकृतप्रकृतित्वादीश्वरस्य ज्ञानिनश्चेश्वरत्वादुपपद्यत इति बोध्यम्।

नच 'स्वभावो दुरतिक्रम' इति वाच्यं, पुरुषकारस्य व्यर्थत्वापत्तेः। अथ वा नियत आत्मचिन्तनादिलक्षणस्स्वभावो यस्य स तथोक्तो नियमेन स्वविहिते श्रवणादौ वर्तमान इत्यर्थः।

ननु कर्म्यपि नियमेन कर्मणि प्रवृत्त एवेति चेन्मैवम्—श्रवणादिप्रवृत्तेरेवेह स्वभावत्वेन विवक्षितत्वात्। अथ वा यतात्मा निश्चलस्वभावः, स्वभावः कार्यकरणसङ्घात इत्यानन्दगिरिः। दृढो निश्चयोऽहं ब्रह्मेत्याकारको यस्य स दृढनिश्चयः। कर्मिणां तु नास्त्यहं ब्रह्मेति निश्चयः। देहाभिमानानाशात्, आत्मज्ञानाभावाच्च।

मय्येवेति। स्वात्मन्येवेश्वर इत्यर्थः। ननु विश्वरूपे मयीति तस्याश्वियत्वादस्य न प्रकरणत्वात्। मद्भक्त इति। आत्मनिष्ठ इत्यर्थः। ज्ञानप्रकरणत्वादस्य। विश्वरूपोपासकस्य भक्तस्य प्रागुक्तधर्मायोगाच्च। स ह्यज्ञो विश्वरूपदेहे ईश्वराभिमानित्वात्।

ननु 'यो मद्भक्तस्स मे प्रिय' इत्यस्य 'ज्ञानी यस्स मे प्रिय' इत्यर्थवर्णनमयुक्तम् ... प्रिय इति। सप्तमाध्यायस्वववाक्यविरोधादिह मद्भक्तो ज्ञान्येव, तत्र ज्ञानी मम प्रिय ... भक्तो मम प्रिय इत्युक्तौ स्ववाक्यव्याघातात्। सूचितमिति। संक्षेपेन उक्तमित्यर्थः। ... माध्यायस्थात्प्रियो हि ज्ञानिन इति वचनादिहापि मद्भक्त इत्यस्य ज्ञानीत्येवार्थ इति ... एवं च 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इत्यनेनैकवाक्यत्वान्मद्भक्तो ... ज्ञानी मम प्रिय इत्येवार्थस्स्वीकर्तव्य इति सिद्धम्।

यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः।
हर्षामर्षभयोद्वेगैर्मुक्तो यस्स च मे प्रियः ॥१५॥

यस्मादिति। यस्मात्सन्न्यासिनो न उद्विजते उद्वेगं न गच्छति न सन्तप्यते न संक्षुभ्यति लोकः, तथा लोकान्नोद्विजते च यः, हर्षामर्षभयोद्वेगैः हर्षश्चामर्षश्च भयं चोद्वेगश्च तैः हर्षामर्षभयोद्वेगैर्मुक्तः, हर्षः प्रीतिः प्रियलाभे अन्तःकरणस्योत्कर्षः रोमांचनाश्रुपातादिलिङ्गश्च, अमर्षः अभिलषितप्रतिघाते असहिष्णुता, भयं त्रासः, उद्वेग उद्विग्नता, तैर्मुक्तो यस्स च मे प्रियः ॥१५॥

---

यद्वा प्रियो हि ज्ञानिन इत्यत्रैव ज्ञानिनो भगवत्प्रियत्वमुक्तमिति पुनरत्र तद्वचनं पुनरुक्तिदोषावहमेवेत्यत आह—प्रिय इति। सप्तमाध्याये सूचितं संक्षेपन उक्तमेव ज्ञानिन ईश्वरप्रियत्वं, तदिह प्रपंच्यते विस्तरेणोच्यते, तस्मान्न पुनरुक्तिदोष इति भाव.।

यत्तु रामानुजः—कर्मनिष्ठस्योपादेया गुणा अद्वेष्टेत्यादिनोच्यन्त इति, तत्तुच्छम्—कर्मयोगिनां निर्ममत्वाद्यसम्भवस्य दर्शितत्वात्। ब्राह्मणोऽहमित्याद्यभिमानं विना कर्मसु प्रवृत्त्यनुपपत्तेः। मद्भक्त इत्यस्य मां कर्मयोगेन भजमान इत्यर्थवर्णनमप्ययुक्तम्—कर्मयोगेनेति निर्मूलार्थकल्पनस्याप्रमाणत्वात्। ज्ञानी मम प्रिय इति सप्तमाध्यायोक्तात्स्ववाक्यादेव कर्मी मम प्रिय इत्यस्यार्थस्य व्याघातात्। सततं योगीत्यस्य प्रकृतिविविक्तात्मानुसन्धानपर इत्यर्थकथनमप्ययुक्तम्— प्रकृतिविविक्तात्मानुसन्धानस्याक्षरोपासकज्ञानविषयस्य कर्मिष्वसम्भवात्। कर्मानुष्ठानात्मानुसन्धानयोर्युगपदेकपुरुषकर्तृकत्वानुपपत्तेः। अत एव- 'लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन साङ्ख्यानां कर्मयोगेन योगिना'मिति निष्ठाद्वयमधिकारिद्वयस्य विविच्योक्तं भगवतैव। अत्रापि प्रकरणे 'एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते। ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमा' इति कर्मयोगस्य, अक्षरात्मानुसन्धानस्य चाधिकारिद्वयनिष्ठत्वं दर्शितं- भक्तानामात्मोपासकानां च कक्षद्वयेन निर्देशात्। यदि भक्तानां कर्मयोगिनामेवात्मानुसन्धानात्मकमक्षरोपासनमपि स्यात्तर्ह्यात्मोपासकानां भक्तानां च मध्ये के योगवित्तमा इति कथं प्रष्टुं शक्यतेऽर्जुनेन? तस्माद्भिन्नैरेव कर्मिभ्यो भवित्व्यमात्मानुसन्धानपरैः। प्रपञ्चितं चैतद्बहुश. पूर्वं कर्मज्ञानसमुच्चयवादनिराकरणप्रसङ्गे ॥१४॥

यस्मादिति। उद्वेगस्सन्तापः संक्षोभ इति यावत्। प्रियस्य वस्तुनो लाभे सति जायमानोऽन्त.करणस्योत्कर्षो हर्ष इत्युच्यते। रोमांचनाश्रुपातादयो हर्षस्य लिङ्गानीत्याह—रोमांचनेति। रोमांचनाश्रुपातादयो लिङ्गानि यस्य स इति बहुव्रीहिः। उद्विग्नस्संक्षुब्धः। एवंविधो यस्सन्न्यासी स च मे प्रियः। चकारात्सन्न्यासिनः पूर्वश्लोकोक्ता एतच्छ्लोकोक्ताश्च गुणा आवश्यका इति सूच्यते समुच्चयार्थात्। एवमुत्तरश्लोकेषु वक्ष्यमाणा अपीति बोध्यम्। कर्मी तु धनधान्याहरणयाचनला-

अनपेक्षश्शुचिर्दक्ष उदासीनो गतव्यथः ।
सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ॥१६॥

अनपेक्ष इति । अनपेक्षो देहेन्द्रियविषयसम्बन्धादिष्वपेक्षा यस्य नास्ति सोऽनपेक्षो निस्पृहः, शुचिः बाह्येनाभ्यन्तरेण च शौचेन सम्पन्नः, दक्षः प्रत्युत्पन्नेषु कार्येषु सद्यो यथावत्प्रतिपत्तुं समर्थः, उदासीनो न कस्यचिन्मित्रादेः पक्षं भजते य स उदासीनो यतिः, गतव्यथः गतभयः, सर्वारम्भपरित्यागी आरभ्यन्त इत्यारम्भा इहामुत्रफलभोगार्थानि कामहेतूनि कर्माणि सर्वारम्भाः, तान् परित्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी यो मद्भक्तस्स मे प्रियः ॥१६॥

---

पश्वादिच्छेदनादिना लोकक्षोभकः, नास्तिकप्रायाल्लोकात्स्वयमप्युद्विजते, कर्मसिद्ध्या हर्षः, स्वाधिककर्मकर्तृष्वमर्षः, प्रायश्चित्तादेर्भयमनशनादिक्लेशादुद्विग्नतेति नामी कर्मिधर्माः किंतु ज्ञानिन एव । अत एव एवंविधो ज्ञानी भगवतः प्रियः । 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय' इत्युक्तत्वात् ॥१५॥

अनपेक्ष इति । देहश्चेन्द्रियाणि च विषयाश्शब्दादयश्च देहेन्द्रियविषयाः, तेषां सम्बन्धादिषु आदिपदाद्वृद्ध्यादिग्रहणम् । देहादिसम्बन्धो मम स्यात्स च चिरमवतिष्ठेदित्याद्यपेक्षारहितोऽनपेक्षः । अथ वा विषयसम्बन्धो विषयप्राप्तिः देहश्चेन्द्रियाणि च विषयसम्बन्धश्च देहेन्द्रियविषयसम्बन्धाः, आदिपदाज्जरारोगाद्यभावादिग्रहणम् । अयं न कर्मिणस्सम्भवति- कर्मणो देहादिसाध्यत्वेन तस्य देहादिपाटवापेक्षत्वात् ।

शौचं परिशुद्धिः बाह्यं स्नानादिजन्यम् । आभ्यन्तरं तु मानसिकं शमदमादिजन्यमविक्षिप्तचित्तत्वं हि चित्तस्य शुद्धिः । सन्न्यासिनस्तु चित्तविक्षेपाभावादुपपद्यते आभ्यन्तरशुद्धिः । कर्मिणस्तु नोपपद्यते- कर्मतत्साधनसम्पादनादिना चित्तविक्षेपात्तस्य ।

प्रत्युत्पन्नेष्विति । उत्पन्नेषूत्पन्नेषु प्रत्युत्पन्नेषु सर्वेष्वपि प्राप्तेष्वित्यर्थः । यथावत्प्रतिपत्तुमिति । मिथ्यात्वेन ज्ञातुमित्यर्थः । कार्यमात्रं हि मिथ्या तस्य मिथ्यात्वमेव याथार्थ्यं कार्यमात्रस्य । नैवं प्रतिपत्तुं कर्मी क्षमते ज्ञानाभावात्, कर्मणो मिथ्यात्वज्ञाने तत्र प्रवृत्त्यनुपपत्तेश्च । स यतिरुदासीन इत्यन्वयः । कर्मिणा तु मित्रादयस्सत्कार्याः, कर्मनिर्वर्तनार्थमिति भावः ।

गतभय इति । द्वितीयवस्त्वभावात् । 'द्वितीयाद्वै भयं भव'तीति श्रुतिः । अद्वितीयात्मैव सर्वमिति हि प्रत्येति विद्वान् । अतः कथं तस्य भयम्? उक्तं हि मुरारिणाऽपि- 'भयमिति किमेव ब्राह्मण'स्येति । कर्मिणस्तु द्वैतसद्भावादस्त्येव भयमिति भावः ।

किंच—

योऽ न हृष्यति न द्वेष्टि न शोचति न कांक्षति ।
शुभाशुभपरित्यागी भक्तिमान् यस्स मे प्रियः ॥१७॥

य इति । यो न हृष्यतीष्टप्राप्तौ, न द्वेष्ट्यनिष्टप्राप्तौ, न शोचति प्रियवियोगे, न चाप्राप्तं कांक्षति, शुभाशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान् यस्स मे प्रियः ॥१७॥

समश्शत्रौ च मित्रे च तथा मानापमानयोः ।
शीतोष्णसुखदुःखेषु समस्सङ्गविवर्जितः ॥१८॥

सम इति । समश्शत्रौ च मित्रे च, तथा मानापमानयोः पूजापरिभवयोः, शीतोष्णसुखदुःखेषु समः सर्वत्र च सङ्गवर्जितः ॥१८॥

---

अत्र गतव्यथो गतदुःख इत्यपि वक्तुं शक्य- कर्मिण कर्मनिर्वर्तकसाधनादिसम्पादनप्रयुक्तबहुक्लेशसद्भावान्न गतव्यथत्व, सन्न्यासिनस्तु नास्ति कश्चिदपि क्लेश इति गतव्यथत्वमिति भाव ।

सर्वारम्भा सर्वकर्माणि इहामुत्रफलाना पशुपुत्रस्वर्गादिलक्षणाना भोग्याना भोगा अनुभवा एवार्था प्रयोजनानि येषा तानीहामुत्रफलभोगार्थानि कामाना हेतूनि यज्ञादीनि, इद हि सर्वकर्मपरित्यागित्वं सन्न्यासिन एव लक्षणमिति सुविदित कर्मिण कर्मत्यागायोगात् । य एवविधो मद्भक्त ज्ञानी स मे प्रियो भवति ॥१६॥

य इति । न हृष्यति, कर्मी तु कर्मपरिकरादिप्राप्तौ हृष्यत्येव, प्रायश्चित्तानिष्टप्राप्तौ द्वेष्ट्येव, कर्मभ्रंशे शोचत्येव, कर्मपरिसमाप्त्यादिक काङ्क्षत्येव, अशुभं कर्म त्यजन्नपि शुभ कर्म न त्यजत्येव, कर्मत्यागे कर्मित्वासिद्धे, य एवंविधो भक्तिमान् ज्ञानवान् स मे प्रिय ॥१७॥

सम इति । कर्मविघातुकेषु शत्रुषु कर्मिणो द्वेषात्तदुपकारिषु मित्रेषु प्रीतेश्च न शत्रुमित्रसमत्वं भवितुमर्हति । प्राज्ञस्य तु शत्रुमित्रयोरेकात्मबुद्ध्या समत्वम् । मानावमानयोर्देहादिगोचरतयाऽऽत्मविषयत्वाभावं य पश्यति स ज्ञानी मानावमानयोस्सम । यस्त्वहं ब्राह्मणस्सोमयाजीत्यभिमन्यते स हि कर्मी मानं गृह्णात्यवमानं न सहत इति बोध्यम् ।

शीतोष्णयोस्सुखदुःखयोश्च समोऽविकृतचित्त - शीतोष्णयोर्देहधर्मत्वं सुखदुःखयोर्मनोधर्मत्वं च पश्यन् ज्ञानी न तत्र विक्रियते । कर्मी तु देहाद्यभिमानाच्छीतादिप्राप्तौ विक्रियत इति भाव ।

सर्वत्रेति । देहे तदनुबन्धिषु दारापत्यपशुमित्रगृहधनधान्यादिषु च सङ्गो नास्ति सन्न्यासिन - त्यक्तसर्वसङ्गत्वात् । सर्वं परित्यज्य हि स गत । देहस्तु तत्राहम्ममाभिमानाभावात्त्यक्तप्राय एव । कर्मी तु ससङ्ग एव असङ्गत्वे कर्मण एवासिद्धे ॥१८॥

किंच—

तुल्यनिन्दास्तुर्मौनी सन्तुष्टो येन केनचित् ।
अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः ॥१९॥

तुल्येति । तुल्यनिन्दास्तुतिर्निन्दा च स्तुतिश्च निन्दास्तुती ते तुल्ये यस्य स तुल्यनिन्दास्तुतिः, मौनी मौनवान् संयतवाक्, सन्तुष्टो येन केनचित् शरीरस्थितिहेतुमात्रेण, तथाचोक्तं- 'येन केन चिदाच्छन्नो येन केनचिदाशितः । यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदु'रिति । किंच- अनिकेतो निकेत आश्रयो निवासो नियतो न विद्यते यस्य सोऽनिकेतः 'अनगार' इत्यादिस्मृत्यन्तरात् । स्थिरमतिः स्थिरा मतिः परमार्थवस्तुविषया यस्य स स्थिरमतिः भक्तिमान्मे प्रियो नरः ॥१९॥

---

तुल्येति । निन्दास्तुत्योर्देहविषयत्वमेव न त्वात्मविषयत्वमिति पश्यन् ज्ञानी तदुभयत्र तुल्यबुद्धिर्भवति । कर्मी तु मामयं निन्दतीति द्वेष्टि, मामयं स्तौतीति हृष्यति च- देहाभिमानादिति भावः ।

संयता नियमिता वागवागिन्द्रियं येन स तथोक्तः । मितभाषीत्यर्थः । अत्यन्ताभाषित्वे शिष्योपदेशाद्यसिद्धेरिति भाव. । कर्मिणा तु बहुभाषिणा भवितव्यं- त्वमेवं कुरु त्वमेवं कुरु त्वमेतद्देहीत्याद्यनेकवाक्यप्रयोगस्यावश्यकत्वात्तस्य । येन केनचित्कौपीनादिना क्षुद्रपरिधानेनाच्छन्नः, येन केनचिच्छाकफलादिना आशितो भोजित., यत्र क्वचन मृण्यादौ शायी शयितश्च स्यात्, य एवंभूतस्स सन्न्यासी तं देवा ब्राह्मणं विदुः ।

एतेन ब्राह्मणशब्दस्सन्न्यासिनि सार्थक इति सिद्धम् । अत एव ब्राह्मणस्सन्न्यासीत्युक्तं भाष्यकारैर्ब्राह्मणस्य विजानत इत्यत्र । यो हि ब्रह्मज्ञानी आत्मनिष्ठस्स ब्राह्मणः, सन्न्यास्येव तादृशः-- अन्यस्यात्मनिष्ठायामनधिकारात् । स च सन्न्यासी देहाद्यभिमानाभावाद्ब्रह्मात्मज्ञानाच्च कौपीनच्छन्नं पीनाम्बरच्छन्नं च देहं सममेव पश्यति, तथा मृष्टान्नममृष्टान्नं च सममेव पश्यति, हंसतूलिकातल्पं भूतलं च सममेव पश्यति । नतु कर्मी तस्य देहाभिमानात्यागाद्ब्रह्मात्मज्ञानाभावाच्चेति भाव. ।

आश्रय इति । गृहदेवालयादिरित्यर्थः । ननु सन्न्यास्यपि क्वचन देवालयादौ वर्तत इत्यत आह—नियत इति । गृहस्थवदिति भावः । ग्रामैकरात्रन्यायेन यतेस्सञ्चारादिति तत्त्वम् । अनिकेतशब्दस्योक्तार्थपरत्वे प्रमाणमाह—अनगार इति । स्मृत्यन्तरेऽनगारत्वस्योक्तत्वादिह तदनुक्तेरनिकेतत्वस्यैवोक्तत्वादुभयोरैकार्थ्येन भाव्यमिति भाव· ।

स्थिरमतिरिति । ब्रह्मैव परमार्थवस्तु, तच्चाहमेवेति दृढबुद्धिः कर्मिणस्स्वप्नेऽपि न स्यात्-- कर्तृत्वादिमत्संसार्यात्मज्ञानवत एव कर्मित्वात् । य एवंविधो भक्तिमान् ज्ञानी स नरो मे प्रिय. । मनुष्यं पार्थमुद्दिश्योच्यमानत्वान्नर इत्युक्तम् ॥१९॥

'अद्वेष्टा सर्वभूताना'मित्यादिना अक्षरोपासकानां निवृत्तसर्वैषणानां सन्न्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातं प्रक्रान्तमुपसंहरति--

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ।
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥२०॥

इति श्रीमहाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीता-
सूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
भक्तियोगोनाम द्वादशोऽध्यायः ।

य इति । ये तु सन्न्यासिनो धर्म्यामृतं धर्मादनपेतं धर्म्यं च तदमृतं च धर्म्यामृतं, तदमृतत्वहेतुत्वादिदं यथोक्तं- 'अद्वेष्टा सर्वभूताना'मित्यादिना, पर्युपासतेऽनुतिष्ठन्ति, श्रद्दधानास्सन्तो मत्परमा यथोक्तोऽहमक्षरात्मा परमो निरतिशया गतिर्येषां ते मत्परमाः, मद्भक्ताश्चोत्तमां परमार्थज्ञानलक्षणां भक्तिमास्थिताः, तेऽतीव मे प्रिया भवन्ति । 'प्रियो हि ज्ञानिनोत्यर्थ'मिति यत्सूचितं तद्व्याख्यायेहोपसंहृतं 'भक्तास्तेऽतीव मे प्रिया' इति । यस्माद्धर्म्यामृतमिदं यथोक्तमनुतिष्ठन् भगवतो विष्णोः परमेश्वरस्यातीव मे प्रियो भवति तस्मादिदं धर्म्यामृतं मुमुक्षुणा यत्नतोऽनुष्ठेयं प्रियं विष्णोः परं धाम जिगमिषुणा इति वाक्यार्थः ॥२०॥

इति श्रीपरमहंसपरिव्राजकाचार्यस्य श्रीमद्गोविन्दभगवत्पूज्यपादशिष्यस्य
श्रीमच्छङ्करभगवतः कृतौ श्रीमद्भगवद्गीताभाष्ये
भक्तियोगोनाम द्वादशोऽध्यायः ।

---

य इति । ये तु श्रद्दधाना मत्परमाश्च सन्त इदं यथोक्तं धर्म्यामृतं पर्युपासते ते भक्ता मे अतीव प्रियाः । धर्म्यं धर्मान्निवृत्तिलक्षणादनपेतं धर्म्यम् । अमृतशब्दोऽत्रोपचारादमृतहेतुपर इत्याह— अमृतत्वहेतुत्वादिति । अमृतत्वं मोक्ष, अमृतं शाश्वतं सुखात्मकं वा ब्रह्म तद्भावोऽमृतत्वमिति व्युत्पत्ते । ब्रह्मभावो हि मोक्ष । यथोक्तं पूर्वोक्तमित्यर्थ । योग्यमुक्तमिति वा । केनोक्तमत आह— अद्वेष्टेति । भक्ता इत्यस्यार्थमाह— भक्तिमास्थिता इति । केयं भक्तिरत आह— परमार्थज्ञानलक्षणामिति । इयमेवोत्तमेत्याह— उत्तमामिति ।

ननु विश्वरूपोपासनात्मिका भक्तिरेवेह गृह्यतामत आह— प्रियो हीति । यद्ज्ञानिन' प्रियत्व संक्षेपत प्रागुक्तं तदेवेह विस्तरेणोच्यत इति नात्र भक्तानामवकाश इति भाव । फलितार्थमाह— यस्मादित्यादिना । विष्णो परं धाम जिगमिषुणा मुमुक्षुणा इत्यन्वय । यो हि विष्णोः प्रियस्स एव विष्णो. परं धाम प्रपद्येत न त्वन्य । न ह्यप्रियस्य कोपि स्वकं धाम दिशेदिति भाव ।

वस्तुतस्तु ज्ञानिन आत्मत्वादेव विष्णो प्रियत्वमिति यो विष्णो प्रिय आत्मा ज्ञानी स विष्णोरात्मन एव स्वस्वरूपं सच्चिदानन्दात्मकं प्राप्नोतीति भाव । य एवं ज्ञानी विष्णो प्रिय आत्मत्वात्स ज्ञानी आत्मा साक्षाद्विष्णुरेव भवति- विष्णोरेवात्मत्वात् । ज्ञानी विष्णुश्चेत्युभयमप्येक एव ह्यात्मा । तस्माद्ज्ञान्येव विष्णुरात्मेति **सिद्धान्तः** ।

यत्तु रामानुजः—अद्वेष्टेत्यादिना कर्मयोगिधर्मा उक्ता , ये त्वित्यनेन तु भक्तियोगिधर्म उच्यत इति, तत्तुच्छम्—सर्वारम्भपरित्यागस्य कर्मणि सुतरामप्यसम्भवस्य सर्वजन विदितत्वात् । नच विहितेतरकर्मपरित्यागीत्यर्थ इति वाच्य, सर्वशब्दसङ्कोचानुपपत्ते । सत्या तद्विवक्षाया व्यास निषिद्धकर्मसंत्यागीत्येव ब्रूयात् । तथा अनिकेतत्वमपि गृहिण कर्मिणो न सम्भवति ।

नच निकेतादिष्वसक्त इति तदर्थ इति वाच्य, सङ्गवर्जित इत्यनेन पौनरुक्त्यादस्य तदर्थस्य च लाक्षणिकत्वात् । आत्मनि स्थिरमतिरित्यप्ययुक्तं कर्मिणोऽज्ञस्यात्मचिन्तनासम्भवात् । तथा ये त्विति श्लोक भक्तविषय इत्यपि न युक्तं- धर्म्यामृतमिदमिति पूर्वोक्तार्थस्येदशब्देन परामर्शात् । पूर्वोक्ता- र्थस्य च कर्मिधर्मत्वेन त्वदभिमतत्वात् ।

नच ये त्विति तुशब्दादतीव मे प्रिया इत्यतीवशब्दप्रयोगाच्च पूर्वोक्ताधिकारिणस्सकाशाद्भिन्न एवेह भाव इति वाच्यं, तुशब्दस्य विश्वरूपोपासकेभ्यो ज्ञानिवैलक्षण्यद्योतनार्थत्वात् । ज्ञानिनस्त्व प्रियत्वे कस्तर्हि तव प्रियतम इति शङ्काया ज्ञान्येव मम प्रियतम , न त्वन्य इत्येतदर्थमतीवशब्दस्येह प्रयोगात् । न हि ज्ञान्यपेक्षया कश्चित्प्रियोऽस्तीश्वरस्य । ज्ञानी त्वात्मैव मे मतमित्युक्तत्वादात्मनश्च प्रियत्वं सुप्रथितम् । तस्मात्प्रियप्रियतरप्रियतमत्वभेदो नेह सचारयितव्य । ज्ञानिन एकस्यैव विष्णो प्रियत्वेन तस्यैव प्रियतमत्वादिव्यपदेश इति कृत्वा य एव मम प्रिय इत्युक्तं संक्षेपविस्त- राभ्या स एव ज्ञानी ममातीव प्रिय , न त्वन्य प्रिय प्रियतमो वेत्येतदर्थमिहातीवशब्दस्य प्रयु- क्तत्वात् । नच ज्ञानी त्वात्मैव मे मतमित्यनेनापि भक्तस्यैव प्रियतमात्मत्वमभिहितमिति वाच्यं, ज्ञानीति कण्ठत एवोक्तत्वात् । नच भक्ता इतीह कण्ठोक्तमिति वाच्यं, पूर्वोक्तस्य ज्ञानी त्वात्मैव मे मतं, स च मम प्रिय इत्यस्यार्थस्याविरोधायेहापि ज्ञानिन एव भक्तशब्देन ग्राह्यत्वात् ।

नच कथं भक्ते ज्ञानत्वमिति वाच्यं, भक्ति पुंसि रति पुमान् स भगवान् य केवलात्मास्ति व तत्साक्षात्कृतिरेव ते किल मते ज्ञान तदेकं न द्वयमिति मदुक्तविधया केवलात्मनीश्वरे रतेरेव ज्ञान- त्वाद्भक्तित्वाच्च । उक्तं हि भाष्यकारैरपि- 'परमार्थज्ञानलक्षणास्तुत्तमा भक्ति'मिति । एतेन चोत्तम शब्देन विश्वरूपोपासनादिलक्षणभक्तेरधमत्वं प्रतीयते । युक्तं चैतत् - भेदबुद्धिमन्तरातस्या ।

आत्मेश्वरभेदबुद्धिर्हि श्रुत्यादिभिर्निन्दिता । तस्माद्येत्विति श्लोकेनाद्वेष्टेत्यादिना प्रक्रान्तो ज्ञानिधर्मपूग एवोपसंह्रियत इत्यनवद्यम् ॥२०॥

इति श्रीवेलङ्कोण्डोपनामक रामकविकृतौ श्रीमगवद्गीताशाङ्करभाष्यार्कप्रकाशे
भक्तियोगो नाम द्वादशोऽध्याय ।
श्रीहयग्रीवार्पणमस्तु ।

**भक्तियोग इति ।** भक्तेर्विश्वरूपोपासनात्मिकायाऽनुत्तमाया, अक्षरोपासनात्मिकाया उत्तमायाश्च योगस्सम्बन्धोऽत्रेति भक्तियोग । सगुणनिर्गुणेश्वरभक्तिद्वयप्रतिपादकोऽध्याय इत्यर्थ इति । भक्तिर्भजनमुपासनमिति यावत् । सगुणस्य निर्गुणस्य चेश्वरस्य । तदिह प्रोक्तमिति भक्तियोगोऽयमध्याय इति ।

इति मध्यम षट्कम् ।